॥श्रीगणेशायनमः नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरंदाय भक्तजनमानसनिवासायश्रीरामचंद्राय
अथाष्टमेचतुर्विंशत्यध्यायैर्मनुवर्णनम् तत्तुतैऋषिदेवेंद्रैर्मूर्तिभिश्चहरेःसह १ प्रतिमन्वंतरंचैवमन्वाद्याःषट्पृथक्
पृथक् प्रवर्तयंतिसद्धर्मान् पालयंत्याचरंतिच २अतोमन्वंतरंसोक्तंसद्धर्मइतिलक्षणम् येनवैक्रियमाणेननरोनानिर
यंव्रजेत् ३ तत्रतुप्रथमेस्वायंभुवःस्वारोचिषस्तथा उत्तमस्तामसश्चेतिचतुर्मनुनिरूपणम् ४ स्वायंभुवेंऽतरेऽनंतदुरंतगु

॥श्रीगणेशायनमः राजोवाच
स्वायंभुवस्येहगुरोवंशोऽयंविस्तराच्छ्रुतः यत्रविश्वसृजांसर्गोमनूनन्यान्वदस्वनः १ यत्रयत्रहरेर्जन्मकर्म्माणिचमहीयसः गृणंतिकवयोब्रह्मंस्तानिनोवदशृण्वताम् २
यद्यस्मिन्नंतरेब्रह्मन्भगवान्विश्वभावनः कृतवान्कुरुतेकर्ताह्यतीतेऽनागतेऽद्यवा ३ ऋषिरुवाच मनवोऽस्मिन्व्यतीताः
षट्कल्पेस्वायंभुवादयः आद्यस्तेकथितोयत्रदेवादीनांचसंभवः

णवर्णनात् मुदितःपरिपप्रच्छसर्वमन्वंतरस्थितिम् ५ स्वायंभुवस्येतित्रिभिः यत्रविश्वसृजांमरीच्यादी
नांमनुकन्यासुपुत्रपौत्रादिसर्गः १ महीयसोहरेः अत्रक्वचिद्गुरुपाठांतरमस्तितदुपेक्षितमस्माभिः २ य
स्मिन्नतीतेत्कृतवान् यस्मिन्ननागतेयत्कर्ताकरिष्यति अद्यवावर्तमानेयत्कुरुतेतद्वदेत्यन्वयः ३ अस्मिन्क
ल्पेषट्मनवोव्यतीताः ५ ॥

तस्यमनोर्दुहित्रोः कपिलयज्ञमूर्त्तिभ्यांपुत्रतांगतः प्राप्तः ५ ६ ७ घोरंदुस्तरंतपस्तप्यमानः ८ समाधावनुभूत
मिदंवक्ष्यमाणंनिद्रितोच्छ्वसितवद्विस्मितइवउपदिशन्निवअनुवदन्निवचअष्टभिः श्लोकैरन्वाह येनचिदा
त्मनाविश्वंचेतयतेचेतनीभवतिविश्वंतुयंनचेतयते नचेतनीकरोतिस्वतएवचिद्रूपत्वात् तत्रहेतुः अस्मिन्
शयानेस्वपतियोजागर्त्तिसाक्षितयावर्त्तते अहोचित्रंनायंजनस्तंवेदसतुइमंवेद ९ तस्येश्वरत्वंदर्शयन् लोक

आकूत्यांदेवहूत्यांचदुहित्रोस्तस्यवैमनोः धर्मज्ञानोपदेशार्थंभगवान्पुत्रतांगतः
५ कृतंपुराभगवतः कपिलस्यानुवर्णितम् आख्यास्येभगवान्यज्ञोयच्चकारकुरू
द्वह ६ विरक्तः कामभोगेषुशतरूपापतिः प्रभुः विसृज्यराज्यंतपसेसभार्योवनमा
विशत् ७ सुनंदायांवर्षशतंपदैकेनभुवंस्पृशन् तप्यमानस्तपोघोरमिदमन्वाह
भारत ८ श्रीमनुरुवाच येनचेतयतेविश्वंविश्वंचेतयतेनयं योजागर्त्तिशयाने
ऽस्मिन् नायंतंवेदवेदसः ९ आत्मावास्यमिदंविश्वंयत्किंचिज्जगत्यांजगत्॥

स्वहितमुपदिशति आत्मनाईश्वरेण आवास्यंस्वसत्ताचैतन्याभ्यांसंव्याप्यंविश्वंसर्वंजगत्यांलोकेयत्किंचि
ज्जगद्भूतजातं अतस्तेनैवेश्वरेणयत्किंचित्त्यक्तंदत्तंधनंतेनैवभुंजीथाः भोगान्भुंक्ष्वयद्वाते नहेतुनान्य
केनईश्वरार्पणेनैवभुंजीथाः नस्वार्थंकस्यस्वित् कस्यचिदपिधनंमागृधः माभिकांक्षीः यद्वा कस्यस्वि
दितिकस्यान्यस्यधनमस्तियतोधनाकांक्षाक्रियेतेत्यर्थः॥

१ भा॰श्रु॰ ४

तथाचश्रुतिः ईशावास्यमितियथाश्लोकमेव १० ननुयदिसर्वंव्याप्नोतितर्हिचक्षुरादिभिः किंनप्रतीयते अत्रा
हयंपश्यंतंजनः चक्षुर्वानपश्यति चक्षुराद्यविषयत्वात् नहिप्रमातारंप्रमाणंविषयीकरोतीतिभावः तथाचश्रु
तिः चक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रमित्यादिननुतर्हिघटनाशेदेवदत्तस्यतद्विषयंचाक्षुषंज्ञानमिवेश्वरस्या
पितद्रूपभूतंतद्विषयंज्ञानंनश्येत् तत्राह यस्यतुपश्यतः चक्षुर्ज्ञानंनरिष्यतिननश्यति तत्तदाकारेणा
पन्नायावृत्तेरेवनाशोनस्वतःसिद्धज्ञानस्य नहिसवितृप्रकाशः प्रकाश्यनाशेनश्यतीतिभावः भूतानिनि

तेनत्यक्तेनभुंजीथामागृधः कस्यस्विद्धनम् १० यंनपश्यतिपश्यंतंचक्षुर्यस्यनरि
ष्यति तंभूतनिलयंदेवंसुपर्णमुपधावत ११ नयस्याद्यंतौमध्यंचस्व परोनांतरं
वहिः विश्वस्याऽमूनियद्यस्मातविश्वंचतदृतंमहत् १२ सविश्वकायः पुरुहू
तईशः सत्यः स्वयंज्योतिरजः पुराणः॥ ॥ लयोयस्यतंसर्वांतर्यामिणंतथापिसुपर्णंशोभन

पतनंअसंगंउपधावतभजध्वं ११ तस्यस्वरूपस्यनित्यत्वमेवोपपादयन्नाहनयस्येतिअमूनिआद्यंतादीनि
विश्वस्ययस्माद्भवंतिविश्वंचयत् यद्रूपं अतएवाव्यभिचारित्वात् तदृतंसत्यंमहत्परिपूर्णंब्रह्म १२
ननुविश्वंचेत्तद्रूपंतर्हितस्यकुतोजन्माद्यभावः स्वप्रकाशत्वंवा कथंवाजगज्जन्मादिकर्तृत्वेनविकारिणः
सत्यत्वंपूर्णत्वंचेतत्राह सईशः अजः सत्यश्चस्वप्रकाशश्च पुराणश्चनिर्विकारः विश्वंकायोयस्यपुरू
णिहूतानिनामानियस्यतथाविधोपि यतः अस्यविश्वस्यजन्मादिस्वशक्त्यामाययाधत्ते तांचनित्यसिद्धां

राम
२

याविद्ययाउदस्यहित्वानिःष्क्रियएवास्ते १३ यस्मादेवमीश्वरः कर्मकृत्वासंत्यज्यनैष्कर्म्येणास्ते अथअस्माद्धेतोः ऋषयोप्यग्रे आदौकर्माणिकुर्वंति किमर्थं अकर्महेतवेमोक्षार्थंपाठांतरेकर्मनाशायहियस्मात् १४ नन्वीहमानः कर्मभिरवगुंठितः कोशकारइववध्येतैवतत्राह ईहतइति अतस्तमनुवर्त्तमानायेतेनावसीदंतिनविषज्जते १५ तदेवंलोकानुग्रहायविश्वसृष्ट्यादियः करोति श्रीरामकृष्णाद्यवतारैश्ववेदोक्तमप्याचरतितंशरणंव्रजामीत्याह तमिति निजवर्त्मनरावतारानुरूपोमार्गः तत्रसम्यक्स्थितंअत ईहमानंकर्माचरंतं तथापिजीववैलक्षण्या

धत्तेऽस्यजन्माद्यजयात्मशक्त्या तांविद्ययोदस्यनिरीहआस्ते १३ अथाग्रेऋषयः कर्माणीहंतेऽकर्महेतवेईहमानोहिपुरुषःप्रायोऽनीहांप्रपद्यते १४ ईहतेभगवानीशोनहितत्रविषज्जते आत्मलाभेनपूर्णार्थोनावसीदंतियेऽनुतं १५ तमीहमानंनिरहंकृतंबुधं निराशिषंपूर्णमनन्यचोदितम् नृन्शिक्षयंतंनिजवर्त्मसंस्थितंप्रभुंप्रपद्येखिलधर्मभावनं १६ श्रीशुकउवाच इतिमंत्रोपनिषदंव्याहरंतंसमाहितम् दृष्ट्वाऽसुरायातुधानाजग्धुमभ्यद्रवन्क्षुधा १७॥ एमाह निरहंकृतं निराशिषंअनन्यचोदितमितिच निरहंकारत्वेहेतुः बुधंनिराशीष्ट्वेहेतुः पूर्णं अनन्यनियुक्तत्वेहेतुः प्रभुंतथाऽपिकर्मानुष्ठानेहेतुः नृन्स्वाचारेणशिक्षयंतं तत्किमर्थंतत्राह अखिलान्धर्मान्भावयति प्रवर्तयतीतितथातं १६ समाहितमपिसंतंमंत्रोपनिषदंव्याहरंतंदृष्ट्वासुप्तोच्छ्वसितद्विवशमिवमन्वानाअसुरायातुधानाश्चक्षुधानिमित्तेन जग्धुं अत्तुमभ्यद्रवत् अभिदुद्रुवुः १७ ॥ ९ ॥ ९ ॥ ९ ॥

यामैः स्वपुत्रैः त्रिविष्टपं स्वर्गमपालयत् स्वयमेवेंद्रो बभूवेत्यर्थः तत्र प्रतिमन्वंतरं मन्वादयः षडन्ये भवंति तथाहि स्मृतो द्वा
दशे वक्ष्यति मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वरः ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यत इति तत्राद्ये स्वायंभुवो मनुः प्रि
यव्रतोत्तानपादौ मनुपुत्रौ यामादयो देवाः मरीचिप्रमुखाः सप्तऋषयः यज्ञो हरेरवतार इंद्रश्च स एवेति तन्मन्वंतरं यः

तां स्तयाऽवसितान्वीक्ष्य यज्ञः सर्वगतो हरिः यामैः परिवृतो देवैर्हत्वाऽशासत्त्रिविष्टप
म् १८ स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् द्युमत्सुषेणरोचिष्मत् प्रमुखास्तस्य चा
त्मजाः १९ तत्रेंद्रो रोचनस्त्वासीद्देवाश्च तुषितादयः ऊर्जस्तंभादयः सप्तऋषयो ब्रह्मवादि
नः २० ऋषेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत् तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः
२१ अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः अन्वशिक्षन्व्रतं तस्य कौमारब्रह्मचारिणः
२२ तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः पवनः सृंजयो यज्ञहोत्राद्यास्तत्सुता नृप २३॥
वसिष्ठतनयाः सप्तऋषयः प्रमदादयः सत्या वेदश्रुता भद्रा देवा इंद्रस्तु सत्यजित् २४ धर्म
स्य सूनृतायां तु भगवान्पुरुषोत्तमः सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह २५ सोऽनृ
तव्रतदुःशीलानसतो यक्षराक्षसान् भूतद्रुहो भूतगणांस्त्ववधीत्सत्यजित्सखः २६ ॥ १ ॥

चविधमेव तच्चतुर्थस्कंधोपक्रमे निरूपितं १८ द्वितीयादिषु त्रिषु मन्वंतरेषु मन्वादिषट्कमाह स्वारोचिषो द्वितीय
स्त्विति यावत् जैद्रमोस प्रश्नं १९ २० २१ विभोरसाधारणं चरितमाह अष्टाशीतिसहस्राणीति २२ २३ २४ २५

उत्तमः तृतीयो मनुः तस्य भ्राता तामसश्चतुर्थो मनुरिति २७ त्रिशिख ईश्वरः इंद्रः २८ अन्यानपि विशिष्टपराक्र
मान् देवानाह देवा वैधृतयइति २९ हरिरित्याह ततो व्याहृतः ग्रहात् ग्राहात् ३० अमूमुचत् मोचयामास ३१ अ

चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः पृथुः ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः २७
सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः ज्योतिर्धामादयः सप्त ऋषयस्तामसेऽन्तरे २८।
देवा वैधृतयो नाम विधृतेस्तनया नृप नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा २९ तत्रा
पि जज्ञे भगवान् हरिण्यां हरिमेधसः हरिरित्याहृतो येन गजेंद्रो मोचितो ग्रहात् ३० राजो
वाच बादरायण एतत्ते श्रोतुमिच्छामहे वयम् हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत्
३१ तत्कथासु महत्पुण्यं धन्यं स्वस्त्ययनं शुभं यत्र यत्रोत्तमश्लोको भगवान् गीयते ह
रिः ३२ सूत उवाच परीक्षितैवं स तु बादरायणिः प्रायोपविष्टेन कथासु चोदितः उवा
च विप्राः प्रतिनंद्य पार्थिवं मुदा मुनीनां सदसि स्म शृण्वतां ३३॥ इति श्रीभागवते महापु
राणे अष्टमस्कंधे मन्वन्तरानुवर्णने प्रथमोऽध्यायः १ श्रीशुक उवाच आसीद्गिरिवरो राजं
स्त्रिकूट इति विश्रुतः॥१॥ श्रवणेच्छायां हेतुः तत्कथासु तासु कथासु सा कथैव वा सु महत्पुण्यं पुण्यस्य विशेष
णं धन्यमित्यादि ३२ ३३ इति श्रीभागवते महापुराणेऽष्टमस्कंधे टीकायां प्रथमोऽध्यायः १ तुर्यमन्वंतरे प्रोक्तं गजें

द्वितीयादित्रिभिस्तत्तु विस्तरेणोपवर्ण्यते १ द्वितीये तु गजेंद्रस्य गजीभिः क्रीडतो जले दैवाद्ग्राहगृहीतस्य हरिस्मृतिरुदीर्यते २ आसीत् अस्ति १ तावता योजनायुतेन पर्यक् परितः त्रिकूटसमाख्या वीजमाह त्रिभिः शृंगैः मुख्यैः २ सुवर्णरौप्यलोहमयैः आख्या यस्य अन्यैश्च शृंगैर्निर्झरांभसां निर्घोषैश्च ककुभः सर्वा रोचयन्नास्त इति पूर्वेणैवान्वयः कथंभूतैः शृंगैः रत्नैर्धातुभिश्च विचित्रितैः नानाविधानां द्रुमलतानां गुल्मा येषु तैः ३ पयस ऊर्मिभिः समं

क्षीरोदेनावृतः श्रीमान् योजनायुतमुच्छ्रितः १ तावता विस्तृतः पर्यक् त्रिभिः शृंगैः पयोनिधिं दिशः खं रोचयन्नास्ते रौप्यायसहिरण्मयैः २ अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितैः नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झरांभसां ३ स चावनिज्यमानांघ्रिः समंतात्पय ऊर्मिभिः करोति श्यामलां भूमिं हरिन्मरकताश्मभिः ४ सिद्धचारणगंधर्वविद्याधरमहोरगैः किंनरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकंदरः ५ यत्र संगीतसंनादैर्नदद्गुहममर्षया अभिगर्जंति हरयः श्लाघिनः परशंकया ६ नानारण्यपशुव्रातसंकुलद्रोण्यलंकृतः चित्रद्रुमसुरोद्यानकलकंठविहंगमः ७॥ ॥ ८ ॥ ८ ॥

तात् अवनिज्यमाना अंघ्रयो मूलप्रांता यस्य हरिद्भिः पालाशवर्णैः ४ ५ किंनरादीनां संगीतसन्नादैर्नदंत्यो गुहा यस्मिन् अद्रेः शेते अभिगर्जंति हरयः सिंहाः अमर्षया असहनेन ६ नाना ये आरण्याः पशवः तेषां व्रातैः संकुलाभिः द्रोणीभिः अलंकृत आस्ते किंच चित्रा द्रुमा येषु तेषु सुरोद्यानेषु कलकंठा मधुरस्वना विहंगमा यस्मिन् ७॥

रा॰ म॰ ८

किंच स्वच्छोदकैः सरित्सरोभिर्युतः मणयश्चवालुकायेषुतैः पुलिनैश्चयुतः देवस्त्रीणांमज्जनेनयश्चामोदःतेन सौरभयुक्तान्यंबूनि अनिलाश्चतैश्चयुतआस्ते ८ तस्यद्रोण्यांवरुणस्योद्यानमास्तेगिरिवनादिसर्वंध्येयमितिवक्ष्यति

सरित्सरोभिरच्छोदैः पुलिनैर्मणिवालुकैः देवस्त्रीमज्जनामोदसौरभांबुनिलैर्युतः ८ तस्यद्रोण्यांभगवतोवरुणस्यमहात्मनः उद्यानमृतुमन्नामआक्रीडंसुरयोषिता सर्वतोलंकृतंदिव्यैर्नित्यपुष्पफलद्रुमैः ९ मंदारैः पारिजातैश्चपाटलाशोकचंपकैः चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि १० क्रमुकैर्नालिकेरैश्चखर्जूरैर्बीजपूरकैः मधूकैः सालतालैश्चतमालैरसनार्जुनैः ११ अरिष्टोदुंबरप्लक्षैर्वटैः किंशुकचंदनैः पिचुमंदैः कोविदारैः सरलैः सुरदारुभिः १२ द्राक्षेक्षुरंभाजंबूभिर्बदर्यक्षाभयामलैः बिल्वैः कपित्थैर्जंबीरैर्वृतोभल्लातकादिभिः १३ यस्यैकंकांचनंशृंगंसेवतेवैदिवाकरः अपरंराजतंशृंगंसेवातेवैनिशाकरः तृतीयंब्रह्मसदनंप्रकृष्टंशृंगमुत्तमं नतत्कृतघ्नाः पश्यंतिनदृशंसाचनास्तिकाः नातप्ततपसोलोकेयेचपापकृतोजनाः तस्मिन्सरःसुविपुलंलसत्कांचनपंकजम् कुमुदोत्पलकल्हारशतपत्रश्रियोर्जितं ॥ ९ अतोगिरिमुपवर्ण्यवनंवर्णयतिसर्वतोलंकृतमिति ९ पुनर्गिरिंवर्णयतिमंदारैरितिचतुर्भिः मंदारादिभिर्वृतइत्यन्वयः १० ११ १२ १३ तस्मिन्गिरौसरआस्तेतद्वर्णयतिसुविपुलंइत्यादिसार्द्धैःपंचभिःल ॥ संतिकांचनपंकजानियस्मिन्कुमुदादीनांश्रियाऊर्जितं॥

कलःस्वनोयेषांतैःशकुंतैश्चनिर्घुष्टे १४ चक्राह्वैःसारसैरप्याकीर्णंजलकुक्कुटादीनांकुलैःकूजितं १५ मत्स्यानांकच्छपानां
चसंचारेणचलतांपद्मानांरजसायुक्तंपयोयस्मिन्तत् १६ १७ नित्यमृतवः फलपुष्पादिसंपत्तिहेतवोयेषांतैरलंशो
भितं १८ तत्रैवंसतिएकदातत्गिरिकाननाश्रयोवारणयूथपःकरेणुभिश्चरन्तृषार्दितेनयूथेनवृतःसरोवरस्था

मत्तषट्पदनिर्घुष्टंशकुंतैश्चकलस्वनैः १४ हंसकारंडवाकीर्णंचक्राह्वैःसारसैरपि ज
लकुक्कुटकोयष्टिदात्यूहकुलकूजितं १५ मत्स्यकच्छपसंचारचलत्पद्मरजःपयः कदं
बवेतसनलनीपवंजुलकैर्वृतं १६ कुंदैःकुरबकाशोकैःशिरीषैःकुटजेंगुदैः कुब्जकैः
स्वर्णयूथीभिर्नागपुन्नागजातिभिः १७ मल्लिकाशतपत्रैश्चमाधवीजालकादिभिःशोभि
तंतीरजैश्चान्यैर्नित्यर्तुभिरलंद्रुमैः १८ तत्रैकदातद्गिरिकाननाश्रयःकरेणुभिर्वारणयूथप
श्चरन् सकंटकान्कीचकवेणुवेत्रवद्विशालगुल्मंप्ररुजन्वनस्पतीन् १९ यद्गंधमात्राद्धर
योगजेंद्राव्याघ्रादयोव्यालमृगाःसखड्गाः महोरगाश्चापिभयाद्द्रवंतिसगौरकृष्णाःसरभा
श्चमर्यः २० वृकावराहामहिषर्क्षशल्यागोपुच्छशालावृकमर्कटाश्चअन्यत्रक्षुद्राहरिणाःश
शादयश्चरंत्यभीतायदनुग्रहेण २१॥ सरआशंससमीपमगमदितियंचमेनान्वयःकिंकुर्वन्कीचकवेणुवेत्रवं
तंविशालंगुल्मंलतादिसंदर्भंवनस्पतींश्चप्ररुजन्प्रभंजन् १९ कथंभूतःयस्यगंधमात्राद्धरयःसिंहागजेंद्रादयश्चभ
याद्द्रवंतिपलायंते २० वृकादयःक्षुद्राअल्पाःप्राणिनःअन्यत्रतद्दृष्टिपर्यंतस्थाचरंति २१॥

पुनः कीदृशः घर्म्मतप्तः मदच्युतमदस्रावी मदमश्नंतीतितथातैः २२ २३ निजेनपुष्करेणकराग्रेणोद्धृतंगतक्लमःसन्निकामं

सघर्म्मतप्तः करिभिः करेणुभिर्वृतोमदच्युत्कलभैरनुद्रुतः गिरिंगरिम्णापरितः प्रकंपय
न्निषेव्यमाणोऽलिकुलैर्मदाशनैः २२ सरोऽनिलंपंकजरेणुरूषितंजिघ्रन्विदूरान्मदवि
ह्वलेक्षणः वृतः स्वयूथेनतृषार्दितेनतत्सरोवराभ्याशमथाऽगमद्द्रुतम् २३ विगाह्यतस्मि
न्नमृतांबुनिर्मलंहेमारविंदोत्पलरेणुवासितं पपौनिकामंनिजपुष्करोद्धृतमात्मानमद्भिः
स्नपयन्गतक्लमः २४ स्वपुष्करेणोद्धृतशीकरांबुभिर्निपाययन्संस्नपयन्यथागृही घृ
णीकरेणूः कलभांश्चदुर्मदोनाचष्टकृच्छ्रंकृपणोऽजमायया २५ तंतत्रकश्चिन्नृपदैव
चोदितोग्राहोबलीयांश्चरणेरुषाऽग्रहीत् यदृच्छयैवंव्यसनंगतोगजोयथाबलंसोति
बलोविचक्रमे २६ तथातुरंयूथपतिंकरेणवोविकृष्यमाणंतरसाबलीयसा विचुक्रुशुर्दी
नधियोऽपरेगजाः पार्ष्णिग्रहास्तारयितुंनचाशकन् २७ नियुध्यतोरेवमिभेंद्रनक्रयोर्वि
कर्षतोरंतरतोबहिर्मिथः समाः सहस्रंव्यगमन्महीपतेसप्राणयोश्चित्रममंसतामराः २८
ततोगजेंद्रस्यमनोबलौजसांकालेनदीर्घेणमहानभूद्व्ययः ॥ ॥ ६९६ ॥

पपौ २४ २५ २६ दीनधियःकरेणवः तंकेवलंविचुक्रुशुः २७ २८ मनउत्साहशक्तिःबलंशारीरंओजःऐंद्रियंतेजः

२ भा·अ· ६

कलंबलादिविपर्ययोविपरीतं अधिकं जलौकसोग्राहस्य २९ सइत्थंयदाप्राणस्यसंकटमापयन्तोदेही ३० बुद्धि
मेवाह नमामिति अहंवनप्रभवामि यतः ग्राहरूपेणकेवलंविधातुः पाशेनावृतः तथापितंपरंपरमेश्वरंपरेषां
ब्रह्मादीनांअयनमाश्रयभूतंशरणंयामि ३१ कोसौयंशरणंयासितत्राह यःकश्चनेतिअंतकएवोरगस्तस्मात् तंशरण

विकृष्यमाणस्यजलेवतीदतोविपर्ययोऽभूत्सकलंजलौकसः २९ इत्थंगजेंद्रःसयदाप
संकटंप्राणस्यदेहीविवशोयदृच्छया अपारयन्नात्मविमोक्षणेचिरंदध्याविमांबुद्धिम
थाभ्यपद्यत ३० नमामिमेत्रातयआतुरंगजाः कुतःकरिण्यःप्रभवंतिमोचितुं ग्राहेणपा
शेनविधातुरावृतोप्यहंचतंयामिपरंपरायणं ३१ यःकश्चनेशोबलिनोऽतकोरगात्प्रचं
डवेगादभिधावतोभृशं भीतंप्रपन्नंपरिपातियद्भयान्मृत्युःप्रधावत्यरणंतमीमहि ३२
॥इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेमन्वंतरानुवर्णनेगजेंद्रोपाख्यानेद्वितीयोध्या
यः २ बादरायणिरुवाच एवंव्यवसितोबुद्ध्यासमाधायमनोहृदि जजापपरमंजाप्यंप्राग्ज
न्मन्यनुशिक्षितं १ गजेंद्रउवाच ॐनमोभगवतेतस्मैयतएतच्चिदात्मकं॥

ईमीमहिव्रजेम यद्भयादि
त्यत्रश्रुतिःभीषाऽस्माद्वातःपवतेभीषोदेतिसूर्यःभीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमइति ३२ इतिश्रीभागवते
महापुराणेअष्टमेद्वितीयोऽध्यायः २ तृतीयेतुगजेंद्रेणस्तुतोहरिरुपेत्यतं समुद्दधारतंग्राहाद्ग्राहंदेवलशा
पतः १ जाप्यंजप्यंस्तोत्रं प्राक्जन्मनिइंद्रद्युम्नसंज्ञे १ तस्मैनमोनमनंअभिधीमहिअभिध्यायेमकेवलंग्राह॥

राम ६

गृहीतत्वेनकायप्रणतेरशक्यत्वात् स्वस्यतत्त्वज्ञानंसंभावयितुंविशिनष्टि यतश्चिद्रूपात् एतद्देहादिचिदात्मकंचे
तनंभवति तदुक्तं येनचेतयतेविश्वमिति तत्रहेतुः पुरुषायपूर्वंकारणत्वेनप्रविष्टाये ननुप्रकृतिपुरुषौकारणमि
तिप्रसिद्धंतत्राह आदिः प्रकृतिः वीजंपुरुषः तद्रूपायप्रविष्टत्वेपिजीववत्संसारतंत्र्यंवारयतिपरेशायेति २ परमैश्व
र्यंविवृण्वन्नाह यावत्समाप्तिः यस्मिन्नधिष्ठानेयतउपादानात् येनकर्त्राचयश्चस्वयमेवेदंविश्वंभवति अस्मात्कार्या
त्परस्मात्कारणाच्चयः परस्तंस्वयंभुवंस्वतःसिद्धंप्रपद्येशरणंव्रजामि ३ विश्वहेतुत्वेस्वतःसिद्धत्वंचोक्तं इदानीं

पुरुषायादिवीजायपरेशायाभिधीमहि २ यस्मिन्निदंयतश्चेदंयेनेदंयइदंस्वयं योऽ
स्मात्परस्माच्चपरस्तंप्रपद्येस्वयंभुवं ३ यःस्वात्मनीदंनिजमाययार्पितंक्वचिद्विभातंक्वचत
त्तिरोहितं अविद्धदृक्साक्ष्युभयंतदीक्षतेसआत्ममूलोऽवतुमांपरात्परः ४ कालेनपंच
त्वमितेषुकृत्स्नशोलोकेषुपालेषुचसर्वहेतुषु तमस्तदासीद्गहनंगभीरंयस्तस्यपारेऽभिविराज

विश्वप्रकाशकत्वंस्वप्रकाशकत्वंवर्णयन्प्रार्थयतेयःस्वात्मनीतिविभातंअभिव्यक्तंसत् क्वचित्प्रलयेति (तेविभुः५
रोहितंलीनंसत्तदुभयंकार्यंकारणंचसाक्षीसन्नीक्षतेसाक्षित्वेहेतुःअविद्धदृक्अलुप्तदृष्टिःआत्ममूलःस्वयंप्रकाशः
कुतःपरात्प्रकाशकाच्चक्षुरादेरपिपरःतस्यापिप्रकाशकइत्यर्थःचक्षुषश्चक्षुरित्यादिश्रुतेः ४तिरोहितमीक्षतइत्ये
तत्प्रपंचपूर्वकंदर्शयंस्तंवरदंप्रार्थयतेकालेनेतिद्वाभ्यांपंचत्वमितेषुनाशंप्राप्तेषुगहनंदुरवगाहं गभीरमनंतंतस्य
तमसःआदित्यवर्णंतमसःपरस्तादितिश्रुतेः ५

अतएवदेवादयोयस्यस्वरूपंनविदुः जंतुरर्वाचीनः कोपिगंतुंज्ञातुंईरितुंवक्तुंवा दुरत्ययंदुर्गममनुक्रमणंचरितं
कथनंवायस्यसमांमां ६ कथंतर्हितमेवविदित्वातिमृत्युमेतीत्यादिश्रुतिरित्याशंक्यतत्ज्ञानोपायंकथयन्त्रा
हदिदृक्षवइति अलोकव्रतंब्रह्मचर्यादिअव्रणंअछिद्रंभूतानामात्मभूताः भूतेष्वात्मदृष्टयः संतः समेगतिरस्
तु ७ दुरत्ययानुक्रमणत्वप्रपंचयन्अणमति नविद्यतइत्यद्भिना लोकानामप्ययः प्रलयः संभवोजन्मतयोर्हेतोः

नयस्यदेवाऋषयःपदंविदुर्जंतुःपुनः कोर्हतिगंतुमीरितुंयथानटस्याकृतिभि॥
र्विचेष्टतोदुरत्ययानुक्रमणःसमाऽवतु ६ दिदृक्षवोयस्यपदंसुमंगलंविमुक्तसंगामुन
यःसुसाधवः चरंत्यलोकव्रतमव्रणंवनेभूतात्मभूताःसुहृदःसमेगतिः ७ नविद्यते
यस्यचजन्मकर्मवाननामरूपेगुणदोषएववा तथापिलोकाऽप्ययसंभवाययःस्व
माययातान्यनुकालमृच्छति ८ तस्मैनमःपरेशायब्रह्मणेनंतशक्तये अरूपायोरु॥
रूपायनमआश्चर्यकर्म्मणे ९ नमआत्मप्रदीपायसाक्षिणेपरमात्मनेनमोगिरांविदूरा
यमनसश्चेतसामपि १०॥ एकांतदर्थंयस्तानिजन्मादीनिस्वीकरोति तस्मैनमइत्युत्तरेणान्वयः ८ ब्रह्म॥
णेब्रह्मरूपायअरूपाय अनंतशक्तयेउरुरूपायबहुरूपाय अतआश्चर्याणिकर्माणियस्यतस्मैपरेशायन॥
मः ९ आत्मप्रदीपायप्रकाशांतरस्याविषयाय कुतः साक्षिणेप्रकाशकाय परमात्मनेजीवनियंत्रे अतएव
गिरांविदूरायअप्राप्यायचेतसांचित्तवृत्तीनांतथाचश्रुतिः यतोवाचोनिवर्त्ततेअप्राप्यमनसासहेति १० ॥६

एवमपिविपश्चितानिपुणेन नैष्कर्म्येणसंन्यासेनसत्वेनशुद्धेन संन्यासयोगाद्यतयः शुद्धसत्वाइतिश्रुतेः प्रति
लभ्यायप्रत्यक्त्वे नप्राप्याय निर्वाणसुखसंविदेमोक्षानंदानुभूतये ११ गुणधर्मिणेसत्वादिधर्मानुकारिणेज्ञा
नघनायचेति निर्विशेषत्वेपिप्रधानवैलक्षण्यमुक्तं १२ साक्षिणइतिसर्वाध्यक्षत्वेपिनिर्विकारत्वमुक्तंआत्म
नांक्षेत्रज्ञानांमूलायमूलस्यप्रधानस्यापिप्रकृतयेउद्भवहेतवे तत्रहेतुः पुरुषायपूर्वमेवसते तथाचश्रुतिःपूर्वमे
वाहमिहासमितितत्पुरुषस्यपुरुषत्वमितिपूर्णायेतिवा १३ सर्वेंद्रियाणांयेगुणाः विषयास्तेषांद्रष्ट्रेसर्वप्रत्यया

सत्वेनप्रतिलभ्यायनैष्कर्म्येणविपश्चिता नमःकैवल्यनाथायनिर्वाणसुखसंविदे ११
नमःशांतायघोरायगूढायगुणधर्मिणे निर्विशेषायसाम्यायनमोज्ञानघनायच १२
क्षेत्रज्ञायनमस्तुभ्यंसर्वाध्यक्षायसाक्षिणे पुरुषायात्ममूलायमूलप्रकृतयेनमः १३
सर्वेंद्रियगुणद्रष्ट्रेसर्वप्रत्ययहेतवे असताच्छाययोक्तायसदाभासायतेनमः १४ नमो
नमस्तेऽखिलकारणायनिःकारणायाद्भुतकारणाय॥ एइंद्रियवृत्तयोहेतवोज्ञापकायस्यतस्मैनदेवा

ह असता अहंकारादिप्रपंचेनछाययाऽ सद्रूपयाउक्तायप्रतिबिंबेनबिंबमिवसूचितायतत्रहेतुःसद्रूपोविष
येष्वाभासोयस्यतस्मै तदुक्तंतृतीये यथाजलस्थआभासइत्यादिनापाठांतरे असत्यस्यछायया अध्यासेनअ
क्तायगुक्तायतदधिष्ठानायेत्यर्थः १४ अखिलकारणायसर्वकारणरूपाय अतएवस्वयंनिष्कारणाय
कारणत्वेपिमृदादिवद्विकारंवारयतिअद्भुतकारणायेति एवंभूतत्वेप्रमाणमाह सर्वेआगमाः पंचा

शास्त्रादयः आम्नायाश्च वेदाः तेषां महार्णवाय स्रोतसामिव पर्यवसानस्थानाय अपवर्गाय मोक्षरूपाय अतः परायणाय उत्तमानामाश्रयाय १५ गुणा एवारणिस्तया छन्नश्चिदूष्मयो ज्ञानाग्निः तस्मै तेषां गुणानां क्षोभे कार्ये विस्फूर्जितं वहिर्वृत्तिकं मानसं यस्य सो ऽकामयत बहुस्यामिति श्रुतेः नैष्कर्म्यमात्मतत्त्वं तस्य भावेन भावनया विवर्जिता आगमा विधिनिषेधलक्षणाः यैस्तेषु स्वयमेव प्रकाशो यस्य तस्मै १६ मादृक् मद्विधश्चासौ प्रपन्नः पशुः तस्य पाशोऽविद्या तस्य विशेषेण मोक्षणं येन तत्र योग्यतामाह मुक्ताय मोचने हेतुः

सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय १५ गुणारणिच्छन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय नैष्कर्म्यभावेन विवर्जितागमस्वयंप्रकाशाय नमस्करोमि १६ मादृक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमोऽलयाय स्वांशेन सर्वतनुभृन्मनसि प्रतीतप्रत्यग्दृशे भगवते बृहते नमस्ते १७ आत्मात्मजाप्तगृहवित्तजनेषु सक्तैर्दुष्प्रापणाय गुणसंगविवर्जिताय मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय १८॥

भूरिः करुणा यस्य अतस्तत्रार्थे अलयाय अनलसाय स्वांशेन अंतर्यामिरूपेण सर्वेषां तनुभृतां मनसि प्रतीताय प्रख्याताय प्रत्यक् दृक् तस्मै तथा च श्रुतिः आत्मनि तिष्ठन् आत्मानमंतरो यमयतीति भगवते सर्वेषां तनुभृतां नियमेन समर्थाय तेषां मनसि स्थितत्वेपि बृहते अपरिच्छिन्नाय १७ अंतस्थत्वेपि देहादिष्वासक्तैर्दुष्प्रापणाय प्राप्तुमशक्याय तत्र हेतुः गुणसंगेन विवर्जिताय अत एव मुक्तात्मभिः देहादि

इष्टांगतिं कामितं धर्मादिफलंप्राप्नुवंत्येवनतुतावदेवकिंतुयास्तैरकामिताअन्याअप्याशिषोरातिदेहमप्यव्ययंरातिएवं
यः अदभ्रदयः समेविमोक्षणंकेवलंकरोतुनाधिकंप्रार्थये १९ एतावदप्यहंभक्तिसुखानभिज्ञत्वेनवांछामियस्यत्वे
कांतभक्तानकंचिदर्थंवांछंति तंपरमेश्वरमीडेस्तौमीत्युत्तरेणान्वयः तेषांनिष्कामत्वेहेतुः येवैभगवतः सर्वज्ञान्मुक्ता
प्रपन्नाःसेवितवंतः २० अत्यद्भुतसुमंगलत्वप्रदर्शनार्थमक्षरत्वादिविशेषणानि २१ परिपूर्णत्वंप्रदर्शयन्नाह

यंधर्मकामार्थविमुक्तिकामाभजंतइष्टांगति माप्नुवंति किंत्वाशिषोरात्यपिदेहमव्य
यंकरोतुमेऽदभ्रदयोविमोक्षणम् १९ एकांतिनोयस्यनकंचनार्थंवांछंतियेवैभगवत्प्र
पन्नाः अत्यद्भुतंतच्चरितंसुमंगलंगायंतआनंदसमुद्रमग्नाः २० तमक्षरंब्रह्मपरंपरेशम
व्यक्तमाध्यात्मिकयोगगम्यं अतींद्रियंसूक्ष्ममिवातिदूरमनंतमाद्यंपरिपूर्णमीडे २१
यस्यब्रह्मादयोदेवावेदालोकाश्चराचराः नामरूपविभेदेनफल्ग्व्याचकलयाकृताः २२
यथार्चिषोऽग्नेःसवितुर्गभस्तयोनिर्यांतिसंयांत्यसकृत्स्वरोचिषः तथायतोऽयंगुणसंप्रवाहो
बुद्धिर्मनःखानिशरीरसर्गाः २३॥ त्रिभिः यस्येति फल्ग्व्याचस्वल्पयैवकलयाअंशेनकृताःसजयतादिति
तृतीयेनान्वयः २२ कथंकृताइत्यपेक्षायांदृष्टांतौयथार्चिषोऽग्नेरितिप्रवाहेदृष्टांतःसवितुर्गभस्तयइत्यानंत्येनि
र्यांतिउद्गच्छंतिसंयांतिलीयंते गुणसंप्रवाहमेवाह बुद्धिर्मन इतिखानीतिकरणानिशरीरसर्गाः कार्यदेहप्रवा
हाश्चयतोभवंतिसः २३

३ भा.अ. ८

अतएवदेवादीनांमध्येकोऽपिनभवतिनजंतुःलिंगत्रयशून्यंप्राणिमात्रमपि किंतु सर्वस्यनिषेधेअवधित्वेनअवशि
ष्यतइतिनिषेधशेषःमाययाअशेषःअशेषात्मकस्सजयतात्महिमोक्षणायाविर्भवतु २४ नचग्राहाच्छरीरस्यमो
क्षणेनाहंजीवितुमिच्छामितत्रहेतुःअमुयाअंतर्वहिश्चाविवेकव्याप्तयागजजात्याकिंप्रयोजनंआत्मलोकस्यआ
त्मप्रकाशस्ययदावरणमज्ञानंतस्यैवतुमोक्षमिच्छामि यस्यमोक्षस्यकालेननाशोनास्तियद्वादेहस्यसंवंधोदेहना

सवैनदेवाऽसुरमर्त्यतिर्यक्नस्त्रीनषंढोनपुमान्नजंतुः नायंगुणःकर्मनसन्नचासन्निषे
धशेषोजयतादशेषः २४ जिजीविषेनाहमिहामुयाकिमंतर्वहिश्चावृतयेभयोन्या इ
च्छामिकालेननयस्यविप्लवस्तस्यात्मलोकावरणस्यमोक्षम् २५ सोहंविश्वसृजंविश्व
मविश्वंविश्ववेदसम् विश्वात्मानमजंव्रह्मप्रणतोस्मिपरंपदम् २६ योगरंधितकर्मा
णोहृदियोगविभाविते योगिनोयंप्रपश्यंतियोगेशंतंनतोऽस्म्यहं २७ नमोनमस्तुभ्यमस
ह्यवेगशक्तित्रयायाखिलधीगुणाय॥ एशेनश्चेदेवकिंतन्मोक्षप्रार्थनेन आत्मलोकावरणस्यतुकाले
नविप्लवोनास्ति ज्ञानैकनिवर्त्यत्वात् अतस्तस्यैवमोक्षमिच्छामीत्यर्थः २५ सोहंमुमुक्षुःविश्वंविश्वरूपं अवि
श्वंविश्वव्यति रिक्तंच विश्वंवेदोधनंउपकरणंयस्यतं विश्वस्यात्मानंचकेवलंप्रणतोऽस्मिनतुतंजानामि २६
योगंविनादुर्ज्ञेयत्वादित्याहयोगेनभगवद्धर्मेणरंधितानिदग्धानिकर्म्माणियेषांतेयंप्रपश्यंति २७ तर्हिसर्वेपि
योगमेवकिंनास्तिताः तत्राहनमइतिद्वाभ्यां॥

राम ६

असह्यो वेगो रागादिलक्षणो यस्य तथाभूतं शक्तित्रयं यस्य तस्मै वहिश्च अखिलधियां सर्वेंद्रियाणां गुणाय शब्दादिरूपेण प्रतीयमानाय अतः कदिंद्रियाणां कुत्सितानींद्रियाणि येषां तेषाम् अनवाप्यं वर्त्म यस्य २८ यच्छक्त्या यस्य मायया अहं धीस्तया हतं आवृतं अयं जनो न वेद दुरत्ययं माहात्म्यं यस्य तं इतः आश्रितोऽस्मि २९ उपवर्णितं

प्रपन्नपालाय दुरंतशक्तये कदिंद्रियाणाम् अनवाप्यवर्त्मने २८ नायं वेद स्वमात्मानं यच्छक्त्याऽहं धिया हतं तं दुरत्ययमाहात्म्यं भगवंतमितोऽस्म्यहम् २९ श्रीशुक उवाच एवं गजेंद्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिंगभिदाऽभिमानाः नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत् ३० तं तद्वदार्त्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः छंदोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु यतो गजेंद्रः ३१ सोऽन्तःसरस्युरुबलेन गृहीत आर्त्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रं उत्क्षिप्य सांबुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो भगवन्नमस्ते ३२॥ ३० निर्विशेषं मूर्त्तिभेदं विना परं तत्त्वं येन ते विविधाश्चासौ लिंगभिदा मूर्त्तिभेदः तस्याभिमानो येषां ते अत एते यदा नोपजग्मुः तत्र तदा अखिलामरमयः सर्वदेवमयमूर्त्तिः ३० दिविजैर्देवैः सह छंदोमयेनातिशीघ्रायोक्तः ३१ खे दृष्ट्वा उपात्तं उद्यतं चक्रं येन ३२॥ ३२॥ ३२ ३२॥

गरुडोऽपि मंदगतिरिति ततः सहसाऽवतीर्य अरिणा चक्रेण विपाटितं मुखं यस्य उच्छ्रियाणां देवानां ३३॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे टीकायां तृतीयोऽध्यायः ३ चतुर्थे तु ततो ग्राहः प्राप गंधर्वतां पुनः गजं स्वपार्षदं कृत्वा हरिर्निन्ये निजं पदं १ १२ हूहूसंज्ञो गंधर्वसत्तमः असौ देवलस्य शापेन ग्राहो जातः स वै ततः सद्यो मुक्तः सन् उत्तमश्लोकमगायत स॥

तं वीक्ष्य पीडितमजः सहसाऽवतीर्य सग्राहमाशु सरसः कृपयोज्जहार ग्राहाद्विपाटितमुखादरिणा गजेंद्रं संपश्यतां हरिरमूमुचदुच्छ्रियाणां ३३॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे तृतीयोऽध्यायः ३ श्रीशुक उवाच तदा देवर्षिगंधर्वा ब्रह्मेशानपुरोगमाः मुमुचुः कुसुमासारं शंसंतः कर्म तद्धरेः १ नेदुर्दुंदुभयो दिव्या गंधर्वा ननृतुर्जगुः ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमं २ योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूपधृक् मुक्तो देवलशापेन हूहूर्गंधर्वसत्तमः ३ प्रणम्य शिरसाऽधीशमुत्तमश्लोकमव्ययं अगायत यशोधामकीर्तन्यगुणसत्कथं ४ सोऽनुकंपित ईशेन परिक्रम्य प्रणम्य तं लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ५॥

५ अन्वयः एवं हीतिहासोत्र मेकया सरसि स्त्रीभिः क्रीडन्नसौ स्नातुं प्रविष्टं देवलं पादे प्रगृह्य विचकर्ष स च प्रकुपितो ग्राहो भवेति शशाप तेन च प्रसादितः सन्नुवाच एवमेव गजेंद्रं गृह्णीष्व तन्न श्च गजेंद्रमुद्धरन् हरिस्त्वामपि मोचयिष्यतीति ३ कथंभूतं यशसो धाम आश्रयं अतः कीर्तन्याः कीर्तनीयाः गुणाः सती कथा च यस्य तं ४ स्वं लोकं गंधर्वलोकं ५॥५॥५ ॥

६ ७ कुलाचले मलयाद्रावाश्रमो यस्य ८ तूष्णीं रहस्युपासीनं वीक्ष्य ९ शापमेवाह असाधुरित्यादि अकृता अशिक्षिता बुद्धिर्यस्य गजो यथा स्तब्धमतिस्तथैवायं अतः स एव गज एव भवत्विति शेषः १० दिष्टं दैवप्रापितं न

गजेंद्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबंधनात् प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ६ स वै पूर्वमभूद्राजा पांड्यो द्रविडसत्तमः इंद्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ७ स एकदाराधनकाल आत्मवान् गृहीतमौनव्रत ईश्वरं हरिं जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः ८ यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह ९ तस्मा इमं शापमदादसाधुरयं दुरात्माऽकृतबुद्धिरद्य विप्रावमंता विशतां तमोंधं यथा गजः स्तब्धमतिः स एव १० श्रीशुक उवाच एवं शप्त्वा गतोऽगस्त्यो भगवान्नृप सानुगः इंद्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ११ आपन्नः कौंजरीं योनिमात्मस्मृतिविनाशिनीं हर्यर्चनानुभावेन यद्गजत्वेप्यनुस्मृतिः १२ एवं विमोक्ष्य गजयूथपमब्जनाभस्तेनापि पार्षदगतिं गमितेन युक्तः गंधर्वसिद्धविबुधैरुपगीयमानकर्माद्भुतं स्वभवनं गरुडासनोऽगात् १३ ॥ ॥

उपधारयन्नालोचयन् ११ कौंजरीं योनिमापन्नः तर्हि पश्चात्कथं स्मृतिर्जाता तत्राह हरेरर्चनस्यानुभावेनेति १२ अ

द्भुतं स्वभवनमगात् १३॥

एतत्गजराजमोक्षणंनामकृष्णानुभावस्तवेरितःकथंभूतंतत्राह स्वर्ग्यमित्यादिदुःस्वप्नंनाशयतीतितथा १४ अतः
श्रेयस्कामायेएतद्यथावदनुकीर्त्तयंति १५ अनेनश्रेयोभवतीतिकुतोज्ञातंसाक्षाद्भगवद्वचनादेवेत्याह इदमाहेत्या

एतन्महाराजतवेरितोमयाकृष्णानुभावोगजराजमोक्षणं स्वर्ग्यंयशस्यंकलिकल्मषा
पहंदुःस्वप्ननाशंकुरुवर्यशृण्वतां १४ यथाऽनुकीर्त्तयंत्येतच्छ्रेयस्कामाद्विजातयः शु
चयःप्रातरुत्थायदुःस्वप्नाद्युपशांतये १५ इदमाहहरिःप्रीतोगजेंद्रंकुरुसत्तम शृण्वतां
सर्वभूतानांसर्वभूतमयोविभुः १६ श्रीभगवानुवाच येमांत्वांचसरश्चेदंगिरिकंदरकान
नं वेत्रकीचकवेणूनांगुल्मानिसुरपादपान् १७ शृंगाणीमानिधिष्ण्यानिब्रह्मणोमेशि
वस्यच क्षीरोदंमेप्रियंधामश्वेतद्वीपंचभास्वरं १८ श्रीवत्संकौस्तुभंमालांगदांकौमोद
कींममसुदर्शनंपांचजन्यंसुपर्णंपतगेश्वरम् १९ शेषंचमत्कलांसूक्ष्मांश्रियंदेवींमदा
श्रयां ब्रह्माणंनारदमृषिंभवंप्रह्लादमेवच २० मत्स्यकूर्मवराहाद्यैरवतारैःकृतानिमे क
र्म्माण्यनंतपुण्यानिसूर्यंसोमंहुताशनम् २१ प्रणवंसत्यमव्यक्तंगोविप्रान् धर्ममव्ययं
दाक्षायणीर्धर्मपत्नीःसोमकश्यपयोरपि २२॥ ए॥ दियावत्समाप्ति १६ प्रसंगादन्यस्यापिस्मरणेफलमु
च्यतेसर्वेषांद्वितीयांतानांस्मरंतीत्यष्टमेनान्वयः १७ १८ १९ २० २१ अव्यक्तंमायां अव्ययंधर्मंभक्तिलक्षणंसोम

सितवारणमैरावतं २३ सुसमाहिताः एकाग्रचित्ताः ममरूपाणिमद्विभूतीः २४ २५ जलजोत्तमं शंखवरं प्रध्मा
यवादयित्वा २६॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकीयांचतुर्थोऽध्यायः ४ अमृताख्यानमष्टाभिरध्या

गंगांसरस्वतींनंदांकालिंदींसितवारणं ध्रुवंब्रह्मऋषीन्सप्तपुण्यश्लोकांश्चमानवान् २३
उत्थायापररात्रांतेप्रयताः सुसमाहिताः स्मरंतिममरूपाणिमुच्यंतेह्येनसोखिलात् २४
येमांस्तुवंत्यनेनांगप्रतिबुध्यनिशात्यये तेषांप्राणात्ययेचाहंददामिविमलांमतिं २५ श्री
शुकउवाच इत्यादिश्यहृषीकेशः प्राध्मायजलजोत्तमं हर्षयन्विबुधानीकमारुरोहखग
गाधिपं २६॥ इतिश्रीभागवतेमहापुराणेऽष्टमस्कंधेचतुर्थोध्यायः ४ श्रीशुकउवाच
राजन्नुदितमेतत्तेहरेःकर्माघनाशनं गजेंद्रमोक्षणंपुण्यंरैवतंत्वंतरंशृणु १ पंचमोरै
वतोनाममनुस्तामससोदरः बलिविंध्यादयस्तस्यसुताअर्जुनपूर्वकाः २ विभुरिंद्रःसुर
गणाराजन्भूतरयादयः हिरण्यरोमावेदशिराऊर्ध्वबाह्वादयोद्विजाः ३ पत्नीविकुंठाशु
भ्रस्यवैकुंठैःसुरसत्तमैः तयोःस्वकलयाजज्ञेवैकुंठोभगवान्स्वयं ४॥ ॥

यैरनुवर्ण्यतेस्वभक्तपक्षपातेनयत्रयोधायितंप्रभोः १ पंचमेपंचमंचाथषष्ठंवाकथयन्मनुं विप्रशापा
त्रिनिः श्रीकैः कृतादेवैहरेस्तुति २ १ तामसस्यचतुर्थोमनुः तस्यसोदरःभ्राताः २ ३ ४ ॥ ॥

५
भा॰ अ॰
१२

५ तस्यवैकुंठसंज्ञस्यहरेरनुभावः सनकादिशापेनदैत्यतांप्राप्ताभ्यांस्वपार्षदाभ्यांवाराहादिरूपेणयुद्धादिलक्षणं गुणाश्चब्रह्मण्यतादयःपरमोदयाश्चमहद्भूयःकथिताःतृतीयस्कंधादिषु ६ ७ ८ ९ १० यतोहेतोः अंशेनचराचरात्म

वैकुंठःकल्पितोयेनलोकोलोकनमस्कृतः रमयाप्रार्थ्यमानेनदेव्यातत्प्रियकाम्यया ५
तस्यानुभावःकथितोगुणाश्चपरमोदयाः भौमान्रेणून्सविममेयोविष्णोर्वर्णयेद्गुणान्
६ षष्ठश्चचक्षुषःपुत्रश्चाक्षुषोनामवैमनुः पुरुःपुरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः
७ इंद्रोमंत्रद्रुमस्तत्रदेवाआप्यादयोगणाः मुनयस्तत्रवैराजन्हविष्मद्वीरकादयः॥
८ तत्रापिदेवःसंभूत्यांवैराजस्याभवत्सुतः अजितोनामभगवानंशेनजगतःपतिः ९
पयोधिंयेननिर्मथ्यसुराणांसाधितासुधा भ्रममाणोऽम्भसिधृतःकूर्मरूपेणमंदरः १०
राजोवाच यथाभगवताब्रह्मन्मथितःक्षीरसागरः यदर्थंवायतश्चाद्रिंदधाराऽम्बुचरात्म
ना ११ यथाऽमृतंसुरैःप्राप्तंकिंचान्यदभवत्ततः एतद्भगवतःकर्मवदस्वपरमाद्भुतं १२॥
त्वयासंकथ्यमानेनमहिम्नासात्वतांपतेः नातितृप्यतिमेचित्तंसुचिरंतापतापितं १३ श्री
सूतउवाच संपृष्टोभगवानेवंद्वैपायनसुतोद्विजाः अभिनंद्यहरेर्वीर्यमभ्याचष्टुंप्रचक्रमे १४॥

नाकूर्मरूपेण ११ सुराणांसाधितासुधेत्युक्तपायुद्धाद्यपिसूचितंअतः पृच्छतिकिंचान्यदिति १२ १३ १४॥

राम
१२

नोतिष्ठेरन्न पुनर्ज्जीवंतिस्मेत्यर्थः १५ दुर्वाससा हि कदाचिन्मार्गे गच्छंतमिंद्रं दृष्ट्वा स्वकंठस्था माला तस्मै दत्ता तेन च। श्रीमदेनानादृत्यैरावतस्य कुंभयोर्निक्षिप्ता स च गजोन्नमः पद्भ्यां तां मालां चूर्णीचकार ततः कुपितो दुर्वासास्तं शशाप। त्रिभिर्लोकैः सह त्वं निःश्रीको भवेति तदेतदाह यदा दुर्वाससः शापादिति इज्यादयः यागाद्याः १६ असुरान् अय

श्रीशुक उवाच यदा युद्धेऽसुरैर्देवा बाध्यमानाः शितायुधैः गतासवो निपतिता नोत्तिष्ठेरन्स्म भूयशः १५ यदा दुर्वाससः शापात्सेंद्रा लोकास्त्रयो नृप निःश्रीकाश्चाऽभवंस्तत्र नेशुरिज्यादयः क्रियाः १६ निशम्यैतत्सुरगणा महेंद्रवरुणादयः नाध्यागच्छन्स्वयं मंत्रैर्म्मंत्रयंतो विनिश्चयं १७ ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्द्धनि सर्वशः सर्वं विज्ञापयांचक्रुः प्रणताः परमेष्ठिने १८ स विलोक्येंद्रवाय्वादीन्निःसत्वान्विगतप्रभान् लोकानमंगलप्रायानसुरानयथा विभुः १९ समाहितेन मनसा संस्मरन्पुरुषं परं उवाचोत्फुल्लवदनो देवान्स भगवान्परः २० अहं भवो यूयमथोऽसुरादयो मनुष्यतिर्यग्द्रुमघर्म्मजातयः यस्यावतारांशकलाविसर्जिता व्रजाम सर्वे शरणं तमव्ययं २१ ॥

॥अयथा देववैलक्षण्येन बलपुष्ट्यादियुक्तान् विलोक्येत्यर्थः १७ १८ १९ हरिं शरणं गताः संतो यथापूर्व्वं सर्वं प्राप्स्याम इति हर्षेणोत्फुल्लं विकसितं वदनं यस्य २० मनुष्यादयो जरायुजांडजोद्भिज्जस्वेदजाः यस्यावताराः पुरुषः तस्यांशो ब्रह्मा तस्य कलाः मरीच्यादयस्ताभिर्विसर्जिताः पुत्रपौत्रादिद्वारा जनिताः २१ ॥

भा॰ श्री॰ ५ ९३

ननु तर्हि सर्वेषां सौम्यः स्यात् किं तच्छरणाश्रयेण सत्यं यद्यप्येवं तथाप्यस्मत्पक्षपातो भविष्यतीत्याशयेनाह न
यस्येति द्वाभ्यां स्थितिपालनलक्षणः कालः अतः सुरप्रियः सन् स्वीयानां नः शं सुखं करिष्यति २२ २३ यत्र क्षी
राब्धौ हरेर्वासः तद्देवतमसः परं स्थानं यद्वा लोकालोकात्परतो यत्तमस्ततः परं स्थानं जगाम २४ दैवीभिः लोके
अप्रसिद्धाभिः वैदिकीभिर्गीर्भिः स्तुतिमकरोत् २५ देववरं त्वां नमामहे देववरं त्वां नमामेति वा वरत्वे हेतुः सत्यं

नयस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः अथापि सर्गस्थितिसंयमार्थं ध
त्ते रजः सत्त्वतमांसि काले २२ अयं तु तस्य स्थितिपालनक्षणः सत्त्वं जुषाणस्य भवाय देहिनां
तस्माद्व्रजामः शरणं जगद्गुरुं स्वानां स नो धास्यति शं सुरप्रियः २३ श्रीशुक उवाच इत्याभा
ष्य सुरान्वेधाः सह देवैररिंदम अजितस्य पदं साक्षाज्जगाम तमसः परम् २४ तत्रादृष्टस्वरू
पाय श्रुतपूर्वाय वै विभो स्तुतिमब्रूत दैवीभिर्गीर्भिस्त्ववहितेन्द्रियः २५ श्रीब्रह्मोवाच अवि
क्रियं सत्यमनंतमाद्यं गुहाशयं निष्कलमप्रतर्क्यं मनोऽग्रयानं वचसानिरुक्तं नमाम हे देवव
रं वरेण्यं २६

कुतः अविक्रियं तत्कुतः अनंतं आद्यं च अनादिं आद्यंतवंतो हि वृद्ध्यादिविक्रियायुक्ता भवंति किं च गुहा
शयं सर्वांतरं कुतः निष्कलं निरुपाधिं तत्कुतः अप्रतर्क्यं तत्कुतः मनोऽग्रयानं मनसोपि जविष्ठं मनः प्राप्यस्थाने ततः प्रा
गेव विद्यमानत्वात् तथा च श्रुतिः अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्शत् तद्धावतोन्यानत्येति ति
ष्ठदिति वचसा अनिरुक्तं अविषयत्वात् यद्वाचाऽनभ्युदितं येन वागभ्युद्यते इति श्रुतेः मनोवचसोरगोचरत्वाद् अ

राम ९३

किंच प्राणादीनां विपश्चितं ज्ञातारं आत्मा अहंकारो देहो वा न तु तत्व्यतिरिक्तं ज्ञेयमस्तीत्याह अर्थो विषयः इंद्रियाणि तद्ग्राहकाणि तदुभयरूपेणाभासत इति तथा तं तथाप्यनिद्रं स्वप्रद्रष्टृवदज्ञानरहितं कुतः अव्रणं अदेहं अत एव अक्षरं खमिव व्यापिनं च सर्वत्र हेतुः यत्र यस्मिन् गृध्रपक्षौ जीवपक्षपातिनौ छायातपौ अविद्या च तन्निवर्तिका विद्या च नास्ति तं त्रियुगं त्रिषु युगेष्वाविर्भवंतं तं शरणं व्रजामः २७ तदेवमविक्रियत्वादिभिः सर्वज्ञत्वादिभिश्च सत्यत्वं वरेण्यत्वं चोक्तं संसारचक्राधारत्वेनापि तदेव दर्शयन्नाह अजस्य जीवस्य चक्रं चक्रवदावर्तमानं देहादि अजया मायया प्रेर्यमाणं यत्तस्य अश्नो यस्य यदधिष्ठानमाहुस्तमृतं सत्तं प्रपद्ये कथंभूतं चक्रं मनोमयं मनः प्रधानं दशेंद्रियाणि पंच प्राणा

विपश्चितं प्राणमनोधियात्मनामर्थेंद्रियाभासमनिद्रमव्रणं छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे २७ अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पंचदशारमाशु त्रिणाभि विद्युच्चलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये २८ य एकवर्णं तमसः परं तदलोकमव्यक्तमनंतपारं आसांचकारोपसुपर्णमेनमुपासते योगरथेन धीराः २९॥

॥ श्चेत्येवं पंचदश अरा यस्य आशु शीघ्रं त्रयो गुणा नाभिस्थानीयस्य विद्युदिव चलं अष्टौ प्रकृतयो नेमय आवरणानि यस्य २८ सर्वजीवनियंतृत्वादिना च वरिष्ठत्वमाह य इति य उपसुपर्णं जीवसमीपेन नियंतृत्वेन आसांचकार आस्ते स्म द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजात इति श्रुतेः यद्वा भक्तरक्षार्थं गरुडस्योपरि उपविष्ट इत्यर्थः तर्हि देहस्थत्वात् भक्तरक्षणादिक्रियावेशाज्जीवसाम्यं स्यात् तत्राह एकवर्णं ज्ञानैकस्वरूपं तमसः प्रकृतेः परं अलोकं अदृश्यं अव्यक्तं निर्विकल्पं अनंतपारं कालतो देशतश्चापरिच्छिन्नं ततः ब्रह्मैव यः अप्रच्युतस्वरूपत्वात् न जीवसाम्यं तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीति विशेषश्रवणादित्यर्थः अत एव यं धीराः योगेन रथेन प्राप्तिसाधनेनोपासते भजन्ते तं नमामीत्युत्तरेणान्वयः २९

॥१६॥२॥सु॥

प्र·
भा·अ·
१४

मायानियंतृत्वेनापिजीवसाम्यंपरिहरन्वरिष्ठत्वमाह यस्यमायांकश्चित्कश्चिदपिनातितितर्त्तिनातिक्रामतिकथंभू
तांजनोययामुह्यति अर्थंआत्मस्वरूपंनतुवेद निर्जितआत्माआत्मशक्तिर्मायाचतद्गुणाश्चयेनतं ३० अर्थंनवेदे
तियदुक्तंतत्प्रपंचयन्नाह इमेवयंदेवाऋषयश्चयस्यप्रिययातन्वासत्वेनैवसृष्टाअपिवहिश्चांतश्चसत्ताप्रकाशाभ्यामा
विःप्रकटमपिसूक्ष्मांगतिंनिरुपाधिस्वरूपंनविद्मः इतरप्रधानाःरजस्तमोमयाःकुतोविदुः तंनमामेतिपूर्वेणैवान्व

नयस्यकश्चातितितर्त्तिमायांययाजनोमुह्यतिवेदनार्थं तंनिर्जितात्मात्मगुणंपरेशंनमाम
भूतेषुसमंचरंतम् ३० इमेवयंयत्प्रिययैवतन्वासत्वेनसृष्टावहिरंतराविः गतिंनसूक्ष्मामृष
यश्चविद्महेकुतोऽसुराद्याइतरप्रधानाः ३१ पादौमहीयंस्वकृतैवयस्यचतुर्विधोयत्रहि
भूतसर्गः सवैमहापूरुषआत्मतंत्रःप्रसीदतांब्रह्ममहाविभूतिः ३२ अंभस्तुयद्रेतउदा
रवीर्यंसिध्यंतिजीवंत्युतवर्द्धमानाः लोकास्त्रयोथाखिललोकपालाःप्रसीदतांब्रह्ममहावि
भूतिः ३३ सोमंमनोयस्यसमामनंतिदिवौकसांवैवलमंधआयुः ईशोनगानांप्रजनःप्र
जानांप्रसीदतांनःसमहाविभूतिः ३४॥

(१यः ३१ इदानींवैराजरूपेणस्तुवन्प्रार्थयतेपादौमहीतिद्वादशभिः
यत्रमह्यांजरायुजादिभूतसर्गःसामहीयस्यपादौसनःप्रसीदतुआत्मतंत्रःपाददिमत्वेऽपिनतत्परतंत्रःकुतःब्रह्मत्र
प्रच्युतरूपःतत्कुतःमहतीविभूतिरैश्वर्यंयस्यसः ३२ उदारंवीर्यंशक्तिर्यस्यतदंभोयस्यरेतःसनःप्रसीदतुउदारवीर्यंतामा
हयतोंभसोलोकादयःसिध्यंतिजायंते ३३ यःसोमोदेवानांमंधःअन्नंअतएववलमायुश्च नगानांवृक्षाणांप्रकर्षे

एम
१४

अग्निर्यस्यतुमुखंजातः कथंभूतः जातंवेदोधनंयस्मात् क्रियाकांडंतत्प्रतिपाद्यंकर्मतन्निमित्तंजन्मयस्य अंतःसमुद्रेउ
दरमध्येस्वधातून्याकाह्निनेवान्नादीन् अनुपचन् प्रसिद्धसमुद्रेपिवडवानलरूपेणउदकान्येवानुपचन्नग्निः ३५
एषतरणिर्यस्यचक्षुरासीत् कथंभूतः देवयानं अर्चिरादिमार्गदेवतात्रयीमयः सैषात्रय्येवविद्यातपतीतिश्रुतेः ब्रह्मणो
घिष्ण्यंउपासनास्थानं यएषोंतरादित्योहिरण्मयःपुरुषइतिश्रुतेः मुक्तेर्द्वारंदेवयानत्वात् अमृतंचपुण्यलोकत्वात्मृत्यु

अग्निर्मुखंयस्यतुजातवेदाजातःक्रियाकांडनिमित्तजन्मा अंतःसमुद्रेऽनुपचन्स्वधातून्
प्रसीदतांनःसमहाविभूतिः ३५ यच्चक्षुरासीत्तरणिर्देवयानंत्रयीमयोब्रह्मणएषधिष्ण्यम्।
द्वारंचमुक्तेरमृतंचमृत्युः प्रसीदतांनःसमहाविभूतिः ३६ प्राणादभूद्यस्यचराचराणांप्राणः
सहोबलमोजश्चवायुः अन्वास्मसम्राजमिवानुगावयंप्रसीदतांनःसमहाविभूतिः ३७॥
श्रोत्राद्दिशोयस्यहृदश्चखानिप्रजज्ञिरेखंपुरुषस्यनाभ्याः प्राणेंद्रियात्मासुशरीरकेतंप्रसी
दतांनःसमहाविभूतिः ३८ बलान्महेंद्रस्त्रिदशाःप्रसादात्मन्योर्गिरीशोधिषणाद्विरिंचः
खेभ्यश्चछंदांस्यृषयोमेढ्रतःकःप्रसीदतांनःसमहाविभूतिः ३९॥ श्चकालात्मकत्वात् एवंभूतस्तरणि

र्यस्यचक्षुःसःप्रसीदतु ३६ एवंभूतोवायुःचराचराणांसहआदिधर्मवान्प्राणः यंप्राणंवयंबुद्ध्याद्यधिष्ठातारोदेवाःसम्राजं
भृत्याइव अन्वास्म अनुसृत्यस्थिताः एवंभूतोवायुर्यस्यप्राणादभूत्सः ३७ खानिदेहगतानिछिद्राणिप्राणःपंचवृत्तिः
इंद्रियाणिच आत्मामनश्च असवोनागकूर्मादयःशरीरंचतेषांकेतंआश्रयभूतंखंयस्यपुरुषस्यनाभ्याःप्रजज्ञेसः ३८

इतरः अधर्मः ४० विट् वैश्यः ऊरुजः नैपुण्यं तस्य वृत्तिः अंघ्रिः अंघ्रिजा वित्यर्थः अवेद शूद्रो अवेदः वेदव्यतिरिक्ता शुश्रूषा वृत्तिः तद्वृत्तिमान् शूद्रश्च पाठांतरं सुगमं ४१ उपरि उत्तरोष्ठात् नस्तः नासिकातो द्युतिः कांतिः पशव्यः पशूनां हितः कामः स्पर्शेनाभूत् ४२ द्रव्यं भूतानि वयः कालं विशेषं लौकिक प्रपंचं यद्यस्मात् दुर्विभाव्यं कुतः प्रवुधापवाधं

श्रीर्वक्षसः पितरश्छाययासन् धर्मस्तनादितरः पृष्ठतोऽभूत् द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारात् प्रसीदतां नः स महाविभूतिः ४० विप्रो मुखं ब्रह्म च यस्य गुह्यं राजन्य आसीद्भुजयोर्बलं च ऊर्वोर्विडोजोंघ्रिरवेद शूद्रो प्रसीदतां नः स महाविभूतिः ४१ लोभोऽधरात्प्रीतिरुपर्यभूत् द्युतिर्नस्तः पशव्यः स्पर्शेन कामः भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां नः स महाविभूतिः ४२ द्रव्यं वयः कर्म गुणान्विशेषं यद्योगमाया विहितान्वदंति यत् दुर्विभाव्यं प्रवुधापवाधं प्रसीदतां नः स महाविभूतिः ४३ नमोऽस्तु तस्मा उपशांतशक्तये स्वाराज्यलाभप्रतिपूरितात्मने गुणेषु मायारचितेषु वृत्तिभिर्न सज्जमानाय नभस्वदूतये ४४ स त्वं नो दर्शयात्मानमस्मत्करणगोचरं प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखांवुजं ४५॥ ॥ विद्वद्भिः योह्यमाने पाठांतरे प्रवुधानां मायेत्यवबोधो यस्मिन्नित्यर्थः ४३ तदेवं सप्रपंचमुपवर्ण्य निष्प्रपंचमुपवर्णयन् प्रणमति नमोऽस्त्विति वृत्तिभिर्दर्शनादिभिः नभस्वान् वायुः तस्येव ऊतिर्लीला यस्य तस्मै ४४ ते सस्मितं मुखांवुजं दिदृक्षूणां नोऽस्मच्चक्षुरादिकरणगोचरं यथा भवत्येवं चात्मानं दर्शय ४५

भक्ते च्छानुवर्त्तित्वं च तव बहुशो दृष्टमेवेत्याह तैस्तैरिति यन्नोदुर्विषहमशक्यं कर्म तद्भगवान् स्वयमेव करोति हि ४६ न
चव हि सुखानामिव त्वद्भक्तानामस्माकं त्वय्यर्पितानि पूर्वपुण्यानि विपरीतफलानि भवितुमर्हंतीत्याह क्लेशो भूर्य्ये
षु अल्पसारं फलं येषु यद्वा विफलान्येव सकामानां कर्माणि त्वय्यर्पितं तु नैव तथेति ४७ तत्र वैफल्यमुपपादय
ति अवम अकल्पोपि कर्म कल्पः कर्माभासोपि ईश्वरार्पितश्चेद्धि फलायासायन कल्पते हि यस्मात्स एव ईश्वरः पुरु

तैस्तैः स्वेच्छाधृतै रूपैः काले काले स्वयं विभो कर्म्म दुर्विषहं यन्नो भगवांस्तत्करोति हि ४६
क्लेशभूर्य्यल्पसाराणि कर्म्माणि विफलानि च देहिनां विषयार्त्तानां न तथैवार्पितं त्वयि ४७
नाऽवमः कर्मकल्पोपि विफलायेश्वरार्पितः कल्पते पुरुषस्यैष सह्यात्मा दयितो हितः ४८
यथा हि स्कंदशाखानां तरोर्मूलावसेचनं एवमाराधनं विष्णोः सर्व्वेषामात्मनश्च हि ४९ न
मस्तुभ्यमनंताय दुर्वितर्क्यात्मकर्म्मणे निर्गुणाय गुणेशाय सत्वस्थाय च सांप्रतं ५० ॥ ६
॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे अमृतमथने पंचमोऽध्यायः ५ ॥ ❋ ॥

यस्मात्मा अत एव दयितो हितश्च न ह्यात्मनि दयिते हिते चार्पितं निष्फलं स्यात् ४८ अनंतफलत्वमाह यथा
हि मूलावसेचनं स्कंधानां शाखानां च भवति ४९ एवं सत्यपि त्वदर्पितकर्मणां त्वद्भक्तानामस्माकं यन्निमि
त्तमिदं दुःखमिति तत्त्वमेव वेत्सीत्याशयेनाह नम इति दुर्वितर्क्याण्यात्मकर्माणि स्वभावचेष्टितानि यस्य तस्मै ५०
॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे टीकायां पञ्चमोऽध्यायः ५ ॥ ६ ॥ ❋ ॥ ६ ॥

६
भा·अ·
९६

षष्ठेपुनःस्तुतिर्विस्मावाविर्भूतेसुरैः कृता तन्मंत्राच्चासुरैःसाकममृतार्थेमहोद्यमः १ सहस्रार्काणामुदयेद्युतिरिव
द्युतिर्यस्य १ महसातेजसाप्रतिहतानीक्षणानिचक्षूंषियेषां २ तामाविर्भूतांतांतनुंविरिंचोदृष्ट्वातुष्टावेतिपंचमे
नान्वयः कंजगर्भवदरुणेईक्षणेयस्याः ३ तप्तहेमवदवदातेनपीतेनलसताकौशेयवाससायुक्तांप्रसन्नानिचारू।

श्रीशुकउवाच एवंस्तुतःसुरगणैर्भगवान्हरिरीश्वरः तेषामाविरभूद्राजन्सहस्रार्कोद
यद्युतिः १ तेनैवमहसासर्वेदेवाःप्रतिहतेक्षणाः नापश्यन्खंदिशःक्षोणीमात्मानं।
चकुतोविभुं २ विरिंचोभगवान्दृष्ट्वासह——शर्वेणतांतनुं स्वच्छांमरकतश्यामांकं
जगर्भारुणेक्षणाम् ३ तप्तहेमावदातेनलसत्कौशेयवाससा प्रसन्नचारुसर्वांगींसु
मुखींसुंदरभ्रुवम् ४ महामणिकिरीटेनकेयूराभ्यांचभूषितांकर्णाभरणनिर्भातकपो
लश्रीमुखांबुजां ५ कांचीकलापवलयहारनूपुरशोभितां कौस्तुभाभरणांलक्ष्मींबिभ्र
तींवनमालिनीं ६ सुदर्शनादिभिःस्वास्त्रैर्मूर्तिमद्भिरुपासितां तुष्टावदेवप्रवरःस
शर्वःपुरुषंपरंसर्वामरगणैःसाकंसर्वांगैरवनिंगतैः ७ ॥

णिसर्वाण्यंगानियस्याःशोभनंमुखंय
स्याःसुंदरेभ्रुवौयस्याः ४ महांतोमणयोयस्मिन्तेनकिरीटेनकर्णाभरणेकुंडलेताभ्यांनिर्भातौयौकपोलौताभ्यांश्री
मुखांबुजंयस्याः ५ कौस्तुभश्चाभरणंकंठेयस्याःलक्ष्मींवक्षसिबिभ्रतीं ६ देवप्रवरोब्रह्मासर्वांगैरवनिंगतैःसाष्टांगप्रण
तैः अनाविराविरासेयंनाभूत्ताभूदितिब्रुवन्ब्रह्माभिप्रैतिनित्यत्वविभुत्वेभगवत्तनोः ७

राम
९६

श्रीमूर्त्तेरयमाविर्भावएव नत्वस्मदादिवज्जन्मादितवास्तीत्याह नजातोजन्मादयोयस्यकुतः अगुणायाऽतोनिर्वाण सुखस्यार्णवाय अपारमोक्षसुखस्यार्णवाय अपारमोक्षसुखरूपायेत्यर्थःतथापिअणोरप्यणिम्ने अतिसूक्ष्मायदुर्ज्ञे यत्वात्ववस्तुतस्तु अपरिगण्यंद्रष्टुमशक्यंनानीतंधाममूर्त्तिर्यस्यतस्मैनचैतदसंभावितं यतःमहानचिंत्योनुभावोयस्यतस्मै ८ तन्मूर्त्तेःसनातनत्वमपरिमेयत्वंचोपपादयतिरूपमितिहेपुरुषर्षभमहेधातःएतत्तवरूपंवैदिकेनतांत्रिकेणचयोगेनउपायेन

ब्रह्मोवाच अजातजन्मस्थितिसंयमायाऽगुणायनिर्वाणसुखार्णवाय अणोरणिम्नेऽपरिगण्यधाम्नेमहानुभावायनमोनमस्ते ८ रूपंतवैतत्पुरुषर्षभेज्यंश्रेयोर्थिभिर्वैदिकतांत्रिकेण योगेनधातःसहनस्त्रिलोकान्पश्याम्यमुष्मिन्नुहविश्वमूर्त्तौ ९ त्वय्यग्रआसीत्त्वयिमध्यआसीत्त्वय्यंतआसीदिदमात्मतंत्रे त्वमादिरंतोजगतोस्यमध्यंघटस्यमृत्स्नेवपरःपरस्मात् १० त्वंमाययात्माश्रययास्वयेदंनिर्मायविश्वंतदनुप्रविष्टःपश्यंतियुक्तामनसामनीषिणोगुणव्यवायेप्यगुणंविपश्चितः ११॥ एश्रेयोर्थिभिःसदाइज्यंपूज्यंअतोनेदमिदानीमपूर्वंजातमितिभावःननुयूयंदेवापूज्यत्वेनप्रसिद्धाःसत्यंसर्वेप्यत्रैवांतर्भूताइत्याहउअहोहस्फुटंअमुष्मिंस्त्वयिनोस्मान्त्रिलोकांश्चसहपश्यामितत्रहेतुःविश्वंमूर्त्तौयस्यअतस्तवैतद्रूपंपरिच्छिन्नमपिनभवतीतिभावः ९ विश्वमूर्त्तित्वमेवाहत्वयीति घटस्यमृत्तिकायथाआदिरंतश्चमध्यंचतथात्वमस्यजगतःतत्रहेतुःपरस्मात्प्रधानादपिपरः १० मृत्तिकादृष्टांतेनपरिणामंप्राप्तंवारयतित्वमितिस्वयास्वाधीनयाअतएवगुणानांव्यवायेपरिणामेप्यगुण

एतदेवसदृष्टांतमाह यथाग्निंकाष्ठेमथनेन अमृतमाज्यंगोषुदोहनादिनाभुविअन्नंवीह्याद्किर्षणादिना अंवुचखननेनउद्यमनेपुरुषकारेवाणिज्यादिनावृत्तिंजीविकां यद्वा अंवुनःउद्यमनेघटीयंत्रादिनोद्धरणेयोगैरुपायैर्मनुष्या अधियंतिप्राप्नुवंतितथाकवयस्त्वांबुद्ध्यागुणेष्वधियंतिवदंतिच १२ हेनाथसरोजनाभ अतिचिरादीप्सितमर्थंतं योगैकप्राप्यंत्वांसम्यगुज्जिहानंआविर्भवंतंप्रत्यक्षतोदृष्ट्वाऽद्यवयंनिर्वृतिंगताःदवार्त्तादावाग्निपीडिताः १३ यद्विधेयंतत्कथये

यथाऽग्निमेधस्यऽमृतंचगोषुभुव्यन्नमंवूद्यमनेचवृत्तिं योगैर्मनुष्याअधियंतिहित्वांगुणेषुबुध्याकवयोविदंति १२ तंत्वांवयंनाथसमुज्जिहानंसरोजनाभातिचिरेप्सितार्थं दृष्ट्वागतानिर्वृतिमद्यसर्वेगजादवार्त्ताइवगांगमंभः १३ सत्वंविधत्स्वाखिललोकपालावयंयदर्थास्तवपादमूलं समागतास्तेवहिरंतरात्मन् किंचान्यविज्ञाप्यमशेषसाक्षिणः १४ अहंगिरित्रश्चसुरादयोयेदक्षादयोग्नेरिवकेतवस्ते किंवाविदामेशपृथग्विभाताविधत्स्वशंनोद्विजदेवमंत्रं १५ श्रीशुकउवाच एवंविरिंच्यादिभिरीडितस्तद्विज्ञायतेषांहृदयंयथैव जगादजीमूतगभीरयागिरावद्धांजलीन्संवृतसर्वकारकान्

तिचेत्तत्राह हेअंतरात्मन् अशेषसाक्षिणस्तेवहिः किंवान्यैर्विज्ञाप्यमस्ति १४ यूयमेवकिंचित्कुरुतेतिचेत्तत्राह अहमितिअग्नेःकेतवोविस्फुलिंगाइवतेत्वत्तोवयंपृथग्विभाताःसंतःआत्मनःश्रेयःकिंवाविद्मःअतस्त्वमेवद्विजानांदेवानांचमंत्रंविधत्स्वइदंकुरुतेत्युपायमुपदिशेत्यर्थः १५ हृदयंमंत्रउपदेष्टव्यइतिअभिप्रेतंयथैवतथैववि

ईश्वरस्यापि तथैवाभिप्रेतमित्याह एक एवेश्वरः समर्थोऽपि १७ हे सुराः हे देवाः अन्ये च गंधर्वादयः वः आत्मनो यावद्भवो
वृद्धिर्भवति १८ १९ अर्थस्य प्रयोजनस्य पदवीं सिद्धिं प्राप्तैः ततः पश्चादहिमूषकवद्वध्यघातकभावेन वर्तितव्यमिति
शेषः यद्वा पेटिकायां निरुद्धोऽहिर्यथा निर्गमद्वारविधानार्थं प्रथमं मूषकेण संधिं विधत्ते पश्चात्तमेव कदाचिद्भक्षयति

एक एवेश्वरस्तस्मिन् सुरकार्ये सुरेश्वरः विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः १७ श्रीभगवानुवाच हंत ब्रह्मन्नहो शंभो हे देवा मम भाषितं शृणुतावहिताः सर्वे श्रेयो वः स्याद्यथा सुराः १८ यात दानवदैतेयैस्तावत्संधिर्विधीयतां कालेनानुगृहीतैस्तैर्यावद्वो भव आत्मनः १९ अरयोऽपि हि संधेयाः सति कार्यार्थगौरवे अहिमूषकवद्देवा ह्यर्थस्य पदवीं गतैः २० अमृतोत्पादने यत्नः क्रियतामविलंबितं यस्य पीतस्य वै जंतुर्मृत्युग्रस्तोऽमरो भवेत् २१ क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः मंथानं मंदरं कृत्वा नेत्रं कृत्वा तु वासुकिं २२ सहायेन मया देवा निर्मंथध्वमतंद्रिताः क्लेशभाजो भविष्यंति दैत्या यूयं फलग्रहाः २३ यूयं तदनुमोदध्वं यदिच्छंत्यसुराः सुराः॥

१८ तथार्थमाग— प्रवृत्तैः प्रथमं संधेया इत्यर्थः २० ततस्तैः सह यत्कार्यं तदाह अमृतोत्पादन इति यस्यामृतस्य पीतस्य सतः अमरो भवेत् मृत्युग्रस्तोपि २१ नेत्रं रज्जुम् २२ अतंद्रिताः संयताः
निर्मंथध्वमिति ननु तर्हि तेप्यमृतपानेनामराः स्युस्तत्राह क्लेशभाज इति २३ बलिभिः सहकारिभिः साध्या अर्थास्तद
नुसरणं विना न सिध्यंतीति कृत्वा सामादिकमुपदिशति यूयमिति द्वाभ्यां हे सुराः

संरंभेण संभ्रमेण सांत्वया साममार्गेण यथा सिद्ध्यंति २४ वस्तुषु मथनादुत्पन्नेषु २५ २६ सुरा असुरं बलिमुपेयुः उपजग्मुः २७
असंयत्तानपि दृष्ट्वा श्लोक्यः कीर्त्यर्हः २८ वैरोचनिं बलिं जितमशेषं त्रैलोक्यं येन तं २९ तत्सर्वं अमृतोन्मथनादि ३०

नसंरंभेण सिध्यंति सर्वेऽर्थाः सांत्वया यथा २४ नभेतव्यं कालकूटात् विषाज्जलधिसंभवात् लोभः कार्यो नवो जातु रोषः कामस्तु वस्तुषु २५ श्रीशुक उवाच इति देवान्समादिश्य भगवान्पुरुषोत्तमः तेषामंतर्दधे राजन्स्वच्छंदगतिरीश्वरः २६ अथ तस्मै भगवते नमस्कृत्य पितामहः भवश्च जग्मतुः स्वं स्वं धामोपेयुर्बलिं सुराः २७ दृष्ट्वाऽरीनप्यसंयत्तान् जातक्षोभान् स्वनायकान् न्यषेधद्दैत्यराट् श्लोक्यः संधिविग्रहकालवित् २८ ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः श्रिया परमया जुष्टं जिताशेषमुपागमन् २९ महेंद्रः श्लक्ष्णया वाचा सांत्वयित्वा महामतिः अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ३० तदरोचत दैत्यस्य तत्रान्ये येऽसुराधिपाः शंबरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ३१ ततो देवासुराः कृत्वा संविदं कृतसौहृदाः उद्यमं परमं चक्रुरमृतार्थे परंतप ३२ ततस्ते मंदरगिरिमोजसोत्पाट्य दुर्मदाः नदंत उदधिं निन्युः शक्ताः परिघबाहवः ३३ दूरभारोद्वहश्रांताः शक्रवैरोचनादयः अपारयंतस्तं वोढुं विवशा विजहुः पथि

तत्र ये अन्ये चासुराधिपाः पौलोमकालेयादयः शंबरादयश्च तेभ्यश्च अरोचत ३१ संविदं समयं ३२ परिघा इव बाहवो येषां

३५ ३६ ३७ ३८ विसर्ज्जितः प्रस्थापितः सुपर्णे तत्र स्थिते वासुकेरागमनायोगादिति भावः ३९ इति श्रीभागवते महापुराणे अष्टमस्कंधे टीकायां षष्ठोऽध्यायः ६ सप्तमे मथनोद्भूतविषभीताऽखिलैर्जनैः स्तुतः सन् कृपया रुद्रः पपौ विष

निपतन्स गिरिस्तत्र बहूनमरदानवान् चूर्णयामास महता भारेण कनकाचलः ३५ तां स्तथा भग्नमनसो भग्नबाहूरुकंधरान् विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ३६ गिरिपातविनिष्पिष्टान् विलोक्यामरदानवान् ईक्षया जीवयामास निर्ज्जरान् निर्व्रणान्यथा ३७ गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः ३८ अवरोप्य गिरिं स्कंधात् सुपर्णः पततां वरः ययौ जलांत उत्सृज्य हरिणा स विसर्ज्जितः ३९॥ ॥इति श्रीभागवते महापुराणे अष्टमस्कंधे अमृतमथने मंदराचलानयनं नाम षष्ठोऽध्यायः ६ श्रीशुक उवाच तेनागराजमामंत्र्य फलभागेन वासुकिम् परिवीय गिरौ तस्मिन्नेत्रमब्धिं मुदान्विताः १ आरेभिरे सुसंयत्ता अमृतार्थं कुरूद्वह हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् २ तन्नैच्छन्दैत्यपतयो महापुरुषचेष्टितम् न गृह्णीमो वयं पुच्छमहेरंगममंगलम् ३ स्वाध्यायश्रुतसंपन्नाः प्रख्याता जन्मकर्मभिः इति तूष्णीं स्थितान्दैत्यान्विलोक्य पुरुषो

मितीयंते १ फलभागेन तवाप्यमृते भागो भविष्यतीति आमंत्र्य मंत्र्य वासुकिं नेत्रं गिरौ परिवीय संवेष्ट्य अब्धिं मथितुमारेभिरे वा

७

भा॰ अ॰ कृतोधारणेस्थानविभागोयैः ५ ६ दैवेनहेतुनास्वपौरुषेनष्टेसति ७ विघ्नेशस्यविधिंतेनरचितंविघ्नं अवितथः स

१८

स्मयमानोविसृज्याग्रंपुच्छंजग्राहसामरः कृतस्थानविभागास्तएवंकश्यपनंदनाः ५
ममंथुः परमायत्ताअमृतार्थंपयोनिधिं मथ्यमानेऽर्णवेसोद्रिरनाधारोह्यपोऽविशत्
६ ध्रियमाणोपिवलिभिर्गौरवात्पांडुनंदन तेसुनिर्विण्णमनसः परिम्लानमुखश्रियः आ
सन्स्वपौरुषेनष्टेदैवेनातिवलीयसा ७ विलोक्यविघ्नेशविधिंतदेश्वरोदुरंतवीर्योऽवि
तथाभिसंधिः कृत्वावपुः काच्छपमद्भुतंमहत्प्रविश्यतोयंगिरिमुज्जहार ८ तमुत्थितं
वीक्ष्यकुलाचलंपुनः समुत्थितानिर्मथितुंसुरासुराः दधारपृष्ठेनसलक्षयोजनप्रस्तारि
णाद्वीपइवापरोमहान् ९ सुरासुरेंद्रैर्भुजवीर्यवेपितंपरिभ्रमंतंगिरिमंगपृष्ठतः विभ्रत्त
दावर्त्तनमादिकच्छपोमेनेऽगकंडूयनमप्रमेयः १० तथाऽसुरानाविशदासुरेणरूपेण
तेषांवलवीर्यमीरयन् उद्दीपयन्देवगणांश्चविष्णुर्दैवेननागेंद्रमवोधरूपतः ११ उ
पर्यगेंद्रंगिरिराडिवान्यआक्रम्यहस्तेनसहस्रवाहुः तस्थौदिविब्रह्मभवेंद्रमुख्यैरभि
ष्टुवद्भिःसुमनोऽभिवृष्टः १२॥ ९ योऽभिसंधिः संकल्पोयस्य ८ लक्षयोजनः प्रस्तारः विस्तारोऽस्यास्तो
तितथातेनपृष्ठेन ९ तस्यगिरेरावर्त्तनंभ्रमणंअंगकंडूयनंमेने १० आसुरेणअसुराकारेणदैवेनदेवाकारेण

आत्मनिदेवदैत्यमध्येगोत्रेदार्व्यरूपेणनेत्रेअभेद्यावोधरूपेणपरेणहरिणाक्षोभितंनक्राणांचक्रंसमूहो।
यस्मिन् १३ दृशश्चमुखानिचश्वासाश्चअहींद्रस्यसाहस्रंअपरिमिताःकठोरायेदृगाद्यःतेभ्योनिर्गताभ्यामग्नि
धूमाभ्यामाहतेनवर्चोयेषांतेसरलाद्रुमविशेषाः १४ देवांस्तुभगवद्वशाघनाःसमभ्यवर्षन् समुद्रोर्मिभिःउपगूढा

उपर्यधश्चात्मनिगोत्रनेत्रयोःपरेणतेप्राविशतासमेधिताः ममंथुरब्धिंतरसामदोत्क
टामहाद्रिणाक्षोभितनक्रचक्रम् १३ अहींद्रसाहस्रकठोरदृङ्मुखश्वासाग्निधूमाहतव
र्चसोऽसुराः पौलोमकालेयबलील्वलादयोदवाग्निदग्धाःसरलाइवाभवन् १४ देवां
श्चतच्छ्वासशिखाहतप्रभान्धूम्रांबरस्रग्वरकंचुकाननान् समभ्यवर्षन्भगवद्वशाघना
ववुःसमुद्रोर्म्युपगूढवायवः १५ मथ्यमानेनतथासिंधौदेवासुरवरूथपैः यदासुधान
जायतनिर्ममंथाजितःस्वयम् १६ मेघश्यामःकनकपरिधिःकर्णविद्योतविद्युन्मूर्ध्नि
भ्राजद्विलुलितकचःस्रग्धरोरक्तनेत्रः जैत्रैर्दोर्भिर्जगदभयदैर्दंदशूकंगृहीत्वामथ्न
न्मथ्नाप्रतिगिरिरिवाशोभताथोधृताद्रिः १७॥ (वायवश्चशीतलाववुःवांतिस्मकथंभूतान्तस्याहीं
द्रस्यश्वासशिखाग्निभिर्हताप्रभायेषांधूम्राण्यंबरादीनियेषां १५ १६ धृतोऽद्रिर्येनसधृताद्रिःभगवान्परमपुरुषोऽ
नंतरमशोभतेत्यन्वयःकथंभूतःकनकपरिधिःपीतवासाःकर्णयोर्विद्योतमानाविद्युत्कुंडललक्षणायस्य त
थामूर्ध्निभ्राजंतोविलुलिताःकचायस्यसतथाजैत्रैर्जिष्णु
भिर्दोर्भिःदंदशूकंसर्पंप्रतिगिरिःप्रतिद्वंद्वीपर्वतः १७॥

हालहलमित्याख्यानामयस्य संभ्रांतामीनाउद्भतामकरादयश्चयस्मिन्तस्मात् निम्यादिभिराकुलाच्चेतितद्विषमप्र
तिश्चप्रतिमंप्रतिक्रियाशून्यमितिवा १८ कुतःउग्रोवेगोयस्य तदेवाह दिशिदिशीति यद्वाउग्रावेगारोमांचस्वेदाद
योयस्मात् श्चतएवासह्यंविलोक्यभीताः श्चन्येनकेनाप्यरक्ष्यमाणाः सदाशिवंशरणंदुद्रुवुःजग्मुः १९ त्रिलोक्याउद्ध

निर्मथ्यमानादुदधेरभूद्विषंमहोल्वणंहालहलाव्हमग्रति संभ्रांतमीनोन्मकरादिकच्छ
पान्तिमिद्विपग्राहतिमिंगिलाकुलात् १८ तदुग्रवेगंदिशिदिश्युपर्यधोविसर्पदुत्सर्पद
सह्यवीर्यं भीताःप्रजादुद्रुवुरंगसेश्वराश्चरक्ष्यमाणाःशरणंसदाशिवं १९ विलोक्यतंदेव
वरंत्रिलोक्याभवायदेव्याऽभिमतंमुनीनां श्चासीनमद्रावपवर्गहेतोस्तपोजुषाणंस्तुतिभिः
प्रणेमुः २० प्रजापतयऊचुः देवदेवमहादेवभूतात्मन्भूतभावन श्चाहिनःशरणापन्नान्
त्रैलोक्यदहनाद्विषात् २१ त्वमेकःसर्वजगतईश्वरोवंधमोक्षयोः तंत्वामर्चंतिकुशलाः
प्रपन्नार्त्तिहरंगुरुं २२ गुणमय्यास्वशक्त्याऽस्यसर्गस्थित्यप्ययान्विभो धत्सेयदास्वदृग्भू
मन्ब्रह्मविष्णुशिवाभिधां २३ ॥ (१९) वायदेव्यासहश्चद्रौकैलाशेश्चासीनं तथापिमुनीनामभिमतंतेषा
मेवापवर्गायतपोजुषाणं २० २१ निर्गुणंसगुणंचैवशिवंहरिपराक्रमैः स्तुवंतस्तुप्रजेशानानामन्यंतांतरंतयोः
२२ नन्वेवंभूतोविष्णुरितिप्रसिद्धंतत्राहुः गुणमय्येति श्चस्यजगतोयदासर्गादीन्धत्सेतदाहेभूमन्स्वदृक्स्वतः
सिद्धज्ञानःत्वंब्रह्मादिसंज्ञांधत्से २३ ॥ ॥

एवंविपर्ययप्रश्नस्योत्तरमुक्त्वा श्रोतव्यादिप्रश्नस्योत्तरमाह॰ तस्मादिति हे भारत भरतस्य वंशः स सर्वात्मेति प्रेष्ठत्वमाह भगवानिति सौंदर्यं ईश्वर इत्यावश्यकत्वं॰ हरिरिति विंधहारित्वं॰ अभयं मोक्षमिच्छता ५ अतः परमन्यच्छ्रेयो नास्तीत्याह एतावानेव जन्मनो लाभः फलं तमाह नारायणस्मृतिरिति॰ सांख्यादिभिः साध्यइतिते षां स्वातंत्र्येण लाभत्वं वारयति॰ सांख्यमात्मानात्मविवेकः योगोऽष्टांगः अंते तु स्मृतिः परो लाभः न तन्महिमावक्तुं शक्यइत्यर्थः ६ तत्र सदाचारं प्रमाणयति॰ प्रायेणेति॰ विधिषेधतः विधिनिषेधाभ्यां निवृत्ताः नैर्गुण्ये ब्रह्मणि स्थितास्ते पि सप्रसिद्धं ७ किमिदमपूर्वं

तस्माद्भारत सर्वात्मा भगवान्हरिरीश्वरः श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयं ५ एतावान्सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया जन्मलाभः परः पुंसामंते नारायणस्मृतिः ६ प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः नैर्गुण्यस्था रमंते स्म गुणानुकथने हरेः ७ इदं भागवतं नाम पुराणं ब्रह्मसंमितं अधीतवान्द्वापरादौ पितुर्द्वैपायनादहं ८ परिनिष्ठितोपि नैर्गुण्ये उत्तमश्लोकलीलया गृहीतचेता राजर्षे आख्यानं यदधीतवान् ९ तदहं तेऽभिधास्यामि महापौरुषिको भवान् यस्य श्रद्दधतामाशु स्यान्मुकुंदे मतिः सती १० एतन्निर्विद्यमानानामिच्छतामकुतोभयं ॥

कथ्यमिसत्यं त्वयत्यपूर्वमेवेदमित्याह इदं भगवत्प्रोक्तं तन्नामैकप्रधानं पुराणं ब्रह्मसंमितं सर्ववेदतुल्यं यद्वा ब्रह्मसम्यक्मितं येन कुतस्त्वया प्राप्तमत आह अधीतवानिति ८ सिद्धस्य तव कुतोऽध्ययने प्रवृत्तिः तत्राह परिनिष्ठितोपीति गृहीतचेताः आकृष्टचित्तः ९ महापुरुषो विष्णुः तदीयः यस्य यस्मिन् श्रद्धां कुर्वतां सती अहैतुकी १० साधकानां सिद्धानां च नातः परमन्यच्छ्रेयोस्तीत्याह॰ एतदिति॰ इच्छतां कामिनां तत्तत्फलसाधनमेतदेव निर्विद्यमानानां मुमुक्षूणां मोक्ष

योगिनां ज्ञानिनां फलं चैतदेव निर्णीतं नात्र प्रमाणं वक्तव्यमित्यर्थः ११ अल्पमेवायुरवशिष्टं किमहं साधयेयमिति मा शुच इत्याह किमिति त्रिभिः परोक्षैरलक्षितैर्हायनैर्वर्षैर्विदितं वृथा यातीति ज्ञातं यतो येन ज्ञानेन घटेत यत्नं कुर्यात् १२ खट्वांगो हि देवपक्षे स्थित्वा दैत्यानजयत् ततः प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्तो तस्तेनोक्तं प्रथमं तावन्ममायुः कथ्यतामिति ततो देवैरुक्तं मुहूर्तमात्रमस्तीति ततो ऽतिशीघ्रं विमानेन भुवमागत्य हरिं शरणं गत इति यत इयं स्वर्गभूमीरजोधिका कर्मभूमिः पृथ्वी १३ त्वं तु एतर्हि अपि इदानीमपि तावदिति तावता कालेन सांपरायिकं पारलौकिकं साधनं संपादय १४ तत्रैवे

योगिनां नृप निर्णीतं हरेर्नामानुकीर्त्तनम् ११ किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह वरं मुहूर्तं विदितं घटेत श्रेयसे यतः १२ खट्वांगो नाम राजर्षिर्ज्ञात्वेयत्तामिहायुषः मुहूर्तात्सर्वमुत्सृज्य गतवानभयं हरिम् १३ तवाप्येतर्हि कौरव्य सप्ताहं जीवितावधिः उपकल्पय तत्सर्वं तावद्यत्सांपरायिकम् १४ अंतकाले तु पुरुष आगते गतसाध्वसः छिंद्यादसंगशस्त्रेण स्पृहां देहेनु ये च तम् १५ गृहात्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः शुचौ विविक्त आसीनो विधिवत्कल्पितासने १६ अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम् ॥ १७ ॥ राग्यं तावदाह अंतकाल इति गतसाध्वसः मृत्युभयशून्यः असंगो नाम अनासक्तिः तेन शस्त्रेण स्पृहां सुखेच्छां तं देहमनु ये पुत्रकलत्रादयः तेष्वपि स्पृहां छिंद्यात् १५ किंच गृहात्प्रव्रजितः निर्गतः गृहे स्थितस्य पुनरप्यासक्तिसम्भवात् तत्राष्टांगयोगमाह धीर इति ब्रह्मचर्यादियमोपलक्षणं पुण्यतीर्थेति स्नानादिनियमोपलक्षणं आसनमाह शुचाविति विविक्ते एकान्ते विधिवत्कुशाजिनचैलैः क्रमेण निर्मिते १६ जपगर्भप्राणायामं वक्तुं जप्यमाह त्रिवृद्ब्रह्माक्षरं त्रिवृत् त्रिभिरकारादिभिर्वर्त्तितं प्रथितं

ब्रह्माक्षरंप्रणवंमनसाभ्यसेत् आवर्तयेत् मनसादूद्रियप्रत्याहारंवकुंप्राणायामेनमनोनियमनमाह मनोयच्छेतवशी
कुर्यात् ब्रह्मबीजंप्रणवमविस्मरन्नेवजितस्वासःसन् १७ प्रत्याहारमाह नियच्छेत्निगृह्णीयात् अक्षान् इन्द्रियाणि
निश्चयात्मिकाबुद्धिः सारथिर्यस्यसः धारणामाह मनइति पुनस्वकर्मभिस्तद्वासनाभिराक्षिप्तं आह्रत्यशुभार्थेभ
गवद्रूपे १८ ध्यानमाह तत्रेति एकमेकंपादाद्यवयवं अव्युच्छिन्नेनसमग्ररूपादविमुक्तेन आश्रयविशेषेण।
सामान्यतश्चित्तस्थिरीकरणंधारणाअवयवविभावनयातद्दाढ्यंध्यानमितिभेदः समाधिमाह निर्विषंमनोयुं।

मनोयच्छेज्जितश्वासोब्रह्म बीजमविस्मरन् १७ नियच्छेद्विषयेभ्योऽक्षान्मनसाबुद्धि
सारथिः मनःकर्म्मभिराक्षिप्तंशुभार्थेधारयेद्धिया १८ तत्रैकावयवंध्यायेदव्युच्छिन्नेनचेत
साः मनोनिर्विषयंयुक्त्वाततः किञ्चननस्मरेत् पदन्तत्परमंविष्णोर्मनोयत्रप्रसीदति १९ र
जस्तमोभ्यामाक्षिप्तंविमूढंमनआत्मनः यच्छेद्धारणयाधीरोहन्तियात्तत्कृतम्मलम् २० य
तः संधार्यमाणायांयोगिनोभक्तिलक्षणः आशुसंपद्यतेयोगआश्रयंभद्रमीक्षतः २१ राजो
वाच यथासंधार्यतेब्रह्मन्धारणायत्रसंमता यादृशीवाहरेदाशुपुरुषस्यमनोमलं २२ शुक
उवाच जितासनोजितश्वासोजितसंगोजितेंद्रियः स्थूलेभगवतोरूपेमनःसंधारयेद्धिया २३

तांसमाधायस्थिरीभूतेमनसिस्फुरत् परमानन्दमात्राकारंहत्त्वेत्यर्थः प्रसीदतिउपसाम्यति १९ गुणवशात्पुनर
पिक्षोभेसतिधारणामेवस्थिरीकुर्यादित्याह रजसाआक्षिप्तंतमसाविमूढंस्वीयंमनोनिरुंध्यात् तत्कृतंरजस्तमोभ्यांकृ
तम् २० यतः यस्यांक्रियमाणायांभद्रंसुखात्मकंआश्रयंविषयंपश्यतःतत्रेवप्रीतिर्भवति २१ यथायत्रयादृशीचेति
कर्तव्यताविषयतत्तद्विशेषणानांप्रश्नाः २२ ययेत्यस्योत्तरंजितासनइति विषयमाहस्थूलइतिसार्द्धेन २३ ॥ ९॥

विशेषो विराड्देहः अतिस्थूलानामपि स्थूलतरः सत्कार्यमात्रं २४ अस्य चोपलक्षणत्वेन विषयत्वं वस्तुतस्तु विराड्जीवनियंता भगवानेव विषय इत्याह आवरणं पृथिव्यावरणं ततः अप्तेजोवाय्वाकाशाहंकारमहत्तत्त्वानीति सप्त ॥ २५ विराड्देहतज्जीवतदंतर्यामिणामभेदमारोप्योपासनकर्तव्यमित्याशयेनाह पातालंपादमूलंपादस्याधोभागं पातालादीनांतदवयवताविधीयते पातालादीन्यतलान्तानि॰ अधस्तनादारभ्य सप्त भूवि

विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसां यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च सत् २४
आण्डकोशे शरीरेऽस्मिन्सप्तावरणसंयुते वैराजः पुरुषो योऽसौ भगवान्धारणाश्रयः २५
पातालमेतस्य हि पादमूलं पठंति पार्ष्णिप्रपदे रसातलं महातलं विश्वसृजोऽथ गुल्फौ तलातलं
वै पुरुषस्य जंघे २६ द्वे जानुनी सुतलं विश्वमूर्त्तेरूरुद्वयं वितलं चातलं च महीतलं तज्जघनं महीपते नभस्तलं नाभिसरो गृणन्ति २७ उरःस्थलं ज्योतिरनीकमस्य ग्रीवा महर्वदनं वै जनोऽस्य
तपो रराटीं विदुरादिपुंसः सत्यं तु शीर्षाणि सहस्रशीर्ष्णः २८ इंद्रादयो बाहव आहुरुस्राः कर्णौ दिशः श्रोत्रममुष्य शब्दः नासत्यदस्रौ परमस्य नासे घ्राणोऽस्य गंधो मुखमग्निरिद्धः २९ ॥

चरणिपठन्ति गृणंति इत्यादि प्रमाणप्रदर्शनं पार्ष्णिप्रपदे पादस्य पश्चात्पुरोभागौ २६ ऊरुद्वयस्य अधोभागे वितलं उत्तरभागे अतलमिति ज्ञेयं नाभिरेव सरः नभस्तलं भुवर्लोकं २७ ज्योतिरनीकं ज्योतिषां समूहं स्वर्गं महर्लोकं ग्रीवेति गृणंति तपोलोकं रराटीं ललाटं सत्यं सत्यलोकं शीर्षाणि सहस्रशीर्ष्णः श्रीविष्णोः २८ उस्रा देवाः तेजोमयशरीरत्वात् ते बाहव इत्याहुः दिशश्चस्मदादि श्रोत्राधिष्ठात्र्यो देवताः कर्णौ श्रोत्रस्याधिष्ठानं शब्दस्तु श्रोत्रविषयः स तस्य श्रोत्रेंद्रियं॰ एवं नासिकादिष्वपि॰ नासत्यदस्रौ अश्विनौ नासे नासापुटे इद्धो दीप्तः २९ ॥

द्यौरंतरिक्षं अक्षिणीनेत्रगोलके चक्षुरिंद्रियं पतंगः सूर्यः अहनीएव्यहनी परमेष्ठिधिष्ण्यंब्रह्मपदं तालु अधिष्ठानं जि-
ह्वाइंद्रियं ३० छंदांसिवेदाः शिरोब्रह्मरंध्रं स्नेहकलाः पुत्रादिस्नेहलेशाः द्विजानिदंताः षंढत्वमार्षं दुरंतअपारः सर्गद्रु-
तियतस्तस्यकटाक्षः ३१ अधर्ममार्गोऽस्यपृष्ठभागः कः प्रजापतिः मित्रौमित्रावरुणौ ३२ अनंतवीर्यस्यस्यतःवयकालः

द्यौरक्षिणीचक्षुरभूत्पतंगः पक्ष्माणिविष्णोरहनीउभेच तद्भ्रूविजृंभः परमेष्ठिधिष्ण्यमापोस्य
तालूरसएवजिह्वा ३० छंदांस्यनंतस्यशिरोगृणंतिदंष्ट्रायमः स्नेहकलाद्विजानि हासोजनो
न्मादकरीचमायादुरंतसर्गोयदपांगमोक्षः ३१ व्रीडोत्तरोष्ठोधरएवलोभोधर्मः स्तनोऽधर्मपथो
स्यपृष्ठः कस्तस्यमेढ्रंवृषणौचमित्रौकुक्षिः समुद्रागिरयोस्थिसंघाः ३२ नद्योऽस्यनाड्योथत
नूरुहाणिमहीरुहाविश्वतनोर्नृपेंद्र अनंतवीर्यः श्वसितंमातरिश्वागतिर्वयः कर्मगुणप्रवाहः
३३ ईशस्यकेशान्विदुरंबुवाहान्वासस्तुसंध्यंकुरुवर्यभूम्नः अव्यक्तमाहुर्हृदयंमनश्चसचंद्र
माः सर्वविकारकोशः ३४ विज्ञानशक्तिंमहिमामनंतिसर्वात्मनोंतःकरणंगिरित्रं अश्वाश्व
तर्युष्ट्रगजानखानिसर्वेमृगाः पशवः श्रोणिदेशे ३५ वयांसितद्व्याकरणंविचित्रंमनुर्मनीषा
॥ मनुजोनिवासः

तस्यगमनंगुणप्रवाहः प्राणिनांसंसारः कर्मतस्यक्रीडा ३३ भूम्नः विभोः अव्यक्तंप्रधानं स
प्रसिद्धः चंद्रमाः तदीयंमनः सर्वेषांविकाराणांकोशइवाश्रयभूतं चंद्रोपिसर्वविकारकोशउच्यते धूमादिमार्गत्वा
त् इंद्रियाणांस्वप्नकाले चंद्राधिष्ठानेमनसिसर्वेविकाराः ३४ विज्ञानशक्तिं चित्तंमहिमं महिमहत्तत्वं अंतःकरणम
हंकारं गिरित्रंश्रीरुद्रंगंद्रंभाहुडवायामुत्तमाश्वतरी ३५ वयांसिपक्षिणः तस्यव्याकरणंनामरूपेव्याकरणवाणी

भा॰ द्वि॰ ४

तिश्रुत्युक्तं । शिल्पनैपुण्यं । यथाहुः येनशुक्लीकृताहंसाः शुकाश्चहरितीकृताः मयूराश्चित्रितायेनसतेवृत्तिंविधास्यती
ति मनुः स्वायंभुवः मनीषाबुद्धिः मनुजः पुरुषः निवासआश्रयः पुरुषत्वेचाविस्तरामात्मेतिश्रुतेः गंधर्वादीनांहृद्वैकं
गंधर्वादयः स्वरस्मृतीः षड्जादिस्वरस्मृतयइत्यर्थः असुराणीकंवीर्यंयस्यसः स्वरस्मृतिरसुराणीकवर्यइतिपाठेगं
धर्वादयः स्वरः असुरसमूहश्रेष्ठः प्रह्लादः स्मृतिस्तस्येति ३६ ब्रह्मविप्रस्तस्याननंमुखंक्षत्रंक्षत्रियोभुजोयस्य
विट्वैश्यः ऊरूयस्य अंघ्रिश्रितः कृष्णवर्णः शूद्रोयस्य नानाभिधानामानियेषांतेचते । अभीज्यादेवास्तेषांगणैर्व

गंधर्वविद्याधरचारणाप्सरः स्वरस्मृतीरसुराणीकवीर्यः ३६ ब्रह्माननंक्षत्रभुजोमहात्माविट्
ऊरुरंघ्रिश्रितकृष्णवर्णः नानाभिधाभीज्यगणोपपन्नोद्रव्यात्मकःकर्मवितानयोगः ३७ इयाः
नसावीश्वरविग्रहस्ययः सन्निवेशः कथितोमयाते संधार्यतेस्मिन्वपुषिस्थविष्ठेमनःस्वबुध्या
नयतोऽस्तिकिंचित् ३८ ससर्वधीवृत्त्यनुभूतसर्वआत्मायथास्वप्नजनेक्षितैकः तंसत्यमानं
दनिधिंभजेतनान्यत्रसज्जेद्यतआत्मपातः ३९ ॥ ६ ॥ सुहृद्वादिभिरुपपन्नोयुक्तः द्रव्यात्मकोहविःसा

ध्यः वितानयोगोयज्ञप्रयोगः तस्यकर्मकार्यं आवश्यकोभिप्रेतइत्यर्थः ३७ इयानएतावानसन्निवेशः अवयवसं
स्थानं अस्मिन्स्वबुद्ध्यामनः संधार्यतेकिंमुमुक्षुभिः यतोव्यतिरिक्तंकिंचिन्नास्तितस्मिन् ३८ तदेवंचित्तस्थैर्यार्थंवि
राट्देहजीवेश्वराणामभेदेनोपासनमुक्तं तत्रतुदेहजीवावीश्वरेप्रविलाप्यसएवध्येयइतिनिर्धारयति सइतिसर्वे
षांधीवृत्तिभिरनुभूतंसर्वंयेनसएकएवसर्वांतरआत्मातमेवसत्यंभजेत अन्यत्रोपलक्षणेनसज्जेतयतआसंगात् आत्म
नः पातः संसारोभवतिएकस्यतत्तदिंद्रियैः सर्वानुभूतौदृष्टांतः स्वप्नजनानामीक्षितायथेति । स्वप्नेहिकदाचिद्बहून्देहा
न्प्रकल्प्यजीवस्तत्तदिंद्रियैः सर्वंपश्यतितद्वत् ईश्वरस्यानुविद्याशक्तिमान्नबंधः ३९ ॥ ६ ॥ ॥

अ॰ १

राम ४

॥ इति श्रीभागवते महापुराणे द्वितीयस्कंधे टीकायां प्रथमोध्यायः १ ॥ द्वितीये तु ततः स्थूलधारणातो जितं मनः स
र्वसाक्षिणि सर्वेशे विष्णौ धार्यमितीर्यते १ इत्यालंबनरूपेवमुक्तावैराजधारणा द्वहोच्यते तु तत्साध्या सर्वांत
र्यामिधारणा २ तत्र तावत्पूर्वोक्तधारणाया अवांतरफलमाह एवंया धारणानया तुष्टाद्वैः पुरा प्रलयसमये येन
शांतदृष्टिः स्मृतिं प्रत्यवरुध्य लब्ध्वा अप्ययात्प्रागिदं विश्वं यथासीत् तथा ससर्ज्ज व्यवसायात्मिका बुद्धिर्यस्य सः अ
एवामोघा दृष्टिर्यस्येति अतस्तया धारणया विश्वसृष्टिसामर्थ्यं भवति १ उपासनाफलादपि विरक्तस्य शुद्धात्मधार
णायामधिकारः अतो वैराग्यार्थं सर्वकर्मफलं निंदति शाब्दं शब्दमयं ब्रह्म वेदः तस्य एष पंथाः कर्मफलबोधनप्रका

इति श्रीभागवते महापुराणे द्वितीयस्कंधे महापुरुषसंस्थानुवर्णनो नाम प्रथमोध्यायः १
श्रीशुक उवाच एवं पुरा धारणयात्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात् तथा ससर्ज्जेदममो
मोघदृष्टिर्यथाऽप्ययात्प्राक् व्यवसायबुद्धिः १ शाब्दस्य हि ब्रह्मण एष पंथा यन्नामभिर्ध्यायति धीरपार्थैः परिभ्रमंस्तत्र न विंदतेर्थान्मायामये वासनया शयानः २ अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः सिद्धेऽन्यथार्थे न यतेत तत्र परिश्रमं तत्र समीक्ष्यमाणः ३
रः कोऽसौ अर्थं यं भूर्स्वरेव स्वर्गादिनामभिः साधकस्य धीर्ध्यायति तत्तदिच्छां करोतीति यत् अपार्थत्वमेवाह तत्र माया
मये पथि सुखमिति वासनया शयानः स्वप्नान्पश्यन्निव परिभ्रमन्नर्थान्न विंदति तत्तल्लोकं प्राप्तोपि निरवद्यं सुखं
लभतेत्यर्थः २ तर्हि सर्वथा कर्मफलत्यागे सद्य एव देहपातः स्यादित्याशंक्याह अतः कविर्नामसु नाममात्रेषु भो
ग्येषु यावदर्थो येन अर्थो देहनिर्वाहो यस्य स तथाभूतः स्यात् अप्रमत्तः तावन्मात्रेप्यनासक्तः व्यवसायबुद्धिर्नेदं सु
खमिति निश्चयवान् तदापि तत्र तस्मिन्नर्थेऽन्यथैव सिद्धे सति तत्र यतते परिश्रमं पश्यन्न यतेत ३ ॥ ५ ॥

भा॰ द्वि॰ ५

अन्ययासिद्धिमाह द्वाभ्यांसत्यामिति॰कशिपोःशय्यायाःस्वतःसिद्धेबाहौसतिउपबर्हणैः उच्छीर्षकैः पुरुधाबहुप्रकारयाअन्नपात्र्याभोजनपात्रेण ४ ननुदिक्षुइवानामनस्यत्वमेवएतद्वानादृत्यवल्कलग्रहणंननुवल्कलमन्नंनोयंवासःस्थानंतुयाञ्चाप्रयत्नंविनाकथंप्राप्येतातत्राह चीराणिवस्त्रखंडानिपरान्बिभ्रतिपुष्णंतिफलादिभिर्येगुहाः गिरिदर्यः ननुकदाचिदेषामलाभेकिंकार्यंतत्राह अजितोहरिः उपसन्नानशरणागतान्किंनअवतिनरक्षति किंशब्दस्यपूर्वत्रापिसंबंधः धनेनयोदुर्मदस्तेनअंधानन्नष्टविवेकान् ५ तदातेनकिंकर्त्तव्यंहरिस्तुसेव्यइत्याह एवंविरक्तःसन्नंतंभजेत्

सत्यांक्षितौकिंकशिपोःप्रयासैर्बाहौस्वसिद्धेह्युपबर्हणैःकिं सत्यंजलौकिंपुरुधाऽन्नपात्र्या॰दिग्वल्कलादौसतिकिंदुकूलैः ४ चीराणिकिंपथिनसंतिदिशंतिभिक्षांनैवांघ्रिपाःपरभृतः सरितोप्यशुष्यन् रुद्धागुहाःकिमजितोऽवतिनोपसन्नान्कस्माद्भजंतिकवयोधनदुर्मदांधान् ५ एवंस्वचित्तेस्वतएवसिद्धआत्माप्रियोऽर्थोभगवाननंतः तंनिर्वृतोनियतार्थोभजेतसंसारहेतूपरमश्चयत्र ६ कस्तांत्वनादृत्यपरानुचिंतामृतेपशूनसतींनामयुंज्यात॰ पश्यञ्जनंपतितंवैतरण्यांस्वकर्मजान्परितापाञ्जुषाणम् ७ ॥

॥ भजनीयत्वेहेतवःस्वचित्तेस्वतएवसिद्धः यतआत्माअतएवप्रियः प्रियस्यचसेवासुखरूपैवअर्थश्चसत्यःनतुआत्मवन्मिथ्या॰ भगवान्भजनीयगुणश्च॰ अनंतश्चनित्यःयएवंभूतस्तंभजेत् नियतार्थः निश्चितस्वरूपः तदनुभवानंदेननिर्वृत्तः सन्नितिस्वतःसुखात्मत्वंदर्शितं किंच॰ यत्रयस्मिन्भजनेसतिसंसारहेतोरविद्यायाउपरमोनाशोभवति ६ एतदेवान्यचिंतानिंदयाद्रढयतिकइति॰ तांतुयाभूतांपरस्यहरेरनुचिंतांधारणामनादृत्यपशूनकर्मजडान्विनायथापशुरेवंसदेवानामितिश्रुतेः असतींविषयचिंतांकोनामकुर्यात्॰तयाचिंतयावैतरण्यांपतितंतत्रचस्वकर्मजानाध्यात्मिकादिक्लेशान्सेवमानंजनंपश्यन्॰वैतरणीयमस्यद्वारस्थानदीतत्तुल्यत्वात्

अ॰ २

एमः ५

तामेवधारणांसविशेषणामाह केचिदितिषड्भिः स्वदेहस्यांतर्मध्येयत् हृदयंतस्ययोवकाशस्तस्मिन्वसंतंप्रादेशः तर्जन्यंगुष्ठयोः
विस्तारः सएवमात्राप्रमाणंयस्येति हृदयपरिमाणंतत्रोपचर्यते कंजंपद्मंरथांगंचक्रं ८ नलिनंपद्मंतद्वत्प्रसन्नेच्यायतेदी
र्घेईक्षणेअक्षिणीयस्य कदंबकुसुमस्यकिंजल्काःकेसराः तद्वत्पिशंगेपीतेवाससीयस्य लसंतिमहारत्नानियेषुतानिसुव
र्णमयान्यंगदानियस्यस्फुरंतिचतानिमहारत्नानिचतन्मयानिकिरीटकुंडलानियस्य ९ उन्निद्रंविकसितंयत् हृत्पंकजंत
स्यकर्णिकैवआलयः स्थानंतस्मिन्योगेश्वरैरास्थापितौपादपल्लवौयस्य श्रीरेवलक्ष्मचिह्नंतद्युक्तंपामादिविहितोमन्वर्थो

केचित्स्वदेहांतर्हृदयावकाशेप्रादेशमात्रंपुरुषंवसंतं चतुर्भुजंकंजरथांगशंखगदाधरंधारण
यास्मरंति ८ प्रसन्नवक्त्रंनलिनायतेक्षणंकदंबकिंजल्कपिशंगवाससं लसन्महारत्नहिरण्मयां
गदंस्फुरन्महारत्नकिरीटकुंडलम् ९ उन्निद्रहृत्पंकजकर्णिकालयेयोगेश्वरास्थापितपादपल्ल
वं श्रीलक्ष्मणंकौस्तुभरत्नकंधरमम्लानलक्ष्म्यावनमालयाचितं १० विभूषितंमेखलयांगुलीयः
कैर्महाधनैर्नूपुरकंकणादिभिः स्निग्धामलाकुंचितनीलकुंतलैर्विरोचमानाननहासपेशलं ११
अदीनलीलाहसितेक्षणोल्लसद्भ्रूभंगसंसूचितभूर्यनुग्रहं ईक्षेतचिंतामयमेनमीश्वरंयावन्मनो
धारणयावतिष्ठते १२ ॥

योनप्रत्ययः कौस्तुभरत्नंकंधरायांयस्य अम्लानालक्ष्मीः शोभायस्याः तयावन
मालयाआचितंव्याप्तं १० स्निग्धत्वादिविशिष्टैः कुंतलैर्विरोचमानेआननेयोहासः तेनपेशलंसुंदरं ११ अदीनमु
दारंपद्मीलयाहसितं तेनयदीक्षणंतस्मिन् उल्लसंतोयेभ्रूभंगाः भ्रूविक्षेपास्तैः संसूचितोभूरिरनुग्रहोयेनचिंतामयं
॥चिंतयाआविर्भवंतं १२॥ ९ ॥

तस्यैव ध्यानमाह॰ एकैकश इति॰ अनुभावयेत् ध्यायेत् यद्यज्जितं अयत्नतः स्फुरितं पादगुल्फादिस्थानं अवयवः तत्तदपोह्य त्यक्त्वा परं परं जंघाजान्वादि धारयेत् ध्यायेत् शुध्यति तस्मिन् निश्चला भवति १३ पूर्वोक्तवैराजधारणायाः एतद्धारणांगत्वमाह यावदिति॰ परे ब्रह्मादयः अवरे यस्मात् कुतः विश्वेश्वरे द्रष्टरि तत्तद्दृश्ये चैतन्यघनत्वात्॰ भक्तियोगः प्रेमलक्षणः क्रियावसाने आवश्यककर्मानुष्ठानानंतरं अनेन कर्मापि भक्तियोगपर्यंतमेवेत्युक्तम प्रयतः नियमतत्परः १४ एवं तावदासन्नमृत्योः पुंसः कृत्यमुक्तं इदानीं तस्यैव स्वयं देहं त्यक्तुमिच्छतः कृत्यमाह स्थिरमिति सार्द्धैश्चतुर्भिः॰ अंग हे राजन्॰ एवं

एकैकशोंगानि धियाऽनुभावयेत्पादादि यावद्धसितं गदाभृतः जितं जितं स्थानमपोह्य धारयेत्परं परं शुध्यति धीर्यथा यथा १३ यावन्न जायेत परावरेस्मिन्विश्वेश्वरे द्रष्टरि भक्तियोगः तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत १४ स्थिरं सुखं चासनमास्थितो यतिर्यदा जिहासुरिममंग लोकं काले च देशे च मनो न सज्जयेत्प्राणान्नियच्छेन्मनसा जितासुः १५ मनः स्वबुद्ध्याऽमलया नियम्य क्षेत्रज्ञ एतां निनयेत्तमात्मनि आत्मानमात्मन्यवरुध्य धीरो लब्धोपशांतिर्विरमेत कृत्यात् १६ ॥ ॥ भूत्वा यतिर्यदा इमं लोकं देहं जिहासुः हातुमिच्छति तदा देशे पुण्यक्षेत्रे काले च उत्तरायणादौ मनो न सज्जयेत्॰ संगं न प्रापयेत् न देशकालौ योगिनः सिद्धिहेतू किंतु योग एवेति दृढनिश्चयो भूत्वा स्थिरं सुखकरं चासनमास्थितः प्राणनाम इन्द्रियाणि नियच्छेदित्यर्थः १५ एतां बुद्धिं क्षेत्रज्ञे बुद्ध्यादिद्रष्टरि निनयेत्॰ प्रविलापयेत्॰ तं च क्षेत्रज्ञं आत्मनि शुद्धे तं च शुद्धमात्मानं आत्मैवाहमिति आत्मनि शुद्धे ब्रह्मणि अवरुध्य एकीकृत्य लब्धोपशांतिः प्राप्तनिर्वृतिः सन् कृत्याद्विरमेत॰ ततः परं प्राप्याभावात् १६ ॥ ॥

तदेवाह नयत्रेति यत्रात्मस्वरूपेकालोनप्रभुः किमपिकर्तुंनसमर्थः अतएवदेवाः नप्रभवइत्याह अनिमिषांदेवानांपरःप्र
भुः कालोपियत्रनप्रभुः तत्रकुतोनुदेवाः प्रभवेयुः देवनियम्यानांतुजगतांप्राणिनांकावार्त्तेत्याह जगतामिति कुतोनप्रभवं
तिइत्यपेक्षायांनिरुपाधित्वादित्याह नयत्रेति यद्वाजगतकारणान्यपिनयस्यसृष्ट्यादौप्रभवंतीत्याह नयत्रेतिविकारोहं
कारः १७ निरुपाधित्वंकुतइत्यतआह परमिति यद्यस्मात् अतत् आत्मव्यतिरिक्तंनेतिनेतीत्येवमुत्स्रष्टुमिच्छवोदौरात्म्यंदे
हाद्यात्मकत्वंविसृज्य अर्हस्यपूज्यस्यश्रीविष्णोः पदंपदेपदेक्षणेक्षणेहृदाउपगुह्यआश्लिष्यनान्यस्मिन्सौहृदंयेषांतथाभूताःसं

नयत्रकालोऽनिमिषांपरः प्रभुः कुतोनुदेवाजगतांयईशिरे नयत्रसत्वंनरजस्तमश्चनवैविकारो
नमहान्प्रधानम् १७ परंपदंवैष्णवमामनंतितद्यन्नेतिनेतीत्यतदुत्सिसृक्षवः विसृज्यदौरात्म्य
मनन्यसौहृदाहृदोपगुह्यार्हपदंपदेपदे १८ इत्थंमुनिस्तूपरमेद्व्यवस्थितोविज्ञानदृग्वीर्यसु
रंधिताशयः स्वपार्ष्णिनापीड्यगुदंततोऽनिलंस्थानेषुषट्सून्नमयेज्जितक्लमः १९ नाभ्यांस्थि
तंहृद्यधिरोप्यतस्मादुदानगत्योरसितंनयेन्मुनिः ततोऽनुसंधायधियामनस्वीस्वतालुमूलंश

नः तदेहसर्वंपदं अतएवपरंसर्वतः श्रेष्ठमामनंतीत्यन्वयः १८ तस्मादित्थंब्रह्मत्वेनव्यव नकैर्नयेत २० ॥
स्थितोमुनिरुपरमेत् तुशब्देनयदिप्रयास्यन्निति वक्ष्यमाणात्सकामाद्विशेषउक्तः तमाह विज्ञायते अनेनेतिविज्ञा
नंशास्त्रंतेनजाताहृक्तज्ज्ञानंतस्यवीर्यंबलंतेनसुरंधिताः विहिंसिताः आशयाविषयवासनायस्यसः अथवाविज्ञानंब्र
ह्मज्ञानंतदेवदृक् वीर्यंसामर्थ्यंयस्यसः इदानींतस्यदेहत्यागप्रकारमाह सार्द्धाभ्यां स्वपार्ष्णिनापादमूलेनगुदंमूलाधार
मापीड्यनिरुध्य अनिलंप्राणंउन्नमयेत् ऊर्द्ध्वंनयेत् जितः क्लमोयेन षट्सुस्थानेषुनाभ्यादिषु १७ नाभ्यांमणिपूरकेस्थि
तंहृदिअनाहतचक्रे अधिरोप्यउरसिकंठादधोदेशेस्थिते विशुद्धिचक्रेमनस्वीजितचित्तः स्वतालमूलंतस्यैवचक्रस्याग्रं

तस्माद्भुवोरंतरं आज्ञाचक्रं निरुद्धानि श्रोत्रे नेत्रे नासिके मुखं चेति एवं सप्तायतनानि प्राणमार्गा येन सः अनपेक्षश्चेत्परं ब्रह्मगतः सन्मूर्द्धन्मूर्द्धनि ब्रह्मरंध्रे निर्भिद्य देहमिंद्रियाणि च विसृजेत् २१ सद्योमुक्तिमुक्त्वा क्रममुक्तिप्रकारमाह यदीति दशभिः यदि तु पारमेष्ठ्यं पदं प्रयास्यन् भवति वैहायसानां खेचराणां सिद्धानां यद्विहारं क्रीडास्थानं कीदृशं अष्टावाधिपत्यानि अणिमाद्यैश्वर्याणि यस्मिन् तदपि प्रयास्यन् कगुणसंनिवायं गुणसमुदायरूपे ब्रह्मांडे सर्वत्रेत्यर्थः नहि देहत्यागावसरे मनश्चेंद्रियाणि च नत्यजेत् किं तु तैः सहैव तत्तल्लोकभोगार्थं गच्छेत् २२ यतः कर्मगतिवन्नयोगगतिः परिच्छिन्नेत्या

तस्माद्भुवोरंतरमुन्नयेत निरुद्धसप्तायतनोऽनपेक्षः स्थित्वा मुहूर्त्तार्द्धमकुंठदृष्टिर्निर्भिद्य मूर्द्धन्विसृजेत्परं गतः २१ यदि प्रयास्यन्नृप पारमेष्ठ्यं वैहायसानामुत यद्विहारं अष्टाधिपत्यं गुणसंनिवायं सहैव गच्छेन्मनसेंद्रियैश्च २२ योगेश्वराणां गतिमाहुरंतर्बहिस्त्रिलोक्याः पवनांतरात्मनां न कर्मभिस्तां गतिमाप्नुवंति विद्यातपोयोगसमाधिभाजां २३ वैश्वानरं याति विहायसा गतः सुषुम्णया ब्रह्मपथेन शोचिषा विधूतकल्कोऽथ हरेरुदस्तात्प्रयाति चक्रं नृप शैशुमारं २४॥

हृ॰ योगेश्वराणां त्रिलोक्या अंतश्च बहिश्च महर्ल्लोकादिषु ब्रह्मांडाद्बहिश्च गतिमाहुः अत्र हेतुः पवनस्यांतः आत्मा लिंगशरीरं येषामिति विद्या उपासना तपो भगवद्धर्मः योगोऽष्टांगः समाधिर्ज्ञानं तान्ये भजंति तेषां या गतिस्तां २३ तामाह वैश्वानरमित्यष्टभिः विहायसा आकाशेन तत्र च ब्रह्मलोकपथेन गतः सन् प्रथमं वैश्वानरं अग्न्यभिमानिनीं देवतां याति केनोपायेन सुषुम्णया नाड्या सा च देहाद्बहिरपि वितता सतीत्याह शोचिषा ज्योतिर्मय्या विधूतः त्यक्तः कल्को मलो येन सः क्वाप्यसज्जमानः इत्यर्थः उदस्तात् उपरिष्टाद्वर्त्तमानं हरेः संबंधि तारारूपं नारायणाधिष्ठितमित्यर्थः शैशुमारं चक्रं पंचमस्कंधे वक्ष्यमाणं शिशुमाराश्रयं ज्योतिश्चक्रं चक्रस्थानानि आदित्यादि ध्रुवांतानि पदानि प्रतियातीत्यर्थः २४ ॥

अ॰ २

एमः
७

तद्दिस्मोश्वरं विश्वस्यनाभिंसूर्योयाश्रयभूतं आविशृलिंगत्वान्नामिशब्दस्यनपुंसकत्वं अतिवर्त्यअतिक्रम्यपरतः स्वर्गिणांगत्य
भावादेक एवनिर्मलेनलिंगशरीरेणब्रह्मविदांस्थानं अन्यैर्नमस्कृतंमहर्लोकमुपैति यत्रस्मिनविबुधाः महाकल्पायुषोभृग्वा
दयः २५ अथोत्मनंतरंकल्पांतेसविश्वंत्रैलोक्यं अतिशयेनदह्यमानंनिरीक्ष्य तत्राप्यूष्मप्राप्तेः यत्द्विपरार्द्धस्थायितत्पा
रमेष्ठ्यंपदंप्रति निर्यातिसिद्धेश्वरैर्जुष्टानिधिष्ण्यानिविमानानियस्मिनतत उद्गति श्रेष्ठ्यंसूचितं २६ तदेवाह नयत्रेति
आर्तिः दुःखंउद्वेगोभयंकिंतुचित्तनोहेतोः यद्दुःखंअदः अतेतदेकं विनातत्कुतोभवति अनिदंविदांइदं भगवतोध्यान
मजानतांप्राणिनांदुरंतदुःखोयः प्रभवोजन्मतस्यान्वनुदर्शनात तेषांकृपया यद्याचित्ततोदोमनः पीडेतियत्ततविनाकु

तद्दिश्वनाभिंत्वतिवर्त्यविष्णोरणीयसाविरजेनात्मनैकः नमस्कृतंब्रह्मविदामुपैतिकल्पायुषो
यद्विबुधारमंते २५ अथोत्मनंतस्यमुखानलेनदंदह्यमानंसनिरीक्ष्यविश्वं निर्यातिसिद्धेश्वर
जुष्टधिष्ण्यंयद्द्वैपरार्द्ध्यंतदुपारमेष्ठ्यं २६ नयत्रशोकोनजरानमृत्युर्नार्तिर्नचोद्वेगऋतेकुतश्चि
त यच्चित्ततोदः कृपयाऽनिदंविदांदुरंतदुःखप्रभवानुदर्शनात २७ ततोविशेषंप्रतिपद्यनिर्भय

तच्चिदपियत्रशोकादयोनसंतीति तत्रब्रह्मलोकंगतानांत्रिविधागतिः येपुण्योत्कऽऽस्तेनात्मनाऽपोनलमूर्तित्वरत्
र्षणगताः तेकल्पांतरेपुण्यतारतम्येनाधिकारिकाभवंति येतुहिरण्यगर्भाद्युपासनाबलेनगताः तेब्रह्मणासहमुच्यंतेये
तुभगवदुपासकाः तेस्वेच्छयाब्रह्मांडंभित्वावैष्णवंपदमारोहंति २८ तत्रप्रस्तुतस्यभगवद्भक्तस्यब्रह्मांडभेदनप्रकारमा
ह ततइत्यादिना तत्रेयंप्रक्रिया ईश्वराधिष्ठितायाः प्रकृतेः केनचिदंशेनमहत्तत्वंभवति तस्यांशेनाहंकारः तस्यांशे
नशब्दतन्मात्रद्वारानभः तस्यांशेनस्पर्शतन्मात्रद्वारावायुः तस्यांशेनरूपतन्मात्रद्वारातेजः तस्यांशेनरसतन्मात्र
द्वाराआपः तदंशेनगंधतन्मात्रद्वारापृथ्वीतेश्चमिलितैश्चतुर्दशभुवनात्मकंविराट्शरीरंतस्यचपंचाशत्कोटियोज

 नविशालस्य पृथिव्येवांडकटाहविशेषशब्दवाच्या शतकोटियोजनविशालं प्रथमावरणं पंचाशत्कोटिविशालमित्येके तत 

श्चावादीनांयेऽपरिणतास्त्रंशाः तान्येवोत्तरोत्तरं दशगुणान्यावरणानि अष्टमंतुप्रकृत्यावरणं व्यापकमेव तदेवं स्थितेपृथि

व्याद्यावरणभेदप्रकारः कथ्यते ततोविशेषं प्रतिपद्य लिंगदेहेन पृथिव्यात्मतां प्राप्येत्यर्थः एवमुत्तरत्रापि द्रष्टव्यं निर्भ

यः कथं यास्यामीति शंकाशून्यः तेनात्मना पृथ्वीरूपेण तन्निरंतराश्रयः प्रतिपद्य अन्वरतत्वरामकुर्वन् तत्तदात्मत्वे

नलोकदाहादिशंकाभावात् यथेष्टं भोगान् भुंजान इत्यर्थः एवंज्योतिर्मयः सन्काले भोगावसाने हृत्त आत्मनोलिंगं

परमात्ममूर्तित्वेनोपासनेषूक्तं यद्वा वेदशब्दात्ममूर्तिना तस्य प्रमापकमिति २८ इंद्रियार्थानां भूतसूक्ष्माणामतिक्रममा

ज्योतिर्मयोवायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिंगम् २८ घ्राणेन गंधं रसनेन वैरसं रू

पंतुदृष्ट्या श्वसनं त्वचैव श्रोत्रेण चोपेत्य नभोगुणत्वं प्राणेन चाकूतिमुपैति योगी २९ सभूत

सूक्ष्मेंद्रियसन्निकर्षं मनोमयं देवमयं विकार्यं संसाद्य गत्या सहतेन याति विज्ञानतत्वं गुण

हृ घ्राणेनाधिष्ठितेन गंधमुपेत्य श्वसनं स्पर्शनं नभोगुणत्वं शब्दात्मतां प्राणेन तत्तत्कर्मेंद्रियेण· ऽसंनिरोधं ३०

आकूतिंतत्क्रियाम्· २९ तदेवं स्थूलसूक्ष्मभूतातिक्रममुक्त्वा तदावरणभूताहंकारप्राप्तिमहदादिप्राप्तिमाह· सयोगीवि

कार्यं संसाद्य विज्ञानतत्वं याति· विविधं कार्यमस्येति विकार्यो हंकारः सत्रिविधः तामसोराजसः सात्विकइति तत्रताम

सात्जडानि भूतसूक्ष्माणि जायंते राजसात्तु बहिर्मुखानि दशेंद्रियाणि सात्विकान्मनइंद्रियदेवताश्चतेषां लयश्चतत्र 

दहंकारे तत्र भूतसूक्ष्माणामिंद्रियाणां च सन्निकर्षं लयस्थानं तामसं राजसं च मनोमयं देवमयं च सात्विकं प्राप्य गत्वाए 

वंगमनेन तेनाहंकारेण सह विज्ञानतत्वं महत्तत्वं याति ततः गुणानां सन्निरोधो लयो यस्मिन् तत्प्रधानं याति ३० ॥ ९ ॥

तेनात्मनाप्रधानरूपेणानंदमयः सन्नुपाधीनामवसाने शांतमविकृतमानंदं परमात्मानमुपैति नविसज्जते नावर्त्ततइत्यर्थः ३१ सृती मार्गौप्रकारावित्यर्थः हेनृप अनपेक्षोनिर्भिद्यमूर्द्धन्विसृजेत् परंगतइतियासद्योमुक्तिः सैकासृतिः यदिप्रयास्य न्नित्यादिनाक्रममुक्तिश्चद्वितीयासृतिः एतेसृतीवेदेन गीतेउक्ते ननुस्वोत्प्रेक्षिते तत्रयदासर्वेप्रमुच्यंतेकामायेऽस्यहृदि श्रिताः अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुतइतिसद्योमुक्तिः तेऽर्चिरभिसंभवंतीत्यादिनाक्रममुक्तिश्चवेदेनोक्ता यद्या नकर्मभिस्तांगतिमाप्नुवंतीतिदक्षिणमार्गस्यापिसूचितत्वादेतेसृतीइतिद्विवचनंत्वयाभिपृष्टेयच्चक्रोनन्यमित्यादिप्रश्ने

तेनात्मनात्मानमुपैतिशांतमानंदमानंदमयोऽवसाने एतांगतिंभागवतींगतोयः सवैपुनर्ने हविषज्जतेंग ३१ एतेसृतीतेनृपवेदगीतेत्वयाऽभिपृष्टेहसनातनेच येवैपुराब्रह्मणआहतुष्ट आराधितोभगवान्वासुदेवः ३२ नह्यतोऽन्यः शिवः पंथाविशतः संसृताविह वासुदेवेभग वतिभक्तियोगोयतोभवेत् ३३ भगवान्ब्रह्मकार्त्स्न्येनत्रिरन्वीक्ष्यमनीषया तदध्यवस्यत्कू टस्थोरतिरात्मन्यतोभवेत् ३४ ॥ नार्थान्मुक्तिविषयेद्वेअपिसृतीपृष्टे ब्रूहियद्वाविपर्ययमितिदक्षिणमा र्गोप्यर्थात्पृष्टः एवंत्वयाचयेपृष्टेएतेसृतीत्यन्वयः ३२ सन्निसंसरतः पुंसोबहवोमोक्षमार्गास्तपोयोगादयः समीचीनस्त्व यमेवेत्याह नहीति यतोऽनुष्ठिताद्भक्तियोगोभवेत् अतोऽन्यः शिवः सुखरूपोनिर्विघ्नश्चनास्त्येव ३३ कुतएतद त आह भगवान्ब्रह्माकूटस्थः निर्विकारः एकाग्रचित्तः सन्नित्यर्थः त्रिस्त्रीन्वारान् कार्त्स्न्येनसाकल्येनब्रह्मवेदं अन्वीक्ष्यविचार्ययत आत्मनिहरौरतिर्भवेत् तदेवमनीषयाअध्यवस्यत् निश्चितवान् ३४ ॥ २ ॥

भा॰ द्वि॰ नत्वनुभूतेः रतिर्भवति अननुभूते तु भगवति कथं रतिः स्यात्तत्राह भगवानलक्षितः द्रष्टुः कथं स्वात्मना क्षेत्रज्ञांतर्या
१ मितया कैः दृश्यैर्बुध्यादिभिः तदेव द्रष्टृत्वं दर्शयति दृश्यानां जडानां दर्शनं स्वप्रकाशं द्रष्टारं विना न घटत इत्यनुपपत्तिमु
खेन लक्षणैः स्वप्रकाशांतर्यामिलक्षणैः तथा बुध्यादीनि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिवदिति व्याप्तिमुखेनानुमाप
कैः सर्वत्र तत्कर्तृत्वेनेश्वरसिद्धिः ३५ यच्छ्रोतव्यमित्यादिप्रश्नोत्तरमुपसंहरति तस्मादिति ३६ श्रवणादिफल
मभिनयेनाह पिबंतीति सतामात्मनः आत्मत्वेन प्रकाशमानस्य कथैवामृतं विषयैर्विदूषितं मलिनीकृतमाशयं पुनं॥

भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ३५
तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणां ३६
पिबंति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतं पुनंति ते विषयविदूषिताशयं व्रजंति तच्चरणसरोरुहांतिकम् ३७ ॥ ॥ इति श्रीभागवते महापुराणे द्वितीयस्कंधे पुरुषसंस्थावर्णनं नाम द्वितीयोध्यायः २ ॥ ॥ श्रीशुक उवाच एवमेतन्निगदितं पृष्टवान्यद्भवान्मम नृणां यन्म्रियमाणानां मनुष्येषु मनीषिणां १ ॥

॥ ति शोधयंति ते तस्य चरणपद्मांतिकं
श्रीविष्णुपदं व्रजंति ३७ ॥ इति द्वितीयस्कंधे टीकायां द्वितीयोध्यायः ॥ २ ॥ तृतीये विष्णुभक्तेस्तु वैशिष्ट्यं श्रृण्व
तो मुनेः भक्त्युद्रेकेण तत्कर्मश्रवणादर ईर्यते १ इदानीमन्यदेवताभजनस्यापि पुत्रादिभजनवद्देवतुच्छफलत्वेन
हेयत्वं वक्तुं पूर्वोक्तमनुवदति एवमिति ममेति मां कदाचिद्दैवयोगेन मनुष्यत्वं प्राप्तेषु जीवेषु ये मनीषिणस्तेषां तत्रापि
ये म्रियमाणास्तेषां विशेषत एवमेतद्धरिस्मृतिहरिकथाश्रवणादिकं निगदितं विहितमित्यर्थः १ ॥

अ॰ २

स्कं॰ १

कामफलप्राप्त्यर्थमन्येषां भजनमाह ब्रह्मणस्पतिं वेदपतिं ब्रह्माणं इंद्रियपाटवकामस्त्विंद्रं प्रजापतीन् दक्षादीन् २ मायां दुर्गां विभावसुं अग्निं वसुकामः धनार्थी वीर्यं प्रभावस्तत्कामो वीर्यवान् सन् बहून् रुद्रान् यजेत् ३ अन्नाद्यं भोज्यं भक्ष्यं च अदितेः सुतान् द्वादशादित्यान् विशां देशस्य प्रजानां स्वाधीनतामिच्छन् साध्यान् यजेत् ४ इलां पृथ्वीं प्रति

ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिं इंद्रमिंद्रियकामस्तु प्रजाकामः प्रजापतीन् २ देवीं मायां तु श्रीकामस्तेजस्कामो विभावसुं वसुकामो वसून् रुद्रान्वीर्यकामोऽथ वीर्यवान् ३ अन्नाद्यकामस्त्वदितिं स्वर्गकामोऽदितेः सुतान् विश्वान्देवान्राज्यकामः साध्यान्संसाधको विशां ४ आयुःकामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत् प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ ५ रूपाभिकामो गंधर्वान्स्त्रीकामोऽप्सर उर्वशीं आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम् ६ यज्ञं यजेद्यशः कामः कोशकामः प्रचेतसं विद्याकामस्तु गिरिशं दांपत्यार्थ उमां सतीम् ७ धर्मार्थ उत्तमश्लोकं तंतुं तन्वन्पितॄन्यजेत् रक्षाकामः पुण्यजनानोजस्कामो मरुद्गणान् ८ राज्यकामो मनून्देवान्निर्ऋतिं त्वभिचरन्यजेत् ॥ ९ ॥ स्थानस्थानादप्रच्युतिं रोदसी द्यावाभूमी ५ अप्सरस उर्वशीं च तां ६ यज्ञं यज्ञोपाधिं विष्णुं कोशो वसुसंचयः वसुकाम इत्यत्र धनमात्रमिति भेदः दांपत्यमन्योन्यप्रीतिः तदेवार्थो यस्य सः ७ धर्मार्थः धर्मकामः उत्तमश्लोकोपाधिं विष्णुं तंतुं तन्वन् संतानवृद्धिमन्विच्छन् रक्षा बाधानिवृत्तिः तत्कामः पुण्यजनान् यक्षान् ओजो बलं तत्कामः मरुद्गणान्देवान् ८ राज्यं राजत्वं तत्कामो मनून्देवान्

भा॰ टि॰ मन्वंतरपालान् राज्ञः कर्मराज्यंतत्कामोविश्वान्देवानितिविशेषः अभिचरन् शत्रुमरणमिच्छन्निर्ऋतिंराक्षसं कामका
मः भोगेच्छुः अकामःवैराग्यकामःपुरुषंपरंअन्यानिव्यतिरेकोपाधिमीश्वरं ९ अकामः एकांतभक्तः उक्तानुक्तसर्वकामो
वापुरुषंपूर्णंनिरुपाधिं १० पूर्वोक्तनानादेवतायजनस्यापिसंयोगपृथक्त्वेनभक्तियोगफलत्वमाह एतावानिति इंद्रादीनं
पियजतां इहजगत् यजनेनभागवतानांसंगतोभगवत्यचलोभावोभक्तिर्भवतीतियत एतावानेवनिःश्रेयसस्यपरमपुरु

कामकामोयजेत्सोममकामःपुरुषंपरं ९ अकामःसर्वकामोवामोक्षकामउदारधीः तीव्रेण
भक्तियोगेनयजेतपुरुषंपरं १० एतावानेवयजतामिहनिःश्रेयसोदयः भगवत्यचलोभावो
यद्भागवतसंगतः ११ ज्ञानंयदाप्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसादउतयत्रगुणेष्वसंगः कै
वल्यसंमतपथस्त्वथभक्तियोगः कोनिर्वृतोहरिकथासुरतिंनकुर्यात् १२ शौनकउवाच इ
त्यभिव्याहृतंराजानिशम्यभरतर्षभः किमन्यत्पृष्टवान्भूयोवैयासकिमृषिंकविं १३ ॥ ३ ॥

षार्थस्योदयः लाभः अन्यत्तुसर्वंतुच्छमित्यर्थः ११ भागवतसंगतइत्यनेनसूचितांहरिकथारतिंस्तौति ज्ञानमिति
यत्यासुकथासुज्ञानंभवति कीदृशंआसर्वतः प्रतिनिवृत्तं उपरतंगुणोर्मीणांरागादीनांचक्रंसमूहोयस्मात् ततउत
अनंतरंतद्धेतुरात्मप्रसादश्चयत्रयासुमनःप्रसादहेतुः गुणेषुविषयेष्वसंगोवैराग्यंच उभयत्रेतिपाठइहामुत्र
चगुणेष्वसंगः कैवल्यमित्येवसंमतःपंथायोभक्तियोगः निर्वृतः श्रवणसुखेन अन्यत्रानिर्वृतइतिवा तासुहरि
कथासुकोरतिंनकुर्यात् १२ अभिव्याहृतमुक्तं ऋषिंपरब्रह्मदर्शिनं कविंशब्दब्रह्मनिष्णातं १३ ॥ ३ ॥

अ॰ ३

राम:

१०

श्रवणेच्छायां हेतुः हरिकथा एव उदर्कः उत्तरफलं यासु ताः कथाः सतां भागवतानां सदसि सभायां स्युः १४ एतत्प्रपंचयति सवा इति द्वाभ्यां कृष्णपूजादिरूपां क्रीडां यः स्वीकृतवान् १५ उरुगायस्य हरेः गुणैः उदाराः महत्यः कथाः स्युः १६ किंच वृथैव क्षीयमाणमायुर्हरिकथया सफलं कुर्वित्याशयेनाह त्रिभिः आयुरिति असौ सूर्यः उद्यन् उद्गच्छन् अस्तमदर्शनं च यन् गच्छन् यत् येन क्षणो नीतः तस्य आयुः ऋते वर्जयित्वा वृथैव हरति १७ ननु जीवनमेव तेषामायुषः

एतच्छुश्रूषतां विद्वन्सूत नोऽर्हसि भाषितुं कथा हरिकथोदर्काः सतां स्युः सदसि ध्रुवं १४ स वै भागवतो राजा पांडवेयो महारथः बालक्रीडनकैः क्रीडन्कृष्णक्रीडां य आददे १५ वैयासकिश्च भगवान्वासुदेवपरायणः उरुगायगुणोदाराः सतां स्युर्हि समागमे १६ आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्त्तया १७ तरवः किं न जीवंति भस्त्राः किं न श्वसंत्युत न खादंति न मेहंति किं ग्रामपशवोऽपरे १८ श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः न यत्कर्णपथोपेतो जातु नाम गदाग्रजः १९ विले बतोरुक्रमविक्रमान्ये न शृण्वतः कर्णपुटे नरस्य॥

फलमस्ति तत्राह तरव इति ननु तेषां श्वासो नास्ति तर्हि भस्त्राः चर्मकोशाः ननु तासामाहारादिकं नास्ति तत्राह न खादंतीति नाश्नंति न मेहंति रेतःसेकं मैथुनं न कुर्वंति किं उत अपि नराकारं पशुं मत्वाह अपरे इति १८ तदेवाह श्वादिभिः संस्तुतः सदृशो निरूपितः यस्य कर्णपथं कदाचिदपि नागतः सः श्ववत्वास्यदत्वात् श्वभिः कश्मलविषयासक्तत्वाद्विड्वराहैः ग्रामसूकरैः कंटकवत् दुःखदविषयासक्तत्वादुष्ट्रैः भारवाहित्वात्खरैः तुल्य इत्यर्थः १९ तस्यांगानि च निष्फलानीत्याह विले इति पंचभिः वतेति खेदेन शृण्वतः॥

गादिअशृण्वतोनरस्ययेकर्णपुटेतेबिलेवृथारंध्रे॰ नचेदुपगायतितस्यजिह्वाअसतीदुष्टादर्दुरोभेकस्तदीयाजिह्वेव २० पट्टव
२१ स्त्रसीषेणकिरीटेनचजुष्टमपिशिरोयदिननमेत् तर्हिकेवलंभारएव शवोमृतकः तत्करतुस्तौ लसत्कांचनकंक॰
णयुयोस्तौ अप्यर्थेवाशब्दः २१ येनयेनविष्णोर्मूर्त्तीर्ननिरीक्षेतेतेवर्हायितेमयूरपिच्छनेत्रतुल्ये द्रुमवज्जन्मभजं
तद्रूतितथा वृक्षमूलतुल्यावित्यर्थः २२ नाभिलभेतअभितोनस्पृशेतनधारयेत् श्रीविष्णुपद्याः श्रीविष्णुपदलग्ना

जिह्वाऽसतीदार्दुरिकेवसूत नचोपगायत्युरुगायगाथाः २० भारः परंपट्टकिरीटजुष्टमप्यु
त्तमांगंननमेन्मुकुंदं शावौकरौनोकुरुतः सपर्यांहरेर्लसत्कांचनकंकणौवा २१ वर्हायितेते
नयनेनराणांलिंगानिविष्णोर्ननिरीक्षतोये पादौनृणांतौद्रुमजन्मभाजौक्षेत्राणिनानुव्रज॰
तोहरेर्यौ २२ जीवन्शवोभागवतांघ्रिरेणुंनजातुमर्त्योभिलभेतयस्तु श्रीविष्णुपद्यामनुज
स्तुलस्याः श्वसन्शवोयस्तुनवेदगंधम २३ तदश्मसारंहृदयंवतेदंयद्गृह्यमाणैर्हरिनामधे
यैः नविक्रियेताथयदाविकारोनेत्रेजलंगात्ररुहेषुहर्षः २४ अथाभिधेह्यंगमनोनुकूलं
प्रभाषसेभागवतप्रधानः यदाहवैयासकिरात्मविद्याविशारदोनृपतिंसाधुपृष्टः २५ ॥इ
तिश्रीभागवतेद्वितीयस्कंधेतृतीयोध्यायः ३॥ ॰याः नवेदेति॰ अवघ्रायनाभिनंदेदित्यर्थः २३ अश्मसा
वत्सारोबलंकाठिन्यंयस्यविक्रियालक्षणमाह अथेति गात्ररुहेषुरोमसुहर्षःउद्गमः २४ यस्माद्भक्तस्यसर्वमेत
द्यं मनसोनुकूलंचप्रियंब्रूषे अयअतः साधुपृष्टः सन्वैयासकिः नृपतिंप्रतियदाहतदभिधेहीति २५॥ ॥इ
॥तिश्रीभागवतेद्वितीयस्कंधेटीकायांतृतीयोध्यायः ३॥

श्री॰ ३

११

तुर्यपरीक्षिनाप्टष्टंसृष्ट्यादिहरिचेष्टितं शुकेनब्रह्मनतुत्रसंवादेनोपवर्ण्यते १ एवंतःप्रश्नंकथयितुंतस्यप्राकृतनीं
स्थितिमाहचतुर्भिः वैयासकेः शुकस्यइतिएवंभूतंआत्मनस्तत्वस्यनिश्चयोयथा स्यात् तद्वचउपधार्यआकलय्य
मतिंकृष्णएवसव्योनान्यइत्येवंभूतां १ आत्मादेहः पश्वोगजादयः २ इममेवार्थंहरिलीलालक्षणम् ३ संस्था

सूतउवाच वैयासिकेरितिवचस्तत्वंनिश्चयमात्मनः उपधार्यमतिंकृष्णेऔत्तरेयः स
तींव्यधात् १ आत्मजायासुतागारपशुद्रविणवंधुषु राज्येचाविकलेनित्यंविरूढांमम
तांजहौ २ पप्रच्छचेममेवार्थंयन्माप्टच्छथसत्तमाः कृष्णानुभावश्रवणेश्रद्दधानोमहा
मनाः ३ संस्थांविज्ञायसंन्यस्यकर्मत्रैवर्गिकंचयत् वासुदेवेभगवतिआत्मभावंदृढंग
तः ४ राजोवाच समीचीनंवचोब्रह्मन्सर्वज्ञस्यतवाऽनघ तमोविशीर्यतेमह्यंहरेःकथ
यतःकथां ५ भूयएवविवित्सामिभगवानात्ममायया यथेदंसृजतेविश्वंदुर्विभाव्यम
धीश्वरैः ६ यथागोपायतिविश्वंयथासंयच्छतेपुनः यांयांशक्तिमुपाश्रित्यपुरुशक्तिः
परःपुमान्आत्मनंक्रीडयन्क्रीडन्करोतिविकरोतिच ७॥ ऽऽमृत्युंत्रैवर्गिकंधर्मार्थकामप्रधानंसंन्य
स्यत्यक्त्वाआत्मभावंपरमप्रेम्णाभगवदात्मत्वंगतः प्राप्तः सनपप्रच्छ ४ मह्यंममतमोऽज्ञानंविशीर्यतेनश्यति
तवकथयतः सतः समीचीनं ५ पुनश्चवेदितुमिच्छामिइदंदुर्विभाव्यम् अवितर्क्यंविश्वंयथासृजति ६ गोपा
यतिपालयति संयच्छतेसंहरतेपुरुशक्तिःवहुशक्तिमान् क्रीडन्यथाकरोति आत्मानंब्रह्मादिरूपिणंक्रीडय
॥नविकरोतिविविधंकरोति ७॥

भा॰ टी॰ ८ एकः पुरुषरूपेण युगपज्जन्मभिः ब्रह्माद्यवतारैः क्रमशो वा यथा प्रकृतेर्गुणान्गृह्णाति ९ विचिकित्सितं संदि
ग्धं शाब्दे ब्रह्मणि विचारेण निष्णातः परस्मिन्ननुभवेन १० उपामंत्रितः प्रार्थितः प्रचक्रमे देवतागुरुनमस्कारादि
रूपमुपक्रमं कृतवानित्यर्थः ११ तदेवाह त्रयोदशभिः परस्मै सर्वोत्तमाय तत्र हेतुः भूयसे अपरिमितमहिम्ने
तद्दर्शयति सतः प्रपंचस्य उद्भवादिषु निमित्तभूतया लीलया गृहीतं ब्रह्मादिरूपेण रजआदि शक्तित्रितयं ये

नूनं भगवतो ब्रह्मन्हरेरद्भुतकर्मणः दुर्विभाव्यमिवाभाति कविभिश्चापि चेष्टितं ८ यथा
गुणांस्तु प्रकृतेर्युगपत्क्रमशोपि वा बिभर्ति भूरिशस्त्वेकः कुर्वन्कर्माणि जन्मभिः ९ विचि
कित्सितमेतन्मे ब्रवीतु भगवान्यथा शाब्दे ब्रह्मणि निष्णातः परस्मिन्भगवान्खलु १० सूत उवा
च इत्युपामंत्रितो राज्ञा गुणानुकथने हरेः हृषीकेशमनुस्मृत्य प्रतिवक्तुं प्रचक्रमे ११ शुक
उवाच नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया गृहीतशक्तित्रितयाय दे
हिनामंतर्भवायानुपलक्ष्यवर्त्मने १२ भूयो नमः सद्वृजिनच्छिदे ऽसतामसंभवायाखिलस
त्वमूर्त्तये पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे १३ ॥ तस्मै अंतर्भवा
य अंतर्यामिणे अत एव सर्वांतरत्वादनुपलक्ष्यं वर्त्म यस्य १२ विचित्रफलदातृत्वमनुस्मरन्प्रणमति भूयः पुनश्च न
मः सतां धर्मवर्तिनां वृजिनच्छिदे दुःखहंत्रे असतां अधर्मशीलानां असंभवाय अनुद्भवहेतवे अखिलसत्वमूर्त्तये
तत्तद्देवादिरूपेण तत्तत्फलदायेत्यर्थः समग्रसत्वमूर्तये दूति वा पुनरपि पूर्वोक्तोभयवैलक्षण्यमाह पारमहंस्ये
प्रत्यक्निष्ठारूपे आश्रमे व्यवस्थितानां पुंसामनुमृग्यं अतन्निरसनेन पुनः पुनर्मृग्यं यदात्मतत्त्वं तस्य दाशुषे दात्रे

अ॰ ४

राम १२

॥ ८ ॥

सात्वतां भक्तानां ऋषभाय पालकाय कुयोगिनां भक्तिहीनानां विदूरा काष्ठा दिगपि यस्य दुर्ज्ञेयायेत्यर्थः तदेवं वैषम्यप्रतीतावपि निर्दोषत्वायाचिंत्यमैश्वर्यमाह निरस्तं साम्यं अतिशयश्च यस्य यदपेक्षया अन्यस्य साम्यमतिशयश्च नास्ति तेन राधसा ऐश्वर्येण स्वधामनि स्वस्वरूपे ब्रह्मणि रममाणाय १४ सर्वसाधनेभ्यो भक्तेः श्रैष्ठ्यमनुस्मरन्प्रणमति यत्कीर्तनमिति द्वाभ्यां अर्हणं पूजनं सुभद्रं मंगलं श्रवः यशो यस्य तस्मै १५ विचक्षणाः विवेकिनः यस्य चरणयो

नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनां निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः १४ यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वंदनं यच्छ्रवणं यदर्हणं लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः १५ विचक्षणा यच्चरणोपसादनात्संगं व्युदस्योभयतोऽन्तरात्मनः विंदंति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः १६ तपस्विनो दानपरा यशस्विनो मनस्विनो मंत्रविदः सुमंगलाः क्षेमं न विंदंति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः १७ किरातहूणांध्रपुलिंदपुल्कसा आभीरकंका यवनाः खसादयः येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यंति तस्मै प्रभविष्णवे नमः १८ ॥ ६ ॥

रुपसादनात् उपसत्तेर्भजनात् अंतरात्मनो मनस उभयत्र इह च परत्र च संगं व्युदस्य निरस्य गतक्लमाः प्रयासरहिताः १६ भक्तिशून्यानां सर्वसाधनवैफल्यं दर्शयन्नमति तपस्विन इति मनस्विनो योगिनः सुमंगलाः सदाचाराः यस्मिन् तपआद्यर्पणं विना सुभद्रश्रवस इति श्रस्यावृत्तिर्यशः श्रवणादेः प्राधान्यज्ञापनाय १७ भक्तेः परमशुद्धिहेतुत्वं दर्शयन्नाह किरातादयो ये पापजातयः अन्ये च ये कर्मतः पापरूपास्ते यदुपाश्रयः भागवताः तदाश्रयाः संतः शुध्यं

ति असंभावनाशंकां परिहरति प्रभविष्णवे प्रभवन

भा० टी० सर्वोपास्यत्वमनुस्मरन्प्रार्थयते स एष आत्मवतां धीराणां आत्मा आत्मत्वेनोपास्य इत्यर्थः त्रयीमयत्वादिविशेष
णैस्तत्तन्मार्गेणोपास्यत्वं विवक्षितं गतव्यलीकैर्निष्कपटैर्भक्तैर्वितर्क्यं अन्त्याश्चर्येण वीक्षणीयं लिंगं मूर्तिर्यस्य स
प्रसीदतु १९ सर्वपालकत्वमनुस्मरन्नाह श्रिय इति गतिश्च सर्वापत्सु रक्षकः २० ज्ञानप्रदत्वमनुस्मरन् आह-
यदंघ्रीति द्वाभ्यां यस्यांघ्र्योरनुध्यानमेव समाधिः तेन धौतया शोधितया यया रुचं रुच्यनुसारेण सगुणनिर्गुणा

स एष आत्मात्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः गतव्यलीकैरजशंकरादिभिर्वि
तर्क्यलिंगो भगवान्प्रसीदतां १९ श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियांपतिर्लोकपतिर्धरा-
पतिः पतिर्गतिश्चांधकवृष्णिसात्वतां प्रसीदतां मे भगवान्सतांपतिः २० यदंघ्र्यनुध्यानसमा-
धिधौतया धियाऽनुपश्यंति हि तत्त्वमात्मनः वदंति चैतत्कवयो यथारुचं स मे मुकुंदो भगवान्प्र
सीदताम् २१ प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि स्वलक्षणा प्रादुर
भूत्किलास्यतः स मे ऋषीणामृषभः प्रसीदतां २२ भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते य

दिभेदैः पद्मा रुक्प्रतिभायया मतीत्यर्थः २१ किंच पुरा कल्पादौ अजस्य हृदि सतीं सृ ऽदमूषु पूरुषः॥
ष्टिविषयां स्मृतिं वितन्वता येन प्रचोदिता सती सरस्वती तस्य आस्यतः मुखतः किल प्रादुर्भूता स्वानि असाधारणा-
नि लक्षणानि शिक्षादियुक्तानि यस्याः सा ऋषीणां ज्ञानप्रदानां ऋषभः श्रेष्ठः २२ इदानीं स्ववाचं श्रोतृजनाह्लाद
कारिणीं शृंगारकरुणादिरसाभां प्रार्थयते भूतैरिति स मे वचांसि अलंकृषी अलंकरोतु दीर्घश्छांदसः अन्यस्य स्व

न्येनालंकारासंभवमाशंक्य तस्यांतर्यामिनामाविष्करोतियोमहद्भिर्भूतैरिमाः पुरः शरीराणिसृष्ट्वास्वमूषुपूर्षु अं
तर्यामितयाशेतेवसति अत्रपुरुषसमाख्यांप्रमाणयति यद्यस्मात् पुरुषइति अतएवयः एकादशेंद्रियपंचम
हाभूतरूपान्षोडशगुणान्कलाः भुंक्तेप्रकाशयतिपालयतीतिवा तदात्वात्मनेपदमार्षंअत्रहेतुः यतः षोडशा
नामात्माचेतयितास्वार्थेकः नत्वत्रजीवत्वमुच्यतेप्राप्त्येनाविरोधात् २३ श्रीव्यासंनमस्करोति सौम्याः भक्ताःयस्य
मुखांबुरुहेआसवोमकरंदस्तं २४ इदानींप्रश्नस्योत्तरतयाब्रह्मनारदसंवादंप्रस्तौति एतदितिउत्पत्तिसमयएव

भुंक्तेगुणान्षोडशषोडशात्मकः सोलंकृषीष्टभगवान्वचांसिमे २३ नमस्तस्मैभगवतेवासु
देवायवेधसे पपुर्ज्ञानमयंसौम्यायन्मुखांबुरुहासवं २४ एतदेवात्मभूराजन्नारदायविपृ
च्छते वेदगर्भोऽभ्यधात्साक्षाद्यदाहहरिरात्मनः २५ ॥ ॥इतिश्रीभागवतेमहापुराणेद्वि
तीयस्कंधेचतुर्थोध्यायः ४ श्रीनारदउवाच देवदेवनमस्तेस्तुभूतभावनपूर्वज तद्विजानी
हियज्ज्ञानमात्मतत्वनिदर्शनं १ यद्रूपंयदधिष्ठानंयतः सृष्टमिदंप्रभो॥. ६ ॥ ॥

वेदाः गर्भेयस्यसाक्षाद्धरिर्यदाह २५ ॥ ॥इतिश्रीभागवतेद्वितीयस्कंधेटीकायां
चतुर्थोऽध्यायः ४ ॥ ॥पंचमेनारदेनाथपृष्टः सृष्ट्यादिवस्तुतः हरेर्लीलांविराट्सृष्टिंकालकर्मादिशक्तिभिः १
नारदायविपृच्छतेवेदगर्भोभ्यधादित्युक्तंतत्रनारदप्रश्नमाह देवदेवेति हेभूतभावनअतएवसर्वेषांपूर्वजअना
देज्ञायतेनेनेतिज्ञानंतत्साधनंयत्ततद्विजानीहि विशेषेणज्ञापयेत्यर्थः कथंभूतंआत्मतत्वंनितरांदृश्यतेयेनतत् १
उपलक्षणभूतंविश्वमेवात्मज्ञानसाधनं अतस्तद्विशेषंपृच्छति यद्रूपंयेनरूप्यतेप्रकाश्यतेयदधिष्ठानंयदाश्रयंयतः

पेन सृष्टं यत्संस्थं यस्मिन् लीयते यत्परं यदधीनं· यच्चेति यदात्मकं स्वतः सत्कारणतो वेत्यर्थः तस्य तत्त्वं याथार्थ्यं त
त्वं नो वद २ न जानामीति न च वक्तव्यमित्याह सर्वमिति भूतं जातं भव्यं जनिष्यमाणं भवत् वर्तमानं जायमानं तेषां
प्रभु यतः अतो विशिष्टेन ज्ञानेनावसितं निश्चितं ३ आस्तामिदं आदौ तावत्त्वामेव कथयेत्याह यतो विज्ञानं य
स्य कस्त्वं विज्ञानदइत्यर्थः यदाधारः कस्तवाश्रयः यत्परः यदधीनः यदात्मकः यत्स्वरूपः मम तु त्वमेव स्वतंत्रः प
रमेश्वर इति बुद्धिः तव तपश्चरणेन तु पराशंकया पृच्छामीत्याह सार्द्धैश्चतुर्भिः एकश्च सहायः ४ आत्मनिभा वयसे

यत्संस्थं यत्परं यच्च तत्तत्त्वं वद तत्त्वतः २ सर्वं ह्येतद्भवान्वेद भूतभव्यभवत्प्रभु करामलक
वद्विश्वं विज्ञानावसितं तव ३ यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः एकः सृजसि भूता
नि भूतैरेवात्ममायया ४ आत्मन्भावयसे तानि न पराभावयन्स्वयं आत्मशक्तिमवष्टभ्योर्
र्णनाभिरिवाक्लमः ५ नाहं वेद परं त्वस्मिन्नापरं न समं विभो नामरूपगुणैर्भाव्यं सदसत्किंचि
दन्यतः ६ स भवानचरद्घोरं यत्तपः सुसमाहितः तेन खेदयसे नस्त्वं पराशंकां प्रयच्छसि ७ एत
न्मे पृच्छतः सर्वं सर्वज्ञ सकलेश्वर विजानीहि यथैवेदमहं बुद्ध्येनुशासितः ८ ॥ पालयसि स्वय

मेव पराभवमप्रापयन्· अक्लमः श्रमरहितः यथोर्णनाभिरात्मन एव शक्तिमवष्टभ्य सृजति तद्वत् ५ तस्मात् अहं
तु अस्मिन् विश्वस्मिन् परं उत्तमं अपरं अधमं समं मध्यमं च तत्रापि नाम मनुष्यादिरूपं द्विपदत्वादि
गुणः शुक्लत्वादि तैर्भाव्यं साध्यं तत्रापि सत् असत् स्थूलं सूक्ष्मं च· किंचिदप्यन्यतो न वेद किंतु त्वत्त एव सर्वं भवतीति म
न्ये ६ स तथाविधोपि भवान्तपश्चचारेति यत् तेन नोस्मान् खेदयसे मोहयसि· यतः पराशंकां ईश्वरांतराशंकां प्रयच्छ

प्रश्नमभिनंदति हे वत्स पुत्र तवेदं विचिकित्सितं संदेहः तत्पूर्वकः प्रश्नोऽयं सम्यगित्यर्थः यतः कारुणिकस्य तवायं प्र
श्नः तत्र हेतुः यत् यतः परधर्मे भगवद्वीर्यप्रकाशने प्रवर्तितोऽस्मि अतस्त्वं जिज्ञासुरपि मयि तद्रूपमेव कृतवानित्यर्थः
९ ननु त्वमेव भगवानित्युक्तं त्वया एकः सृजसि भूतानीत्यादिना सत्यं यथा मामीश्वरत्वेन प्रभाषसे तदपि तव भाषणं
नात्यंतमनृतं यतः कारणात् एतावत् प्रभावस्य भावः एतावत्त्वं मे अस्ति किंतु मत्तः परमीश्वरमविज्ञाय ब्रूषे अतः ।
सादृश्यात्तवेयं भ्रांतिः न तु बुद्धिपूर्वमनृतमित्यर्थः यत ईश्वरान्मम एतावत्त्वं तमविज्ञायेति वाऽन्वयः १० तर्हि को

ब्रह्मोवाच सम्यक्कारुणिकस्येदं वत्स ते विचिकित्सितं यदहं चोदितः सौम्य भगवद्वीर्य
दर्शने ९ नानृतं तव तच्चापि यथा मां प्रब्रवीषि भो अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे १०
येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहं यथाऽर्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारकाः ११
तस्मै नमो भगवते वासुदेवाय धीमहि यन्मायया दुर्जयया मां ब्रुवंति जगद्गुरुं १२ विलज्ज
मानया यस्य स्थातुमीक्षापथेऽमुया ॥ ऽसावीश्वर इत्यपेक्षायां भक्त्या नमस्कुर्वन्नेव तं कथयति त्रिभिः

येन स्वप्रकाशेन रोचितं प्रकाशितमेव प्रकाशयामि सृष्ट्याभिव्यक्तं करोमि यथाऽर्कादयश्चैतन्यप्रकाश्यमेव प्रका
शयंति यथा च श्रुतिः न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः तमेव भांतमनुभा
ति सर्वं तस्य भासा सर्वमिदं विभातीति ११ तस्मै नमो धीमहि यस्य मायया मोहिताः सन्तो मुग्धा मदादयो मां जगद्गुरुं ज
गत्कर्तारं वदंति तस्मै १२ यन्माययेति मायायाः संबंधोक्तेस्तस्या दुर्जयत्वोक्तेश्च तस्यापि किमस्ति संसारः नैवेत्याह ॥

भा॰ द्वि॰ मत्कपरमसोजानातीति यस्यदृष्टिपथेस्थातुंविलज्जमानयेवतस्मिन्स्वकार्यमकुर्वन्त्याअमुयामायया विमोहिताअसद्
दादयोदुर्धियः अविद्याहंतत्ताना एवकेवलंविकत्थंतेश्लाघंते अनेनयद्रूपमित्यस्यप्रश्नस्योत्तरमुक्तंभवति १३ तदेवंस्व
१४ स्मादन्यंपरमेश्वरंनिरूप्येदानींयदधिष्ठानमित्यादिनवप्रश्नानांसएवाधिष्ठानादिकंसर्वमित्युत्तरंवक्तुंतद्व्यतिरेकेणा
न्यस्यासत्वमाह द्रव्यमिति द्रव्यंमहाभूतानिउपादानरूपाणि कर्मजन्मनिमित्तं कालस्तत्क्षोभकः स्वभावस्तत्परि
णामहेतुः जीवोभोक्तावासुदेवात्परोन्योर्थोनास्तिकारणाव्यतिरेकात्कार्यस्यकार्यंहिकारणंअपेक्षते नानारूप

विमोहिताविकत्थंतेममाहमितिदुर्धियः १३ द्रव्यंकर्मचकालश्चस्वभावोजीवएवच वासुदे
वात्परोब्रह्मन्नचान्योर्थोस्तितत्वतः १४ नारायणपरावेदादेवानारायणांगजाः नारायणप
रालोकानारायणपरामखाः १५ नारायणपरोयोगोनारायणपरंतपः नारायणपरंज्ञानंना
रायणपरागतिः १६ तस्यापिद्रष्टुरीशस्यकूटस्थस्याखिलात्मनः सृज्यंसृजामिसृष्टोहमी
क्षयैवाभिचोदितः १७ सत्वंरजस्तमइतिनिर्गुणस्यगुणास्त्रयः ॥टी॰ त्वात्कार्यस्य १४ तत्रप्रपंच

यतिद्वाभ्यां नारायणः परः कारणंयेषांते अनेनैवशास्त्रयोनित्वप्रतिपादनेनेश्वरेप्रमाणंसर्वज्ञत्वादिकंचोक्तं
देवाश्चतदंगाज्जाताः अतोनतद्व्यतिरिक्ताः लोकाः स्वर्गादयस्तदानंदांशाः मखास्तत्साधनभूताः १५ योगःप्रा
णायामादिः तपस्तत्साध्यंचित्तैकाग्र्यं ज्ञानंतत्साध्यंगतिस्तत्फलं अनेनैवसर्वंतदधीनमित्युक्तं १६ नर्हि
त्वंकिंकरोषीत्यपेक्षायामाह तस्यसृज्यमपितेनसृष्टोहंसृजामिईक्षयाकटाक्षेण तत्रहेतवः द्रष्टुरित्यादयः

अ॰ ५

श्रीधरीटीकासहितद्वितीयस्कंधः

यतस्त्वंप्रेर्यः स चप्रेरकःस्यादित्यपेक्षायांजीवेश्वरविभागहेतुमाह त्रिभिः सत्वमिति· निर्गुणस्यापीश्वरस्यैतेत्रयो
गुणावध्नंतीत्युत्तरेणान्वयः कथंभूताः तेनैवस्वातंत्र्येणस्थित्याद्यर्थंमाययागृहीताः १८ वस्तुतःसर्वदामुक्तमपिमापि
नंमायाविषयंपुरुषंजीवंवध्नंति· ककार्यमधिभूतं कारणमध्यात्मं कर्त्ताधिदैवतंतेषांभावस्तत्वंतस्मिन्· द्रव्यंम
हाभूतानिज्ञानशब्देनदेवताः क्रियाइंद्रियाणितदाश्रयाः तेषांकारणभूताः तत्तदभिमानेनवध्नंति १९ अतः
सएषवश्यमायः एभिर्गुणैर्लिंगैः जीवानामावरकैरूपाधिभिः सुष्ठुअलक्षितागतिस्तत्वंयस्यसः स्वैर्भक्तैरे

स्थितिसर्गनिरोधेषुगृहीतामाययाविभोः १८ कार्यकारणकर्तृत्वेद्रव्यज्ञानक्रियाश्रयाः वध्नंति
नित्यदामुक्तंमायिनंपुरुषंगुणाः १९ सएषभगवांल्लिंगैस्त्रिभिरेभिरधोक्षजः स्वलक्षितगतिर्ब्र
ह्मन्सर्वेषांममचेश्वरः २० कालंकर्मस्वभावंचमायेशोमाययास्वया आत्मन्यदृच्छयाप्राप्तंविवु
भूषुरुपाददे २१ कालाद्गुणव्यतिकरः परिणामःस्वभावतः कर्मणोजन्ममहतःपुरुषाधिष्ठिता
दभूत २२ महतस्तुविकुर्वाणाद्रजःसत्वोपबृंहितात् तमःप्रधानस्त्वभवद्द्रव्यज्ञानक्रियात्मकः

स्वलक्षितागतिर्यस्येतिवा २० तस्यसृष्टिप्रकारमाह· कालमिति· कर्मजीवादृष्टं· विवुभूषुःविविधंभवितुमिच्छ
न् २१ गुणानांव्यतिकरः क्षोभः साम्यत्यागःस्वभावतःपरिणामोरूपांतरापत्तिः पुरुषईश्वरस्तेनाधिष्ठितत्वंत्र
याणांविशेषणं· महतःमहत्तत्वस्य २२ विकुर्वाणात्विक्रियमाणात्· तस्यचक्रियाज्ञानशक्तित्वात्· त्रिगुणत्वेपि
रजःसत्वाभ्यामुपबृंहितत्वं· अहंकारस्यसत्वावरकत्वात्तमःप्रधानत्वं अतएवाहंकारकार्येषुतामसमाकाशादि
॥ कंवहुराजसंसात्विकंचाल्पं· एवंतदुपाधिकेषुजीवेष्वपितथैवनामसाधिक्यं २३॥

अ ५

ना २३ सचविकुर्वन्नरूपांतरंगच्छन्त्रैविध्यमेवाह· वैकारिकः सात्विकः तैजसो राजसः यद्भिदा यस्य भेदः द्रव्यशक्तिरित्यादी २३ निप्रातिलोम्येनत्रयाणांलक्षाणि· द्रव्येमहाभूताख्येशक्तिर्यस्यक्रियासुइंद्रियेषुशक्तिर्यस्यज्ञानेषुदेवेषुशक्तिर्यस्य हेप्रभोवोद्धुंशक्त २४ भूतादेरितितामसस्यविशेषणं· ननुतामसात्प्रथमंशब्दोभवतीतिप्रसिद्धंसत्यं· सनुतस्यनभ सोमात्रासूक्ष्मंरूपं· गुणश्चासाधारणः व्यावर्त्तकोधर्मः शब्दद्वारानभउत्पद्यतइत्यर्थः एवमेवस्पर्शादिष्वपि

सोहंकारइतिप्रोक्तोविकुर्वन्समभूत्त्रिधा वैकारिकस्तैजसश्चतामसश्चेतियद्भिदा द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरितिप्रभो २४ तामसादपिभूतादेर्विकुर्वाणादभून्नभः तस्यमात्रागुणः शब्दोलिंगंयद्द्रष्टृदृश्ययोः २५ नभसोथविकुर्वाणादभूत्स्पर्शगुणोऽनिलः परान्वयाच्छब्द वांश्चप्राणओजः सहोबलं २६ वायोरपिविकुर्वाणात्कालकर्मस्वभावतः उदपद्यततेजोवैरू पवत्स्पर्शशब्दवत् २७ तेजसस्तुविकुर्वाणादासीदंभोरसात्मकं रूपवत्स्पर्शवच्चांभोघोष वच्चपरान्वयात् २८ विशेषस्तुविकुर्वाणादंभसोगंधवानभूत् परान्वयाद्रसस्पर्शशब्दरूपगुण न्वितः २९

द्रष्टृत्वं· शब्दस्यलक्षणंलिंगमिति· कुड्याद्यंतरितेनकेनचिदुच्चैर्गर्जितोगजइत्युक्तेयोगजद्रष्टायश्च तेनदृश्योगजः तयोर्लिंगंबोधकंलिंगविशेषणत्वात्· यच्छब्दस्यषंढत्वम् २५ परस्यनभसःकारणत्वेनान्वयाच्छ ब्दवांश्चवायुः तस्यैवलक्षणंप्राणोदेहधारणं· ओजःसहोबलानिइंद्रियमनःशरीराणांपाटवानितेषांहेतुरित्यर्थः २६ सतोरूपवत्तेजः वायुर्नभसोःकारणभूतयोरन्वयात्स्पर्शशब्दवच्च· एवमंभसः पृथिव्याश्चपरान्वयाधिक्या गुणाधिक्यम् ॥ २७ घोषः शब्दः २८ विशेषः पृथ्वीपृथिव्याश्चपरान्वयाधिक्यात्गुणाधिक्यं २९ ॥

एम १६

मनःशब्देनैवतदधिष्ठाताचंद्रोपिद्रष्टव्यः अन्येचदशदेवावैकारिकाःसात्त्विकाहंकारकार्याःतानाह दिशश्चवातश्चअर्क
श्चप्रचेताश्चअश्विनौचएतेपंचश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामधिष्ठातारः वह्निश्चइंद्रश्चउपेंद्रश्चमित्रश्चकश्चप्रजाप
तिः एतेपंचवाक्पाणिपादपायूपस्थानां ३० यतोज्ञानशक्तिर्बुद्धिः क्रियाशक्तिःप्राणश्चतैजसाहंकारकार्यौ अतोज्ञा
नक्रियाविशेषरूपाणींद्रियाण्यपितैजसाद्भवंतीत्यर्थः तान्याहश्रोत्रमिति दोःपाणिर्मेढ्रंउपस्थः क्रमस्त्वनेनवि

वैकारिकान्मनोजज्ञेदेवावैकारिकादश दिग्वातार्कप्रचेतोऽश्विवह्नींद्रोपेंद्रमित्रकाः ३०
तैजसात्तुविकुर्वाणादिंद्रियाणिदशाभवन् ज्ञानशक्तिःक्रियाशक्तिर्बुद्धिःप्राणस्तुतैजसौ
श्रोत्रंत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्रांघ्रिपायवः ३१ यदैतेऽसंगताभावाभूतेंद्रियमनोगुणाः य
दायतननिर्माणेनशेकुर्ब्रह्मवित्तम ३२ तदासंहत्यचान्योन्यंभगवच्छक्तिचोदिताः सदस
त्त्वमुपादायचोभयंससृजुर्ह्यदः ३३ वर्षपूगसहस्रांतेतदंडमुदकेशयं कालकर्मस्वभाव
स्थोजीवोऽजीवमजीवयत् ३४ सएषपुरुषस्तस्मादंडंनिर्भिद्यनिर्गतः सहस्रोर्वंघ्रिबाह्वक्षः

वक्षितः ३१ एवंकारणसृष्टिमुक्त्वाकार्यसृष्टिमाह एतेयदाअसंगताः अमीलि ॥ सहस्राननशीर्षवान् ३५
ताआसन् अतएवयदा आयतनस्यशरीरस्यनिर्माणेनशेकुः ३२ तदासदसत्त्वंप्रधानगुणभावं उपादायस्वीकृ
त्यउभयंसमष्टिव्यष्ट्यात्मकंशरीरं ३३ कालकर्मस्वभावनधिष्ठायस्थितः जीवयतीतिजीवः परमात्मा अजी
॥ वमचेतनं अजीवयत्चेतयतिस्म ३४ निर्भिद्यपृथक्कृत्यस्थितइत्यर्थः ३५ ॥

भा॰ ॥ तद्देवयवैर्लोकरचनामाह॰ यस्येति कटिरित्यूरूमूलयोः पश्चाद्भागः जघनं पुरोभागः अधः सप्तलोकान् अतलादीन् ऊर्द्ध्वं भूरादीन् सप्त ३६ वर्णानां तत उत्पत्तिं दर्शयति पुरुषस्येति ब्रह्म ब्राह्मणो मुखमिति कार्यकारणयोरभेदविवक्षयोक्तं बाहवइति च क्षत्रं क्षत्रियः ३७ इदानीमुपासनार्थं लोककल्पनाभेदान् दर्शयन् सप्तलोकपक्षमाह॰ द्वाभ्यां भूर्लोकः पातालमारभ्य पद्भ्यां कटिपर्यन्ताभ्यां ३८ स्तनद्वयादिति उपासनार्थत्वादूर्द्ध्वाधोभावविपर्यासेन न दोषः न्य

यस्येहावयवैर्लोकान्कल्पयंति मनीषिणः कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ३६ पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत ३७ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः हृदा स्वर्लोक उरसा महर्लोको महात्मनः ३८ ग्रीवायां जनलोकश्च तपोलोकः स्तनद्वयात् मूर्द्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः ३९ तत्कट्यां चातलं कॢप्तमूरुभ्यां वितलं विभोः जानुभ्यां सुतलं शुद्धं जंघाभ्यां तु तलातलं ४० महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलं पातालं पादतलत इति लोकमयः पुमान् ४१ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः स्वर्लोकः कल्पितो मूर्द्ध्ना इति वा लोककल्पना ४२ ॥

टी॰ स्तनत्वमवं कुर्वत॰ यदा स्तनद्वयं तस्मादित्यर्थः ब्रह्मलोको वैकुंठाख्यः सनातनः नित्यः न तु सृज्यप्रपंचान्तर्वर्त्तीत्यर्थः ३९ इदानीं चतुर्द्दशलोकपक्षं दर्शयति॰ तत्र जघनादिभिर्भूरादयः पूर्वोक्ता एव सप्त कट्यादिभिरधः सप्तलोकानाह॰ तत्कट्यामिति द्वाभ्यां॰ शुद्धं हरिभक्तनिवासत्वात् ४० ४१ त्रिलोकपक्षमाह भूर्लोकः पातालादिसहितः ४२

अ॰ ५
१७
एम॰
१७

॥ ॥इतिश्रीभागवतेद्वितीयस्कंधेटीकायांपंचमोध्यायः ५ ॥ ॥षष्ठेविराड्विभूतिश्चप्रोक्ताऽध्यात्मादिभेदतः दृढीकृ
तंचपूर्वोक्तंसर्वंपुरुषसूक्ततः १ इदानींवैराजस्यविभूतिः सप्रपंचमनुवर्ण्यते वाचांअस्मदादिवागिंद्रियाणांतद
धिष्ठातुर्वह्नेश्चतस्यमुखंक्षेत्रंउत्पत्तिस्थानंछंदसांगायत्र्यादीनांसप्तानांतस्यसप्तधातवः त्वगादयः क्षेत्रं हव्यंदेवा
नामन्नं कव्यं पितॄणांअमृतंतदुभयशेषोमनुष्याणां तेषामन्नानांसर्वरसस्यमधुरादेः षड्विधस्य चकारादस्मदा
दिरसनेंद्रियस्य तदधिष्ठातुर्वरुणस्यचैतस्यजिह्वाक्षेत्रंउत्पत्तिस्थानं एवंसर्वत्रानुक्रममुन्नेयं १ सर्वासूनांअस

॥ ॥इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेपंचमोध्यायः ५ ॥ ॥ब्रह्मोवाच वाचांवह्ने
र्मुखंक्षेत्रंछंदसांसप्तधातवः हव्यकव्यामृतान्नानांजिह्वासर्वरसस्यच १ सर्वासूनांचवायोश्च
तन्नासेपरमायने अश्विनोरोषधीनांचघ्राणोमोदप्रमोदयोः २ रूपाणांतेजसांचक्षुर्दिवःसू
र्यस्यचाक्षिणी कर्णौदिशांचतीर्थानांश्रोत्रमाकाशशब्दयोः तद्गात्रंवस्तुसाराणांसौभगस्यच
भाजनम् ३ त्वगस्यस्पर्शवायोश्चसर्वमेधस्यचैवहि रोमाण्युद्भिज्जजातीनांयैर्वायज्ञस्तुसंभृ

दादिप्राणानांतस्यनासेनासारंध्रेपरमायनेउत्तमक्षेत्रेमोदप्रमोदयोश्चसामान्यविशेषगंधयोर्घ्राणोघ्रा ऽऽतः ४
णेंद्रियंपरमायनं २ रूपाणांतेजसांरूपप्रकाशानांचचक्षुरिंद्रियं अक्षिणीनेत्रगोलकेसर्वत्रषष्ठ्यं तानांप्रथमांतं
क्षेत्रंद्रष्टव्यं कर्णौश्रोत्राधिष्ठानेश्रोत्रमिंद्रियं तस्यगात्रंशरीरंवस्तूनांयेसारांशाः तेषांभाजनंस्थानम् ३ अस्यत्वक्
स्पर्शस्यवायोश्चेत्यर्थः सर्वस्यमेधस्ययज्ञस्यउद्भिज्जजातीनांसर्ववृक्षाणांयैर्वृक्षैर्यज्ञःसम्यक्साधितःतेषामेववा ४

केशामेघानांक्षेत्रंपूर्वंतथोक्तेः श्मश्रूणिविद्युतांपादकरनखानिशिलालोहानामितिसादृश्यादूह्यंक्षेमकर्मणांपालनक
र्तृणां ५ विक्रमः पादन्यासोभूरादिलोकानां आस्पदमाश्रयः भूरादिशब्दानामव्ययत्वात् षष्ठ्यालुक्क्षेमोलब्धर
क्षणं शरणंभयाद्रक्षणं सर्वेषांकामानांवरस्यवरणस्यापिहरेरंघ्रिरास्पदं ६ वीर्यस्यशुक्रस्यशिश्नोऽधिष्ठानंउप
स्थस्त्विंद्रियंप्रजात्यानंदःसंतानार्थः संभोगः तेननिर्वृत्तिः तापहानिस्तस्याः ७ परिमोक्षस्यमलत्यागस्यपायुरिं

केशश्मश्रुनखान्यस्यशिलालोहाभ्रविद्युतां बाहवोलोकपालानांप्रायशःक्षेमकर्मणाम् ५
विक्रमोभूर्भुवःस्वश्चक्षेमस्यशरणस्यच सर्वकामवरस्यापिहरेश्चरणआस्पदम् ६ अपांवी
र्यस्यसर्गस्यपर्जन्यस्यप्रजापतेः पुंसःशिश्नउपस्थस्तुप्रजात्यानंदनिर्वृतेः ७ पायुर्यमस्य
मित्रस्यपरिमोक्षस्यनारद हिंसायानिर्ऋतेर्मृत्योर्निरयस्यगुदःस्मृतः ८ पराभूतेरधर्मस्य
तमसश्चापिपश्चिमः नाड्योनदनदीनांतुगोत्राणामस्थिसंहतिः ९ अव्यक्तरससिंधूनांभू
तानांनिधनस्यच उदरंविदितंपुंसोहृदयंमनसःपदम् १० धर्मस्यममतुभ्यंचकुमाराणां
भवस्यच विज्ञानस्यचसत्वस्यपरस्यात्मापरायणम् ११ ॥ ऽद्रियंगुदःस्थानंनिर्ऋतेरलक्ष्म्याः ८

तमसोऽज्ञानस्यपश्चिमः पृष्ठभागः गोत्राणांगिरीणांअस्थिसंघातः ९ अव्यक्तंप्रधानंरसः अन्नादिसारः सिंध
वः समुद्रास्तेषांनिधनस्यलयस्यउदरंपदंस्थानंविदितंज्ञानिभिः मनसः अस्मदादिलिंगशरीरस्य १० तुभ्यंत
॥ वकुमाराणांसनकादीनां भवस्यश्रीरुद्रस्यआत्माचित्तंपरमायनम् ११ ॥ ६०

अ०
६
एम:
१८

एवंतावत्परमेश्वरा ज्जातंविश्वंततोनभिन्नं· यथाकुंडलंसुवर्णान्नपृथक्सतुसर्वनियंतासर्वप्रकाशकोनित्यमुक्तःइत्यर्थो
दुक्तं· एतदेवपुरुषसूक्तार्थंकथनेनद्रढयति· तत्रसहस्रशीर्षेत्यर्द्धर्चेस्यब्राह्मणोस्यमुखमासीदित्यादेश्चसूक्तस्य
र्थः पूर्वाध्यायेएवदर्शितः पुरुषएवेदंसर्वमित्यस्यार्थंदर्शयति· अहंभवानितिसार्द्धत्रिभिः तेश्रग्रजाइमेसनकादयः
मरीच्यादयश्च १२ १३ जलंचस्थलंचनभश्चौकांसियेषांतेनभौकसः इतिसंधिरार्षः १४ सर्वंपुरुषएवनततःपृथगि
त्यर्थः प्रपंचेनतस्यापिपरिच्छेदंवक्तुंसभूमिमित्यस्यार्थमाह तेनपुरुषेणविश्वमितिभूमिपदस्यार्थः वितस्तिमितिद

अहंभवान्भवश्चैवतइमेमुनयोऽग्रजाः सुरासुरनरानागाः खगामृगसरीसृपाः १२ गंधर्वा
प्सरसोयक्षारक्षोभूतगणोरगाः पशवःपितरःसिद्धाविद्याध्राश्चारणाद्रुमाः १३ अन्येचविवि
धाजीवाजलस्थलनभौकसः ग्रहर्क्षकेतवस्तारास्तडितस्तनयित्नवः १४ सर्वंपुरुषएवेदंभूतं
भव्यंभवच्चयत् तेनेदमावृतंविश्वंवितस्तिमधितिष्ठति १५ स्वधिष्ण्यंप्रतपन्प्राणोवहिश्चप्र
तपत्यसौ एवंविराजंप्रतपंस्तपत्यंतर्वहिःपुमान् ॥

॥शांगुलपदस्य· अधीत्यतिशब्दस्यसचवितस्ति
मधिकंव्याप्यतिष्ठतीतित्र्याधिक्यमात्रंविवक्षितंनपरिमाणं· अनुपयोगादपरिच्छिन्नत्वाच १५ एतत्सदृष्टांतमा
ह· असौप्राणः आदित्यः असौवाआदित्यःप्राणइतिश्रुतेः स्वधिष्ण्यंमंडलंप्रकाशयन्· यथावहिश्चप्रकाशयति
एवंविराडदेहंप्रकाशयन् ब्रह्मांडमंतर्वहिश्चप्रकाशयति· नित्यमुक्तत्वंदर्शयितुंउतामृतत्वस्येत्यस्यार्थमाहसइ
ति अभयस्येतिमंत्रगतामृतपदव्याख्या· अन्नेनेति पदंविभक्तिव्यत्ययेनव्याचष्टेमर्त्यंमरणधर्मकंअन्नंकर्मफलं

भा॰ टी॰ अतिक्रांतवान् अतोनकेवलंसर्वात्मकः किंतुअमृतत्वस्यनिजानंदस्यापीश्वरइत्यर्थः १६ प्रपंचात्मकस्यकुतोनित्यमु
क्तत्वमित्याशंकायांतत्परिहारायएतावानस्येत्यस्यार्थमाह महिमेति प्रपंचात्मकस्याप्यमृतेशत्वमित्येषमहिमादुरत्य
यः अपारः प्रपंचानभिभूतत्वादितिभावः मंत्रेणचएतावानस्यमहिमाविभूतिः सतुज्यायान्महत्तरइतिवदताऽय
मेवार्थउक्तः तदेवमीश्वरोनित्यमुक्तइत्युक्तम् तदाश्रितानांभूतानांबंधमोक्षौव्यवस्थापयतिदर्शयन् पादोऽस्यवि
श्वाभूतानीत्यस्यार्थमाह पादेष्विति तिष्ठंत्यत्रेतिस्थितयोभूरादिलोकाः तेपादाइवपादाः अंशायस्यसः स्थितिपात्
तस्यपादेष्वंशभूतेषुलोकेषुसर्वान्जीवान्विदुः मंत्रेतुपादोऽस्यविश्वाभूतानीतिसामानाधिकरण्यमधिष्ठानाधिष्ठे

सोऽमृतस्याभयस्येशोमर्त्यमन्नंयदत्यगात् १६ महिमैषततोब्रह्मन्पुरुषस्यदुरत्ययः पादेषु
सर्वाभूतानिपुंसः स्थितिपदोविदुः १७ अमृतंक्षेममभयंत्रिमूर्ध्नोऽधायिमूर्धसु पादास्त्रयोब
हिश्चासन्नप्रजानांयआश्रमाः ॥ ९ याभेदविवक्षयापादइत्येकवचनंचसामान्याभिप्रायेणेतिव्याख्या
तंभवति १७ भूतेषुफलवैचित्र्यंदर्शयन्त्रिपादस्यामृतंदिवीत्यस्यार्थमाह अस्येश्वरस्यसंबंधित्रिपादमृतंनि
त्यसुखंदिविऊर्ध्वलोकेषुनत्रिलोक्यामित्यर्थः तदेवत्रिपाच्छब्दोक्तंत्रैविध्यंदर्शयन्नाह त्रयाणांलोकानांमूर्धा॰
महर्लोकस्तस्यमूर्ध्नानस्तदुपरितनलोकास्तेषुयथाक्रमंअमृतादिकं अधायिनिहितं नतुत्रिलोक्यां
नश्वरमेवसुखंमहर्लोकस्यक्रममुक्तिस्थानत्वेपिकल्पांतेतत्रत्यानांस्थानत्यागान्नाविनाशिसुखं जनलोकेत्व
मृतमविनाशिसुखंयावज्जीवंतस्यस्थानापरित्यागात् किंतुमहर्लोकवासिनांकल्पांतेत्रिलोकदाहोष्मपीडितानांत॰
दातत्रगमनात्क्षेमदर्शनमसितपोलोकेतस्याभावात् क्षेममेववक्ष्यतिहि त्रिलोक्यांदह्यमानायांशक्त्याशंकर्ष

णामित्रिनायांतपृस्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः इति सत्यलोके त्वभयं मोक्षः तन्नत्यासक्तेः एतदेव वैचित्र्यमधि
कारिभेदेनोपपादयन् त्रिपादूर्ध्वमित्यस्यार्थमाह नप्रजायंते पुत्रादिरूपेणेति अप्रजाः नैष्ठिकब्रह्मचारिवानप्र
स्थयतयस्तेषामाश्रमास्त्रिलोक्या बहिरासन् गृहमेधस्त्वतः यस्मादबृहद्व्रतः ब्रह्मचर्यव्रतरहितः १८ अयं चा
धिकारभेद एकस्यैवावस्थाभेदेन न त्वत्यंतभिन्नविषय इति दर्शयंस्ततो विष्वङ्ङित्यस्यार्थमाह विविधं सुष्ठु
अंचतीति विष्वङ् पुरुषः क्षेत्रज्ञः सृती मार्गौ दक्षिणोत्तरौ विचक्रमे चलति स्म कथंभूते सृती साशनानशने

अंतस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रतः १८ ॥ सृती विचक्रमे विष्वङ् साशनानशने उ
भे यदविद्या च विद्या च पुरुषस्तूभयाश्रयः १९ यस्मादंडं विराड् जज्ञे भूतेंद्रियगुणात्मकः तद्द्रव्य
मत्यगाद्विश्वं गोभिः सूर्य इवातपन् २० यदास्य नाभ्यान्नलिनादहमासं महात्मनः नाविदं य
ज्ञसंभारान्पुरुषावयवादृते २१ ॥ भोगापवर्गप्राप्तिसाधनभूते अत्र हेतुत्वेन पुनर्विशेषणं यदिति अ

विद्या कर्मरूपा एका विद्या च तत्साधनोपासनारूपा अन्या १९ तदेवं विराडंतर्वर्तिनां फलवैचित्र्यमुक्त्वा तत्कारणेश्वरस्य
तद्वैलक्षण्यं दर्शयितुं तस्माद्विराड् जायत इत्यस्यार्थमाह यस्मादंडं जज्ञे तत्र च भूतेंद्रियगुणात्मको विराट् च जज्ञे स ईश्वरः
न हि स्वं विराड्देहद्रव्यं अंडं च अतिक्रांतवान् सूर्य इवेति पूर्वोक्त एव दृष्टांतः नन्वेवं पुरुष एव चेत्सर्वं तर्हि यज्ञस्य तत्सा
धनानां चापृथग्भावाद्यज्ञैः पुरुषाराधनं न सिद्ध्येदित्याशंक्य तत्परिहाराय यत्पुरुषेण हविषेत्यादि मंत्रार्थं संगृह्य दर्शय
ति यदेत्यादिना अस्येति विराडंतर्यामिणस्तस्यैव प्रकृतत्वात् नाभौ भवं नाभ्यं तस्मात् यज्ञस्य संभारान् साधनानि नापश्य

तदानेषु संभारेषु साध्येषु सत्सु पुरुषावयवैरेते संभाराः संभृता इति चतुर्थेनान्वयः वनस्पतयो यूपाः देवयजनं यज्ञभूमिः
इदं चेति वचनात् यज्ञार्हे स्थाने उपविष्टः कथयंतीति गम्यते बहुगुणान्वितो वसंतादिकालः २२ वस्तूनि पात्रादीनि ओ
षधयो व्रीह्यादयः स्नेहा घृतादयः रसा मधुरादयः सुवर्णादीनि लोहानि मृदश्च चातुर्होत्रं होत्रादिकं कर्म २३ नामधे
यानि ज्योतिष्टोमादीनि ऋगादीनामुक्तत्वात् मंत्रा इति स्वाहाकारादयः देवतानामनुक्रम उद्देशः कल्पो बौधायनादि



तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः इदं च देवयजनं कालश्चोरुगुणान्वितः २२ वस्तून्यो
षधयः स्नेहा रसलोहमृदो जलं ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम २३ नामधेयानि मं
त्राश्च दक्षिणाश्च व्रतानि च देवतानुक्रमः कल्पः संकल्पस्तंत्रमेव च २४ गतयो मतयश्चैव ।
प्रायश्चित्तं समर्पणं पुरुषावयवैरेते संभाराः संभृता मया २५ इति संभृतसंभारः पुरुषाव
यवैरहं तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम् २६ ततस्ते भ्रातर इमे प्रजानां पतयो नव ।
अयजन्व्यक्तमव्यक्तं पुरुषं सुसमाहिताः २७ ततश्च मनवः काले ईजिरे ऋषयोऽपरे पित
रो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम् २८ ॥

२१ कर्मपद्धतिग्रंथः अनेनाहं यक्ष्ये इति संकल्पः तंत्रम
नुष्ठानप्रकारः २४ गतयो विष्णुक्रमाद्याः मतयो देवताध्यानानि कृतस्य भगवति समर्पणं २५ संभृताः संपादिताः सं
भारा येन सोऽहं तेनैव यज्ञेनैव अनेन यज्ञेन यज्ञमयजंतेति मंत्रार्थः सूचितः २६ तेन देवा अयजंतेत्यस्यार्थं सप्रपंचं दर्श
यति ततः इति द्वाभ्यां व्यक्तमिंद्रादिरूपेण अव्यक्तं स्वतः अनेन पुरुषं जातमग्रत इत्यस्यार्थो दर्शितः २७ काले स्वस्वावसरे

यदधिष्ठानमित्येतत्प्रश्नोत्तरार्थमुपसंहरति· नारायणइति आहितंअधिष्ठितंभगवत्वेहेतुः यःस्वतोऽगुणःसर्गादौ
गृहीतमाययाउरुत्वोगुणायेनतस्मिन् २९ यत्परंत्वमित्येतत्प्रश्नस्योत्तरंयदुक्तंसएषभगवान्· सर्वेषांममचेश्वरइ
तितदुपसंहरति· सृजामीति· पालनंतुस्वयमेवकरोतीत्याह· विश्वमिति· पुरुषरूपेणविष्णुरूपेणत्रिशक्तिर्मायातांध
रतीतिनयासः ३० यच्चेदंविश्वंयदात्मकंयत्परमित्येवमादिसर्वप्रश्नानांसामान्योत्तरंयदुक्तं· वासुदेवात्परोब्रह्मन्नचा
न्योर्थोस्तितत्त्वतः इतिपुरुषएवेदंसर्वमितिश्रुत्याचयद्दृढीकृतं· तदुपसंहरति· इतीति कार्यकारणात्मकंभाव्यंसज्ज्यंभ

नारायणेभगवतितदिदंविश्वमाहितं गृहीतमायोरुगुणःसर्गादावगुणःस्वतः २९ सृजामि
तन्नियुक्तोऽहंहरोहरतितद्वशः विश्वंपुरुषरूपेणपरिपातित्रिशक्तिधृक् ३० इतितेऽभिहि
तंतातयथेदमनुपृच्छसि नान्यद्भगवतःकिंचिद्भाव्यंसदसदात्मकं ३१ नभारतीमेऽगमृषोप
लक्ष्यतेनवैक्वचिन्मेमनसोमृषागतिः नमेहृषीकाणिपतंत्यसत्पथेयन्मेहृदौत्कंठ्यवताधृतो
हरिः ३२ सोऽहंसमाम्नायमयस्तपोमयः प्रजापतीनामभिवंदितःपतिः आस्थाययोगंनिपु
णंसमाहितस्तंनाध्यगच्छंयतआत्मसंभवः ३३ ॥ भगवतःसकाशादन्यत्पृथक्नभवतीत्यभिहितं ३१

यदुक्तमेनावत्संयतोहिमेतमविज्ञायमामीश्वरंयतः ब्रवीषिइतितदुपपाद्योपसंहरति· नभारतीतिपतत्यसात्मेयाश्री
त्कंठ्यंभक्त्युद्रेकस्तद्युक्तेनहृदाहरिर्धृतः ध्यातः अंगहेनारदअतःमेवाङ्मनइंद्रियाणांवृत्तयःसत्यार्थाः नतुमत्प्रभावेने
त्यर्थः ३२ अत्रस्वानुभवमेवाऽन्वयव्यतिरेकाभ्यांप्रमाणयतिद्वाभ्यां· सोऽहंसमाम्नायादिभिःसर्वोत्कृष्टोपियोगमा
श्रित्यापियतआत्मनाममसंभवोजन्मतमेवनज्ञातवान्कुतोऽन्यस्यवार्त्ताएतच्चतृतीयस्कंधेपद्मोद्भवेवक्ष्यते ३३

भा॰ द्वि॰
२१

तदासमीयुषांशरणागतानांसंसारनिवर्तकं मंगलावहंसुसेव्यंचतस्यचरणंनतोऽस्मिनतोऽचिंत्यमहिमत्वेनज्ञानवा-
नस्मीतिकिंमुन्यन्यायेनाह यो हीति स्वमायाविस्तारंयः स्वयमपिपर्यगात् परिशब्दोनिषेधे एतावानितिनज्ञात-
वानित्यर्थः अपरेकुतोजानीयुः तस्यचरणंनतोऽस्मीतिपूर्वेणसंबंधः ननुसर्वज्ञःकथंनजानाति अंताभावादि-
तिदृष्टांतेनाह यथास्वस्यांतंनभोनाप्नोतितिद्वत्नहिस्वपुष्प्यादर्शनंसार्वज्ञ्यंविहंतीतिभावः तथाचवक्ष्यति द्युप-
तयएवतेनययुरंतमनंततयात्वमपियदंतरांडनिचयाननुसावरणाइत्यादि श्रुतिश्च योऽस्याध्यक्षः परमेव्यो

नतोऽस्म्यहंतच्चरणंसमीयुषांभवच्छिदंस्वस्त्ययनंसुमंगलं योह्यात्ममायाविभवंस्मपर्य-
गाद्यथानभःस्वांतमथापरेकुतः ३४ नाहंनयूयंयदृतांगतिंविदुर्नवामदेवः किमुतापरेसु-
राः तन्माययामोहितबुद्धयस्त्विदंविनिर्मितंचात्मसमंविचक्ष्महे ३५ यस्यावतारकर्माणि
गायंतिह्यस्मदादयः नयंविदंतितत्त्वेनतस्मैभगवतेनमः ३६ सएषआद्यःपुरुषःकल्पे
कल्पेसृजत्यजः आत्मात्मन्यात्मनात्मानंसंयच्छतिचपातिच ३७ ॥ऽऽमन॰ सोऽअंगवेदयदिवान

वेदेति ३४ एतत्प्रपंचयतिनाहमितिद्वाभ्यां वामदेवोरुद्रः यस्यऋतांगतिंपरमार्थस्वरूपंकिंत्विदंप्रपंचरूपंतस्यमा-
यावि निर्मितंविचक्ष्महेविद्मः तदप्यात्मसमंस्वज्ञानानुरूपमेवनतुतत्त्वतःमोहितबुद्धयइत्ययंतदज्ञानेप्रपंचाज्ञानेच
हेतुः ३५ ननुसर्वेपितंवर्णयंतोदृश्यंतेतत्राहयस्येति ३६ अवतारकर्माणिसंक्षेपतोदर्शयतिसएवआद्योभगवान्
यः पुरुषावतारः सनसृष्ट्यादिकरोति आत्मात्मन्यात्मनात्मानमिति कर्ता अधिकरणं साधनंकर्मचस्वयमेवेत्यर्थः
॥ पुरुषावतारतः सृष्ट्यादीनिचकर्माणीतिसंक्षेपोक्तिः ३७ ॥

अ॰ ६

राम २१

नयंविदंतितत्वेनेत्युक्तं किंतत्तत्वमित्यपेक्षायामाह· ज्ञानंकेवलंसत्वंतत्वं घटाद्याकारइतिज्ञानव्यवच्छेदार्थंविशे
षणानि· विशुद्धंविषयाकारशून्यंयतः प्रत्यक्सर्वांतरं· अतएव तम्यक्संदेहादिरहितं· अवस्थितंस्थिरंयतोनिर्गु
णं· गुणकार्यंहिगुणव्यतिकराचंचलंभवतियद्यपिइतिज्ञानमपिस्वरूपेज्ञानमेवेतिनचांचल्यादिदोषयुक्तं· तथा
पितः कारणवृत्तिदोषैस्तयानथाभवतीतिव्यवच्छिद्यते· एभिरेवविशेषणैः सत्यत्वमपिसमर्थितं किंच यद्विका
रवत्तत्तदसत्यंदृष्टंनचास्यजन्मादयः षड्विकाराः संतीत्याह· अनाद्यंतंजन्मनाशरहितंअतएवजन्मानंतराऽस्तित्व
लक्षणोपिविकारोनास्ति· वृद्धिविपरिणामापक्षयाश्चनसंतीति· यतः पूर्णंसर्वत्रहेतुः नित्यमद्वयं· नित्यंसर्वदाद्वैत

विशुद्धंकेवलंज्ञानंप्रत्यक्सम्यगवस्थितं सत्यंपूर्णमनाद्यंतंनिर्गुणंनित्यमद्वयम् ४० ॥

ऋषेविदंतिमुनयः प्रशांतात्मेंद्रियाशयाः यदातदेवासत्तर्कैस्तिरोधीयेतविप्लुतम् ४१ आद्यो

ऽवतारः पुरुषः परस्यकालः स्वभावः सदसन्मनश्च ॥ ऽऽप्रतीतिसमयेऽपिदर्शोर्यतोऽद्वयमिति ४० अ

त्रविद्वदनुभवंप्रमाणयति· हेऋषेनारद· प्रशांतात्मेंद्रियाशयाः प्रसन्नदेहेंद्रियमनसोयदाभवंतितदाविदंति

अन्यदातदज्ञानेकारणमाह· यदातुदेवप्रकाशमानमेव· असत्तर्कैः विप्लुतंस्यात्तदातिरोधीयेतेति ४१

अवतारान्विस्तरेणाह· आद्यइत्यादियावत्समाप्ति· परस्यभूम्नः पुरुषः प्रकृतिप्रवर्तकः यस्यसहस्रशीर्षे

त्युक्तोलीलाविग्रहः· सआद्योऽवतारः वक्ष्यतिहि· भूतैर्यदापंचभिरात्मसृष्टैः पुरंविराजंविरचय्यतस्मिन्· स्वां

शेनविष्टः पुरुषाभिधानमवापनारायणआदिदेवः यथोक्तं· विष्णोस्तुत्रीणिरूपाणिपुरुषाख्यान्यथोविदुः प्रथमं

महतःस्रष्टृद्वितीयंत्वंडसंस्थितं· तृतीयंसर्वभूतस्थंतानिज्ञात्वाविमुच्यतइतियद्यपिसर्वेषामविशेषेणावतारत्व

भा॰टी॰ ११ कालः स्वभावश्च सदसदिति कार्यकारणात्मिका प्रकृतिश्च · एताः शक्तयः मनआदीनि कार्याणि · ब्रह्मादयो गुणा अ॰ १६
२२ वताराः दक्षादयो विभूतय इति विवेक्तव्यं मनश्च महत्तत्वं · द्रव्यं महाभूतानि · क्रमोऽत्र न विवक्षितः विकारोऽहंका
रः ॥ गुणः सत्वादिः विराट् समष्टिशरीरं स्वराट् वैराजः स्थास्नुः स्थावरं चरिष्णुः जंगमं च व्यष्टिशरीरं ४० अ
हं ब्रह्मा भवो रुद्रः यज्ञो विष्णुः दक्षादयो ये इमे प्रजेशाः तल लोकपालाः पातालाधिपतयः ४१ गंधर्वादीनामीः
शाः पक्ष्यादीनां नाथाः रक्षोरगेति संधिरार्षः ऋषीणां चापि पितॄणां च श्रेष्ठाः प्रेतादीनामधीशाः ४२ किंबहुना

द्रव्यं विकारो गुण इंद्रियाणि विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः ४० अहं भवो यज्ञ इमे प्र
जेशा दक्षादयो ये भवदादयश्च स्वर्लोकपालाः खगलोकपाला नृलोकपालास्तललोकपा
लाः ४१ गंधर्वविद्याधरचारणेशा ये यक्षरक्षोरगनागनाथाः ये वा ऋषीणामृषभाः पि
तॄणां दैत्येंद्रसिद्धेश्वरदानवेंद्राः अन्ये च ये प्रेतपिशाचभूतकूष्मांडयादोमृगपक्ष्यधी-
शाः ४२ यत्किंच लोके भगवन्महस्वदोजःसहस्वद्बलवत्क्षमावत् श्रीह्रीविभूत्यात्म
वदद्भुतार्णं तत्त्वं परं रूपवदस्वरूपं ४३ प्राधान्यतो यानृष आमनंति लीलावतारान्पु

यत्किंचिद्भगवत्वादि तत्सर्वं परमेव तत्त्वमित्यन्वयः भगवदैश्वर्ययुक्तं महस्वत्तेजोयुक्तं ओजः इंद्रियभूम्नः
सहसा इंद्रियमनःशक्तिस्तद्युक्तं · बलं दाक्ष्यं श्रीः शोभा ह्रीः अकर्मजुगुप्सा · विभूतिः संपत्तिः आत्मा बुद्धिः तद्युक्तं अ स्कं
र्णो वर्णः अद्भुतार्णं आश्चर्यवर्णमित्यर्थः रूपमेव स्वरूपं स्वरूपवत् अस्वरूपं च यत् तत्सर्वं परं तत्त्वं तद्विभूतिरि २२
त्यर्थः ४३ शुद्धसत्वावतारानन्वक्तुमाह · प्राधान्यत इति · अस्तत्कथाश्रवणे ये कर्णयोः कषायाः मलाः तान्शोध

यंतीतितयातानसुपेशानसुंदरानसकारलोपश्चार्षः हेअरुषेतेतुभ्यंअनुक्रमिष्ये· तदनुक्रमणामृतंत्वयापीयतामि
त्यर्थः यद्वापीयतामितिशत्रंतं· आपिवतांकर्णकषायशोषानित्यर्थः ४४ ॥ ॥इतिद्वितीयस्कंधेटीकायांषष्ठोऽ
ध्यायः ६ ॥ ॥सप्तमेभगवल्लीलाऽवताराब्रह्मणोदिताः नारदायतुतत्कर्मप्रयोजनगुणैःसह १ यत्रयदाक्षि
तितलोद्धरणार्थंवाराहींतनुंविभ्रत· सन्नुद्यतोऽनंतस्तदातंसुप्रसिद्धं हिरण्याक्षंदंष्ट्रयाददारदंष्ट्रयाक्षितितलो
द्धरणायोद्यतइत्यन्वयः अन्यथाकरेणकर्णमूलेहन्निनिवक्ष्यमाणोक्तिविरोधः यद्वातत्रैवंव्याख्येयंकरेणेति

अपीयतांकर्णकषायशोषाननुक्रमिष्यंतइमान्सुपेशान् ४४ ॥ ॥इतिश्रीभागवतेमहा
पुराणेद्वितीयस्कंधेषष्ठोऽध्यायः ६ ॥ ॥ब्रह्मोवाच यत्रोद्यतः क्षितितलोद्धरणायविभ्र
त्क्रौडींतनुंसकलयज्ञमयीमनंतः अंतर्महार्णवउपागतमादिदैत्यंतंदंष्ट्रयाऽद्रिमिववज्रध
रोददार १ जातोरुचेरजनयत्सुयमान्सुयज्ञआकूतिसूनुरमरानथदक्षिणायां लोकत्रय
स्यमहतीमहरद्यदार्तिंस्वायंभुवेनमनुनाहरिरित्यनूक्तः २ जज्ञेचकर्दमगृहेद्विजदेवहू
त्यांस्त्रीभिःसमंनवभिरात्मगतिंस्वमात्रे ॥ ऽकरवत· साधनवदग्रेणवर्त्तमानयादंष्ट्रयाहन्निति १
यज्ञावतारमाह रुचेः प्रजापतेः सकाशात· तद्भार्यायाआकूतेः सूनुः सुतःसुयज्ञोनामजातः· सचस्वभार्या
यांदक्षिणायांसुयमान्देवान· अजनयत· सएवेंद्रःसन यदाआर्तिमहरत· तदापूर्वंसुयज्ञइत्युक्तोपिस्व
नुपश्चान्मनुनामातामहेनहरिरित्युक्तः अनेनदेवोत्पादनंलोकत्रयार्तिहरणंचतस्यकर्मदर्शितं एवंसर्व
॥ त्रावतारस्तत्कर्मचज्ञेयं २ कपिलावतारमाह कर्दमस्यप्रजापतेः॥

मा॰ टि॰ गृहे च कर्दमभार्यायां देवहूत्यां जज्ञे नवभिः स्त्रीभिर्भगिनीभिः सह स च स्वमात्रे आत्मगतिं ब्रह्मविद्यां उक्तवान् ययात्म अ
गत्या सा आत्मनः शमलं मलिनीकरणं गुणसंगरूपं पंकं अस्मिन्नेव जन्मनि विधूय कपिलस्य गतिं मुक्तिं प्राप्नवती ३
दत्तात्रेयावतारमाह मयाऽहमेव तुभ्यं दत्त इति यद्यतस्तत आह ततः स नाम्ना दत्तो जातः स भक्तेभ्यो योगैश्वर्यदानं तत्
चरितं दर्शयति यस्य पादपंकजयोः परागः तेन पवित्रा देहा येषां ते उभयीं ऐहिकीं आमुष्मिकीं च भुक्तिं मुक्ति
रूपां वा ४ कुमारावतारमाह मे मया आदौ यत्तपस्तप्तं तस्मात्स्वतपसः मत्तपसो हेतोः सह ऋषिः चतुः सनोऽभू

ऊचे ययात्मशमलं गुणसंगपंकमस्मिन्विधूय कपिलस्य गतिं प्रपेदे ३ अत्रेरपत्यमभि
कांक्षत आह तुष्टो दत्तो मयाऽहमिति यद्भगवान्स दत्तः यत्पादपंकजपरागपवित्रदेहा
योगर्द्धिमापुरुभयीं यदुहैहयाद्याः ४ तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात्स्वतपसः
स चतुःसनोऽभूत प्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग्जगाद मुनयो यदचक्षतात्
मन् ५ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर इति स्वतपःप्रभावः ॥ ६ ॥

त॰ सनत्कुमारः सनकः सनंदनः सनातन इति चत्वारः सनशब्दा नाम्नि यस्य सः कथंभूतात्स्वतपसः सनात् अ
खंडितात् यद्वा स्वतपसः सनात् दानात् समर्पणादित्यर्थः षणु दाने स च पूर्वकल्पस्य संप्लवे प्रलये विनष्टं उ[illegible]
च्छिन्नसंप्रदायं आत्मतत्त्वं इह अस्मिन्कल्पे सम्यग्जगाद उक्तवान् सम्यक्त्वं दर्शयति यद्वदिति मात्रमेव मुन
यः आत्मनः आत्मनि मनसि अचक्षत साक्षादपश्यन् ५ नरनारायणावतारमाह धर्मस्य पत्न्यां दक्षदुहि
॥ नरमूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेन जातः ॥

कथंभूतः सः असाधारणस्तपःप्रभावो यस्य। तदेवाह। अनंगस्य पृतना देव्यः अप्सरसः भगवतः सकाशादात्मनः स्वप्रति रूपा उर्वश्याद्याः स्त्रीर्दृष्ट्वा तस्य नियमावलोपं व्रतभंगं घटितुं साधयितुं न शेकुः यद्वा आत्मनः स्वस्य यो नियमः तपो नारायनरूपः तस्यावलोपं तत्र दृष्ट्वा भगवतस्तं घटितुं न शेकुरिति। एतच्चाख्यानमेकादशे भविष्यति ६ यत्र कामविजयी क्रोधो ऽपि बिभेति तत्र कामो न प्रभवतीति किं वक्तव्यमित्याह कामभिति कृतिनः श्रीरुद्रप्रमुखाः रोषयुक्तया दृष्ट्या कामं दहंति रोषं त्वात्मानं दहं। तमपि ते न दहंति। क्रोधेनाभिभूयंत इत्यर्थः तु असह्यं सो ऽपि रोषो यदंतरं यन्मध्यं प्रविशन्नलं बिभे

दृष्ट्वात्मनो भगवतो नियमावलोपं देव्यस्त्वनंगपृतना घटितुं न शेकुः ६ कामं दहंति कृतिनो ननु रोषदृष्ट्या रोषं दहंतमुत ते न दहंत्यसह्यं सो ऽयं यदंतरमलं प्रविशन्बिभेति कामः कथं नु पुनरस्य मनः श्रयेत ७ विद्धः सपत्न्युदितपत्रिभिरंति राज्ञो बालो ऽपि सन्नुपगतस्तपसे वनानि तस्मा अदाद्ध्रुवगतिं गृणते प्रसन्नो दिव्याः स्तुवंति मुनयो यदुपर्यधस्तात् ८ यद्वेनमुत्पथगतं द्विजवाक्यवज्रविप्लुष्टपौरुषभगं निरये पतंतं

ति परस्मात् तन्मनः कथंभूतं अमलं निर्मलं प्रविशन्निति ७ चरित्रेणैव कमपवतारं सूचयति मातुः स्वमातुः सपत्न्याः सुरुच्या उदितानि उक्तानि वाक्यान्येव पत्रिणो बाणास्तैर्विद्धो ध्रुवः राज्ञः उत्तानपदोंति समीपे तपसे तपस्तप्तुं ध्रुवगतिं ध्रुवपदं यत् यामुपरि स्थिताः अधस्तात्स्थिताः दिवि भवा दिव्याः सप्तर्षयः स्तुवंति यद्वा उपरि स्थिता भृग्वादयः अधस्तात् सप्तर्षय इति ८ पृथ्ववतारमाह यद्यदा ऋषिभिरर्थितः प्रार्थितः तदा वेनं शीनात् अन्वर्थेन पुत्र इति पदं नाम स लेभे पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयं भुवेति हि पुत्रपदव्युत्पत्तिः कथंभूतं द्विजानां शापवाक्यमेव वज्रं तेन विप्लुष्टं दग्धं पौरुषं भगमैश्वर्यं च यस्य तं ॥

भा॰ द्वि॰ चरितांतरमाह येनचजगतिजगदर्थंवसूनिअन्नादिद्रव्याणिदुग्धा ९ ऋषभावतारमाह॰ असौहरिर्नाभेरग्नीध्रपुत्रात्सुम्र॰
२४ देव्याः सूनुरासनाभेर्भार्यायामेरुदेव्याः एवंसुदेवीत्यपिसंज्ञाजडवत्योगेननितरांसमाधिनाचर्यायदितियांतत्रहेतुः स
मदृक्तत्रापिहेतुः स्वस्थः स्वस्वरूपेस्थितः यतः प्रशांतेंद्रियः तत्कुतः यतः परितोमुक्तसंगः १० हयग्रीवावतारमाह॰
सत्रइति॰ अथोइत्यर्थांतरेसएवसाक्षाद्भगवान्ममब्रह्मणः सत्रेयज्ञेहयशीर्षोआस तपनीयंसुवर्णंतद्वद्वर्णोयस्य॰
छंदोमयोवेदमयः तद्विधेयायेमखाः तन्मयः अमृतमयइतिवापाठः सर्वैर्यजनीयः अखिलादेवतायस्यआत्माच॰

त्रात्वाऽर्थितोजगतिपुत्रपदंचलेभेदुग्धावसूनिवसुधासकलानियेन ९ नाभेरसावृषभ
आससुदेविसूनुर्योवैचचारसमदृग्जडयोगचर्यां यत्पारमहंस्यमृषयः पदमामनंतिस्व॰
स्थः प्रशांतकरणः परिमुक्तसंगः १० सत्रेममासभगवान्हयशीरषाऽथोसाक्षात्सयज्ञपुरु
षस्तपनीयवर्णः छंदोमयोमखमयोऽखिलदेवतात्मावाचोबभूवुरुशतीः श्वसतोऽस्य
नस्तः ११ मत्स्योयुगांतसमयेमनुनोपलब्धः क्षोणीमयोनिखिलजीवनिकायकेतः वि
स्रंसितानुरुभयेसलिलेमुखान्मेआदायतत्रविजहारहवेदमार्गान् १२ ॥ ९ ॥

अस्यश्वसतः श्वासंमुंचतः नस्तः नासापुटात् उशतीः उशत्यः कमनीयावेदलक्षणावाचोबभूवुः ११ म
त्स्यावतारमाह मत्स्योभाविनावैवस्वतेनमनुनादृष्टः क्षोणीमयः पृथ्वीप्रधानः तदाश्रयइत्यर्थः अतएवनि
खिलजीवनिकायानामाश्रयः मेमुखात् विस्रंसितान्गलितान्वेदरूपमार्गान्वेदानादायतत्रयुगांतसलिलेवि
जहारहहर्षेण १२ ॥

कूर्मावतारमाह॥ क्षीरोदधौ कच्छपवपुः सन् गोत्रं मंथनार्थं मंदरगिरिं पृष्ठेन विधृतवान् कदा अमृतलब्धये क्षीराब्धिमुन्मथ्नतां सतां निद्रायाः क्षणः अवसरः उत्सवो वा यस्य सः निद्रावसरः कुतस्तमाह अद्रेः परिवर्तः परिभ्रमः स एव कषाणः कषणं घर्षणं सुखप्रदो यस्यां सा कंडूर्यस्य सः यद्वा अद्रिपरिवर्त एव कषः कषणं तेन आ णिति ईषदपयाति कषाणा कंडूर्यस्य सः १३ श्रीनृसिंहावतारमाह त्रैविष्टपा देवाः तेषामुरु भयं हंतीति तथा स भगवान् अथवा

क्षीरोदधावमरदानवयूथपानामुन्मथ्नताममृतलब्धय आदिदेवः पृष्ठेन कच्छपवपुर्विदधार गोत्रं निद्राक्षणोऽद्रिपरिवर्तकषाणकंडूः १३ त्रैविष्टपोरुभयहा स नृसिंहरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रं दैत्येंद्रमाशु गदयाभिपतंतमारादूरौ निपात्य विददार नखैः स्फुरंतं १४ अंतः सरस्युरुबलेन पदे गृहीतो ग्राहेण यूथपतिरंबुजहस्त आर्तः आहेदमादिपुरुषाखिललोकनाथ तीर्थश्रवः श्रवणमंगलनामधेय १५ श्रुत्वा हरिस्तमरणार्थिनमप्रमेयश्चक्रायुधः पतगराजभुजाधिरूढः चक्रेण नक्रवदनं विनिपाट्य तस्माद्धस्ते प्रगृह्य भगवान्कृपयोज्जहार १६

त्रैविष्टपा दैत्याः हिरण्यकशिपो राज्यकाले तेषामुरुभजनको हासो यस्मिन् तस्मै विष्टपो उरुभयं हा सं ननं नृसिंहरूपं कृत्वा कथंभूतं भ्रमंत्यौ भ्रुकुट्यौ दंष्ट्राश्च यस्मिन् तत्करालं वक्त्रं यस्मिंस्तद्दैत्येंद्रं स्फुरंतं आरात्समीप एव गदया उपलक्षितं अभिपतंतं नखैर्विददार १४ हरिसत्त्वकावतारमाह अंतरिति युगलेन उरुबलेन ग्राहेण गजयूथस्य पतिः तीर्थरूपं श्रवो यशो यस्य सः तीर्थश्रवाः हे तीर्थश्रव श्रवणेनैव मंगलं नामधेयं यस्य सः १५ तद्वचनं श्रुत्वा शरणार्थिनं तं हस्ते शुंडायां प्रगृह्य किं कृतवान् नक्रस्य ग्राहस्य वदनं विनिपाट्य विदार्य तस्माद्दुदनात् १६ ॥ ९ ॥

१७॥ वामनावतारमाह अदितेः सुतानां द्वादशादित्यानां मध्ये अधियज्ञः यज्ञानां अधिष्ठाना विष्णुः अवरजः कनीयानपि गुणैर्ज्यायान्ज्येष्ठः गुणानेवाह यद्यतद् इमां लोकान् विचक्रमे पदन्यासैः क्रांतवान् अथ प्रतिश्रुतानंतरमेव तत्र हेतुः बलेः क्ष्मां वामनरूपेण जगृहे ननु ईश्वरः स्वयं किमिति तयाचक्रे तत्राह याञ्चां विना धर्ममार्गे वर्त्तमानो न चाल्यः ऐश्वर्यान्न भ्रंशनीय इति १७ ननु तर्हि याञ्चयापि चालनमनुचितमेवेत्याशंक्य ततोधिकं स्वस्य लोकादिदास्यामीत्याशयेन हृतवानित्याह नार्थ इति यद्विबुधाधिपत्यं इदानीं बलात्प्राप्तं अग्रे दीयमानं च अयं बलेः पुरुषार्थो न भ

ज्यायान्गुणैरवरजोप्यदितेः सुतानां लोकान्विचक्रम इमान्यदथाधियज्ञः क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याञ्चामृते पथि चरन्प्रभुभिर्न चाल्यः १७ नार्थो बलेरयमुरुक्रमपादशौचमापः शिखां धृतवतो विबुधाधिपत्यं यो वै प्रतिश्रुतमृते न चिकीर्षदन्यदात्मानमंग शिरसा हरयेभिमेने १८ तुभ्यं च नारद भृशं भगवान्विवृद्धभावेन साधु परितुष्ट उवाच योगम् ज्ञानं च भागवतमात्मसतत्त्वदीपं यद्वासुदेवशरणा विदुरंजसैव १९

एवंतिकुत इत्यत आह आप इति छेदः उरुक्रमस्य पादशौचं चरणक्षालनरूपा आपः आ सर्वतो धृतवतः क्व शिखां शिखायां मूर्ध्नीत्यर्थः किंच गुरुणे वारितः सन्नपि अंग हे नारद यः प्रतिश्रुतं विना अन्यत् न चिकीर्षत् कर्तुं नैच्छत् यस्तु तृतीयपादपूरणार्थं हरये आत्मानं देहमपि शिरसा अभिमेने अंगीकृतवान् एवं सदेहं त्रैलोक्यं दद्याद् दत्तवतो विबुधाधिपत्यमर्थो न भवतीत्यर्थः १८ हंसावतारमाह तुभ्यमिति भृशं विवृद्धेन भावेन अत्युद्रिक्तया भक्त्या परितुष्टः सन् भक्तियोगं साधु यथा तथा उवाच ज्ञानं चेति ज्ञानसाधनं किं तत् भागवतं नाम कथंभूतं तत्त्वमेव सतत्त्वं आत्मतत्त्वदीपकं विवृद्धभा

ततःमन्वंतरावतीर्णावतारमाह चक्रमिति स्वतेजः निजंप्रभावमेवचक्रंसुदर्शनंविभर्त्ति चक्रवदप्र-
तिहतंप्रभावंविभर्त्तीत्यर्थः तदेवाह मनुवंशपालकः सन्त्रयाणांलोकानांपृष्ठेउपरिस्थितेसत्यलोकेपिकमनीयांस्व
कीर्त्तिविस्तारयन् राजसुदंडंविधत्ते २० धन्वंतर्यवतारमाह लोकेअवतीर्यधन्वंतरिः सन् पुरुरुजांमहारोगिणांस्वना
मैवरुजः रोगान्हंतिस्वयमेवकीर्त्तिरितिकीर्त्यतिशयोक्तिः अमृतंमरणशून्यमायुर्यस्मात्सः अवअवसन्नंपूर्वंदै-
त्यैः प्रतिरुद्धंयज्ञेभागंचअवरुंधेलभतेस्म अवापरुद्धमितिपाठेप्ययमेवार्थः आयुर्विषयंवेदंवैद्यशास्त्रंचानुशास्ति

चक्रंचदिक्ष्वविहतंदशसुस्वतेजोमन्वंतरेषुमनुवंशधरोविभर्त्ति दुष्टेषुराजसुदमंव्यदधात्स्व
कीर्त्तिंसत्येत्रिपृष्ठउशतींप्रथयंश्चरित्रैः २० धन्वंतरिश्चभगवान्स्वयमेवकीर्त्तिर्नाम्नानृणांपु
रुरुजांरुजआशुहंति यज्ञेचभागममृतायुरवावरुंधआयुष्यवेदमनुशास्त्यवतीर्यलोके २१
क्षत्रंक्षयायविधिनोपभृतंमहात्माब्रह्मध्रुगुज्झितपथंनरकार्त्तिलिप्सु उद्धंत्यसाववनिकंट
कमुग्रवीर्यस्त्रिःसप्तकृत्वउरुधारपरश्वधेन २२ अस्मत्प्रसादसुमुखःकलयाकलेशइक्ष्वाकु
वंशअवतीर्यगुरोर्निदेशे ॥ प्रवर्त्तयति

२१ परशुरामावतारमाह जगतः क्षयायविधिनादैवेनउपभृ
तंसंवर्धितंमृत्यवेसमर्पितमितिवाब्राह्मणेभ्योद्रुह्यतीतितथा अनउज्झितः पंथावेदमार्गोयेनअतएवनरका
र्त्तिलिप्सतीवएवंभूतमवनेः कंटकतुल्यंक्षत्रमसौमहात्माहरिः उद्धंतिउत्पाटयतिदीर्घतीक्ष्णधारेणपरशुना
२२ श्रीरामावतारमाह त्रिभिः अस्मदिति अस्माकंब्रह्मादीनांप्रसादेसुमुखः कलयाभरतादिरूपयासहक
लामायानस्याइशः गुरोर्दशरथस्याज्ञायांतिष्ठन्सीतालक्ष्मणाभ्यांसहितोवनमाविवेशयस्मिन् ॥ ९ ॥

भोद्विरोधंकृत्वारावणोनाशंप्राप्तः २३ यस्मैरामायउदधिर्मार्गंददौ कथंभूतउदधिः सपदिशीघ्रं हरोयथात्रिपुरंदिअ
धक्षुः तद्वदरिपुरंलंकांदग्धुमिच्छोः षष्ठीचतुर्थ्यर्थे यद्वा पंचमीयं दिधक्षोः रामाद्भयंप्राप्तंतेनअंगेषुवेपःकं
पोयस्येति कथंभूतउदधिः ऊढंप्राप्तंभयंयेनतेनकंपोयस्यअत्रहेतुः दूरेवर्त्तमानासुहृत्सीतातयानिमित्तभूत
यामथितः क्षुभितोरोषः तेनसुशोणाअत्यरुणाद्दृष्टिस्तया त्वंतंतप्यमानमकारणमुरगाणांनक्राणांचचक्रं
यस्मिन् २४ किंच युद्धेरावणस्यवक्षःस्थलस्पर्शेनरुग्णाभग्नायेमहेंद्रवाहस्यऐरावतस्यदंतास्तैर्विडंबिताः
स्वधवलिम्नाधवलीकृताः तत्रदिक्षुपतितैः प्रकाशिनाद्भुत्यर्थः याएवंभूताःककुभोदिशः ताःककुभोदिशःजु

तिसुन्दनंसदयिता तुजस्राविवेशायस्मिन्विरूढ्यादशकंधरस्यार्त्तिमाच्छेत २३ यस्मास्मदा
दुदधिरूढभयंस्वेपोमार्गंसपद्यरिपुरंहरवद्दिधक्षोः दूरेसुहृन्मथितरोषसुशोणदृष्ट्याता
तप्यमानमकारोरगनक्रचक्रः २४ वक्षःस्थलस्पर्शरुग्णमहेंद्रवाहदंतैर्विडंबितककुब्जुषऊ
ढहासं सद्योऽसुभिःसहविनेष्यतिदारहर्त्तुर्विस्फूर्जितैर्धनुषउच्चरतोऽधिसैन्ये २५ भूमेःसु
रेतरवरूथविमर्दितायाः क्लेशव्ययायकलयासितकेशकेशः ॥ ॥षतेसेवतेपालयतीतितयातस्य

दारहर्तुः रावणस्यअहोमत्समःकोन्योस्तीतिमहागर्वेणऊढंप्राप्तंहासंअसुभिःप्राणैःसहसद्यःशीघ्रंविनेष्यति
अपनेष्यतिकैर्धनुषोविस्फूर्जितैः टंकारघोषैरेवकथंभूतस्यअधिसैन्येस्वपरसैन्यमध्येउच्चरतः उत्कर्षेणविच
रतः ककुब्जयरूढहासमितिपाठे दंतैरुज्वलितानांककुभांयोजयः तेनरूढोहासः संजातोगर्वः तमपनेष्यतीत्य
र्थः २५ श्रीकृष्णावतारमाह भूमेरितिदशभिःसुरेतराः असुरांशसंभूताराजानस्तेषांवरूथैः सैन्यैर्वि

सं
१

एग
२६

मर्द्दितायाः भारेण पीडितायाः कलया रामेण सह जातः स न केवलो जातः सितकृष्णौ केशौ यस्य भगवतः स एव साक्षात् सितकृष्णकेशः तं केशौ भेकन तु वयः परिणामकृतं अविकारित्वात् यत्तु उक्तं विष्णुपुराणे उज्जहारात्मनः केशौ सितकृष्णौ महामुने इति यच्च भारते स चापि केशौ हरिरुच्चजर्ह शुक्लमेकमपरं चापि कृष्णं तौ चापि केशावाविशतां यदूनां कुले स्त्रियौ रोहिणीं देवकीं च तयोरेको बलभद्रो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः कृष्णो द्वितीयः केशवः संबभूव केशो यो सौ वर्णतः कृष्णस्तु भगवान्स्वयमित्येतद्विरोधात् अभि

जातः करिष्यति जनानुपलक्ष्यमार्गः कर्माणि चात्ममहिमोपनिबंधनानि २६ तोकेन जीवहरणं यदुलूकिकाया स्त्रैमासिकस्य च पदा शकटोऽपवृत्तः यद्रिंखतांऽतरगतेन दिविस्पृशोर्वा उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यं २७ यद्वै व्रजे व्रजपशून्विषतोयपीतान् पालांस्त्वजीवयदनुग्रहदृष्टिवृष्ट्या ॥ ऽप्रायं किं तु भारावतारणरूपं कार्यं किं यदेतन्न मत्केशावेवैतत्कर्तुं शक्ताविति द्योतनार्थं रामकृष्णयोर्वर्णसूचनार्थं च केशोद्धरणमिति गम्यते अन्यथा तत्रैव पूर्वापरविरोधापत्तेः कृष्णस्तु भगवान्स्वयमित्येतद्विरोधाच्च कथंभूतः परमेश्वरतया जनैरनुपलक्ष्यो मार्गो यस्य तर्हि तदीश्वरत्वे किं प्रमाणं अतिमानुषकर्म्मान्यथानुपपत्तिरेवेत्याह आत्मनो महिमा उपनिबध्यते अभिव्यज्यते येषु तानि २६ एतदेव प्रपंचयति तोकेनेत्यादिना बालेन पूतनाया जीवहरणं यत् रिंखता जानुभ्यां गच्छता अंतरागतेन मध्यं प्राप्तेन दिविस्पृशोरत्युच्चयोः इतरथा अनीश्वरत्वे तन्न भवितव्यं २७ विषतोयपीतान् विषमयं तोयं पीयं पानं येषां पालान् गोपांश्च कृपादृष्टिसुधावृष्ट्या जीवयिष्यतीति यमुनायां क्रीडनं तु उरगं कालियं ॥

भा.टि. उच्चाटयिष्यति। तच्छुद्रयेतस्याह्रदिन्याः निर्विषत्वाय अति विषवीर्येण विलोला अतिचंचला जिह्वा यस्य २८ दि अ॰
२७ व्यमलौकिकं इवेति लोकोक्तिः उन्नेष्यति उद्धरिष्यति शुचिर्ग्रीष्मः तत्संबंधिनि वने शुष्कइत्यर्थः अतो दावाग्ने १
र्हेतोः अवसितो निश्चितोंतकालो यस्य तं सबलः सरामः अनधिगम्यं दुर्ज्ञेयं वीर्यं यस्य सः तत्र निशि निःशया
नमिति कालियदमने रात्र्यां यमुनातीरे नेत्रे पिधाप्य पिहिते कारयित्वेति मुंजाटव्यामिति ज्ञेयं २९ उपबध्यतेनेने
ति उपबंधं तत्साधनं शुल्वं दाम अमुष्य माता यशोदा अग्रहीत् अमुष्य न माति बंधनसंमितं न भवति न पूर्यं

तच्छुद्रयेऽति विषवीर्यविलोलजिह्वमुच्चाटयिष्यदुरगं विहरन्ह्रदिन्यां २८ तत्कर्म्म दिव्य
मिव यन्निशि निःशयानं दावाग्निना शुचिवने परिदह्यमाने उन्नेष्यति व्रजमतोऽवसितांत
कालं नेत्रे पिधाप्य सबलोऽनधिगम्यवीर्यः २९ गृह्णीत यद्यदुपबंधममुष्य माता शुल्वं सुत
स्य न तु तत्तदमुष्य माति यज्जृंभतोऽस्य वदने भुवनानि गोपी संवीक्ष्य शंकितमनाः प्र
तिबोधितासीत् ३० नंदं च मोक्ष्यति भयाद्वरुणस्य पाशाद्गोपान्बिलेषु पिहितान्मयसूनुना
च अह्न्यापृतं निशि शयानमतिश्रमेण लोकं विकुंठमुपनेष्यति गोकुलं स्म ३१ ॥ टी॥

तदूत्यर्थः गोपी यशोदा संवीक्ष्य दृष्ट्वा प्रतिबोधिता निजैश्वर्यं ज्ञापिता आसीदिति यत् तच्च कर्म दिव्यं रामः
मिवेति सर्वत्र पूर्वेणैवान्वयः ३० वरुणस्य पाशात् यद्भयं तस्मान्मोचयिष्यति मयसूनुना व्योमनाम्ना २७
आपृतं व्यापृतं निशि शयानमिति च वैकुंठप्राप्तिसाधनानुष्ठानाभावो दर्शितः उपनेष्यति प्रापयि-
ष्यति गोकुलवासिनं जनं स्मेत्याश्चर्ये ३१॥

देवेंद्रे पशून्नरिरक्षुः रिरक्षिषुरित्यर्थः अनघे अमरहिते एकस्मिन्नेव करे सलीलं यथा तथा महीध्रं गोवर्द्धनं धर्त्ताधा
रयिष्यति उच्छिलीध्रं उद्धृतं छत्राकमिव सप्तवर्षाणि वयो यस्य सः ३२ निशिरात्रौ निशाकररश्मिभिः गौर्यां धवलायां
वने क्रीडन् कलानि मंजुलानि पदानि यस्मिन् तच्च तत् आयतं दीर्घं मूर्छितं आलापविशेषयुक्तं गीतं तेन उद्दीपितः
स्मर एव रुक् यासां गोपीनां हर्त्तुः शंखचूडस्य शिरो हरिष्यति ३३ ये च प्रलंबादयः ते सर्वे हरिणा हेतुभूतेन तदीयं नि
लयं अदर्शनं दर्शनायोग्यं वैकुंठं अलं यास्यंतीत्युत्तरेणान्वयः खरो धेनुकः दर्दुर इव दर्दुरो बकः इभः कुवलयापी

गोपैर्मखे प्रतिहते व्रजविप्लवाय देवेऽभिवर्षति पशून्कृपया रिरक्षुः धर्त्तोच्छिलीध्रमिव सप्तदि
नानि सप्तवर्षो महीध्रमनघैककरे सलीलम् ३२ क्रीडन्वने निशि निशाकररश्मिगौर्यां रासोन्मु
खः कलपदायतमूर्छितेन उद्दीपितस्मररुजां व्रजभृद्वधूनां हर्त्तुर्हरिष्यति शिरो धनदानुग
स्य ३३ ये च प्रलंबखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः कुजपौंड्रकाद्याः अन्ये च शाल्वक
पिबल्वलदंतवक्रसप्तोक्षशंबरविदूरथरुक्मिमुख्याः ३४ ये वा मृधे समितिशालिन आत्तचा
पाः कांबोजमत्स्यकुरुकैकयसृंजयाद्याः यास्यंत्यदर्शनमलं बलपार्थभीमव्याजाह्वयेन हरिणा

हः कपिर्द्विविदः कुजो नरकः ३४ ये च मृधे आत्तचापाः समितौ संग्रामे शालंते श्लाघं ॥ निलयं तदीयम् ३५
ते समितिशालिनः ननु प्रलंबखरकपिबल्वलरुक्मिप्रमुखाः बलभद्रेण निहताः कांबोजादयश्च भीमार्जुनादिभिः
शंबरः प्रद्युम्नेन यवनो मुचुकुंदेन ननु हरिणा तत्राह बलो भीमः पार्थ इत्यादयो व्याजाह्वयाः कपटनामानि यस्य तेन
न सप्तोक्षाणस्तु तेन दमिताः कालांतरेण यास्यंतीति भावः एतच्च सर्वमपि कर्म दिव्यमित्वतच्चान्यं यानभाव्यमि

भा॰ द्वि॰ व्यासावतारमाह अनुयुगंमीलितासंकुचिताधीर्येषांस्तोकमल्पमायुर्येषांते स्वनिगमः स्वकृतोवेदराशिः वतअहोदू अ॰ ७
२८ रेपारंपस्येतिदुर्गमइत्यवमृश्यसत्यवत्यामाविर्भूतः सन्सएवहरिः विटपशः शाखाभेदेन ३६ बुद्धावतारमाह देव
द्विषांनिष्ठितानांनितरांस्थितानांतद्बलेन चपूर्भिः पुरीभिः अदृश्यतूर्भिः अलक्ष्यवेगाभिः मतेर्विमोहः योग्यतान्य
गोयस्मात मतेः प्रलोभश्चअयुक्तस्वीकारोयस्मात्तंपाखंडवेषंविधायतेनऔपधर्म्यंपाषंडधर्म्मंस्वार्थेष्यञ्बहुभा
षिष्यतइत्यर्थः ३७ कल्क्यवतारमाह यर्हियदासतामप्यालयेषुगृहेषुत्रैवर्णिकाः पाखंडिनः स्युः शूद्राश्चराजानः

कालेनमीलितधियामवमृश्यनॄणांस्तोकायुषांस्वनिगमोवतदूरपारः आविर्हितस्त्वनु
युगंसहिसत्यवत्यांवेदद्रुमंविटपशोविभजिष्यतिस्म ३६ देवद्विषांनिगमवर्त्मनिनिष्ठिता
नांपूर्भिर्मयेनविहिताभिरदृश्यतूर्भिः लोकान्घ्नतांमतिविमोहमतिप्रलोभंवेषंविधायव
हुभाष्यतऔपधर्म्यं ३७ यर्ह्यालयेष्वपिसतांनहरेःकथाःस्युःपाषंडिनोद्विजजनावृष
लान्नृदेवाः स्वाहास्वधावषडितिस्मगिरोनयत्रशास्ताभविष्यतिकलेर्भगवान्युगांते ३८
सर्गेतपोऽहमृषयोनवयेप्रजेशाः स्थानेचधर्म्ममखमन्वमरावनीशाः। ई ॥ ॥

स्युः तदाकल्किरूपेणकलेः शास्ताभविष्यति अत्रचब्रह्मनारदसंवादात्प्राग्भाविनोवराहादयः मंन्वंतरावतारास्तु। राम
भूताभाविनश्चधन्वंतरिपरशुरामौतदावर्त्तेतेश्रीरामादयस्तुभाविनः तत्रतुक्वचिन्भूतादिनिर्देशश्छांदसः इतिद्र
ष्टव्यं ३८ सृष्ट्यादिकार्यभेदेनमायागुणावतारविभूतीराहसर्गइतिस्थानेस्थितौमखोविष्णुः धर्मश्चमखश्चम २८
॥ नवश्चाऽमराश्चाऽवनीशाश्चतेअन्तेसंहारे हरोरुद्रः मन्युवशाःसर्पाः ॥

वहुशक्तिधारिणोभगवतइमाविभूतयः ३९ इदंमयासंक्षेपेणोक्तंविस्तरेणवक्तुंनकोपिसमर्थइत्याह पृथिव्याःप्रमा
णूनपियोविममेगणितवान्· ताहशोपिकोनुविस्नोर्वीर्यगणनांकर्त्तुमर्हति कथंभूतस्ययोविस्नुः त्रिपृष्ठंसत्यलोकं
चस्कंभधृतवान् किमितिचस्कंभयस्मात्त्रैविक्रमे अस्खलनाप्रतिघातशून्येनस्वरंहसास्वपादवेगेनत्रिसाम्यरूप
सदनमधिष्ठानंप्रधानंतस्मादारभ्यउरुअधिकंकंपयानंकंपमानंकंपेनयानंयस्येतिवा अतः कारणाच्चस्कंभ
आत्रिपृष्ठमितिवाच्छेदः सत्यलोकमभिव्याप्ययः सर्वंधृतवानित्यर्थः तथाचमंत्रः विस्नोर्नुकमिति· अस्यार्थः

अंतेत्वधर्महरमन्युवशासुराद्यामायाविभूतयइमाःपुरुशक्तिभाजः ३९ विस्नोर्नुवीर्य
गणनांकतमोर्हतीहयःपार्थिवान्यपिकविर्विममेरजांसि चस्कंभयःस्वरंहसाऽस्खलना
त्रिपृष्ठंयस्मात्त्रिसाम्यसदनादुरुकंपयानं ४० नांतंविदाम्यहममीमुनयोऽग्रजास्तेमायाव
लस्यपुरुषस्यकुतोऽपरेये गायनगुणानदशशतानन आदिदेवः शेषोऽधुनाऽपिसमवस्य
तिनास्यपारं ४१ येषांसएवभगवानदयपेदनंतः सर्वात्मनाश्रितपदोयदिनिर्व्यलीकं॥

विस्नोर्नुवीर्याणिकंप्रवोचंकःप्रावोचदित्यर्थः यः पार्थिवानिरजांस्यपिविममेसोपियोविस्नुस्त्रेधाविचक्रमाणः
त्रिविक्रमंकुर्वनउत्तरंलोकंअस्कभाय अवष्टब्धवान् कथंभूतंसधस्थंसहस्यसधादेशाः तिष्ठंतीतिस्थाः तत्रस्थि
देवैःसहवर्त्तमानमित्यर्थः ४० एतत्प्रपंचयति नांतमिति पुरुषस्ययन्मायावलंतस्यांतंनविदामि नवेद्मि
दशशतान्याननानियस्यसोपि अस्यगुणानगायन्पारंनसमवस्यतिनप्राप्नोति ४१ यदिनकेपिविदंतिनर्हि
कथमुच्येरन्नतत्रपयैवेत्याहयेषामिति दययेत् दयांकुर्यात् तेचयदिनिष्कपटं आश्रितचरणाभवंति· ॥

भा हितेदुस्तरांदेवमायांअतितरंतिचकारणमायावैभवंविदंतिच अथयेतिवापाठः प्रत्यक्षमेवतेषांमायातितरणमित्या
हनैषामितिश्वशृगालानांभक्ष्येदेहे ४२ अंतत्ज्ञानाभावेपिमायेयमितिज्ञानं तत्कृपयावहूनामस्तीह वेदाहमि
ति त्रिभिः यूयमिति सनकादीनंतर्भाव्यवहुत्वं दैत्यवर्यः प्रह्लादः मनुः स्वायंभुवः तस्यपत्नीचतदात्मजाः पुत्रौ

तेदुस्तरामतितरंतिचदेवमायांनैषांममाहमितिधीःश्वशृगालभक्ष्ये ४२ वेदाहमंगपरम
स्यहियोगमायांयूयंभवश्चभगवानथदैत्यवर्यःपत्नीमनोःसचमनुश्चतदात्मजाश्चप्राची
नवर्हिऋभुरंगउतध्रुवश्च ४३ इक्ष्वाकुरैलमुचुकुंदविदेहगाधिरघ्वंवरीषसगरागयना
हुषाद्याः मांधात्रलर्कशतधन्वनुरंतिदेवदेवव्रतोवलिरमूर्त्तरयोदिलीपः ४४ सौभर्युतं
कशिविदेवलपिप्पलादसारस्वतोद्धवपराशरभूरिषेणाः येन्येविभीषणहनूमदुपेंद्रद
त्तपार्थार्ष्टिषेणविदुरश्रुतदेववर्याः ४५ तेवैविदंत्यतितरंतिचदेवमायांस्त्रीशूद्रहूणश
वराअपिपापजीवाः यद्यद्भुतक्रमपरायणशीलशिक्षास्तिर्यग्जनाअपिकिमुश्रुतधारणा ये ४६

कन्याश्च प्राचीनवर्हिषोविसर्गलोपःछांदसः ४३ शतधनुः अनुश्चसंधिरार्षः रंतिदेवादूतिवापाठः सुग
मः एकपद्येएतैः सहितोदेवव्रतइत्यर्थः ४४ उपेंद्रदत्तः शुकः विभीषणादयोवर्यामुख्यायेषांते ४५ किंबहुनासत्सं
गेनसर्वेपिविदंतीत्याह तेवाइति अद्भुताः क्रमाः पादन्यासायस्य हरेस्तत्परायणास्तद्भक्ताः तेषांशीलेशिक्षायेषां
तेतथायदि भवंतितर्हितेपि विदंतीत्यर्थः श्रुतेभगवतोरूपेधारणामनोनियमनंयेषांतेविदंतीतिकिमुवक्तव्यं ४६॥

किंतद्भगवतःस्वरूपंयस्मिन्मनोधारणांविधायमायांतरंतीत्यपेक्षायामाह शश्वदितिद्वाभ्यां यद्ब्रह्मेतिविदुर्मुनयःत
द्वैभगवतः स्वरूपंकिंतद्ब्रह्मतदाह अजस्रंनित्यंचतत्सुखंचविशोकंचेति अजस्रसुखत्वेहेतुः शश्वत्सदाप्रशां
तं अतोनित्यसुखरूपंविशोकत्वेहेतुः अभयंकुतः यतः समंभेदशून्यंअतोऽभयंद्वितीयाद्वैभयंभवतीतिश्रुतेःतत्कु
तःयतः प्रतिबोधमात्रंज्ञानैकरसं ननुज्ञानस्यापिनीलपीताद्याकारेणचक्षुरादिकरणभेदेनचभेदोदृश्यतेविषयेंद्रि
यसंसर्गशून्यंनशुद्धंनिर्मलं ननुदर्शितोविषयकरणोपरागरूपोमलः इत्यतआह सदसतः परंविषयकरणसंसर्गशू
न्यंरत्नैरेवतदुपरागोनज्ञानस्येतिभावः ननुतथापिज्ञात्रासहभेदःस्यात् नआत्मतत्वंआत्मनोज्ञातुःस्वरूपमेवतत्

शश्वत्प्रशांतमभयंप्रतिबोधमात्रंशुद्धंसमंसदसतःपरमात्मतत्वं शब्दोनयत्रपुरुकारकवान्क्रियार्थोमायापरैत्यभिमुखेचविलज्जमाना ४७ तद्वैपदंभगवतःपरमस्यपुंसोब्रह्मेतियद्विदुरजस्रसुखंविशोकं ॥

४८ ननतत्तोभिन्नंतन्नुचतंत्वौपनिषदंपुरुषंपृच्छामीतिशब्दबोध्यत्वप्र
तीतेः कुतोबोधरूपत्वंतत्राह शब्दोनयत्रेति आरोपितनिवृत्तावेवशब्दस्यव्यापारोनतद्बोधइत्यर्थः ननुचभ
गवतुनामनिरस्तभेदज्ञानरूपत्वाद्विशोकत्वंसुखस्यतुनानाकारकसाध्यक्रियाफलत्वात्कथमजस्रसुखत्वंतस्य
तत्राह यत्रबहुकारकसाध्यः क्रियार्थः उत्पाद्यादिचतुर्विधंउत्पाद्याप्यविकार्यसंस्कार्यादिक्रियाफलंचनास्ति
इंद्रियैर्ज्ञानांशाभिव्यक्तिरिवक्रियाभिरानंदांशाभिव्यक्तिमात्रंक्रियतेनोत्पत्त्यादिकमितिभावः ननूत्पत्त्याद्यभावेपिमाया
मलापाकरणेनविकार्यत्वमेवस्यात्व्रीहीणामिवतुषापाकरणेनेत्याशंक्याह मायाभिमुखेस्यातुंविलज्जमा
नेवयस्मात्परैतिदूरतोपसरति ४७ तस्मादेवंभूतेभगवतिनियमितमनसांकृतार्थानांनकिमपिकृत्यमस्तीत्याह

मा॰ हि॰ ३०

रुहां चरतीति सध्र्यक् सहचरं मनः यं प्रतिनियम्य यस्मिन् स्थिरीकृत्य यतयो यत्नशीलाः कर्तृभेदः तन्निरासो ऽकर्तृः तत्रहे
तिं साधनं जह्युस्त्यजेयुः अनुपयोगात् तन्नाद्रियंत इत्यर्थः उपयोगाभावेन साधनानादरे दृष्टांतः निपीयते स्मिन्निति नि
पानं कूपस्तस्य खनित्रं खननसाधनं यथा स्वराट् स्वयमेव पर्जन्यरूपेण विराजमान इंद्रो नादत्ते तद्वदिति यद्वा स्वे
नैव राजत इति स्वराट् दरिद्रः सयथा इंद्रः समृद्धः सन् कर्मकाले दशायां गृहीतं निपानखनित्रं जह्याति तद्वदित्यर्थः
४८ एवं तावत् जलसुखं विशोकं ब्रह्मैव भगवतः स्वरूपं तत्प्राप्तानां चन प्राप्यं कृत्यं वा किंचिदस्तीत्युक्तं इदानींत
तः प्राक् स एव सर्वफलदाता सर्वकर्मप्रवर्तकश्चेत्याह स एव श्रेयसां फलानां विभुर्दाता ऽपि तत्र हेतुः भावानां॥

सध्र्यङ्नियम्य यतयो यमकर्तृहेतिं जह्युः स्वराडिव निपानखनित्रमिंद्रः ४८ स श्रेयसा
मपि विभुर्भगवान्यतो ऽस्य भावस्वभावविहितस्य सतः प्रसिद्धिः देहे स्वधातुविगमे ऽनुविशी
र्यमाणे व्योमेव तत्र पुरुषो न विशीर्यते ऽजः ४९ सो ऽयं ते ऽभिहितस्तात भगवान्विश्वभावनः
समासेन हरेर्नान्यदन्यस्मात्सदसच्च यत् ५० ॥ ब्राह्मणादीनां स्वभावैः शमदमादिभिर्विशेष

णैर्विहितस्य सतः शुभस्य कर्मणो यतः प्रवर्तका त्प्रसिद्धिः यद्वा भावानां महदादीनां स्वभावेन परिणामेन विहि
तास्य सतः कार्यस्य प्रसिद्धिः स एव स्वर्गादीनां दातेत्यर्थः ननु कर्मकर्तुर्मृतस्य कथं स्वर्गादिकलं स्यात् तत्राह स्वा
रंभकधातूनां भूतानां विगमे वियोगे सति अनु विशीर्यमाणे पि देहे तत्रस्थं व्योमेव यस्तेन सह न विशीर्यते
यतो ऽजस्तेन सह न जातः तस्य पुरुषस्य श्रेयसां प्रभुरित्यर्थः ४९ अध्यायत्रयस्यार्थमुपसंहरति सो ऽयं ते
समासेन संक्षेपेणाभिहितः तमेवाह सदसत्कार्यकारणं च हरेरन्यन्न भवति ननु हरेस्तदव्यतिरेके न तद्गतवि
कारप्रसंगः स्यात् न अन्यस्मात्कारणभूतो हरिः कार्याद्व्यतिरिक्त इत्यर्थः ५०॥

स्क॰ ४

अयंचविभूतीनांसंग्रहइतिः ५१ यथावर्णितेननृणांभक्तिर्भविष्यतीत्येवंसंकल्प्यसंचिंत्यनयाहरिलीला
प्राधान्येनश्रीभागवतंवर्णयननुभक्तिरसविघातेनकेवलंननवमित्यर्थः ५२ ननुलीलामायाश्रयाकिंतद्वर्णने
नेत्यतआह मायामिति ५३ ॥ ॥इतिद्वितीयेटीकायांसप्तमः ७ ॥ ॥ अष्टमेदेहसंबंधमाक्षिपन्नीश्व
इदंभागवतंनामयन्मेभगवतोदितं संग्रहोऽयंविभूतीनांत्वमेतद्विपुलीकुरु ५१ यथाह
रौभगवतिनृणांभक्तिर्भविष्यति सर्वात्मन्यखिलाधारेइतिसंकल्प्य वर्णय ५२ मायां
वर्णयतोऽमुष्यईश्वरस्यानुमोदतः शृण्वतःश्रद्धयानित्यंमाययात्मानमुह्यति ५३ ॥इ
तिश्रीभागवतेमहापुराणेद्वितीयस्कंधेब्रह्मनारदसंवादेसप्तमोध्यायः ७ ॥ श्रीराजोवा
च ब्रह्मणाचोदितोब्रह्मन्गुणाख्यानेऽगुणस्यच यस्मैयस्मैयथाप्राहनारदोदेवदर्शनः १
एतद्वेदितुमिच्छामितत्त्वंवेदविदांवर हरेरद्भुतवीर्यस्यकथालोकसुमंगलाः २ कथयस्वम
हाभागयथाऽहमखिलात्मनि कृष्णेनिवेश्यनिःसंगंमनस्त्यक्ष्येकलेवरम् ३ शृण्वतःश्रद्ध
यानित्यंगृणतश्चस्वचेष्टितं कालेननातिदीर्घेणभगवान्विशतेहृदि ४ ॥ ॥जीवयोःवहून्यपी
श्वरापृच्छत्पुराणार्थोनवभुक्तिनान १ त्वमेतद्विपुलीकुर्वित्युक्तंतदेवविपुलीकरणंपृच्छति ब्रह्मणेणेतित्रिभिः
अगुणस्यगुणातीतस्यापिदेववद्दर्शनंयस्यसः १।२ निःसंगंमनःश्रीकृष्णेनिवेश्येतिस्वप्रयत्नोदर्शितः ३ सोऽ
पिश्रद्धयाशृण्वतश्चनास्यपक इत्याह शृण्वतइति स्वप्रयत्नंविनापिभगवान्स्वयमेवहृदिविशति ४ ॥ ९९

भा॰ द्वि॰ ३३

भावसरोरुहं हृदयकमलं प्रविष्टश्च तद्गतं सर्वं मलं धुनोति॰ सलिलस्येति॰ द्रव्यांतरव्यामिश्रणादिना कुंभस्थे जले शोधिते तदेव केवलं शुध्यति न तु नदीतडागादिगतं स च मलः कुंभस्यांतस्तिष्ठति एव न तु सर्वथा विलीयते अत एव किंचिच्चलनेन पुनः क्षुभ्यति च एवं तपोदानादि प्रायश्चित्तं न सर्वथा सर्वेषां सर्वं पापं धुनोति किंतु सावशेषं तच्च कस्यचिदेव हृदि प्रविष्टमात्रस्तु श्रीकृष्णः सर्वेषां सर्वपापं निःशेषं हरतीति अनेन दृष्टांतेनोक्तं सलिलस्य मलं यथा शरदिति ५ ततश्च कृतार्थो भवतीत्याह धौतात्मेति व्यापः मुक्ताः सर्वे रागद्वेषादयः परिक्लेशा येन स पांथः

प्रविष्टः कर्णरंध्रेण स्वानां भावसरोरुहं धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ५ धौतात्मा पुरुषः कृष्णपादमूलं न मुंचति मुक्तसर्वपरिक्लेशः पांथः स्वशरणं यथा ६ यद धातुमतो ब्रह्मन्देहारंभोऽस्य धातुभिः यदृच्छया हेतुना वा भवंतो जानते यथा ७ आसी द्यदुदरात्पद्मं लोकसंस्थानलक्षणं यावानयं वै पुरुष इयत्ताऽवयवैः पृथक् तावान सावितिप्रोक्तः संस्थावयववानिव ८ ॥ प्रवासादागतः स्वशरणं गृहं यथा न मुंचति तद्वत् ६ तदेवं

श्रवणोत्सुक्यमाविष्कृत्य संदिग्धानर्थान्पृच्छति अधातुमतः धातवो भूतानि तत्संबंधशून्यस्य अस्य लौकिकस्यात्मनः धातुभिर्देहारंभ इति यत एतत्किं यदृच्छया निर्निमित्तं हेतुना वा कर्मादिना भवंतो यथावज्जानंते अतः कथयंत्विति शेषः ७ यश्चासावीश्वरः सोऽप्येतत्तुल्यदेहवानित्युक्तः अतस्तस्य को विशेष इत्याशयेन पृच्छति आसीदिति सादिनलोकानां संस्थानं रचना तदेव लक्षणं स्वरूपं यस्य तत्पद्मं यस्योदरादासीत् असावीश्वर इयत्तायुक्तैः स्वपरिमितैरवयवैरयं लौकिकः पुरुषो यावान्यत्संख्याकावयवयुक्तः तावानुक्तः संस्थावान् अवयववानिव

अवयवंचविशेषोवाच्यइत्याह अजोब्रह्माभूतानांव्यष्ट्युपाधीनामात्मानियंतासमष्ट्युपाधित्वात् येनचअनुग्र हीतातस्यारूपंददर्शेद्दश्वान् एतच्चतस्यापिद्रष्टुरीशस्यकूटस्य स्याखिलात्मनः सृजामिसृष्टोऽहमीक्ष येवाभिचोदितः इत्यादिवोक्तमनूद्यतेअग्रेतुस्पष्टंभविष्यति ९ प्रश्नांतरमाह सचापीति यत्रशेतेयेनरूपे णावतिष्ठतेविश्वस्यस्थित्यादयोयस्मात् एवमादिप्रश्नानांतत्वतोऽर्हस्युदाहर्तुमितिसर्वत्रक्रियायाःसंबंधः १० प्रश्नांतरमाह पुरुषस्यावयवैःपूर्वकल्पिताः यस्येहावयवैर्लोकान् कल्पयंतीत्यादौलोकैश्चामुष्यावय

अजःसृजतिभूतानिभूतात्मायदनुग्रहात् ददृशेयेनतद्रूपंनाभिपद्मसमुद्भवः ९ सचा पियत्रपुरुषोविश्वस्थित्युद्भवाप्ययः मुक्त्वात्ममायांमायेशःशेतेसर्वगुहाशयः १० पुरुषा ऽवयवैर्लोकाःसपालाःपूर्वकल्पिताः लोकैरमुष्यावयवाःसपालैरितिशुश्रुम ११ यावा न्कल्पोविकल्पोवायथाकालोऽनुमीयते भूतभव्यभवच्छब्दआयुर्मानंचयत्सतः १२ का लस्यानुगतिर्यातुलक्ष्यतेऽण्वीबृहत्यपि यावत्यःकर्मगतयोयादृशीर्द्विजसत्तम १३ यस्मि न्कर्मसमावायोयथायेनोपगृह्यते ॥ ऽवाइति पातालमेतस्यहिपादमूलमित्यादौचत्वन्मुखाच्छुत

वंतोवयमेवंसंदेहविपर्ययाभ्यांपृष्टं ११ इदानीमज्ञातान्बहूनर्थान्पृच्छतियावानित्यादिना कल्पोमहान्विक ल्पोऽवांतरः भूतादिशब्दोयस्मात्यस्यवाचकइतिवा सतःस्थूलदेहाभिमानिनोमनुष्यपितृदेवादेः आयुषः प्रमाणंअनुमानप्रकारःपृष्टः १२ विशेषंपृच्छतिकालस्येति अनुगतिःप्रवृत्तिकर्मगतयःकर्मप्राप्तानिस्थाना नियादृशीर्यादृश्यः १३ गुणानांसत्वादीनांपरिणामंदेवादिरूपमिच्छतांगुणिनांजीवानांमध्येयस्मिन् ॥

भा॰ टी॰ परिणामेकर्मणांपुण्यपापानांसमवायः समुदायः केनकर्मसमुदायेनकथंकृतेनकोऽधिकारिदेवादिभावंप्राप्नो अ
नीत्यर्थः १४ भूरादीनांसंभवः एतानित्रीणिकांसियेषांप्राणिनांतेषांचसंभवः पचेतिसर्वत्रानुषंगः १५ वर्णाना ८
स्क॰ माश्रमाणांचविनिश्चयः ततत्स्वभावैर्निर्धारः १६ युगेयुगेप्रतियुगंयोधर्मः यच्चहरेरवतारानुचरितं १७ सवि
शेषः वर्णाश्रमनिबंधनः श्रेणीनांतत्तद्व्यवसायोपजीविनांव्यवहारनियमलक्षणोधर्मः राजर्षीणांप्रजापाल

गुणानांगुणिनांचैवपरिणाममभीप्सतां १४ भूपातालककुब्व्योमग्रहनक्षत्रभूभृतां सरि
त्समुद्रद्वीपानांसंभवश्चैतदोकसां १५ प्रमाणमंडकोशस्यबाह्याभ्यंतरभेदतः महतांचानु
चरितंवर्णाश्रमविनिश्चयः १६ अवतारानुचरितंयदाश्चर्यतमंहरेः युगानियुगमानंचध
र्मोयश्चयुगेयुगे १७ नृणांसाधारणोधर्मः सविशेषश्चयादृशः॥ श्रेणीनांराजर्षीणांचधर्मः
कृच्छ्रेषुजीवताम १८ तत्वानांपरिसंख्यानंलक्षणं हेतुलक्षणं पुरुषाराधनविधिर्योगस्या
ध्यात्मिकस्यच १९ योगेश्वरैश्वर्यगतिलिंगभंगस्तुयोगिनां॥ वेदोपवेदधर्माणामितिहास
पुराणयोः २० संप्लवः सर्वभूतानांविक्रमः प्रतिसंक्रमः ॥ १॥ नाधिकारिणांकृच्छ्रेषुआपत्सुजीवनां
सर्वेषां १८ सर्वेषांतत्वानांप्रकृत्यादीनांपरिसंख्यानंसंख्यालक्षणंस्वरूपंहेतुतोलक्षणंतत्तत्कार्यहेतुत्वेनच एम
लक्षणमित्यर्थः पुरुषाराधनस्यविधिः देवपूजाप्रकारः अष्टांगयोगस्यचविधिः १९ योगेश्वराणामैश्वर्यंण स्क॰
णिमादिनाऽर्चिरादिगतिः लिंगशरीरस्यभंगः प्रलयः वेदाऋग्वेदादयः उपवेदाआयुर्वेदादयः धर्माः ध
र्मशास्त्राणितेषांइतिहासपुराणयोश्चगतिः स्वरूपं २० संप्लवअवांतरप्रलयः यद्वासम्यक्प्लवनंउद्भवः ॥

विक्रमः स्थितिः प्रतिसंक्रमो महाप्रलयः इष्टं वैदिकं कर्म पूर्तं स्मार्तं वापीकूपतडागादिदेवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते इति तत्र च काम्यानां अग्निहोत्रादीनां विधिः अविरोधप्रकारः २१ अनुशायिनां लीनोपाधीनां जीवानां आत्मनो जीवस्य व्यवस्थानं बंधमोक्षातिरिक्तस्वरूपेणावस्थानं २२ उदास्ते प्रलये २३ च शब्दादपृष्टमपि २४ प्रमाणं सम्यक् ज्ञाता यतस्तव ब्रह्मनारदव्यासक्रमेण संप्रदायोस्तीति सामान्यन्यायेनाह

इष्टापूर्तस्य काम्यानां त्रिवर्गस्य च यो विधिः २१ यश्चानुशायिनां सर्गः पाखंडस्य च संभवः आत्मनो बंधमोक्षौ च व्यवस्थानं स्वरूपतः २२ यथात्मतंत्रो भगवान् विक्रीडत्यात्ममायया विहाय वा यथा मायामुदास्ते साक्षिवद्विभुः २३ सर्वमेतच्च भगवान् पृच्छतो मेऽनुपूर्वशः तत्त्वतोऽर्हस्युदाहर्तुं प्रपन्नाय महामुने २४ अत्र प्रमाणं भगवान् परमेष्ठी यथात्मभूः परे चेहानुतिष्ठंति पूर्वेषां पूर्वजैः कृतं २५ न मेऽसवः परायंति ब्रह्मन्ननशनादमी । पिबतोऽच्युतपीयूषमन्यत्र कुपिताद्द्विजात् २६ सूत उवाच स उपामंत्रितो राज्ञा कथायामिति सत्पतेः ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि २७ प्राह भागवतं नाम पुराणं ब्रह्मसंमितं ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते २८ ॥

॥ परे चेति यद्वा त्वदन्ये प्रायशो गतानुगतिका एव न तत्त्वविद इत्याह परे चेति २५ ननु त्वानशनद्विजकोपाभ्यां व्याकुलस्य कुतः श्रवणं तत्राह नेति न परायंति नापगच्छंति न व्याकुलीभवंतीत्यर्थः अच्युतकीर्तिपीयूषं पिबतः २६ उपामंत्रितः पृष्टः सत्पतेः सतां पतिश्च तस्य २७ ब्रह्मकल्पे वृत्ते उपक्रमकल्पे भागवताख्यां ॥ तेनैव प्रश्नानामुत्तरं दातुमुपक्रांतवानित्यर्थः २८ ॥

मा॰ द्विपांडूनां ऋषभः श्रेष्ठः आनुपूर्व्येणेति प्रस्तावक्रमोऽत्र विवक्षितो न प्रश्नक्रमः २९ ॥ ॥ इति द्वितीयस्कंधे टीका
यामष्टमः ८ ॥ ॥ राजप्रश्नोत्तरं वक्ष्यन् ब्रह्मणे हरिणोदितं कथयामास नवमे शुको भागवतं पुनः १ तत्र यत्ता
वदुक्तं यदधातुमत इत्यनेन जीवस्य कथं देहसंबंध इति तत्रोत्तरमाह आत्मनो हरेर्मायामंतरेणानुभवरूपस्या
त्मनः अर्थेन द्रष्टव्येन देहादिना संबंधः अंजसा तत्त्वतो न घटेत अत्र हेतुः परस्येति स्वप्नद्रष्टुर्यथा स्वप्ने देह
संबंधो न घटते तद्वत् १ संसारोऽपि मायैवेत्याह बहुरूपो बालयुवादिरूपो देवनरादिरूपश्चाऽभाति गुणेषु दे

यद्यत्परीक्षिदृषभः पांडूनामनुपृच्छति आनुपूर्व्येण तत्सर्वमाख्यातुमुपचक्रमे २९ ॥ इ
ति श्रीभागवते महापुराणे द्वितीयस्कंधे प्रश्नविधिर्नाम अष्टमोऽध्यायः ८ श्रीशुक उवाच आ
त्ममायामृते राजन्परस्यानुभवात्मनः न घटेतार्थसंबंधः स्वप्नद्रष्टुरिवांजसा १ बहुरूप इवा
भाति मायया बहुरूपया रममाणो गुणेष्वस्या ममाहमिति मन्यते २ यर्हि वाव महिम्नि स्वे
परस्मिन्कालमाययोः रमेत गतसंमोहस्त्यक्त्वोदास्ते तदोभयम् ३ आत्मतत्त्वविशुद्ध्यर्थं
यदाह भगवानृतं ॥ ॥ देहादिषु २ अत एव भक्तियोगेन तन्निरासे सति मोक्षोऽपि घटत इत्याह यर्हीति
वावशब्द एवार्थे स्व एव महिम्नि यदा रमेत तदेवाह कालमाययोः पुरुषप्रकृत्योः परस्मिन् तदा उभयं अहं
ममेति त्यक्त्वा उदास्ते पूर्णस्वरूपेणावतिष्ठते तदुक्तं यया संमोहितो जीव आत्मानं त्रिगुणात्मकं परोऽपि मनु
तेऽनर्थं तत्कृतं चाभिपद्यते अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे लोकस्याजानतो व्यासः चक्रे सात्वतसं
हितामिति ३ यच्चोक्तं परमेश्वरस्यापि देहसंबंधाविशेषात्कथं तद्भक्त्या मोक्षः स्यादिति आसीद्यदुदरात्प

आत्मनोजीवस्यतत्वविशुद्ध्यर्थंतत्वज्ञानार्थंतद्भवत्येव किंतत् यत्तपः आदिनाभजनंभगवान्ब्रह्मणेआह किंकुर्वन्ऋतं
सत्यंविद्घनंरूपंदर्शयन् दर्शनेहेतुः अव्यलीकेनव्रतेनतपसाआदृतः सेवितःसन् अयंभावः जीवस्याविद्यया
मिथ्यारूपदेहसंबंधः ईश्वरस्यतुयोगमायया चिद्घनलीलाविग्रहाविर्भावइतिमहान्विशेषः अतस्तद्भजनान्मो
क्षोपपत्तिरिति ४ भगवद्भजनादेवतत्वज्ञानमित्येतत्प्रपंचयिष्यन्ब्रह्मणोपितत्वज्ञानंतत्प्रसादादेवेतिदर्शयितु
मितिहासमाह सइत्यादिना परोगुरुः भक्तिरहस्योपदेशात् स्वधिष्ण्यंपद्मंआस्थायाधिष्ठायतस्याधिष्ठानान्वेषणा

ब्रह्मणेदर्शयन्रूपमव्यलीकव्रतादृतः ४ सआदिदेवोजगतांपरोगुरुः स्वधिष्ण्यमास्थाय
सिसृक्षयैक्षत तांनाधिगच्छद्दृशमत्रसंमतांप्रपंचनिर्माणविधिर्यथाभवेत् ५ सचिंतय
न्द्व्यक्षरमेकदांऽभस्युपाशृणोद्द्विर्गदितंवचोविभुः स्पर्शेषुयत्षोडशमेकविंशंनिष्किंच
नानांनृपयद्धनंविदुः ६ निशम्यतद्वक्तृदिदृक्षयादिशोविलोक्यतत्रान्यदपश्यमानःस्वं
धिष्ण्यमास्थायविमृश्यतद्धितंतपस्युपादिष्टइवादधेमनः ७ ॥ सपूर्वंजलेनिमग्नःपरावृत्यस्व

धिष्ण्येस्थितइत्यर्थः ऐक्षतततःकथंसृष्टव्यमित्यालोचितवान् तांदृशंप्रज्ञांअत्रसृष्टिविषयेसंमतांअव्यभिचारि
णीं विधिःप्रकारः ५ सृष्टिंचिंतयन्कदाचितद्व्यक्षरंवचोंऽभसिउपाशृणोत् उपसमीपेश्रुतवान् तेअक्षरेदर्शयति
कादयोमावसानाः स्पर्शाः तेषुयत् षोडशंतकारः यच्चैकविंशपकारः वचसोनिर्देशार्थंनदर्थमाह हेनृपनि
ष्किंचनानांधनंयद्विदुः येनतपोधनाइतिप्रसिद्धाः तच्चद्विर्गदितंतपतपेतिलोटमध्यमपुरुषैकवचनंतस्यवी
प्सासादरविधिरूपामशृणोदित्यर्थः ६ एवंनिशम्यतस्यवचसोवक्तृदिदृक्षयाततःप्रचलितःसन्दिशोविलोक्य
पुनःस्वधिष्ण्यमास्थायकेनचित्प्रत्यक्षंनियुक्तइवतच्चात्मनोहितंविमृश्यतपसिमनोधृतवानित्यर्थः ७ ॥

भा° टि° तेनस्वस्यअखिलानांलोकानांतापनंप्रकाशकंतपः अतप्यतकृतवान् तपतपत्येतेनस्यवचसोर्थैः ऽमोघंदर्शनंयस्यजितो अ°
३४ ऽनिलः आत्मामनश्चयेन विजितानिउभयेंद्रियाणिज्ञानकर्मात्मकानियेन तपतांतपस्विनांमध्येतपीयान् अति॰ ९
शयेनतपस्वी ८ तस्मैब्रह्मणेस्वलोकंवैकुंठाख्यंपरंश्रेष्ठंनयत्परंयतः परमुत्कृष्टमन्यन्नास्ति तमेवलोकमनुवर्ण
यतिपंचभिः व्यपेताः संक्लेशादयोयस्मात् स्वदृष्टवद्भिः सत्पुण्यवद्भिः यद्वास्वस्यदृष्टंदर्शनमस्तियेषांआत्मविद्भि
रित्यर्थः ९ तयोः ताभ्यांमिश्रंसत्वंचनप्रवर्त्ततेकिंतुशुद्धमेवसत्वं कालविक्रमोनाशः अपरेरागलोभादयोनसं॰

दिव्यंसहस्राब्दममोघदर्शनोजितानिलात्माविजितोभयेंद्रियः अतप्यतस्माखिललोकता
पनंतपस्तपीयांस्तपतांसमाहितः ८ तस्मैस्वलोकंभगवान्सभाजितः संदर्शयामासपरंनय
त्परं व्यपेतसंक्लेशविमोहसाध्वसंस्वदृष्टवद्भिर्विबुधैरभिष्टुतं ९ प्रवर्त्ततेयत्ररजस्तमस्तयोः
सत्वंचमिश्रंनचकालविक्रमः नयत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताः १०
श्यामावदाताः शतपत्रलोचनाः पिशंगवस्त्राः सुरुचः सुपेशसः सर्वेचतुर्बाहवउन्मिषन्म
णिप्रवेकनिष्काभरणाः सुवर्चसः प्रवालवैडूर्यमृणालवर्चसः परिस्फुरत्कुंडलमौलि

तीतिकिमुवक्तव्यं अनुव्रताः पार्षदाः १० श्यामाश्चतेअवदाताश्चपद्मनेत्राः पीतां॥ मालिनः ११
वराः सुरुचः अतिकमनीयाः सुपेशसः अतिसुकुमाराः उन्मिषंतइवप्रभावंतोमणिप्रवेकाः मण्युत्तमाये ए° ३४
युतानिनिष्काणिपदकान्याभरणानिचयेषांतेसुवर्चसः अतितेजस्विनः प्रवालादिवत्वर्चोवर्णोयेषांतेप॰
रिस्फुरंतिकुंडलानिमौलयोमालाश्चसंतियेषांते ११॥

पार्षदान् अनुवर्ण्य पुनरपि लोकमनुवर्णयति भ्राजिष्णुभिर्देदीप्यमानाभिः प्रमदोत्तमानां दिवः कान्तयस्ताभिर्विद्योत
मानाः सह विद्युद्भिर्वर्त्तमानाः सविद्युतः ताभिरभ्रावलीभिः तत्र विद्युत इव स्त्रियः अभ्रपंक्तय इव विमानानि नभ इव
लोकः १२ श्रीः संपत् रूपिणी मूर्त्तिमती मानं पूजां विभूतिभिर्नानाविभवैः प्रेंखं आंदोलं संश्रिताः कुसुमाकरो वसंत
स्तस्यानुगाः भ्रमराः तैर्विविधं गीयमाना स्वयं तु प्रियस्य हरेः कर्म गायती च भवतीति १३ य एवं भूतो लोकः तत्र तस्मि

भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनां विद्योतमानः प्रमदोत्तमाद्युभिः
सविद्युदभ्रावलिभिर्यथा नभः १२ श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभू
तिभिः प्रेंखं श्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती १३ ददर्श तत्राखिलसात्व
तां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिं सुनंदनंदप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसे
वितं विभुं १४ भृत्यप्रसादाभिमुखं दृगासवं प्रसन्नहासारुणलोचनाननं किरीटिनं कुंडलि
नं चतुर्भुजं पीतांबरं वक्षसि लक्षितं श्रिया १५ अध्यर्हणीयासनमास्थितं परं वृतं चतुः षोड
शपंचशक्तिभिः युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन् रममाणमीश्वरं १६ ॥ ९ ॥

न १४ भृत्यानां प्रसादे अभिमुखं दृग्एव आसव इव द्रष्टॄणां हर्षकरी यस्य तं प्रसन्नहासमरुणलोचनं चाननं यस्य व
क्षसि स्थितया च श्रिया लक्षितं अलंकृतमित्यर्थः १५ अध्यर्हणीयं वरिष्ठं सिंहासनं च तत्रः प्रकृति पुरुष महद
हंकार रूपाः षोडश एकादशेंद्रिय पंचमहाभूताख्याः पंचतन्मात्ररूपायाः शक्तयस्ताभिर्वृतं स्वैर्भगैः स्वाभाविकैः
ऐश्वर्यादिभिः इतरत्र योगिषु अध्रुवैः आगंतुकैः साधारणैरित्यर्थः एवं सत्यपि स्व एव धामन् स्वस्वरूपे एव रममाणं अ

तस्यदर्शनेनयः आल्हादः तेनपरिप्लुतंव्याप्तंआंतरमंतःकरणंयस्य हृष्यंतीरोमांचितातनुर्यस्यप्रेमभरेणअश्रूणिलो चनेषुयस्यविश्वसृक्ब्रह्मापारमहंस्येनपथाज्ञानमार्गेण १७ तंब्रह्माणंभगवानबभाषे प्रजाविसर्गेकार्येनिजशा सनार्हणंस्वनियोगार्हंप्रजाविसर्गेसमुपस्थितमितिवान्वयः ईषत्स्मितेनरोचिर्दीप्तिः शोभायस्याः तयागिरा १८ सिसृक्षयाहेतुनाचिरंसंभृतेनतपसाऽहंसम्यक्तोषितः दुस्तोषः तोषितुमशक्यः १९ माद्गतिमांश्रेयसांफलानांप



तद्दर्शनाह्लादपरिप्लुतांतरोहृष्यत्तनुः प्रेमभराश्रुलोचनः ननामपादांबुजमस्यविश्वसृक्य
त्पारमहंस्येनपथाऽधिगम्यते १७ तंप्रीयमाणंसमुपस्थितंतदाप्रजाविसर्गेनिजशासनार्ह
णं बभाषईषत्स्मितरोचिषागिराप्रियः प्रियंप्रीतमनाःकरेस्पृशन् १८ श्रीभगवानुवाच
त्वयाऽहंतोषितः सम्यग्वेदगर्भसिसृक्षया चिरंभृतेनतपसादुस्तोषः कूटयोगिनां १९ व
रंवरयभद्रंतेवरेशंमाऽभिवांछितं ब्रह्मन्श्रेयःपरिश्रामः पुंसांमद्दर्शनावधिः २० मनीषि
तानुभावोऽयंममलोकावलोकनं यदुपश्रुत्यरहसिचकर्थपरमंतपः २१ प्रत्यादिष्टंमया
ऽतत्रत्वयिकर्मविमोहिते ॥

रिश्रामः परिश्रमः साधनप्रयासः ममदर्शनमवधिर्यस्यसतथाअतोधिकं तुपुनः फलंनास्तीत्यर्थः २० एतच्चमत्कृपयैवत्वयाप्राप्तमित्याह मनीषितमिच्छातुभ्यमिदंदातव्यमितियाम मेच्छातस्यानुभावोऽयंकोऽसौतमाह ममलोकस्यावलोकनंयत् नचेदंममैवतपोबलेनप्राप्तमितिस्वातंत्र्यंम न्यस्व तत्प्रवृत्तेरपिमत्कृतत्वादित्याह रहसितपतपेति यद्वचउपश्रुत्यपरमंतपश्चकर्थकृतवानसि २१ त दपित्वांप्रतिमयैवादिष्टंउपदिष्टं कदातत्रतदासृक्ष्यारंभे त्वयिकर्मणिकार्येर्थेविमोहितेसति किंच ॥

तपोनाममममैवशक्तिरित्याह तपोमेहृदयंअंतरंगाशक्तिः आत्मास्वरूपंयस्यज्ञानमयंतपइतिश्रुतेः २२ ग्रसामिसं
हरामिबिभर्मिपालयामि वीर्यंशक्तिः २३ अध्यक्षः अधिष्ठाता गुहां गुहायांबुद्धाववस्थितः सन्यद्यपिवेदतथा
पीत्युत्तरेणान्वयः २४ नाथमानस्ययाचमानस्यउपतप्यमानस्येतिवा हेनाथनाथय आशास्वयप्रपच्छ नाथि
तंयाचितं नाथृनाधृयाञ्चोपतापैश्वर्याशीःष्वितिनाथितमेवाह परंसूक्ष्मंअवरंस्थूलंचतेरूपंयथाजानीयां २५

तपोमेहृदयंसाक्षादात्माऽहंतपसोऽनघ २२ सृजामितपसैवेदंग्रसामितपसापुनः बि
भर्मितपसा विश्वंवीर्यंमेदुश्चरंतपः २३ ब्रह्मोवाच भगवन्सर्वभूतानामध्यक्षोवस्थितो
गुहां वेदह्यप्रतिरुद्धेनप्रज्ञानेनचिकीर्षितं २४ तथापिनाथमानस्यनाथनाथयनाथितं परा
वरेयथारूपेजानीयांतेत्वरूपिणः २५ यथात्ममायायोगेननानाशक्त्युपबृंहितं विलुंपन्
विसृजन्गृह्णन्बिभ्रदात्मानमात्मना २६ क्रीडस्यमोघसंकल्पऊर्णनाभिर्यथोर्णुते
तथातद्विषयांधेहिमनीषांमयिमाधव २७ भगवत्शिक्षितमहंकरवाणिह्यतंद्रितः।
नेहमानःप्रजासर्गंबध्येयंत्वदनुग्रहात् २८ ॥ ५ यथाचत्वंक्रीडसितथातद्विषयांमनीषांमयिधेहीति

त्युत्तरेणअन्वयः नानाशक्त्युपबृंहितंविश्वंविलुंपन्संहरन् विविधंसृजन्बिभ्रत्पालयन् आत्मनास्वयमे
वआत्मानंब्रह्मादिरूपंगृह्णन् अनुगृह्णन्क्रीडसि २६ ऊर्णुतेतंतुभिः आत्मानमाच्छादयति २७ तत्किंसृष्टेरु
द्विग्नएवनत्वज्ञानंप्रार्थयसेनेत्याह भगवतात्वयाशिक्षितंअनुशिष्टं अतंद्रितअनलसःसन्करिष्यामिनहिंकिमनेन
त्वज्ञानेनतत्राह यस्मादेवंभूतात्तवानुग्रहात्प्रजासर्गमीहमानःकुर्वन्नपिअहंकारादिभिर्बद्धोनभवेयमिति २८ ॥

भा॰ द्वि॰ अवश्यंच मदो भविता सतुकं चित्काल्लंसमाभूदितिप्रार्थ्यत इति यावदिति भोईशतेन्वयालौकिकस्यसख्युः सखेवाहंकृतः अ॰ ९
को(स्पर्शेनादिनाममत्वेनसंमानितः सन्प्रजासर्गरूपेतवपरिकर्मणिसेवायांस्थितो विक्लवो ऽव्याकुलएवयावज्जनं
विभजामिउत्तममध्यमादिभेदेनसृजामितावत्त्वत्संमानादहमप्यजः स्वतंत्रइतिमानिनोमेससमुन्नद्धउत्कटोमदो
माभूत् यद्वामदोमासमुन्नद्धमासमुन्नह्यताउद्रिक्तोनभवेदित्यर्थः २९ ज्ञानंशास्त्रोत्थंविज्ञानमनुभवः रहस्यंभ
क्तिः सुगोप्यमपिवक्ष्यामीत्यादिनिर्देशात् तस्यांगंसाधनं ३० यावानस्वरूपतः यथाभावः यादृक्सत्तावान्यानि

यावत्सखासख्युरिवेशतेकृतः प्रजाविसर्गेविभजामिभोजनं अविक्लवस्तेपरिकर्मणिस्थि
तोमामेससमुन्नद्धमदोऽजमानिनः २९ श्रीभगवानुवाच ज्ञानंपरमगुह्यंमेयद्विज्ञानसमन्वि
तं सरहस्यंतदंगंचगृहाणगदितंमया ३० यावानहंयथाभावोयद्रूपगुणकर्मकः तथैवतत्त्व
विज्ञानमस्तुतेमदनुग्रहात् ३१ अहमेवासमेवाग्रेनान्यद्यत्सदसत्परं पश्चादहंयदेतच्चयोवशि
ष्येतसोऽस्म्यहं ३२ ऋतेऽर्थंयत्प्रतीयेतनप्रतीयेतचात्मनि ॥ ।। रूपाणिगुणाःकर्माणिचयस्य ३१ एत

देवसम्यगुपदिशन्यावानित्यस्यार्थंस्फुटयति अहमेवाग्रेसृष्टेः पूर्वमासंस्थितः नान्यत्किंचनत् यत्सत्स्थूलं अस
त्सूक्ष्मं परंतयोःकारणंप्रधानं तस्याप्यंतर्मुखतयातदामय्येवलीनत्वात् अहंचतदाआसमेवकेवलंनचान्य
दकर्तृत्वंपश्चात्सृष्टेरनंतरमप्यहमेवास्मि यदेतद्विश्वंतदप्यहमस्मि प्रलयेयोऽवशिष्येतसोऽप्यहमेवअनेनचा॰ एमः
नाद्यनंतत्वादद्वितीयत्वाच्चपरिपूर्णोऽहमित्युक्तंभवति ३२ यथात्ममायायोगेनेत्यनेनमायायाअपिसृष्टत्वाद्रूक्ष्य श्रीः
माणोपयोगित्वाच्चमायांनिरूपयति ऋतेऽर्थंविनापिवास्तवमर्थंयद्यतः किमप्यनिरूक्तंआत्मन्यधिष्ठानेप्रतीयेत॥

स्दपिचनप्रतीयेततत् आत्मनोममामायांविद्यात् यथाभाभासोहिचंद्रादिरिति अर्थंविनाप्रतीतौदृष्टांतः यथात
मइतिसतोःप्रतीतौनमोराहुर्यथाग्रहमंडलेस्थितोपिनदृश्यते ३३ यथाभावदुत्येतत्स्पष्टयति यथामहाभूतानि
भौतिकेषुअनुप्रविष्टेस्वनंतरंप्रविष्टानितेषूपलभ्यमानत्वात् अप्रविष्टानिचप्रागेवकारणतयातेषुविद्यमानत्वात्
तथातेषुभूतभौतिकेष्वहं नचतेष्वहंएवंभूताममसत्तेत्यर्थः ३४ साधनमाह आत्मनस्तत्त्वजिज्ञासुनाएतावं
तत्त्वमेवजिज्ञास्यंविचार्यंतदेवाह अन्वयःकार्येषुकारणत्वेनानुवृत्तिः कारणावस्थायांचतेभ्योव्यतिरेकः न

तद्विद्यादात्मनोमायांयथाभासोयथातमः ३३ यथामहांतिभूतानिभूतेषूच्चावचेष्वनु प्रवि
ष्टान्यप्रविष्टानितथातेषुनतेष्वहं ३४ एतावदेवजिज्ञास्यंतत्त्वजिज्ञासुनात्मनः अन्वयव्य
तिरेकाभ्यांयत्स्यात्सर्वत्रसर्वदा ३५ एतन्मतंसमातिष्ठपरमेणसमाधिना भवान्कल्पविक
ल्पेषुनविमुह्यतिकर्हिचित् ३६ श्रीशुकउवाच संप्रदिश्यैवमजनोजनानांपरमेष्ठिनं पश्य
तस्तस्यतद्रूपमात्मनोन्यरुणद्धरिः ३७ अंतर्हितेंद्रियार्थायहरयेविहितांजलिः सर्वभूत
मयोविश्वंससर्जेदंसपूर्ववत् ३८ प्रजापतिर्धर्मपतिरेकदानियमान्यमान् ॥ ॥यथाजाग्रदाद्यव
स्थासुतत्तत्साक्षितयान्वयः व्यतिरेकश्चसमाध्यादौएवमन्वयव्यतिरेकाभ्यांयत्स्यात्सर्वत्रसर्वदाचतदेवात्मेति
३५ यत्प्रार्थितंतेनेहमानः प्रजासर्गमितितत्प्रसादीकरोति एतन्मतंसम्यगनुतिष्ठसमाधिनाचित्तैकाग्र्येणकल्पेषु
विकल्पाःविवि धाःसृष्टयस्तेषुविमोहंकर्तृत्वाभिनिवेशंनयास्यसीति ३६ एवंसंप्रदिश्यउपदिश्यजनानांपरमेष्ठि
नंपरमेष्ठ्याधिपत्येस्थितंब्रह्माणं आत्मनस्तद्रूपंन्यरुणत् अंतर्हितवान् ३७ अंतर्हिताःइंद्रियार्थाःप्रत्यक्षरूपंयेनत

भा॰ द्विमित्यत इत्याह प्रजापतिरिति पंचभिः प्रजानांभद्रमन्विच्छन् विशृशान् सैवस्वार्थेकाम्यास्वप्रयोजने च्छातयायमनि ३७ यमानन्वतिष्ठत् ३९ रिक्याद्रानांपुत्राणांमध्येप्रियतमः तंपितरंसेवमानः शीलादिनापरितोषयामास ४० किमि च्छन् विष्णोर्मायांविविदिषन् ४१ निशाम्यदृष्ट्वाज्ञात्वेत्यर्थः मायां ४२ भगवताचतुःश्लोक्यासंक्षेपेणप्रोक्तंवि स्तरेणप्राह दशलक्षणानिलक्षणीयाअर्थाविद्यंतेयस्मिन्तत् ४३ तत्संप्रदायतोभागवतंमयाज्ञातमित्याश

भद्रंप्रजानामन्विच्छन्नातिष्ठत्स्वार्थकाम्यया ३९ तंनारदः प्रियतमोरिक्याद्रानामनुव्रतः शु श्रूषमाणः शीलेनप्रश्रयेणदमेनच ४० मायांविविदिषन्विष्णोर्मायेशस्यमहामुनिः महा भागवतोराजन्पितरंपर्यतोषयत् ४१ तुष्टंनिशाम्यपितरंलोकानांप्रपितामहं देवर्षिःप रिपप्रच्छभवान्यन्माऽनुपृच्छति ४२ तस्माइदंभागवतंपुराणंदशलक्षणं प्रोक्तंभगवता प्राहप्रीतः पुत्रायभूतकृत् ४३ नारदः प्राहमुनयेसरस्वत्यास्तटेनृप ध्यायतेब्रह्मपरमं व्यासायामिततेजसे ४४ यदुताहंत्वयापृष्टोवैराजात्पुरुषादिदं यथासीत्तदुपाख्यास्येप्रश्ना नन्यांश्चकृत्स्नशः ४५ ॥ ॥इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेनवमोध्यायः ९ ॥

येनाह नारद इति ४४ भागवतव्याख्यानेनैवत्वत्प्रश्नानामुत्तरंदास्यामीत्याह यदुतेतिपुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः इत्यादिनावैराजात्पुरुषादिदंविश्वंकथमासीदितियदहंत्वयापृष्टः तद्यथावदुपा ॥ ख्या मिशृण्विति ४५ ॥ ॥इतिद्वितीयेटीकांनवमोध्यायः॥ ॥

स्कं॰ २ अ॰ ९

ततो भागवतस्याख्याहरे वै दशमे स्फुटं राजप्रश्नोत्तरं वक्तुमारेभे बादरायणिः १ दशलक्षणं पुराणं प्राहुरित्युक्तं तानि द
शलक्षणानि दर्शयति अत्रेति मन्वंतराणीशानुकथाश्चेति द्वंद्वः सर्गादयोऽत्र दशार्था लक्ष्यंते १ नन्वेवमर्थभे
दाच्छास्त्रभेदः स्यात्तत्राह दशमस्याश्रयस्य विशुद्ध्यर्थं तत्त्वज्ञानार्थं नवानां लक्षणं स्वरूपं एकस्यैव प्राधा
न्यान्नार्थं दोष इत्यर्थः ननु नैवं प्रतीयते अत आह श्रुतेन श्रुत्यैव स्तुत्यादिस्थानेषु अंजसा साक्षाद्वर्णयंति अर्थे
न तात्पर्यवृत्त्या च तत्तदाख्यानेषु २ सर्गादीनां प्रत्येकं लक्षणमाह भूतानि आकाशादीनि मात्राश्च शब्दादीनि इंद्रियाणि

अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः मन्वंतरेशानुकथा निरोधो मुक्तिराश्रयः १ दशमस्य
विशुद्ध्यर्थं नवानामिह लक्षणं वर्णयंति महात्मानः श्रुतेनार्थेन चांजसा २ भूतमात्रेंद्रियधियां
जन्म सर्ग उदाहृतः ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः ३ स्थितिर्वैकुंठविजयः पो
षणं तदनुग्रहः मन्वंतराणि सद्धर्म ऊतयः कर्मवासनाः ४ अवतारानुचरितं हरेश्चास्यानुव
र्तिनां पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः ५ ॥ ५ च धीशब्देन महदहंकारौ गुणानां वैषम्या

त्परिणामात् ब्रह्मणः परमेश्वरात् कर्तुर्भूतादीनां यद्विराड्रूपेण स्वरूपेण च जन्म स सर्गः पुरुषो वैराजः तत्
कृतः पौरुषः चराचरसर्गो विसर्ग इत्यर्थः ३ वैकुंठस्य भगवतो विजयः सृष्टानां तत्तन्मर्यादापालनेनोत्कर्षः स्थि
तिः स्थानं स्वभक्तेषु तस्यानुग्रहः पोषणं तदनुगृहीतानां सतां मन्वंतराधिपतीनां धर्मः कर्मणां वासनाः वेत्र नंतुसं
ताने ऊयंते कर्मभिः संतन्यंत इत्यूतयः यद्वा रक्षार्थात् संश्लेषार्थाद्वा अवतेर्धातोरिदं रूपं ऊयंते कर्मभिर्वद्ध्यंते सं
श्लिष्यंत इति वा ऊतय इत्यर्थः ४ हरेरवतारानुचरितं अस्यानुवर्तिनां च सत्कथा ईशानुकथाः प्रोक्ता इत्यर्थः ५।

भा॰ द्वि॰ टी॰

अस्यात्मनो जीवस्य हरेर्योगनिद्रामनुपश्चात् शक्तिभिः स्वोपाधिभिः सह शयनं लयः निरोधः अन्यथारूपं अविद्ययाऽ ध्यस्तं कर्तृत्वादि हित्वा स्वरूपेण ब्रह्मतया व्यवस्थितिर्मुक्तिः ६ आभासः सृष्टिः निरोधो लयश्च यतो भवति अध्यवसीयते प्रकाशते च स ब्रह्मेति परमात्मेति प्रसिद्धः आश्रयः कथ्यते ७ आश्रयस्वरूपमपरोक्षानुभवेन स्पष्टं दर्शयितुमध्यात्मादिविभागमाह योऽयमाध्यात्मिकः पुरुषः चक्षुरादिकरणाभिमानी द्रष्टा जीवः स एवाधिदैविकः चक्षुराद्यधिष्ठाता सूर्यादिः तत्रैकस्मिन्नेव उभयोर्द्विरूपयोर्विच्छेदो यस्मात् स आधिभौतिकः चक्षुर्गोलकाद्युपलक्षितो दृश्यो देहः पुरुष इति पुरुषस्य जीवस्योपाधिः स वा एष पुरुषोऽन्नरसमय इत्यादिश्रुतेः ८ एकमेकतराभावे द्व १०

निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः ६
आभासश्च निरोधश्च यतश्चाध्यवसीयते स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ७ योऽध्या
त्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिकः ८ ए
कमेकतराभावे यदा नोपलभामहे ॥

॥न्येतेषामन्योन्यसापेक्षसिद्धित्वेनानात्मत्वं दर्शयति तथाहि दृश्यं विना तत्प्रतीत्यनुमेयं करणं न सिद्ध्यति नापि द्रष्टा न च तद्विना करणप्रवृत्त्यनुमेयस्तदधिष्ठाता सूर्यादिः न च तं विना करणं प्रवर्तते न च तद्विना दृश्यमित्येवमेकतरस्याभावे एकं नोपलभामहे तत्र तदा तत्त्रितयं आलोचनात्मकेन प्रत्ययेन यो वेद साक्षितया पश्यति स परमात्मा आश्रयः तेषामपि परस्पराश्रयत्वमस्त्येवेति तद्व्यवच्छेदार्थं विशेषणं स्वाश्रयः अनन्याश्रयः स चासावन्येषामाश्रयश्चेति तथा च भगवान्वक्ष्यति दृग्रूपमार्कं वपुरत्र रंध्रे परस्परं सिद्ध्यति यः स्वतः खे आत्मा यदेषामपरो य आद्यः स्वयानुभूत्याखिलसिद्धसिद्धिरिति एतेनैव व्य

राम

भिचारित्वात्तेषां मायामयत्वमप्युक्तं अत एव पुरुषावयवैर्लोकाः सपालाः पूर्वं कल्पिताः लोकैरमुष्यावयवाः सपालैरित्यने
नोक्तो विरोधोऽपि परिहृतः ८ उक्तमेवाध्यात्मादिविभागं प्रपंचयन् यदुताहं त्वया पृष्टो वैराजात्पुरुषादिदं यथासीत्तदुपा
ख्यास्य इति यत्प्रतिज्ञातं तदुत्पत्तिप्रकारमाह पुरुष इत्यादिना पुरुषो वैराजः अंडं विनिर्भिद्य पृथक्कृत्वा विनि
र्गतः पृथक्स्थित इत्यर्थः अयनं स्थानं अन्विच्छन् विमृशन् यतः शुचिः स्वयमतः शुचीः शुद्धाः अपः गर्भोद
कसंज्ञाः अस्राक्षीत् ससर्ज १० अप्सु वासं नारायणनाम निरुक्त्या स्पष्टयति तेन अप्सु वासेन यद्यस्मात्पुरुषो

त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ९ पुरुषोऽण्डं विनिर्भिद्य यदासौ स विनिर्गतः आत्म
नोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः १० तास्ववात्सीत्स्वसृष्टासु सहस्रपरिवत्स
रान् तेन नारायणो नाम यदापः पुरुषोद्भवाः ११ द्रव्यं कर्म च कालश्च स्वभावो जीव एव च
यदनुग्रहतः संति न संति यदुपेक्षया १२ एको नानात्वमन्विच्छन्योगतल्पात्समुत्थितः
वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा १३ अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः ।
अथैकं पौरुषं वीर्यं त्रिधाऽभिद्यत तच्छृणु १४ अंतः शरीर आकाशात्पुरुषस्य विचेष्टतः

नरः तस्मादुद्भवा यास्तां ताः नाराः आपोऽयनमस्येति नारायण इत्यर्थः तदुक्तं आपो नारा इति प्रोक्ता आपो वै नरसू
नवः अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत इति ११ तस्य प्रभावमाह द्रव्यं उपादानं कर्मादीनि निमित्तानि जीवो
भोक्ता यस्यानुग्रहात्संति कार्यक्षमा भवंतीत्यर्थः १२ योग एव तल्पं शय्या तस्मात् वीर्यं गर्भरूपं देहं हिरण्मयमि
व प्रकाशबहुलं १३ तस्यैव प्रपंचः अथेत्यादिना १४ अंतः शरीरे यः आकाशः तस्मात्क्रियाशक्त्या तत्र विवि

भि६

धंचेष्टमानस्य सतः ओजः इंद्रियशक्तिः सहो मनःशक्तिः वलं देहशक्तिः ततः क्रियाशक्त्यात्मकात्सूक्ष्मादुपात्प्राणः
सूत्राख्यः महान्मुख्यः असुः प्राणः सर्वेषाम् १५ महत्त्वं दर्शयति प्राणादिंद्रियाणि यं प्राणंतं चेष्टां कुर्वंतं अनुपा
आन्त प्राणंति चेष्टां कुर्वंति अपानंतं चेष्टां त्यजंतमनु अपानंति चेष्टां त्यजंति राजानमनु भृत्या इव १६ क्षिपता
चालयता निमित्तेन क्षुत्तृडादिकं प्रभोरिति विराड्जीवाभेदेनोपासनार्थमुक्तं आजायते स्म ततः जक्षतः भक्षयितु
मिच्छत इत्यर्थः प्राक् प्रथमं निरभिद्यत विभक्तमभूत् १७ तालु अधिष्ठानं जिह्वा इंद्रियं नानारसो विषयः वक्तु

ओजः सहो बलं जज्ञे ततः प्राणो महानसुः १५ अनुप्राणंति यं प्राणाः प्राणंतं सर्वजंतुषु अपानं
तमपानंति नरदेवमिवानुगाः १६ प्राणेन क्षिपता क्षुत्तृडंतरा जायते प्रभोः पिपासतो जक्षत
श्च प्राङ्मुखं निरभिद्यत १७ मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते ततो नानारसो जज्ञे जि
ह्वया योधिगम्यते १८ विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयोः जले वै तस्य सुचिरं निरो
धः समजायत १९ नासिके निरभिद्येतां दोधूयति नभस्वति तत्र वायुर्गंधवहो घ्राणो नसि जि
घृक्षत २० यदात्मनि निरालोकमात्मानं च दिदृक्षतः ॥

अत्र देवता ज्ञातव्या एवं सर्वत्र अधिष्ठान-
मिंद्रियं देवता विषय इत्येतच्चतुष्टयमनुक्तमप्यूह्यं १८ विवक्षोः वक्तुमिच्छोः मुखत एव वह्निर्देवता वाक् इंद्रि
यं व्याहृतं भाषणं तयोरिति इंद्रियदेवताधीनत्वं क्रमेणादर्शयति १९ नभस्वति प्राणवायौ दोधूयति दोधू
यमाने अत्यंतं प्रचलति सति तत्र च नासिकायां वायुर्देवता गंधं वहतीति तथा अनेन गंधो विषयो दर्शितः घ्रा
णः इंद्रियं जिघृक्षतः गंधं गृहीतुमिच्छतः २० निरालोकं प्रकाशशून्यं आसीदिति शेषः निर्मक्षिकमितिवदव्ययी

तदात्मानंदेहंचकारादन्यच्चवस्तुदिदृक्षतअक्षिणीस्थानंज्योतिः आदित्योदेवता चक्षुरिंद्रियंततोगुण
स्यरूपस्यग्रहः ग्रहणं अनेनरूपविषयोदर्शितः २१ ऋषिभिःवेदैःवोध्यमानस्यतत आत्मनःप्रवोधंगृ
हीतुमिच्छतः ततोगुणग्रहः शब्दस्यग्रहणं २२ मृदुत्वंचकाठिन्यंचलघुत्वंचगुरुत्वंचउष्णत्वंचशीतत्वं।
चेत्यर्थः यद्यप्युष्णत्वमपींद्रियविषयएवतथापितस्यजिघृक्षाऽभावात् औष्ण्यमित्युक्तं गुर्वुष्णेतिपाठेप्य
पादेशस्त्वादृशः वस्तुनएतान्धर्मानजिघृक्षतस्त्वक् निर्भिन्नात्वगिंद्रियाधिष्ठानंचर्मजातमित्यर्थः तस्यांरो
माणिइंद्रियंमहीरुहाश्चदेवताजाताः वस्तुनिहस्तेनानोलितेलघुत्वगुरुत्वयोर्ज्ञानात्तयोरपित्वगिंद्रियविषय

निर्भिन्नेह्यक्षिणीतस्यज्योतिश्चक्षुर्गुणग्रहः २१ वोध्यमानस्यऋषिभिरात्मनस्तज्जिघृ
क्षतः कर्णौचनिरभिद्येतांदिशः श्रोत्रंगुणग्रहः २२ वस्तुनोमृदुकाठिन्यलघुगुर्वोष्णशी
ततां जिघृक्षतस्त्वक्निर्भिन्नातस्यांरोममहीरुहाः तत्रचांतर्वहिर्वायुस्त्वचालब्धगुणोवृ

त्वमितिपौराणिकाः तत्रत्वचि अंतर्वहिश्चवातोवृतः आवृत्यस्थितः कर्तरिनिष्ठाकथंभूतःत्वचाल ॥ तः २३
ब्धोगुणःस्पर्शोयेन अयमर्थः त्वगिंद्रियमेववहिःकंडूतिसहितंस्पर्शंगृह्णत् नलोमशब्देनोच्यतेतत्रमहीरुहा
णांदेवत्वं अंतर्वहिश्चस्पर्शंगृह्णत्तद्देवत्वक्शब्देनोच्यतेतत्रवातोदेवता तथाचतृतीयेवक्ष्यति त्वचमस्यवि
निर्भिन्नां [illegible] विविशुर्धिष्ण्यमोषधीः अंशेनलोमभिःकंडूयैरसोप्रतिपद्यते ।निर्भिन्नान्यस्यचर्माणिलो
कपालोऽनिलोऽविशत प्राणेनांशेनसंस्पर्शंयेनासोप्रतिपद्यतेइति तत्रचर्माणीतिचर्मोपलक्षितात्वगित्यर्थः
प्राणेनांशेनेति प्राणवायुव्याप्तेनत्वगिंद्रियेणेत्यर्थः वह्वृचश्रुतौत्वेकएवांशोनिर्दिष्टस्त्वङ्निरभिद्यतत्वचोलोमानिलो

श्री॰ हस्तौ रुरुहतुर्निर्भिन्नौ बलमिंद्रियं इंद्रो देवता तदुभयाश्रयं आदानं कर्म २४ अभिकामिकां अभीष्टां विहितामित्यर्थः अ
४॰ पद्भ्यां सह यज्ञो विष्णुर्देवः स्वयं तदधिष्ठातृरूपेण स्थितः कर्मभिरिति गत्या व्याकर्मणो गतिरिंद्रियमुक्तं हव्यं क्रिय १॰
तइति गतिप्राप्यं यत्तार्थद्रव्यं विषय इत्युक्तं नृभिरिति व्यष्टिजीवेष्वपि द्वयमेव रीतिं दर्शयन्नत्राधिकारित्वं यत्रा
दीनां दर्शयति २५ प्रजा अपत्यं आनंदो रतिः अमृतं स्वर्गादि तदर्थिनः शिश्नः अधिष्ठानं तु उपस्थ इंद्रियं प्रजाप
तिश्चासीदिति ज्ञेयं तदुभयाश्रयं कामानां स्त्रीणां संभोगानां संबंधि प्रियं सुखं २६ धातुमलं भुक्तान्नादीनामसा

हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया तयोस्तु बलमिंद्रश्च आदानमुभयाश्रयं २४ ग
तिं जिगीषतः पादौ रुरुहातेऽभिकामिकां पद्भ्यां यज्ञः स्वयं हव्यं कर्मभिः क्रियते नृभिः २५
निरभिद्यत शिश्नो वै प्रजानंदामृतार्थिनः उपस्थ आसीत्कामानां प्रियं तदुभयाश्रयं २६ उ
त्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदं ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः २७ आसिसृ
प्सोः पुरः पुर्या नाभिद्वारमपानतः तत्रापानस्ततो मृत्युः पृथक्त्वमुभयाश्रयं २८ आदित्सो
रन्नपानानामासन्कुक्ष्यंत्रनाडयः ॥ ॥ रं शं त्यक्तुमिच्छोः गुदपायुर्मित्र उत्सर्गः अधिष्ठानेंद्रियदेव
ताविषयाः २७ पुर्याः देहात् पुरः देहांतराणि आसिसृप्सोः सर्वतो गंतुमिच्छोः निरभिद्यतेत्यनुषंगः अपान
नः अपगच्छतः पृथक्त्वं मरणं नाभ्यादीन्यधिष्ठानादीनि नाभ्यां हि प्राणापानयोर्बंधविश्लेषे मृत्युरिति प्रसि
द्धं २८ अन्नपानानामादित्सोः संग्रहेच्छोः कुक्षिश्च अंत्राणि च नाड्यश्चासन् तत्र कुक्षिरधिष्ठानं अंत्राण्यन्नसंग्र
हे करणमिंद्रियस्थानीयं नाड्यस्तु पानसंग्रहे तयोर्नाड्यंत्रवर्गयोः क्रमेण नद्यः समुद्राश्च देवते तुष्टिहृदरमरणं

भाग॰ ४॰

पुष्टिस्तु रसपरिणामतः स्थौल्यं तदाश्रये तदुभयनिमित्ते। तत्रान्नसंग्रहहेतोः कुक्ष्यं तत्र समुद्रस्तु पुष्टयइति चतुष्टयं पेयसंग्र
हहेतोः कुक्षिनाडीनदी पुष्टयइति विवेकः २९ निदिध्यासो निरंतरं चिंतयितुमिच्छोः कामोऽभिलाषः हृद
यमनश्चंद्रस कल्पाः अधिष्ठानादयः ३० तदेवमधिदैवादिभेदं विभज्योत्क्रांतदशभूतानां धात्वादीनांस्वरू
पमाह त्वगिति द्वाभ्यां त्वक् स्थूलं चर्म तदुपरि स्थितं सूक्ष्मं त्वगादयो स्थ्यंताः इह हैकवद्भावेन निर्दिष्टाः सप्तयेधा
तवः ते भूम्यप्तेजोमयाः तेषां च पांचभौतिकत्वेपि वाय्वाकाशयोराहारादिरूपेण संवर्द्धकत्वाभावादेवमुक्तं ३१

नद्यः समुद्रास्त्वतयोस्तु पुष्टिः पुष्टिस्तदाश्रये २९ निदिध्यासो ऽन्तमामायां हृदयं निरभिद्यतः
ततो मनस्ततश्चंद्रः संकल्पः काम एव च ३० त्वङ्मेमांसरुधिरमेदोमज्जास्थिधातवः भू
म्यप्तेजोमयाः सप्त प्राणो व्योमांबुवायुभिः ३१ गुणात्मकानींद्रियाणि भूतादिप्रभवा गुणाः
मनः सर्वविकारात्मा बुद्धिर्विज्ञानरूपिणी ३२ एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया महया
दिभिश्चावरणैरष्टभिर्बहिरावृतं ३३ अतः परं सूक्ष्मतममव्यक्तं निर्विशेषणं ॥ ९ ॥

गुणात्मकानि गुणेषु शब्दादिष्वात्मा येषां विषयाभिमुखस्वभावानीत्यर्थः गुणाः शब्दादयः भूतादिरहंकारः त
तः प्रकर्षेण भवंतीति तथा अहंकारकल्पित शोभनस्वभावाः न वस्तुतस्तथेत्यर्थः अत्रहेतुः यतो मन एव सर्व
विकाराणामात्मा स्वरूपं बुद्धिस्तु तथाभूतार्थविज्ञानरूपिणी न तु परमार्थग्राहिणी निर्वैराग्यार्थमुक्तं अनेनैव
बुद्धिमनसोः स्वरूपं चोक्तं ३२ उपसंहरति एतदिति प्रकृत्यासहाष्टभिः ३३ स्थूलमुक्त्वा सूक्ष्मं समष्टिलिंगशरीर
माह अतः परं अस्य कारणभूतं सूक्ष्मं अतींद्रियं ततः अव्यक्तं नतु तः यतो निर्विशेषणं नतुतः ॥ ९ ॥

भा॰ टि॰
५२

अनादिमध्यनिधनं उत्पत्तिस्थितिलयशून्यं नित्यं सदैकरूपं अपक्षयादिशून्यमित्यर्थः अतएववाङ्मनसेति हुं दृ
कं तस्मात्परं ३४ उपासनार्थं भगवत्यारोपितं रूपद्वयमपवदति अमुनीइति नगृह्णंति वस्तुतो नांगीकुर्वंति यतो
मायासृष्टे ३५ यद्रूपगुणकर्मकइतियदुक्तं भगवताब्रह्माणं प्रतितत्प्रपंचयितुं ब्रह्मादिरूपाणि तत्कर्माणि चाह स
इत्यादिनाइत्थंभावेनेत्यतः प्राक्तनेन ग्रंथेन स भगवानब्रह्मरूपधृक्सन्वाच्यवाचकतयावाचकतयानामानि वा
च्यतयारूपाणि क्रियाश्च धत्ते सृजतीत्यर्थः मायया सकर्मा सव्यापारः सन्वस्तुतस्त्वकर्मकः ३६ एतत्प्रपंचयति प्रजा

अनादिमध्यनिधनं नित्यं वाङ्मनसः परं ३४ अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते उभे अ
पि न गृह्णंति मायासृष्टे विपश्चितः ३५ स वाच्यवाचकतया भगवान्ब्रह्मरूपधृक् नामरूप
क्रिया धत्ते सकर्माकर्मकः परः ३६ प्रजापतीन्मनून्देवानृषीन्पितृगणान्पृथक् सिद्ध
चारणगंधर्वान्विद्याध्रासुरगुह्यकान् ३७ किंनराप्सरसो नागान्सर्पान्किंपुरुषोरगान् मा
तॄरक्षःपिशाचांश्च प्रेतभूतविनायकान् ३८ कूष्मांडोन्मादवेतालान्यातुधानान्ग्रहानपि खगा
न्मृगान्पशून्वृक्षान्गिरीन्नृप सरीसृपान् ३९ द्विविधाश्चतुर्विधा येऽन्ये जलस्थलनभौकसः

पतीनिति सार्द्धैस्त्रिभिः द्वितीयांतानां धत्त इत्यनेनान्वयः तत्र प्रजापत्यादीनि नामानि तत्तद्वाच्यानि रूपाणि तत्क
र्माणि च ज्ञेयानि पृथक् तत्तदवांतरभेदेन ३७ ३८ गिरीनित्यस्यानंतरं नृपेति संबोधनं ३९ द्विविधाः स्थावरजं
गमरूपेण चतुर्विधाः जरायुजांडजस्वेदजोद्भिज्जरूपेण जलस्थलनभांसि ओकांसि येषां तानपि धत्त इति पूर्वेणा
न्वयः यच्च राज्ञा पृष्टं यावत्यः कर्मगतयो याद्दृशीर्द्विजसत्तमेति तस्यापि प्रसंगादनेनैवोत्तरमाह कुशलाउत्तमाः ॥

अ॰
१०

एमः
५१

अकुशलाः नीचाः मिश्रा इति पदान्तरं मिश्राः मध्यमाः कर्मणां पुण्यपुण्यमिश्राणां गतयः फलानि ४० सत्वादि-
भेदेन कर्मगतिवैचित्र्यं प्रपंचयति सत्वमिति सार्द्धेन सत्वादयस्तिस्रो गतयः सुरादिशब्दा ऋष्यादीनामुपलक्षणा
र्थाः अन्याभ्यां गुणाभ्यां स्वभावो गुणः उपहन्यते अनुविध्यते ४१ ब्रह्मरूपेण स्रष्टृत्वमुक्त्वा विष्णुरूपेण पालक
त्वमाह स एव भगवान् तिर्यगाद्यवतारैरिदं विश्वं स्थापयन् पालयन् धर्मरूपेण पुष्णाति भोगैः संवर्द्धयति ४२ रु
द्ररूपेण संहर्तृत्वमाह तत इति आत्मनः सकाशात् यदिदं सृष्टं तत्संनियच्छति संहरति ४३ कर्तृत्वाद्यपवादेन

कुशलाकुशला मिश्राः कर्मणां गतयस्त्विमाः ४० सत्वं रजस्तम इति तिस्रः सुरनृनारकाः त
त्राप्येकैकशो राजन् भिद्यंते गतयस्त्रिधा यदैकैकतरोऽन्याभ्यां स्वभाव उपहन्यते ४१ स ए
वेदं जगद्धाता भगवान् धर्मरूपधृक् पुष्णाति स्थापयन् विश्वं तिर्यङ्नरसुरात्मभिः ४२ ततः
कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः संनियच्छति कालेन घनानीकमिवानिलः ४३ इ
त्थंभावेन कथितो भगवान् भगवत्तमः नेत्थंभावेन हि परं द्रष्टुमर्हन्ति सूरयः ४४ नास्य क
र्मणि जन्मादौ परस्यानुविधीयते ॥ ॥ दशमस्य शुद्धिमाह इत्थंभावेन स्रष्टृत्वादिरूपेण तस्माद्वा एत

स्मादात्मनः आकाशः संभूतः सोऽकामयत बहु स्यां प्रजायेयेत्यादिश्रुत्या कथितः स्वरूपस्तु परं केवलमेवंरूपेणै
व द्रष्टुं नार्हन्ति ४४ तर्हि किं यतः अस्य विश्वस्य जन्मादौ कर्मणि परस्येश्वरस्य इत्थंभावः कर्तृत्वं नास्ति श्रुत्यापि ता
त्पर्येण न प्रतिपाद्यते किंतु अनुविधीयते अनुवर्ण्यते किमर्थं कर्तृत्वप्रतिषेधार्थं हि यतो मायया रोपितं प्रकाशि-

भा॰टी॰ तथाच श्रुतिः निष्कलंनिष्क्रियंशांतंनिरवद्यंनिरंजनं इंद्रोमायाभिः पुरुरूपईयत इत्याद्याः ४५ उक्तमर्थमुपसंहरति अ॰
४२ अयंत्विति ब्रह्मणः संबंधीकल्पोमहाकल्पः विकल्पोवांतरः तत्सहितः उदाहृतः उदाहरणत्वेनसंक्षेपतउक्तः कथं १०
भूतः यत्रमहाकल्पेप्राकृताः महदादिसर्गाः अवांतरकल्पेचवैकृताः स्थावरादिसर्गाः इत्ययंविधिः प्रकारः अन्यै
र्महाकल्पादिभिः साधारणः ४६ वक्ष्यमाणंविस्तारंप्रतिजानीते परिमाणंस्थूलंसूक्ष्मंचकल्पस्यलक्षणं इयान् एवं

कर्तृत्वप्रतिषेधार्थंमाययारोपितंहितत् ४५ अयंतुब्रह्मणःकल्पःसविकल्पउदाहृतः ।
विधिः साधारणोयत्रसर्गाःप्राकृतवैकृताः ४६ परिमाणंचकालस्यकल्पलक्षणविग्रहं
यथापुरस्ताद्व्याख्यास्येपाद्मंकल्पमथोशृणु ४७ शौनकउवाच यदाहनोभवान्सूतक्षत्ता
भागवतोत्तमः चचारतीर्थानिभुवस्त्यक्त्वाबंधून्सुदुस्त्यजान् ४८ कुत्रकौषारवेस्तस्यसंवा
दोऽध्यात्मसंश्रितः यद्वासभगवांस्तस्मैपृष्टस्तत्त्वमुवाचह ४९ ब्रूहिनस्तदिदंसौम्यविदुर
स्यविचेष्टितं बंधुत्यागनिमित्तंचतथैवागतवान्पुनः ५० ॥ ९० ॥ १० ॥

रूपइतितद्विग्रहमवांतरकल्पमन्वंतरादिरूपंविभागं चयथावद्विस्तरेणपुरस्तात्तृतीयस्कंधेव्याख्यास्यामिति श्रीः
पाद्मंकल्पंअथोइतिकार्त्स्न्येनव्याख्यायमानंशृणु ४७ यदर्थंसृष्ट्यादिनिरूपणंतदेवसाक्षात्श्रोतुकामः कथां ४२
तरंपृच्छति यदाहेति भुवः संबंधीनितीर्थानि यद्वाभुवः क्षेत्राणिचेति ४८ कौषारवेर्मैत्रेयस्यतस्यक्षत्तुश्चअ ।
ध्यात्मज्ञानसंश्रितः संवादः ४९ पुनरागतवान् तत्रचनिमित्तंब्रूहि ५० ॥

भा॰ द्वि॰ राज्ञा पृष्ट इति अयमर्थः मां यत् यूयं पृच्छथ यदिदमेव राजाऽपि शुकं पृष्टवान् शुकोऽपि विदुरमैत्रेयसंवादं पुरस्कृ
त्य पूर्वं राज्ञा कृताः प्रश्नाः तदनुसारेण सर्वं पुराणार्थमवोचत् तदेवाहं वोऽभिधास्यामि तथैव शृणुतेति ५१ इ
ति श्रीभागवतटीकायां श्रीधरस्वामि विरचितायां भावार्थदीपिकायां द्विती-




सूत उवाच राज्ञा परिक्षिता पृष्टो यदवोचन्महामुनिः तद्
वोऽभिधास्ये शृणुत राज्ञः प्रश्नानुसारतः ५१ ॥ ॥ इ
ति श्रीभागवते महापुराणे अष्टादशसाहस्र्यां संहितायां द्वि
तीयस्कंधे दशमोऽध्यायः १० शुभमस्तु ॥ ९ ॥

यस्कंधे दशमोऽध्यायः १० ॥ ॥ श्रीमद्भागवतं येन स्वब्रह्ममुखनोमितं ब्र
ह्मनारदयोः प्रोक्तं तं वंदे गुरुमीश्वरं १ यत्सूत्रयंत्रितं विश्वं नरीनर्ति जगत्त्र
यं संततमेव रच्छंतु यदत्र स्खलितं मम २ द्वितीयस्कंधसंबंधिपदभावार्थदीपिका उद्दीप्यतामियं सद्भिर्य
थास्यात्तत्त्वदीपकं ३ ईक्षंतामिच्छया संतः क्षमंतां मम साहसं मया हि स्वीयबोधाय कृतमेतन्न सर्वतः ४

श्री॰ १०
एमः
४२

॥श्रीगणेशायनमः॥स्वभक्तपक्षपातेन तद्विपक्षविदारणं नृसिंहमद्भुतंवंदे परमानंदविग्रहं १ ऊतिःपंचदशाध्या॥
यैः सप्तमेवर्ण्यतेधुना ऊतिश्चवासनाप्रोक्तातत्तत्कर्मानुसारिणी २ अशुभाचशुभाचेतिद्विधासाहेतुभेदतः अशु
भामहतांकोपाच्छुभामहदनुग्रहात् ३ हरेर्द्वारपयोर्यद्वद्वैकुंठेवसतोरपि चतुःसनरुषाविष्णुद्वेषाद्यशुभवासना ४
यथाहिदैत्यगर्भेपिप्रह्लादस्यसतःस्थिरा नारदानुग्रहादासविष्णोसद्भक्तिवासना ५ स्वभक्तंचसदाविष्णुर्द्विषंत
मपिरक्षति तृतीयेऽथमंवेद्वास्थावकरोदात्मसात्पुनः ६ अतोमनीषिणायत्नःकार्योमहदनुग्रहे इत्येतदर्थमूती
नामत्रलक्षणमुच्यते ७ तत्रादौदशभिर्दैत्यतत्पुत्रमतिभेदतः महत्कोपानुकंपोत्थवासनाभेदउच्यते ८ सद्वासना

॥श्रीगणेशायनमः राजोवाच समःप्रियःसुहृद्ब्रह्मन्भूतानांभगवान्स्वयं इंद्रस्यार्थे
कथंदैत्यानवधीद्विषमोयथा १ नह्यस्यार्थःसुरगणैःसाक्षान्निःश्रेयसात्मनः नैवासुरेभ्यो
विद्वेषोनोद्वेगश्चागुणस्यहि २ ॥ चयुज्येतकर्मभिःशुद्धचेतसःपैरैस्तपंचभिस्तस्मात् क्रियंतेधर्मनिर्णयः
९ तत्रतुप्रथमेध्यायेहिरण्यकशिपोःसुते विष्णुभक्तेविरोधस्तविप्रशापजईर्यते १० यदुक्तंपूर्वस्कंधांते हतपुत्रादितिः
शक्रपार्ष्णिग्राहेणाविष्णुना मन्युनाशोकदीप्तेनज्वलंतीपर्यचिंतयदिति तच्छ्रुत्वाविस्मितःपरिक्षित् पृच्छति समइ
तित्रिभिः नहिसमस्यसुहृदश्चवैषम्यंनामास्तिनचप्रियस्यप्रीतिकर्तृषुवैषम्यंयुक्तमित्यर्थः १ किंच यस्ययैःप्रयोजनं
सिद्ध्यतिसतत्पक्षपातीभवतियेभ्योविभेतितान्द्वेष्टिद्वेषेणहंति ननुतदत्रास्तीत्याह नहीतिनिःश्रेयसंपरमानंदएवात्मास्वरूपं
यस्यअसुरेभ्यश्चोद्वेगोभयंनास्ति अतोविद्वेषोपिनास्त्येवतत्रहेतुःअगुणस्येतिगुणाधीनौप्रीतिद्वेषावित्यर्थः॥२॥ १॥

श्रीनारायणस्यगुणान् अनुग्रहनिग्रहादीनप्रतिमेमहान्संशयः तंतंसंशयंछेत्तुमर्हति ३ यत्रभागवतस्यप्रह्लादस्यमाहात्म्यंगी
यतइतिसंबंधः ४ कृष्णायव्यासायकृष्णंमुनिंनत्वेत्यर्थः ५ यस्मात्प्रकृतेःपरः अतोनिर्गुणः अतएवाजः अव्यक्तः रागद्वेषादिनि
मित्तभूतदेहेंद्रियादिरहितः सोपिस्वमायागुणंसत्वादिकंआविश्यअधिष्ठायवाध्यान्प्रति यद्वा देवासुरादीनांप्रतिपरस्परंयावाध्यवा
धकतातांगतः प्राप्तः तत्रहेतुर्जीतइत्यर्थः ६ तत्रगुणानांस्वीयत्वेसतिप्राकृतपुरुषवद्विषमः स्यातन्नतुतदस्तीत्याह सत्वमिति

इतिनः सुमहाभागनारायणगुणान्प्रति संशयः सुमहाञ्जातस्तद्भवानछेत्तुमर्हति ३ श्रीशुकउवा
चः साधुपृष्टंमहाराजहरेश्चरितमद्भुतं यत्रभागवतमाहात्म्यंभगवद्भक्तिवर्द्धनं ४ गीयतेपरमं
पुण्यमृषिभिर्नारदादिभिः नत्वाकृष्णायमुनयेकथयिष्येहरेःकथां ५ निर्गुणोपिह्यजोऽव्यक्तोभ
गवानप्रकृतेःपरः स्वमायागुणमाविश्यबाध्यबाधकतांगतः ६ सत्वंरजस्तमइतिप्रकृतेर्नात्मनो
गुणाः नतेषांयुगपद्राजनह्रासउल्लासएववा ७ जयकालेतुसत्वस्यदेवर्षीनरजसोऽसुरान्तम
सोयक्षरक्षांसितत्कालाऽनुगुणोऽभजत ८ ज्योतिरादिरिवाभातिसंघातान्नविविच्यते ॥९॥

ननुस्वेच्छयागुणाधिष्ठानेनापिपक्षपातवैषम्यंस्यादेवनतस्यकालकृतत्वादित्याह नतेषामितिसार्द्धेन उल्लासोवृद्धिः ७ स
त्वस्यजयकालेदेवादीन ऋषींश्च अभजत तत्तद्देहंप्रविश्यवर्द्धयतीत्यर्थः रजसोजयकाले असुरान्तमसोजयकालेयक्षरक्षां
सिइत्यन्वयः तस्यकालस्याऽनुगुणः सन् ८ समस्यापिनिमित्तभेदेनवैषम्येदृष्टांतः ज्योतिर्यथांकाष्ठादिषुजलंयथापात्रेषुआ

भा०स्क०
२

अ०
१

काशोयथाघटादिषु तथानानारूपआभाति ननुतर्हि तद्वद्देवविवेकेनकिंनप्रतीयतेतत्राह संघातात्सुरादिदेहात्तंविविच्य
तेनपृथक्प्रतीयतेतर्हितान् भजतीतिकुतोज्ञायतेतत्राह विदंतीति आत्मानंजीवात्मानंकवयोनिपुणाः मथित्वाकार्यदर्शन।
लिंगेनविचार्यजानंति अंततःस्वभावकालकर्मादिवादनिषेधेन विंदंतीतिपाठेलाभोपिज्ञानमेव अत्रापिज्योतिरादिरिवेति
दृष्टव्यं यथाहिसूर्यकांतादौदाहदर्शनात्ज्योतिर्ज्ञायतेयथाचगंधदर्शनाद्वायुरित्यादि १ तदेवंमायागुणवशेनेतद्वैषम्यंनस्वाभा
विकमित्युक्तंनतर्हिगुणपारतंत्र्यादनीश्वरत्वमाशंक्याह यदाआत्मनोजीवस्यभोगायपुरःशरीराणिपरःपरमेश्वरःसिसृक्षुर्भवति त
दासाम्येनस्थितंरजःपृथक्सृजतिविचित्रासुतासुपूर्षुरिरंसुःक्रीडितुमिच्छुःयदातदासत्वंपृथक्सृजति शयिष्यमाणःसंहरिष्य

विदंत्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः १ यदासिसृक्षुःपुरआत्मनःपरोरजःसृजत्येषपृथ
क्स्वमायया सत्वंविचित्रासुरिरंसुरीश्वरःशयिष्यमाणस्तमईरयत्यसौ १ कालंचरंतंसृजती।
शआश्रयंप्रधानपुंभ्यांनरदेवसत्यकृत् यएषराजन्नपिकालईशितासत्वंसुरानीकमिवैधयत्यजः

न् यदातदातमःपृथगीरयतिप्रेरयति आधिक्यतांनयतीत्यर्थः १ यदासिसृक्षुरित्यादिनिर्देशात्प्रतीतंकालपारतंत्र्यंवारयन्
प्रधानपुरुषपारतंत्र्यमपिवारयति कालमिति हेनरदेव अजःअजन्माप्रधानपुंभ्यांनिमित्तभूताभ्यांसत्यकृत् अमोघकर्ताईश्व
रस्तयोःसहकारित्वेनाश्रयभूतंचरंतंवर्तमानंकालंस्वयमेवसृजतिस्वचेष्टारूपत्वात्कालस्यनतत्पारतंत्र्यमित्यर्थः तथापिप्रस्तुते
किमायातंतत्राह यएषकालःसत्वमेधयतिवर्द्धयति अतोहेतोःईशितापिईश्वरोपिसत्वप्रधानंसुरानीकंदेवसमूहमेधयतीवे
त्यर्थःतत्प्रत्यनीकानसुरानसुरप्रतिपक्षान्प्रमिणोतिहिनस्तिचेत्यन्वयःउरुप्रभूतंश्रवःकीर्तिर्यस्यसःकालशक्तिक्षुभितगुणगतंवैष

राम
२

निधिमात्रेणतदधिष्ठातरिस्फुरतीतिप्रकरणार्थः ११ तदानींतुतयोर्वधोनसुरपक्षपातेन किंतुब्राह्मणशापेनासुरीयोनिंप्राप्तयो
रनुग्रहार्थएवेतिवक्तुमितिहाससमुपक्षिपति अत्रैवेतिद्वेषादिरहितस्यापिदैत्यवधेनारदेनइतिहासःप्रस्तावितः १२ चेदिभूभु
जःशिशुपालस्य १३ १४ एकांतभक्तानामपिदुर्लभाप्राप्तिर्विद्विषोजातेत्येतदद्भुतंहि १५ तस्यतुवेनवन्नरकपातएवोचितइत्याह

तत्सत्यनीकानसुरानसुरप्रियोरजस्तमस्कान्प्रमिणोत्युरुश्रवाः ११ अत्रैवोदाहृतःपूर्वमिति
हासःसुरर्षिणा प्रीत्यामहाक्रतौराजन्पृच्छतेऽजातशत्रवे १२ दृष्ट्वामहाद्भुतंराजाराजसूये
महाक्रतौ वासुदेवेभगवतिसायुज्यंचेदिभूभुजः १३ तत्रासीनंसुरऋषिंराजापांडुसुतःक्रतौप
प्रच्छविस्मितमनामुनीनांशृण्वतामिदं १४ युधिष्ठिरउवाच अहोअत्यद्भुतंह्येतत्दुर्लभैकां
तिनामपि वासुदेवेपरेतत्त्वेप्राप्तिश्चैद्यस्यविद्विषः १५ एतद्वेदितुमिच्छामःसर्वएववयंमुने
भगवन्निंदयावेनोद्विजैस्तमसिपातितः १६ दमघोषसुतःपापआरभ्यकलभाषणात् संप्र
त्यमर्षीगोविंदेदंतवक्त्रश्चदुर्मतिः १७ शपतोरसकृद्विष्णुंयद्ब्रह्मपरमव्ययं श्वित्रोनजातो
जिह्वायांनांधंविविशतुस्तमः १८ कथंतस्मिन्भगवतिदुरवग्राह्यधामनि ॥ ६ ॥ ६ ॥

भगवन्निंदयेति तमसिनरके १६ दमघोषस्यसुतःशिशुपालःकलभाषणात् बाल्येकोमलभाषणमारभ्यसंप्रतिअधुना
पिअमर्षीक्रोधीमत्सरीच १७ श्वित्रःश्वेतकुष्ठं १८ दुरवग्राह्यंदुःप्रापंधामस्वरूपंयस्यतस्मिन्लयंसायुज्यंईयतुःअभूत

भा·स·
३

स्यापिदंतवक्रलयस्यतस्मिन्लयंसायुज्यंतज्जातकप्रामाण्येनसिद्धवन्निर्देशः १९ एतत् अद्भुततमंहि अतएतन्मतिमेम
नोभ्राम्यतिभगवान् सर्वज्ञस्त्वं अस्मत्कृपयाब्रूहि २० आभाष्यसंबोध्यसीदंतिनिषीदंत्यस्यामितिसत्सभातस्याः सदः शृ
ण्वंत्याःसत्याःकथाःप्राहेत्यन्वयः २१ अहोभगवन्निंदकस्यनरकपातेनभाव्यमितिवदतस्तवकोऽभिप्रायःभगवत्पीडाकरत्वेन
वातदभावेपिसुरापानादिवन्निषिद्धनिंदाचरणाद्वा तत्रतावद्देहाभिमानकृतनिंदादिनिमित्तत्वात्पीडादीनांभगवतश्चतदभावा
न्नपीडाशंकास्तीत्याहनिंदनइति सार्द्धैस्त्रिभिः निंदनंदोषकीर्त्तनंन्यक्कारस्तिरस्कारः निंदनस्तुत्यादिज्ञानार्थंप्रधानपुरुषया

पश्यतांसर्वलोकानांलयमीयतुरंजसा १९ एतद्भ्राम्यतिमेबुद्धिर्दीपार्चिरिववायुना ब्रूह्येत
दद्भुततमंभगवांस्तत्रकारणं २० शुकउवाच राज्ञस्तद्वचआकर्ण्यनारदोभगवानृषिः तुष्टःप्रा
हतमाभाष्यशृण्वंत्यास्तत्सदःकथाः २१ नारदउवाच निंदनस्तवसत्कारन्यक्कारार्थंकलेवरं
प्रधानपरयोराजन्नऽविवेकेनकल्पितं २२ हिंसातदभिमानेनदंडपारुष्ययोर्यथा वैषम्यमि
हभूतानांममाहमितिपार्थिव २३ यन्निबद्धोभिमानोऽयंतद्वधात्प्राणिनांवधः तथानयस्य
कैवल्यादभिमानोऽखिलात्मनः ॥ रविवेकेनकलेवरंकल्पितंरचितं २२ तदभिमानेनभूतानांयथाममा
हमितिवैषम्यंतत्कृतंहिंसादिकंचभवतितथानयस्येत्यनंतरेणान्वयः दंडस्ताडनंपारुष्यंनिंदा तयोर्हेतुभूतयोर्हिंसापीडा
चभवति २३ यस्मिन्निबद्धोयमभिमानः तस्यदेहस्यवधाद्वधश्चयथा तथा यस्याभिमानोनास्ति अतः अस्यपरमेश्वरस्य
हिंसाकेनहेतुनाकल्प्यतेनकेनापि अभिमानाभावेहेतुः कैवल्यात् अद्वितीयत्वेनाभिमंतव्याभावात्वैषम्याभावेहेतुःअ

अ
१

खिलात्मनः सर्वात्मनइति तर्हि किमितिहंतिदैत्यान् तत्राह परस्येति दमकर्तुः हितार्थंदंडंकरोतीत्यर्थः २४ यस्माद्भगवतोनिं
दादिकृतंवैषम्यंनास्तितस्माद्येनकेनाप्युपायेन ध्यायतस्तेनैव ध्यानेननिंदादिकृतपापस्यापिनाशात्सायुज्यंयुक्तमित्याशयेनाहत
स्मादितिसप्तभिः निर्वैरेणनास्तिवैरंकेनापियस्मिन् तेनभक्तियोगेनेत्यर्थः युंज्यात्मनइतिशेषः यस्मादेतैरुपायैः पृथक्नेक्षते २५
यस्मादेतैरप्युपायैर्भगवान्स्मर्तृणांमोक्षंदिशत्येवंतेष्वपिवैरानुबंधःश्रेष्ठइत्याह यथेति ननथाभक्तियोगेनापीति २६ अत्रदृष्टं

परस्यदमकर्तुर्हिहिंसाकेनास्यकल्प्यते २४ तस्माद्वैरानुबंधेननिर्वैरेणभयेनवा स्नेहात्कामे
नवायुंज्यात्कथंचिन्नेक्षतेपृथक् २५ यथावैरानुबंधेनमर्त्यस्तन्मयतामियात् ननथाभक्तियो
गेनइतिमेनिश्चितामतिः २६ कीटःपेशस्कृतारुद्धःकुड्यायांतमनुस्मरन् संरंभभययोगेनविं
दतेतत्सरूपतां २७ एवंकृष्णेभगवतिमायामनुजईश्वरे वैरेणपूतपाप्मानस्तमीयुरनुचिंतया
२८ कामाद्द्वेषाद्भयात्स्नेहाद्यथाभक्त्येश्वरेमनः आवेश्यतदघंहित्वाबहवस्तद्गतिंगताः
२९ गोप्यःकामाद्भयात्कंसोद्वेषाच्चैद्यादयोनृपाः संबंधाद्वृष्णयःस्नेहात्यूयंभक्त्यावयंवि
भो ३० कतमोपिनवेनःस्यात्पंचानांपुरुषंप्रति तस्मात्केनाप्युपायेनमनःकृष्णेनिवेशयेत् ३१

तःकीटःपेशस्कृताभ्रमरेणसंरंभोद्वेषः भयंचसएवयोगस्तेनतत्स्वरूपतां तेनैवशरीरेणविंदते २७ वैरेणयात्रनुचिंताचिंतनंतये
वपूतःपाप्मायेषांतेतंप्रापुरिति २८ तानाह कामादिति तदघंकामादिनिमित्तंपापंहित्वा २९ ३० नहिवेनःकिमितिनरकेपातिः
तःतीव्रध्यानाभावात् पापमेवतत्रफलितमित्याह कतमोपीतिपुरुषंश्रीहरिंप्रति पुरुषेपुरुषस्यकामासंभवात् द्वेषादिभिश्चिंतयं

तदेवमितिहासप्रस्तावकथामुक्त्वा श्रीकृष्णे शिशुपालस्य वैरानुबंधे को हेतुरित्यपेक्षायां तमेवेतिहासं वक्तुमाह मातृष्वस्त्रेयइ
ति पदात् वैकुंठात् च्युतौ ३२ हरिदासो अभिमृशति अभिभवतीति तथा कस्य शापः कीदृशो वा अश्रद्धेयः अनादरणीय इव आ
भाति असंभवात् यतो हरेः भक्तानां तथापि वैकुंठवासिनां भवो जन्म इतीयत ३३ असंभवमेवाह जन्महेतुभूतैः प्राकृतैर्देहें

मातृष्वस्त्रेयो वश्चैद्यो दंतवक्रश्च पांडव पार्षदप्रवरौ विष्णोर्विप्रशापात्पदाच्युतौ ३२ युधि
ष्ठिर उवाच कीदृशः कस्य वा शापो हरिदासाभिमर्शनः अश्रद्धेय इवाभाति हरेरेकांतिनां भवः
३३ देहेंद्रियासुहीनानां वैकुंठपुरवासिनां देहसंबंधसंबद्धमेतदाख्यातुमर्हसि ३४ नारद
उवाच एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया सनंदनादयो जग्मुश्चरंतो भुवनत्रयं ३५
पंचषट्हायनार्भाभाः पूर्वेषामपि पूर्वजाः दिग्वाससः शिशून्मत्वा द्वाःस्थौ तान्प्रत्यषेधतां
३६ अशपन्कुपिता एवं युवां वासं न चार्हथः रजस्तमोभ्यां रहिते पादमूले मधुद्विषः पापि
ष्ठामासुरीं योनिं बालिशौ यातमाश्वतः ३७ एवं शप्तौ स्वभवनात्पतंतौ तैः कृपालुभिः ॥

द्रियासुभिर्हीनानां शुद्धसत्वमयदेहानामित्यर्थः प्राकृतदेहसंबंधेन संबद्धमेतदाख्यानमाख्यातुमर्हसि ३४ ३५ कथंभूताः
पंचवा षट्वा हायनानि वर्षाणि येषां ते अर्भा बालाः तद्वदाभा येषां ते पूर्वेषां मरीच्यादीनामपि पूर्वजाः तेभ्यः प्रथमं जाताः
दिग्वाससः दिगंबराः अतः शिशून्मत्वा ३६ वासमपि नार्हथः कुतः पुनस्तत्सेवामिति चकारार्थः हे बालिशौ अतो हेतोः आशु

स्वस्थानप्राप्तयेकल्पतांतावताअयंशापः समाप्यतामितिपुनः प्रोक्तावित्यर्थः ३८ ३९ धरोद्धारेनिमित्तेनतत्प्रतिघाती हतः ४० हिरण्यकशिपोर्वधेकारणंसूचयति हिरण्यकशिपुः पुत्रमिति ४१ सर्वभूतानामात्मभूतं कुतः सममनुस्यूतंव

प्रोक्तौपुनर्जन्मभिर्वांत्रिभिर्लोकायकल्पतां ३८ जज्ञातेतौदितेः पुत्रौदैत्यदानववंदितौ हि
रण्यकशिपुर्ज्येष्ठोहिरण्याक्षोनुजस्ततः ३९ हतोहिरण्यकशिपुर्हरिणासिंहरूपिणा हिर।
ण्याक्षोधरोद्धारेविभ्रतासौकरंवपुः ४० हिरण्यकशिपुः पुत्रंप्रह्लादंकेशवप्रियंजिघांसुरकरो
न्नानायातनामृत्युहेतवे ४१ सर्वभूतात्मभूतंतंप्रशांतंसमदर्शनं भगवत्तेजसास्पृष्टंनाशक्नो।
द्धंतुमुद्यमैः ४२ ततस्तौराक्षसौजातौकेशिन्यांविश्रवः सुतौ रावणः कुंभकर्णश्चसर्वलो
कोपतापनौ ४३ तत्रापिराघवोभूत्वान्यहनच्छापमुक्तये रामवीर्यंश्रोष्यसित्वंमार्कंडेय
मुखात्प्रभो ४४ तावेवक्षत्रियौजातौमातृष्वस्रात्मजौतव अधुनाशापनिर्मुक्तौकृष्णचक्र
हतांहसौ ४५ वैरानुबंधतीव्रेणध्यानेनाच्युतसात्मतां नीतौपुनर्हरेः पार्श्वंजग्मतुर्विष्णुपार्षदौ
४६ युधिष्ठिरउवाच विद्वेषोदयितेपुत्रेकथमासीन्महात्मनि॥

ह्येवपश्यतीतितथातंअतः प्रशांतंद्वेषा
दिरहितंअतएवभगवत्तेजसास्पृष्टंव्याप्तं उद्यमैः शस्त्रास्त्रप्रहारादिभिः ४२ विश्रवसः सुतौ ४२ न्यहनत्हतवानित्यर्थः
तर्हितदेवकथनीयमित्युत्सुकंप्रत्याह रामवीर्यमिति ४४ कृष्णचक्रेणहतमंहोययोस्तौ तयोः पापमेवहतंनतुतावित्यर्थः

तात्राच्युतेकचित्तत्वंतदपिब्रूहीतिशेषः ४७ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटीकायांप्रथमोध्यायः १ द्वितीयेवि
ष्णुतेषेणलोकंविद्राव्यसनवैः तद्वतभ्रातृपुत्रादीनितिहासैरसांत्वयत् १ भगवतद्वेषएवनतद्वेषेपिकारणमित्याशयेनाहभ्रा
तरीत्यादिना एवंदेवपक्षपातेनइन्द्रस्यहितंमिच्छता १ कोपेनउत्अतिशयेनज्वलद्भ्यांकोपाग्निधूमेनेवधूम्रमंवरंनिरीक्षमाणः २

ब्रूहिमेभगवन्येनप्रह्लादस्याच्युतात्मता ४७ इतिश्रीभागवतेमहापुराणेसप्तमेस्कंधेना
रदयुधिष्ठिरसंवादेप्रथमोऽध्यायः १ नारदउवाच भ्रातर्येवंविनिहतेहरिणाक्रोडमूर्तिना
हिरण्यकशिपूराजन्पर्य्यतप्यद्रुषाशुचा १ आहचेदंरुषाघूर्णः संदष्टदशनच्छदः कोपो
ज्ज्वलद्भ्यांचक्षुर्भ्यांनिरीक्षन्धूम्रमंबरं २ करालदंष्ट्रोग्रदृष्ट्यादुःप्रेक्षभ्रुकुटीमुखः शूलमु
द्यम्यसदसिदानवानिदमब्रवीत् ३ भोभोदानवदैतेयाद्विमूर्द्धन्त्र्यक्षशंबर शतबाहोहयग्री
वनमुचेपाकइल्वल ४ विप्रचित्तेममवचःपुलोमन्शकुनादयः शृणुतानंतरंसर्वेक्रिय
तामाशुमाचिरं ५ सपत्नैर्घातितःक्षुद्रैर्भ्राताभेदयितःसुहृत् पार्ष्णिग्राहेणहरिणासमेना
प्युपधावनैः ६ तस्यत्यक्तस्वभावस्यघृणेर्मायावनौकसः ॥ करालदंष्ट्राभिर्युक्तयाउग्रयादृष्ट्या

दुःप्रेक्ष्यंभ्रुकुटीयुक्तंमुखंयस्यसः ३ ४ ५ समेनापिउपधावनैर्भजनैः निमित्तभूतैः पार्ष्णिग्राहेणसताभेभ्राताहतः
६ एवंत्यक्तःस्वभावःसमत्वंयेनतस्यघृणेः शुद्धतेजोमयस्यापिमाययावनौकसःवराहरूपस्यसतः अस्थिरात्मनः

अव्यवस्थितचित्तस्य कुतः योयोभजतितंभजमानस्यअनुसरतः ७ तस्यकृष्णस्यरुधिरेणयावत्तर्प्पयिष्यामितावद्यूयंभु
वंयातेतितृतीयेनान्वयः ८ ननुदेवैस्तद्वधः कारितः अतस्तेकिंनहन्यंतेतत्राह तस्मिन्हरौकूटेकपटेअहितेप्रतिपक्षेकूट
मोहितंयस्यैतिवानष्टेअदृष्टेसतिदेवाः शुष्यंतिस्वयमेवनाशंयास्यंति कुतः विष्णुरेवप्राणोयेषांतेयथाछिन्नमूले वृक्षेशा।

भजंतंभजमानस्यबालस्यैवास्थिरात्मनः ७ मच्छूलभिन्नग्रीवस्यभूरिणारुधिरेणवै रुधि
रप्रियंतर्प्पयिष्येभ्रातरंमेगतव्यथः ८ तस्मिन्कूटेऽहितेनष्टेछिन्नमूलेवनस्पतौ विटपा
इवशुष्यंतिविष्णुप्राणादिवौकसः ९ तावद्यातभुवंयूयंविप्रक्षत्रसमेधितां सूदयध्वंतपोय
ज्ञस्वाध्यायव्रतदानिनः १० विष्णुर्द्विजक्रियामूलोयज्ञोधर्ममयः पुमान् देवर्षिपितृभूतानां
धर्म्मस्यचपरायणं ११ यत्रयत्रद्विजागावोवेदावर्णाश्रमाः क्रियाः तंतंजनपदंयातसंदीप
यतवृश्चत १२ इतिस्वभर्तृनिर्द्देशमादायशिरसादृताः तथाप्रजानांकदनंविदधुः कदन
प्रियाः १३ पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ॥ खाः स्वयंशुष्यतितद्वत् ९ तपोयज्ञादियुक्तान्सू
दयध्वंघातयत १० ननुतैः किमपराधंतत्राह विष्णुरितिद्विजानांक्रियाअनुष्ठानंमूलंयस्यसः यतोऽसौयज्ञोधर्ममयश्चदे
वादीनांपरायणंपरमआश्रयः अतोयज्ञरूपस्यविष्णोर्मूलत्वात् मामनादृत्यतदाश्रयणाच्चैतेवध्याइतिभावः ११ तस्मात्परमंमंत्रे
ग्रणुनेत्याह यत्रयत्रेति संदीपयतदहत वृश्चतछेदंकुरुतयज्ञोपयोगिवृक्षानितिशेषः १२ १३ पुरंहट्टादिमत्ग्रामस्तद्रहितःव्रं

आरामोः कृत्रिमंवनंआश्रमऋषीणांस्थानं आकरोरत्नादीनांखेटः कृषीवलानांवासः खर्वटोगिरिद्रोण्याश्रयोग्रामः। घोषआभीराणांवासः पत्तनंराजधानी १४ खनित्रैः खननसाधनैः आजीव्यान् उपजीव्यान् जंघाम्रकपित्थादीन् शरणा निग्रहान् १५ विप्रकृतेउपद्रुतेयज्ञभागानामभावात् दिवंपरित्यज्यअलक्षिताःसन्तःभुविचेरुः १६ तदेवंप्रजानांकदनं

खेटखर्वटघोषांश्चददहुःपत्तनानिच १४ केचित्खनित्रैर्बिभिदुःसेतुप्राकारगोपुरान् आ जीव्यांश्चिच्छिदुर्वृक्षान्केचित्परशुपाणयः प्रादहन्शरणान्यन्येप्रजानांज्वालितोल्मुकैः १५ एवंविप्रकृतेलोकेदैत्येंद्रानुचरैर्मुहुः दिवंदेवाःपरित्यज्यभुविचेरुरलक्षिताः १६ हिरण्यकशिपुर्भ्रातुः संपरेतस्यदुःखितः कृत्वाकटोदकादीनिभ्रातृपुत्रानसांत्वयत् १७ शकुनिंशंबरंधृष्टंभूतसंतापनंवृकं कालनाभंमहानाभंहरिश्मश्रुमथोत्कचम् १८ तन्मात रंरुषाभानुंदितिंचजननींगिरा श्लक्ष्णयादेशकालज्ञइदमाहजनेश्वर १९ हिरण्यकशिपु रुवाच अंबांबहेवधूः पुत्रावीरंमार्हथशोचितुं रिपोरभिमुखेश्लाघ्यःशूराणांवधईप्सितः २०

दानवेषुकुर्वत्सुस्वयंस्वर्गराज्यादिसाधयितुंतपस्तप्तुकामः प्रथमंयत्कृतवान् तदाहहिरण्यकशिपुरित्यादिना कटोद कंप्रेतायप्रदेयमुदकंआदिशब्दात्प्रेतश्राद्धंच ॥१७ ॥ १८ ॥ तन्मातरंतेषांशकुनिशंबरादीनांमातरंरुषाभानुंभानु ॥ संज्ञाम् ॥ १९ ॥ हेवधूरितिभ्रातुर्भार्यांसंबोधयति २० ॥ ॥

भवतु नाम तस्य श्लाघ्यो वधः तथाप्यस्माकं तावत् बंधुर्गत एवेति चेत्तत्राह भूतानामिति दैवेन प्राचीनकर्मणा एकत्र नीता नां संयोजितानां पुनश्च स्वैः स्वैः कर्मभिरुन्नीतानां वियोजितानां २१ एवं लौकिक दृष्ट्या शोकं निवार्य तत्त्वदृष्ट्या वारयति नि त्य इति आत्मा नित्यः मृत्युशून्यः अव्ययः अपक्षयशून्यः शुद्धः निर्मलः सर्वगः सर्वगतः सर्ववित् सर्वज्ञश्च सर्वत्र हेतुः परो दे हादिव्यतिरिक्तः अतो मृत इति क्व गत इति मलिन इति वियुक्त इति अज्ञ इति च मत्वा शोको न कार्य इत्यर्थः कथं तर्हि तस्य संसार

भूतानामिह संवासः प्रपायामिव सुव्रते दैवेनैकत्र नीतानामुन्नीतानां स्वकर्मभिः २१ नि त्य आत्माव्ययः शुद्धः सर्वगः सर्ववित्परः धत्तेऽसावात्मनो लिंगं मायया विसृजन् गुणान् २२ यथांभसा प्रचलता तरवोपि चला इव चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः २३ एवं गु णैर्भ्राम्यमाणे मनस्यविकलः पुमान् याति तत्साम्यतां भद्रे ह्यलिंगो लिंगवानिव २४ एष आ त्मविपर्यासो ह्यलिंगे लिंगभावना एष प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः २५ संभवश्च विनाशश्च शोकश्च विविधः स्मृतः अविवेकश्च चिंता च विवेकास्मृतिरेव च २६ ॥ ॥

तत्राह धत्त इति आत्मनो मायया स्वाविद्यया लिंगं मूर्तीः धत्ते गुणान् उच्चावचान् देहान् सुखदुःखादीन् वा धत्ते विशेषेण सृज न् स्वीकुर्वन् लिंगशरीरोपाधिः संसारी इत्यर्थः २२ एतत्सदृष्टांतं प्रपंचयति यथेति चतुर्भिः तरवः प्रतिबिंबिताः उपाधिधर्मा उप हिते भवंतीति दृष्टांतमुक्त्वा याहक धर्मा याह्यभवंतीति दृष्टांतमाह चक्षुषेति २३ अविकलः परिपूर्ण एवं तत्साम्यतां मनः सम तामित्यर्थः २४ लिंगभावना देहाभिमानः एष आत्मनो विपर्यासः अन्यथाभावः तमेवाह प्रियैर्वियोगः अप्रियैर्योगश्च कर्म च

भा०स० अत्रापि शोकहेतुं विनाहरथैवायंशोक इत्यस्मिन्नर्थे प्रेतस्य मृतस्य कस्यचिद्देवंधस्तेषांच संवादं शृणुत २७ उपासततस्स
७ मीपे आवृत्यस्थिता इत्यर्थः २८ विशीर्णे रत्नमयं कवचं यस्य विभ्रष्टानि आभरणानि स्रजश्च यस्य शरेण निर्भिन्नं हृदयं यस्य स्रव
२ त्कजारक्तेन रुधिरेण आविलं लिप्तं २९ प्रकीर्णाः केशा यस्य ध्वस्ते अक्षिणी यस्य रभसा संरंभेण दष्टो दच्छद ओष्ठो येन रजसा कुंठं

अत्राप्युदाहरंतीममितिहासंपुरातनं यमस्य प्रेतबंधूनां संवादं तन्निबोधत २७ उशीनरेष्वभू
द्राजासुयज्ञ इति विश्रुतः सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत २८ विशीर्णरत्नकवचं विभ्रष्टा
भरणस्रजं शरनिर्भिन्नहृदयं शयानमसृगाविलं २९ प्रकीर्णकेशं ध्वस्ताक्षं रभसा दष्टदच्छदं
रजः कुंठमुखांभोजं छिन्नायुधभुजं मृधे ३० उशीनरेंद्रं विधिना तथा कृतं पतिं महिष्यः प्रसमी
क्ष्य दुःखिताः हताः स्म नाथेति करैरुरो भृशं घ्नंत्यो मुहुस्तत्पदयोरुपापतन् ३१ रुदंत्य उच्चैर्दयि
तांघ्रिपंकजं सिंचंत्य अस्रैः कुचकुंकुमारुणैः विस्रस्तकेशाभरणाः शुचं नृणां सृजंत्य आक्रंदन
याविलेपिरे ३२ अहो विधात्राऽकरुणेन नः प्रभो भवान्प्रणीतो दृगगोचरां दशां उशीनराणा
मसिवृत्तिदः पुरा कृतो धुना येन शुचां विवर्द्धनः ३३ ॥ ॥ ॥ आवृतं मुखांभोजं यस्य छिन्नमायुधं
भुजश्च यस्य ३० तस्य पादयोरुपसमीपे आसमंतात् अपतन् ३१ ३२ विलापमेवाह अहो इति द्वाभ्यां अकरुणत्वमेवाहुः
येन विधात्रा दृशामगोचरां दशां भवान् प्रणीतो गमितः तेन विधात्रा त्वमधुना शुचां विवर्द्धनः कृतोसीत्यन्वयः ३३ ॥ ॥

हेमहीपतेत्वयासुत्दत्तमेनविनावयंकथंस्यामभवेम जीवेमइत्यर्थः अतः हेवीरयत्रत्वंयास्यसितत्रते अनुयानं अनुगमनंत
वपादयोः शुश्रूषांकुर्वतीनामस्माकंदिशदेहि आज्ञामितिशेषः ३४ निर्हारंदाहार्थंनयनमनिच्छंतीनां अस्तं अस्ताचलंप्रति ३५
परिदेवितंरोदनं स्वपुर्यामेवस्थितोयमः आश्रुत्यश्रुत्वा ३६ तत्रस्वयमेवोपागतोयमः बालकोभूत्वातानाह अहोइत्यादिना अ
होआश्चर्यं वयसा अस्मत्तोधिकानामपिलोकस्यविधिंजन्ममरणादिप्रकारंविपश्यतामपिविमोहः मोहमेवाह यत्रयस्मात् अ

त्वयाहृतज्ञेनवयंमहीपतेकथंविनास्यामसुत्दत्तमेनते तत्रानुयानंतववीरपादयोः शुश्रू
षतीनांदिशयत्रयास्यसि ३४ एवंविलपतीनांवैपरिगृह्यमृतंपतिं अनिच्छतीनांनिर्हारम
र्कोस्तंसंन्यवर्तत ३५ तत्रहप्रेतबंधूनामाश्रुत्यपरिदेवितं आहतान्बालकोभूत्वायमः
स्वयमुपागतः ३६ यमउवाच अहोअमीषांवयसाऽधिकानांविपश्यतांलोकविधिंविमो
हः यत्रागतस्तत्रगतंमनुष्यंस्वयंसधर्मा अपिशोचंत्यपार्थं ३७ अहोवयंधन्यतमायदत्रत्य
क्ताः पितृभ्यांनविचिंतयामः अभक्ष्यमाणा अबलावृकादिभिः सरक्षितारक्षतियोहिगर्भे ३८

व्यक्तादागतः तत्रैवगतमपार्थंशोचंति तदुक्तंगीतासु अव्यक्तादीनिभूतानिव्यक्तमध्यानिभारत अव्यक्तनिधनान्येवतत्रका
परिदेवनेति किंच स्वयमपिसधर्माः मृतेनसहसमानोमृत्युलक्षणोधर्मोयेषांतथाभूता अपिशोचंति ३७ अहोवयंयुष्मत्तो
धन्यतमाः यतः अबलादुर्बलाबाला अपिवृकादिभिरभक्ष्यमाणावयंनविचिंतयामः तत्रहेतुः योंतर्गर्भेरक्षति सएवहिविश्वं

ननुतस्यरक्षणेकिंप्रयोजनंनकिंचिदपिकिंतुक्रीडैवकेवलमित्याहयइति यईशः इदंविश्वंलीलयासृजतिरक्षतिअवलुंपतेसंहरतिचभोअवलाः तस्येशितुश्चराचरंक्रीडासाधनमाहुः अतःसएवनिग्रहेसंहारेसंग्रहेपालनेचप्रभुः ३९ प्रभुत्वमेवान्वयव्यतिरेकाभ्यांदर्शयति पथीतिदिष्टेनदैवेनईश्वरेणरक्षितंचेत् तेनेश्वरेणविहतंउपेक्षितंचेत्गृहेस्थितंयत्नतःपाल्यमानमपि अस्यहतःतेनोपेक्षितः ४० तदेवमात्मनोजन्ममरणादिकमंगीकृत्येश्वराधीनत्वान्नशोकःकार्यइत्युक्तं इदानींतुदेहानामेवजन्मादिनत्वात्मनइत्याहभूतानीतित्रिभिः भूतानिदेहाःनिजयोनिःस्वकारणभूतंलिंगशरीरंतन्निमित्तैःकर्मभिः

यदृच्छयेशःसृजतीदमव्ययोयएवरक्षत्यवलुंपतेचयः तस्याऽबलाःक्रीडनमाहुरीशितुश्चराचरंनिग्रहसंग्रहेप्रभुः ३९ पथिच्युतंतिष्ठतिदिष्टरक्षितंगृहेस्थितंतद्विहतंविनश्यति जीवत्यनाथोऽपितदीक्षितोवनेगृहेऽपिगुप्तोऽस्यहतोनजीवति ४० भूतानितैस्तैर्निजयोनिकर्मभिर्भवंतिकालेनभवंतिसर्वशः नतत्रहात्माप्रकृतावपिस्थितस्तस्यागुणैरन्यतमोनिबध्यते ४१ इदंशरीरंपुरुषस्यमोहजंयथापृथक्भौतिकमीयतेगृहं ॥

भवंतिजायंतेनभवंतिनश्यंतिचसर्वशः देवादिदेहाअपि तत्रहतदा प्रकृतौदेहेस्थितोप्यात्मातस्याःप्रकृतेर्गुणैःदेहधर्मैर्जन्मादिभिर्नबध्यतेनयुज्यते यतःअन्यतमोदेहादत्यंतंविलक्षणः ४१ नन्वहंकृशःस्थूलइत्यादौनवैलक्षण्यंप्रतीयते तत्राह इदमिति इदंशरीरंमोहजंअविवेकादात्मत्वेनजातं वस्तुतस्तुपृथगेवयतःईयतेदृश्यतेभौतिकंचयथागृहमित्यन्वयः अत्रैवंप्रयोगःद्रष्टुरभौतिकत्वाच्चपुरुषात्शरीरंभिन्नंदृश्यत्वात्भौतिकत्वाच्चयथाऽत्यंताविवेकिनआत्मत्वेनाभिमत

भौतिकत्वानुमानं विदृष्टवन्नात्मनो जन्माद्यभावमुपसंहरति यथाश्रौदकैः परमाणुभिर्जातो बुद्बुदादिः यथा च पार्थिवैर्जा
तो घटादिर्यथा च तैजसैर्जातः कुंडलादिर्विनश्यति तथानैरेव त्रिविधैः परमाणुभिः जातो जनो देह एव विकृतः परिणतः स
न्विनश्यति न त्वात्मेत्यर्थः ४२ पृथगवस्थानाभावेऽपि भिन्नत्वे दृष्टांतद्वयमाह यथेति यथाऽनलो दारुष्वेवस्थितोऽपि दा
हकत्वेन प्रकाशकत्वेन भिन्न एव प्रतीयते यथा च देहगतोऽप्यनिलो मुखनासिकादिषु पृथक्स्थित एव प्रतीयते तथा
देहस्थत्वेऽप्यात्मनस्तद्धर्मयोगाभावे दृष्टांतमाह यथा नभो न सज्जते क्वापि संगं न प्राप्नोति तथा पुमानपि सर्वेषां गुणानां दे

यथौदकैः पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति ४२ यथाऽनलो दारुषु
भिन्न ईयते यथाऽनिलो देहगतः पृथक्स्थितः यथा नभः सर्वगतं न सज्जते तथा पुमान्
सर्वगुणाश्रयः परः ४३ सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ यः श्रोता योऽनुवक्तेह स न द्
श्यते कर्हिचित् ४४ न श्रोता नानुवक्ताऽयं मुख्योऽप्यत्र महानसुः यस्त्विहेंद्रियवानात्मा स चा

हेंद्रियादीनामाश्रयः तेष्वाश्रितो वा परः पृथगेवेत्यर्थः ४३ किंच हे मूढाः यमनुशोचथ ॥ न्यः प्राणदेहयोः ४५
सोऽयं युष्मत्भर्ता सुयज्ञः शेते किमिति शोचथ नन्वेतावंतं कालमसौ शृणोति अनंतरं प्रतिवक्ति च प्रस्तुतं ददाति इदानीं त
स्यादर्शनान्मृत इति शोचाम इति चेत् स तु शोचनीयो न भवति प्रागपि तस्य श्रोतुर्वक्तुरदर्शनादित्याह यः श्रोतेति ४४ ननु
मुखनासिकासंचारी प्राणः श्रोता वक्ता च दृष्ट एव इति चेत् नासौ श्रोता वक्ता वा अचेतनत्वादित्याह न श्रोतेति महानसु
र्वेंद्रियचेष्टाहेतुः अत एव मुख्यः प्राणो वै मुख्य इति श्रुतेः कस्तर्हि वक्ता श्रोता च तत्राह यस्त्विह देहेंद्रियैस्तत्तदर्थद्रष्टा आत्मा

॥०॥ [illegible]

ननुचेतनत्वेअन्यत्वेचतस्याहंकृशः स्थूलः काणोवधिरइत्यादिदेहधर्मोपलब्धिः कुतः त त्राह भूतेंद्रियमनोभिर्लिंग्यंते लक्ष्यंतइतितथातान् देहानतेभ्योन्यएवभजति अहमितिमन्यतेतर्हिकथंमोक्षस्तत्राह तच्चभजनंस्वेनतेजसाविवेकबलेन उत्सृजत्यपिहिइत्यनुभवंप्रमाणयति ४६ ननुविवेकानंतरमप्याहारादिकर्मसुप्रवृत्तेर्बंधः स्यादेवेत्यतआहयावदिति या वल्लिंगशरीरेणान्वितः तदभिमानवानात्माभवतितावदेवतस्यतत्कर्मनिबंधनंबंधहेतुर्भवति ततोविपर्ययः देहधर्मभाक्त्वंत तः क्लेशश्चानुवर्तते ननुलिंगाभिमानेनिवृत्तेपि यतोऽयंमायायोगोविपर्ययादिर्मायययायुज्यतइतितथानपरमार्थइत्यर्थः ४७

भूतेंद्रियमनोलिंगान् देहानुच्चावचान्विभुः भजत्युत्सृजतिह्यन्यस्तच्चापिस्वेनतेजसा ४६ यावल्लिंगान्वितोह्यात्मातावत्कर्मनिबंधनं ततोविपर्ययः क्लेशोमायायोगोनुवर्तते ४७ वितथाभिनिवेशोयंयद्गुणेष्वर्थदृग्वचः यथामनोरथः स्वप्नः सर्वमैंद्रियकंमृषा ४८ अथनित्यमनित्यंवानेहशोचंतितद्विदः नान्यथाशक्यतेकर्तुंस्वभावः शोचतामिति ४९ लुब्धकोविपिनेकश्चित्पक्षिणांनिर्मितोंतकः वितत्यजालंविदधेतत्रतत्रप्रलोभयन् ५० ॥

ननुसुखदुःखादीनांतत्साधनानांचसत्यत्वप्रतीतेः कुतोमायामयत्वंतथाचबहवोवादिनः सत्यत्वमेववदंतितत्राह वितथेति वितथोमिथ्याभूतोऽयमभिनिवेशः कोसौयुगुणेषुतत्कार्येषुसुखदुःखादिषुअर्थः परमार्थइतिदृक्वचश्चेतियत्सकुतइत्यतआहयथेति यथामनोरथः स्वप्नः ४८ उपसंहरतिअथ तस्मात् नित्यमात्मानंअनित्यंदेहंवातद्विदः नित्यमनित्यंचजानंतःनशोचंतिनन्वेवमुपदेष्टारोपिशोचंतोदृश्यन्तेतत्राह नान्यथेतिज्ञानदार्ढ्याभावात्स्वभावोननिवर्त्ततइत्यर्थः ४९ सयंसधर्मा अपीति यदुक्तंतत्रेतिहासमाहलुब्धकइत्यादिनापक्षिणामंतकईश्वरेणनिर्मितः सन्यत्रयत्रतेतत्रतत्रतान्कणादिभिः प्रलो

कुलिंगः कंदभक्षीपक्षिविशेषः कुलिंगयोर्मिथुनं ५१ शिचस्तंत्यांजालस्यसूत्रे असज्जतवंधंप्रापतां आपन्नां आपदंप्राप्तां दृ
ष्ट्वाकुलिंगः पक्षीतांमोचितुमकल्पः सन्पर्यदेवयत्वृक्षशाखामाश्रित्यविलापंचकार ५२ आकरुणयासर्वतोनुकंपयास्त्रि

कुलिंगमिथुनंतत्रव्यचरत्समदृश्यत तयोः कुलिंगीसहसालुब्धकेनप्रलोभिता ॥ ५१ ॥ साऽ
सज्जतशिचस्तंत्यांमहिषीकालयंत्रिता कुलिंगस्तांतथापन्नांनिरीक्ष्यभृशदुःखितः स्नेहा
दकल्पःकृपणःकृपणांपर्यदेवयत ५२ अहोअकरुणोदेवःस्त्रियाकरुणयाविभुः कृपणं
मानुशोचंत्यादीनयाकिंकरिष्यति ५३ कामंनयतुमांदेवःकिमर्द्धेनात्मनोहिमे दीनेनजीवता
दुःखमनेनविधुरायुषा ५४ कथंत्वजातपक्षांस्तान्मातृहीनान्बिभर्म्यहं मंदभाग्याःप्रती
क्षंतेनीडेमेमातरंप्रजाः ५५ एवंकुलिंगंविलपंतमारात्प्रियावियोगातुरमश्रुकंठं सएवतंशाकुनि
कःशरेणविव्याधकालप्रहितोविलीनः ५६ एवंयूयमपश्यंत्यआत्मापायमबुद्धयः नैनं
प्राप्स्यथशोचंत्यःपतिंवर्षशतैरपि ५७ हिरण्यकशिपुरुवाच बालएवंप्रवदतिसर्वेविस्मित
चेतसः ज्ञातयोमेनिरसर्वमनित्यमयथोत्थितं ५८ ॥ याकिंकरिष्यति ५३ आत्मनोदेहस्यार्द्धेनविधुरा

युषाभार्याशून्यजीवितेनानेनदुःखंयथाभवत्येवंजीवताकिंमेप्रयोजनं अतोमामपिकामंनयत्वित्यन्वयः ५४ नजाताःपक्षाये
षांतान् बालकान् कथंविभर्मिपुष्यामिमंदभाग्याःप्रजामातरंप्रतीक्षंते ५५ शाकुनिकःपक्षिहंताविलीनःसन् ५६ आत्मापायं

सांपरायिकंपरलोककृत्यं ५९ अशोचंतेतिपाठेअडागमआर्षः स्वःपरइत्यभिनिवेशएवाज्ञानंतेनविना ६० सस्नुषा
स्नुषयासहिता ६१ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटीकायांद्वितीयोऽध्यायः २ तृतीयेतस्यतपसातप्तंवीक्ष्यजग
द्विधिः आगत्यविस्मितस्तेनसंस्कृतः सवरानदात् १ तदेवंसाधूनांकदनेदानवानादिश्यबंधूनांशोकंतत्वनिरूपणेनापनीय

यमएतदुपाख्यायतत्रैवांतरधीयत ज्ञातयोपिसुयज्ञस्यचक्रुर्यत्सांपरायिकं ५९ ततः॥
शोचतमायूयंपरंचात्मानमेवच कआत्माकःपरोवात्रस्वीयःपारक्यएववा स्वपराभिनिवे
शेनविनाज्ञानेनदेहिनां ६० नारदउवाच इतिदैत्यपतेर्वाक्यंदितिराकर्ण्यसस्नुषा पुत्र
शोकंक्षणात्त्यक्त्वातत्वेचित्तमधारयत् ६१ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेद्विती
योध्यायः २ श्रीनारदउवाच हिरण्यकशिपूराजन्नजेयमजरामरं आत्मानमप्रतिद्वंद्वमे
कराजंव्यधित्सत १ सतेपेमंदरद्रोण्यांतपः परमदारुणं ऊर्द्ध्वबाहुर्नभोदृष्टिः पादांगुष्ठाश्रि
तावनिः २ जटादीधितिभीरेजेसंवर्त्तार्कइवांशुभिः ॥तस्मिंस्तपस्तप्यमानेदेवाःस्थानानिभेजिरे

यत्कृतवान् तदाह हिरण्यकशिपुरित्यादिना अप्रतिद्वंद्वंप्रतिपक्षहीनंएकराजंएकमेवराजानंव्यधित्सतकर्तुमैच्छत् १ ऊ
र्द्ध्वौबाहूयस्यनभसिदृष्टिर्यस्यपादांगुष्ठेनाश्रिताअवनिर्येन २ जटानांदीधितिभिः अंशुभिः रश्मिभिः प्रलयकर्त्तार्कइवरेजे पू
र्वेयेअलक्षिताः संतोभुविविचेरुस्तेदेवाः पुनः स्वानिस्थानानिभेजिरे ३॥ ३॥ छ॥ छ॥ छ॥ छ॥ छ॥ छ॥

विष्वगीरितः सर्वतः प्रसृतः सन् त्रिलोकीमतपत् तापयामास ४ द्वीपैरद्रिभिश्च सहिताभूश्चचाल ५ ६ तवबलिहाराः कर
प्रदाः पूजाकारिणइतिवा अभितोभवतीत्यभिभूः हेअभिभोसर्वाधिपते पाठांतरेभोइतिसंबोधनंअभितोयावन्ननंक्ष्यंतीतिसं
बंधः ७ ब्रह्मणस्तस्मिन्द्वेषमुत्पादयितुंतत्संकल्पमाहुः तस्येतिचतुर्भिः अथाप्यस्माभिर्निवेदितंत्वयाश्रूयतां ८ तपोयो
गयोः समाधिनानिष्ठयासर्वधिष्ण्येभ्यः श्रेष्ठंनिजासनंसत्यलोकंयथा अध्यास्ते अधितिष्ठति ९ तत्तथैवात्मनः साधयिष्या

तस्यमूर्ध्नः समुद्भूतः सधूमोग्निस्तपोमयः तिर्यगूर्ध्वमधोलोकानतपद्विष्वगीरितः ४ चुक्षु
भुर्नद्युदन्वंतः सद्वीपाद्रिश्चचालभूः निपेतुः सग्रहास्ताराजज्वलुश्चदिशोदश ५ तेनतप्तादि
वैत्यक्त्वाब्रह्मलोकंययुः सुराः धात्रेविज्ञापयामासुर्देवदेवजगत्पते ६ दैत्येंद्रतपसातप्ता
दिविस्थातुंनशक्नुमः तस्यचोपशमंभूमन्विधेहियदिमन्यसे लोकानयावन्नंक्ष्यंतिबलि
हारास्तवाऽभिभो ७ तस्यायंकिलसंकल्पश्चरतोदुश्चरंतपः श्रूयतांकिंनविदितस्तवाथा
पिनिवेदितं ८ सृष्ट्वाचराचरमिदंतपोयोगसमाधिना अध्यास्तेसर्वधिष्ण्येभ्यः परमेष्ठीनि
जासनं ९ तदहंवर्द्धमानेनतपोयोगसमाधिना कालात्मनोश्चनित्यत्वात्साधयिष्येतथा

मि ननुब्रह्मणाअतिदीर्घायुषातपस्तप्त्वातत्साधितंअन्यः कुतस्तत्साधयेत् तत्राहुः कालात्मनोरि॥ त्मनः॥ १०॥
ति यद्यप्यायुषोऽल्पत्वेनदेहोवारंवारंम्रियेत तथा पिकालस्यात्मनश्चनित्यत्वात् बहुभिर्जन्मभिस्तपस्तप्त्वातत्साधयिष्यामेवं

वर्द्धमानेनेति यदुक्तं तस्य फलमाह अन्यथेति अन्यथा सुरासुरादिव्यत्ययेन अयथापूर्वं पुण्यपापादिव्यत्ययेन इदं जग
द्विधास्यामि अन्यैः वैष्णवादिभिः ध्रुवादिपदैः किं प्रयोजनं अहं तत्सदं एव साधयिष्यामि ११ इति त्वन्यदापहरणे तस्य निर्बंधं शु
श्रुम अतएवास्तीतपः परममास्थितः वर्त्तते यदत्र युक्तं तत् अनंतरमेव विधत्स्व १२ अन्यथा तव स्थानभ्रंशे सति साधूनाम नि

अन्यथेदं विधास्येऽहमयथापूर्वमोजसा किमन्यैः कालनिर्धूतैः कल्पांते वैष्णवादिभिः ११
इति शुश्रुम निर्बंधं तपः परममास्थितः विधत्स्वानंतरं युक्तं स्वयं त्रिभुवनेश्वर १२ तवासनं द्वि
जगवां पारमेष्ठ्यं जगत्पते भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च १३ इति विज्ञापितो देवैर्भगवा
नात्मभूर्नृप परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमं १४ न ददर्श प्रतिच्छन्नं वल्मीकतृणकी
चकैः पिपीलिकाभिराचीर्णं मेदस्त्वङ्मांसशोणितं १५ तपंतं तपसा लोकान्यथाऽभ्रापिहितं
रविं विलक्ष्य विस्मितः प्राह प्रहसन्हंसवाहनः १६ ब्रह्मोवाच उत्तिष्ठोत्तिष्ठ भद्रं ते तपः सि
द्धोऽसि काश्यप वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः १७ अद्राक्षमहमेतं ते हृत्सारं महद
द्भुतं दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते १८ ॥ एवं स्यादिति शोचंत आहुः तव पारमेष्ठ्यमिदमासनं द्विजा
नां गवां च भवाय उद्भवाय श्रेयसे सुखाय भूत्यै ऐश्वर्याय क्षेमाय लब्धपालनाय विजयाय उत्कर्षाय १३ १४ वल्मीकादिभिः प्र
तिच्छन्नं प्रथमं न ददर्श पश्चात् कथंचिद्विलक्ष्य तं प्राहेति द्वयोरन्वयः पिपीलिकाभिः आचीर्णं समंताद्भक्षितं मेदश्च त्वक् च मांसं
च शोणितं च यस्य १५ अभ्रैरापिहितं छन्नं रविमिव विलक्ष्य विस्मितः प्राह १६ १७ हृत्सारं धैर्यं दंशैर्मक्षिकादिविशेषैर्भक्षितो

निरंबुः निषिद्धमंबुयेनसः त्यक्तोदक इत्यर्थः १९ तेत्वयाऽनेनव्यवसायेनचताववजितोऽहं तपोनिष्ठेनभवतातुसुतरांजितः २०
मर्त्यस्यतवअमर्त्यस्यममदर्शनमफलं निष्फलंनभवतिअतोवरंवृणीष्व २१ ॥ आदौभवतीत्यादिभवः ब्रह्माऔक्षतप्रोक्षितवान्

नैतत्पूर्वर्षयश्चक्रुर्नकरिष्यंतिचापरे निरंबुर्धारयेत्प्राणान्कोवैदिव्यसमाः शतं १९ व्यवसा
येनतेऽनेनदुष्करेणमनस्विनां तपोनिष्ठेनभवताजितोऽहंदितिनंदन २० ततस्तआशिषःस
र्वाददाम्यसुरपुंगव मर्त्यस्यतेअमर्त्यस्यदर्शनंनाफलंमम २१ नारदउवाच इत्युक्त्वादिभ
वोदेवोभक्षितांगंपिपीलिकैः कमंडलुजलेनौक्षद्दिव्येनाऽमोघएधसा २२ सतत्कीचकव
ल्मीकात्सहओजोबलान्वितः सर्वावयवसंपन्नोवज्रसंहननोयुवा उत्थितस्तप्तहेमाभोवि
भावसुरिवैधसः २३ सनिरीक्ष्यांबरेदेवंहंसवाहमवस्थितं ननामशिरसाभूमौतद्दर्शनमहो॥
त्सवः २४ उत्थायप्रांजलिः प्रह्व ईक्षमाणोदृशाविभुं हर्षाश्रुपुलकोद्भेदोगिरागद्गदयाऽगृणात् २५
हिरण्यकशिपुरुवाच कल्पांतेकालसृष्टेनयोंधेनतमसावृतं अभिव्यनक्जगदिदंस्वयंज्यो
तिः स्वरोचिषा २६ ॥ २२ वज्रवत्संहननंअंगदार्ढ्यंयस्य तप्तस्यहेम्नइवआभादेहकांतिर्यस्यसगिराअगृणादित्यु
त्तरेणान्वयः २३ तस्यदर्शनमेवमहानुत्सवोयस्य २४ हर्षेणाश्रूणिपुलकोद्भेदश्चयस्यसः २५ अंधेननिविडेनतत्रहेतुः काल
सृष्टेनप्रकृतिगुणरूपेणनतुध्वांतेन तमसावृतमिदंजगतयः अभिव्यनक् अभिव्यक्तमकरोत् २६ ॥ ❀ ॥ ३ ॥ ७ ॥ ❀ ॥

यश्चत्रिगुणेनात्मनाइदंजगत्सृजति अवतिपालयतिलुंपति —— संहरतिचतस्मैरजः सत्वतमसांधाम्नेआश्रयायमहते
परायपरमेश्वरायनमइतिद्वयेनान्वयः २७ अत्रचस्वप्रकाशत्वंजगत्प्रकाशकत्वंतत्कारणत्वंततत्सृष्ट्यादिकर्तृत्वंमहत्वंपरमेश्व
रत्वंचेतिषड्विधत्वमुक्तंतदेवप्रपंचयन्नमस्करोति नमइतिचतुर्भिः बीजायकारणायतत्रहेतुः आद्यायज्ञानंज्ञप्तिः विज्ञानंविष
याकारंज्ञानंमूर्तिर्यस्यतस्मैअनेनस्वप्रकाशकत्वंजगत्प्रकाशकत्वंचदर्शितं बीजायेतिनिमित्तत्वमुक्तं उपादानत्वमाह प्राणाद
योयेविकारास्तैरूपैर्व्यक्तिंकार्याकारंईयुषेप्राप्तवते २८ एवमात्मनात्रिवृताचेत्यनेनोक्तंकारणत्वंद्वेधादर्शितंमहत्वमीश्वरत्वं

**आत्मनात्रिवृताचेदंसृजत्यवतिलुंपति रजःसत्वतमोधाम्नेपरायमहतेनमः २७ नमआ
द्यायबीजायज्ञानविज्ञानमूर्तये प्राणेंद्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे २८ त्वमी
शिषेजगतस्तस्थुषश्चप्राणेनमुख्येनपतिः प्रजानां चित्तस्यचित्तेर्मनइंद्रियाणांपतिर्महा
न्भूतगुणाशयेशः २९ त्वंसप्ततंतून्वितनोसितन्वात्रय्याचतुर्होत्रकविद्ययाच ॥ ॥**

चाह त्वमिति त्वमेवजगतोजंगमस्यतस्थुषः स्थावरस्यचईशिषेनियंताभवसिकेनमुख्येनप्राणेनसूत्रात्मरूपेणअतस्त्वं
प्रजानांपतिः तासांचित्तस्यचित्तेश्चतत्परिणामभूतायाश्चेतनायाः मनसश्चतन्नियम्यानामिंद्रियाणांचपतिः अतस्त्वमेवम
हान्भूतानामाकाशादीनांतद्गुणानांशब्दादिविषयाणांआशयानांतद्वासनानामीशश्चएतेनैवस्रष्टृत्वंदर्शितं २९ इदा
नींयज्ञप्रवर्तकत्वेनांतर्यामित्वेनजगत्पालकत्वमाह त्वमेवसप्ततंतून् अग्निष्टोमादियज्ञान्विस्तारयसि कथं त्रय्यात
न्वावेदत्रयरूपेण कथंभूतयाचत्वारोहोतारोयत्रतच्चातुर्होत्रंकर्मतद्विषययाविद्यया ॥ ॥ ॥ ॥ ॥ ॥

आत्मवतांप्राणिनामात्मभूतस्त्वमेवांतरात्माचअंतर्यामी कुतःयतःकविःसर्वज्ञः ततकुतःएकःअखंड त अहेतुः अनादिः
अनंतपारश्चेति नास्त्यंतःपारश्चकालतःदेशतोयस्यसः ३० कालरूपेणसंहर्तृत्वमाहत्वमेवेति लवाद्यैःकालावयवैःक्षिणो
विक्षपयसि तदेवंसृष्ट्यादिकर्तृत्वेपिनिर्विकारत्वमेवाह कूटस्थइति तत्रहेतवः आत्माज्ञानरूपःपरमेष्ठीपरमेश्वरः अजःज
न्मशून्यः महान् अपरिच्छिन्नः किंच जीवलोकस्यकर्मवशाज्जन्मादिभिर्विक्रियतेत्वंतुतस्यजीवःजीवनुस्यहेतुः यतस्त
स्यात्मानियंता ३१ ततकुतस्तत्राहत्वत्तइति त्वत्तोव्यतिरिक्तंयदिकिंचिद्भवेततर्हि तस्मात्तवजन्मादिविकारोनियम्यत्वादि

त्वमेकआत्मात्मवतामनादिरनंतपारःकविरंतरात्मा ३० त्वमेवकालोऽनिमिषोजना
नामायुर्लवाद्यावयवैःक्षिणोषि कूटस्थआत्मापरमेष्ठ्यजोमहांस्त्वंजीवलोकस्यचा
जीवआत्मा ३१ त्वत्तःपरंनापरमप्यनेजदेजच्चकिंचिव्द्यतिरिक्तमस्ति विद्याकलास्ते
तनवश्चसर्वाहिरण्यगर्भोऽसिबृहत्त्रिपृष्ठः ३२ व्यक्तंविभोस्थूलमिदंशरीरंयेनेंद्रियप्राणमनोगुणांस्त्वं

कंवाभवेत् ततुनास्तीत्याहत्वत्तःपरंकारणंअपरंकार्यंतत्रचेजत्जंगमंअनेजत्स्थावरंचव्यतिरिक्तंनास्तिननुमद्बोधकशास्त्रं
व्यतिरिक्तमस्तीतिचेत् नयतःविद्यावेदोपवेदादिविद्यास्थानानिकलाश्च तदंगानि तवैवतनवः ननुत्वव्द्यतिरिक्ताःततकु
तःयतःत्वंबृहत् ब्रह्मैवासितदपिकुतः तत्राह हिरण्यरूपंब्रह्मांडंगर्भेयस्यसः त्रिपृष्ठःत्रिगुणात्मकस्यप्रधानस्यपृष्ठेपरतः
स्थितः अक्षरात्परतःपरइत्यादिश्रुतेः ३२ ननुब्रह्मांडशरीरस्यजीवस्यममकुतोब्रह्मत्वंकुतोवाब्रह्मांडगर्भत्वादितत्राह- व्यक्तं
कार्यमिदंतवशरीरंव्यक्तंसत्यमितिवा येनशरीरेणत्वमिंद्रियप्राणमनसांगुणान् विषयान्भुंक्षे किंच पारमेष्ठ्येपरमैश्वर्येधाम

दंशितौवृद्धकवचौ १५ स्वायुधाढ्यौशोभनायुधसंपन्नौ १६ पुरुषाधमायस्मादितिवास्तवोर्थः हेपुरुषोत्तमेति १७ गुप्तेनसर्वांतरत्वात् दर्शनानर्हेणहेऽमंदस्वघ्नातीतिवंधुरविद्यानांहंतीतिनया हेअविद्यानिरसनेति याहिप्राप्नुहि १८ अ

त्रयोविंशत्यनीकाख्यंभूमेर्भारमपाकुरु एवंसंमंत्र्यदाशार्हौदंशितौरथिनौपुरात् १५
निर्जग्मतुःस्वायुधाढ्यौवलेनाल्पीयसावृतौ शंखंदध्मौविनिर्गत्यहरिर्दारुकसारथिः
१६ ततोऽभूत्परसैन्यानांहृदिवित्रासवेपथुः तावाहमागधोवीक्ष्यहेकृष्णपुरुषाध
म १७ नत्वयायोद्धुमिच्छामिवालेनैकेनलज्जया गुप्तेनहित्वयामंदनयोत्स्येयाहिवं
धुहन् १८ तवरामयदिश्रद्धायुद्धस्वधैर्यमुद्वह हित्वावामच्छरैश्छिन्नंदेहंस्वर्याहि
माजहि १९ श्रीभगवानुवाच नवैशूराविकत्थंतेदर्शयंत्येवपौरुषं नगृह्णीमोवचोराज
न्नातुरस्यमुमूर्षतः २० श्रीशुकउवाच जरासुतस्तावभिसृत्यमाधवौमहावलौघेनव
लीयसाऽवृणोत् ससैन्ययानध्वजवाजिसारथीसूर्य्यानलौवायुरिवाभ्ररेणुभिः २१

च्छेद्यदेहोऽसावितिस्वयमेवमत्वाऽपरितोषात्पक्षांतरमाह यद्वामांजहीति १९ यथाश्रुतार्थग्रहणेनभगवतउत्तरंनैव शूराइति विकत्थंतेश्लाघंते २० माधवौमधुवंशसंभवौ महतासैन्यसमूहेनावृतवान् वायुरभ्रैःहर्म्यरेणु भिश्चाग्निं यथेमदर्शनमात्रमेवावरणमितिसूचितं २१ ॥

२२ परस्यानीकानि सैन्यानि तान्येव पयोमुचो मेघास्तेषां शिलीमुखा वाणाः तेषामत्युल्वणं वर्षं तेन पीडितं व्यस्फूर्जयन्
उज्जृंभितवान् २३ तदाह गृह्णन्निति निषंगादिषुधेः शरान् गृह्णन् अथ तान् गुणे संदधत् गुणमाकृष्य निशितवाणसमूहान् मुंचन् निघ्नन् प्रहरन् पत्तिः पदातिः निरंतरमिति ग्रहणादि क्रियाविशेषणं ज्वलत्कालभ्रमणे यथा चक्रवद्दृश्यमानमित्यर्थः

सुपर्णतालध्वजचिह्नितौ रथावलक्षयंत्यो हरिरामयोर्मृधे स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः संमुमुहुः शुचार्दिताः २२ हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्वणवर्षपीडितं स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमं॥ २३ गृह्णन्निषंगादथ संदधच्छरान् विकृष्य मुंचन् शितवाणपूगान् निघ्नन् रथान् कुंजरवाजिपत्तीन् निरंतरं यद्वदलातचक्रं २४ निर्भिन्नकुंभाः करिणो निपेतुरनेकशोऽश्वाः शरवृक्णकंधराः रथा हताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकंधराः २५ संछिद्यमानद्विपदेभवाजिनामंगप्रसूताः शतशोऽसृगापगाः भुजाऽहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाकुलाः २६॥ व्यस्फूर्जयदिति २४ हता अश्वाः ध्वजाः सूताः नायकारथिनश्च येषु ते २५ संछिद्यमानाद्द्विपदादिभावाजिनस्तेषामंगेभ्यः प्रसूता असृगापगाः रुधिरनद्यः परस्परं प्रवर्तिताः इति वृत्तीयेनान्वयः प्रसिद्धनदीरूपकमाह भुजा एव अहयो यासु ताः पुरुषाणां शीर्षाण्येव कच्छपा यासु ताः द्विपा

भा॰ द॰
उ॰
३

कराः उरवश्च मीना यासु ताः नराणां केशाएव शैवलं यासु ताः धनूंष्येव तरंगा आयुधान्येव गुल्मास्तैश्च तैश्च संकुलाः अ
च्छूरिका ध्वर्माणि च क्रा णि वातान्येवावर्त्ताः तैर्भयानकाः महामणीनां प्रवेकाः उत्तमा आभरणानि च यथायथं अस्मानः।
शर्कराश्च यासु ताः २७ भीरूणां भयावहाः मनस्विनां हर्षकार्य्यः २८ किंच संकर्षणेनापि तद्बलं क्षयं प्रणीतं अंगहेरा

करोरुमीनानरकेशशैवला धनुस्तरंगायुधगुल्मसंकुलाः अच्छूरिकावर्त्तभयान
कामहामणिप्रवेकाभरणाश्मशर्कराः २७ प्रवर्त्तिता भीरुभयावहा मृधे मनस्विनां हर्ष
करीः परस्परं विनिघ्नताऽरीन्मुसलेन दुर्मदान् संकर्षणेनापरिमेयतेजसा २८ बलं तदं
गार्णवदुर्गभैरवं दुरंतपारं मगधेंद्रपालितम् क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्ज
गदीशयोः परं २९ स्थित्युद्भवांतं भुवनत्रयस्य यः समीहतेऽनंतगुणः स्वलीलया न तत्
सचित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते ३० जग्राह विरथं रामो जरासं
धं महाबलं हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा ३१॥ ॥ ९ जन् अर्णववत् दुर्गं दुर्गमं भैरवं भयं
करं च यतो दुरंतपारं अंतोऽत्र तलं पारमवधिः दुःशब्दो निषेधे विक्रमेणागाधं देशतश्च निरवधिकमित्यर्थः किंच मगधेंद्रे
ण च पालितं बलं यद् एवं भूतं रामकृष्णयोः कर्मोक्तं तत्परं केवलं तयोर्विक्रीडितं न तु पराक्रमः २९ न चैतदाश्चर्य्यमित्या
ह स्थित्युद्भवांतमिति तर्हि किमित्याश्चर्य्यमिव वर्णितं तत्राह तथापीति मर्त्याननुविधत्ते अनुकरोतीति मर्त्यानुविधस्तस्य ३० किं

राम
३

हतावहुशः अरातयोयेनतथाभूतमपिजरासंधंवध्यमानंवारयामासेति ३२ ३३ पवित्रार्थानिधर्मोपदेशपराणिपदा
नियेषुतैर्वाक्यैर्नयनैर्नीतिभिः प्राकृतैर्लौकिकैः तत्रलौकिकन्यायमाहुः स्वकर्मेति यदुभिरल्पकैः कृत्वातेमहतः पराभ
वः केवलंकर्मवंधेनप्राप्तः अतस्त्वयानलज्जितव्यमिति ३४ वार्हद्रथोजरासंधः ३५ मुकुंदोपिययावित्यनुषंगः नक्षतं

वध्यमानंहतारातिंपाशैर्वारुणमानुषैः वारयामासगोविंदस्तेनकार्यचिकीर्षया
३२ समुक्तोलोकनाथाभ्यांव्रीडितोवीरसंमतः तपसेकृतसंकल्पोवारितःपथिराजभिः
३३ वाक्यैःपवित्रार्थपदैर्नयनैःप्राकृतैरपि स्वकर्मवंधप्राप्तोऽयंयदुभिस्तेपराभवः ३४
हतेषुसर्वानीकेषुनृपोवार्हद्रथस्तदा उपेक्षितोभगवतामगधान्दुर्मनाययौ ३५
मुकुंदोऽप्यक्षतवलोनिस्तीर्णोरिवलार्णवः विकीर्यमाणःकुसुमैस्त्रिदशैरनुमो
दितः ३६ माथुरैरुपसंगम्यविज्वरैर्मुदितात्मभिः उपगीयमानविजयःसूतमागधवं
दिभिः ३७ शंखदुंदुभयोनेदुर्भेरीतूर्याण्यनेकशः वीणावेणुमृदंगानिपुरंप्रविशतिप्रभौ
सिक्तमार्गांहृष्टजनांपताकाभिरलंकृतां॥ एवलंयस्ततः तस्यैवामृतदृष्ट्याक्षतप्रतिसंधानादितिभावः नि
स्तीर्णः अनायासेनैवतीर्णोऽरिवलार्णवोयेनसाधुसाध्वित्यनुमोदितश्च ३६ प्रत्युद्यतैर्माथुरावासिभिः जनैरभिसंगम्यमि
लित्वा ३७ तदाप्रभौपुरंप्रविशतिसतिशंखादयोनेदुः ३८ कथंभूतांपुरंतदाह सिक्तमार्गामिति ब्रह्मघोषेणवेदघोषेण।

भा·द·
उ·
४

निर्घुष्टांनिनादितांकौतुकेनउत्सवेनआसर्वतोबद्धानितोरणानियस्यांतां ३९ निचीयमानःविकीर्यमाणः प्रविवेशेतिवि परिणतानुषंगः ४० आयोधनंरणभूमिस्तत्रस्थंवित्तंवीराणांभूषणं ४१ तावतीतिच्छेदःतावतिपराजयेवर्त्तमानेपित्र्य

निर्घुष्टांब्रह्मघोषेणकौतुकाबद्धतोरणां ३९ निचीयमानोनारीभिर्माल्यदध्यक्षतांकुरैः निरीक्ष्यमाणःसस्नेहंप्रीत्युत्कलितलोचनैः ४० आयोधनगतंवित्तमनंतंवीरभूषणं यदुराजायतत्सर्वमाहृतंप्रादिशत्प्रभुः ४१ एवंसप्तदशकृत्वस्तावत्यक्षौहिणीबलः युयुधेमागधोराजायदुभिःकृष्णपालितैः ४२ अक्षिण्वंस्तद्बलंसर्वंवृष्णयःकृष्णतेजसा हतेषुस्वेष्वनीकेषुत्यक्तोऽयादरिभिर्नृप ४३ अष्टादशमेसंग्रामआगामिनितदंतरा नारदप्रेषितोवीरोयवनःप्रत्यदृश्यत ४४ रुरोधमथुरामेत्यतिसृभिर्म्लेच्छकोटिभिः नृलोकेचाप्रतिद्वंद्वोवृष्णीन्श्रुत्वात्मसंमितान् ४५ तंदृष्ट्वाऽचिंतयत्कृष्णःसंकर्षणसहायवान् अहोयदूनांवृजिनंप्राप्तंह्युभयतोमहत् ४६ यवनोऽयंनिरुंधेऽस्मानद्यतावन्महाबलः मागधोऽप्यद्यवाश्वोवापरश्वोवागमिष्यति ४७॥

९ अक्षौहिण्योबलंयस्यसः सप्तदशकृत्वःसप्तदशवारान् युयुधे ४२ अक्षिण्वन्क्षयंनिन्युः ४३ अष्टादशमे अष्टादशेसंग्रामेभाव्येतन्मध्ये अकस्मात्कालयवनःप्राप्तः ४४ आत्मसमितान्स्वतुल्यान् ४५ वृजिनंदुःखंउभयतः यवनात्जरासंधाच्च ४६ तदाहद्वयेननिरुंधेनिरुणद्धि ४७॥ ६ ॥

राम
४

अस्य अनेन ४८ ४९ समुद्रमध्ये दुर्गं तन्मध्ये नगरं कृत्स्नाद्भुतं सर्वाश्चर्य्यमयं अचीकरत् कारयामास ५० त्वष्टाविश्वक
र्मा नदीयं शिल्पनैपुणं च क्रियाकौशलं तदाह सार्द्धैस्त्रिभिः रथ्येति रथ्या राजमार्गाः पुरतः वीथ्यः उपमार्गाः पश्चिमतः उभ
यतोपि चत्वराण्यंगणानि तन्मध्ये कोष्ठाः ततोप्यंतः सुवर्णभवनानि तदुपरि स्फाटिकाट्टालिकास्तदुपरि हेमकुंभा इति॥
वहुभूमिकं यथावास्तु वास्तुगृहादिनिर्माणस्थानं तदनतिक्रम्य विनिर्मितं ५१ सुराणां द्रुमलताश्चयेषु तान्युद्यानानि विचि

आवयोर्युद्ध्यतोरस्य यद्यागंता जरासुतः वंधून्वधिष्यत्यथवा नेष्यते स्वपुरं वली ४८
तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् तत्र ज्ञातीन्समाधाय यवनं घातयामहे ४९
इति संमंत्र्य भगवान्दुर्गं द्वादशयोजनं अंतःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ५० दृ
श्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणं रथ्याचत्वरवीथीभिर्य्यथावास्तु विनिर्मितम् ५१
सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् हेमशृंगैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः ५२
राजतारकूटैः कोष्ठैर्हेमकुंभैरलंकृतैः रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥५३॥ ॥

त्रोपवनानि च तैरन्वितं हेममयानि शृंगाणि येषु तैर्दिविस्पृग्भिः अत्युच्चैः स्फाटिका अट्टाला उपरिभूमिका गोपुराणि
च द्वाराणि तैर्निर्मितमित्युत्तरेणान्वयः ५२ राजतारकूटैः रजतं च आरकूटं च पीतलोहं ताभ्यां निर्म्मितैः कोष्ठैः अश्वशाला
ऽश्वशालादिभिः कथंभूतैर्हेमकुंभैरलंकृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः हैमैः सौवर्णैः महामरकतमयानि स्थलानि

किंचनगरद्वाराद्दौवास्तोष्पतीनांदेवानांचगृहैर्वलभीभिश्चंद्रशालिकाभिश्चनिर्म्मितंयदुदेवगृहैः राजगृहैरुल्लसत्शोभ
मानं ५४ पारिजातंचप्राहिणोत् प्रस्थापयामासेतिशुकपरीक्षित्संवादात्पूर्व्वभावित्वात् भूतनिर्द्देशः मर्त्त्यधर्म्माः क्षुत्पिपा
सादिषड्रूर्म्मिभिः ५५ निधिपतिः कुवेरः अष्टौकोशान्निधीन् पद्मश्चैवमहापद्मो मत्स्यकूर्म्मौतथोदकः नीलोमुकुं

वास्तोष्पतीनांचगृहैर्व्वलभीभिश्चनिर्मितं चातुर्व्वर्ण्यजनाकीर्णंयदुदेवगृहोल्लसत्
५४ सुधर्म्मांपारिजातंचमहेंद्रःप्राहिणोद्धरेः यत्रचावस्थितोमर्त्योमर्त्यधर्म्मैर्न्नयुज्यते
५५ श्यामैककर्णान्वरुणोहयाञ्छुक्लान्मनोजवान् अष्टौनिधिपतिःकोशान्लोकपा
लोनिजोदयान् ५६ यद्यद्भगवतादत्तमाधिपत्यंस्वसिद्धये सर्व्वंप्रत्यर्प्पयामासुर्हरौभू
मिगतेनृप ५७ तत्रयोगप्रभावेननीत्वासर्व्वजनंहरिः प्रजापालेनरामेणकृष्णःसमनु
मंत्रितः निर्ज्जगामपुरद्वारात्पद्ममालीनिरायुधः ५८ इतिश्रीभागवतेमहापुराणेदश
मस्कंधेदुर्गनिवेशनंनामपंचाशत्तमोध्यायः ५० ॥ ६ ॥ ॥ ६ ॥

दः शंखश्चनिधयोष्टौप्रकीर्त्तिता इतिप्रसिद्धान् निजोदयान् निजविभूतीः ५६ अन्येचसिद्धादयोभगवतास्वाधिकारसिद्धये
यत् यदाधिपत्यंदत्तमासीत् तत्सर्व्वंप्रत्यर्पयामासुरिति ५७ यथाकालयवनोनवेतिनचासौजनः तथायोगप्रभावेननीत्वात्र
मत्रस्थितप्रजाःपालयअहंपलायिष्येइतिसमनुमंत्रितः कृतानुमंत्रइत्यर्थः ५८ इतिदशमेटीकायांपंचाशत्तमः ५०॥ ६ ॥

एकपंचाशत्तमे ऽहन्मुचुकुंददृशाहरिः यवनंमुचुकुंदेनस्तुतः सन्नन्वकंपत १ यवनेंद्रसुतात्कालयवनाद्यद्दुभीषणा त् हरिर्हरगिरः स्वैरंपालनायपलायत २ यदागार्ग्यः श्यालेनषंढ इत्युक्तस्तदायादवैरुपहसिते क्रुद्धोसौश्रीमहेशंप्र साद्ययदुभीषणंपुत्रंवरंलब्धवान् ततश्चयवनेंद्रेणाऽपुत्रेणास्वक्षेत्रेपुत्रोत्पादनायप्रार्थितोगार्ग्यः कालयवनमजीज

॥श्रीशुकउवाच तंविलोक्यविनिष्क्रांतमुज्जिहानमिवोडुपं दर्शनीयतमंश्यामं पीतकौशेयवाससं १ श्रीवत्सवक्षसंभ्राजत्कौस्तुभामुक्तकंधरं पृथुदीर्घचतुर्बाहुंन वकंजारुणेक्षणं २ नित्यप्रमुदितंश्रीमत्सुकपोलंशुचिस्मितं मुखारविंदंबिभ्राणं स्फुरन्मकरकुंडलं ३ वासुदेवोह्ययमितिपुमान्श्रीवत्सलांछनः चतुर्भुजोरविंदाक्षोव नमाल्यतिसुंदरः ४ लक्षणैर्नारदप्रोक्तैर्नान्योभवितुमर्हति निरायुधश्चलन्पद्भ्यांयोत्स्येनेन निरायुधः ५ इतिनिश्चित्ययवनः प्राद्रवंतंपराङ्मुखं अन्वधावज्जिघृक्षुस्तंदुरापमपि योगिनां ६ हस्तप्राप्तमिवात्मानंहरिणासपदेपदे नीतोदर्शयतादूरंयवनेशोद्रिकंदरं ७

नदितिपुराणप्रसिद्धं गुहाद्वाराद्विनिष्क्रांतंउज्जिहानंउद्गच्छंतं १ २ नित्यप्रमुदितमित्यादिमुखारविंदविशेषणं ३ ४ नारदोक्तै रेतैर्लक्षणैरयंपुमान्वासुदेवएवनान्योभवितुमर्हति अयंचनिरायुधः अतोऽनेनपद्भ्यामेवचलन्निरायुधोहंयोत्स्यामि ५ इतिनि श्चित्यतंपराङ्मुखंप्राद्रवंतमन्वधावदित्यन्वयः ६ आत्मानंहस्तप्राप्तमिवदर्शयतादूरंनीतइत्यन्वयः॥७॥ ८ ॥ ९ ॥

भा० द०

अहताशुभः अक्षीणकर्मा ८ ९ तंशयानमच्युतंमत्वाअताडयदिति १० ११ तस्यक्रुद्धस्यदृष्टिपातेनसंदीप्तोयः॥ स्वदेहजोऽग्निस्तेन १२ यवनमर्दयतिहिनस्तीतितथासकस्यवंश्यः किंवीर्यः कीदृक्प्रभाववान् किंतेजः कस्यवीर्येपुत्रइ

पलायनंयदुकुलेजातस्यतवनोचितम् इतिक्षिपन्ननुगतोनैनंप्रापाहताशुभः ८ एवंक्षिप्तोऽपिभगवान् प्राविशद्गिरिकंदरम् सोऽपिप्रविष्टस्तत्रान्यंशयानंददृशेनरम्॥ ९ नन्वसौदूरमानीयशेतेमामिहसाधुवत् इतिमत्वाऽच्युतंमूढस्तंपदासमताडयत् १० सउत्थायचिरंसुप्तः शनैरुन्मील्यलोचने दिशोविलोकयन्पार्श्वेतमद्राक्षीदवस्थितम् ११ सतावत्तस्यरुष्टस्यदृष्टिपातेनभारत देहजेनाग्निनादग्धोभस्मसादभवत्क्षणात् १२ राजोवाच कोनामसपुमान्ब्रह्मन्कस्यकिंवीर्यएवच कस्माद्गुहांगतःशिश्येकिंतेजोयवनार्दनः १३ श्रीशुकउवाच सइक्ष्वाकुकुलेजातोमांधातृतनयोमहान् मुचुकुंदइतिख्यातोब्रह्मण्यःसत्यसंगरः १४ सयाचितःसुरगणैरिंद्राद्यैरात्मरक्षणे॥ असुरेभ्यःपरित्रस्तैस्तद्रक्षांसोऽकरोच्चिरम् १५ लब्ध्वागुहंतेस्वःपालंमुचुकुंदमथाब्रुवन् राजन्विरमतांकृच्छ्राद्भवान्नःपरिपालनात् १६॥ नरलोकेपरित्यज्यराज्यंनिहतकंटकम्॥

त्यर्थः शिश्येअशयिष्ट १३ सत्यःसंगरोयुद्धंप्रतिज्ञावायस्यसः १४ १५ गुहंकार्त्तिकेयंस्वःपालंस्वर्गपालकंसेनान्यम् १६

गनाइत्यर्थः १७ किंच सुताइति तुल्यकालीयाः तत्समानकालीनाः कालिताः विचालिताः १८ मत्प्रजाः कोऽन्यः कालयेदि

अस्मान्पालयतोवीरकामास्तेसर्वउज्झिताः १७ सुतामहिष्योभवतोज्ञातयोऽमात्यमंत्रि
णः प्रजाश्चतुल्यकालीयानाऽधुनासंतिकालिताः १८ कालोबलीयान्बलिनांभगवानीश्व
रोऽव्ययः प्रजाःकालयतेक्रीडन्पशुपालोयथापशून् १९ वरंवृणीष्वभद्रंतेऋतेकैव
ल्यमद्यनः एकएवेश्वरस्तस्यभगवान्विष्णुरव्ययः २० एवमुक्तःसवैदेवानभिवंद्यमहा
यशाः निद्रामेवततोवव्रेसराजाश्रमकर्षितः २१ यःकश्चिन्ममनिद्रायाभंगंकुर्यात्सुरो
त्तमाः सहिभस्मीभवेदाशुतथोक्तश्चसुरैस्तदा अशयिष्टगुहाविष्टोनिद्रयादेवदत्तया॥
२२ स्वापंयातेयस्तुमध्येबोधयेत्त्वामचेतनः सत्वयादृष्टमात्रस्तुभस्मीभवतुतत्क्षणात्॥
२३ यवनेभस्मसान्नीतेभगवान्सात्वतर्षभः आत्मानंदर्शयामासमुचुकुंदायधीमते २४
तमालोक्यघनश्यामंपीतकौशेयवाससम् श्रीवत्सवक्षसंभ्राजत्कौस्तुभेनविराजितम्
२५ चतुर्भुजंरोचमानंवैजयंत्याचमालया चारुप्रसन्नवदनंस्फुरन्मकरकुंडलम् २६॥६

तिचेदतआह कालइति कालयतेइतस्ततश्चालयति १९ तस्यकैवल्यस्य २० २१ गुहायांप्रविष्टःशेतेस्म।२२।२३।२४।२५

२७ धर्षितः अभिभूतः दुर्धर्षमप्रधृष्यं २८ विपिने अरण्ये तत्रापि गिरेः गह्वरे दुःप्रवेशस्थाने तत्रापि उरुकंटके पद्मपलाश ॥३६॥३६॥३६॥३६॥३६॥३६॥

प्रेक्षणीयं नृलोकस्य सानुरागस्मितेक्षणम् अपीच्यवयसं मत्तमृगेंद्रोदारविक्रमम् २७ पप्रच्छ स महाबुद्धिस्तेजसा तस्य धर्षितः शंकितः शनकै राजा दुर्धर्षमिव तेजसा २८ मुचुकुंद उवाच को भवानिह संप्राप्तो विपिने गिरिगह्वरे पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकंटके २९ किंस्वित्तेजस्विनां तेजो भगवान्वा विभावसुः सूर्यः सोमो महेंद्रो वा लोकपालो परोऽपि वा ३० मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् यद्बाधसे गुहाध्वांतं प्रदीपः प्रभया यथा ३१ शुश्रूषतामव्यलीकमस्माकं नरपुंगव स्वजन्म कर्म गोत्रं वा कथ्यतां यदि रोचते ॥ ३२ वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबंधवः मुचुकुंद इति प्रोक्तो यौवनाश्वात्मजः प्रभो ३३ ॥ चिरप्रजागरश्रांतो निद्रयापहतेंद्रियः शयेऽस्मिन्विजने कामं केनाप्युत्थापितोऽधुना ३४ सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना अनंतरं भवान्श्रीमाँल्लक्षितोऽमित्रशातनः ३५ तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः हतौजसो महाभाग माननीयोऽसि देहिनाम् ३६ ॥

सदृशाभ्यां पद्भ्यां विचरसीति २९ तेजःमूर्तिः प्रभावो दीप्तिर्वा ३० सर्वत्रापरितोषादाह मन्य इति पुरुषर्षभं श्रीविष्णुम् गुहाध्वांतमंत

३७।३८ क्वचित् कदाचित् कश्चित् यद्यपि रजांस्यपि विममे गणितवान् तथापि जन्मानि कर्माणि न विमिमीते ३९।४०।४१।४२। नेतिग्मच

एवं संभाषितो राज्ञा भगवान्भूतभावनः प्रत्याह प्रहसन्वाण्या मेघनादगभीरया ३७ श्री
भगवानुवाच जन्मकर्माभिधानानि संति मेऽग सहस्रशः न शक्यंते ऽनुसंख्यातुमनंतत्वा
न्मयाऽपि हि ३८ क्वचिद्रजांसि विममे पार्थिवान्युरुजन्मभिः गुणकर्माभिधानानि न मे ज
न्मानि कर्हिचित् ३९ कालत्रयोपपन्नानि जन्मकर्माणि मे नृप अनुक्रमंतो नैवांतं गच्छंति
परमर्षयः ४० तथाप्यद्यतनान्यंग शृणुष्व गदतो मम विज्ञापितो विरिंचेन पुराऽहं धर्मगुप्त
ये भूमेर्भारायमाणानामसुराणां क्षयाय च ४१ अवतीर्णो यदुकुले गृह आनकदुंदुभेः व
दंति वासुदेवेति वसुदेवसुतं हि माम् ४२ कालनेमिर्हतः कंसः प्रलंबाद्याश्च सद्द्विषः अयं च
यवनो दग्धो राजंस्ते तिग्मचक्षुषा ४३ सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः प्रार्थितः
प्रचुरं पूर्वं त्वयाहं भक्तवत्सलः ४४ वरान्वृणीष्व राजर्षे सर्वान्कामान्ददामि ते मां प्रपन्नो ज
नः कश्चिन्न भूयोऽर्हति शोचितुम् ४५ श्रीशुक उवाच इत्युक्तस्तं प्रणम्याह मुचुकुंदो मुदान्वि तः॥

सुषा निमित्तेन मयैव दग्धः ४३।४४। अपूर्णोऽहमिति शोचितुम् यद्वा अन्यैर्दत्तेषु वरेषु क्षीयमाणेषु यथा शोचति नैवं मां प्रपन्नः मद्दत्तवराणामक्षय्यत्वादिति भावः ४५ अष्टाविंशतिमे युगे भगवा

भा॰ द॰ ३ ८

वनरिष्यतीतिहृद्गर्गवाक्यमनुस्मरन्नित्यर्थः ४५ त्वद्भक्तिरेवकेवलं दुर्ल्लभाकामास्तुतुच्छानवरणयोग्याइत्याशयेनअभक्तानां संसारमष्टभिः प्रपंचयन् स्तौति विमोहितइतिहेईशयोषित्चपुरुषश्चेतिद्विविधोप्ययंजनस्त्वदीययामायया विमोहितः अतः अ नर्थदृक् अनर्थेसंसारेदृक्दृष्टिर्यस्यासौ यद्वा अर्थंपरमार्थस्वरूपंत्वांनपश्यतीतितया अतस्त्वांनभजतिकिंतुपरस्परं वं चितः सन् सुखेच्छयादुःखानामेवप्रभवोयेषुतेषुगृहेष्वेवसज्जतइति ४६ किंचकामसुखंसूकरादिष्वपिसंभवतिभगव

ज्ञात्वानारायणंदेवंगर्गवाक्यमनुस्मरन् ४५ मुचुकुंदउवाच विमोहितोयंजनईश माययात्वदीययात्वांनभजत्यनर्थदृक् सुखायदुःखप्रभवेषुसज्जतेगृहेषुयोषित्पुरुषश्चवं चितः ४६ लब्ध्वाजनोदुर्ल्लभमत्रमानुषंकथंचिदव्यंगमयत्नतोऽनघ पादारविंदंनभज त्यसन्मतिर्गृहांधकूपेपतितोयथापशुः ४७ ममैषकालोऽजितनिष्फलोगतोराज्यश्रियो न्नद्धमदस्यभूपतेः मर्त्यात्मबुद्धेःसुतदारकोशभूष्वासज्जमानस्यदुरंतचिंतया॥४८॥ ९॥

द्भजनंतुनमानुषजन्मव्यतिरेकेणेतिमानुषत्वंप्राप्यत्वामभजन्नतिमूढइत्याह लब्ध्वेति अत्रकर्मभूमौदुर्ल्लभमुद्यमको टिभिरपिदुःप्रापं अव्यंगं अविकलांगंकिंच असतिविषयसुखेमतिर्यस्यसः गृहमेवांधकूपस्तस्मिन्पतितः यथापशुस्तृ णलुब्धोऽंधकूपेपततीति ४७ नकेवलमस्यजनस्येयंगतिः किंतुममापितथैवेत्याह ममेति मर्त्येशरीरे आत्मबुद्धिर्य स्यतस्यमम अतएवसुतादिषुआसज्जमानस्य ४८

एम ८

उन्नद्धमदत्वं प्रपंचयति कलेवर इति घटकुड्यादिसदृशे दृश्ये ऽनात्मनि यत एवं सुदुर्म्मदो ऽभवं अतो ममैष कालो निष्फलो गत इति ४९ त्वाम् अगणयंतं त्वम् आक्रमसीत्याह प्रमत्तम् इति प्रमत्तं अनवहितं त्वाम् अंतक मम विगणय्य देहादिष्वासक्तम् इति यावत् कुतः प्रमत्तं इति कृत्य चिंतया एवम् एवं करणीयम् इति मनोरथपरंपरया मनोरथे भग्नेपि विषयेषु लालसं उत्सुकं ॥ प्राप्तेपि पुनः प्रवृद्धो लोभस्तृष्णा यस्य तं अंतकस्त्वम् अभिपद्यसे अभिभवसीत्यर्थः क्षुधा सृक्किणीं लेलिहानो ऽहिराखुम् इव

कलेवरेस्मिन् घटकुड्यसंनिभे निरूढमानो नरदेव इत्यहं वृतो रथेभाश्वपदात्यनीकपैर्गां पर्य्यटंस्त्वा ऽगणयन्सुदुर्म्मदः ४९ प्रमत्तम् उच्चैर् इति कृत्य चिंतया प्रवृद्धलोभं विषयेषु लालसं त्वम् अप्रमत्तः सहसा ऽभिपद्यसे क्षुल्लेलिहानो ऽहिर् इवाखुम् अंतकः ५० पुरा रथैर्हेमपरिष्कृतैश्चरन् मतंगजैर्वा नरदेवसंज्ञितः स एव कालेन दुरत्ययेन ते कलेवरो विट्कृमिभस्मसंज्ञितः ५१ निर्जित्य दिक्चक्रम् अभूतविग्रहो वरासनस्थः समराजवंदितः ॥

कृमिवेति ५० किंच कालात्मना त्वया ऽभिपन्नो देह एवं भवतीत्याह पुरेति श्वसृगालादिभिर्भक्षितो विट्संज्ञितः तैरभक्षितः कृमिसंज्ञितः दग्धो भस्मसंज्ञितो भवतीति बुद्ध्या विचार्य्यैवंभूते शरीरे ममतां कुर्वतो जना हरिं नाराधयंतीति अत्मनि शत्रुभूता ज्ञेयाः सततं यतः योनेः सहस्राणि बहूनि गत्वा दुःखेन लब्ध्वापि च मानुषत्वं सुखावहं येन भजंति विष्णुं नैवं मनुष्या आत्मनि शत्रुभूता इति ५१ किंच अंतकप्राप्तेः प्रागपि दिग्विजयिनो राज्ञोपि पारतंत्र्यदुःखं तदवस्थम् एवेत्या

भा॰ द॰ उ॰ ८९

निर्जित्येति अभूतविग्रहः अविद्यमानसंग्रामः पूर्व्वे ये समाना राजानस्तै राजभिर्वंदितोपि मिथुनीभावः सुरतमेव परं येषु तेषु योषितां गृहेषु क्रीडामृग इव इतस्ततो नीयते ५२ किंच तत्रातितृष्णाकुलस्य न भोगक्षणः कश्चिदस्तीत्याह करोतीति तपसि अधःशयनब्रह्मचर्यादौ सुनिष्ठितः पुनश्च स्वराडिंद्रः स्यामिति यद्वा जन्मांतरेष्वेवमेव चक्रवर्त्ती स्यामिति। ५३ तदेवमष्टभिः श्लोकैरीश्वरबहिर्मुखानां संसारं प्रपंच्य भक्त्या तन्निवृत्तिक्रममाह भवापवर्ग इति भोस्त्रच्युत भ्रम

गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते ५२ करोति कर्म्माणि तपः सुनिष्ठितो निवृत्तभोगस्तदपेक्षया ददत् पुनश्च भूयेयमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ५३ भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः सत्संगमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ५४ मन्ये ममानुग्रह ईश ते कृतो राज्यानुबंधापगमो यदृच्छया यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखंडभूमिपैः ५५॥१९ ततः संसरतो जनस्य यदा त्वदनुग्रहेण भवस्य बंधस्य अपवर्गोतो भवेत् प्राप्तकालः स्यात् तदा सत्संगमो भवेत् यदा च सत्संगमो भवेत् तदा सर्व्वसंगनिवृत्त्या कार्य्यकारणनियंतरि त्वयि भक्तिर्भवति ततो मुच्यत इत्यर्थः॥ ५४ मम तु सत्संगमात्पूर्व्वमेव यो राज्यादिसंगविच्छेदो जातः सोयं त्वया महाननुग्रहः कृत इत्याह मन्य इति तेन त्वया साधुभिर्विवेकिभिस्तपसे वनं प्रवेष्टुमिच्छद्भिः स्वयं त्यक्तुमलभमानैः प्रार्थ्यत इति ५५॥ ९॥ ॥ ९॥

एम ८९

तदेवंविषयसेवामार्गंभगवत्सेवामार्गंचविविच्यवरान्वृणीष्वेतियदुक्तंतत्रोत्तरमाह नकामयइति अकिंचनानिवृत्ता
त्ताभिमानाः आर्य्योविवेकी ५६ रजस्तमःसत्वगुणैरनुवध्यंतइतितथाताः ऐश्वर्य्यादिशत्रुमरणादिधर्मादिरूपाः विसृ
ज्यपरंपुरुषमीश्वरंज्ञप्तिमात्रंज्ञानघनं कुतः निरंजनंतत्कुतः निर्गुणंतदपिकुतः अद्वयंअतएवाऽक्षरंत्वांशरणंव्रजा
मीति ५७ मुंचत्वतावद्भोगान्कैवल्यंतुकरस्थमेवेतिपुनर्वरैःप्रलोभयंतंश्रीकृष्णंपादोपग्रहणेनप्रार्थयते चिरमि

नकामयेऽन्यंतवपादसेवनादकिंचनप्रार्थ्यतमाद्वरंविभो आराध्यकस्त्वांह्यपव
र्गदंहरेवृणीतआर्य्योवरमात्मबंधनम् ५६ तस्माद्विसृज्याशिषईशसर्वतोरजा
स्तमःसत्वगुणानुबंधनाः निरंजनंनिर्गुणमद्वयंपरंत्वांज्ञप्तिमात्रंपुरुषंव्रजाम्यहं
५७ चिरमिहवृजिनार्त्तस्तप्यमानोऽनुतापैरवितृषषडमित्रोऽलब्धशांतिः कथंचि
त् शरणदसमुपेतस्त्वत्पदाब्जंपरात्मन्नभयमृतमशोकंपाहिमापन्नमीश ५८ श्रीभ
गवानुवाच सार्वभौममहाराजमतिस्तेविमलोर्ज्जिता वरैःप्रलोभितस्यापिनकामैर्वि
हतायतः ५९ इति वृजिनैः कर्म्मफलैरार्त्तः पुनस्तद्वासनाभिस्तप्यमानस्तथापि अवितृषषडमित्रः तृड़े॥
वितृषातृष्णा नविगततृषाः षडमित्राः शत्रवइंद्रियलक्षणायस्य सः अतएव अलब्धशांतिः कथंचिद्दैववशेनलब्ध
शांतिरितिवा शरणंस्वज्ञानंतद्ददातीतितथाहेशरणदसमुपेतः प्राप्तोहं अशोकत्वेहेतुः अभयंतत्रापिहेतुः अमृतंतस्य

अप्रमादायप्रमादायनभवत्येवंकुतइत्यतआह नधीरिति एकांतभक्तानांधीराशीर्भिःप्राप्ताभिरपिनभिद्यतेनासज्ज
तइत्यर्थः ६० व्यतिरेकमाह युंजानानामिति उत्थितंविषयाभिमुखं ६१ तुभ्यंतव ६२ युक्ताभासेनभीषयंस्तपसिलोक

प्रलोभितोवरैर्यत्त्वमप्रमादायविद्धितत् नधीर्मय्येकभक्तानामाशीर्भिर्भिद्यतेक्व
चित् ६० युंजानानामभक्तानांप्राणायामादिभिर्मनः अक्षीणवासनंराजन्दृश्यतेक्व
चिदुत्थितं ६१ विचरस्वमहींकामंमय्यावेशितमानसः अस्त्वेवंनित्यदातुभ्यंभक्तिर्म
य्यनपायिनी ६२ क्षात्रधर्मस्थितोजंतून्न्यवधीर्मृगयादिभिः समाहितस्तत्तपसा
जह्यघंमदुपाश्रितः ६३ जन्मन्यनंतरेराजन्सर्वभूतसुहृत्तमः भूत्वाद्विजवरस्त्वंवैमा
मुपैष्यसिकेवलं ६४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेयवनवधमुचुकुंद
स्तुतिरेकपंचाशत्तमोध्यायः ५१ श्रीशुकउवाच इत्थंसोऽनुगृहीतोंगकृष्णेनेक्ष्वाकुनंदनः
तंपरिक्रम्यसन्नम्यनिश्चक्रामगुहामुखात् १ सवीक्ष्यक्षुल्लकान्मर्त्यान्पशून्वीरुद्वनस्पतीन्

संग्रहेप्रवर्तयतिक्षात्रधर्मेति ६३ ६४ इतिदशमेटीकायांएकपंचाशत्तमः ५१ द्विपंचाशत्तमेधावन्भयादिवगतः
पुरीं अत्रमोऽदतसंदेशंरुक्मिण्याद्विजवर्णितं ॥१॥१॥ क्षुल्लकानल्पा ॥ छ॥ छ॥ छ॥ छ॥ छ ॥ छ॥ छ॥

प्रमाणान् २ नपसिश्रद्धायुतः ३ तत्रचवदर्य्याश्रमं ४ निम्नेनयन्मार्गेचलतिस्म ५ ६ वेगरभसंवेगोद्रेकं॥ ७ भीरुभीतवत् भीरोरपिभीतवत् अतिभीतवदित्यर्थः चेरतुः पलायेतांवहुयोजनंदेशं ८ अप्रमाणवित् प्रमा

मत्वाकलियुगंप्राप्तंजगामदिशमुत्तरां २ तपःश्रद्धायुतोधीरोनिःसंगोमुक्तसं। शयः समाधायमनःकृष्णेमाविशद्गंधमादनं ३ वदर्य्याश्रममासाद्यनरनारायणा लयं सर्वद्वंद्वसहःशांतस्तपसाराधयद्धरिं ४ भगवान्पुनराव्रज्यपुरींयवनवेष्टितां हत्वाम्लेछवलंनिम्नेनदीयंद्वारकांधनं ५ नीयमानेधनेगोभिर्नृभिश्चाच्युतचो। दितैः आजगामजरासंधस्त्रयोविंशत्यनीकपः ६ विलोक्यवेगरभसंरिपुसैन्य स्यमाधवौ मनुष्यचेष्टामापन्नौराजन्दुद्रुवतुर्द्रुतं ७ विहायवित्तंप्रचुरमभीतौभी रुभीतवत् पद्भ्यांपद्मपलाशाभ्यांचेरतुर्बहुयोजनं ८ पलायमानौतौदृष्ट्वामा गधःप्रहसन्बली अन्वधावद्रथानीकैरीशयोरप्रमाणवित् ९ प्रद्रुत्यदूरंसंश्रां। तौतुंगमारुहतांगिरिं प्रवर्षणाख्यंभगवान्नित्यदायत्रवर्षति १० ॥ ९ ॥

णमियत्तांनवेत्तीति तथा ९ तुंगंएकादशयोजनोन्नतं प्रकर्षेणवर्षत्यस्मिन्नितिप्रवर्षणइत्याख्यायस्यतं नद्

भा॰ द॰
उ॰
११

तत्र विचिन्वन्नपि तयोः पदं निलयस्थानं अनधिगम्य ११ ततो गिरेः दशचैकं च या नि योजनानि तावदुत्तुंगात् मागधसंरोधदेशमतिक्रम्य परतो ऽधो निपेततुः १२ १३ १४ श्रीकृष्णस्य विवाहान्निरूपयितुं बलदेव विवाहं नवमस्कंधोक्तमनुस्मा

गिरौ निलीनावाज्ञाय नाधिगम्य पदं नृप ददाह गिरिमेधोभिः समंतादग्निमुत्सृजन्
११ तत उत्पत्य तरसा दह्यमानादुभौ तटात् दशैकयोजनोत्तुंगान्निपेततुरधो भुवि॥
१२ अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ स्वपुरं पुनरायातौ समुद्रपरिखां नृप १३
सोपि दग्धाविति मृषा मन्वानो बलकेशवौ बलमाकृष्य सुमहन्मगधान्मागधो ययौ
१४ आनर्त्ताधिपतिः श्रीमान् रैवतो रैवतीं सुतां ब्रह्मणा चोदितः प्रादाद्बलायेति पुरो
दितं १५ भगवानपि गोविंद उपयेमे कुरूद्वह वैदर्भीं भीष्मकसुतां श्रियो मात्रां स्वयंव
रे १६ प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् पश्यतां सर्वलोकानां तार्क्ष्यपुत्रः सु
धामिव १७ राजोवाच भगवान् भीष्मकसुतां रुक्मिणीं रुचिराननां राक्षसेन विधा
नेन उपयेम इति श्रुतं १८॥ रैवतेति आनर्त्तेति १५ मात्रां कलां १६ गरुडो यथा देवान् प्रमथ्य सुधामहरत्तथेति १७ राक्षसो युद्धहरणादिति स्मृतेः राज्ञः प्रमथ्येति च त्वदुक्त्या राक्षसेन विधानेनोपयेमे परिणीतवानिति श्रु
तं पूर्वमेव वा सामान्यत एव श्रुतं १८ ॥

एम
११

विशेषं तु श्रोतुमिच्छामः १९ श्रवणोत्सुक्यमाविष्करोति ब्रह्मन्निति पुण्याः महाफलाः माध्वीः श्रुतिसुखावहाः लोकस्य मलापहाश्च शृण्वानः शृण्वन्नित्यर्थः श्रुतज्ञः श्रुतसारवित् नित्यनूतनाः प्रतिक्षणमाश्चर्य्यवत् प्रतीयमानाः २०

भगवन् श्रोतुमिच्छामः कृष्णस्यामिततेजसः यथामागधशाल्वादीन् जित्वाकन्यामुपाहरत् १९ ब्रह्मन्कृष्णकथाः पुण्यामाध्वीर्लोकमलापहाः कोनुतृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः २० श्रीशुक उवाच राजासीद्भीष्मको नाम विदर्भाधिपतिर्महान् तस्य पंचाभवन्पुत्राः कन्यैका च वरानना २१ रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनंतरः रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती २२ सोपश्रुत्य मुकुंदस्य रूपवीर्यगुणश्रियः गृहागतैर्गीयमानास्तं मेने सदृशं पतिं २३ तां बुद्धिलक्षणौदार्य्यरूपशीलगुणाश्रयां कृष्णश्च सदृशीं भार्य्यां समुद्वोढुं मनो दधे २४ बंधूनामिच्छतां दातुं कृष्णाय भगिनीं नृप ततो निवार्य्य कृष्णद्विड्रुक्मी चैद्यममन्यत २५ तदवेत्यासितापांगी वैदर्भी दुर्मना भृशं विचिंत्याप्तं द्विजं कंचित्कृष्णाय प्राहिणोद्द्रुतं २६ ॥ ९ ॥ ❋ ॥ ९ ॥

२१ २२ २३ २४ चैद्यममन्यत तस्या वरमित्यर्थः २५ अवेत्य ज्ञात्वा असितापांगी सुनीलकटाक्षा कृष्णाय कृष्णमानेतुं प्रे

२७ प्रतीहारैर्द्वारपालैः २८ आत्मानंश्रीकृष्णं २८ अभिमृशन्शनैः संमर्दयन् २९ ३० सधर्मोऽस्यब्राह्मणस्याखिलकामदोग्धाभवतियद्वा सब्राह्मणोऽस्यविश्वस्याखिलकामधुगिति ३१ लोकानाप्नोतिलोकाल्लोकांतरंपर्य्यटतिनैकत्रनिर्वृतस्तिष्ठतीत्यर्थः नाप्नोतीतिपाठेसुरेश्वरोपिभूत्वालोकान्नाप्नोति उत्तमलोकान्प्राप्तोप्यऽप्राप्तवत् क्लिश्यतीत्यर्थः शेतेसुखमा

द्वारकांसतसमभ्येत्यप्रतीहारैः प्रवेशितः अपश्यदाद्यंपुरुषमासीनंकांचनासने २७ दृष्ट्वाब्रह्मण्यदेवस्तमवरुह्यनिजासनात् उपवेश्यार्हयांचक्रेयथात्मानंदिवौकसः २८ तंभुक्तवंतंविश्रांतमुपगम्यसतांगतिः पाणिनाऽभिमृशन्पादावव्यग्रस्तमपृच्छत २९ कच्चिद्द्विजवरश्रेष्ठधर्म्मस्तेवृद्धसंमतः वर्त्ततेनातिकृच्छ्रेणसंतुष्टमनसःसदा ३० संतुष्टोयर्हिवर्तेतब्राह्मणोयेनकेनचित् अहीयमानःस्वाद्धर्मात्सह्यस्याखिलकामधुक् ३१ असंतुष्टोऽसकृल्लोकानाप्नोत्यपिसुरेश्वरः अकिंचनोपिसंतुष्टःशेतेसर्वांगविज्वरः ३२ विप्रान्स्वलाभसंतुष्टान्साधून् भूतसुहृत्तमान् निरहंकारिणःशांतान्नमस्येशिरसाऽसकृत् ३३ कच्चिद्वःकुशलंब्रह्मन्राजतोयस्यहिप्रजाः सुखंवसंतिविषयेपाल्यमानाःसमेप्रियः

स्तेइत्यर्थः तदेवाहसर्वेष्वंगेषुवाक्पाण्यादिषुविज्वरस्तापरहितः ३२ स्वलाभःस्वतएवप्राप्तोलाभः आत्मलाभोवातेनसंतुष्टान् पूर्णान्साधून् स्वधर्मनिष्ठान् ३३ यस्यराज्ञोविषयेदेशे ३४॥ ❋ ॥❋॥ ॥ ६ ॥ ६ ॥

यतः स्थानात् यदिच्छया यत्कार्यस्येच्छया दुर्गं समुद्रं ३५ संपृष्टः संप्रश्नः प्रष्टव्योर्थो यस्य सः परमेष्ठिना परमेश्वरेण वंधूनामा
नभिप्रेतं रुक्मिणश्चेष्टितमित्यादि सर्वं ३६ रुक्मिण्यास्स्वयमेकांते लिखित्वा दत्तं पत्रिकां मुद्रामुन्मुच्य कृष्णाय प्रेमचिन्हा
मदर्शयत् व्राह्मणः श्रीकृष्णानुज्ञया वाचयति श्रुत्वेति अयमर्थः हे अच्युत हे भुवनसुंदर निश्रोत्सुकं च्योतयति क्वनवमहि
मा क्व चाहं रूपकुलशीलादियुक्तापि तथापि अपगतात्रपा यस्मात् तत् मे चित्तं त्वयि आविशति आसज्जते तव कुतस्त्वा

यतस्त्वमागतो दुर्गं निस्तीर्य्येह यदिच्छया सर्व्वं नो ब्रूह्यगुह्यं चेत्किं कार्य्यं करवाम ते ३५
एवं संपृष्टसंप्रश्नो ब्राह्मणः परमेष्ठिना लीलागृहीतदेहेन तस्मै सर्व्वमवर्णयत् ३६ रुक्मि
ण्युवाच श्रुत्वा गुणान् भुवनसुंदर शृण्वतां ते निर्विश्य कर्णविवरैर्हरतोंगतापं रूपं दृशां
दृशिमतामखिलार्थलाभं त्वय्यच्युताविशति चित्तमपत्रपं मे ३७ का त्वा मुकुंद महती कुल
शीलरूपविद्यावयोद्रविणधामभिरात्मतुल्यं धीरा पतिं कुलवती न वृणीत कन्या काले नृ
सिंह नरलोकमनोभिरामं ३८॥ हे शृण्वतां कर्णविवरैरंतः प्रविश्य अंगतापं अंगेति पृथक् संवोधनं वा हर
तस्तव गुणान् श्रुत्वा तथा दृशिमतां चक्षुष्मतां दृशाम् अखिलार्थलाभात्मकं रूपं च श्रुत्वेति ३७ अहो कुलकन्यानामिदं अतिधा
र्ष्ट्यमिति माशंकीत्याह कात्वेति हे मुकुंद हे नृसिंह नरश्रेष्ठ का नाम कन्या कुलवती न या महती पुरुगुणोदारा न तथा धीरा धृतिम
ती त्वां पतिं न वृणीत मय्येव केयं दोषशंकेति भावः कथंभूतं गुणशीलादिभिः आत्मनैव तुल्यं निरूपममित्यर्थः द्रविणं द्रव्यसं

आनयिष्ये आनेष्यामि राजन्यापसदान् राजसु हीनान् उन्मथ्य आनयने दृष्टांतः एधस इति ३ उद्वाहर्क्षमिति परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय तस्मां राज्ञां प्रस्थाय प्रातर्विदर्भदेशान् गमत् श्वोभाविनित्वमजितोद्वहने विदर्भान् गुप्तः समेत्येति रुक्मिणीसंदेशात् ४ शैव्य इत्यादीनि चत्वारि अश्वनामानि ५।६ पुत्रस रुक्मिणः स्नेहेन तद्वशमनुगच्छतीति तथा अने

तामानयिष्य उन्मथ्य राजन्यापसदान्मृधे मत्परामनवद्यांगीमेधसोग्निशिखामिव ३

श्रीशुक उवाच उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः रथः संयुज्यतामाशु दारुकेत्याह सारथिं ४ स चाश्वैः शैव्यसुग्रीवमेघपुष्पबलाहकैः युक्तं रथमुपानीय तस्थौ प्रांजलिरग्रतः ५ आरुह्य स्यंदनं शौरिर्द्विजमारोप्य तूर्णगैः आनर्त्तादेकरात्रेण विदर्भानगमद्धयैः ६ राजा स कुंडिनपतिः पुत्रस्नेहवशं गतः शिशुपालाय स्वां कन्यां दास्यन् कर्माण्यकारयत् ७ पुरं संमृष्टसंसिक्तमार्गरथ्याचतुष्पथं चित्रध्वजपताकाभिस्तोरणैः समलंकृतं ८ स्रग्गंधमाल्याभरणैर्विरजोंबरभूषितैः जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगरुधू

नशिशुपाले रुचिं द्योतयति कर्म्माणि पुरालंकारपितृदेवार्च्चनादीनि ७ तान्येवाह पुरमित्यादिचतुर्भिः संमृष्टाः संसिक्ताश्च मार्गरथ्या यस्मिन् तत् चित्राध्वजेषु पताकास्ताभिः समलंकृतमकारयत् ८ स्रग्गंधमाल्याभरणैरित्यत्र मत्वर्थो द्रष्टव्यः यद्वा स्रग्गंधमाल्यानि आविभ्रतीति तथा तैः तथा विरजोंबरैर्भूषितैश्च स्त्रीपुरुषैर्जुष्टं तथा श्रीमद्गृहैश्च जुष्टं ९॥५

यथाम्नायमन्यांश्च कन्यांप्रतिमंगलंवाचयामास १० कृतंकौतुकेनविवाहसूत्रेणमंगलंयस्यास्तां अहतंनवीनं॥
भूषणोत्तमैश्च भूषितां ११ वध्वास्तस्याः कन्यायाः अथर्ववित् अथर्वणमंत्रवित् १२ १३ अभ्युदयेउचितं॥

पितॄन्देवान्समभ्यर्च्य विप्रांश्च विधिवन्नृप भोजयित्वायथान्यायंवाचयामासमंगलं॥
१० सुस्नातांसुदतींकन्यांकृतकौतुकमंगलां अहतांशुकयुग्मेन भूषितांभूषणोत्तमैः ११
चक्रुः सामर्ग्यजुर्मंत्रैर्वध्वारक्षांद्विजोत्तमाः पुरोहितोऽथर्वविद्वैजुहावग्रहशांतये १२॥
हिरण्यरूप्यवासांसितिलांश्चगुडमिश्रितान् प्रादाद्धेनूश्चविप्रेभ्योराजाविधिविदांवरः॥
१३ एवंचेदिपतीराजादमघोषःसुतायवै कारयामासमंत्रज्ञैः सर्वमभ्युदयोचितं १४ म
दच्युद्भिर्गजानीकैः स्यंदनैर्हेममालिभिः पत्त्यश्वसंकुलैः सैन्यैः परीतः कुंडिनंययौ १५ तं
वैविदर्भाधिपतिः समभ्येत्याभिपूज्यच निवेशयामासमुदाकल्पितान्यनिवेशने १६॥
तत्रशाल्वोजरासंधोदंतवक्त्रोविदूरथः आजग्मुश्चैद्यपक्षीयाः पौंड्रकाद्याः सहस्रशः १७
कृष्णरामद्विषोयत्ताः कन्यांचैद्यायसाधितुं॥ १४ ततः श्चतुरंगसैन्यैः परीतः परिवृतः कुंडिनंभीष्मक
स्यपुरंययौ मदंच्यवंतेइतिमदच्युतस्तैः स्यंदनैः रथैः हेमरचितामालाविद्यंतेयेषुतैः १५ कल्पितंनिर्मितंयदन्यनिवेश
नंतस्मिन् १६ १७ यदिश्रीकृष्णोहरेदितिशंकिनाः ॥

कन्यांसाधयितुमित्यर्थः १८ १९ २० २१ सूर्योदयात्पूर्वमेवौत्सुक्येन रुक्मिण्यचिंतयदित्याह भीष्मकन्येतिप्रत्या
पत्तिंप्रत्यागमनं २२ त्रियामारात्रिस्तावन्मात्रेणांतरितः अल्पराधसः मंदभाग्यायाः २३ जुगुप्सितंधार्ष्ट्यादि अ

यद्यागत्यहरेत् कृष्णोरामाद्यैर्यदुभिर्वृतः १८ योत्स्यामः संहतास्तेनइतिनिश्चितमान
साः आजग्मुर्भूभुजः सर्वेसमग्रबलवाहनाः १९ श्रुत्वैतद्भगवान्रामोविपक्षीयनृपोद्य
मं कृष्णंचैकंगतंहर्तुंकन्यांकलहशंकितः २० बलेनमहतासार्द्धंभ्रातृस्नेहपरिप्लुतः॥
त्वरितःकुंडिनंप्रागाद्गजाश्वरथपत्तिभिः २१ भीष्मकन्यावरारोहाकांक्षंत्यागमनंहरेः
प्रत्यापत्तिमपश्यंतीद्विजस्याचिंतयत्तदा २२ अहोत्रियामांतरितउद्वाहोमेऽल्पराधसः
नागच्छत्यरविंदाक्षोनाहंवेद्म्यत्रकारणं २३ सोऽपिनावर्त्ततेऽद्यापिमत्संदेशहरोद्विजः
अपिमय्यनवद्यात्मादृष्ट्वाकिंचिज्जुगुप्सितं मत्पाणिग्रहणेनूनंनायातिहिकृतोद्यमः॥
२४ दुर्भगायानमेधातानानुकूलोमहेश्वरः देवीवाविमुखागौरीरुद्राणीगिरिजासती २५

पीतिशंकायांनायातिहिकृतोद्यमइति अयमर्थः आदौकृतोद्यमत्वात्तंनप्रस्थापितवान् प्रस्थानावसरेचकिं
चिन्मयिजुगुप्सितंमत्वाप्रत्याचष्टेअतः सोऽपिद्विजोनूनंनायातीति २४ यद्यपिततोनिर्गतोपिश्रीकृष्णोमद्दैवदैमु
ख्यात्क्वचित्प्रतिबद्धोभवेदित्याहदुर्भगायाइति २५

कालज्ञानात्र्प्रधुनापिगोविंदागमनकालइतिमन्वानाकिंचिदाग्वस्तचिंतासतीचिंतास्तब्धेलोचनेनिमीलितवतीत्यर्थः २६ प्रियभाषिणःप्रियसूचकाः २७ पुरोपवनंप्राप्तेनश्रीकृष्णेनविनिर्दिष्टः प्राप्तंमांकथयेत्यादिष्टः २८ नव्यग्राआत्मनोदेहसगतिर्यस्यतंलक्षणाभिज्ञादूतस्यलक्षणंतत्तत्कार्य्यसूचकमभिजानातीतितया २९ तस्यैप्राप्तंयदुनंदनंआवेदितवान् तत्वशशंसआत्मोपनयनंप्रतिआत्मनःस्वयंकृष्णस्यानयनंप्रतितेनद्विजेनसत्यवचनंप्रोक्तमिति आत्मनःप्राणेश्वरस्य

एवंचिंतयतीबालागोविंदहृतमानसा न्यमीलयतकालज्ञानेत्रेचाश्रुकलाकुले २६
एवंवध्वाःप्रतीक्षंत्यागोविंदागमनंनृप वामऊरुर्भुजोनेत्रमस्फुरन्प्रियभाषिणः २७
अथकृष्णविनिर्दिष्टःसएवद्विजसत्तमः अंतःपुरचरींदेवींराजपुत्रींददर्शह २८ सा
तंप्रहृष्टवदनमव्यग्रात्मगतिंसती आलक्ष्यलक्षणाभिज्ञासमपृच्छत्शुचिस्मिता २९
तस्याआवेदयत्प्राप्तंशशंसयदुनंदनं उक्तंचसत्यवचनमात्मोपनयनंप्रति ३० तमागतंसमाज्ञायवैदर्भीहृष्टमानसा नपश्यंतीब्राह्मणायप्रियमन्यन्ननामसा ३१॥ इतिवायद्वाआत्मनस्तस्याउपनयनंप्रतिश्रीकृष्णेनयदुक्तंसत्यवचनंतामानयिष्यइत्यादितच्चशशंसअवर्णयदित्यर्थः ३० तंश्रीकृष्णंअस्मिन्कार्य्येसर्वस्वार्प्पणमपिअपर्य्याप्तमिति तदुचितंप्रियमपश्यंतीनदाकेवलंननामपश्चाद्बहुद्दावित्यर्थः यद्वामांश्रियंयेनमंतितेनावन्सर्वसंपदामास्यदंभवंतिकिंपुनर्मयिप्रणतायामितिततोऽधिकमन्यत्प्रियमपश्यंतीननामेति ३१॥

५२
भा॰द॰
उ॰
१६

३२ ३३ महामतिरित्यनेनश्रीकृष्णोवाढंकन्यामुद्वोढुमेवागतः स्यादिति वरोचितेनविधिनासमपूजयदितिसूचितं ३४ यथा यथावत् समेतानांराज्ञांमध्येवीर्य्याद्यनतिक्रम्यतंतंसमर्हितवानित्यर्थः ३५ श्रीकृष्णेभाविकर्म्मसूचकंजनानुरागंदर्शयति कृष्णमागतमितित्रिभिः ३६ अस्यैववरः किमएयेव अर्हत्येव असावेवभैष्म्याएवसमुचितएवेतिषडवधारणानित

प्राप्तौश्रुत्वास्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ अभ्ययात्तूर्य्यघोषेणरामकृष्णौसमर्हणैः ३२
मधुपर्कमुपानीयवासांसिविरजांसिच उपायनान्यभीष्टानिविधिवत्समपूजयत् ३३
तयोर्निवेशनंश्रीमदुपकल्प्यमहामतिः ससैन्ययोः सानुगयोरातिथ्यंविदधेयथा ३४ ॥
एवंराज्ञांसमेतानांयथावीर्य्यंयथावयः यथावलंयथावित्तंसर्वैःकामैःसमर्हयत् ३५ कृ
ष्णमागतमाकर्ण्यविदर्भपुरवासिनः आगत्यनेत्रांजलिभिः पपुस्तन्मुखपंकजं ३६ अ
स्यैवभार्य्याभवितुंरुक्मिण्यर्हतिनापरा असावप्यनवद्यात्माभैष्म्याः समुचितःपतिः ३७
किंचित्सुचरितंयन्नस्तेनतुष्टस्त्रिलोककृत् अनुगृह्णातुगृह्णातुवैदर्भ्याःपाणिमच्युतः ३८ एवं
प्रेमकलावद्धावदंतिस्मपुरौकसः ॥ एकस्मिन्व्यतिरेकप्रदर्शनमुपलक्षणार्थंनापरेति नचवाक्यभेददोषः अनूद्यविधेयभेदेनविभिन्नानामेववाक्यानांसहप्रयोगात्‌ग्रहंसंमार्ष्टिइत्यादिवदिति ३७ अयमेवानुग्रहइतिनिर्दि शंतिगृह्णात्विति ३८ प्रेम्णः कलालेशः तेनवद्धावदंतिस्मसंपूर्णं॥ ६ ॥ ६ ॥ ६ ॥ऽऽऽऽऽऽ॥ ६ ॥

राम
१६

न्त्रैमनैषांहृद्येवाऽवर्त्ततइत्यर्थः ३९ तस्याआगमनंविशिनष्टिद्वयेनपद्भ्यामिति ४० अपिचमृदंगेत्यादिजघ्निरेआहताःवादि
ताइत्यर्थः ४१वारमुख्यागणिकोत्तमाः ४२ ४३ उपस्पृश्यआचम्य ४४ प्रवयसोवृद्धाःभवान्वितामिति भवस्योपसर्ज्जनत्वंस्त्री

कन्याचांतःपुरात्प्रागाद्भटैर्गुप्तांविकालयं ३९ पद्भ्यांविनिर्य्ययौद्रष्टुंभवान्याःपादपल्लवं
साचानुध्यायतीसम्यक्मुकुंदचरणांवुजं ४० यतवाङ्मातृभिःसार्द्धंसखीभिःपरिवारिता
गुप्ताराजभटैःशूरैःसन्नद्धैरुद्यतायुधैः मृदंगशंखपणवास्तूर्य्यभेर्य्यश्चजघ्निरे ४१ नानो
पहारवलिभिर्वारमुख्याःसहस्रशः स्रग्गंधवस्त्राभरणैर्द्विजपत्न्यःस्वलंकृताः ४२ गायं
तश्चस्तुवंतश्चगायकावाद्यवादकाः परिवार्य्यवधूंजग्मुःसूतमागधवंदिनः ४३ आसाद्य
देवीसदनंधौतपादकरांवुजा उपस्पृश्यशुचिःशांताप्रविवेशांविकांतिकं ४४ तांवैप्र
वयसोवालाविधिज्ञाविप्रयोषितः भवानींवंदयांचक्रुर्भवपत्नींभवान्वितां ४५ नमस्ये
त्वांविके॰भीक्ष्णंस्वसंतानयुतांशिवां भूयात्पतिर्म्मेभगवान्कृष्णस्तदनुमोदतां ४६ अ
द्भिर्गंधाक्षतैर्धूपैर्वासःस्रङ्माल्यभूषणैः नानोपहारवलिभिःप्रदीपावलिभिःपृथक्॥४७॥

कर्म्मोचितमुक्तं ४५ नमस्यइतिरुक्मिण्यातदेवदृष्टोयंमंत्रः स्वसंतानयुतां गणेशादिसहितां आत्मारामोऽसौकथंन्वत्पतिर्भवे
दितिचेदतआह तदनुमोदतामिति भवतीप्रीत्यैवकृष्णएववा ४६ वासःस्रग्गंधादिभिरंविकांसमपूजयत॥४७॥ ६ ॥ ६ ॥

तथाविप्रस्त्रियोपि नैर्द्रव्यैर्लवणादिभिश्चसमपूजयन्निति ४८ शेषांनिर्माल्यं ४९ मुनिव्रतंमौनादि भृत्यांसखीं ५० तांवि
लोक्यवीरामुमुहुरितितृतीयश्लोकेनान्वयः श्यामांअजातरजस्कां कुंतलेभ्यःशंकितइवचपलेईक्षणेयस्यास्तां ५१ द्विजा
दंताएवकुंदानांकुड्मलानिमुकुलानिविंबफलवत्तयोःधरस्तस्यद्युतिभिः शोणायमानानियस्यास्तांकलाशोभाततयुक्तंनू

विप्रस्त्रियः पतिमतीस्तथातैः समपूजयन् लवणापूपतांबूलकंठसूत्रफलेक्षुभिः ४८ त
स्यैस्त्रियस्ताःप्रददुःशेषांयुयुजुराशिषः ताभ्योदेव्यैनमस्कृत्यशेषांचजगृहेवधूः ४९ मुनि
व्रतमथत्यक्त्वानिश्चक्रामांबिकागृहात् प्रगृह्यपाणिनाभृत्यांरत्नमुद्रोपशोभिना ५० तांदे
वमायामिववीरमोहिनींसुमध्यमांकुंडलमंडितानना श्यामांनितंबार्पितरत्नमेखलांव्यंज
त्स्तनींकुंतलशंकितेक्षणा ५१ शुचिस्मितांबिंबफलाधरद्युतिशोणायमानद्विजकुंदकु
ड्मलां पदाचलंतींकलहंसगामिनींसिंजत्कलानूपुरधामशोभिना ५२ विलोक्यवीरामु
मुहुःसमागतायशस्विनस्तत्कृतहृच्छयार्दिताः ५३ यांवीक्ष्यतेनृपतयस्तदुदारहासव्री
डावलोकहृतचेतसउज्झितास्त्राः पेतुःक्षितौगजरथाश्वगताविमूढायात्राच्छलेनहरयेर्प्य
यतींस्वशोभां ५४॥ सिंजत्क्वणत्कलानूपुरंचतस्यधामदीप्तिः तेनशोभितुंशीलमस्यतेनपदाचलंतीम् ५२ ५३
नकेवलंमुमुहुःपेतुश्चेत्याह यामिति यात्रामिषेणहरयेस्वलावण्यंसमर्पयंतीयांवीक्ष्यक्षितौपेतुःसातान्प्राप्तान्ह्रियेक्षनतं

चलनपद्मकोशानुल्मोचरणौचालयंती ५५ सुपर्णलक्षणंगरुडध्वजे हरिःसिंहः ५६ असहमानानांतेषांआक्रोशमाह
अहोधिगस्मान्नूयतोऽस्माकंयशोगोपैर्हृतमिति ५७ ॥ इतिदशमेटीकायांत्रिपंचाशत्तमः ५३ ॥ चतुःपंचाशत्तमेतुजि

सैवंशनैश्चलयतीचलपद्मकोशौप्राप्तिंतदाभगवतःप्रसमीक्ष्यमाणा उत्सार्यवामकरजैरलकानपांगैःप्राप्तान्ह्रियैक्षतनृपान्ददृशेऽच्युतंसा ५५ तांराजकन्यांरथमारुरुक्षतींजहारकृष्णोद्विषतांसमीक्षतां रथंसमारोप्यसुपर्णलक्षणंराजन्यचक्रंपरिभूयमाधवः ततोययौरामपुरोगमैःशनैःशृगालमध्यादिवभागहृद्धरिः ५६ तंमानिनःस्वाभिभवंयशःक्षयंपरेजरासंधवशानसेहिरे अहोधिगस्मान्यशआत्तधन्वनांगोपैर्हृतंकेशरिणांमृगैरिव ५७ ॥ ॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेरुक्मिणीहरणंनामत्रिपंचाशत्तमोऽध्यायः ५३ ॥ ॥श्रीशुकउवाच इतिसर्वेसुसंरब्धावाहानारुह्यदंशिताः स्वैःस्वैर्बलैःपरिक्रांताअन्वीयुर्धृतकार्मुकाः १ तानापततआलोक्ययादवानीकयूथपाः तस्थुस्तत्संमुखाराजन्विस्फूर्ज्यस्वधनूंषिते २ ॥ ❋ ॥

९त्वाराज्ञोऽरिपक्षगान् रुक्मिणंचविरूप्याथ
भैष्म्याःपाणिंपुरेऽग्रहीत् १ इतीति अहोधिगस्मानित्येवंवदंतःसुसंरब्धाःक्रोधाविष्टाःदंशिताःकृतसन्नाहाःप
रिक्रांताःपरिवृताःअन्वीयुःअन्वधावन् १ विस्फूर्ज्यटंकारयित्वा २ ॥ ६ ॥ ६ ॥ ❋ ॥ ❋ ॥ ६ ॥ ६ ॥

५३
भा॰द॰
उ॰
१८

परेषांशराणांबाहुल्येयादवानामचलत्वेदृष्टांतः मेघाइति ३ ऐक्षत् ऐक्षत ४ मास्मभैः माभयंकुरुहेवामलोचनेव
राक्षितावकैः त्वदीयैः कृत्वा ५ सचासौविक्रमश्चेति ६ उष्णीषाणिशिरोऽवतंसवस्त्राणितत्सहितानिशिरांसि ७

अश्वपृष्ठेगजस्कंधेरथोपस्थेचकोविदाः मुमुचुःशरवर्षाणिमेघाअद्रिष्वपोयथा ३
पत्युर्बलंशरासारैश्छन्नंवीक्ष्यसुमध्यमा सव्रीडमैक्षत्तद्वक्त्रंभयविह्वललोचना ४ प्रह
स्यभगवानाहमास्मभैर्वामलोचने विनंक्षत्यधुनैवैतत्तावकैःशात्रवंबलम् ५ तेषां
तद्विक्रमंवीरागदसंकर्षणादयः अमृष्यमाणानाराचैर्जघ्नुर्हयगजान्रथान् ६ पेतुः
शिरांसिरथिनामश्विनांगजिनांभुवि सकुंडलकिरीटानिसोष्णीषाणिचकोटिशः ७
हस्ताःसासिगदेष्वासाःकरभाऊरवोऽङ्घ्रयः अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसिच ८
हन्यमानबलानीकावृष्णिभिर्जयकांक्षिभिः राजानोविमुखाजग्मुर्जरासंधपुरःसराः ९
शिशुपालंसमभ्येत्यहृतदारमिवातुरम् नष्टत्विषंगतोत्साहंशुष्यद्वदनमब्रुवन् १० भो
भोःपुरुषशार्दूलदौर्मनस्यमिदंत्यज नप्रियाप्रिययोराजन्निष्ठादेहिषुदृश्यते ११ यथा
दारुमयीयोषिन्नृत्यतेकुहकेच्छया॥९ करभाः प्रकोष्ठाःविस्तृतकराःऊरुविशेषणंवा ८ ९ अप्राप्त
दारमेवनम् हृतदारुमिवातुरम् १० निष्ठास्थैर्यम् ११ कुहकोनर्तयितातस्येच्छयादुःखेऽपीहमानत्वेनपा

राम:
१८

एवस्यंव्यक्तंदर्शितम् १२ अत्र चाहमेवदृष्टांतइत्याह जरासंधः शौरेरितिकृष्णात्सकाशात् परंसंयुगंपरंकेवलमं
निमंवाजिग्येजितवानहम् १३ दैवमदृष्टंतद्युक्तेन १४ फल्गुतंत्रैः स्वल्पसैन्यैः १५ प्रदक्षिणः अनुकूलः १६॥

एवमीश्वरतंत्रोयमीहतेसुखदुःखयो १२ शौरेःसप्तदशाहंवैसंयुगानिपराजितः त्रयो
विंशतिभिःसैन्यैर्जिग्यएकमहंपरम् १३ तथाऽप्यहंनशोचामिनप्रहृष्यामिकर्हिचित्
कालेनदैवयुक्तेनजानन्विद्रावितंजगत् १४ अधुनापिवयंसर्वेवीरयूथपयूथपाः पराजिताः
फल्गुतंत्रैर्यदुभिःकृष्णपालितैः १५ रिपवोजिग्युरधुनाकालआत्मानुसारिणि तदाव
यंविजेष्यामोयदाकालःप्रदक्षिणः १६ एवंप्रबोधितोमित्रैश्चैद्योगात्सानुगःपुरम् ह
तशेषाःपुनस्तेऽपिययुःस्वंस्वंपुरंनृपाः १७ रुक्मीतुराक्षसोद्वाहंकृष्णद्विड्सहन्स्वसुः पृ
ष्ठतोऽन्वगमत्कृष्णमक्षौहिण्यावृतोबली १८ रुक्म्यमर्षीसुसंरब्धःशृण्वतांसर्वभूभुजा
म् प्रतिजज्ञेमहाबाहुर्दंशितःसशरासनः १९ अहत्वासमरेकृष्णमप्रत्यूह्यचरुक्मिणी
म् कुंडिनंनप्रवेक्ष्यामिसत्यमेतद्ब्रवीमिवः २० इत्युक्त्वारथमारुह्यसारथिंप्राहसत्वरः॥
चोदयाश्वान्यतःकृष्णस्तस्यमेसंयुगंभवेत् २१ ॥अद्याहंनिशितैर्बाणैर्गोपालस्यसुदुर्मतेः
नेष्येवीर्यमदंयेनस्वसामेप्रसभंहृता २२॥१७॥१८॥१९॥२०॥२१॥ गोपालस्यवेदपालकस्येतिवास्तवोऽ
र्थः तथासुदुर्मतेरिति शोभनाअनुग्रहवतीदुष्टेष्वपिमतिर्यस्यत

५४ भा०द० ३० १९

२३ यदूनांकुलपांसनकुलदूषणवस्तुतस्तुयदूनांकुलस्यपतेहेअंसनस्वयंचरिपुहननचतुरअंसतमाघातनइत्यस्माद्धातोः

विकत्थमानःकुमतिरीश्वरस्याप्रमाणवित् रथेनैकेनगोविंदंतिष्ठतिष्ठेत्यथाह्वयत् २३

धनुर्विकृष्यसुदृढंजघ्नेकृष्णंत्रिभिःशरैः आहचात्रक्षणंतिष्ठयदूनांकुलपांसन २४ ॥

कुत्रयासिस्वसारंमेमुषित्वाध्वांक्षवद्धविः हरिष्येऽद्यमदंमंदमायिनःकूटयोधिनः २५

यावन्नमेहतोबाणैःशयीथामुंचदारिकां स्मयन्कृष्णोधनुश्छित्वाषड्भिर्विव्याधरुक्मिणं

२६ अष्टभिश्चतुरोवाहान्द्वाभ्यांसूतंध्वजंत्रिभिः सचान्यद्धनुरादायकृष्णंविव्याधपंचभिः

२७ तैस्ताडितःशरौघैस्तुचिच्छेदधनुरच्युतः पुनरन्यदुपादत्ततदप्यच्छिनदव्ययः २८

परिघंपट्टिशंशूलंचर्मासीशक्तितोमरौ यद्यदायुधमादत्ततत्सर्वंसोच्छिनद्धरिः २९ ॥

ततोरथादवप्लुत्यखड्गपाणिर्जिघांसया कृष्णमभ्यद्रवत्क्रुद्धःपतंगइवपावकं ३० त

स्यचापततःखड्गंतिलशश्चर्मचेषुभिः छित्वासिमाददेतिग्मंरुक्मिणंहंतुमुद्यतः ३१

दृष्ट्वाभ्रातृवधोद्योगंरुक्मिणीभयविह्वला पतित्वापादयोर्भर्तुरुवाचकरुणंसती ३२

कर्तरिल्युट्प्रत्ययोनंद्यादिविहितः २४ ध्वांक्षःकाकःसयथाहविर्मुष्णातितद्वत्वस्तुतस्तुअध्वांक्षवदितिच्छेदःसहस्ताक्षवदि

राम १९

३३ परित्रासेन विकंपितान्यंगानियस्याः तयाशुचाशोकेनअवशुष्यन्मुखंयस्याः रुद्धः कंठोयस्याः साचसाचतयाकातर्य्येण वैक्लव्येनविस्रंसितेनाहेनमयीमालायस्याः तयागृहीतौपादौयस्यसः ३४ सश्मश्रुकेशांसहितानिस्थानेस्थानेअवशिष्टानि

योगेश्वराप्रमेयात्मन्देवदेवजगत्पते हंतुंनार्हसिकल्याणभ्रातरंमेमहाभुज ३३ श्रीशुकउवाच तयापरित्रासविकंपितांगयाशुचावशुष्यन्मुखरुद्धकंठया कातर्य्यविस्रंसितहेममालयागृहीतपादः करुणोन्यवर्त्तत ३४ चैलेनवध्वातमसाधुकारिणांसश्मश्रुकेशंप्रवपन्व्यरूपयत् तावन्ममर्दुःपरसैन्यमद्भुतंयदुप्रवीरा नलिनीयथागजाः ३५ कृष्णांतिकमुपव्रज्यददृशुस्तत्ररुक्मिणं तथाभूतंहतप्रायंदृष्ट्वासंकर्षणोविभुः विमुच्यबद्धंकरुणोभगवान्कृष्णमब्रवीत् ३६ असाध्विदंत्वयाकृष्णकृतमस्मज्जुगुप्सितं वपनंश्मश्रुकेशानांवैरूप्यंसुहृदोवधः ३७ मैवास्मान्साध्व्यसूयेथाभ्रातुर्वैरूप्यचिंतया सुखदुःखदोनचान्योस्तियतःस्वकृतभुक्पुमान् ३८ बंधुर्वधार्हदोषोपिनबंधोर्वधमर्हति त्याज्यःस्वेनैवदोषेणहतःकिंहन्यतेपुनः ३९ क्षत्रियाणामयंधर्म्मःप्रजापतिविनिर्मितः

श्मश्रूणिकेशाश्चयथाभवंतितथातेनैवासिनाप्रवपन्मुंडयन्व्यरूपयत् विरूपमकरोत् ३५ तथाभूतंहतप्रायमित्युत्तरत्वाकोऽप्यनुषंगः ३६ ३७ रुक्मिणींसांत्वयतिमैवास्मानिति ३८ पुनःकृष्णमाक्षिपति बंधुरिति ३९ पुनर्देवींप्रत्याह क्षत्रियाणामिति ॥

येन धर्मेण भ्राता पि भ्रातरं हन्यात् ततस्तस्माद्घोरतरः अतिदारुणः धर्म्मश्च अतः कोस्माकमपराध इति भावः ४० पुनः।।
श्रीकृष्णं प्रत्याह राज्यस्येति तथाप्यस्माकमेतदनुचितमिति भावः ४१ पुनर्द्देवीं प्रत्याह नवेयमिति सर्व्वभूतेषु दुर्हृदामहिता
नां भ्रातॄणां अत्र त्वं वध इदं मन्यसे इच्छसि इयं तव विषमा असमीचीना वुद्धिः कुतः यतस्त्वं देवसुहृदामभद्रमिति यद्वा सर्व्व
भूतेषु दुर्हृदामपि स्वसुहृदां भद्रमेव दंडरूपं मुंडनमभद्रं यन्मन्यसे नवेयं विषमा वुद्धिरिति अथवा सर्व्वभूतेषु मध्ये दुर्हृदां शि

भ्राताऽपि भ्रातरं हन्यात् येन घोरतरस्ततः ४० राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः
मानिनोऽन्यस्य वा हेतोः श्रीमदांधाः क्षिपंति हि ४१ नवेयं विषमा वद्धिः सर्व्वभूतेषु दुर्हृदां
यन्मन्यसे सदाभद्रं सुहृदां भद्रमज्ञवत् ४२ आत्ममोहो नृणामेष कल्पते देवमायया सुहृ
दुर्हृदुदासीन इति देहात्ममानिनां ४३ एक एव परो ह्यात्मा सर्व्वेषामपि देहिनां नानेव गृ
ह्यते मूढैर्य्यथा ज्योतिर्य्यथा नभः ४४ देह आद्यंतवानेष द्रव्यप्राणगुणात्मकः आत्म
न्यविद्यया क्लृप्तः संसारयति देहिनं ४५ ।।१९ शुपालादीनां अभद्रं सुहृदां भद्रं च यन्मन्यसे तव इयं विषमा वुद्धिः
समान भवति अतत्त्ववत् अज्ञानामिव ४२ कुतः इत्यत आह आत्ममोह इति ४३ परमार्थमाह एक एवेति परः शुद्धः
ज्योतिश्चंद्रादिर्य्यथोदकेषु नभो यथा घटादिष्विति ४४ कुतस्तर्हि न चंद्रादिवदात्मानं एकं शुद्धं प्रतीमस्तत्राह देह
इति द्रव्यमधिभूतं प्राणा इंद्रियाण्यध्यात्मं गुणाशब्देनाधिदैवं तत्त्रितयात्मकदेहोपाधिना शुद्धो न प्रतीयत इत्यर्थः ४५।।

ननु देहसंबंधेनापि संसारे सति शुद्धत्वं गगनमेव तत्राह नात्मन इति हि सति अन्येन अधिभूतादिना आत्मनः संयोगवियोगौ न स्तः कुतः असतः असत्त्वादन्यस्येत्यर्थः कुतोऽसत्त्वं तत्राह तद्धेतुत्वादिति तस्मात्तस्य भूतेंद्रियादेः प्रसिद्धेः प्रकाशस्य तद्धेतुत्वात् आत्महेतुत्वात् ननु देवैरधिष्ठितेभ्य इंद्रियेभ्यो भूतानां प्रतीतिः प्रसिद्धा भूतप्रतीत्या च तत्प्रसिद्धिर्नात्मन इत्यत आह दृग्रूपाभ्यां यथा रवेः यथा प्रकाश्यप्रकाशकत्वेन वर्तमानयोरपि चक्षूरूपयोः रवेः सकाशात् प्रसिद्धिः द्वयोरपि नैजसत्त्वा त्तदभेदश्च तथा भूतेंद्रियादीनां परस्परं सिद्धानामपि चैतन्याधीन एव प्रकाशः तत्कार्यत्वाच्च तद्व्यतिरेकेणासत्त्वं चेत्यर्थः तथा चश्रुतिः न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति यद्वा रवेः प्र

नात्मनोऽन्येन संयोगो वियोगश्चासतः सति तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः ४६
जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् कलानामिव नैवेंदोर्मृतिर्ह्यस्य कुहूरिव ४७
यथा शयान आत्मानं विषयान्फलमेव च अनुभुंक्तेऽप्यसत्यर्थे तथाप्नोत्यबुधो भवं ४८॥

सिद्धाभ्यामेव दृग्रूपाभ्यां परस्परं प्रसिद्धिर्यथा भवति तद्वदिति ४६ देहसंबंधाभावादेव नात्मनो जन्मादयोऽपीति वक्तुं जन्मादीनां देहधर्मत्वमाह जन्मादयस्त्विति ननु कथं तर्हि जातोऽहं बालोऽहं वृद्धोऽहमिति आत्मनि जन्मादिप्रतीतिः देहजन्मादिनैवेति सदृष्टांतमाह कलानामिवेति इंदोः कलानामेव जन्मादयो नैवेंदोः यथा तद्वत् यथा च कलानाशादेव कुहूरमावास्या इंदुक्षय उच्यते तद्वदस्यात्मनो देहनाशादेव मृतिव्यवहार इत्यर्थः ४७ नन्वात्मनो देहादिसंबंधाभावे कथं भोक्तृभोग्यभोगप्रतीतिरित्याशंक्य स्वप्नदृष्टांतेन समर्थयते यथा शयान इति आत्मानं भोक्तारं विषयान् भोग्यान् फलं भोगं असत्यप्यर्थे अनुभुंक्ते तथाऽबुधः संसारं प्राप्नोतीति ४८॥

५५
भा॰ द॰
उ॰
२२

सःप्रसिद्धःकामशत्रुःशंबरस्तमात्मनःशत्रुंविदित्वाहृत्वासमुद्रेप्रास्यप्रक्षिप्यगृहमगादिति ३ निर्जगारगिलितवान् ४ स्व
धितिनाशस्त्रिकया अवद्यन् अवाद्यन् खंडितवंतः ५ तत्त्वंकामोऽयंतवभर्तेतिउत्पत्तिंश्रीकृष्णाद्रुक्मिण्यामुत्पन्नइति ६

तंशंबरःकामरूपीहृत्वातोकमनिर्दशम् सविदित्वात्मनःशत्रुंप्रास्योदन्वत्यगाद्गृहम् ३
तंनिर्जगारबलवान्मीनःसोऽप्यपरैःसह वृतोजालेनमहतागृहीतोमत्स्यजीविभिः ४
तंशंबरायकैवर्ताउपाजह्रुरुपायनम् सूदामहानसंनीत्वाऽवद्यन्स्वधितिनाऽद्भुतम् ५
दृष्ट्वातदुदरेबालंमायावत्यैन्यवेदयन् नारदोऽकथयत्सर्वंतस्याःशंकितचेतसः बाल।
स्यतत्त्वमुत्पत्तिंमत्स्योदरनिवेशनम् ६ साचकामस्यवैपत्नीरतिर्नामयशस्विनी पत्युर्नि
र्दग्धदेहस्यदेहोत्पत्तिंप्रतीक्षती ७ निरूपिताशंबरेणसासूपौदनसाधने कामदेवंशिशुं
बुध्वाचक्रेस्नेहंतदाऽर्भके ८ नातिदीर्घेणकालेनसकार्ष्णीरूढयौवनः जनयामासनारी
णांवीक्षंतीनांचविभ्रमम् ९ सातंपतिंपद्मदलायतेक्षणंप्रलंबबाहुंनरलोकसुंदरम् स
व्रीडहासोत्तभितभ्रुवेक्षतीप्रीत्योपतस्थेरतिरंगसौरतैः १० तामाहभगवान्कार्ष्णिर्मातस्ते
मतिरन्यथा मातृभावमतिक्रम्यवर्तसेकामिनीयथा ११ रतिरुवाच भवान्नारायणसुतःशंबरे
णाहृतोगृहात्॥ एयशस्विनीपतिव्रता भर्तृदेहप्राप्तिंप्रतीक्षमाणा ७ तंशिशुंकामदेवंबुध्वाविज्ञाय ८ विभ्रमंसंमोहम्

राम
२२

अधिकृतापत्नीत्यत्रहेतुः रतिरहंभवान्कामइति १२ १३ दुर्ज्जयत्वेहेतुः मायाशतविदमिति कथंतर्हिहंतव्यस्त-
त्राहमायाभिरिति १४ नचात्रविलंबःकार्यइत्याह परिशोचतिरोदितीत्यर्थः १५ १६ १७ १८ वज्रस्यनिष्पेषेणनिर्घो-

रतिरुवाच भवान्नारायणसुतः शंवरेणाहृतो गृहात् अहंतेऽधिकृतापत्नीरतिः का-
मोभवान्प्रभो १२ एषत्वांऽनिर्दशंसिंधावक्षिपच्छंवरोऽसुरः मत्स्योऽग्रसीत्तदुदरादिह
प्राप्तोभवान्प्रभो १३ तमिमंजहिदुर्द्धर्षंदुर्ज्जयंशत्रुमात्मनः मायाशतविदंत्वंचमायाभिर्मो-
हनादिभिः १४ परिशोचतितेमाताकुररीवगतप्रजा पुत्रस्नेहाकुलादीनाविवत्सागौरि-
वातुरा १५ प्रभाष्यैवंददौविद्यांप्रद्युम्नायमहात्मने मायावतींमहामायांसर्वमायाविना-
शिनीं १६ सचशंवरमभ्येत्यसंयुगायसमाह्वयत् अविषह्यैस्तमाक्षेपैःक्षिपन्संजनय-
न्कलिं १७ सोऽधिक्षिप्तोदुर्वचोभिःपदाहतइवोरगः निश्चक्रामगदापाणिरमर्षात्ताम्रलोच-
नः १८ गदामाविध्यतरसाप्रद्युम्नायमहात्मने प्रक्षिप्यव्यनदन्नादंवज्रनिष्पेषनिष्ठुरं १९
तामापतंतींभगवान्प्रद्युम्नोगदयागदां अपास्यशत्रवेक्रुद्धःप्राहिणोत्स्वगदांनृप २० स
चमायांसमाश्रित्यदैतेयींमयदर्शितां ॥ ९ नेयथानिष्ठुरस्तीव्रोनादोभवतितथाभूतंनादंव्यनदन्सा-
मान्यविशेषतयाव्याप्यव्यापकत्वमोदनंपाकंपचतीतिवत् अतिनिष्ठुरंनादमकरोदित्यर्थः १९ २० वैहायसैः ॥ ६

५५
भा॰ द॰
उ॰
२३

आकाशेस्थितः २१ सत्वात्मिकां सत्वगुणमयीं प्रायुंक्त तुनरस्यानुषंगः २२ ताः माया अधमयत् अनाशयत् २३ नामाणि अस्त्रशस्त्राणि यस्मिन् तत् ओजसा तेजसा बलेनेति वा २४ २५ विद्युता सह वलाहको मेघ इव २६ २७ नी

मुमुचेऽस्त्रमयं वर्षं काष्र्णौ विहायसोऽसुरः २१ वाध्यमानोऽस्त्रवर्षेण रौक्मिणेयो महार
थः सत्वात्मिकां महाविद्यां सर्वमायोपमर्द्दिनीं २२ ततो गौह्यकगांधर्वपैशाचोरगराक्षसीः
प्रायुंक्त शतशो दैत्यः कार्ष्णिर्व्यधमयत्सताः २३ निशातमसिमुद्यम्य सकिरीटं सकुंडलं शं
वरस्य शिरः कायात्ताम्रश्मश्र्वोजसाऽहरत् २४ आकीर्य्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्क
रैः भार्य्ययांवरचारिण्या पुरीं नीतो विहायसा २५ अंतःपुरवरं राजन् ललनाशतसंकुलं वि
वेश पत्न्या गगनात् विद्युतेव वलाहकः २६ तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससं प्रलंब
वाहुं ताम्राक्षं सुस्मितं रुचिराननं २७ स्वलंकृतमुखांभोजं नीलवक्रालकालिभिः कृष्णं मत्वा
स्त्रियो ह्रीता निलिल्युस्तत्र तत्र ह २८ अवधार्य्य शनैरीषद्वैलक्षण्येन योषितः उपजग्मुः प्र
मुदिताः सस्त्रीरत्नं सुविस्मिताः २९ अथ तत्रासितापांगी वैदर्भी वल्गुभाषिणी अस्मरा
त्स्वसुतं नष्टं स्नेहास्नुतपयोधरा ३०॥ सु॰ ए॰ लाश्च वक्राश्च ये ऽलकास्त एवालयस्तैः ह्रीताः लज्जिताः
२८ श्रीकृष्णो न भवतीति ईषद्वैलक्षण्ये कौस्तुभादिरहिते भगवत्यवधार्य्य सस्त्रीरत्नं स्त्रीषु रत्नं श्रेष्ठा रतिस्तत्सहितं २९ ३०॥

रामः
२३

सुतं स्मरन्त्याह कोन्वयमिति नरवैडूर्यः पुरुषश्रेष्ठः ३१ एतेन तुल्यं वयो रूपं च यस्य सः भवेदिति ३२ तस्य स्वपुत्रत्वं संभावयन्त्याह कथं त्विति ३३ न देवाधिकं संभावयति स एवेति ३४ देवक्यानकदुंदुभ्यां देवक्यानकदुंदुभिभ्यामित्यर्थः

कोऽन्वयंनरवैडूर्यः कस्यवाकमलेक्षणः धृतः कयावाजठरेकेयंलब्धात्वनेनवा ३१
ममचाप्यात्मजोनष्टोनीतोयःसूतिकागृहात् एतत्तुल्यवयोरूपोयदिजीवतिकुत्रचित्
३२ कथंत्वनेनसंप्राप्तंसारूप्यंशार्ङ्गधन्वनः आकृत्याऽवयवैर्गत्यास्वरहासावलोकनैः।
३३ सएववाभवेन्नूनंयोमेगर्भेधृतोर्भकः अमुष्मिन्प्रीतिरधिकावामःस्फुरतिमेभुजः ३४
एवंमीमांसमानायांवैदर्भ्यांदेवकीसुतः देवक्यानकदुंदुभ्यामुत्तमश्लोकआगमत् ३५
विज्ञातार्थोपिभगवांस्तूष्णीमासीज्जनार्दनः नारदोऽकथयत्सर्वंशंबराहरणादिकं ३६
तच्छ्रुत्वामहदाश्चर्यंकृष्णांतःपुरयोषितः अभ्यनंदन्बहूनब्दान्नष्टंमृतमिवागतं ३७
देवकीवसुदेवश्चकृष्णरामौतथास्त्रियः दंपतीतौपरिष्वज्यरुक्मिणीचययुर्मुदं ३८ न
ष्टंप्रद्युम्नमायातमाकर्ण्यद्वारकौकसः अहोमृतइवायातोबालोदिष्ट्येतिहाब्रुवन् ३९॥
यंवैमुहुःपितृसरूपनिजेशभावास्तन्मातरोयदभजन्रहरूढभावाः॥ ९ ३५ ३६ ३७ ३८ ३९

अतिसौंदर्येणप्रद्युम्नमनुवर्णयति यमिति पिताश्रीकृष्णस्तत्सरूपेणतत्सदृशेप्रद्युम्नेनिजआत्मीयईशः भर्तेति ॥

भावोभावनायासांनास्तन्मातरः कृष्णपत्न्योऽपिरहसिनिरूढभावाः सत्योयंअभजन्निति यदातन्नखलुचित्रंकथंस
ति स्मरेस्मर्य्यमाणत्वेनैवक्षोभकेकामेऽक्षिविषयेसतिअक्षाणांइंद्रियाणांविषये किंचरमास्पदंश्रीकृष्णस्तस्यविंवं
श्रीमूर्त्तिस्तस्यविंवेपुनेतदाकिंनुवक्तव्यंअन्यनार्य्योभेजुरिति ४०॥इतिदशमेपंचपंचाशत्तमः ५५ षट्पंचाशत्तमे
मिथ्याऽभियोगेमणिमाहरत् कन्यांजांववतः प्रापकृष्णः सत्राजितस्ततः १ पुत्रादिकामसौख्यस्यनिष्ठासुत्वाऽतिचां

चित्रंनतत्खलुरमास्पदविंवविंवेकामेस्मरेऽक्षिविषयेकिमुतान्यनार्य्यः ४०॥ इति
श्रीभागवतेमहापुराणेदशमस्कंधेपंचपंचाशत्तमोध्यायः ५५॥ श्रीशुकउवाच स
त्राजितःस्वतनयांकृष्णायकृतकिल्बिषः स्यमंतकेनमणिनास्वयमुद्यम्यदत्तवान् १
राजोवाच सत्राजितःकिमकरोद्ब्रह्मन्कृष्णस्यकिल्बिषं स्यमंतकःकुतस्तस्यकस्माद्द
त्तासुताहरेः २ शुकउवाच आसीत्सत्राजितःसूर्य्योभक्तस्यपरमःसखा प्रीतस्तस्मैमणिंप्रा
दात्सूर्य्यस्तुष्टःस्यमंतकं ३ सतंविभ्रन्मणिंकंठेभ्राजमानोयथारविः प्रविष्टोद्वारकांराजंस्ते
जसानोपलक्षितः ४॥

एवंचलो अर्थस्यानर्थतामाहस्यमंतहरणादिना २ सत्यभामाजांववत्योर्विवाहप्र
स्तावायस्यमंतकाख्यानमाह सत्राजितइति सत्राजितइत्यकारांतः क्वचित्त्वतकारांतोऽप्यन्वयानुसारेणद्रष्टव्यःकृता
पराधस्तच्छांतयेस्वयमेवोद्यम्यकृत्वामणिनासहप्रादादिति १।२ भक्तस्यसत्राजितःसूर्य्यःस्वाम्यपिसखेवआसीदित्य
र्थःसचतुष्टस्तस्मैस्यमंतकंनाममणिंप्रादात्प्रीतःस्निग्धः ३ नोपलक्षितःसत्राजितोऽसावितिनविज्ञातः॥४॥ ६ ॥

दीव्यते क्रीडते सूर्य्योयमिति शंकिताः संतः कथयामासुरिति ५ सूर्य्यनमस्कारायागतं कल्पयित्वोद्रिक्तभक्तीनां संबोधनानि नारायणेत्यादीनि ६ गभस्तिचक्रेण रश्मिजालेन मुष्णन् प्रतिघ्नन् तिग्मास्तीक्ष्णा गावो रश्मयो यस्य सः ७ नचेदमघटमानमित्याहुः नन्विति अन्विछ्छति मृगयंते अजः सूर्य्यः ८ बालानामज्ञानां वचनं ज्वलन् विद्योतमानः ९ कृतानि कौ

तं विलोक्य जना दूरात्तेजसा मुष्टदृष्टयः दीव्यतेक्षैर्भगवते शशंसुः सूर्य्यशंकिताः ५ नारायण नमस्तेस्तु शंखचक्रगदाधर दामोदरारविंदाक्ष गोविंद यदुनंदन ६ एष आयाति सविता त्वां दिदृक्षुर्ज्जगत्पते मुष्णन् गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः ७ नन्वन्विछ्छंति ते मार्गं त्रिलोक्यां विबुधर्षभाः ज्ञात्वाऽद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ८ श्रीशुक उवाच निशम्य बालवचनं प्रहस्यांबुजलोचनः प्राह नासौ रविर्द्देवः सत्राजिन्मणिना ज्वलन् ९ सत्राजित्स्वगृहं श्रीमत्कृतकौतुकमंगलं प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् १० दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो दुर्भिक्षमार्य्यरिष्टानि सर्पाधिव्याधयोऽशुभाः न संति मायिनस्तत्र यत्रास्तेभ्यर्च्चितो मणिः ११ स याचितो मणिं क्वापि यदुराजाय शौरिणा ॥ ९ ॥ तुकेन उत्सवेन मंगलानि यस्मिन् तत् विप्रैः कृत्वा १० भारप्रमाणं च चतुर्भिर्व्रीहिभिर्गुंजा गुंजाः पंच पणं पणान् अष्टौ धरणमष्टौ च कर्षं तांश्चतुरः पलं तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुला इति मारीनामका

अनेनभगवत्पसमर्प्पस्वयमश्रभोजिनःसर्वानिष्टनिवर्त्तकमपिअनिष्टहेतुरेवभवतीतिसूचितं १२ तदेवदर्शयितुमाह

नैवार्थकामुकःप्रादाद्याञ्चाभंगमतर्कयत् १२ तमेकदामणिंकंठेप्रतिमुच्यमहाप्रभं
प्रसेनोहयमारुह्यमृगयांव्यचरद्वने १३ प्रसेनंसहयंहत्वामणिमाच्छिद्यकेसरी गिरिं
विशन्जांववतानिहतोमणिमिच्छता १४ सोपिचक्रेकुमारस्यमणिंक्रीडनकंविले
अपश्यन्भ्रातरंभ्रातासत्राजित्पर्य्यतप्यत १५ प्रायःकृष्णेननिहतोमणिग्रीवोवनंगतः भ्राता
ममेतितच्छ्रुत्वाकर्णेकर्णेऽजपन्जनाः १६ भगवांस्तदुपश्रुत्यदुर्य्यशोलिप्तमात्मनि॥
मार्ष्टुंप्रसेनपदवीमन्वपद्यतनागरैः १७ हतंप्रसेनमश्वंचवीक्ष्यकेशरिणावने तंचा॥
द्रिपृष्ठेनिहतमृक्षेणददृशुर्ज्जनाः १८ ऋक्षराजविलंभीममंधेनतमसावृतं एकोवि
वेशभगवान् अवस्थाप्यवहिःप्रजाः १९ तत्रदृष्ट्वामणिश्रेष्ठंवालक्रीडनकंकृतं ह
र्त्तुंकृतमतिस्तस्मिन्नवतस्थेर्भकांतिके २० तमपूर्व्वंनरंदृष्ट्वाधात्रीचुक्रोशभीतवत् त
च्छ्रुत्वाभ्यद्रवत्क्रुद्धोजांववान्वलिनांवरः २१ सवैभगवतातेनयुयुधेस्वामिनात्मनः॥
पुरुषंप्राकृतंमत्वाकुपितोनानुभाववित् २२॥ एतमेकदेतिप्रतिमुच्यवध्वाप्रसेनःसत्राजिद्भ्राता १३ आच्छि

द्य आकृष्य गृहीत्वा १४।१५ अजपन् उपांशु अवोचन् १६।१७।
॥१८।१९।२०।२१।२२॥

क्रव्यार्थे आमिषार्थे २३ अष्टाविंशाहं अष्टचविंशतिश्च दिनानियस्मिंनत् अष्टाविंशाहं विंशतिशब्देति लोपआर्षः वज्रस्यनि।
ष्पेषोनिर्घातः तद्वत्परुषैर्निष्ठुरैः २४ श्रीकृष्णस्यमुष्टीनांविनिष्पातैः आघातैः विनिष्पिष्टानिश्लथानि अंगानामुरूणिपि।
बंधनानिसंधिस्थानानियस्यसः २५ लोकेकोवाऽयंमत्तोवलीयानितिविस्मितः सन् विमृश्याह जानेइति सर्वभूतानां यः प्रा
णः तत्रचयदोजः सहोबलंच इंद्रियहृदयदेहवलानितत्सर्वंत्वमित्यहंजाने कथं तथात्वमत आह विष्णुमित्यादि २६

द्वंद्वयुद्धंसुतुमुलमुभयोर्विजिगीषतोः आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थेश्येनयोरिव
२३ आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः वज्रनिष्पेषपरुषैरविश्रममहर्निशं
२४ कृष्णमुष्टिविनिष्पातनिष्पिष्टांगोरुवन्धनः क्षीणसत्वः स्विन्नगात्रस्तमाहातीव
विस्मितः २५ जानेत्वांसर्वभूतानांप्राणओजःसहोवल विष्णुंपुराणंपुरुषंप्रभविष्णुम
धीश्वरं २६ त्वंहिविश्वसृजांस्रष्टासृष्टानामपियच्चसत् कालः कलयतामीशः परआ
त्मातथात्मनां २७ यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत्क्षुभितनक्रतिमिंगिं

पुराणत्वेहेतुः त्वंहीतिस्रष्टानिमित्तंयच्चसत् उपादानं अतः पुराणं प्रभविष्णुत्वेहेतुः कालइति ऐलोऽब्धिः॥
अधीश्वरत्वमप्यतएवेत्याह ईशः परइति नचतदवस्थइत्याह आत्मनामात्मेति २७ यतएवंभूतः अतोममे
ष्टदेवंश्रीरघुनाथएवत्वमित्याह यस्येति ईषत् उत्कलितउद्दीपितोरोषस्तेनकटाक्षमोक्षास्तैः क्षुभितानक्राग्रा
हास्तिमिंगिलामहामत्स्याश्चयस्मिन्सोऽब्धिर्वर्त्ममार्गमादिशत्दत्तवान् तथापितस्मिन् येनत्वयास्वयशएवसेतुःकृतः॥

भा॰ द॰ उ॰ २६

उज्ज्वलिताचदग्धायस्येषुभिः क्षतानिछिन्नानिरक्षसोदशग्रीवस्यशिरांसिभुविपेतुःसएवत्वमितिजाने २८ इतिवि
ज्ञानंविज्ञापितंविज्ञानंयेनतंविज्ञानशब्दःकरणसाधनःकार्यसाधनोवा ऋक्षराजंप्रतिउक्तवान् २९ ३० वयंत्विहवह

सेतुःकृतःस्वयशउज्ज्वलिताचलंकारक्षःशिरांसिभुविपेतुरिषुक्षतानि २८ इति
विज्ञातविज्ञानमृक्षराजानमच्युतः व्याजहारमहाराजभगवान्देवकीसुतः २९
अभिमृश्यारविंदाक्षःपाणिनाशंकरेणतं कृपयापरयाभक्तंप्रेमगंभीरयागिरा ३०
मणिहेतोरिहप्राप्तावयमृक्षपतेविलं मिथ्याऽभिशापंप्रमृजन्आत्मनोमणिनाऽमु
ना ३१ इत्युक्तःस्वांदुहितरंकन्यांजांववतींमुदा अर्हणार्थंसमणिनाकृष्णायोपजहा
रह ३२ अदृष्ट्वानिर्गमंशौरेःप्रविष्टस्यविलंजनाः प्रतीक्ष्यद्वादशाहानिदुःखिताःस्व
पुरंययुः ३३ निशम्यदेवकीदेवीरुक्मिण्यानकदुंदुभिः सुहृदोज्ञातयोऽशोचन्विला
त्कृष्णमनिर्गतं ३४ सत्राजितंशपंतस्तेदुःखिताद्वारकौकसः उपतस्थुर्महामायांदुर्गां
कृष्णोपलब्धये ३५ तेषांतुदेव्युपस्थानात्प्रत्यादिष्टाशिषासच॥ ९॥वोवि लद्वारंप्राप्तास्तत्रमि

थ्याऽभिशापममुनामणिनाप्रमृजन् प्रमार्ष्टुमहमंतर्विलमिहप्राप्तइत्यर्थः ३१ सहमणिनासमर्पयामास ३२ ३३
३४ श्रीकृष्णप्राप्तयेचंद्रभागांनामदुर्गामभजन् ३५ सचकृष्णस्तेषांप्रादुर्बभूव असवइतिपाठे असवइंद्रियाणितेषां

रामं २६

कदादेव्या उपस्थानात्तयानान् प्रतिश्रादिष्टादत्तायाश्राशीः कृष्णंद्रक्ष्यथेतितयासहैव ३६ यद्लिलोकेजनाः कथंचिन्मृ
तंवंधुंपुनरागतमुपलभंतेतद्वदुपलभ्यसर्वेजातमहोत्सवाश्रासन्निति ३७ ३८ पाप्मनाश्रपराधेनानुतप्यमानः ३९

प्रादुर्बभूवसिद्धार्थः सदारोहर्षयन्हरिः ३६ उपलभ्यहृषीकेशंमृत्वापुनरिवागतं
सहपत्न्यामणिग्रीवंसर्वेजातमहोत्सवाः ३७ सत्राजितंसमाहूयसभायांराजसन्निधौ
प्राप्तिंचाख्यायभगवान्मणिंतस्मैन्यवेदयत् ३८ सचातिव्रीडितोरत्नंगृहीत्वाऽवाङ्मु
खस्ततः अनुतप्यमानोभवनमगमत्स्वेनपाप्मना ३९ सोऽनुध्यायंस्तदेवाघंवलव
द्विग्रहाकुलः कथंमृजाम्यात्मरजः प्रसीदेद्वाऽच्युतः कथं ४० किंकृत्वासाधुमह्यंस्यान्न
शपेद्वाजनोयथा अदीर्घदर्शनंक्षुद्रंमूढंद्रविणलोलुपं ४१ दास्येदुहितरंतस्मैस्त्री
रत्नंरत्नमेवच उपायोऽयंसमीचीनस्तस्यशांतिर्नचान्यथा ४२ एवंव्यवसितोबुद्ध्यासत्रा
जित्स्वसुतांशुभां मणिंचस्वयमुद्यम्यकृष्णायोपजहारह ४३ तांसत्यभामांभगवा
नुपयेमेयथाविधि वहुभिर्याचितांशीलरूपौदार्यगुणान्वितां ४४॥ एअघंदोषंआत्मनोरजःम

लंअपराधमिति ४० किंकृत्वाकस्मिन्कृतेइत्यर्थः साधुभद्रंअदीर्घदर्शनंअविचारकंमांक्षुद्रंकृपणंमूढंमंदमतिं ४१॥
एवंध्यायन्नुपायंनिश्चिनोतिदास्यइतिस्त्रीरत्नंदुहितरंतावद्दास्यामितदनंतरंपारिवर्हत्वेनरत्नमपीति ४२ ४३ वहुभिःकृ

मणिंनप्रतीच्छामः नस्वीकुर्मः देवः सूर्यः तद्भक्तस्यैनिकटाखः फलभागिनइतितवापुत्रत्वात्त्वदीयंधनमस्माकमेवेतिगू
ढोऽभिप्रायः ४५ ॥ इतिदशमेटीकायांषट्पंचाशत्तमोऽध्यायः ५६ सप्तपंचाशत्तमेतुपुनःशतधनोर्वधेप्राप्तंस्म
दुर्यशोमार्ष्टिकृष्णोऽक्रूराद्दृतान्मणेः १ अक्रूरस्सुरीकृत्यमणेःपात्रमथाच्युतः उपामंत्र्यतमेकांतेसरामोऽगान्नजाह्वयम् २

भगवानाहनमणिंप्रतीच्छामोवयंनृप तवास्तांदेवभक्तस्यवयंचफलभागिनः ४५ ॥ ९
॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेषट्पंचाशत्तमोऽध्यायः ५६ श्रीशुकउवा
च विज्ञातार्थोऽपिगोविंदोदग्धानाकर्ण्यपांडवान् कुंतींचकुल्यकरणेसहरामोययौ
कुरून् १ भीष्मंकृपंसविदुरंगांधारींद्रोणमेवच तुल्यदुःखौचसंगम्यहाकष्टमितिहो
चतुः २ लब्ध्वैतदंतरंराजन्शतधन्वानमूचतुः अक्रूरकृतवर्माणौमणिःकस्मान्नगृ
ह्यते ३ योऽस्मभ्यंसंप्रतिश्रुत्यकन्यारत्नंविगर्ह्यनः कृष्णायादान्नसत्राजित्कस्माद्भ्रात
रमन्वियात् ४ एवंभिन्नमतिस्ताभ्यांसत्राजितमसत्तमः शयानमवधील्लोभात्सपापः
क्षीणजीवितः ५ स्त्रीणांविक्रोशमानानांक्रंदंतीनामनाथवत् हत्वापशून्सौनिकवन्म
णिमादायजग्मिवान् ६ ॥ ९ सत्राजितःश्रीकृष्णाज्ञाभंगफलव्यक्तीकर्तुमाह विज्ञातोऽर्थोपीति पांडवाबिलद्वारेण
जतुगृहान्निर्गताइत्येवंविज्ञातोऽर्थोयेनसः कुंतींचदग्धामाकर्ण्यकुल्यकरणेकुलोचितसंव्यवहारार्थम् १ अन्येषांतद्दाहदुः
खाभावात् भीष्मादीन्संगम्येत्युक्तम् २।३ ननुजीवन्सत्राजित्कथंमणिंदास्यतितत्रोचतुः योऽस्मभ्यमितिभ्रातरंप्रसेनंमृतंकस्मा

॥ ७ ८ ९ १० ११ हेलनंप्रतिकूलम् वृजिनमपराधम् १२ अपीतोमृतः सप्तदशसंख्याकान् संयुगान् १३ ॥

सत्यभामाचपितरंहतंवीक्ष्यशुचार्पिता व्यलपत्तातताततेतिहाहतास्मीतिमुह्यती ७ तै
लद्रोण्यांमृतंप्रास्यजगामगजसाह्वयम् कृष्णायविदितार्थायतप्ताचख्यौपितुर्वधम् ।
८ तदाकर्ण्येश्वरौराजन्ननुसृत्यनृलोकताम् अहोनःपरमंकष्टमित्यस्राक्षौविलेपतुः ९
आगत्यभगवांस्तस्मात्सभार्यःसाग्रजःपुरम् शतधन्वानमारेभेहंतुंहर्तुंमणिंततः १० ॥
सोऽपिकृष्णोद्यमंज्ञात्वाभीतःप्राणपरीप्सया साहाय्येकृतवर्माणमयाचतसचाब्रवीत् ॥
११ नाहमीश्वरयोःकुर्यांहेलनंरामकृष्णयोः कोनुक्षेमायकल्पेततयोर्वृजिनमाचरन् १२
कंसःसहानुगोऽपीतोयद्द्वेषात्त्याजितःश्रिया जरासंधःसप्तदशसंयुगान्विरथोगतः १३ प्रत्या
ख्यातःसचाक्रूरंपार्ष्णिग्राहमयाचत सोऽप्याहकोविरुध्येतविद्वानीश्वरयोर्बलम् १४ यइदं
लीलयाविश्वंसृजत्यवतिहंतिच चेष्टांविश्वसृजोयस्यनविदुर्मोहिताजया १५ यःसप्तहायनः
शैलमुत्पाट्यैकेनपाणिना दधारलीलयाबालउच्छिलींध्रमिवार्भकः १६ नमस्तस्मैभ
गवतेकृष्णायाद्भुतकर्मणे अनंतायादिभूतायकूटस्थायात्मनेनमः १७ ॥ ६ ॥

१४ तौरामकृष्णावेकमेवतत्त्वमित्यभिप्रेत्याह यइदमिति अजयामाययामोहिताऽजयेतिसंधिरार्षः १५।१६। १७॥ ६॥

भा॰ द॰ उ॰ ५६ अंतर्यामिकृष्णनियुक्तस्तस्मिन्नक्रूरे मणिं न्यस्य ययौ अपलायत १८ गुरुः श्वशुरः तद्धंतारम् १९ शतयोजनमात्रगामि
त्वात्ततः परं गंतुमशक्तस्तत्र पतितः तं हयं विसृज्य २० व्यचिनोन्मृगयामास अक्रूरे मणिरस्तीति सर्वज्ञतया विदितार्थो

२८ प्रत्याख्यातः स तेनापि शतधन्वा महामणिं तस्मिन्न्यस्याश्वमारुह्य शतयोजनगं ययौ १८
गरुडध्वजमारुह्य रथं रामजनार्दनौ अन्वयातां महावेगैरश्वै राजन्गुरुद्रुहं १९
१९ मिथिलायामुपवने विसृज्य पतितं हयम् पद्भ्यामधावत्संत्रस्तः कृष्णोऽप्यन्वद्रवद्रुषा
२० पदातेर्भगवांस्तस्य पदातिस्तिग्मनेमिना चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम्
२१ अलब्धमणिरागत्य कृष्ण आहाग्रजांतिकम् वृथा हतः शतधनुर्मणिस्तत्र न विद्यते २२
तत आह बलो नूनं स मणिः शतधन्वना कस्मिंश्चित्पुरुषे न्यस्तस्तमन्वेष पुरं व्रज २३ अहं
विदेहमिच्छामि द्रष्टुं प्रियतमं मम इत्युक्त्वा मिथिलां राजन्विवेश यदुनंदनः २४ तं दृष्ट्वा सहसो-
त्थाय मैथिलः प्रीतमानसः अर्हयामास विधिवदर्हणीयं समर्हणैः उवास तस्यां कति-
चिन्मिथिलायां समा विभुः २५ ततोऽशिक्षद्गदां काले धार्त्तराष्ट्रः सुयोधनः मानितः प्रीति-
युक्तेन जनकेन महात्मना २६ केशवो द्वारकामेत्य निधनं शतधन्वनः अप्राप्तिं च मणेः प्रा-
ह प्रियायाः प्रियकृद्विभुः २७॥ १९ ऽपि रामवंचनाय तथाक्त नवानिति भावः २१ २२ अन्वेष अन्विच्छ २३
सर्वज्ञस्यैवं विचेष्टितं मद्वंचनायेति मत्वाग्रूढमन्यूराहमिति २४ कतिचित्समाः संवत्सरान् २५ प्रासंगिकमाह तत इति २६

राम २८

[illegible] ॥२८

बंधोः सत्राजितः सांपरायिकाः पारलौकिकाः २८ व्यूषतुः द्वारकायाः सकाशात् क्वापि पलायितौ प्रयोजकौ मणिहरणे श
तधन्वनः प्रवर्तकौ तत्राक्रूरः कृष्णानुमतेनैव गतः कृतवर्मा तु भक्तपक्षपातप्राकट्यभयादिवोपेक्षित इति गम्यते कथमन्यथा
सर्वज्ञेश्वरवंचनं तयोः संभवतीति २९ तदेवं वाराणस्यां दानपतिसमाख्यया मणिहस्ते अक्रूरे रुक्मवेदिकैर्महाध्वरैर्यजमा
ने निवसति पुनः श्रीकृष्णेनैव प्रस्थापितोऽक्रूर इति कर्णे कर्णे जपति जने सत्यभामारामादीनामप्यविश्वासे जनसंग्रहायाक्रूरं

ततः सकारयामास क्रियां बंधोर्हतस्य वै साकं सुहृद्भिर्भगवान्या याः स्युः सांपरायिकाः २८
अक्रूरः कृतवर्मा च श्रुत्वा शतधनोर्वधम् व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ २९ अ
क्रूरे प्रोषितेऽरिष्टान्यासन्वै द्वारकौकसाम् शारीरा मानसास्तापा मुहुर्दैविकभौतिकाः ३०
इत्यंगोपदिशंत्येके विस्मृत्य प्रागुदाहृतम् मुनिवासनिवासे किं घटेतारिष्टदर्शनम् ३१ दे
वेऽवर्षति काशीशः श्वफल्कायागताय वै स्वसुतां गांदिनीं प्रादात्ततोऽवर्षत्स्म काशिषु।
३२ तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र यत्र ह देवोऽभिवर्षते तत्र नोपतापा न मारिकाः ३३

समाहूय साक्षेपं श्रीकृष्णः प्राह इदं च भगवन्मतं संगोप्य केचन ऋषयोऽन्यत्कारणमक्रूरानयने वर्णयंति तद्यथा श्रुतं
दूषयितुमनुवदति अक्रूरे प्रोषित इति ३० दूषयति इतीति अंग हे राजन् श्रीकृष्णमाहात्म्यविस्मृत्येति तदेवाह॥
मुनिवासनिवास इति मुनीनां वासोऽयस्मिन् सः श्रीकृष्णस्तस्य निवासे सति अक्रूरापगममात्रेणारिष्टदर्शनं किं घटेत
न दिच्छां विना न घटेतेत्यर्थः ३१ पुनस्तन्मतमेवानुवर्णयति देव इति काशिषु देशेषु देवे मघवति अवर्षति सति ३२।३३॥

५६
भा० द०
उ०
२७

इत्येवंभूतमक्रूरमहिमप्रतिपादनपरं वृद्धानां वाक्यं श्रुत्वा सत्यमेवं तथाप्येतावदेव कारणं न भवति किंतु मणेरप्यपगम इति मत्वेत्येन दंतंपरमतम् ३४ विज्ञातमखिलं येन स चासौ अतएव चित्तज्ञश्च अयं भावः महाभागवतस्यास्य भयादत्तेऽपि मणा वपेक्षा नास्त्येव यस्मादाहूतो मणिना सहैवागत इति ज्ञात्वेति ३५ ३६ ततः किमत आह सत्राजित इति अपः पिंडांश्च नि

इति वृद्धवचः श्रुत्वा नैतावदिह कारणम् इति मत्वा समानाय्य प्राहाक्रूरं जनार्दनः ३४ पू
जयित्वाऽभिभाष्यैनं कथयित्वा प्रियाः कथाः विज्ञाताखिलचित्तज्ञः स्मयमान उवाच ह ३५
ननु दानपते न्यस्तस्त्वय्यास्ते शतधन्वना स्यमंतको मणिः श्रीमान्विदितः पूर्वमेव नः ३६
सत्राजितोऽनपत्यत्वाद्गृह्णीयुर्दुहितुः सुताः दायं निनीयापः पिंडान्विमुच्यर्णं च शेषितम् ३७
तथापि दुर्धरस्त्वन्यैस्त्वय्यास्तां सुव्रते मणिः ॥ किंतु मामग्रजः सम्यङ्न प्रत्येति मणिं प्रति ३८
दर्शयस्व महाभाग बंधूनां शांतिमावह अव्युच्छिन्ना मखास्तेऽद्य वर्तंते रुक्मवेदयः ३९
एवं सामभिरालब्धः श्वफल्कतनयो मणिम् आदाय वाससाच्छन्नं ददौ सूर्यसमप्रभम् ४०
स्यमंतकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः विमृज्य मणिना भूयस्तस्मै प्रत्यर्पयत्प्रभुः ४१॥

नीय दत्वा ऋणं च विमुच्यापाकृत्य शेषितमवशिष्टं दायं दुहितुः सत्यभामायाः सुता गृह्णीयुरिति शास्त्रमुतया च स्मरंति पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा तत्सुता गोत्रजा बंधुशिष्यसब्रह्मचारिण इति ३७ अग्रजोऽपि न प्रत्येति न विश्वसितीति ३८ ना स्तीति न वक्तव्यं यतः अव्युच्छिन्नाः संतता मखा वर्तंत इति ३९ आलब्ध उक्तः हृदि स्पृष्ट इति वा ४० रजः मिथ्याभिशापं संमृज्य

साम
२

दुष्कीर्तिं तन्मूलं दुरितं चेति ४२ ॥ इति द॰ टी॰ सप्तपंचाशत्तमोऽध्यायः ५७ ॥ अष्टपंचाशत्तमे तु कृष्णः पंच करेऽग्रहीत्
कालिंदीं मित्रविंदां च सत्यां भद्रां च लक्ष्मणां १ कालिंदीं निजलाभाय तपः परमुपेयुषीं परिणेष्यन्नीयावासमिंद्रप्रस्थमथा
गमत् २ प्रतीतान् नूनष्टान् पिलाक्षागारे द्रुपदगृहे पुनः सर्वैर्दृष्टान् युयुधानः सात्यकिः १ प्राणा इंद्रियाणि मुख्यं पंचवृत्तिं

यस्त्वेतद्भगवत ईश्वरस्य विष्णोर्वीर्याढ्यं वृजिनहरं सुमंगलं च आख्यानं पठति शृणोत्य
नुस्मरेद्वा दुष्कीर्तिं दुरितमपोह्य याति शांतिम् ४२ ॥ इति श्री॰ द॰ स्यमंतकोपाख्याने सप्तपं
चाशत्तमोऽध्यायः ५७ श्रीशुक उवाच एकदा पांडवान्द्रष्टुं प्रतीतान्पुरुषोत्तमः इंद्रप्र
स्थं गतः श्रीमान्युयुधानादिभिर्वृतः १ दृष्ट्वा तमागतं पार्था मुकुंदमखिलेश्वरम् उत्तस्थु
र्युगपद्वीराः प्राणा मुख्यमिवागतम् २ परिष्वज्याच्युतं वीरा अंगसंगहतैनसः सानुरागस्मि
तं वक्त्रं वीक्ष्य तस्य मुदं ययुः ३ युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवंदनम् फाल्गुनं परिरभ्या
थ यमाभ्यां चाभिवंदितः ४ परमासन आसीनं कृष्णा कृष्णमनिंदिता नवोढा व्रीडिता किं
चिच्छनैरेत्याभ्यवंदत ५ तथैव सात्यकिः पार्थैः पूजितश्चाभिवंदितः निषसादासनेऽन्ये
च पूजिताः पर्युपासिताः ६ पृथां समागत्य कृताभिवादनस्तयातिहार्दार्द्रदृशाऽभिरंभितः ॥
प्राणमिव २ ॥ ३ ज्येष्ठयोः प्रणामं कृत्वा समेनालिंगितः कनिष्ठाभ्यामभिवंदितो बभूव ४ कृष्णा द्रौपदी बहुभार्या सत्यपि अ
निंदा रहिता पार्थैर्नवमचिरमूढा परिणीता ५ । ६ अतिहार्देन स्नेहेन आर्द्रे सजले दृशौ यस्याः तया परिष्वक्तः ॥ ठू ॥

भा. द. उ. ३०

नयापरिदृष्टावांधवायस्यसः ७ प्रेम्णावैक्लव्यंतेनरुद्धः कंठोयस्याः क्लेशापाये आत्मनिदर्शनंयस्यतंभजतांक्लेशापाये आत्मानंदर्शयतीतिवा ८ ज्ञातीन्वंधूंश्च नोऽस्मान्यदाभ्राताअक्रूरःप्रेषितः ९ ज्ञातीनितिवचनात्प्राप्तंमोहंवारयं

आदृष्टवांस्तांकुशलंसहस्नुषांपितृष्वसारंपरिदृष्टवांधवः ७ नमाहप्रेमवैक्लव्यरु-
द्धकंठाश्रुलोचना स्मरंतीतान्वहून्क्लेशान्क्लेशापायात्मदर्शनं ८ तदैवकुशलंनो
भूत्सनाथास्तेकृतावयं ज्ञातीन्नःस्मरताकृष्णभ्राता मेप्रेषितस्त्वया ९ ननेऽस्तिस्वपरभ्रां
तिर्विश्वस्यसुहृदात्मनः तथाऽपिस्मरतांशश्वत्क्लेशान्हंसिहृदिस्थितः १० युधिष्ठिर
उवाच किन्नआचरितंश्रेयोनवेदाहमधीश्वर योगेश्वराणांदुर्दर्शोयन्नोदृष्टःकुमेधसां ११
इतिवैवार्षिकान्मासान्राज्ञासोऽभ्यर्थितःसुखं जनयन्नयनानंदमिंद्रप्रस्थौकसांविभुः
१२ एकदारथमारुह्यविजयोवानरध्वजं गांडीवंधनुरादायतूणौचाक्षयसायकौ १३
साकंकृष्णेनसन्नद्धोविहर्तुंगहनंवनं वहुव्यालमृगाकीर्णंप्राविशत्परवीरहा १४ तत्रा
विध्यच्छरैर्व्याघ्रान्सूकरान्महिषान्रुरून् शरभान्गवयान्खड्गान्हरिणान्शशशल्लकान्

नीत्याह ननेऽस्तीति तत्रहेतुःविश्वस्येति सुहृच्चआत्माचतस्य हंसिनाशयसि १० कुमेधसांविषयासक्तचित्तानांदृष्टोऽसि ११ सुखमवसदितिशेषः सुखमभ्यर्थितइतिवाक्रियासमाप्तिः १२ कालिंदीदर्शनप्रकारमाह एकदेति अक्षय्याःसायका

एम ३०

राज्ञेयुधिष्ठिरायमेध्यान्कर्माहान् वीभत्सुरर्जुनः १६ १७ सख्याश्रीकृष्णेन १८ १९ २० अयंमांकामयेदिति शंका

तान्निन्युः किंकराराज्ञेमेध्यान् पर्वण्युपागते तृट्परीतःपरिश्रांतोवीभत्सुर्यमुनामगात् १६ तत्रोपस्पृश्यविशदंपीत्वावारिमहारथौ कृष्णौददृशतुःकन्यांचरंतींचारुदर्शनां १७ तामासाद्यवरारोहांसुद्विजांरुचिराननां पप्रच्छप्रेषितःसख्याफाल्गुनःप्रमदोत्तमां १८ कात्वंकस्यासिसुश्रोणिकुतोऽसिकिंचिकीर्षसि मन्येत्वांपतिमिच्छंतींसर्वंकथयशोभने १९ कालिंद्युवाच अहंदेवस्यसवितुर्दुहितापतिमिच्छती विष्णुंवरेण्यंवरदंतपःपरममास्थिता २० नान्यंपतिंवृणेवीरतमृतेश्रीनिकेतनं तुष्यतांमेसभगवान्मुकुंदोऽनाथसंश्रयः २१ कालिंदीतिसमाख्यातावसामियमुनाजले निर्मितेभवनेपित्रायावदच्युतदर्शनं २२ तथाऽवदद्गुडाकेशोवासुदेवायसोऽपितां रथमारोप्यतद्विद्वान्धर्मराजमुपागमत् २३ यदैवकृष्णःसंदिष्टःपार्थानांपरमाद्भुतं कारयामासनगरंविचित्रंविश्वकर्मणा २४ भगवांस्तत्रनिवसन्स्वानांप्रियचिकीर्षया अग्नयेखांडवंदातुमर्जुनस्याऽऽससारथिः॥२५॥

यामाहनान्यमिति २१ २२ आदावेवतद्विद्वान् २३ प्रसंगान्नकालीनंचरित्रांतरमाह यदैवेति पार्थैर्यदैवसंदिष्टोविज्ञा पितःश्रीकृष्णस्तदैवतेषांविश्वकर्मणादेवशिल्पिनानगरंकारयामास २४ किंचभगवान्निरतिशयैश्वर्यगुणवानपिअर्जुन

॥ भा० द० उ० अ० ५८ ॥

अश्वयौ अक्षयसायकौ २६ खांडवदाहकवन्हेः सख्ये अर्जुनाय यस्मिन्निति सामान्यतो निर्देशः जलस्थलयोर्दृश्यो
भ्रमः यद्वा जले स्थलवत् हक् दृष्टिर्यस्मिन् तत् जलस्थलदृक् तस्मिन् भ्रम आसीदिति २७ २८ सुपुण्यऋतुः ऋक्षसंचय

सोऽग्निस्तुष्टो धनुरदाद्धयान् श्वेतान् रथं नृप अर्जुनायाक्षयौ तूणौ वर्म चाभेद्यमस्त्रिभिः।
२६ मयश्च मोचितो वन्हेः सभां सख्य उपाहरत् यस्मिन्दुर्योधनस्यासीज्जलस्थलदृशिभ्रमः
२७ स तेन समनुज्ञातः सुहृद्भिश्चानुमोदितः आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः २८
अथोपयेमे कालिंदीं सुपुण्यर्त्वृक्ष ऊर्जिते वितन्वन्परमानंदं स्वानां परममंगलं २९ विं
दानुविंदावावंत्यौ दुर्योधनवशानुगौ स्वयंवरे स्वभगिनीं कृष्णे सक्तां न्यषेधतां ३० रा।
जाधिदेव्यास्तनयां मित्रविंदां पितृष्वसुः प्रसह्य हृतवान्कृष्णो राजन्राज्ञां प्रपश्यतां ३१
नग्नजिन्नाम कौसल्य आसीद्राजाऽतिधार्मिकः तस्य सत्याऽभवत्कन्या देवी नाग्नजिती नृप
३२ न तां शेकुर्नृपा वोढुमजित्वा सप्त गोवृषान् तीक्ष्णशृंगान्सुदुर्धर्षान्वीरगंधासहान्खलान् ३३ तां श्रुत्वा वृषजिल्लभ्यां भगवान्सात्वतां पतिः जगाम कौसल्यपुरं सैन्येन महता

स्मिन् २९ पंचमं मित्रविंदाविवाहमाह विंदानुविंदाविति द्वाभ्यां आवंत्यौ अवंत्या राजानौ ३० ३१ षष्ठमाह नग्नजि
दिति कौसल्यः अयोध्यापतिः तस्य सत्या नाम कन्याऽभवत् आसीत् देवी कांतिमती नाग्नजितीति पितृनाम्ना प्रसिद्धेत्यर्थः ३२

प्रतिनंदितः तंप्रतिनंदितवान् श्रीकृष्णेनवासप्रतिनंदितः ३५ ३६ ३७ ३८ ३९ हेनरेंद्रराजन्यबंधोःक्षत्रियस्य शु

सकोसलपतिःप्रीतःप्रत्युत्थानासनादिभिः अर्हणेनापिगुरुणाऽपूजयन्प्रतिनंदितः ३५
वरंविलोक्याभिमतंसमागतंनरेंद्रकन्याचकमेरमापतिम् भूयादयंमेपतिराशिषोऽमलाः
करोतुसत्यायदिमेधृतोव्रतैः ३६ यत्पादपंकजरजःशिरसाबिभर्तिश्रीरब्जजःसगिरिशःस
हलोकपालैः लीलातनूःस्वकृतसेतुपरीप्सयेशःकालेदधत्सभगवान्ममकेनतुष्येत् ३७
अर्चितंपुनरित्याहनारायणजगत्पते आत्मानंदेनपूर्णस्यकरवाणिकिमल्पकः ३८ श्रीशु
कउवाच तमाहभगवान्हृष्टःकृतासनपरिग्रहः मेघगंभीरयावाचासस्मितंकुरुनंदन ३९
श्रीभगवानुवाच नरेंद्रयाञ्चाकविभिर्विगर्हिताराजन्यबंधोर्निजधर्मवर्तिनः तथाऽपिया
चेनवसौहृदेच्छयाकन्यांत्वदीयांनहिशुल्कदावयं ४० राजोवाच कोऽन्यस्तेऽभ्यधिकोना
थकन्यावरइहेप्सितः गुणैकधाम्नोयस्यांगेश्रीर्वसत्यनपायिनी ४१ किंत्वस्माभिःकृतःपू
र्वंसमयःसात्वतर्षभ पुंसांवीर्यपरीक्षार्थंकन्यावरपरीप्सया ४२ सप्तैतेगोवृषावीरदुर्दां
तादुरवग्रहाः एतैर्भग्नाःसुबहवोभिन्नगात्रानृपात्मजाः ४३॥ शुल्कदाः द्रव्यादिप्रदाः ४० गुणाना

मेकमेवधामस्थानंनतयाभूतस्ययस्तनवांगे ४१ ४२ दुर्दांताःअशिक्षिताःदुरवग्रहाःअपरायत्ताःकुतःतदाह एतैरितिभ

एतान्योनिगृण्हाति तस्यकन्येतिसमयः कृतः यदीमेगोवृषाः निगृहीताः दमिताः मथिताइतियावत् ४४ सप्तधाकृ
त्वेतिबद्धीनांयोषितांसंपूर्णएवाहंसंभोगयोग्यः स्यामितिसत्यांप्रत्यसापत्न्यदर्शनार्थमात्मनःसप्तधाकरणं ४५ ४६

यदीमेनिगृहीताःस्युस्त्वयैवयदुनंदन वरोभवानभिमतोदुहितुर्मेश्रियःपते ४४ एवंस
मयमाकर्ण्यबध्वापरिकरंप्रभुः आत्मानंसप्तधाकृत्वान्यगृह्णाल्लीलयैवतान् ४५ बध्वा
तान्दामभिःशौरिर्हतदर्पान्हतौजसः व्यकर्षल्लीलयाबद्धान्बालोदारुमयान्यथा ४६ ततः
प्रीतःसुतांराजाददौकृष्णायविस्मितः तांप्रत्यगृह्णाद्भगवान्विधिवत्सदृशींप्रभुः ४७ राज
पत्न्यश्चदुहितुःकृष्णंलब्ध्वाप्रियंपतिम् लेभिरेपरमानंदंजातश्चपरमोत्सवः ४८ शंखभेर्या
नकानेदुर्गीतवाद्यद्विजाशिषः नरानार्यःप्रमुदिताःसुवासःस्रगलंकृताः ४९ दशधेनुस
हस्राणिपारिबर्हमदाद्विभुः युवतीनांत्रिसाहस्रंनिष्कग्रीवसुवाससाम् ५० नवनागस
हस्राणिनागाच्छतगुणान्रथान् रथाच्छतगुणानश्वानश्वाच्छतगुणान्नरान् ५१ दंप
तीरथमारोप्यमहत्यासेनयावृतौ स्नेहप्रक्लिन्नहृदयोयापयामासकोसलः ५२ ॥ ६ ॥

४७ ४८ ४९ निष्कग्रीवाश्चताःसुवाससश्चतासांयुवतीनांचदासीनांत्रिसाहस्रमदादिति ५० नागात्नागेभ्यः
शतगुणान्नवलक्षाणि रथात्रथेभ्यःशतगुणान्नवकोटीः अश्वात्अश्वेभ्यःशतगुणान्नवपद्मानि ५१ ५२ ॥ ६

यदुभिर्गोवृषैश्च भग्नवीर्या अपिसुदुर्मर्षाः असहनशीलाः रुरुधुः ५३ अस्यतः क्षिपतः प्रयुंजानानि नियावत् ५४ ५५
सप्तमंविवाहमाह श्रुतकीर्तेरिति श्रुतकीर्तिर्नामयापितृष्वसा तस्याः सुतांभद्रांनाम कैकेयींतद्देशजाम् ५६ अष्टमंविवा
हमाह सुतांचेति एकएवसः श्रीकृष्णोलक्ष्मणांजहार ५७ तस्य निरोधोंतःपुरंतस्मात् ५८ भैष्मीजांववतीभामास

श्रुत्वैतद्रुरुधुर्भूपानयंतंपथिकन्यकाम् भग्नवीर्याःसुदुर्मर्षायदुभिर्गोवृषैःपुरा ५३ ता
नस्यतःशरव्रातान्बंधुप्रियकृदर्जुनः गांडीवीकालयामाससिंहःक्षुद्रमृगानिव ५४ पा
रिबर्हमुपागृह्यद्वारकामेत्यसत्यया रेमेयदूनामृषभोभगवान्देवकीसुतः ५५ श्रुतकी
र्तेःसुतांभद्रामुपयेमेपितृष्वसुः कैकेयींभ्रातृभिर्दत्तांकृष्णःसंतर्दनादिभिः ५६ सुतांच
मद्राधिपतेर्लक्ष्मणांलक्षणैर्युतां स्वयंवरेजहारैकःससुपर्णःसुधामिव ५७ अन्याश्चै
वंविधाभार्याःकृष्णस्यासन्सहस्रशः भौमंहत्वातन्निरोधादाहृताश्चारुदर्शनाः ५८ ॥
॥इति०द० अष्टमहिष्युद्वाहोनामाष्टपंचाशत्तमोऽध्यायः ५८ ॥राजोवाच यथाहतोभ
गवताभौमोयेनचताःस्त्रियः॥ १ त्याभद्राचलक्ष्मणा कालिंदीमित्रविंदाचेत्यष्टौपट्टमहास्त्रियः॥ ॥

॥इतिदशमेटीकायामष्टपंचाशत्तमः ५८ ॥ ऊनषष्टितमेभौमंहत्वातेनाहृताहरिः कन्याःसहस्रशःप्रापपारिजा
तंदिवोऽहरत् परिणीयततस्ताभिस्तन्मनोरथपूरणैः आत्मारामोप्यसौरेमेतद्गृहेषुगृहस्थवत् २ येनताःस्त्रियोनिरुद्धाः

५९
भा॰द॰
उ॰
३३

चक्रात् येनकारणेनिहतः तदाचक्ष्वेति १ इंद्रेणभौमचेष्टितंविज्ञापितः सन्प्राग्ज्योतिषपुरंभौमनगरंययाविति
न्वयः कथंभूतेनहृतंछत्रंयस्यतेनलोकपालप्रधानत्वादिंद्रस्यवरुणछत्रहरणेपितस्यैवमानभंगइतितथोक्तं॥
हृतेकुंडलेयस्याः साअदितिर्वंधुर्मातायस्यतेनहृतममराद्रेःस्थानंमणिपर्वतलक्षणंयस्यतेनसत्यभामायागृहे
भगवंतमिंद्रआगत्यविज्ञापितवान् तदातस्याः कौतुकायतयाभार्ययासहययाविति यद्वा त्वदनुज्ञयैवत्वत्सुते॥

निरुद्धाएतदाचक्ष्वविक्रमंशार्ङ्गधन्वनः १ श्रीशुकउवाच इन्द्रेणहृतछत्रेणहृतकुं
डलवंधुना हृताऽमराद्रिस्थानेनज्ञापितोभौमचेष्टितं २ सभार्योगरुडारूढःप्राग्ज्यो
तिषपुरंययौ गिरिदुर्गैःशस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमं मुरपाशायुतैर्घोरैर्दृढैःसर्वत
आवृतं ३ गदयानिर्विभेदाद्रीन् शस्त्रदुर्गाणिसायकैः चक्रेणाग्निंजलंवायुंमुरपा
शांस्तथाऽसिना ४ शंखनादेनयंत्राणिहृदयानिमनस्विनां प्राकारंगदयागुर्व्यानिर्वि
भेदगदाधरः ५ पांचजन्यध्वनिंश्रुत्वायुगांताशनिभीषणं मुरःशयानउत्तस्थौदैत्यःपं
चशिराजलात् ६॥ ए(?)हनिष्यामीतिहासोक्तंभूम्यैवरंदत्तंसत्यंकर्तुंसत्यभामायाभूम्यंशत्वात्तयासहययौ य
द्वा नारदानीतपारिजातैककुसुमेरुक्मिण्यैदत्तेसतिकुपितांसत्यभामांसांत्वयतातुभ्यंपारिजातमेवदास्यामीतिश्री
कृष्णेनप्रतिश्रुतमितिहरिवंशेप्रसिद्धं तदर्थंतांनीतवानितिज्ञेयं २ गरुडेनयानेकारणंगिरिदुर्गैरित्यादिनैरुपल
क्षितं जलाग्न्यनिलैश्चसर्वतोवर्तमानैर्दुर्गमम् ३ ४ ५ युगांताशनेर्दुर्निवर्त्तभीषणंपरिखायाजलात्॥६॥ ६॥

एम
३३

॥७॥ आविध्यआतोल्य समहान्नादद्दस्त्वन्वयः ८ तस्मैकृष्णायगदांव्यमुंचतव्यक्षिपत् ९ १० इंद्रतेजसावज्रेण

त्रिशूलमुद्यम्यसुदुर्निरीक्षणोयुगांतसूर्यानलरोचिरुल्बणः ग्रसंस्त्रिलोकीमिवपंचभिर्मु
खैरभ्यद्रवत्तार्क्ष्यसुतंयथोरगः ७ आविध्यशूलंतरसागरुत्मतेनिरस्यवक्त्रैर्व्यनदत्सपंच।
भिः सरोदसीसर्वदिशोऽवरंमहानापूरयन्नंडकटाहमावृणोत् ८ तदापतद्वैत्रिशिखंग
रुत्मनेहरिःशराभ्यामभिनत्त्रिधौजसा मुखेषुतंचापिशरैरताडयत्तस्मैगदांसोपिरुषा।
व्यमुंचत ९ तामापतंतींगदयागदांमृधेगदाग्रजोनिर्बिभिदेसहस्रधा उद्यम्यबाहूनभि
धावतोऽजितःशिरांसिचक्रेणजहारलीलया १० व्यसुःपपातांभसिकृत्तशीर्षोनिकृत्तशृं
गोद्रिरिवेंद्रतेजसा तस्यात्मजाःसप्तपितुर्वधातुराःप्रतिक्रियाऽमर्षजुषःसमुद्यताः ११ ता
म्रोंतरिक्षःश्रवणोविभावसुर्वसुर्नभस्वानरुणश्चसप्तमः पीठंपुरस्कृत्यचमूपतिंमृधेभौमप्रयु
क्तानिरगन् धृतायुधाः १२ प्रायुंजतासाद्यशरानसीन्गदाःशक्त्यृष्टिशूलान्यजितेरुषोल्बणाः
तच्छस्त्रकूटंभगवान्स्वमार्गणैरमोघवीर्यस्तिलशश्चकर्तह १३ तान्पीठमुख्याननयद्यमालक्ष्
यंनिकृत्तशीर्षोरुभुजांघ्रिवर्मणः स्वानीकपानच्युतचक्रसायकैस्तथानिरस्तान्नरकोधरासुतः

प्रतिक्रिययाहेतुभूतयाअमर्षजुषः ११ पीठंपीठनामानंनिरगन्निरगमन् १२ निकृत्तानिशीर्षादीनिएषांतान् १३

शतघ्नीं शक्तिविशेषं १५ विचित्रा वाजाः पत्राणि येषां तैर्बाणैः निकृत्ताः बाहवः ऊरवः शिरोध्राः कंधराः विग्रहा देहाश्च यस्मिन्तत् तर्ह्येव तं यदा विव्यधुः तस्मिन्नेव क्षणे १६ अत्याश्चर्यं कुरूद्वहेति संबोधनं तथाहि तैर्यानि प्रयुक्तानि शस्त्रास्

निरीक्ष्य दुर्मर्षण आस्रवन्मदैर्गजैः पयोधिप्रभवैर्निराक्रमत् दृष्ट्वार्कभार्यं गरुडोपरि स्थितं सूर्योपरिष्टात्सतडिद्घनं यथा कृष्णं स तस्मै व्यसृजच्छतघ्नीं योधाश्च सर्वे युगपत्स्म विव्यधुः १५ तद्भौमसैन्यं भगवान्गदाग्रजो विचित्रवाजैर्निशितैः शिलीमुखैः निकृत्तबाहूरुशिरोध्रविग्रहं चकार तर्ह्येव हताश्वकुंजरं १६ यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह हरिस्तान्यच्छिनत्तीक्ष्णैः शरैरेकैकशस्त्रिभिः १७ उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नता गजान् गरुत्मता हन्यमानास्तुंडपक्षनखैर्गजाः १८ पुरमेवाविशन्नार्ता नरको युध्ययुध्यत दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकं १९ तं भौमः प्राहरच्छक्त्या वज्रः प्रतिहतो यतः नाकंपत तया विद्धो मालाहत इव द्विपः २० शूलं भौमोऽच्युतं हन्तुमाददे वितथोद्यमः तद्विसर्गात्पूर्वमेव नरकस्य शिरो हरिः अपाहरद्गजस्थस्य चक्रेण क्षुरनेमिना २१॥

स्त्राणि तत्रास्त्रैः पूर्वमेव तत्सैन्यं सर्वं हत्वा पश्चात्तानि शस्त्राण्यस्त्राणि च विच्छेद तत्राप्येकैकं शस्त्रमस्त्रं च त्रिभिस्त्रिभिः शरैरित्याश्चर्यं १७ किं च गरुत्मनेति १८ १९ यतः यया शक्त्या वज्रः प्रतिहतः असौ गरुडस्तु नाकंपत २० गरुडे वितथोद्यमः सन् शूलं त्रिशूलं आददे

॥इतिदशमेटीकायामेकोनषष्टितमोध्यायः॥ ५९॥ अथषष्टितमेकृष्णःपरिहासेनरुक्मिणीं कोपयित्वाततःप्रेमक-
लहेनामसांत्वयत् १ रामारामजनानंदमहोदयविडंबनैः रुक्मिण्याप्रेमकलहच्छद्मनैश्वर्यमीर्यते २ स्वतल्पस्थंस्वप-
र्यंकस्थं १ वक्ष्यमाणंरुक्मिण्याःश्रियः श्रीकृष्णेपरमंप्रेमसंभावयितुंतस्योक्तमेवतत्त्वमनुस्मारयतियस्त्विति २ आ-

॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेपारिजाताहरणनरकवधोनामैकोनषष्टितमो-
ध्यायः॥५९॥श्रीशुकउवाच कर्हिचित्सुखमासीनंस्वतल्पस्थंजगद्गुरुं पतिंपर्यचरद्भैष्मीव्य-
जनेनसखीजनैः १ यस्त्वेतल्लीलयाविश्वंसृजत्यत्त्यवतीश्वरः सहिजातःस्वसेतूनांगोपीथाय
यदुष्वजः २ तस्मिन्नंतर्गृहेभ्राजन्मुक्तादामविलंबिना विराजितेवितानेनदीपैर्मणिमयैरपि
३ मल्लिकादामभिःपुष्पैर्द्विरेफकुलनादिते जालरंध्रप्रविष्टैश्चगोभिश्चंद्रमसोऽमलैः ४ पा-
रिजातवनामोदवायुनोद्यानशालिना धूपैरगरुजैराजन्जालरंध्रविनिर्गतैः ५ पयःफेन-
निभेशुभ्रेपर्यंकेकशिपूत्तमे उपतस्थेसुखासीनंजगतामीश्वरंपतिं ६॥

॥द्वौतावत्त्रिभिःश्लोकैर्मं-
दिरमनुवर्णयति तस्मिन्निति तच्छब्देनातिप्रसिद्धमाह भ्राजंतिमुक्तादामानितेषांविलंबाःसंतियस्मिंस्तेनवितानेनविराजि-
तेतृतीयांतानांविराजितपदेनान्वयः ३ सुगंधितयाद्विरेफकुलैर्नादिते प्रविशद्भिश्चंद्ररश्मिभिः ४ निर्गच्छद्भिःअगरुसं-
भवैर्धूपैश्चातिमनोहरत्वंदर्शितं ५ पयसःक्षीरस्यफेनइवमृदुनिपर्यंकस्यकशिपूत्तमेहंसतूलिकायांउपतस्थेअसेवत ६॥

तद्देवाभिनयतिबालव्यजनमिति ७ उपाच्युतं अच्युतस्यसमीपेसामणिनूपुराभ्यांरेजेक्कणयतीमणिमयौनूपुरौकूज॥
यंतीनयांऽगुलीयवलयव्यजनानिअग्रहस्तेयस्याःसावस्त्रांतेनगूढौस्थगितौकुचौतयोःकुंकुमेनशोणोहारस्तस्यभासा
तयानितंवेधृतायायापरार्ध्याअमूल्याकांचीतयाचरेजे ८ तांनिरीक्ष्यप्रीतःसन्स्मयमानोहरिराबभाषेकथंभूतां यालीं
लयाधृतनरतनोस्तस्यअनुरूपरूपांअनुरूपंरूपंयस्यास्तांयथोक्तंश्रीपराशरेणदेवत्वेदेवदेहेयंमनुष्यत्वेचमानुषी॥

वालव्यजनमादायरत्नदंडंसखीकरात् तेनवीजयतीदेवीउपासांचक्रईश्वरं ७ सोपाच्यु
तंक्कणयतीमणिनूपुराभ्यांरेजेंगुलीयवलयव्यजनाग्रहस्ता वस्त्रांतगूढकुचकुंकुमशोण
हारभासानितंवधृतयाचपरार्ध्यकांच्या ८ तांरूपिणींश्रियमनन्यगतिंनिरीक्ष्यालीलया
धृततनोरनुरूपरूपांप्रीतःस्मयन्नलककुंडलनिष्ककंठवक्त्रोल्लसन्स्मितसुधांहरिराबभाषे
८ श्रीभगवानुवाच राजपुत्रीप्सिताभूपैर्लोकपालविभूतिभिः महाऽनुभावैःश्रीमद्भीरूपौ
दार्यबलोर्जितैः १० तान्प्राप्तानर्थिनोहित्वाचैद्यादीन्स्मरदुर्मदान् दत्ताभ्रात्रास्वपित्राचक
स्मान्नोववृषेऽसमान् ११॥ ९ विस्मोर्दंहानुरूपांवैकरोत्येषात्मनस्तनुमिति किंच अलकैःकुंडलाभ्यांनिष्केण
पदकेनचालंकृतंकंठेनचतुर्दिक्षुशोभितेवक्त्रेउल्लसंतीस्मितसुधायस्यास्तां ९ सर्वगुणयुक्तायाअपितवबुद्धिर्मदेत्या
शयेनाह राजपुत्रीत्याद्येकादशभिः हेराजपुत्रिलोकपालानामिवविभूतिरैश्वर्यंयेषांतैःतथामहाऽनुभावैःमहाप्रभावैः
श्रीमद्भिराढ्यैरूपादिभिरूर्जितैश्चपूर्वंमीप्सितासि १० तान्हित्वानोऽस्मान्असमानान्कस्माद्वृषेवृतवतीत्वं ११ ॥९

किंच प्रायशः राजभ्यो जरासंधादिभ्यो बिभ्यतः भयं प्राप्नुवतः १२ अस्पष्टवर्त्मनाम विज्ञाताचाराणां अलोकपथं अस्त्री
पारतंत्र्यपदवीं मार्गं आस्थिताः अनुसृताः १३ किंच निष्किंचना इति १४ आत्मसमं परस्परमनुरूपं जन्मैश्वर्याभ्यां स

राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतान् बलवद्भिः कृतद्वेषान्प्रायस्त्यक्तनृपासनान्
१२ अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषां आस्थिताः पदवीं सुभ्रूः प्रायः सीदंति योषितः १३
निष्किंचना वयं शश्वन्निष्किंचनजनप्रियाः तस्मात्प्रायेण न ह्याढ्या मां भजंति सुमध्यमे १४ य
योरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् १५ वै
दर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया वृता वयं गुणैर्हीना भिक्षुभिः श्लाघिता मुधा १६
अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभं येन त्वमाशिषः सत्या इहामुत्र च लप्स्यसे १७ चै
द्यशाल्वजरासंधदंतवक्रादयो नृपाः मम द्विषंति वामोरु रुक्मी चापि तवाग्रजः १८ तेषां वी
र्यमदांधानां दृप्तानां स्मयनुत्तये आनीताऽसि मया भद्रे तेजोऽपहरताऽसतां १९ उदासीना
वयं नूनं न स्त्र्यपत्यार्थकामुकाः ॥ २० हिता आकृतिः रूपं जातिर्वा समा भवः आयतिः १५ न दीर्घा समीक्षा विचा
रो यस्यास्तया १६ ॥ अथ इदानीमपि १७ नहि किमित्यानीताऽहमिति चेत्तत्राह चैद्यशाल्वजरासन्धेति मम मां द्विषंति १८
स्मयनुत्तये गर्वापनयनाय १९ स्त्रीणामतिदुःसहमौदासीन्यमकामत्वं चाह उदासीना इति गेहयो देहगेहयोः ॥ २०

६०
भा·द·
उ·
२९

उदासीनाः अतएवज्योतिरक्रियाः ज्योतिः प्रदीपादिः तद्वत्साक्षिमात्रतया क्रियारहिता अस्महे वर्तामहे इति २० अविश्लेषा
द्वेतोरात्मानमेववल्लभामित्येवार्थे इवशब्दः २१ २२ चिंतालक्षणमाह पदेति नखैररुणा श्रीः कांतिर्यस्य तेनसुजातेनसुको

आत्मलब्ध्यास्महे पूर्णा गेहयोर्ज्योतिरक्रियाः २० श्रीशुकउवाच एतावदुक्त्वा भगवानात्मा
नंवल्लभामिव मन्यमानामविश्लेषात्तद्दर्पघ्नउपारमत् २१ इतित्रिलोकेशपतेस्तदात्मनः प्रि
यस्यदेव्यश्रुतपूर्वमप्रियं आश्रुत्यभीताहृदिजातवेपथुश्चिंतांदुरंतांरुदतीजगामह २२ पदा
सुजातेननखारुणश्रियाभुवंलिखंत्यश्रुभिरंजनाऽसितैः आसिंचतीकुंकुमरूषितौस्तनौतस्था
वधोमुख्यऽतिदुःखरुद्धवाक् २३ तस्याः सुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतोव्य
जनंपपात देहश्चविक्लवधियः सहसैवमुह्यन् रंभेववातविहताप्रविकीर्यकेशान् २४ तद्दृ
ष्ट्वाभगवान्कृष्णः प्रियायाः प्रेमबंधनं हास्यप्रौढिमजानंत्याः करुणः सोन्वकंपत २५ पर्यंका
दवरुह्याशुतामुत्थाप्यचतुर्भुजः केशान्समुह्यतद्वक्त्रंप्रामृजत्पद्मपाणिना २६ प्रमृज्याश्रु
कलेनेत्रेस्तनौचोपहतौशुचा ॥ २९ मलेनपदा २३ सुदुःखमप्रियश्रवणात् भयंत्यागशंकया शोकः अनुतापः
तैर्विनष्टाबुद्धिर्यस्याः तस्याः श्लथंतिपतंतिवलयानियस्माद्धस्तात्तस्मात् देहश्चपपातविक्लवा अवशाधीर्यस्याःतस्याः २४ हास्य
स्यप्रौढिंगांभीर्यं २५ चतुर्भुजइतिउत्थापनाश्लेषणवक्त्रपरिमार्जनाद्यर्थमाविष्कृतचतुर्भुजइत्यर्थः समुह्यनिरुध्य २६ अश्रु

राम
२९

शोभितेशुचाशोकाश्रुभिः २७ सांत्वयामासअनुनीतवान् २८ मामांत्वद्वचःकिंनुवदिष्यसीतिश्रोतुकामेनश्रोतुमिच्छताक्ष्वेल्या
नर्मणाएवमाचरितमुक्तंनतत्वतःहेअंगनेसुंदरि २९ प्रेमसंरंभेणप्रणयकोपेनस्फुरितःकंपितोऽधरोयस्मिन्ननत् कटशब्देन
कटाक्षाःतैराक्षेपैररुणावपांगौयस्मिन्‌नतत् अतएवसुंदरंकुटिलंभ्रुकुटीतटंयस्मिन्‌नतत् ३० ननुकलहेकिंकौतुकंसुखंवाअ

आश्लिषद्बाहुनाराजन्ननन्यविषयांसतीं २७ सांत्वयामाससांत्वज्ञःकृपयाकृपणांप्रभुः हा
स्यप्रौढिभ्रमच्चित्तामतदर्हांसतांगतिः २८ श्रीभगवानुवाच मामावैदर्भ्यसूयेथाजानेत्वांम
त्परायणां त्वद्वचःश्रोतुकामेनक्ष्वेल्याचरितमंगने २९ मुखंचप्रेमसंरंभस्फुरिताधरमीक्षितुं
कटाक्षेपारुणापांगसुंदरभ्रुकुटीतटं ३० अयंहिपरमोलाभोगृहेषुगृहमेधिनां यन्नर्मैर्नीयते
यामःप्रिययाभीरुभामिनि ३१ श्रीशुकउवाच सैवंभगवताराजन् वैदर्भीपरिसान्त्विता ज्ञात्वा
तत्परिहासोक्तिंप्रियत्यागभयंजहौ ३२ बभाषेऋषभंपुंसांवीक्षंतीभगवन्मुखं सव्रीडहा
सरुचिरस्निग्धापांगेनभारत ३३ रुक्मिण्युवाच नन्वेवमेतदरविन्दविलोचनाहयद्वैभवा
न्भगवतोऽसदृशीविभूम्नः ॥ ९ तत्राह अयंहीति नर्मैःनर्मभिःहास्यवचनैःयामःकालः ३१ ३२ भग
वतस्तस्यैश्वर्ययुक्तंमुखंसव्रीडहासेनरुचिरेणस्निग्धेनाऽपांगेनवीक्षमाणाः ३३ असमत्वंभयंदुर्गाश्रयणंप्रबलैःका
लिः अराजत्वमविज्ञातालौकिकेहाऽवसादनंनिष्किंचनत्वंतत्प्रीतिराढ्याऽनादरणीयता अनौचित्यंनिर्गुणत्वंवृथाश्लाघाच
भिक्षुभिः औदासीन्यमकामत्वंस्वदोषानष्टोदशाऽसतः अज्ञत्वादीर्घदर्शित्वेभैष्माराज्ञांवहूनगुणान् कृष्णनर्मोदितान् ॥ ९

मेष्वीन्मपेधत्त द्गुणस्तवैः भगवतास्वनिंदापराणीवयानिवचनानितानिसर्वोत्कर्षपरतयाव्याचक्षाणाप्रतिभाषते तत्रयदुक्तं
कस्मात्रोवव्रेसमानितितत्राःसामंसत्यमेवेत्याह नन्वेवमिति· हेअरविन्दलोचन· अधीशः त्रयाणांब्रह्मादीनामप्यधीशो
नियंतात्वंक्व क्वचाहंगुणप्रकृतिः त्रिगुणास्वभावाप्राकृतागुणामपीप्रकृतिर्वा ननुत्वमेवाधीश्वरीश्रीः सर्वैरुपास्यत्वादितिचे
दत्रआह अद्वैःसकामैः गृहीतौपादौयस्याःसा ३४ यदुक्तं राजभ्योविभ्यतः सुभ्रूः समुद्रंशरणंगतानितितत्राह सत्यमिति हे
उरुक्रमेतिभयाभावंदर्शयति गुणाः शब्दादयएवराजन्तइतिराजानस्तेभ्योभयादिवेति अन्तः हृदयेसमुद्रेन्तहृदगाधेविषया

क्वस्वेमहिम्न्यभिरतोभगवांस्त्र्यधीशः क्वाहंगुणप्रकृतिरज्ञगृहीतपादा ३४ सत्यंभयादिव
गुणेभ्यउरुक्रमान्तः शेतेसमुद्रउपलंभनमात्रआत्मा नित्यंकदिन्द्रियगणैः कृतविग्रहस्त्वंत्व
त्सेवकैर्नृपपदंविधुतंतमोऽन्धम् ३५ त्वत्पादपद्ममकरन्दजुषांमुनीनांवर्त्मास्फुटंनृपशुभिर्ननु
दुर्विभाव्यम् यस्मादलौकिकमिवेहितमीश्वरस्यभूमंस्तवेहितमथोअनुयेभवन्तम् ३६ ॥ ॥

कारैरपरिच्छिन्नइत्यर्थः शेतेनिश्चलतयाप्रकाशतेउपलंभनमात्रः चैतन्यघनः आत्माभवानितिवलवद्भिः कृतद्वेषानितियदु
क्तंतदपिसत्यमित्याह नित्यमिति कदिन्द्रियगणैः कुत्सितैर्बहिर्मुखैरिन्द्रियगणैः दृत्यभिप्रायेणवहुवचनम् कुत्सितइन्द्रियगणोयें
षामितिवातैस्त्वंनित्यं कृतविग्रहः तेषुतवाप्रतीतेः यदुक्तंत्यक्तनृपासनानितितदपियुक्तमेवेत्याह त्वत्सेवकैरिति नृपाणांपदमास
नमंधंगाढंतमएवतत् अविवेकवहुलत्वात्त्वत्सेवकैरेवतत्त्यक्तंकिंपुनर्वक्तव्यंत्वयात्यक्तमिति ३५ अस्पष्टवर्त्मनांपुंसामलो
कपथमीयुषामितियदुक्तंतदपितथैवेत्याहः त्वत्पादेति नृपशुभिर्नराकारैः पशुभिः किंपुनर्वक्तव्यंतववर्त्मास्फुटमिति किंचयस्मा
द्येभवंतमनुवर्तन्तेतेषामपीहितमलौकिकमिवअथोअनः किमुवक्तव्यंनवेश्वरस्येहितमलौकिकमित्यर्थः आस्थिताः पदवींसुभ्रूः प्रा

निष्किंचनावयंयस्मान्निष्किंचनजनप्रियाः तस्मात्प्रायेणनह्याढ्यामांभजन्तिसुमध्यमेइत्येतच्छ्लोकोक्तंदोषत्रयंपरिहरति॰ निष्किं चनइतिदरिद्रतालक्षणंनिष्किंचनत्वंतुतवनघटतइत्याह यस्माइति अन्यतोवलिभुजः पूज्या अपिब्रह्मादयोयस्मैभगवतेवलिं हरंतितस्यसर्वेश्वरस्यभवतोदरिद्रतानघटतइत्यर्थः निष्किंचनजनप्रिया इत्यत्रतत्पुरुषेणवहुव्रीहिणावानिंदास्यादितिस्वयम भुभयथास्तौति प्रेष्ठोभवानिति वलिभुजांब्रह्मादीनांलोकेश्वराणांत्वंप्रेष्ठःतेपितुभ्यंतवेति तस्मात्प्रायेणनह्याढ्यामांभजन्तीति तस्योत्तरम् नत्वाविदन्तीति॰ आढ्यतयांऽधाः त्वांयामंतकंनविदंति अतस्तेअसुतृपः अस्ह्लेवतर्पयंतिनत्वांभजन्तीत्यर्थः ३७ व

निष्किंच्चनोननुभवान्नयतोऽस्तिकिंचिद्यस्मैवलिंवलिभुजोऽपिहरंत्यजाद्याः नत्वाविदंत्यसु तृपोंऽतकमाढ्यतांधाः प्रेष्ठोभवान्वलिभुजामपितेऽपितुभ्यम् ३७ त्वंवैसमस्तपुरुषार्थमयः फलात्मायद्वांछयासुमतयोविसृजंतिकृत्स्नम् तेषांविभोसमुचितोभवतःसमाजःपुंसःस्त्रिया श्चरतयोःसुखदुःखिनोर्न ३८ त्वंन्यस्तदंडमुनिभिर्गदितानुभावआत्मात्मदश्चजगतामिति मेवृतोऽसि॥ ३९ लिभुजामपिभवान्प्रेष्ठइत्यत्रहेतुंवदंतीययोरेवसमंवित्तमित्यनेनोक्तमनौचित्यंपरिहरतित्वं वाइति फलात्मापरमानंदरूप इत्यर्थः एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः समाजःसंव्यसेवकलक्षण संवंधः ननुपुंसःस्त्रियाश्चमिथोरतयोः अतएवतत्कृतसुखदुःखिनोस्तदाकुलयोरित्यर्थः ३८ भिक्षुभिःश्लाघितामुग्धेत्यस्या परिहारःत्वमिति भिक्षुपदव्याख्यानं न्यस्तदंडैर्मुनिभिरिति मुग्धेत्यस्यपरिहारः आत्मेति यदर्थंसर्वंप्रियंभवतितस्यजग तामात्मनस्तववरणंनदुष्येतत्यर्थः किंच आत्मदइति वैदर्भ्येतदविज्ञायत्वयाऽदीर्घसमीक्षयेतित्वस्मिन्नुक्तंदोषद्वयंपरिहरति॥

६० मा०द० उ० ४०

इतीति इतिद्वाभ्यां नैवमेमयावृतोऽसीत्यज्ञानपरिहारः हित्वेत्यदीर्घसमीक्षापरिहारः भवतो भ्रुवः सकाशादुदीरितो यः कालस्त
स्यवेगः तेनध्वस्ता आशिषो येषां तान् ब्रह्मादीनपि विहाय कुतोऽन्ये वराका इत्यर्थः ३९ स्वाज्ञानं परिहृत्य पुरुषान्तरगुणवर्णन
प्रदीप्तकोपसंरंभेण तस्मिन्नेवाज्ञानमापादयति जाड्यमिति सिंहो यथा पशून्विद्राव्य स्वबलिं हरति तथा शार्ङ्गधनुर्निनादेन
वजरासंधादीन् विद्राव्य मां स्वभागं श्रियं यस्त्वं हृतवानसि तस्य तव राजभ्यो भयादुदधिं प्रपन्न इति यद्वचो भाषणं तज्जाड्यं म
मोघं नघटत इत्यर्थः ४० यच्चान्यदस्पष्टवर्त्मनामित्यादिना अर्थात्त्वां भजन्तः सीदन्तीत्यवसादनं अस्मावहन्त्वं उक्तं तदपि मंदमेवे

हित्वा भवद्भ्रुव उदीरितकालवेगध्वस्ताशिषोऽब्ज भवनाकपतीन्कुतोऽन्ये ३९ जाड्यं वचस्त
व गदाग्रज यस्तु भूपान्विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वं सिंहो यथा स्वबलिमीश पशून्स्वभागं
तेभ्यो भयाद्यदुदधिं शरणं प्रपन्नः ४० यद्वांछया नृपशिखामणयोऽङ्गवैन्यजायंतनाहुषग
यादय ऐकपत्यं राज्यं विसृज्य विविशुर्वनमंबुजाक्ष सीदंति तेऽनुपदवीं त इहास्थिताः किम् ४१
कोऽन्यं श्रयेत तव पादसरोजगंधमाघ्राय सन्मुखरितं जनताऽपवर्गं ॥ यत्त्वाह यद्वांछयेति यस्य तव भजनवां

छया नृपोत्तमाः अंगो वेनस्य पिता वैन्यः पृथुः जायंतो भरतः नाहुषो ययातिः गयश्चादिर्येषां ते य एते तव पदवीं मार्गं आश्रिताः ते किं
सीदंति न सीदंत्येव अपि तु त्वत्पदं प्राप्ता इत्यर्थः एवं च कोपावेशेनावसादनस्य परिहारादस्पष्टवर्त्मनामित्येतद्दानं तद्विहाया
त्रोत्कर्षः ४१ यच्चोक्तं अथात्मनोऽनुरूपमिति तत्राह कोऽन्यमिति श्लोकद्वयेन गुणानामालयस्य तव पादसरोजगंधं जा
नताया अपवर्गं मोक्षरूपं लक्ष्म्या आलयं तत्सेव्यं सद्भिर्मुखरितं वर्णितमाघ्रायतमविगणय्य मर्त्या मरणधर्मिका सदाउरु

एम ४०

कास्त्रीश्रयेतसेवेत अर्थेविविक्ताद्दृष्टिर्यस्याः सा गुणालयस्येत्यनेन गुणैर्हीनादिति यदुक्तं तदपास्तं ४२ अतस्त्वामेवाहमभज
मित्याह तत्त्वेति किंच प्रार्थयते स्यादिति अरणं शरणं सृतिभिर्देवतिर्यगादिभिर्जन्मभिः पाठांतरे त्वर्थवादबहुलकर्मश्रवणैरित्य
र्थः कथंभूतस्य तव यस्त्वं अनृतस्य संसारस्यापवर्गो नाशो यस्मात् सः भजंतमुपयाति आत्मसात्करोति तस्य तवांघ्रिरितिभीतस्य
स्यहि शरणमेवानुरूपं भजनयोग्यं अतस्त्वामहमभजमित्यर्थः ४३ येचोक्ताराज्ञां बहवोगुणाः राजपुत्रीप्सिताभूपैर्लोका

लक्ष्म्यालयं त्वः विगणय्य गुणालयस्य मर्त्यां मदोरुभयमर्थविविक्तदृष्टिः ४२ तं त्वाऽनुरू
पमभजं जगतामधीशमात्मानमत्रचपरत्र च कामपूरं स्यान्मे तवांघ्रिरणं सृतिभिर्भ्रमंत्या
योवैभजंतमुपयात्यनृतापवर्गः ४३ तस्याः स्युरच्युतनृपाभवतोपदिष्टाः स्त्रीणां गृहेषु ख
रगोश्वविडालभृत्याः यत्कर्णमूलमरिकर्षण नोपयायाद्युष्मत्कथामृडविरिंच्यसभासु गीता
४४ त्वक्श्मश्रुरोमनखकेशपिनद्धमंतर्मांसास्थिरक्तकृमिविट्कफपित्तवातम् जीवच्छ
वंभजति कांतमतिर्विमूढा या ते पदाब्जमकरंदमजिघ्रती स्त्री ॥४५॥

एपालविभूतिभिरित्यादिना
तत्रसेर्ष्यमशापं सांगुलिभंगं चाह द्वाभ्यां तस्याः स्युरिति खरा इव केवलं भारवाहाः गावो बलीवर्दा इव नित्यं व्यापारक्लिष्टाः
श्वान इवावमताः विडाला इव कृपणाः हिंस्राश्च भृत्या इव किंकराः नृपास्तस्या दुर्भगायाः पतयः स्युः यस्याः कर्णपथं त्वत्क
थान प्राप्नुयादिति ४४ तथाहि ते पदाब्जमकरंदमजिघ्रती सती या स्त्री विमूढा सा कांतो ऽयमिति मतिर्यस्याः सा कांतमतिः जीव
च्छवं भजति त्वगादिभिर्बहिः पिनद्धं छन्नं अंतर्मांसादिमयमिति ४५

६०
भा·द·
उ·
४१

यदुक्तमुदासीना वयमित्यादिना तत्राह अस्त्वेति यद्यपि त्वं निरपेक्षस्तथापि मम ते चरणानुरागोऽस्तु मयि च मय्यपि नातिरि-
क्ता अतिशयवती दृष्टिर्यस्य तस्य ते आत्मन् आत्मन्येव रतस्य न तर्हि तव तेन को लाभः त्वच्चरणानुराग एव महान् लाभः किंच
यर्हि अस्य विश्वस्य वृद्धये उपात्ता रजसः अतिमात्रा आधिक्यं येन सः तथाभूतः सन् मां समीक्षसे उ एवार्ये हहर्षेन तदेव नः परमाऽ-
नुकंपा अत्यनुग्रह इति ४६ तदेवं तदुक्तं सर्वं प्रतिव्याख्याय प्रसन्नचित्ता मंत्रमुपदिशन्त्याह द्वाभ्यां नैवेति अथात्मनोऽनुरू-

अस्त्वंबुजाक्ष मम ते चरणानुराग आत्मन् रतस्य मयि चानतिरिक्तदृष्टेः यर्ह्यस्य वृद्धय उपात्त-
रजोऽतिमात्रो मामीक्षसे तदु ह नः परमाऽनुकंपा ४६ नैवालीकमहं मन्ये वचस्ते मधुसू-
दन अंबाया इव हि प्रायः कन्यायाः स्याद्रतिः क्वचित् ४७ व्यूढायाश्चापि पुंश्चल्या मनोऽभ्ये-
ति नवं नवं बुधोऽसतीं न बिभृयात्तां बिभ्रदुभयच्युतः ४८ श्रीभगवानुवाच साध्व्येतच्छ्रो-
तुकामैस्त्वं राजपुत्रि प्रलंभिता मयोदितं यदन्वात्थ सर्वं तत्सत्यमेव हि ४९ यान्यान्काम-
यसे कामान्मय्यकामाय भामिनि संति ह्येकांतभक्तायास्तव कल्याणि नित्यदा ५० ॥ ॥

पमित्यादि ते वचः अलीकं मिथ्येति नैवं मन्ये यतो लोके कन्याया एव क्वचिद्रतिर्भवति यथा काशिराजकन्यानां अंबा अंबि-
का अंबालिकानां तिसृणां मध्ये अंबायाः कन्याया एव शाल्वे रतिर्जाता न तु तत् मम रतिस्तु त्वय्येव पर्यवस्यतीत्यभिप्रायः ॥४७॥
व्यूढायाः परिणीताया अपीति उभयस्मादिह परलोकद्वयाच्च्युतो भ्रष्ट इति ४८ प्रलंभिता उपहासिता अन्वात्थ अन्वाख्यातव-
ती ४९ मयि एकांतभक्तायास्ते कामाः संत्येव अकामाय कामनिवृत्तये मोक्षपर्यवसायिन इत्यर्थः ५० ॥ ❁ ९ ❁ ॥

एम
४१

अनुवादेनवरान् दत्वातामभिनंदति उपलब्धमिति यद्यस्मान्मयिप्रवर्तमानाधीर्नापकर्षितानान्यविषयाजाता ५१ ए
कांतभक्तिमभिनंद्यतामेवदृढीकर्तुंसकामान्भक्तान्निंदतियेमामितिदांपत्येदंपत्युपभोगसुखार्थं ५२ मायामोहितत्वमेवो
पपादयति मांप्राप्येति अपवर्गेणसहसंपदोयस्मिन् तंमांप्राप्यप्रसाद्ययेकेवलंसंपदएवविषयान् वांछंतिनतुमानतत्पति
नांसांसंपदामपियोऽहमेवपतिस्तंतथायेविषयानिरयेपिअतिनिकृष्टयोनावपिस्युःतान् किंचतेषांपुंसांमात्रात्मकत्वात्॥

उपलब्धंपतिप्रेमपातिव्रत्यंचतेऽनघे॥ ॥यद्वाक्यैश्चाल्यमानायानधीर्मय्यपकर्षिता

५१ येमांभजंतिदांपत्येतपसाव्रतचर्यया कामात्मानोऽपवर्गेशंमोहितामममायया ५२

मांप्राप्यमानिन्यपवर्गसंपदंवांछंतियेसंपदएवतत्पतिं नेमंदभाग्यानिरयेऽपियेनृणां

मात्रात्मकत्वान्निरयःसुसंगमः ५३ दिष्ट्यागृहेश्वर्यसकृन्मयित्वयाकृतानुवृत्तिर्भवमो

चनीखलैः सुदुष्कराऽसौसुतरांदुराशिषोह्यसुंभरायानिकृतिंजुषःस्त्रियाः ५४ नत्वा

दृशींप्रणयिनींगृहिणींगृहेषुपश्यामिमानिनिययास्वविवाहकाले॥ ५५ विषयात्मकत्वान्निरयः

सुसंगमःशोभनसंगमएवस्मादतोमंदभाग्याएवतेइत्यर्थः ५३ तस्मात् हेगृहेश्वरि त्वयामयिभवमोचनीनिष्कामा
नुवृत्तिः कृताएतद्दिष्ट्याभद्रंकथंभूतास्खलैःसुदुष्करादुराशिषोदुरभिप्रायायाः अतएवासुंभरायाःप्राणतर्पणपरा
याः निकृतिंजुषोवंचनपरायाःस्त्रियाःसुतरामसावनुवृत्तिर्दुष्करेति ५४ किंच संतिनिष्कामाःप्रेम्णैवमय्य
नुवर्तमानावह्व्यः किंतु त्वयासदृशींकापिनपश्यामीतितस्याभक्तिंवहुमानेनाभिनंदति॥ ६ ॥ ६ ॥ ६ ॥

नत्वाहश्रीमितित्रिभिः उपश्रुताः सत्यः कथायस्यमे ५५ प्रोद्वाहपर्वणि अत्रानिरुद्धविवाहे अक्षगोष्ठ्यां द्यूतसभायांत
स्यभ्रातुर्वधं तस्मिन्कालेकालांतरेतदनुस्मरणतःपुनःपुनः समुत्थदुःखमस्माभिरयोगोवियोगस्तद्भीत्या असहःसोढवत्य
सि अनेनैवानिरुद्धविवाहानंतर्यमस्यज्ञातव्यं ५६ अपिच दूतइति आत्मलभनेमत्प्राप्त्यर्थंमयिचिरायतिशीघ्रोभाविनिवि
वाहेअगंतव्यमिति कृतेसमयेकथंचिदप्राप्तवतिसति एतद्विश्वंशून्यंमत्वा इदमनन्ययोग्यं अंगंजिहासेत्यक्तुमिच्छामि

प्राप्तान्नृपानवगणय्यरहोहरोमेप्रस्थापितोद्विजउपश्रुतसत्कथस्य ५५ भ्रातुर्विरूपकर
णंयुधिनिर्जितस्यप्रोद्वाहपर्वणिचतद्वधमक्षगोष्ठ्यां दुःखंसमुत्थमसहोऽस्मदयोगभीत्या
नैवाऽब्रवीःकिमपितेनवयंजितास्ते ५६ दूतस्त्वयात्मलभनेसुविविक्तमंत्रःप्रस्थापितो
मयिचिरायतिशून्यमेतत् मत्वाजिहासइदमंगमनन्ययोग्यंतिष्ठेततत्त्वयिवयंप्रतिनंदया
मः ५७ श्रीशुकउवाच एवंसौरतसंलापैर्भगवान्देवकीसुतः स्वरतोरमयारेमेनरलोकंवि
डंबयन् ५८ तथाऽन्यासामपिविभुर्गृहेषुगृहवानिव आस्थितोगृहमेधीयान्धर्मांल्लो
कगुरुर्हरिः ५९ ॥ ॥एत्यक्ष्यामीत्येवंदूतः प्रस्थापितः तथाह्युक्तंत्वयायर्ह्यंबुजाक्षनलभेयभवत्प्रसादं।
जह्यामसून्व्रतकृशान्शतजन्मभिःस्यादिति यद्वा अजिहासइतिछेदःत्यक्तुमैच्छइत्यर्थः तत्तवकर्मत्वय्येवति।
ष्ठेत् नतत् प्रतिकर्तुंशक्यमित्यर्थः किंतुकेवलंत्वांप्रतिनंदयामः हर्षयामइति ५७ सौरतसंलापैः सुरतनर्मगो।ष्ठी

॥इतिश्रीदशमेटीकायांषष्टितमोऽध्यायः॥ ६० ॥ एकषष्टितमेशौरेः पुत्रपौत्रादिसंततिः अनिरुद्धविवाहेचरुक्मिणोरा
मतोवधः १ अष्टाधिकशतद्यष्टसहस्रस्त्रीसमुद्भवान् कोटिशः पुत्रपौत्रादीन् हरिर्दारैरयोजयत् २ तदेतद्वक्तुमाह
एकैकशइति कृष्णस्याबलाभार्याः सर्वाया आत्मनिसंपत्तयापितुः सकाशादनवमान् अन्यूनान् १ प्रेष्ठंन्यमंसतअ
च्युतस्यप्रियतमंप्रत्येकंस्वंस्वंमेनिरे नतस्यतत्वमात्मारामत्वंविदंतिताः २ आत्मारामत्वव्यनक्तिद्वयेनचार्विति चार्वब्ज

॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेकृष्णरुक्मिणीसंवादेषष्टितमोध्यायः ६० ॥

॥श्रीसुकउवाच एकैकशस्ताः कृष्णस्यपुत्रान्दशदशावलाः अजीजनन्ननवमान्पितुः
सर्वात्मसंपदा १ गृहादनपगंवीक्ष्यराजपुत्र्योऽच्युतंस्थितं प्रेष्ठंन्यमंसतस्वंस्वंनतत्तत्व
विदः स्त्रियः २ चार्वब्जकोशवदनायतवाहुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः संमो
हिताभगवतोनमनोविजेतुंस्वैर्विभ्रमैः समशकन्वनिताविभूम्नः ३ स्मायावलोकलव
दर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः॥ ॥ १कोशवद्वदनंचआयतानिवाहुनेत्राणिच सप्रे
म्णाहासस्यरसेनवीक्षितानिचवल्गुजल्पाश्चभगवतः एतैः संमोहिताः वनिताः स्वैः स्वैरनेकैर्विभ्रमैस्तस्यश्रीकृष्णस
मनोविजेतुंहर्तुंनसमशकन् नशकन् नशक्तावभूवुः विभूम्नः परिपूर्णस्य ३ तासांविभ्रमान्वर्णयन्नेतद्दृढयतीति स्मा
येति स्मायागूढहसितंनतद्युक्तः अवलोकलवः कटाक्षः तेनदर्शितः सूचितोभावोऽभिप्रायः तेनहारिमनोहरणा
शीलंयद्भ्रूमंडलंतेनप्रहिताः प्रस्थापितायेसौरतामंत्राः तेषुशौंडैः प्रगल्भैरनंगस्यवाणैः शरैरन्यैश्चकरणैः॥ ॥

६१
भा॰ द॰
उ॰
४३

कामशास्त्रप्रसिद्धैः यस्येंद्रियंमनोविमथितुंक्षोभयितुंषोडशसहस्रमपिपत्न्योनशेकुरिति ४ अनुरागेणहासोऽवलोकश्च नवसंगमेल्लालसमौत्सुक्यंचतेआद्यायस्यविभ्रमकदंवस्तंभेजुःअनुरागहासावलोकनवसंगमलालसान्यंभेजुरितिवा

पत्न्यस्तुषोडशसहस्रमनंगवाणैर्यस्येंद्रियंविमथितुंकरणैर्नशेकुः ४ इत्थंरमापतिमवाप्यपतिंस्त्रियस्ताब्रह्मादयोऽपिनविदुःपदवींयदीयां भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसंगमलालसाद्यम् ५ प्रत्युद्गमासनवरार्हणपादशौचतांबूलविश्रमणवीजनगंधमाल्यैः केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपिविभोर्विदधुःस्मदास्यं ६ तासांयादशपुत्राणांकृष्णस्त्रीणांपुरोदिताः अष्टौमहिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणामिते ७ चारुदेष्णःसुदेष्णश्चचारुदेहश्चवीर्यवान् सुचारुश्चारुगुप्तश्चभद्रचारुस्तथाऽपरः ८ चारुचंद्रोविचारुश्चचारुश्चदशमोहरेः प्रद्युम्नप्रमुखाजाताःरुक्मिण्यांनाऽवमाःपितुः ९ भानुःसुभानुःस्वर्भानुःप्रभानुर्भानुमांस्तथा चंद्रभानुर्बृहद्भानुरतिभानुस्तथाष्टमः १० श्रीभानुःप्रतिभानुश्चसत्यभामात्मजादश सांबःसुमित्रःपुरुजिच्छतजिच्चसहस्र(जित् ११

तस्यमनोविजेतुंनशेकुरितिच ५ किंतुप्रत्युद्गमादिभिर्विभोस्तस्यदास्यंनित्यंविदधुरितिप्रौढभावेपिनवसंगमा(भि)धानं अगतसारत्वेनौत्सुक्येनचतथाप्रतीतेः तेषामेवश्लोकानांप्रस्तावांतरेपुनःपुनरावृत्तिरितिसौंदर्यात् ६ प्रासंगिकमुक्त्वाप्रस्तुतमाहतासामितिदशदशपुत्रायासांतासांमध्येअष्टौमहिष्योयाःप्रागुक्तास्तत्पुत्रानिति ७।८।९।१०।११॥

राम
४३

१२ श्रीमानितिवसोः कुंतेर्वाविशेषणं १३ भद्रोनामएकलःएकः सोमकः अवरः कनीयान् एतेकालिंद्याःसुताइति १४
माद्र्याःलक्ष्मणायाः १५ क्षुधिश्चदशमः एतेमित्रविंदात्मजाः १६ संग्रामजित्प्रमुखाः सत्यकांताःभद्रायाःसुताःशैव्याः

विजयश्चित्रकेतुश्चवसुमान्द्रविणःक्रतुः जांववत्याःसुताह्येतेसांवाद्याःपितृसंमताः १२
वीरश्चंद्रोऽश्वसेनश्चचित्रगुर्वेगवान्वृषः आमःशंकुर्वसुःश्रीमान्कुंतिर्नाग्नजितेःसुताः १३
श्रुतःकविर्वृषोवीरःसुवाहुर्भद्रएकलः शांतिर्दर्शःपूर्णमासःकालिंद्याःसोमकोऽवरः १४ प्रघो
षोगात्रवान्सिंहोवलःप्रवलऊर्द्ध्वगः माद्र्याःपुत्रामहाशक्तिःसहओजोऽपराजितः १५ वृको
हर्षोऽनिलोगृध्रोवर्द्धनोऽन्नादएवच महाशःपावनोवह्निर्मित्रविंदात्मजाःक्षुधिः १६ सं
ग्रामजिद्वृहत्सेनःशूरःप्रहरणोऽरिजित् जयःसुभद्रोभद्रायावामआयुश्चसत्यकः १७ दीप्ति
मांस्ताम्रतप्ताद्यारोहिण्यास्तनयाहरेः प्रद्युम्नाच्चानिरुद्धोऽभूद्रुक्मवत्यांमहावलः १८ पुत्र्यां
तुरुक्मिणोराजन्नाम्नाभोजकटेपुरे एतेषांपुत्रपौत्राश्चवभूवुःकोटिशोनृप मातरःकृष्णजाता
नांसहस्राणिचषोडश १९ ॥

॥ १८ नामापिसैवरोहिण्याःसुतानामुक्तिरन्यासामुपलक्षणार्थं १७
१८ एतेषामिति अन्येषामपिश्रीकृष्णपुत्राणांशतसंख्यस्त्रीषुपुत्राःपौत्राश्चकोटिशोवभूवुःतत्रहेतुत्वेनश्रीकृष्णपत्नी
नांवाहुल्यमनुस्मारयतिमातरःकृष्णजातानामितिचशब्देनाधिकाश्चेत्युक्तं १९ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

यः कृष्णं हंतुं रंध्रं प्रतीक्षते सकथं प्रादादिति वैवाहिकं विवाहनिमित्तं २० ननु रुक्मिणोऽभिप्रायं कथं जानीम इति चेदत
आह अनागतमिति अतींद्रियमस्मदादींद्रियागोचरं विप्रकृष्टं दूरस्थं व्यवहितं कुड्याद्यंतरितं २१ तत्रउत्तरं स्वयंवरेरुक्म
वत्यावृत्तः सनृराज्ञोनिर्जित्यजहारेति २२ यद्यपिश्रीकृष्णावमानितः तथापिवैरमनुस्मरन् अपिव्यतरत् प्रादात् अन्वमो

राजोवाच कथंरुक्म्यरिपुत्राय प्रादाद्दुहितरंयुधि कृष्णेनपरिभूतस्तंहंतुंरंध्रंप्रतीक्षते
एतदाख्याहिमेविद्वन्द्विषोर्वैवाहिकंमिथः २० अनागतमतीतंचवर्तमानमतींद्रियं वि
प्रकृष्टंव्यवहितंसम्यक्पश्यंतियोगिनः २१ शुकउवाच वृतःस्वयंवरेसाक्षादनंगोंगयुतस्त
या राज्ञःसमेतान्निर्जित्यजहारैकरथोयुधि २२ यद्यप्यनुस्मरन्वैरंरुक्मीकृष्णावमानितः व्यत
रद्भागिनेयायसुतांकुर्वन्स्वसुःप्रियं २३ रुक्मिण्यास्तनयांराजन्कृतवर्मसुतोबली उपयेमे
विशालाक्षींकन्यांचारुमतींकिल २४ दौहित्रायानिरुद्धायपौत्रींरुक्म्यददाद्धरेः रोचनांबा
द्धवैरोपिस्वसुःप्रियचिकीर्षया जानन्नधर्मंतद्यौनंस्नेहपाशानुबंधनः २५ तस्मिन्नभ्युद
येराजन्रुक्मिणीरामकेशवौ पुरंभोजकटंजग्मुः सांबप्रद्युम्नकादयः २६ ॥ ६ ॥



दतेत्यर्थः २३ सर्वासामप्येकैका कन्यातत्तर्वविवाहोपलक्षणार्थंज्येष्ठकन्याविवाहमाह रुक्मिण्याइति २४ यौनंविवाहः
तद्यौनमधर्मंजानन्निति द्विषदन्नंनभोक्तव्यंद्विषंतंनैवभोजयेत् इत्यादिलोकविरोधात् अस्वर्ग्यंलोकविद्विष्टंध
र्ममप्याचरेन्नत्विति निषेधाच्चेत्यर्थः २५ २६ ॥

लोकविरुद्धाचरणफलंवक्तुमाह तस्मिन्निति २७ अदीव्यतक्रीडितवान् २८ २९ निष्काणांलक्षंग्लहंपणंकृत

तस्मिन्निवृत्तउद्वाहेकालिंगप्रमुखान्नृपाः दृप्तास्तेरुक्मिणंप्रोचुर्बलमक्षैर्विनिर्ज्जय २७
अनक्षज्ञोह्ययंराजन्नपितद्व्यसनंमहत् इत्युक्तोबलमाहूयतेनाक्षैरुक्म्यदीव्यत २८ शतं
सहस्रमयुतंरामस्तत्रादददेपणं तंतुरुक्म्यजयत्तत्रकालिंगःप्राहसद्बलं दंतान्संदर्शयन्नु
च्चैर्न्नामृष्यत्तद्धलायुधः २९ ततोलक्षंरुक्म्यगृह्णाद्ग्लहंतत्राजयद्बलः जितवानहमित्या
हरुक्मीकैतवमाश्रितः ३० मन्युनाक्षुभितःश्रीमान्समुद्रइवपर्वणि जात्यारुणाक्षोतिरु
षान्यर्बुदंग्लहमाददे ३१ तंचापिजितवान्रामोधर्मेण छलमाश्रितः रुक्मीजितंमयाऽ
त्रेमेवदंतुप्राश्निकाइति ३२ तदाऽब्रवीन्नभोवाणीबलेनैवजितोग्लहः धर्मतोवचनेनैव
रुक्मीवदतिवैमृषा ३३ तामनादृत्यवैदर्भोदुष्टराजन्यचोदितः संकर्षणंपरिहसन्बभाषे
कालनोदितः ३४ नैवाक्षकोविदायूयंगोपालावनगोचराः अक्षैर्दीव्यंतिराजानोबाणैश्च
नभवादृशाः ३५ रुक्मिणैवमधिक्षिप्तोराजभिश्चोपहासितः क्रुद्धःपरिघमुद्यम्यज
घ्नेतंनृम्णसंसदि ३६॥ २९वान् कैतवंकपटं ३० न्यर्बुदंदशकोटीः ग्लहंक्षुभितोरामआददे ३१ छला
माश्रितोरुक्मीमयापितमित्याह ३२ ३३ ३४ ३५ नृम्णसंसदि मंगलसभायां॥ ३६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

३७ ३८ ३९ सूर्यपानवोढयासिद्धाः अखिलाअर्थाः अभ्युदयशत्रुवधादयोयेषांते ४० ॥इतिश्रीभागवतेमहापुराणेटीका

कलिंगराजंतरसागृहीत्वादशमेपदे दंतानपानयत्क्रुद्धोयोहसद्विवृतैर्द्विजैः ३७ अ

न्येनिर्भिन्नवाहूरुशिरसोरुधिरोक्षिताः राजानोदुद्रुवुर्भीतावलेनपरिघार्दिताः ३८ नि

हतेरुक्मिणिश्यालेनाब्रवीत्साध्वसाधुवा रुक्मिणीवलयोराजन्स्नेहभंगभयाद्धरिः ३९

ततोऽनिरुद्धंसहसूर्यावरंरथंसमारोप्यययुः कुशस्थलीम् रामादयोभोजकदाद्दशार्हाः

सिद्धाखिलार्थामधुसूदनाश्रयाः ४० ॥ ॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरा

र्द्धेअनिरुद्धविवाहेरुक्मिवधोनामएकषष्टितमोध्यायः ६१ राजोवाच वाणस्यतनया

मूषामुपयेमेयदूत्तमः तत्रयुद्धमभूद्घोरंहरिशंकरयोर्महत् एतत्सर्वंमहायोगिन्समा

ख्यातुंत्वमर्हसि १ श्रीशुकउवाच वाणःपुत्रशतज्येष्ठोवलेरासीन्महात्मनः येनवामनरू

पायहरयेऽदायिमेदिनी २ तस्यौरसःसुतोवाणःशिवभक्तिरतःसदा मान्योवदान्योधीमांश्च

सत्यसंधोदृढव्रतः ३ शोणिताख्येपुरेरम्येसराज्यमकरोत्पुरा तस्यशंभोःप्रसादेनकिंकराइ

वतेऽमराः सहस्रवाहुर्वाद्येनतांडवेऽतोषयन्मृडं ४॥ एवंदशमस्कंधेअनिरुद्धविवाहेरुक्मिवधोनामएक

षष्टितमोध्यायः ६१हियुक्षष्टितमेप्रोक्तमनिरुद्धस्यरोधनं कन्ययारममाणस्यवाणेनवहुवाहुना १ अनिरुद्धोद्वहेऽन्यस्मिन्वा

पुराधिपं पुरपालकं ५ ६ कामान् पूरयतीति कामपूरः स चासावमरांघ्रिपः कल्पतरुस्तं त्वां ७ ८ हे आद्य निभृतैर्भ

भगवान् सर्वभूतेशः शरण्यो भक्तवत्सलः वरेण छंदयामास स तं वव्रे पुराधिपं ५ स एकदा
ह गिरिशं पार्श्वस्थं वीर्यदुर्मदः किरीटेनार्कवर्णेन संस्पृशंस्तत्पदांबुजं ६ नमस्ये त्वां महा
देव लोकानां गुरुमीश्वरं पुंसामपूर्णकामानां कामपूरामरांघ्रिपं ७ दोःसहस्रं त्वया दत्तं परं भा
राय मेऽभवत् त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समं ८ कंडूत्या निभृतैर्दोर्भिर्युयुत्सुर्दि
ग्गजानहं आद्यायां चूर्णयन्नद्रीन् भीतास्तेपि प्रदुद्रुवुः ९ तच्छ्रुत्वा भगवान् क्रुद्धः केतु
स्ते भज्यते यदा त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते १० इत्युक्तः कुमतिर्हृष्टः स्वगृहं प्राविश
न्नृप प्रतीक्षन् गिरिशादेशं स्ववीर्यनशनं कुधीः ११ तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना
रतिं कन्याऽलभत कांतेन प्रागदृष्टश्रुतेन च १२ सा तत्र तमपश्यंती क्वासि कांतेति वादिनी
सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशं १३ वाणस्य मंत्री कुंभांडश्चित्रलेखा च तत्सुता
सख्यपृच्छत्सखीमूषां कौतूहलसमन्विता १४ कं त्वं मृगयसे सुभ्रूः कीदृशस्ते मनोरथः हा
स्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये १५॥ ९ निभृतैर्दोर्भिरद्रींश्चूर्णयन् अयाम अगच्छम् ९ १० स्ववीर्यस्य
नशनं नाशनं केतुभंगं प्रतीक्षमाणः ११ श्रीमहेश्वरादिष्टसंग्रामसम्प्रसंगमाह तस्योषेति प्राद्युम्निना अनिरुद्धेन तत्रापि
स्वप्ने १२ तं कांतमपश्यंती साऽउत्तस्थौ १३ ततः किं वृत्तं तदा
ह वाणस्येति १४ हस्तग्राहं भर्तारं १५॥

भा०टी०
उ०
४६

१६ १७
१६ १७ १८ त्वया दृष्टएषां मध्ये को वा भवेदिति देवादीन् यथावत् पटेऽलिखत् १९ प्रद्युम्नं लिखितं वीक्ष्य श्वशुरो

ऊषोवाच दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः पीतवासा बृहद्बाहुर्योषितां हृदयंग

मः १६ तमहं मृगये कांतं पाययित्वाऽधरं मधु क्वापि यातः स्पृहयंतीं क्षिप्त्वा मां वृजिना

र्णवे १७ चित्रलेखोवाच व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते तमानेष्ये नरं यस्

ते मनोहर्ता तमादिश १८ इत्युक्त्वा देवगंधर्वसिद्धचारणपन्नगान् दैत्यविद्याधरान्य

क्षान्मनुजांश्च यथाऽलिखत् १९ मनुजेषु च सा वृष्णीन् शूरमानकदुंदुभिं व्यलिखद्राम

कृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता २० अनिरुद्धं विलिखितं वीक्ष्योषावाङ्मुखी ह्रिया सोऽसा

वसाविति प्राह स्मयमाना महीपते २१ चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी ययौ वि

हायसा राजन् द्वारकां कृष्णपालितां २२ तत्र सुप्तं सुपर्यंके प्राद्युम्निं योगमास्थिता गृहीत्वा

शोणितपुरं सख्यै प्रियमदर्शयत् २३ सा च तं सुंदरवरं विलोक्य मुदितानना दुष्प्रेक्ष्ये स्व-

गृहे पुंभी रेमे प्राद्युम्निना समं २४ परार्ध्यवासःस्रग्गंधधूपदीपासनादिभिः पानभोजनभ

क्ष्यैश्च वाक्यैः शुश्रूषयाऽर्चितः २५॥ एयमितिलज्जिता २० २१ २२ शोणितपुरं नीत्वा २३ पुंभिर्दुःप्रेक्ष्ये प्रेक्षितुम

॥शक्ये २४ स च परार्ध्यैरमूल्यैर्वासः स्रगादिभिः शुश्रूषणपूर्वकमर्चितः सन् २५॥

भा०टी०
४६

तयाऽपह्नतेंद्रियोऽहर्गणानहर्दिनसमूहान्नवबुधे २६ आप्रीतांअतिहृष्टां दुरवच्छदैः छादयितुमशक्यैः २७ विचेष्टितं विरुद्धाचरणं २८ अनपायिभिः अपायः अपसर्पणं प्रमादोवा तद्रहितैः पाठांतरे दुष्टाप्रेष्यासखीयस्यास्तस्याः पुं

गूढः कन्यापुरे शश्वत्प्रवृद्धस्नेहयातया नाहर्गणान्सबुबुधेऊषयाऽपह्नतेंद्रियः २६ तां तथायदुवीरेणभुज्यमानांहतव्रतां हेतुभिर्लक्षयांचक्रुराप्रीतांदुरवच्छदैः २७ भटा आवेदयांचक्रूराजंस्तेदुहितुर्वयं विचेष्टितंलक्षयामः कन्यायाः कुलदूषणं २८ अनपायिभिरस्माभिर्गुप्तायाश्चगृहे प्रभो कन्याया दूषणंपुंभिर्दुष्प्रेक्षायानविद्महे २९ ततः प्रव्यथितोबाणोदुहितुः श्रुतदूषणः त्वरितः कन्यकाऽगारंप्राप्तोऽद्राक्षीद्यदूद्वहं ३० कामात्मजंतंभुवनैकसुंदरंश्यामंपिशंगांऽवरमंबुजेक्षणं वृहद्भुजंकुंतलकुंडलत्विषास्मितावलोकेनचमंडितानंनं ३१ दीव्यंतमक्षैः प्रिययाभिनृम्णयातदंगसंगस्तनकुंकुमस्रजं बाह्वोर्दधानंमधुमल्लिकाश्रितांतस्याग्रआसीनमवेक्ष्यविस्मितः ३२ सतंप्रविष्टंवृतमाततायिभिर्भटैरनेकैरवलोक्यमाधवः उद्यम्यमौर्वंपरिघंव्यवस्थितोयथांऽतकोदंडधरोजिघांसया ३३

भिर्दूषणंकुतोवेतिनजानीमइत्यर्थः २९ ३० कामस्यात्मनोदेहाज्जातं ३१ अभिनृम्णयासर्वमंगलयातस्याअंगसंगेन स्तनकुंकुमयस्यांस्रजिनांवाह्वोर्मध्येःवक्षसिदधानमधुमल्लिकाःवसंतभवामल्लिकाः तदाश्रितांतस्याग्रइत्यार्षःसंधिःतस्याअग्र

३४ शोकविषादाभ्यां विह्वला अवशा अश्रूणां कलाविंदवो ययोस्ते अक्षिणी यस्याः सा ३५ ॥इति दशमे टीकायां द्विषष्टितमोध्यायः ६२ त्रिषष्टितमे चाथ बाणायादवसंगरे स्तुतिर्ज्वरेण रुद्रेण बाणबाहुभिदो हरेः ५१ । कर्मेच युद्धादिकं

जिघृक्षया तान् परितः प्रसर्पतः शुनो यथा सूकरयूथपोऽहनत् ते हन्यमाना भवनाद्विनिर्गता निर्भिन्नमूर्द्धोरुभुजाः प्रदुद्रुवुः ३४ तं नागपाशैर्बलिनंदनो बली घ्नंतं स्वसैन्यं कुपितो बबंध ह॥ ऊषा भृशं शोकविषादविह्वला बद्धं निशम्याश्रुकलाक्ष्यरौदिषीत् ३५॥ ॥इति श्रीभागवते महापुराणे दशमस्कंधे अनिरुद्धबंधो नाम द्विषष्टितमोध्यायः ६२ ॥श्रीशुक उवाच॥ अपश्यतां चानिरुद्धं तद्बंधूनां च भारत चत्वारो वार्षिका मासा व्यतीयुरनुशोचतां १ नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः २ प्रद्युम्नो युयुधानश्च गदः सांबोथ सारणः नंदोपनंदभद्राद्या रामकृष्णानुवर्तिनः ३ अक्षौहिणीभिर्द्वादशभिः समेताः सर्वतो दिशं रुरुधुर्बाणनगरं समंतात् सात्वतर्षभाः ४ भज्यमानपुरोद्यानप्राकाराट्टालगोपुरं प्रेक्षमाणो रुषाविष्टस्तुल्यसैन्योभिनिर्ययौ ५ बाणार्थे भगवान् रुद्रः ससुतैः प्रमथैर्युतः॥

१।२ रामकृष्णानुवर्तिन इति तौ पुरतो निर्गताविव्त्यर्थः ३ सर्वतो दिशं दृत्यस्योत्तरेणान्वयः ४ भज्यमानानि पुरोद्यानादीनि द्वंद्वैकवद्भावः अट्टालाः प्राकारादुपरितनाः सुन्नतस्थानानि अभिनिर्ययौ बाणः ५ सुतैः

प्रमथैर्गणैः रामकृष्णाभ्यांयुयुधे ६ ७ ८ ९ १० ११ १२ प्रत्यस्त्राण्येवाह ब्रह्मास्त्रस्येति नैजं नारायणास्त्रं

आरुह्यानंदिवृषभंयुयुधेरामकृष्णयोः ६ आसीत्सुतुमुलंयुद्धमद्भुतंलोमहर्षणं कृ
ष्णशंकरयोराजन्प्रद्युम्नगुहयोरपि ७ कुंभांडकूपकर्णाभ्यांबलेनसहसंयुगः सांब
स्यवाणपुत्रेणवाणेनसहसात्यकेः ८ ब्रह्मादयःसुराधीशाःमुनयःसिद्धचारणाः गं
धर्वाप्सरसोयक्षाविमानैर्द्रष्टुमागमन् ९ शंकरानुचरान्शौरिर्भूतप्रमथगुह्यकान् डा
किनीर्यातुधानांश्चवेतालान्सविनायकान् १० प्रेतमातृपिशाचांश्चकूष्मांडान्ब्रह्मराक्ष
सान् द्रावयामासतीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः ११ पृथग्विधानिप्रायुंक्तपिनाक्यस्त्रा
णिशार्ङ्गिणे प्रत्यस्त्रैःशमयामासशार्ङ्गपाणिरविस्मितः १२ ब्रह्मास्त्रस्यचब्रह्मास्त्रंवाय
व्यस्यचपार्वतं आग्नेयस्यचपार्जन्यंनैजंपाशुपतस्यच १३ मोहयित्वातुगिरिशंजृंभणा
स्त्रेणजृंभितं वाणस्यपृतनांशौरिर्जघानासिगदेषुभिः १४ स्कंदःप्रद्युम्नवाणौघैरर्द्य
मानःसमंततः असृग्विमुंचन्गात्रेभ्यःशिखिनाऽपाक्रमद्रणात् १५ कुंभांडःकूपकर्णश्च
निपेतुर्मुसलार्दितौ दुद्रुवुस्तदनीकानिहतनाथानिसर्वतः १६॥१३ १४ शिखिनामयूरेणवाहनेन।
१५ तयोरनीकानिहतौनाथौयेषांतानि॥१६ ॥ १६ ॥ १६ ॥ १६॥ ॥ ॥ ॥ ॥ ॥

॥ १७ १८ १९ २० अनिरीक्षमाणस्तिर्यङ्मुखोबभूवेति २१ ज्वरस्तुयोद्धुमभ्यधावदिति २२ श्रीनारायणःशीत

विशीर्यमाणंस्वबलंदृष्ट्वाबाणोऽत्यमर्षणः कृष्णमभ्यद्रवत्संख्येरथीहित्वैवसात्यकिं
१७ धनूंष्याकृष्ययुगपत्बाणःपंचशतानिवै एकैकस्मिन्शरौद्वौद्वौसंदधेरणदुर्मदः
१८ तानिचिच्छेदभगवान्धनूंषियुगपद्धरिः सारथिंरथमश्वांश्चहत्वाशंखमपूरयत्
१९ तन्माताकोटरानामनग्नामुक्तशिरोरुहा पुरोऽवतस्थेकृष्णस्यपुत्रप्राणरिरक्षया २०
ततस्तिर्यङ्मुखोनग्नामनिरीक्षन्गदाग्रजः बाणश्चतावद्विरथश्छिन्नधन्वाऽविशत्पुरं
विद्राविते भूतगणेज्वरस्तुत्रिशिरास्त्रिपात् अभ्यधावतदाशार्हंदहन्निवदिशोदश २२
अथनारायणोदेवस्तंदृष्ट्वाव्यसृजज्ज्वरं माहेश्वरोवैष्णवश्चयुयुधातेज्वरावुभौ २३ मा
हेश्वरःसमाक्रंदन्वैष्णवेनबलार्दितः अलब्ध्वाऽभयमन्यत्रभीतोमाहेश्वरोज्वरः
शरणार्थीहृषीकेशंतुष्टावप्रयतांजलिः २४ ज्वरउवाच नमामित्वाऽनंतशक्तिं।
परेशंसर्वात्मानंकेवलंज्ञप्तिमात्रं॥ ९ ज्वरमसृजत माहेश्वरःसमाक्रंदन्युयुधे २३ २४ आत्मानंपर

मशक्तिमंतमन्यमानः श्रीकृष्णंतापयितुंप्रवृत्तः स्वयमेवतप्तःसन्तंपरमेश्वरंज्ञात्वास्तुवन्नमस्करोति नमामीति॥
त्वांत्वांअनंतशक्तिंनमामि कुतः परेशंब्रह्मादीनामीशं तत्रहेतुः सर्वात्मानंसर्वस्यात्मानंचेतयितारं ततः॥ ॥

केवलंशुद्धंज्ञप्तिमात्रंचैतन्यघनं तदेवंसर्वचेतयितृत्वेनपरमेश्वरत्वमुक्तं किंच विश्वसृष्ट्यादिहेतुत्वादपीत्याह विश्वो
त्पत्तीतिनन्वेवंभूतंब्रह्मप्रसिद्धंनाहमितितत्राह यत्तद्ब्रह्मेतियद्ब्रह्मतदेवत्वमित्यर्थः किंतद्ब्रह्मेतिअत आहब्रह्मलिंगं
ब्रह्मणावेदेनलिंग्यतेद्योत्यतइति तत्कुतः प्रशांतंसर्वक्रियारहितत्वात्नसाक्षाद्वाच्यमितिभावः २५ किंचयावत्सवि
शेषंवस्तुतत्रवयंप्रभवामः त्वयितुसर्वविशेषातीतेनकस्यापिप्रभुत्वंकिंतुत्वमेवसर्वस्यप्रभुरितिज्ञप्तिमात्रत्वंविवृण्वन्
स्तौति काल इति कालःक्षोभकः कर्मनिमित्तं तदेवफलाभिमुखमभिव्यक्तंदैवं स्वभावस्तत्संस्कारः जीवस्तद्वान्
द्रव्यंभूतसूक्ष्माणि क्षेत्रंशरीरं प्राणःसूत्रं आत्माअहंकारः विकारएकादशेंद्रियाणिमहाभूतानिचेतिषोडशकःतत्सं

विश्वोत्पत्तिस्थाननिरोधहेतुंयत्तद्ब्रह्मब्रह्मलिंगंप्रशांतं २५ कालोदैवंकर्मजीवःस्वभा
वोद्रव्यंक्षेत्रंप्राणआत्माविकारः तत्संघातोबीजरोहप्रवाहस्त्वन्मायैषातन्निषेधंप्रपद्ये २६
नानाभावैर्लीलयैवोपपन्नैर्देवान्साधून्लोकसेतून्बिभर्षि हंस्युन्मार्गान्हिंसयावर्त्तमानान्
जन्मैतत्तेभारहारायभूमेः २७ ॥ घातोलिंगदेहः एतस्यचबीजरोहवत् प्रवाहः रोहोऽंकुरः देहाद्बी
जरूपं कर्मततोंकुररूपोदेहः ततः पुनरेवमितिप्रवाहः एषात्वन्मायातस्यानिषेधः अपोहोयस्मिन् तंत्वांनिषेधा
वधिभूतंप्रपद्येभजइति २६ ननुदेवकीतनयस्यमेकथमेवंभूतत्वंतत्राह नानाभावैरिति सर्वोपाधिविनिर्मु
क्तएवत्वंयथालीलयास्वीकृतैर्मत्स्याद्यवतारैःदेवान्बिभर्षिपालयसितदर्थंलोकसेतून्वर्णाश्रमधर्मान् तद
र्थंतदनुष्ठातॄन्साधून्तदंगत्वेनउन्मार्गान् दैत्यादीन् हंसिसंहरसि एवमेतदपितवजन्मभूमेर्भारहरणाय
लीलावतारोऽयंनकस्यापित्वंतनयइत्यर्थः २७ ॥

द० भा० द० उ० ४७

अतोऽज्ञानतस्त्वद्भिमवे प्रवृत्तं मां तप्तं रक्षेत्याशयेनाह नष्टोहामेति तेतेजसा त्वत्सृष्टेन ज्वरेण शांतोग्रेण शीतज्वरेण प अतोऽज्ञानतस्त्वदभिभवे प्रवृत्तं मां तप्तं रक्षेत्याशयेनाह । त्वत्तेजसा त्वत्सृष्टेन ज्वरेण शान्तोग्रेण शीतज्वरेण प रसंतापकस्य युक्त एव तापः इति चेत्तत्राह तावदिति सेवायां प्रवृत्तानामनुचित इति भावः २८ हे त्रिशिरः व्येतु अप यातु मदाज्ञापालकः सन् सुखं विचर काऽसावाज्ञा तामाह यदिति नौ आवयोः इमं संवादं यः स्मरेत्तस्य त्वत् त्वत्तः न भयं भ

तप्तोऽहं ते तेजसा दुःसहेन शांतोग्रेणातिउल्बणेन ज्वरेण तावत्तापो देहिनां तेंघ्रिमूलं नो सेवेरन् यावदाशानुवद्धाः २८ श्रीभगवानुवाच त्रिशिरस्ते प्रसन्नोहं व्येतु ते मज्ज्वराद्भयं यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयं २९ इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः वाणासुरस्तु रथमारूढः प्रागाद्योत्स्यन् जनार्दनं ३० ततो बाहुसहस्रेण नानायुधधरोऽसुरः मुमोच परमक्रुद्धो वाणांश्चक्रायुधे नृप ३१ तस्याऽस्यतोऽस्त्राण्यसकृच्चक्रेण क्षुरनेमिना चिच्छेद भगवान् वाहून् शाखा इव वनस्पतेः ३२ वाहुषु छिद्यमानेषु वाणस्य भगवान् भवः भक्तानुकंप्युपव्रज्य चक्रायुधमभाषत ३३ श्रीरुद्र उवाच त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये यं पश्यंत्यमलात्मान आकाशमिव केवलं ३४ ॥ २९ वेतत् त्वया भयं नोत्पादनीयमित्यर्थः

२९ ३० ३१ ३२ ३३ भक्तरक्षणार्थं श्रीरुद्रो भगवंतं स्तौति त्वं हीति अयमर्थः त्वां अज्ञात्वा अयं युध्यत इ

राम ४७

ति न चित्रं यतस्त्वं वाङ्मये ब्रह्मण्यपि गूढं ब्रह्म अभिधाऽविषयत्वात् कुतः परं ज्योतिः ज्योतिषामपि प्रकाशकत्वात् अविषय इत्यर्थः कथं तर्हि प्रतीतिरत आह यमिति अमलात्मनां स्वतः प्रकाश इत्यर्थः ३४ ॥

आस्तांतावन्निर्गुणस्यतत्वज्ञानंलीलयाऽधिष्ठितस्त्वयायोविराड्विग्रहः सोपिनज्ञायतेउदुंबरफलांतर्वर्तिमशकैरि
वोदुंबरफलमित्याशयेनविराड्रूपेणस्तौतिद्वाभ्यांनाभिरिति यस्यनभआदयोनाभ्याद्यवयवाः सभवान्लोककल्पःपु
रुषइत्युत्तरेणान्वयः नभोयस्यनाभिः अग्निर्मुखंअंबुरेतः द्यौःशीर्षं आशादिशः श्रुतिः श्रवणेन्द्रियंउर्वीअंघ्रिश्चंद्रोमनः
अर्कोदृक् अहंश्रीशिवआत्मा अहंकारः समुद्रोजठरंइंद्रःभुजाबाहुः इंद्रादयोलोकपालाबाहवइत्यर्थः ३५ ओष
धयोरोमाणियच्छब्दावृत्तिः सष्टतार्था अंबुवाहाः केशाःविरिंच्योधिषणाबुद्धिः प्रजापतिर्विसर्गोमेढ्रं धर्मोहृदयंलोकैः

नाभिर्नभोऽग्निर्मुखमंबुरेतोद्यौः शीर्षमाशाः श्रुतिरंघ्रिरुर्वी चंद्रोमनोयस्यदृगर्कआ
त्माअहंसमुद्रोजठरंभुजेंद्रः ३५ रोमाणियस्यौषधयोऽंबुवाहाः केशाविरिंच्योधिषणा।
विसर्गःप्रजापतिर्हृदयंयस्यधर्मःसवैभवान्पुरुषोलोककल्पः ३६ नवावतारोऽयमकुंठ
धामन्धर्मस्यगुप्त्यैजगतोभवाय वयंचसर्वेभवताऽनुभाविताविभावयामोभुवनानिसप्त ३७
त्वमेकआद्यःपुरुषोऽद्वितीयस्तुर्यःस्वदृग्घेतुरहेतुरीशः॥ कल्पतेअवकल्पतइतिलोककल्पः ३६ ननुनन्व
नःप्रादेशिकशरीरस्यकथंनभोनाभित्वादीत्यतआह नवेतिहेअकुंठधामन् अप्रच्युतस्वरूपभवायाभ्युदयायनकेवलमे
तावत्किंतुअस्मदनुग्रहार्थमपीत्याह वयंचेति सर्वेलोकपालास्त्वयापालिताः सप्तापिभुवनानिपालयामइति ३७ ननु
यदिविभावयितारोयूयंविभाव्यानिचभुवनानिसंतितर्हिकथमुक्तंत्वंहिब्रह्मेतिनहिब्रह्मत्वेममसजातीयविजातीयभेदः
संभवतीत्यतआहत्वमिति एकःसजातीयभेदरहितः कुतः आद्यःपुरुषःपुरुषाणांअवस्थात्रयवतामाद्यःप्रकृतिभूतः

पुरुषः कुतस्तुरीयः शुद्ध इत्यर्थः तदपि कुतः स्वदृक् स्वप्रकाशज्ञानरूपः शुद्धादेव ह्युपाधियोगाज्जीवा जायंते यथाग्नेः क्षुद्रा
विस्फुलिंगा व्युच्चरंत्येवमेवास्मादात्मनः सर्व एवात्मानो व्युच्चरंतीति श्रुतेः अतः सजातीय रहितः किंचाद्वितीयः विजातीय
रहितोपि कुतः हेतुः सर्वस्य तथा स्वयं हेतुरहितश्चेति कथं तर्हि प्रतिशरीरं जीवभेदः प्रतीयते अत आह प्रतीयस इति सर्वगु
णप्रसिद्ध्यै सर्वविषयप्रकाशनाय ३८ तर्हि किं अहमेवं संसारीत्युच्यते नहि नहीति सदृष्टांतमाह यथैवेति हे भूमन् स्वयाच्छा
यया मेघलक्षणया परदृश्यापिहितः छादितोऽपि सूर्यः छायां मेघं च रूपाणि च मेघांतरितान् घटादीनपि संचकास्ति प्रकाशय

प्रतीयसेऽथापि यया विकारं स्वमायया सर्वगुणप्रसिद्ध्यै ३८ यथैव सूर्यः पिहितः स्वछायया
छायां च रूपाणि च संचकास्ति एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ३९
यन्मायामोहितधियः पुत्रदारगृहादिषु उन्मज्जंति निमज्जंति प्रसक्ता वृजिनार्णवे ४० दे
वदत्तमिमं लब्ध्वा नृलोकमजितेंद्रियः यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवंचकः ४१ ॥ टी

नि॰ एवं गुणेनाहंकारेण स्वकार्येण जीकावरकेण तद्दृश्यापिहितोऽपि गुणान् सत्वादीनुपाधीन् गुणिनश्च उपहितान्॥
जीवानपि च कास्ति आत्मप्रदीपः स्वप्रकाशः अतः सर्वसाक्षिणस्तव न संसार इत्यर्थः ३९ किंच मायाश्रयस्यात्मनो ह्यन्य
स्तव कुतः संसृतिरित्याशयेनाह यन्मायेति पुत्रादिषु प्रसक्ताः वृजिनार्णवे दुःखसागरे उन्मज्जंति देवादियोनिषु निमज्जंति
स्थावरादिषु तदुक्तं वायवीये विपर्ययश्च भवति ब्रह्मत्वस्थावरत्वयोरिति ४० एवं जीवेश्वरव्यवस्थां निरूप्येदानीं अभजंतं
निंदति द्वाभ्यां देवेति देवेन त्वया कर्माध्यक्षेण दत्तं नृदेहमिमं लब्ध्वाऽपीति ४१

शोच्यत्वेहेतुः यस्त्वामिति विपर्य्ययाः विपरीताः अनात्मप्रियाऽनीश्वरायेइंद्रियार्थाःपुत्रादयस्तदर्थे ४२ अहमन्येच
सुदुमनसस्त्वामेवभक्ताइत्याह अहमिति ४३ भगवतोभजनीयत्वेहेतूनवदन्तद्भक्तिंप्रार्थयते तंत्वेतिसमत्वेहेतुः प्र
शांतमिति सुसेव्यत्वमाह सुहृदात्मदेवंसुहृद्बुद्धिप्रवर्त्तकत्वात् आत्माचसर्वात्मकत्वात् एवंभूतंदेवमीश्वरंत्वां नचाम्यो

यस्त्वांविसृजतेमर्त्य आत्मानंप्रियमीश्वरं विपर्ययेंद्रियार्थार्थेविषमत्त्यमृतंत्यजन् ४२
अहंब्रह्माऽथविबुधामुनयश्चामलाशयाः सर्वात्मनाप्रपन्नास्त्वामात्मानंप्रेष्ठमीश्वरं ४३ तं
त्वाजगत्स्थित्युदयांतहेतुंसमंप्रशांतंसुहृदात्मदैवं अनन्यमेकंजगदात्मकेतंभवापवर्गा
यभजामदेवं ४४ अयंममेष्टोदयितोऽनुवर्त्तीमयाऽभयंदत्तममुष्यदेवसंपाद्यतांतद्भवतः
प्रसादोयथाहितेदैत्यपतौप्रसादः ४५ श्रीभगवानुवाच यदात्थभगवंस्त्वन्नःकरवामप्रि
यंतव भवतोयद्व्यवसितंतन्मेसाध्वनुमोदितं ४६ अवध्योयंममाप्येषवैरोचनसुतोऽसुरः
प्रल्हादायवरोदत्तोनवध्योमेतवान्वयः ४७ दर्प्पोपशमनायास्यप्रवृद्धश्णावाहवोमया
सृदितंचवलंभूरियच्चभारायितंभुवः ४८ ॥ ५ भजनीयोऽस्तीत्याह अनन्यंएकंसमानासमानज्ञाती
यरहितंनत कुतःजगतामात्मनांचकेतंअधिष्ठानं ४४ सयंभक्तिमाशास्यस्वभक्तस्याभीष्टमाशास्ते अयमितिदैत्यप
तौप्रल्हादे ४५ वैरोचनिर्वलिर्मद्भक्तस्तत्सुतत्वादवध्यस्तावत् किंच प्रल्हादायेति अन्वयोवंशः ४७ तर्हिंकिमि

अनुगृण्हाति चत्वारइति ४९ सहवध्वाऊषया ५० रुद्रानुमोदितइति तदभिप्रेतस्यैववाणभुजभंगस्यकृतत्वात्॥५१॥
पौरादिभिरभ्युद्यतः अभिमुखंआगत्यसत्कृतः ५२ ५३ इतिदशमेटीकायांत्रिषष्टितमः ६३ चतुःषष्टितमेकृष्णोनृगं

चत्वारोस्यभुजाःशिष्टाभविष्यंत्यजरामराः पार्षदमुख्योभवतोनकुतश्चिद्भयोऽसुरः ४९
इतिलब्ध्वाऽभयंकृष्णंप्रणम्यशिरसाऽसुरः प्राद्युम्निंरथमारोप्यसवध्वासमुपानयत् ५०
अक्षौहिण्यापरिवृतंसुवासःसमलंकृतं सपत्नीकंपुरस्कृत्ययौरुद्रानुमोदितः ५१ स्व
राजधानींसमलंकृतांध्वजैःसतोरणैरुक्षितमार्गचत्वरां विवेशशंखानकदुंदुभिस्वनैरभ्यु
द्यतःपौरसुहृद्द्विजातिभिः ५२ यएवंकृष्णविजयंशंकरेणचसंयुगं संस्मरेत्प्रातरुत्थायन
तस्यस्यात्पराजयः ५३॥ इतिश्रीभागवतेमहापुराणेद॰अनिरुद्धानयनंनामत्रिषष्टितमो
ध्यायः ६३ श्रीशुकउवाच एकदोपवनंराजन्जग्मुर्यदुकुमारकाः विहर्तुंसांवप्रद्युम्नचा
रुभानुगदादयः १ विक्रीडित्वाचिरंतत्रविचिन्वंतःपिपासिताःजलंनिरुदकेकूपेददृशुःस
त्वमद्भुतं २ कृकलासंगिरिनिभंवीक्ष्यविस्मितमानसाः तस्यचोद्धरणेयत्नंचक्रुस्तेकृपयाऽ
न्वि॒ताः३॥

शापादमोचयत् ब्रह्मस्वहारिदोषोन्यायाराज्ञोदृष्टान्तनशिक्षयत् १ विभूतिभाग्यभोगादिमदोन्नद्धमनोऽर्थ
न् अन्वशासद्यदून्कृष्णोनृगोद्धारप्रसंगतः २ १ पिपासिताःतृषिताःजलंविचिन्वंतःसन्तंजीव २ तंचकृकलासंवीक्ष्य

चर्मजैः चर्ममयैः पाशैः तांतवैस्तंतुमयैश्च ४ ५ संतप्तंयच्चामीकरंसुवर्णंतद्वद्वर्णोयस्यसः अद्भुता अलंकारांवरस्रजोयस्यसः स्वर्गीदेवोवभूवेति ६ ७ यत्यदिस्तमंयोग्यं ८ ९ यद्दिनेकर्णमस्पृशमिति असंदेहेसंदेहवचनंयद्विदाः

चर्मजैस्तांतवैः पाशैर्वध्वापतितमर्भकाः नाशक्नुवन्समुद्धर्तुंकृकलासंयाचख्युरुत्सुकाः ४ तत्रागत्यारविंदाक्षोभगवान्विश्वभावनः वीक्ष्योज्जहारवामेनतंकरेणसलीलया ५ स उत्तमश्लोककराभिमृष्टोविहायसद्यः कृकलासरूपं संतप्तचामीकरचारुवर्णः स्वर्ग्यद्भुतालंकरणांवरस्रक् ६ पप्रच्छविद्वानपितंनिदानंजनेषुविख्यापयितुंमुकुंदः कस्त्वंमहाभागवरेण्यरूपोदेवोत्तमंत्वांगणयामिनूनं ७ दशामिमांवाकतमेनकर्मणासंप्रापितोऽस्यऽतदर्हः सुभद्रः आत्मानमाख्याहिविवित्सतांनोयन्मन्यसेनः क्षममत्रवक्तुं ८ श्रीशुकउवाच इतिस्मराजासंपृष्टः कृष्णेनानंतमूर्तिना माधवंप्रणिपत्याहकिरीटेनार्कवर्चसा ९ नृगउवाच नृगोनामनरेंद्रोऽहमिक्ष्वाकुतनयः प्रभो दानिष्वाख्यायमानेषुयद्दिनेकर्णमस्पृशं १० किंनुतेऽविदितंनाथसर्वभूतात्मसाक्षिणः कालेनाव्याहतदृशोवक्ष्येऽथापि

प्रमाणंस्पृशेरितिवत् कर्णपथंनूनंप्राप्तः स्यामित्यर्थः १० किंच किंन्विति सर्वेषांभूतानांवाह्यतया ११॥
नामात्मनीवुद्धेः साक्षिणस्तेअविदितंकिंनुनकिंचित्॥ ११ ॥ ११ ॥ ११ ॥ ११ ॥ ११ ॥ ६ ११ ६ ॥ ११॥

६४ भा॰ द॰ उ॰ ५२

१२ १३ ऋतव्रतेभ्यः अदंभाचारेभ्यः तपसा श्रुताः प्रख्याताश्च ते ब्रह्मणि वदान्या अत्युदाराः अध्यापनशीलाश्च ते सं॥
तश्च तेभ्यः १४ पूर्त्तं वापीकूपादि चरितं कृतं १५ एवं वर्तमानस्य मम संकटं किंचिदापन्नं शृणु इत्याह कस्यचिदिति द्वि

यावंत्यः शिकता भूमेर्यावंत्यो दिवि तारकाः यावंत्यो वर्षधाराश्च तावतीरददं स्म गाः १२ पय
स्विनीस्तरुणीः शीलरूपगुणोपपन्नाः कपिला हेमशृंगीः न्यायार्ज्जिता रूप्यखुराः सवत्सा
दुकूलमालाभरणा ददावहं १३ स्वलंकृतेभ्यो गुणशीलवद्भ्यः सीदत्कुटुंबेभ्य ऋतव्रते।
भ्यः तपःश्रुतब्रह्मवदान्यसद्भ्यः प्रादां युवभ्यो द्विजपुंगवेभ्यः १४ गोभूहिरण्यायतनाश्वह
स्तिनः कन्याः सदासीस्तिलरूप्यशय्याः वासांसि रत्नानि परिच्छदान्रथानिष्टं च यज्ञैश्चरितं
च पूर्त्तं १५ कस्यचिद्द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने संपृक्ताऽविदुषा सा च मया दत्ता द्विजा
तये १६ तां नीयमानां तत्स्वामी दृष्ट्वोवाच ममेति तं ममेति प्रतिग्राह्याह नृगो मे दत्तवानिति।
१७ विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ भवान्दाताऽपहर्त्तेति तच्छ्रुत्वा मेऽभवद्भ्रमः।
१८ अनुनीतावुभौ विप्रौ धर्मकृच्छ्रगतेन वै गवां लक्षं प्रकृष्टानां दास्याम्येषा प्रदीयतां १९

जमुख्यस्य प्रतिग्रहनिवृत्तस्य संपृक्ता मिलिता अविदुषा ब्राह्मणस्येयमित्यजानता १६ १७ प्रतिग्राहिणो मं दातेति स्वा
मिनो मं अपहर्त्तेति अभवद्भ्रमः व्याकुलोऽभवमित्यर्थः १८ तदा उभावपि प्रत्येकमनुनीतौ प्रार्थितौ कथं तदाह गवामिति सा

राम ५२

२० अपरः प्रतिग्राही दुराग्रहो यत्त्वक्षं त्वयोक्तं अन्यदपि गवामयुतं यद्दित तदपि इमां विहाय नेच्छामि इत्युक्त्वा गां त्यक्त्वा ययावि
त्यर्थः २१ एतस्मिन्नंतर इति इतः पूर्वं पापाभावान्नेतुमसमर्थो इति भावः २२ उताहो इत्येकं पदं अथवा पूर्वं शुभमिति नां
तमिति यमस्य स्वस्य वा वाक्यं पश्ये पश्यामि २३ हे देव यम पूर्वमशुभं भुंज इति मयोक्ते स यमः पतेति प्राह २४ २५ दुर्घटे

भवंतावनुगृह्णीतां किंकरस्याविजानतः समुद्धरत मां कृच्छ्रात्पतंतं निरयेऽशुचौ २० ना
हं प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत् नान्यद्गवामप्ययुतमिच्छामीत्यपरो ययौ २१
एतस्मिन्नंतरे याम्यैर्दूतैर्नीतो यमक्षयं यमेन पृष्टस्तत्राहं देवदेव जगत्पते २२ पूर्वं त्वमशु
भं भुंक्षे उताहो नृपते शुभं नांतं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः २३ पूर्वं देवाशुभं भुं
ज इति प्राह पतेति सः तावदद्राक्षमात्मानं कृकलासं पतन् प्रभो २४ ब्रह्मण्यस्य वदान्य
स्य तव दासस्य केशव स्मृतिर्नाद्यापि विध्वस्ता भवत्संदर्शनार्थिनः २५ स त्वं कथं मम वि
भोऽक्षिपथः परात्मा योगेश्वरैः श्रुतिदृशाऽमलहृद्विभाव्यः साक्षादधोक्षज उरुव्यसनांधबुद्धेः
स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः २६ ॥ एवं श्रीकृष्णदर्शनेन विस्मितः सन् आत्मनो भाग्यमभिनंदति सत्व

मिति हे विभो स त्वं मम अक्षिपथः लोचनगोचरः सन् कथं साक्षात्स्याऽसीत्यर्थः किमत्राश्चर्यं तदाह परः आत्मा अत एव यो
गेश्वरैरपि श्रुतिदृशा उपनिषच्चक्षुषा अमले हृदि विभाव्यश्चिंत्यः यतोऽधोक्षजः अक्षजमैंद्रियकं ज्ञानं तत् अधः अर्वागेव यस्मा
त्सः यस्येह भवापवर्गो भवेत्तस्य हि भवाननुदृश्यः स्यात् उरुव्यसनेन कृकलासभवदुःखेनांधबुद्धेस्तु मम एतच्चित्रमित्यर्थः २६ ॥

६४
भा॰ द॰
उ॰
५३

उद्रिक्तभक्तिर्बहुधासंबोधयन् आहदेवदेवेति २७ अनुज्ञापयतिअनुजानीहीति देवलोकेऽपिसतः वर्तमानस्यात्मनो
मनसःसंनिधिंप्रार्थयते यत्रक्वापीति त्वत्पदमास्पदं विषयोयस्यतथाभूतंभूयादिति २८ यास्यन्नमस्यति नमइति
सर्वभावायसर्वस्यभावोजन्मयेनतस्मैब्रह्मणेकर्तृत्वेऽप्यविकारायकुतः अनंतशक्तये अनंतामायाख्याशक्तिर्यस्यतस्मै।

देवदेवजगन्नाथगोविंदपुरुषोत्तम नारायणहृषीकेशपुण्यश्लोकाच्युताव्यय २७
अनुजानीहिमांकृष्णयांतंदेवगतिंविभो यत्रक्वापिसतश्चेतोभूयान्मेत्वत्पदास्पदं २८
नमस्तेसर्वभावायब्रह्मणेनंतशक्तये कृष्णायवासुदेवाययोगानांपतयेनमः २९ शुकउ।
वाच इत्युक्त्वातंपरिक्रम्यपादौस्पृष्ट्वास्वमौलिना अनुज्ञातोविमानाग्र्यमारुहत्पश्यतांनृणां
३० कृष्णः परिजनंप्राहभगवान्देवकीसुतः ब्रह्मण्यदेवोधर्मात्माराजन्यानऽनुशिक्षयन् ३१
दुर्जरंवतब्रह्मस्वंभुक्तमग्नेर्मनागपि तेजीयसोऽपिकिमुतराज्ञामीश्वरमानिनां ३२ ना।
हंहलाहलंमन्येविषंयस्यप्रतिक्रिया ब्रह्मस्वंहिविषंप्रोक्तंनास्यप्रतिविधिर्भुवि ३३ ॥

वासुदेवायसर्वभूताश्रयायेत्युपादानत्वमुक्तं श्रीकृष्णायस्य दानंदरूपायेतिपुरुषार्थत्वमुक्तं कृषिर्भूवाचकः श
ब्दोणश्चनिर्वृतिवाचकः तयोरैक्यंपरंब्रह्मकृष्णइत्यभिधीयतइतिस्मृतेः किंच योगानांइष्टापूर्तादिकर्मणांपतये
फलदात्रेअयंभावः एवंभूतंत्वांविहायगंतुमनिच्छुरपिगमिष्यामित्व दृतकर्मफलभोगायेति २९ ३० ३१ मना।
॥ कुरीषदपिभुक्तंसत् अग्नेः अग्निसदृशस्यतेजीयसः अनितेजस्विनोपिदुर्जरं ३२।३३॥

राम
५३

किंच विषादपि घोरमित्याह हिनस्तीति संसर्गेण मारकत्वादग्नितुल्यता स्यात्तदपि नेत्याह वह्निरिति अपि च समूलमिति वह्निर्मूलान्यवशोषयति ब्रह्मस्वलक्षणारणिजः पापपावकस्तु कुलं तदपि समूलमिति ३४ दुरनुज्ञातं यथावदननुज्ञा

हिनस्ति विषमत्तारं वह्निरद्भिः प्रशाम्यति कुलं समूलं दहति ब्रह्मस्वारणिपावकः ३४ ब्रह्मस्वं दुरनुज्ञातं भुक्तं हंति त्रिपूरुषं प्रसह्य तु बलाद्भुक्तं दश पूर्वान्दशापरान् ३५ राजानो राजलक्ष्म्यान्धा नात्मपातं विचक्षते निरयं येऽभिमन्यंते ब्रह्मस्वं साधु बालिशाः ३६ गृह्णंति यावतः पांसून् क्रंदतामश्रुबिंदवः विप्राणां हृतवृत्तीनां वदान्यानां कुटुंबिनां ३७ राजानो राजकुल्याश्च तावतोऽब्दान्निरंकुशाः कुंभीपाकेषु पच्यंते ब्रह्मदायापहारिणः ३८ स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेच्च यः षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ३९ न मे ब्रह्मधनं भूयाद्यद्गृध्वाऽल्पायुषो नृपाः पराजिताश्च्युता राज्याद्भवंत्युद्वेजिनोऽहयः ४० विप्रं कृतागसमपि नैव द्रुह्यत मामकाः घ्नंतं बहु शपंतं वा नमस्कुरुत नित्यशः ४१ यथाऽहं प्रणमे विप्राननुकालं समाहितः तथा नमत यूयं च योऽन्यथा मे स दंडभाक् ४२॥ एतं त्रिपुरुषं कुलं यः स्वयं पुत्रं पौत्रं च प्रसह्य हठात् बलात् राजाद्याश्रयात् ३५ राजाद्याश्रयतः ये ब्रह्मस्वमभिमन्यंते इच्छंति ते निरयमेवाभिमन्यंते अतो बालिशा अज्ञाः आत्मपातं न विचक्षत इति ३६ अपि च गृह्णंतीति ३७ ३८ ३९ गृध्वा अभिकांक्ष्य ४०

नकेवलमर्थवादविभीषिकेयंकिंतुप्रत्यक्षमित्याह ब्राह्मणार्थइति ४३ ४४ ॥इतिश्रीदशमेटीकायांचतुःषष्टितमः
६४ ॥पंचषष्टितमेरामश्चक्रेगोकुलमागतः रममाणस्तुगोपीभिःकालिंद्याःकर्षणंमदात् १ रामस्यचरितंचित्रंकालिं

ब्राह्मणार्थोह्यपहृतोहर्तारंपातयत्यधः अजानंतमपिह्येनंनृगंब्राह्मणगौरिव ४३
एवंविश्राव्यभगवान्मुकुंदोद्वारकौकसः पावनःसर्वलोकानांविवेशनिजमंदिरं ४४॥
॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेनृगोपाख्यानंनामचतुःषष्टितमोध्यायः ६४॥
श्रीशुकउवाच बलभद्रःकुरुश्रेष्ठभगवान्रथमास्थितः सुहृद्दिदृक्षुरुत्कंठःप्रययौनंदा
गोकुलं १ परिष्वक्तश्चिरोत्कंठैर्गोपैर्गोपीभिरेवच रामोऽभिवाद्यपितरावाशीर्भिरभिनंदि
तः २ चिरंनःपाहिदाशार्हसानुजोजगदीश्वरः इत्यारोप्यांकमालिंग्यनेत्रैःसिषिचतुर्जलैः
३ गोपवृद्धांश्चविधिवद्यविष्ठैश्चाभिवंदितः यथावयोयथासख्यंयथासंबंधमात्मनः ४
समुपेत्याथगोपालान्हास्यहस्तग्रहादिभिः विश्रांतंसुखमासीनंपप्रच्छुःपर्युपागताः ५
पृष्टाश्चानामयंस्वेषुप्रेमगद्गदयागिरा ॥ ९९द्याकर्षणादियत् पौंड्रकांतादिकृत्यस्यपृथगुक्तमतः परं

२ १ आशीर्भिरभिनंदितोवभूव २ तदाहचिरमिति ३ गोपवृद्धांश्चविधिवदभिवंद्ययविष्ठैरभिवंदितोवभूवेत्यर्थः अ
पिच यथावयइति ४ तेसर्वेस्वेषुयादवेषुनंरामंअनामयमारोग्यंपप्रच्छुः ५ नेचतेनपृष्टाइति॥ ६ ॥ ६ ॥

कृष्णेकृष्णप्राप्त्यर्थंसंन्यस्ताखिलराधसः त्यक्तसर्वविषयाः ६ ७ ८ रामस्यसंदर्शनेनआदृताःसादराः ९ ॥
१० ११ तर्हितद्गमनेयुष्माभिः प्रतिबंधः किन्नकृतः तद्वाक्यविश्वासादितिचेत् ननुविश्वासः किमितिकृतस्तत्राहुः

कृष्णेकमलपत्राक्षेसंन्यस्ताखिलराधसः ६ कच्चिन्नोबांधवाराम सर्वेकुशलमासते
कच्चित्स्मरथनोरामयूयंदारसुतान्विताः ७ दिष्ट्याकंसोहतःपापोदिष्ट्यामुक्ताःसुहृज्ज
नाः निहत्यनिर्जित्यरिपून्दिष्ट्यादुर्गंसमाश्रिताः ८ गोप्योहसंत्यःपप्रच्छूरामसंदर्श
नादृताः कच्चिदास्तेसुखंकृष्णःपुरस्त्रीजनवल्लभः ९ कच्चित्स्मरतिवाबंधून्पितरंमात
रंचसः अप्यसौमातरंद्रष्टुंसकृदप्यागमिष्यति अपिवास्मरतेऽस्माकमनुसेवांमहाभु
जः १० मातरंपितरंभ्रातॄन्पतीन्पुत्रान्स्वसॄरपि यदर्थेजहिमदाशार्हदुस्त्यजान्स्वज
नान्प्रभो ११ तानःसद्यःपरित्यज्यगतःसंछिन्नसौहृदः कथंनुतादृशंस्त्रीभिर्नश्रद्धीयेतभाषि
तं १२ कथंनुगृह्णन्त्यनवस्थितात्मनोवचःकृतघ्नस्यबुधाःपुरस्त्रियः गृह्णंतिवैचित्रकथस्य
सुंदरस्मितावलोकोच्छ्वसितस्मरातुराः॥ १३ ॥ ९ कथंन्विति वक्तृवहुत्वान्नानाविधानिवाक्या
नि १२ तत्रान्याऊचुः कथंनुगृह्णंतीति अन्याऊचुः गृह्णंतिवाइतिचित्रकथस्यचित्रकथाकथनकोविदस्य
किंच सुंदरंस्मितंयस्मिन् तेनावलोकनेनउच्छ्वसितः क्षुभितोयः स्मरस्तेनातुराः॥ १३ ॥ १३ ॥ १३ ॥ १३ ॥

अपराजतु: किंनइति कालस्तावतस्यचास्माकंचयात्येवकिंनुतस्यसुखेनास्माकंतुदुःखेनेत्येतावानेवविशेषइतिभ्व
ध्वनितं १४ १५ नानाविधेष्वनुनयेषुकोविदः १६ मधुंचैत्रंमाधवंवैशाखं गोपीनांरतिमिति श्रीकृष्णक्रीडासम
येऽनुत्पन्नानामतिबालानामन्यासामित्यभियुक्तप्रसिद्धिः १७ पूर्णचंद्रस्यकलाभिर्मरीचिभिरामृष्टेउज्वलेकौमुदी

किंनस्तत्कथयागोप्यःकथाःकथयताऽपराः यात्यस्माभिर्विनाकालोयदितस्यतथैवनः
१४ इतिप्रहसितंशौरेर्जल्पितंचारुवीक्षितं गतिंप्रेमपरिष्वंगंस्मरंत्योरुरुदुःस्त्रियः १५
संकर्षणस्ताः कृष्णस्यसंदेशैर्हृदयंगमैः सांत्वयामासभगवान्नानाऽनुनयकोविदः
१६ द्वौमासौतत्रचावात्सीन्मधुंमाधवमेवच रामःक्षपासुभगवान्गोपीनांरतिमावह
न् १७ पूर्णचंद्रकलामृष्टेकौमुदीगंधवायुना यमुनोपवनेरेमेसेवितेस्त्रीगणैर्वृतः १८
वरुणप्रेषितादेवीवारुणीवृक्षकोटरात् पतंतीतद्वनंसर्वंस्वगंधेनाध्यवासयत् १९
तंगंधंमधुधारायावायुनोपहृतंबलः आघ्रायोपगतस्तत्रललनाभिःसमंपपौ २०
उपगीयमानचरितोवनिताभिर्हलायुधः वनेषुव्यचरत्क्षीवोमदविह्वललोचनः २१

गंधवायुनाकुमुद्वतीनांगंधवातेनसेविते यद्वाकौमुदीशब्देनतद्विकाशितानिकुमुदानिलक्ष्यंते कुमुदगंध
वायुनेत्यर्थः १८ वारुणीसुधयासहोत्पन्नामदिरा १९ २० क्षीवोमत्तः २१ ॥ २१॥२१॥ ❋ ॥

स्वेद एव प्रालेयं हिमं तेन भूषितम् २२ मत्तोऽयमित्यनादृत्य अनागतामापगां नदीम् २३ आहूता आहूताऽपि यद्यस्मान्नागच्छसि तस्मात्त्वेच्छागमयिष्यामि २४ चकिता कंपिता २५ एकांशेन शेषाख्येन २६ २७ विजगाहे अवगाहनं कृतवान् २८ उत्तीर्णाय नि

स्रग्व्येककुंडलो मत्तो वैजयंत्या च मालया बिभ्रत्स्मितमुखांभोजं स्वेदप्रालेयभूषितम् २२
स आजुहाव यमुनां जलक्रीडार्थमीश्वरः निजं वाक्यमनादृत्य मत्त इत्यापगां बलः अनागतां
हलाग्रेण कुपितो विचकर्ष ह २३ पापे त्वं मामवज्ञाय यन्नायासि मयाहुता नेष्ये त्वां लांगला
ग्रेण शतधा कामचारिणीम् २४ एवं निर्भर्त्सिता भीता यमुना यदुनंदनम् उवाच चकिता वाचं प
तिता पादयोर्नृप २५ राम राम महाबाहो न जाने तव विक्रमम् यस्यैकांशेन विधृता जगती
जगतः पते २६ परं भावं भगवतो भगवन्मामजानतीम् मोक्तुमर्हसि विश्वात्मन् प्रपन्नां भक्तव
त्सल २७ ततो व्यमुंचद्यमुनां याचितो भगवान्बलः विजगाहे जलं स्त्रीभिः करेणुभिरिवेभराट्
२८ कामं विहृत्य सलिलादुत्तीर्णायासितांबरे भूषणानि महार्हाणि ददौ कांतिः शुभां स्रजम्
२९ वसित्वा वाससी नीले मालामामुच्य कांचनीम् रेजे स्वलंकृतो लिप्तो माहेंद्र इव वारणः ३०

र्गताय असितांबरादीनि कांतिर्ददौ कांतिर्लक्ष्मीः यथोक्तं वैष्णवे वरुणप्रहिता चास्मै मालामम्लानपंकजाम् समुद्राभे तथा वस्त्रे नी
ले लक्ष्मीरयच्छतेति हरिवंशे च बलं प्रति लक्ष्मीवाक्यम् जातरूपमयं चैकं कुंडलं वज्रभूषणम् आदिपद्मं च पद्माख्यं दिव्यश्रवणभू

षणमुद्देवेमां प्रतिगृह्णीष्व पौराणीं भूषणक्रियामित्यादि २९
वसित्वा परिधाय आमुच्य कंठे निधाय चंदनादिभिरालिप्तः ३०

३१ एकेवएकैवनिशाययातयामाधुर्यैःविलासैः ३२ ॥ इतिदशमेटीकायांपंचषष्टितमोऽध्यायः ६६ ॥ षट्युक्ष॥

अद्यापिदृश्यतेराजन्यमुनाकृष्टवर्त्मना बलस्यानंतवीर्यस्यवीर्यंसूचयतीवहि ३१ एवंसर्वानिशायाताएकेवरमतोव्रजे रामस्याक्षिप्तचित्तस्यमाधुर्यैर्व्रजयोषिताम् ३२॥ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेबलदेवविजयेयमुनाकर्षणंनामपंचषष्टितमोऽध्यायः॥ ६५ ॥ ६ ॥ श्रीशुकउवाच॥नंदव्रजंगतेरामेकरूषाधिपतिर्नृपः वासुदेवोऽहमित्यज्ञोदूतंकृष्णायप्राहिणोत् १ त्वंवासुदेवोभगवानवतीर्णोजगत्पतिः इतिप्रस्तोभितोबालैर्मेनआत्मानमच्युतम् २ दूतंचप्राहिणोन्मंदः कृष्णायाव्यक्तवर्त्मने॥ द्वारकायांयथाबालोनृपोबालकृतोबुधः ३ दूतस्तुद्वारकामेत्यसभायामास्थितंप्रभुम्॥ कृष्णंकमलपत्राक्षंराजसंदेशमब्रवीत् ४ वासुदेवोऽवतीर्णोहमेकएवनचापरः भूतानामनुकंपार्थंत्वंतुमिथ्याऽभिधांत्यज ५ यानित्वमस्मच्चिन्हानिमौढ्याद्बिभर्षिसात्वत त्यक्त्वैहिमांत्वंशरणंनोचेद्देहिममाहवम् ६ श्रीशुकउवाच कत्थनंतदुपाकर्ण्यपौंड्रकस्याल्पमेधसः उग्रसेनादयःसभ्याउच्चकैर्जहसुस्तदा॥ ७ ॥ ॥ ६ ॥ षष्टितमेकाशींगत्वाऽहन्पौंड्रकंहरिः तन्मित्रंचततोऽहन्तंसुदक्षिणवधादिकम् १॥१ प्रस्तोभितःप्रोत्साहितःस्तुत्या बालैरज्ञैः २ बालकृतोनृपःबालैर्नृपत्वेनक्रीडायांपरिकल्पि

हेमूढउत्स्रक्ष्येनत्यिप्रक्ष्येप्स्यामि यैःसहत्वमेवंविकत्थसेतेष्वपीत्यर्थः यद्वायैः कृत्रिमैः सुदर्शनादिभिस्त्वमेवंश्लाघसेता
निउत्स्रक्ष्येत्याजयिष्यामीत्यर्थः ८ मांशरणंएहीत्यस्योत्तरं मुखमिति वटाः कंकादिवत्पक्षिविशेषाः तदातत्रशुनां

उवाचदूतंभगवान्परिहासकथामनु उत्स्रक्ष्येमूढचिन्हानियैस्त्वमेवंविकत्थसे ८
मुखंतदपिधायाज्ञकंकगृध्रवटैर्वृतः शयिष्यसेहतस्तत्रभविताशरणंशुनां ९ इति
दूतस्तदाक्षेपंस्वामिनेसर्वमाहरत् कृष्णोऽपिरथमास्थायकाशीमुपजगामह १०
पौंड्रकोपितदुद्योगमुपलभ्यमहारथः अक्षौहिणीभ्यांसंयुक्तोनिश्चक्रामपुराद्द्रुतं ११
तस्यकाशीपतिर्मित्रंपार्ष्णिग्राहोऽन्वयान्नृप अक्षौहिणीभिस्तिसृभिरपश्यत्पौंड्रकंहरिः
१२ शंखार्य्यसिगदाशार्ङ्गश्रीवत्साद्युपलक्षितं बिभ्राणंकौस्तुभमणिंवनमालाविभूषितं
१३ कौशेयवाससीपीतेवसानंगरुडध्वजं अमूल्यमौल्याभरणंस्फुरन्मकरकुंडलं १४
दृष्ट्वातमात्मनस्तुल्यवेषंकृत्रिममास्थितं यथानटंरंगगतंविजहासभृशंहरिः १५ शू
लैर्गदाभिःपरिघैःशक्त्यृष्टिप्रासतोमरैः असिभिःपट्टिशैर्बाणैःप्राहरन्नरयोहरिं १६

शरणमाश्रयोभवितासि ९ काशीमितिपौंड्रकस्यापितदामित्रपुरेऽवस्थानात् १० ११ पार्ष्णिग्राहः पृ
ष्ठतोरक्षकः १२ १३ गरुडः कृत्रिमोध्वजेयस्यतं अमूल्योऽनर्घ्योमौलिराभरणंचयस्यतं १४ १५ १६ ॥

गजस्यंदनादिचतुरंगबलमर्दितवान् पृथक्प्रजाः चतुर्विधंभूतग्रामंयथायुगांतामग्निरिति १७ आयोधनंरणस्थानं।

कृष्णस्तुतत्पौंड्रककाशिराजयोर्बलंगजस्यंदनवाजिपत्तिमत् गदासिचक्रेषुभिरार्दयद्भृ
शंयथायुगांतेहुतभुक्पृथक्प्रजाः १७ आयोधनंतद्रथवाजिकुंजरद्विपत्खरोष्ट्रैररि
णाऽवखंडितैः बभौचितंमोदवहंमनस्विनामाक्रीडनंभूतपतेरिवोल्बणं १८ अथाहपौं
ड्रकंशौरिर्भोभोपौंड्रकयद्भवान् दूतवाक्येनमामाहतान्यस्त्राण्युत्सृजामिते १९ त्याजयि
ष्येऽभिधानंमेयत्त्वयाऽज्ञमृषाधृतं व्रजामिशरणंतेऽद्ययदिनेच्छामिसंयुगं २० इतिक्षि
प्त्वाशितैर्बाणैर्विरथीकृत्यपौंड्रकं शिरोऽवृश्चद्रथांगेनवज्रेणेंद्रोयथागिरेः २१ तथा
काशीपतेःकायाच्छिरउत्कृत्यपत्रिभिः न्यपातयत्काशिपुर्यांपद्मकोशमिवानिलः २२
एवंमत्सरिणंहत्वापौंड्रकंससखंहरिः द्वारकामाविशत्सिद्धैर्गीयमानकथाऽमृतः २३
सनित्यंभगवद्ध्यानप्रध्वस्ताखिलबंधनः बिभ्राणश्चहरेराजन्स्वरूपंतन्मयोऽभवत्
२४ शिरःपतितमालोक्यराजद्वारेसकुंडलं किमिदंकस्यवावक्त्रमितिसंशयिरेजनाः॥२५॥

अरिणाचक्रेणचितं आकीर्णं आक्रीडनमिवकल्पांतेरुद्रस्यक्रीडास्थानमिव १८ १९ २० गिरेःशृंगंयथेति २१ २२ २३ २४
॥ प्रथमंकिमिदमितिपश्चाद्वक्त्रमितिविभाव्यकस्यवेतिसंशयिरेसंशयंकृतवंतइति २५॥

२६ संस्थाविधिमुत्तरक्रियामपचितिंनिष्कृतिम् २७ आत्मनाऽभिसंधायबुध्यान्यवस्यसुदक्षिणःअसुदारः २८ वरमदात्
वृणीष्वेत्युक्त्वा नित्यर्थः २९ ऋत्विजमृत्विजमिवस्वनियोगकारिणंयज्ञस्यदेवमृत्विजमितिश्रुतेः ३० अब्रह्मण्यप्र

राज्ञःकाशिपतेर्ज्ञात्वामहिष्यःपुत्रबांधवाः पौराश्चहाहताराजन्नाथनाथेतिप्रारुदन्
२६ सुदक्षिणस्तस्यसुतःकृत्वासंस्थाविधिंपितुः निहत्यपितृहंतारंयास्याम्यपचितिंपितुः
२७ इत्यात्मनाऽभिसंधायसोपाध्यायोमहेश्वरं सुदक्षिणोऽर्चयामासपरमेणसमाधिना
२८ प्रीतोऽविमुक्तोभगवांस्तस्मैवरमदाद्भवः पितृहंतुर्वधोपायंसवव्रेवरमीप्सितं २९
दक्षिणाग्निंपरिचरब्राह्मणैःसममृत्विजं अभिचारविधानेनसचाग्निःप्रमथैर्वृतः ३० सा
धयिष्यतिसंकल्पमब्रह्मण्येप्रयोजितः इत्यादिष्टस्तथाचक्रेकृष्णायाभिचरन्व्रती ३१
ततोऽग्निरुत्थितःकुंडान्मूर्तिमानतिभीषणः तप्तताम्रशिखाश्मश्रुरंगारोद्गारिलोचनः ३२
दंष्ट्रोग्रभ्रुकुटीदंडकठोरास्यःस्वजिव्हया आलिहन्सृक्विणीनग्नोविधुन्वंस्त्रिशिखंज्वलत्
३३ पद्भ्यांतालप्रमाणाभ्यांकंपयन्नवनीतलंसोऽभ्यधावद्वृतोभूतैर्द्वारकांप्रदहन्दिशः ३४

योजितइति कृष्णेप्रयोजितोविपरीतोभविष्यतीतिसूचितं अभिचरन् अभिचारंकुर्वन् व्रतीगृहीतनियमः ३१ तप्तंताम्र
मिवशिखाश्मश्रूणिचयस्यसः अंगारोद्गारीणिलोचनानियस्यसः ३२ दंष्ट्राभिश्चउग्रैर्भ्रुकुटीदंडैश्चकठोरंक्रूरमास्यंयस्य

६६ भा०द० उ० ५९

३५ त्राहित्राहीत्याहुरितिशेषः ३६ अहमविताऽस्मिरक्षिष्यामीति ३७ ३८ रोदसीचप्रकाशयदितिशेषः यद्वास्वतेज

तमाभिचारदहनमायांतंद्वारकौकसः विलोक्यतत्रसुःसर्वेवनदाहेयथामृगाः ३५ अ

क्षैःसभायांक्रीडंतंभगवंतंभयातुराः त्राहित्राहित्रिलोकेशवन्हेःप्रदहतःपुरं ३६ श्रुत्वात॰

ज्जनवैक्लव्यंदृष्ट्वास्वानांचसाध्वसं शरण्यःसंप्रहस्याहमाभैष्टेत्यविताऽस्म्यहं ३७ सर्वस्यांत

र्बहिःसाक्षीकृत्यांमाहेश्वरींविभुः विज्ञायतद्विघातार्थंपार्श्वस्थंचक्रमादिशत् ३८ तत्सूर्यको

टिप्रतिमंसुदर्शनंजाज्वल्यमानंप्रलयानलप्रभं स्वतेजसाखंककुभोऽथरोदसीचक्रंमुकुं॰

दास्त्रमथाग्निमार्द्दयत् ३९ कृत्याऽनलःप्रतिहतःसरथांगपाणेरस्त्रौजसासनृपभग्नमुखो

निवृत्तः वाराणसींपरिसमेत्यसुदक्षिणंतंसर्त्विग्जनंसमदहत्स्वकृतोभिचारः ४० चक्रंच

विष्णोस्तदनुप्रविष्टंवाराणसींसाट्टसभालयापणां सगोपुराट्टालककोष्ठसंकुलांसकोश

हस्त्यश्वरथान्नशालां ४१ दग्ध्वावाराणसींसर्वांविष्णुचक्रंसुदर्शनं भूयःपार्श्वमुपा॰

तिष्ठत्कृष्णस्याक्लिष्टकर्मणः ४२ ॥ ३९ सास्वादीप्तंअतिजाज्वल्यमानं अत्यर्थंप्रकाशमानमित्यर्थः आर्द्दय

त्अपीडयत् ३९ अर्दिनोऽग्निर्यत्कृतवान्तदाहकृत्यानलइति सहर्त्विग्भिर्जनैश्चवर्तमानंअभिचर्य्यतेमार्यतेऽनेनेत्य

४३॥इतिदशमेटीकायांषट्षष्टितमोध्यायः॥ ६६॥ सप्तषष्टितमेरामोगिरौरैवतकेमदात् स्त्रैंयुवतिभिःक्रीडन्नवधीद्द्विविदंखलं १ कालिंदीविदारणानंतरंरामचरितंद्विविदवधादिसंगतमप्यनुक्त्वातत्पूर्वभावितेनपौंड्रकवधादिनिरूप्येदानींतदेवप्रस्तौति भूयोहमित्यादिना रामचरितश्रवणेच्छायामद्भुतकर्मत्वंहेतुःतत्रचानंतत्वंतत्राप्यप्रमेयत्वमिति १ नरकस्यस

यएनंश्रावयेन्मर्त्यउत्तमश्लोकविक्रमं समाहितोवाशृणुयात्सर्वपापैःप्रमुच्यते ४३॥ ॥

॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेकाशिराजपौंड्रकवधेषट्षष्टितमोध्यायः॥ ६६॥

॥श्रीराजोवाच भूयोऽहंश्रोतुमिच्छामिरामस्याद्भुतकर्मणः अनंतस्याप्रमेयस्ययदन्यत्कृतवान्प्रभुः १ श्रीशुकउवाच नरकस्यसखाकश्चिद्द्विविदोनामवानरः सुग्रीवसचिवःसोऽथभ्रातामैंदस्यवीर्यवान् २ सख्युःसोऽपचितिंकुर्वन्वानरोराष्ट्रविप्लवं पुरग्रामाकरान्घोषानदहद्वह्निमुत्सृजन् ३ क्वचित्सशैलानुत्पाट्यतैर्देशान्समचूर्णयत् आनर्तान्सुतरामेवयत्रास्तेमित्रहाहरिः ४ क्वचित्समुद्रमध्यस्थोदोर्भ्यामुत्क्षिप्यतज्जलं देशान्नागाऽयुतप्राणोवेलाकूलानमज्जयत् ५ ॥ए(?)खेनिहरिणावैरेकारणंसुग्रीवसचिवइतितस्यमंत्रवलंमैंदस्यभ्रातेतिरामायणेऽतिप्रसिद्धत्वेनवीर्याधिक्यमुक्तमिति २ सख्युर्नरकस्यअपचितिं आनृण्यंराष्ट्रस्यविप्लवोनाशोयथाभवतितथापुरादीनदहदिति ३किंचक्वचिदितिकदाचित्सद्विविदःमित्रहासखिहंता ४ तस्यसमुद्रस्यजलंवाहुभ्यामुत्क्षिप्यवेलायाःकूलेवर्तमानान्देशा

भा० द० उ० ५९

आश्रमस्थान्वनस्पतीन्भंक्त्वा आहवनीयाद्यग्निषु मूत्रादि कृतवान् ६ अप्यधात् पिदधे पेशस्कारी भ्रमरः ७।८।९॥ प्र

आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् अदूषयच्छकृन्मूत्रैरग्नीन्वैतानिकान्खलः॥
६ पुरुषान्योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः निक्षिप्य चाप्यधाच्छैलैः पेशस्कारीव कीटकं॥
७ एवं देशान्विप्रकुर्वन् दूषयंश्च कुलस्त्रियः श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ८ तत्रा
पश्यद्यदुपतिं रामं पुष्करमालिनं सुदर्शनीयसर्वांगं ललनायूथमध्यगं ९ गायंतं वारुणीं
पीत्वा मदविह्वललोचनं विभ्राजमानं वपुषा प्रभिन्नमिव वारणं १० दुष्टः शाखामृगः शा
खामारूढः कंपयन्द्रुमान् चक्रे किलकिलाशब्दमात्मानं संप्रदर्शयन् ११ तस्य धार्ष्ट्यं
कपेर्वीक्ष्य तरुण्यो जातिचापलाः हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः १२ ता हेलया
मास कपिर्भ्रूक्षेपैः संमुखादिभिः दर्शयन्स्वगुदं तासां रामस्य च निरीक्षतः १३ तं ग्राव्णा प्राह
रत्क्रुद्धो बलः प्रहरतां वरः स वंचयित्वा ग्रावाणं मदिराकलशं कपिः १४ गृहीत्वा हेलयामा
स धूर्त्तस्तं कोपयन्हसन् निर्भिद्य कलशं दुष्टो वासांस्यास्फालयद्बलं॥ ९ भिन्नं मत्तं १० ११ जात्या

स्वभावेनैव चापलं यासां ताः १२ हेलयामास अवजज्ञे निरीक्षतो निरीक्षमाणस्य तमनादृत्येत्यर्थः १३। १४ आस्फालय

राम ५९

योषितां वासांसि आकृष्य पाटितवान् विप्रचक्रे एवमपकृतवान् १५ १६ शालं वृक्षं १७ सुनंदेन मुशलेन आहनत् अह

कदर्थीकृत्य बलवान् विप्रचक्रे मदोद्धतः १५ तं तस्याऽविनयं दृष्ट्वा देशांश्च तदुपद्रुतान्॥
क्रुद्धो मुशलमादत्त हलं चारिजिघांसया १६ द्विविदोऽपि महावीर्यः शालमुद्यम्य पाणिना
अभ्येत्य तरसा तेन बलं मूर्द्धन्यताडयत् १७ तं तु संकर्षणो मूर्ध्नि पतंतमचलो यथा प्रति
जग्राह भगवान् सुनंदेनाहनच्च तं १८ मुशलाहतमस्तिष्को विरेजे रक्तधारया गिरिर्यथा
गैरिकया प्रहारं नानुचिंतयन् १९ पुनरन्यं समुत्क्षिप्य कृत्वा निष्पत्रमोजसा तेनाहनत्तु
संक्रुद्धस्तं बलः शतधाऽच्छिनत् २० ततोऽन्येन रुषा जघ्ने तं चापि शतधाऽच्छिनत् एवं युध्य
न् भगवता भग्ने भग्ने पुनः पुनः २१ आकृष्य सर्वतो वृक्षान् निर्वृक्षमकरोद्वनं ततोऽमुंच
च्छिलावर्षं बलस्योपर्यमर्षितः तत्सर्वं चूर्णयामास लीलया मुशलायुधः २२ स बाहू ताल
संकाशौ मुष्टीकृत्य कपीश्वरः आसाद्य रोहिणीपुत्रं ताभ्यां वक्षस्यरूरुजत् २३ यादवें
द्रोऽपि तं दोर्भ्यां त्यक्त्वा मुशललांगले जत्रावभ्यर्दयत् क्रुद्धः सोऽपतद्रुधिरं वमन् २४॥ टी

न् इत्यर्थः तं वानरं १८ मस्तिष्कं मस्तकावयवविशेषः गैरिकया लोहितधातुना नानुचिंतयन् अगणयन्॥१९॥२०॥२१
॥२२॥ अरूरुजत् ताडयामास २३ यादवेंद्रः संकर्षणः क्रुद्धः सन् जत्रौ कंठबाहुमूले २४॥

६७
भा॰द॰
उ॰
६०

टंकाः सनोयविवराणितत्सहितः २५ २६ जगतोव्यतिकरंनाशमावहतीतितथातं २७ ॥इतिदशमेटीकायांसप्तषष्टितमोऽध्यायः ६७॥ अष्टषष्टितमेसांबेनिरुद्धेकौरवैर्युधि तद्विमोक्षायरामेणगजाह्वयविकर्षणं १ रामचरित्रंनरंनि

चकंपेतेनपतताटंकः सवनस्पतिः पर्वतः कुरुशार्दूलवायुनानौरिवांभसि २५ जयशब्दोनमःशब्दः साधुसाध्विति चांबरे सुरसिद्धमुनींद्राणामासीत्कुसुमवर्षिणां २६ एवंनिहत्यद्विविदंजगद्व्यतिकरावहं संस्तूयमानोभगवान्जनैःस्वपुरमाविशत् २७ ॥ ॥

॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेद्विविदवधोनामसप्तषष्टितमोध्यायः ६७॥ श्रीशुकउवाच दुर्योधनसुतांराजन्लक्ष्मणांसमितिंजयः स्वयंवरस्थामहरत् सांबोजांबवतीसुतः १ कौरवाःकुपिताऊचुर्दुर्विनीतोऽयमर्भकः कदर्थीकृत्यनः कन्यामकामामहरद्बलात् २ बध्नीतेमंदुर्विनीतंकिंकरिष्यंतिवृष्णयः येऽस्मत्प्रसादोपचितांदत्तांनोभुंजतेमहीं ३ निगृहीतंसुतंश्रुत्वायद्येष्यंतीहवृष्णयः भग्नदर्पाःशमंयांतिप्राणाइवसुसंयताः ४ ॥ इतिकर्णःशलोभूरिर्यज्ञकेतुःसुयोधनः सांबमारेभिरेरोद्धुंकुरुवृद्धानुमोदिताः ॥ ५ ॥ ६

रूपयितुमाह दुर्योधनसुतामिति समितिंजयः संग्रामजित् १ २ नोस्माकंमहींअस्माभिर्दत्तांन तेभूमिपतयइतिभावः ३ यांतियास्संति प्राणाइंद्रियाणीवसुसंयताः प्राणायामादिभिर्दमिताः ४ कुरुवृद्धोभीष्मःतेनानुमोदिताःतत्सहिताःब

रामः
६०

६ कर्णोऽग्रणीर्येषां ते ७ नामृष्यत् असहत् अचिंत्यस्य भगवतोऽर्भोऽर्भकः अचिंत्यश्चासावर्भश्चेति वा ८ ९ तत्रपं

दृष्ट्वाऽनुधावतः सांबो धार्तराष्ट्रान्महारथः प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ६ तं तेऽजिघृक्षवः क्रुद्धास्तिष्ठ तिष्ठेति भाषिणः आसाद्य धन्विनो वाणैः कर्णाग्रण्यः समाकिरन् ७ सोऽपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनंदनः नामृष्यत्तदचिंत्यार्भः सिंह क्षुद्रमृगैरिव ८ विस्फूर्ज्य रुचिरं चापं सर्वान्विव्याध सायकैः कर्णादीन् षड्रथान्वीरस्तावद्भिर्युगपत्पृथक् ९ चतुर्भिश्चतुरो वाहानेकैकेन च सारथीन् रथिनश्च महेष्वासांस्तस्य तत्तेऽभ्यपूजयन् १० तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान् एकस्तु सारथिं जघ्ने चिच्छेदान्यः शरासनं ११ तं वध्वा विरथीकृत्य कृच्छ्रेण कुरवो युधि कुमारं स्वस्य कन्यां च स्वपुरं जयिनोऽविशन् १२ तच्छ्रुत्वा नारदोक्तेन राजन्संजातमन्यवः कुरून्प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः १३ सांतयित्वा तु तान्रामः सन्नद्धान्वृष्णिपुंगवान् नैच्छत्कुरूणां वृष्णीनां कलिं कलिमलापहः १४ जगाम हास्तिनपुरं रथेनादित्यवर्चसा ब्राह्मणैः कुलवृद्धैश्च वृतश्चंद्र इव ग्रहैः १५॥ एकैकेनेति चतुर्भिश्चतुर इत्यत्र वीप्साऽनुसंधेया

तत्कर्म ते संमानितवंतः १० ११ स्वस्य दुर्योधनस्य कन्यां च नीत्वेति शेषः १२।१३ यतः कलिं नैच्छत् अतः सांतयित्वा जगामेति

६८
भा॰ द॰
उ॰
६१

धृतराष्ट्रंप्रतिबुभुत्सयेतिअभिप्रायजिज्ञासयेत्यर्थः १६ विधिवदभिवंद्य १७ तमुद्धवमर्चयित्वासत्कृत्यमंगलपाणयः उपायनहस्ताः १८ दृष्ट्वाअपिप्रणेमुः १९ २० २१ यद्यूयमित्यादिउग्रसेनस्यवाक्यंमृष्येसहे अथाश्रुतमानीयसमर्प्य

गत्वागजाह्वयंरामोवाह्योपवनमास्थितः उद्धवंप्रेषयामासधृतराष्ट्रंबुभुत्सया १६ सोभि वंद्यांऽबिकापुत्रंभीष्मंद्रोणंसबाल्हिकं दुर्योधनंचविधिवद्राममागतमब्रवीत् १७ तेऽति प्रीतास्तमाकर्ण्यप्राप्तंरामंसुहृत्तमं तमर्चयित्वाभिययुःसर्वेमंगलपाणयः १८ तंसंगम्य यथान्यायंगामर्घ्यंचन्यवेदयन् तेषांयेतत्प्रभावज्ञाःप्रणेमुःशिरसाबलं १९ बंधून्कुशलि नःश्रुत्वापृष्ट्वाशिवमनामयं परस्परमथोरामोबभाषेऽविक्लवंवचः २० उग्रसेनःक्षिती शेशोयद्व आज्ञापयत्प्रभुः तदव्यग्रधियःश्रुत्वाकुरुध्वंमाविलंबितं २१ यद्यूयंबहव स्त्वेकंजित्वाऽधर्मेणधार्मिकं अबध्नीताथतन्मृष्येबंधूनामैक्यकाम्यया २२ वीर्यशौ र्यबलोन्नद्धमात्मशक्तिसमंवचः कुरवोबलदेवस्यनिशम्योचुःप्रकोपिताः २३ कुरवऊचुः अहोमहच्चित्रमिदंकालगत्यादुरत्यया आरुरुक्षत्युपानद्वैशिरोमुकुटसेवितं २४ ॥

तेतिशेषः २२ वीर्यंप्रभावः शौर्यंउत्साहः बलंसत्वंतैरुन्नद्धंउच्छ्रंखलंकथंआत्मनःशक्तेःसमंअनुरूपं २३ ॥ उपानत्पादरक्षाशिरआरोढुमिच्छतीतिहीनाअस्मानाज्ञापयंतीत्यर्थः २४॥

राम
६१

अस्यैवप्रपंचः एतइतिचतुर्भिः योनेनएथायाविवाहेन २५ किंचचामरव्यजनेइति भुंजंतिउपभुंजतइत्यर्थः अस्मदुपेक्ष
याअस्माकमनाग्रहेण २६ अलमिति अतःपरंतान्यपहरिष्यामइत्यर्थः २७ अवरुंधीतस्वीकुर्यात् उरणोमेषः २८ ज

एतेयोनेनसंवद्धाः सहशय्यासनाशनाः वृष्णयस्तुल्यतांनीताअस्मद्दत्तनृपासनाः २५ चा
मरव्यजनेशंखमातपत्रंचपांडुरं किरीटमासनंशय्यांभुंजंत्यस्मदुपेक्षया २६ अलंयदू
नांनरदेवलांछनैर्दातुःप्रतीपैः फणिनामिवामृतं येऽस्मत्प्रसादोपचिताहियादवाआज्ञा
पयंत्यद्यगतत्रपावत २७ कथमिंद्रोऽपिकुरुभिर्भीष्मद्रोणार्जुनादिभिः अदत्तमवरुंधी
तसिंहग्रस्तमिवोरणः २८ श्रीशुकउवाच जन्मबंधुश्रियोन्नद्धमदास्तेभरतर्षभ आश्रा
व्यरामंदुर्वाच्यमसभ्याःपुरमाविशन् २९ दृष्ट्वाकुरूणांदौःशील्यंश्रुत्वाऽवाच्यानिचाच्युतः
अवोचत्कोपसंरब्धोदुःप्रेक्ष्यःप्रहसन्मुहुः ३० नूनंनानामदोन्नद्धाःशांतिंनेच्छंत्यसाधवः।
तेषांहिप्रशमोदंडःपशूनांलगुडोयथा ३१ अहोयदून्सुसंरब्धान्कृष्णंचकुपितंशनैः
सांत्वयित्वाऽहमेतेषांशममिच्छन्निहागतः ३२ तइमेमंदमतयःकलहाभिरताःखलाः॥

न्मनाबंधुभिश्चोपलक्षितयाश्रिया उन्नद्धउत्कटोमदोयेषांतेदुर्वाच्यंपरुषंवाक्यंअसभ्याःदुर्जनाः २९ ३० नानाधनाभि
जनादिमदैरुन्नद्धास्तेषांदंडएवप्रशमः प्रकर्षेणशमयतीतितथाययालगुडोदंडः ३१ ३२ दुर्भाषान् ॥ ६ ॥ ६ ॥

६८ भा॰द॰ अ॰ ६८

मवाच्य शब्दान् ३३ दुर्भाषणमनुस्मरति षड्भिः नोग्रसेन इति विभुराज्ञापयितुं समर्थः ३४ अहो धृष्टाः श्रीकृष्णमप्यधिक्षि
पंतीति कुपित आह सुधर्मेत्यादिभिस्त्रिभिः ३५ ३६ मौल्युत्तमैर्मौलियुक्तैरुत्तमांगैरुत्तमैर्मौलिभिरिति वा उपासितानि तीर्था

तेमामवज्ञाय मुहुर्दुर्भाषान्मानिनोऽब्रुवन् ३३ नोग्रसेनः किल विभुर्भोजवृष्ण्यंधकेश्वरः ।
शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ३४ सुधर्माक्रम्यते येन पारिजातोऽमरांघ्रिपः ।
आनीय भुज्यते सोऽसौ न किलाध्यासनार्हणः ३५ यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्व
री सनार्हति किल श्रीशो नरदेवपरिच्छदान् ३६ यस्यांघ्रिपंकजरजोऽखिललोकपालैर्मौ ।
ल्युत्तमैर्धृतमुपासिततीर्थतीर्थं ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः श्रीश्चोद्वहेम चिरम
स्य नृपासनं क्व ३७ भुंजते कुरुभिर्दत्तं भूखंडं वृष्णयः किल उपानहः किल वयं स्वयं तु कुरवः
शिरः ३८ अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनां असंबद्धा गिरो रूक्षाः कः सहेतानुशा ।
सिता ३९ अद्य निष्कौरवीं पृथ्वीं करिष्यामीत्यमर्षितः गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्र
यं ४० लांगलाग्रेण नगरमुद्विदार्य गजाह्वयं विचकर्ष स गंगायां प्रहरिष्यन्नमर्षितः ४१

नि येर्यानि भिस्तेषामपि तीर्थं यद्वा उपासितं सर्वैः सेवितं तीर्थं गंगा तस्याः तीर्थं तीर्थत्वनिमित्तं किंच ब्रह्मा भवः श्रीश्च अहमपि उद्व
हेम कथंभूता वयं यस्य कलाया अंशस्य कला अंशाः ३७ ३८ मत्तानामिव मद्यादिना रूक्षाः परुषाः अनुशासिताः स्वयं दंडधरः सन्

रामः ६८

४२ जिजीविषवइत्यक्षराधिकंसोढव्यं ४३ मूढानांप्रभावानभिज्ञानांअतिक्रममपराधम् ४४ ४५ शेषेशयनंकरोषिशे

जलयानमिवाघूर्णगंगायांनगरंपतत् आकृष्यमाणमालोक्यकौरवाजातसंभ्रमाः ४२ तमे
वशरणंजग्मुःसकुटुंबाजिजीविषवः सलक्ष्मणंपुरस्कृत्यसांबंप्रांजलयःप्रभुं ४३ रामरामाऽ
खिलाधारप्रभावंनविदामते मूढानांनःकुबुद्धीनांक्षंतुमर्हस्यतिक्रमम् ४४ स्थित्युत्पत्त्यप्य
यानांत्वमेकोहेतुर्निराश्रयः लोकान्क्रीडनकानीशक्रीडतस्तेवदंतिहि ४५ त्वमेवमूर्ध्नीदम
नंतलीलयाभूमंडलंबिभर्षिसहस्रमूर्द्धन् अंतेचयःस्वात्मनिरुद्धविश्वःशेषेऽद्वितीयःपरिशि
ष्यमाणः ४६ कोपस्तेऽखिलशिक्षार्थंनद्वेषान्नचमत्सरात् बिभ्रतोभगवन्सत्वंस्थितिपाल
नतत्परः ४७ नमस्तेसर्वभूतात्मन्सर्वशक्तिधराव्यय विश्वकर्मन्नमस्तेऽस्तुत्वांवयंशरणंगताः
४८ श्रीशुकउवाच एवंप्रपन्नैःसंविग्नैर्वेपमानाऽयनैर्बलः प्रसादितःसुप्रसन्नोमाभैष्टेत्यभयंद
दौ ४९ दुर्योधनःपारिबर्हंकुंजरान्षष्टिहायनान् ददौचद्वादशशतान्ययुतानितुरंगमान् ५०
रथानांषट्सहस्राणिरौक्माणांसूर्यवर्चसां दासीनांनिष्ककंठीनांसहस्रंदुहितृवत्सलः ५१

षपर्यंकेपरिशिष्यमाणोयःसचत्वमेवेतिवा ४६ अस्मासुकोपश्चनवायमनुचित एवेत्याहःकोपस्तइतिस्थितिपालनेतत्परः
नात्पर्यवान्कोपःपाप्यंतरेसंबोधनं ४७ विश्वकर्मन्हेअनंतयससत्वमितिसंबोधनं ४८ वेपमानमयनंपुरंयेषांतैः ४९ तुरंगमांश्च

भा॰ द॰ टी॰ उ॰ ६९

सुहृद्भिः कौरवैः ५२ मध्येसभायांसभामध्ये ५३ ५४ इतिदशमेटीकायांअष्टषष्टितमोध्यायः ६८ एकोनसप्ततितमेगा
र्हस्थ्यंप्रतिमंदिरं कृष्णस्यनारदोदृष्ट्वाविस्मितोऽगात्ततःस्तुवन् ७॥ १ दिदृक्षामभिनयेनाह चित्रमिति द्व्यष्टसाहस्रंस्त्रियः

प्रतिगृह्यतुतत्सर्वंभगवान्सात्वतर्षभः ससुतः सस्नुषः प्रायात्सुहृद्भिरभिनंदितः ५२ ततः
प्रविष्टःस्वपुरंहलायुधःसमेत्यबंधूननुरक्तचेतसः शशंससर्वंयदुपुंगवानांमध्येसभायांकुरु
षुस्वचेष्टितं ५३ अद्यापिचपुरंह्येतत्सूचयद्रामविक्रमं समुन्नतंदक्षिणतोगंगायामनुदृश्यते
५४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेहास्तिनपुरकर्षणबलभद्रविजयोनामअष्टषष्टि
तमोऽध्यायः ६८ श्रीशुकउवाच नरकंनिहतंश्रुत्वातथोद्वाहंचयोषितां कृष्णेनैकेनबह्वी
नांतद्दिदृक्षुःस्मनारदः १ चित्रंबतैतदेकेनवपुषायुगपत्पृथक् गृहेषुद्व्यष्टसाहस्रंस्त्रियएक
उदावहत् २ इत्युत्सुकोद्वारवतींदेवर्षिर्द्रष्टुमागमत् पुष्पितोपवनारामद्विजालिकुलनादितां
३ उत्फुल्लेंदीवरांभोजकल्हारकुमुदोत्पलैः छुरितेषुसरःसूच्चैः कूजितांहंससारसैः॥४॥ ६ ॥

द्व्यष्टसहस्रस्त्रीः उदावहत्परिणीतवान् ॥ २ ॥ तांद्वारवतीमनुवर्णयति पुष्पितेति सार्द्धत्रयेण पु
ष्पितेषूपवनेषुआरामेषुउद्यानेषुच द्विजानामलीनांचकुलानितैर्नादितां ३ छुरितेषुव्यापितेषु ॥४॥ ६ ॥

एमः ६३

महामरकतैः प्रख्यायंतेप्रकाशंतइतितथातैः स्वर्णरत्नमयाः परिच्छदाः परिकराये षुतैः ५ पतंत्यःप्रचलंत्यः पताकायेषुतैर्ध्वजैर्वारितः आतपोयस्यांतां ६ तस्यांद्वारकायांसर्वैर्धिष्ण्यपैर्लोकपालैरर्चितं ७ षोडशभिःसद्मसहस्रैः समलंकृतंहरेरंतः पुरंविवेशतत्रचतस्यशौरेः पत्नीनांभवनेषुएकतमंविवेशेत्यन्वयः यत्रचकौशलंत्वष्ट्रादर्शितमित्यंतः पुरभव

प्रासादलक्षैर्नवभिर्जुष्टांस्फाटिकराजतैः महामरकतप्रख्यैः स्वर्णरत्नपरिच्छदैः ५ वि
भक्तरथ्यापथचत्वरापणैः शालासभाभीरुचिरांसुरालयैः संसिक्तमार्गांगणवीथिदेहलीं
पतत्पताकाध्वजवारितातपां ६ तस्यामंतःपुरंश्रीमदर्चितंसर्वधिष्ण्यपैः हरेःस्वकौशा
लंयत्रत्वष्ट्राकात्स्न्येनदर्शितं ७ तत्रषोडशभिः सद्मसहस्रैःसमलंकृतं विवेशैकतमंशौरेः
पत्नीनांभवनंमहत् ८ विष्टब्धंविद्रुमस्तंभैर्वैदूर्यफलकोत्तमैः इंद्रनीलमयैःकुड्यैर्जगत्या
चाहतत्विषा ९ वितानैर्निर्मितैस्त्वष्ट्रामुक्तादामविलंबिभिःदांतैरासनपर्यंकैर्मण्युत्तमपरि
ष्कृतैः १० दासीभिर्निष्ककंठीभिःसुवासोभिरलंकृतं पुंभिःसकंचुकोष्णीषसुवस्त्रमणिकुंड
लैः ११ ॥ ९ तयोर्विशेषणं ८ तदनुवर्णयतिचतुर्भिर्विष्टब्धमिति· विद्रुमस्तंभैर्विष्टब्धंविधृतंवैदूर्यमयानिफलकोत्तमानिस्तंभाश्रयाणिछादनानितैः इंद्रनीलमयैःकुड्यादिभिश्चोपलक्षितं जगत्याभूमिकयाचेंद्रनीलमय्यानहतात्विट्यस्यास्तया ९ मुक्तादाम्नांविलंबाः विविधानिलंबनानिविद्यंतेयेषुतैःमण्युत्तमैःपरिष्कृतैर्भूषितैः१०

हू

ईस्यसमीक्ष्यघनोमेघोऽयमितिबुद्धिर्येषांते १२ अनुसवंसर्वकालंआत्मनासमानानिगुणरूपवयांसिसुवेषोऽलंकारश्च यस्यतेनदासीसहस्रेणयुतयागृहिण्यासह १३ श्रियःरुक्मिण्याःपर्य्यंकतः अवीविशत्उपवेशयामास १४ अवि मत्अविमःदधारेत्यर्थःविप्रंदिनिशत्रंतंवानदासंपूज्याभिभाष्यचप्राहइत्युत्तरेणान्वयः कथंभूतः यस्यचरणशौ

रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वांतंविचित्रवलभीषुशिखंडिनोऽग नृत्यंतियत्रविहिताऽ गरुधूपमक्षैर्निर्यांतमीक्ष्यघनवुद्धयउन्नदंतः १२ तस्मिन्समानगुणरूपवयःसुवेषदासी सहस्रयुतयानुसवंगृहिण्या विप्रोददर्शचमरव्यजनेनरुक्मदंडेनसात्वतपतिंपरिवीज यंत्या १३ तंसंनिरीक्ष्यभगवान्सहसोत्थितःश्रीपर्य्यंकतःसकलधर्मभृतांवरिष्ठः आनम्य पादयुगलंशिरसाकिरीटजुष्टेनसांजलिरवीविशदासनेस्वे १४ तस्यावनिज्यचरणौतद पःस्वमूर्ध्नाविभ्रज्जगद्गुरुतरोपिसतांपतिर्हि ब्रह्मण्यदेवइतियद्गुणनामयुक्तंतस्यैवय च्चरणशौचमशेषतीर्थं १५ संपूज्यदेवऋषिवर्यमृषिःपुराणोनारायणोनरसखोविधि नोदितेन वाण्याभिभाष्यमितयाऽमृतमिष्टयातंप्राहप्रभोभगवतेकरवामकिंते १६॥

चंगंगाअशेषतीर्थंसः अतएवजगद्गुरुतरोऽपिसतांधर्मभृतांपतित्वादेवमकरोदित्यर्थः सतांपतित्वेहेतुःब्रह्मण्यदे वइतियद्गुणकृतंनामतस्यैवयतोयुक्तंसमंजसंअतस्तद्धर्मप्रवर्त्तनायैवमाचरमित्यर्थः १५ अभिभाष्यदिष्ट्यात्रत्वदाग

भगवतास्वस्यार्हणमनर्हमन्यमानस्तत्संभावयन्नाह नैवेति सर्वमित्रत्वादेवमर्हणं नतु ममगौरवात् नर्हि कथं कंसादि
ष्वमैत्री तत्राह खलानां दमश्च नैवाद्भुतमिति कुतः जगतः स्थितिर्द्धारणं रक्षणं पालनं ताभ्यां सह तस्य निःश्रेयसाय तत्
वायं स्वेच्छावतार इति वयं सम्यग्विद्मः अतः खलदमः साधुसंमाननं च युक्तमिति भावः १७ यदुक्तं प्रभो किं करवामेति

नारद उवाच नैवाद्भुतं तव विभोऽखिललोकनाथ मैत्री जनेषु सकलेषु दमः खलानां निः
श्रेयसाय हि जगत्स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सम्यक् १७ दृष्टं तवाङ्घ्रियु
गलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिंत्यमगाधबोधैः संसारकूपपतितोत्तरणावलंबं ध्या
यंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् १८ ततोऽन्यदाविशद्गेहं कृष्णपत्न्याः स नारदः यो
गेश्वरेश्वरस्यांगयोगमायाविवित्सया १९ दीव्यंतमक्षैस्तत्रापि प्रियया चोद्धवेन च पूजितः
परया भक्त्या प्रत्युत्थानासनादिभिः २० पृष्टश्चाविदुषेवासौ कदायातो भवानिह क्रियते किं
नु पूर्णानामपूर्णैरस्मदादिभिः २१ अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु स तु विस्मित
उत्थाय तूष्णीमन्यदगाद्गृहं २२ तत्राप्यचष्ट गोविंदं लालयंतं सुतान् शिशून् ततोऽन्यस्मिन्गृहेऽ
पश्यन्मज्जनाय कृतोद्यमं २३॥ तत्राह दृष्टमिति भक्तजनता या अपवर्गरूपं किंच अतिदुर्लभतया ब्रह्मादिभि
र्योगेश्वरैरपि हृदि विचिंत्यं किंच संसारकूपे पतितानामुत्तरणाय अवलंबं आश्रयं एवंभूतं तवाङ्घ्रियुगलं मया दृष्टं अतः
कृतकृत्योस्मि तथापि त्वत्स्मृतिर्यथा स्यात्तथा अनुगृहाण ततस्तद्ध्यायन्नेव नित्यं चरामीति १८ १९ अक्षैर्दीव्यंतं द्यूत

विनानाग्नीनाह पचनीयादीनग्निहोत्रेणपंचभिर्मखैर्महायज्ञैर्यजंतं २४ २५ २६ २७ २८ २९ ३० ३१ काले

जुह्वंतंचविनानाग्नीन्यजंतंपंचभिर्मखैः भोजयंतंद्विजान्क्वापिभुंजानमवशेषितं २४
क्वापिसंध्यामुपासीनंजपंतंब्रह्मवाग्यतं एकत्रचासिचर्मभ्यांचरंतमसिवर्त्मसु २५ अ
श्वैर्गजैरथैःक्वापिविचरंतंगदाग्रजं क्वचिच्छयानंपर्य्यंकेस्तूयमानंचवंदिभिः २६ मंत्र
यंतंचकस्मिंश्चिन्मंत्रिभिश्चोद्धवादिभिः जलक्रीडारतंक्वापिवारमुख्याऽबलावृतं २७ कु
त्रचिद्द्विजमुख्येभ्योददतंगाःस्वलंकृताः इतिहासपुराणानिशृण्वंतंमंगलानिच २८ हसं
तंहास्यकथयाकदाचित्प्रियया गृहे क्वापिधर्मंसेवमानमर्थकामौचकुत्रचित् २९ ध्यायं
तमेकमासीनंपुरुषंप्रकृतेःपरं शुश्रूषंतंगुरून्क्वापिकामैर्भोगैःसपर्यया ३० कुर्वंतं
विग्रहंकैश्चित्संधिंचान्यत्रकेशवं कुत्रापिसहरामेणचिंतयंतंसतांशिवं ३१ पुत्राणां
दुहितृणांचकालेविध्युपयापनं दारैर्वरैस्तत्सदृशैः कल्पयंतंविभूतिभिः ३२ ॥
प्रस्थापनोपानयनैरपत्यानांमहोत्सवान् ॥ ८८तत्तत्समयेविधिनाउपयापनंप्रापणंविवाहमित्यर्थः
कल्पयंतंघटयंतंविभूतिभिःविभवैः ३२ प्रस्थापनंदुहितृजामात्रादीनांस्वगृहात्तद्गृहंप्रतिनयनं उपानयनंतत्त
द्गृहात् पुनरानयनंतैर्महोत्सवान् ॥

कल्पयंतंयोगेश्वरेशस्यतेषामपत्यानांमहोत्सवान्वीक्ष्यलोकाः सर्वेविसिस्मिरेविस्मयंचक्रुः तथाभूतान् कल्पयंतं ३३
३४ ३५ अव्यक्तलिंगंवेषांतरेणच्छन्नं ३६ ३७ हेयोगेश्वर आत्मन् आत्मनिममममनसितवस्वरूपेवानिर्भाताः प्रतीता

वीक्ष्ययोगेश्वरेशस्ययेषांलोकाविसिस्मिरे ३३ यजंतंसकलान्देवान्क्वापिक्रतुभिरूर्जि
तैः पूर्तयंतंक्वचिद्धर्मंकूपारामालयादिभिः ३४ चरंतंमृगयांक्वापिहयमारुह्यसैंधवं घ्नं
तंततः पशून्मेध्यान्परीतंयदुपुंगवैः ३५ अव्यक्तलिंगंप्रकृतिष्वंतःपुरगृहादिषु क्वचि
च्चरंतंयोगेशंतत्तद्भावबुभुत्सया ३६ अथोवाचहृषीकेशंनारदःप्रहसन्निव योगमायोदयं
वीक्ष्यमानुषीमीयुषोगतिं ३७ विदामयोगमायास्तेदुर्दर्शाअपिमायिनां योगेश्वरात्मन्नि
र्भानाभवत्पादनिषेवया ३८ अनुजानीहिमांदेवलोकांस्तेयशसाप्लुतान् पर्यटामितवोद्गा
यन्लीलांभुवनपावनीं ३९ श्रीभगवानुवाच ब्रह्मन्धर्मस्यवक्ताऽहंकर्त्तातदनुमोदिता तां
च्छिक्षयँल्लोकमिममास्थितःपुत्रमाखिद ४० श्रीशुकउवाच इत्याचरंतंसद्धर्मान्पावना
न्गृहमेधिनां तमेवसर्वगेहेषुसंतमेकंददर्शह ४१ कृष्णस्यानंतवीर्यस्ययोगमायामहोदयं

तवयोगमायाःकेवलंवैभवंविदामविद्मःनतुतत्परमार्थमितिभावः ३८ त्वन्मानुषनाट्येनमुह्यामिअतोमांप्रस्थापयेत्या
ह अनुजानीहीति ३९ ततस्माल्लोकंशिक्षयन्निमंधर्ममास्थितःनतुतत्वतः हेपुत्रमाखिदमोहंमाप्राप्नुहीति ४० इतिएवम

कौतुकोमुनिर्विस्मितोभूदिति ४२ अद्धितः अद्धयायुक्तः आत्मायस्तेन ४३ नारदृष्टांतकृष्णलीलांनिगमयति॥ एवमिति अखिलस्यभवायउद्भवायगृहीताः शक्तयोनानामूर्तयोयेनसः सव्रीडंचतत्सौहृदंचतेननिरीक्षणंहासश्च ताभ्यांजुष्टः ४४ अनन्यविषयाणिअसाधारणानिअपवर्गमार्गेमोक्षप्रदे ४५॥ ॥इतिदशमेटीकायामेको

मुहुर्दृष्ट्वामुनिरभूद्विस्मितोजातकौतुकः ४२ इत्यर्थधर्मकामेषुकृष्णेनश्रद्धितात्मना सम्यक्सभाजितःप्रीतस्तमेवानुस्मरन्ययौ ४३ एवंमनुष्यपदवीमनुवर्तमानोनारायणोऽखिलभवायगृहीतशक्तिः रेमेंऽगषोडशसहस्रवरांगनानांसव्रीडसौहृदनिरीक्षणहासजुष्टः ४४ यानीहविश्वविलयोद्भववृत्तिहेतुःकर्माण्यनन्यविषयाणिहरिश्चकार यस्त्वंगगायतिशृणोत्यनुमोदतेवाभक्तिर्भवेद्भगवतिह्यपवर्गमार्गे ४५ ॥ ॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेएकोनसप्ततितमोऽध्यायः ६९ ॥ ॥श्रीशुकउवाच अथोषस्युपवृत्तायांकुक्कुटान्कूजतोऽशपन् गृहीतकंठ्यःपतिभिर्माधव्योविरहातुराः १ वयांस्यरूरुवन्कृष्णंबोधयंतीववंदिनः॥

नसप्ततितमोऽध्यायः ६९॥ ततस्तुसप्ततितमेकृष्णस्याह्निककर्मणि दूतनारदयोःकार्यमंत्रविचारणं १ जगन्मंगलचारित्रमाह्निकंजगदीशितुः नारदेनक्वचित्किंचिद्दृष्टमाहयथाक्रमं २ अथेतित्रयर्थधर्मकामेषुकृष्णेनश्रद्धितात्मनेतिप्रस्तुतस्यश्रीकृष्णस्याह्निकस्याधिकारेथशब्दः उपवृत्तायांआसन्नायांपतिभिः श्रीकृष्णैः माधव्योमाधवस्यभार्याः १ वंदिनइवश्रीकृष्णंबोधयंतिसंतिवयांसिपक्षिणोऽरूरुवन्॥ ६ ॥ ६ ॥

अनिश्चयेनकूजन् मंदारवनवायुभिर्गायत्स्वलिष्वनिद्राणिनिद्रारहितानिवयांसि २ वैदर्भीतुपलक्षणंपरिरंभणवि
श्लेषांतंपर्यालोच्य ३ ४ एकं अखंडं अत्रहेतुः अनन्यंनिरुपाधि अतएवाव्ययंनित्यंस्वयंज्योतिष्ट्वेहेतुः नित्यनिरस्तं
नित्यनिरस्तंकल्मषं अविद्यायस्मात्तं उपलक्षणमाह अस्येति अस्यविश्वस्यलक्षितभावश्चासौनिर्वृतिश्चभावः सा

गायत्स्वलिष्वनिद्राणिमंदारवनवायुभिः २ मुहूर्त्तंतंतुवैदर्भीनामृष्यदतिशोभनं परि
रंभणविश्लेषात्प्रियबाह्वंतरंगता ३ ब्राह्मेमुहूर्त्तउत्थायवार्युपस्पृश्यमाधवः दध्यौ
प्रसन्नकरणआत्मानंतमसःपरं ४ एकंस्वयंज्योतिरनन्यमव्ययंस्वसंस्थयानित्यनिर
स्तकल्मषं ब्रह्माख्यमस्योद्भवनाशहेतुभिःस्वशक्तिभिर्लक्षितभावनिर्वृत्तिं ५ अथा
प्लुतोंभस्यमलेयथाविधिक्रियाकलापंपरिधायवाससी चकारसंध्योपगमादिसत्तमोहु
तानलोब्रह्मजजापवाग्यतः ६ उपस्थायार्कमुद्यंतंतर्प्पयित्वात्मनःकलाः देवानृषीन्पि
तॄन्वृद्धान्विप्रानभ्यर्च्यचात्मवान् ७ धेनूनांरुक्मशृंगीणांसाध्वीनांमौक्तिकस्रजां पय
स्विनीनांगृष्टीनांसवत्सानांसुवाससां ॥ ८ ॥ ५ तान्निर्वृतिरानंदः नथाहिगुणक्षोभात्पूर्वंसत्तामात्रं

यः सदेवसौम्येदमग्रआसीदित्यादिश्रुतेः सएवानंदश्चविज्ञानमानंदमित्यादिश्रुतेः तंसदानंदमित्यर्थः ५ आप्लुतःस्ना
तः संध्यायाउपगमउपासनं आदिर्ययाभवतितयाक्रियाकलापंचकारकाण्वत्वादुदयात्पूर्वमेवहुतानलोब्रह्मगायत्रीं

बद्वमिति हिरण्येन परीवृतान् रुक्मान् शुक्लदतो मृगान् मष्मारे भरतोऽददाच्छंतं बद्धानि सप्त चेति श्रुत्युक्तानि सप्तो
त्तरशतं बद्वान्येकीकृत्य पुराणे चतुर्दशलक्षत्वेन गणितानि यथोक्तं भरतमेवाधिकृत्य नवमस्कंधे मृगान् शुक्लदतः
कृष्णान् सुवर्णेन परिष्कृतान् अदात् कर्मणि मष्मारे नियुतानि चतुर्दशेति ततश्चेयं बद्वसंख्या श्लोके न संगृह्यते च

ददौ रूप्यखुराग्राणां क्षौमाजिनतिलैः सह अलंकृतेभ्यो विप्रेभ्यो बद्वं बद्वं दिने दिने ९
गोविप्रदेवतावृद्धगुरून्भूतानि सर्वशः नमस्कृत्यात्मसंभूतीर्मंगलानि समस्पृशत् १०
आत्मानं भूषयामास नरलोकविभूषणं वासोविभूषणैः स्वीयैर्दिव्यस्रग्गंधलेपनैः ११
अवेक्ष्याज्यं तथादर्शं गोवृषद्विजदेवताः कामांश्च सर्ववर्णानां पौरांतःपुरवासिनां प्रदाप्य
प्रकृतीः कामैः प्रतोष्य प्रत्यनंदत १२ संविभज्याग्रतो विप्रान् स्रक्तांबूलानुलेपनैः सुहृदः
प्रकृतीर्दारानुपायुंक्त ततः स्वयं १३ तावत्सूत उपानीय स्यंदनं परमाद्भुतं सुग्रीवाद्यैर्हयैर्यु
क्तं प्रणम्यावस्थितोऽग्रतः १४ गृहीत्वा पाणिना पाणी सारथेस्तमथारुहत् सात्यक्युद्ध
वसंयुक्तः पूर्वाद्रिमिव भास्करः ॥ १५ ॥

॥ चतुर्दशानां लक्षाणां सप्ताधिकशतांशं क बद्वं चतुरशी
त्यग्रसहस्राणि त्रयोदशेति दिने दिने च प्रतिगृहं चेति ९ आत्मसंभूतीः स्वविभूतीः मंगलानि कपिलादीनि १०
नरलोकस्य विभूषणरूपमात्मानं स्वीयैः पीतांबरकौस्तुभादिभिः ११ कामानभिलषितानर्थान् १२ विप्रादीन् स्रगादिभिः
संविभज्य तेभ्यस्तानि दत्त्वेत्यर्थः उपायुंक्त भोगार्थमग्रहीत् १३ १४ पाणिकृतं जलौ गृहीत्वा १५

सव्रीडप्रेमवीक्षितैरीक्षितः क्षणस्थितस्ताभिरेववीक्षितैः कृच्छ्राद्विसृष्टोनिरगादिति १६ एवंसर्वगृहेभ्यः पृथक्पृथक् निर्गत्याऽनंतरंएकएवसन्सुधर्मांप्राविशत् यन्निविष्टानांयत्रप्रविष्टानां १७ नृसिंहैर्नृषुश्रेष्ठैः १८ उपमंत्रि

ईक्षितोऽन्तःपुरस्त्रीणांसव्रीडप्रेमवीक्षितैः कृच्छ्राद्विसृष्टोनिरगाज्जातहासोहरन्मनः १६ सुधर्माख्यांसभांसर्वैर्वृष्णिभिःपरिवारितः प्राविशद्यन्निविष्टानांनसंत्यंगषडूर्मयः १७ तत्रोपविष्टःपरमासनेविभुर्बभौस्वभासाककुभोऽवभासयन् वृतोनृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजोदिवितारकागणैः १८ तत्रोपमंत्रिणोराजन्नानाहास्यरसैर्विभुं उपतस्थुर्नटाचार्यानर्तक्यस्तांडवैःपृथक् १९ मृदंगवीणामुरजवेणुतालदरस्वनैः ननृतुर्जगुस्तुष्टुवुश्चसूतमागधवंदिनः २० तत्राहुर्ब्राह्मणाःकेचिदासीनाब्रह्मवादिनः पूर्वेषांपुण्ययशसांराज्ञांचाकथयन्कथाः २१ तत्रैकःपुरुषोराजन्नागतोऽपूर्वदर्शनः विज्ञापितोभगवतेप्रतीहारैःप्रवेशितः २२ सनमस्कृत्यकृष्णायपरेशायकृतांजलिः राज्ञामावेदयद्दुःखंजरासंधनिरोधजं २३ येचदिग्विजयेतस्यसन्नतिंनययुर्नृपाः प्रसह्यरुद्धास्तेनासन्नयुतेद्वेगिरिव्रजे २४

णःपरिहासकाः पृथक्पृथक्स्वस्वसमुदायैः १९ मृदंगादयःप्रसिद्धाः दरःशंखः सूतादयस्तुष्टुवुः २० ब्राह्मणाः ब्रह्मवेदमाहुर्मंत्रान्व्याचक्षतेतदर्थंवादिनः वादनचतुराः २१ २२ २३ गिरिव्रजेतत्संज्ञकेदुर्गेरुद्धाआसन्तेषांचदुः

७०
भा॰द॰
उ॰
६८

कृष्ण कृष्णेति षड्भिः श्लोकै राज्ञां विज्ञप्तिः तत्र प्रथमेन शरणाश्रयणं त्रिभिर्भयानुवादः द्वाभ्यां प्रार्थनमिति पृथग्धियः पृथग्दर्शिनः २५ पृथग्दर्शिनो लोकस्य भवभयं विवृण्वतो नमंति लोक इति विकर्म निषिद्धं काम्यं च तस्मिन्निरतः स्वे कुशले धर्मे भगवतोऽर्चनेत्वया उदिते उक्ते पंचरात्रे सामान्यतश्च गीतासु यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणमिति प्रमत्तोऽनवहितो यावदयं लोकः तावदेवास्य लोकस्य यः सद्यो जीविताशां छिनत्ति तस्मै तुभ्यमनिमिषाय कालात्मनेनम इति २६ सेयं लोकस्य गतिः वयं तु त्वद्भक्ताः अतोऽस्माकं कु

कृष्ण कृष्णाप्रमेयात्मन् प्रपन्नभयभंजन वयं त्वां शरणं यामो भवभीताः पृथग्धियः २५ लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै २६ लोके भवान् जगदिनः कलयावतीर्णः सद्रक्षणाय खलनिग्रहणाय चान्यः कश्चित्त्वदीयमतियाति निदेशमीश किं वा जनः स्वकृतमृच्छति तन्न विद्मः २७ स्वप्नायितं नृपसुखं परतंत्रमीश शश्वद्भयेन मृतकेन धुरं वहा

नः एतद्दुःखमापन्नमित्याश्चर्येणाहुः लोक इति भो ईश जगतः इनः ईश्वरः त्वयि सद्रक्षणार्थमवतीर्णेपि चेदस्माकं दुःखं स्यात्तर्हि किमन्यः कश्चिज्जरासंधादिस्त्वदाज्ञामपि लंघयति किंच त्वया रक्ष्यमाणोपि जनः स्वकर्मजं दुःखं प्राप्नोत्येवेति न विद्मः नचैतदुभयमपि युक्तमिति भावः २७ किं दुःखं तदाहुः स्वप्नायितमिति स्वप्नवज्ज्ञातं नृपसुखं नृपोचितं सुखं यतः परतंत्रं विषयसाध्यं किंच संप्रति शश्वद्भयं यस्मिन् तेन मृतकतुल्येन शरीरेण धुरं पुत्रदारादिचिंतां केवलं वहामः अहा कष्टं नः ये वयमितः पूर्वमे ॥

राम:
६८

त्वनिष्कामाः संतः त्वां नाश्रिता इत्याहुः हित्वेति त्वत्तः यदनीहैः निष्कामैर्लभ्यं आत्मनि स्वतः सिद्धं सुखं तद्धित्वा क्लिश्या
म इति २८ त्वन्मायया कृतं कर्मबंधं त्वमेव निवर्त्तयेति प्रार्थयंते तन्न इति वियुंक्ष्व विमोचय मगधो जरासंधः तन्संज्ञ
कात् कर्मपाशात् भवद्भिरेव विक्रम्य ततो निर्गम्यतामिति चेदत आहुः य इति य एक एवायुतं गजानां वीर्यं बिभ्रत्स्वभव

हित्वा तदात्मनि सुखं त्वदनीहलभ्यं क्लिश्यामहे ऽतिकृपणास्तव मायये ह २८ तन्नो भवान्
प्रणतशोकहरांघ्रियुग्मो बद्धान् वियुंक्ष्व मगधाह्वय कर्मपाशात् यो भूभुजो ऽयुतमतंगजवी
र्यमेको बिभ्रद्रुरोध भवने मृगराडिवावीः २९ यो वै त्वया द्विनवकृत्व उदात्तचक्र भग्नो मृधे ख
लु भवंतमनंतवीर्यं जित्वा नृलोकनिरतं सकृदूढदर्पो युष्मत्प्रजा रुजति नो ऽजित तद्विधेहि
३० दूत उवाच इति मागधसंरुद्धा भवद्दर्शनकांक्षिणः प्रपन्नाः पादमूलं ते दीनानां शं विधीयतां
३१ श्रीशुक उवाच राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः बिभ्रत्पिंगजटाभारं प्रादुरासीद्यथा रविः
३२ तं दृष्ट्वा भगवान्कृष्णः सर्वलोकेश्वरेश्वरः ववंद उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा ॥३३॥

ते भूभुजो ऽस्मान् रुरोध सिंहो मेषीरिव २९ किंच युष्मदीया वयमित्यस्मानधिकमेव बाधत इत्याहुः यो वा इति हे उदात्तच
क्र उद्यतसुदर्शन यो वै द्विनवकृत्वः अष्टादशकृत्वः अष्टादशवारान् त्वया सह मृधे वर्त्तमाने तत्र सप्तदशकृत्वः त्वया
खलु भग्नः पराजितः पश्चादनंतवीर्यमपि नृलोके निरतं नरशरीरविनोदं भवंतं सकृज्जित्वा ऊढदर्पः प्राप्तगर्वः युष्म
॥ त्प्रजानः रुजति पीडयति तत्त्वत्र यद्युक्तं तद्विधेहीत्यर्थः ३० दूत आह इतीति ३१।३२।३३॥

भा॰ स्कं॰ १
अ॰ १३
६९

३४ भूयान्महान्गुणो लाभोऽयमस्माकं सर्वलोकवृत्तांतज्ञानमिति ३५ ईश्वरः कर्त्ता येषां तेषु ३६ एवमविदुषेव सर्वज्ञेन ज
रासंधवधार्थमेव पांडवचिकीर्षितं पृष्टो नारदो मायेयमिति ज्ञात्वाह दृष्टा इति त्रिभिः विश्वसृजश्च ब्रह्मणोपि मायिनो मो
हकस्य तेस्वशक्तिभिर्विद्यादिभिर्भूतेष्वंतर्यामितया चरतो वर्त्तमानस्य यद्यहं भूतेषु वर्त्ते तर्हि भूतानि मां किन्न पश्यंति तत्रा
ह वन्हेरिव छन्नरुचः इति स्वशक्तिभिरेव छन्ना रुक्प्रकाशो यस्य तस्य अतस्त्वेवंप्रश्नादिनमेऽद्भुतम् ३७ इदं जगत्॥

सभाजयित्वा विधिवत्कृतासनपरिग्रहं बभाषे सूनृतैर्वाक्यैः श्रद्दधानर्प्यन्मुनिं ३४ अ
पिस्विदघलोकानां त्रयाणामकुतोभयम् ननु भूयान्भगवतो लोकान्पर्यटतो गुणः ३५
नहि तेऽविदितं किंचिल्लोकेष्वीश्वरकर्तृषु अथ पृच्छामहे युष्मान्पांडवानां चिकीर्षितं ३६
श्रीनारद उवाच दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः भूतेषु भूमंश्च
रतः स्वशक्तिभिर्वन्हेरिवच्छन्नरुचो न मेऽद्भुतं ३७ तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं
सृजतो नियच्छतः यद्विद्यमानात्मतयाऽवभासते तस्मै नमस्ते स्वविलक्षणात्मने ३८ ॥६९
जीवस्य यः संसरतो विमोक्षणं न जानतो नर्थवहाच्छरीरतः॥ ५ कथंभूतं असदेव यत्तव मायया
विद्यमानात्मतयाऽवभासते तज्जगत्सृजतः किंतु केवलं ते तुभ्यं नमनमेव शक्यमित्याह तस्मै नम इति कुतः स्वेन रूपे
ण सर्वतो विलक्षणात्मने अचिंत्यायेत्यर्थः ३८ नन्वेवंभूतस्य किं मायाचेष्टितैरित्यत आह जीवस्येति अविद्यातमसावृ
तत्वेन अनर्थप्रापकाच्छरीरात्संसरतस्तेनैव तमसा नस्माच्छरीराद्विमोक्षोपायमजानतः प्राज्वालयत् प्रदीपितवान्॥

रामः
६९

तंत्वात्वां यशः श्रवणादिभिर्जीवस्य मोक्षार्थमित्यर्थः ३९ आश्रावये श्रावयिष्यामि नरलोकविडंवनं ब्रह्मन्त्वां ब्रह्मन्निति पा
ठे पि हे ब्रह्मन् परमात्मन् नरलोकानुकारिणं त्वां श्रावयिष्यामीति ४० ४१ नचात्रैवानुमोदनं कार्यं किंतु नत्रागतव्यमि
त्याशयेनाह तस्मिन्निति ४२ तत्रागतानां सर्वेत्वद्दर्शनादिना पूता भविष्यंतीत्याह श्रवणादिति अंतेवसायिनः श्वपचा

लीलावतारैः स्वयशः प्रदीपकं प्राज्वालयत्त्वा तमहं प्रपद्ये ३९ अथाप्याश्रावये ब्रह्मन्न
रलोकविडंवनम्. राज्ञः पैतृष्वस्रेयस्य भक्तस्य च चिकीर्षितं ४० यक्ष्यति त्वां मखेंद्रेण राजसू
येन पांडवः पारमेष्ठ्यकामो नृपतिस्तद्भवाननुमोदतां ४१ तस्मिन्देव क्रतुवरे भवंतं वै सुरा
दयः दिदृक्षवः समेष्यंति राजानश्च यशस्विनः ४२ श्रवणात्कीर्तनाद्ध्यानात्पूयंतेऽ
तेवसायिनः तव ब्रह्ममयस्येश किमुतेक्षाऽभिमर्शिनः ४३ यस्यामलं दिवि यशः प्रथितं
रसायां भूमौ च ते भुवनमंगल दिग्वितानं मंदाकिनीति दिवि भोगवतीति चाधो गंगेति चेह च
रणांवु पुनाति विश्वं ४४ शुक उवाच तत्र तेष्वात्मपक्षेष्वऽगृह्णत्सु विजिगीषया॥ ९॥

अपि ब्रह्ममयस्य ब्रह्मघनमूर्तेः ईक्षा च अभिमर्शः स्पर्शनं च तौ विद्येते येषां ते ४३ कैमुत्यमतिशयेनाह यस्येति हे भु
वनानां मंगलरूप दिवि पाताले भूमौ च प्रथितं यस्य यशो विश्वं पुनातीति कथं प्रथितं दिग्वितानं दिग्भवनानां वितानवद
लंकरणं तथा चरणांवु च प्रथितं पुनाति कथं तत्प्रथितं दिवि मंदाकिनीति अधश्च भोगावतीति इह च भूमौ गंगेति तस्य
तवागमनात्सर्वं मंगलं पवित्रं च भविष्यतीति भावः ४४ तत्रैवं नारदेनोक्तेषु वर्त्तमानेषु

७० भा० द० आत्मीयपक्षेषु यादवेषु जरासंधस्य जिगीषया अगृह्णत्सु अमन्यमानेषु वाचः पेशैः पेशलवाग्भिरित्यर्थः ५५ चक्षुरिष्टे हेतुः मंत्रार्थानां मंत्रसाध्यानां तत्ववित् परिपाकविदिति ५६ ५७ ॥ इति दशमे टीकायां सप्ततितमोऽध्यायः ७० ॥ उ० ७०
अथैकसप्ततितमे उद्धवस्तु मंत्रतः इंद्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः १ राजसूयमिषं कृत्वा भीमदुर्योधना ॥

वाचः पेशैः स्मयन्भृत्यमुद्धवं प्राह केशवः ५५ श्रीभगवानुवाच त्वं हि नः परमं चक्षुः सुहृन्मंत्रार्थतत्ववित् अथात्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत् ५६ इत्युपामंत्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत् निदेशं शिरसा धाय उद्धवः प्रत्यभाषत ५७ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे भगवद्याने सप्ततितमोऽध्यायः ७० ॥ श्रीशुक उवाच इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः १ श्रीउद्धव उवाच यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया कार्यं पैतृष्वस्रेयस्य रक्षा च शरणैषिणां २ यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो अतो जरासुतजय उभयार्थो मतो मम ३ ॥ दिशुकलिमुत्पाद्य

तद्द्वारा भूभारमहरत्प्रभुः देवर्षेर्मतं राजसूयगमनं सभ्यानां मतं राजरक्षा कृष्णस्य तदुभयं १ यक्ष्यतः यागं करिष्यतः पैतृष्वस्रेयस्य पितृष्वसुः पुत्रस्य साचिव्यं साहाय्यं तच्च कार्यं तथा शरणार्थिनां राज्ञां रक्षा च कार्या २ तत्र प्रथमं राजसूयार्थं गंतव्यं ततो राजरक्षा कर्तव्येत्याह यष्टव्यमित्यष्टभिः अतः दिग्विजयहेतोः उभयार्थः राजसूयार्थः शरणागतरक्षणा

श्रीभागवत रामः ७०

४ अत्युत्सुकतयासद्य एवजरासंधंहंतुमिच्छतोयादवानालस्याह सवाइति अन्येषांततोवलिनामपियद्यपिसमव
लस्त्वंभीमस्तथापितंविनाभीमादेवतस्यमृत्युर्विहितइतिभावः ५ ननुस्ववलसाम्येपिसेनावलंतस्याधिकमितिचेद
त आह द्वैरथइतिद्वंद्वयुद्धेशतेनाक्षौहिणीभिर्युतोमागधोमानजेनव्यइत्यर्थः नन्वसौस्वसैन्यमेवयुद्धायनियुंजीतकु
तस्तेनद्वैरथमितितत्राह ब्रह्मण्यइति नप्रत्याख्यातिननिराकरोति ६ भिक्षेतद्वंद्वयुद्धंयाचतांतयाऽपिसमवलत्वात्स्व

अस्माकंचमहानर्थोह्येतेनैवभविष्यति यद्वाध्वतवगोविंदराज्ञोवद्धान्विमुंचतः ४ स
वैदुर्विषहोराजानागायुतसमोवले वलिनामपिचान्येषांभीमंसमवलंविना ५ द्वैरथेसः
तुजेतव्योमाशतनाक्षौहिणीयुतः ब्रह्मण्योऽभ्यर्थितोविप्रैर्नप्रत्याख्यातिकर्हिचित् ६ ब्रह्म
वेषधरोगत्वातंभिक्षेतवृकोदरः हनिष्यतिनसंदेहोद्वैरथेतवसन्निधौ ७ निमित्तंपरमी
शस्यविश्वसर्गनिरोधयोः हिरण्यगर्भःशर्वश्चकालस्यारूपिणस्तव ८ गायंतितेविशदं
कर्म्मगृहेषुदेव्योराज्ञांस्वशत्रुवधमात्मविमोक्षणंच॥

९ स्यमेवस्यादत आह तवसन्निधाविति ७॥
ननु अकिंचित्कुर्वतोममसन्निधानात् किंस्यादत आह निमित्तमिति अयमर्थः यथातवारूपस्यकालात्मनोविश्वस
र्गेनिमित्तंकेवलंहिरण्यगर्भस्तथाशर्वश्चतन्निरोधेनथाऽत्रत्वमेवसंनिधिमात्रेणहंताभीमोनिमित्तमात्रमिति ८ अ
नेनैनोपायेनत्वयासशीघ्रंहंतव्यइत्याशयेनाह गायंतीति जरासंधघ्नतानांराज्ञांदेव्यःपत्न्यःतेविशदंकर्मस्वगृहेषुवा
लकलालनादौगायंतिकिंतत्कर्म्मस्वशत्रोर्जरासंधस्यवधंआत्मनांपतीनांविमोक्षणंचवत्समारोदीःकरुणार्णवःश्री

७१ भा०द० उ० ७१

हृष्मएवंकरिष्यतीति अत्रदृष्टांतः गोप्यश्चेत्यादयः यथागोप्यः शंखचूडवधंस्वमोक्षंचगायंति अवतारांतरगतंचकुंजरपतेर्नक्राद्‌जनकात्मजायाश्चरावणात्‌पित्रोश्चकंसगृहात्‌मोक्षणं अतएवंभूतानांनासांकृपयात्वयानथैवकर्तव्यमिति भावः ९ किंचजरासंधवधइति भूर्य्यर्थायेति ततःशिशुपालवधादयोपिसुखसाध्याभविष्यंतीतिभावः एतच्चसर्वं

गोप्यश्चकुंजरपतेर्जनकात्मजायाःपित्रोश्चलब्धशरणामुनयोवयंच ९ जरासंधवधः कृष्णभूर्य्यर्थायोपकल्पते प्रायःपाकविपाकेनतवचाभिमतःक्रतुः १० श्रीशुकउवाच॥ इत्युद्धववचोराजन्‌सर्वतोभद्रमच्युतं देवर्षिर्य्यदुवृद्धाश्चकृष्णश्चप्रत्यपूजयन्‌ ११ अथादिश्यप्रयाणायभगवान्‌देवकीसुतः भृत्यान्दारुकजैत्रादीननुज्ञाप्यगुरून्विभुः १२ निर्गमय्याऽवरोधान्स्वान्ससुतान्सपरिच्छदान्‌ संकर्षणमनुज्ञाप्ययदुराजंचशत्रुहन्‌ सूतोपनीतंस्वरथमारुहद्गरुडध्वजं १३ ततोरथद्विपभटसादिनायकैःकरालयापरिवृतआत्मसेनया मृदंगभेर्यानकशंखगोमुखैःप्रघोषघोषितककुभोनिराक्रमत्‌ १४॥

भविष्यत्येवेतिसंभावयन्नाह प्रायइतिपच्यतइतिपाकःकर्मतस्यविपाकःफलंतेनराज्ञांपुण्यविपाकेनजरासंधादीनांपापविपाकेनेतिपाणंतरेतस्यजरासंधस्यपापविपाकेनेतितेनायंक्रतुस्तवाभिप्रेतःतत्रगतेत्वयिसर्वंभविष्यतीत्यर्थः १० अच्युतंउपपन्नाहृद्यंयदुवृद्धाइतिवदन्ननिरुद्धादयस्तथानापूजयन्निति सूचितं ११ अनुज्ञाप्य अनुज्ञांप्रार्थ्यगुरून्वसुदेवादीन्‌ १२ अवरोधान्स्वान्दारान्निर्गमय्यप्रयाणंकारयित्वा १३ भटाःपदातयःसादिनःअश्वारोहाःरथादिनायकैःकरालया तीव्रया आत्मसेनयापरिवृतोनिराक्रमत निरगात्‌ कुतः सकाशात्‌ मृदंगादिभिर्वाद्यैःप्रघोषेणघोषितायाःककुभः १४॥

भा ७१

नृवाजीति नृवाजिभिः नरयानैः अश्वैश्च कांचनशिबिकाभिश्च अच्युतं पतिमनुययुः सुव्रताः पतिव्रताः वराण्यंब
रादीनि यासां ताः १५ नरोष्ट्रादिभिर्यानैः अश्वतरीगर्द्दभ्यां मश्वाज्जाता अनः शकटं करेणुर्गजी परिजनयोषितो वारयो
षित अश्च कटकुटयः उशीरादितृणनिर्मितगृहाः कंबलांबरादयश्चोपस्कराः कुड्यादिरूपा यासां ताः अधियुज्य बलीव

नृवाजिकांचनशिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता ययुः वरांबराभरणविलेप
नस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः १५ नरोष्ट्रगोमहिषखराश्वतर्यनः करेणुभिः
परिजनवारयोषितः स्वलंकृताः कटकुटिकंबलांबराद्युपस्करा ययुरधियुज्य सर्वतः १६
बलं बृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्म्मभिः दिवांऽशुभिस्तुमुलरवं बभौ रवे
र्यथार्णवः क्षुभिततिमिंगिलोर्मिभिः १७ अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृ
दि विदधद्विहायसा निशम्य तद्व्यवसितमाहृतार्हणो मुकुंदसंदर्शननिर्वृतेंद्रियः १८
राजदूतमुवाचेदं भगवान् प्रीणयन् गिरा माभैष्ट दूत भद्रं वो घातयिष्यामि मागधं १९ इ
त्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् तेऽपि संदर्शनं शौरेः प्रत्यैक्षन् यन्मुमुक्षवः ॥२०॥

र्दादिषु तानुपस्कारान् दृढं संनह्य १६ रवेरंशुभिश्च तद्बलं दिवा बभौ कथंभूतं तुमुलरवं आकुलस्वनं क्षुभितैः
तिमिंगिलैः ऊर्मिभिश्च १७ मुनिर्नारदो विहायसा ययाविति शेषः १८ माभैष्टेति बहुत्वं राजाभिप्रायेण १९
॥प्रत्यैक्षन् प्रत्यैक्षंत यद्यस्मान्मुमुक्षवः॥२०॥ ६॥ ६॥

आनर्त्तादयो मार्गस्थदेशाः तान्तीर्त्वा अतिक्रम्य विनशनं कुरुक्षेत्रं अतीयाय अतिक्रम्य ययौ २१ शक्रप्रस्थं इंद्रप्रस्थं

आनर्त्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः गिरीन्नदीरतीयाय पुरग्रामव्रजाकरान् २१ ततो दृषद्वतीं तीर्त्वा मुकुंदोथ सरस्वतीं पंचालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् २२ तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणां अजातशत्रुर्निरगात्सोपाध्यायः सुहृद्वृतः २३ ॥ गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा अभ्ययात्स हृषीकेशं प्राणाः प्राणमिवादृतः २४ दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पांडवः चिराद्दृष्टं प्रियतमं सस्वजेऽथ पुनः पुनः २५ दोर्भ्यां परिष्वज्य रमामलालयं मुकुंदगात्रं नृपतिर्हताशुभः लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः २६ तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन् प्रेमजवाकुलेंद्रियः यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतं २७ अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथार्हतः २८ मानितो मानयामास कुरुसृंजयकैकयान् सूतमागधगंधर्वान्वंदिनश्चोपमंत्रिणः २९ ॥

॥ २२ २३ प्राणा इंद्रियाणि प्राणं मुख्यं प्राणमिव २४ सस्वजे परिरेभे २५ रमायाः अमलं निर्दोषमालयं विस्मृतो लोकविभ्रमो लोकव्यवहारो येन सः २६

३० ३१ चित्रध्वजादिभिर्विराजमानं ३२ प्रतिसद्म उद्दीप्तैर्द्दीपैर्बलिभिः पुष्पादिप्रकारैश्च जुष्टं जालेभ्यो गवाक्षेभ्यो नि
र्गतैर्धूपैः रुचिरं विलसंत्यः पताका यस्मिन् तत् मूर्द्धन्याः मूर्द्धि भवाः हेमकलशा येषां तैः रजतमयानि रूप्यमयानि उरू

मृदंगशंखपटहवीणापणवगोमुखैः ब्राह्मणाश्चारविंदाक्षं तुष्टुवुर्न्ननृतुर्ज्जगुः ३० एवं सुहृद्भिः पर्य्यस्तः पुण्यश्लोकशिखामणिः संस्तूयमानो भगवान् विवेशालंकृतं पुरं ३१ संसिक्तवर्त्मकरिणां मदगंधतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुंभैः मृष्टात्मभिर्न्नवदुकूलविभूषणस्रग्गंधैर्नृभिर्युवतिभिश्च विराजमानं ३२ उद्दीप्तदीपबलिभिः प्रतिसद्मजालनिर्यातधूपरुचिरं विलसत्पताकं मूर्द्धन्यहेमकलशैः रजतोरुशृंगैर्ज्जुष्टं ददर्श भवनैः कुरुराजधाम ३३ प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबंधाः॥ सद्यो विसृज्य गृहकर्मपतींश्च तल्पे द्रष्टुं ययुर्युवतयः स्म नरेंद्रमार्गे ३४ तस्मिन्सुसंकुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः नार्य्यो विकीर्य्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुत्स्मयवीक्षितेन॥ ३५॥

णि स्थूलानि शृंगाणि कलशाधस्तनभू
मिका येषां तैर्भवनैर्जुष्टं कुरुराजस्य धाम पुरं ददर्श ३३ नराणां लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं
विषयं किं पुनर्नारीणामित्यर्थः ३४ मुहुः स्वागतं तत्प्रश्नादिकं प्रियं उत्स्मयवीक्षितेनैव विदधुः ३५॥ ८ ॥

७१
भा॰द॰
उ॰
७३

उडुपसहाः चंद्रसहाश्चंद्रसहचराः इत्यर्थः अभूमिः किं पुण्यमकारि ३६ श्रेण्यः एकशिल्पोपजीविनां संघास्ते षामुख्याश्च ३७ अभ्युपेतः अभिगमनेन सत्कृतः ३८ सस्नुषा द्रौपदीसहिता ३९ कृतं प्रकारविशेषं प्रमोदेनो

ऊचुः स्त्रियः पथि निरीक्ष्य मुकुंदपत्नीस्तारा यथोडुपसहाः किमकार्यसौ भूमिः यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ३६ तत्र तत्रोपसंगम्य पौरा मंगलपाणयः चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः ३७ अंतःपुरजनैः प्रीत्या मुकुंदः फुल्ललोचनैः ससंभ्रमैरभ्युपेतः प्राविशद्राजमंदिरं ३८ पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरं प्रीतात्मोत्थाय पर्यंकात्सस्नुषा परिषस्वजे ३९ गोविंदं गृहमानीय देवदेवेशमादृतः पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः ४० पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनं स्वयं च कृष्णया राजन्भगिन्या चाभिवंदितः ४१ श्वश्र्वा संचोदिता कृष्णा कृष्णपत्नीश्च सर्वशः आनर्च रुक्मिणीं सत्यां भद्रां जांबवतीं तथा ४२ कालिंदीं मित्रविंदां च शैब्यां नाग्नजितीं सतीं अन्याश्चाभ्यागता यास्तु वासःस्रङ्मंडनादिभिः ४३ सुखं निवासयामास धर्मराजो जनार्दनं॥

उपहतोऽभिभूतः ४० गुरुस्त्रीणां च कृष्णया च द्रौपद्या भगिन्या सुभद्रया ४१ आनर्च अर्चितवती ४२ अन्याश्च याः कृष्णपत्न्योऽभ्यागताः ता अपि ४३ प्रत्यहं नवं नवं यथा भवति तथा सुखं॥

निवासयामास ४४ कथंभूतंयःप्रेम्णा नित्यंफाल्गुनेनसंयुतः अतएवतस्यसहायेनसनाथेनखांडवेनवह्निंतर्पयि
त्वातत्रचमयंमोचयित्वातंमयंप्रयुज्ययुधिष्ठिरायदिव्यासभाकृतातंजनार्दनंअनेनराज्ञः कृष्णोपकारानुस्मरणं दि
व्यत्वात्सभायायथामनोरथंसर्वावकाशसंपादनंचदर्शितं ४५ ४६ ॥इतिदशमेटीकायामेकसप्ततितमोऽ

ससैन्यंसानुगामात्यंसभार्यंचनवंनवं ४४ तर्पयित्वाखांडवेनवह्निंफाल्गुनसंयुतः मो
चयित्वामयंयेनराज्ञेदिव्यासभाकृता ४५ उवासकतिचिन्मासान्राज्ञःप्रियचिकीर्षया
विहरन्रथमारुह्यफाल्गुनेनभटैर्वृतः ४६ ॥ ॥इतिश्रीभागवतेमहापुराणेदशमस्कं
धेउत्तरार्द्धेइंद्रप्रस्थागमनेएकसप्ततितमोऽध्यायः ७१ श्रीशुकउवाच एकदातुसभाम
ध्यआस्थितोमुनिभिर्वृतः ब्राह्मणैःक्षत्रियैर्वैश्यैर्भ्रातृभिश्चयुधिष्ठिरः १ आचार्यैःकु
लवृद्धैश्चज्ञातिसंबंधिबांधवैः शृण्वतामेवचैतेषामाभाष्येदमुवाचह २ युधिष्ठिरउवाच
क्रतुराजेनगोविंदराजसूयेनपावनीः यक्ष्येविभूतीर्भवतस्तत्संपादयनःप्रभो ३ त्वत्पा
दुकेअविरतंपरियेचरंतिध्यायंत्यभद्रनशनेशुचयोगृणंति॥

ऽध्यायः ७१॥ ततोद्विसप्ततितमे
राज्ञाकार्य्येनिवेदिते दुर्ज्जेयंमागधंबुध्वाभीमेनाघातयद्धरिः १ आस्थितआसनमितिशेषः १ शृण्वतामेवेति यत्र
तत्रःहस्मःकरोतिनतदन्यः कश्चिदपिकर्त्तुंनसमर्थइतिनिश्चित्यसर्वानेवताननादृत्यकृष्णमुवाचेत्यर्थः आभाष्यभो
भोकृष्णभक्तवत्सलेत्येवंसंबोध्य २ विभूतीः अंशान् ३ एषचक्रवर्तिनांमनोरथःकथंत्वयाक्रियतइतिचेदतआह॥

७२
भा०द० न्वनुपादकेति पर्य्येचरंतीतियच्छब्दव्यवधानमार्षंयेपरिचरन्तिदेहेनध्यायंतिमनसा अभद्रस्यनशनेनाशकेगृणं।
उ० तिवाचा तेभवस्यापवर्गमोक्षंविंदंतियदि आशासतेतर्हि आशिषोऽपितएवविंदंतिनान्येचक्रवर्तिनोऽपि ४ भग
७५ वतोभक्तपक्षपातमाविष्कारयन्नाह तद्वेवदेवेतितत्तस्मात्पश्यतुसाक्षात् एवंनिश्चितेऽपियेकर्मादिप्रधानाः केचित्
कुरुसृंजयाः भगवद्भक्तिंनहिवहुमन्यंतेतेषांमोहनिवृत्तयेयेत्वांभजंतियदिवानभजंतितेषामुभयेषांनिष्ठांस्थितिं

विंदंतितिकमलनाभभवापवर्गमाशासतेयदितआशिषईशनान्ये ४ तद्वेवदेवभवन
च्चरणारविंदसेवाऽनुभावमिहपश्यतुलोकएषः येत्वांभजंतिनभजंत्युतवोभयेषांनि
ष्ठांप्रदर्शयविभोकुरुसृंजयानां ५ नब्रह्मणःस्वपरभेदमतिस्तवस्यात्सर्वात्मनःसम
दृशःस्वसुखानुभूतेः संसेवतांसुरतरोरिवतेप्रसादःसेवानुरूपमुदयोनविपर्य्ययोऽत्र
६ श्रीभगवानुवाच सम्यग्व्यवसितंराजन्भवताशत्रुकर्शनं कल्याणीयेनतेकीर्तिर्लोका
ननुभविष्यति ७ ऋषीणांपितृदेवानांसुहृदामपिनःप्रभो सर्वेषामपिभूतानामीप्सितःक्र
तुराडयं ८॥

प्रदर्शय ५ ननुरागादिरहितेमयिकथमिदंवैषम्यंस्यात्तत्राह नेति स्वःपरइतिभेदमतिस्तवनस्यात्देवकु
तःब्रह्मणःनिरुपाधेः किंच सर्वस्यात्मनःअतःसमदृशः किंच स्वसुखानुभूतेः अतोरागाद्यभावादितिभावः तथाऽपिसंसेव
मानानामेवत्वत्प्रसादोनान्येषां तत्रापिसेवाऽनुरूपमुदयःफलंनत्वत्रविपर्ययोऽन्यथाभावः यथाकल्पद्रुमस्यरागादि
राहित्येऽपिसेवकेष्वेवफलजनकत्वंनान्येषु ६ सत्यंमद्भक्तानामेवकैवल्यादिनान्येषामित्यनुमोदमानआहसम्यगिति

किमत्र मयाऽन्येन वा संपादनीयं तव तु मुकर एव राजसूयइत्याह विजित्येति जगतीं सर्वां पृथ्वीं संभारान् यज्ञोपस्करान् संभृ
त्य संपाद्य आहरस्व अनुतिष्ठेत्यर्थः ८ ननु नृपतिविजयादिकं यं शक्यं स्यादत आह एतइति किंच आत्मवता विजितें
द्रियेण तेन त्वया अहं च जितो स्मि वशीकृतो स्मि अकृतात्मभिः अजितेंद्रियैः १० आस्तां तावद्देवं भूतस्य न वपरैरभिभवः शं॥

विजित्य नृपतीन् सर्वान् कृत्वा च जगतीं वशे संभृत्य सर्वसंभारानाहरस्व महाक्रतुं ९ ए
ते ते भ्रातरो राजन् लोकपालांशसंभवाः जितोऽस्म्यात्मवता तेऽहं दुर्ज्जयो योऽकृतात्मभिः
१० न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया विभूतिभिर्वाऽभिभवेद्देवोपि किमु पार्थिवः
११ श्रीशुक उवाच निशम्य भगवद्गीतं प्रीतः फुल्लमुखांबुजः भ्रातॄन् दिग्विजयेऽयुंक्त वि
ष्णुतेजोपबृंहितान् १२ सहदेवं दक्षिणस्यामादिशत्सह सृंजयैः दिशि प्रतीच्यां नकुलमु
दीच्यां सव्यसाचिनं प्राच्यां वृकोदरं मत्स्यैः केकयैः सह मद्रकैः १३ ते विजित्य नृपान् वीरा आ
जह्रुर्दिग्भ्य ओजसा अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते १४ श्रुत्वाऽजितं जरासंधं नृ
पतेर्ध्यायतो हरिः आहोपायं तमेवाद्य उद्धवो यमुवाच ह १५॥

भवितुं प्रभवतीत्याह न कश्चिदिति तेजसा प्रभावेन विभूतिभिः सैन्यादिसामग्रीभिः ११ अयुंक्त नियुक्तवान् विष्णोस्तेजसा
उपबृंहितान् संवर्द्धितान् तेजोपबृंहितानिति संधिरार्षः १२ नकुलादीनां मत्स्यादिभिः सहायैर्यथासंख्येन संबंधः सहदेवं
सृंजयैः सह भीमं मत्स्यैः नकुलं केकयैः सव्यसाचिनं मद्रकैरिति १३ कथंभूताय यक्ष्यते यागं करिष्यते १४ आद्यो हरिः श्रीकृ

७२
भा॰द॰
उ॰
७५

ब्रह्मलिंगधराः ब्राह्मणलिंगधारिणः यतः यत्र बृहद्रथसुतो जरासंधः १६ गृहेषु वर्त्तमानं समयाचेरन् सम्यक् अयाचंते त्यर्थः १७ १८ न न्विदं कामयामह इति विशेषो निर्दिष्टस्तं अन्यथा यस्य पुत्रादेर्वियोगो दुःसहः सकथं देयः तथा राज मंडनं किरीटाद्यदेयं यत्तन्निष्ठुभ्मः कथं देयं तथा ऽतिरम्यं रत्नाभरणादिपुत्रादियोग्यं कथं परस्मै देयमिति चेदत आहुः॥ किं दुर्मर्षमित्यादि अयदृष्टांतत्वेनार्थांतरमाहुः किमकार्यमिति यथा असाधूनामकार्यं नास्ति तथा तितिक्षूणां दुर्मर्षं दुः

भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिंगधरास्त्रयः जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः १६ ते॥ गत्वा तिथ्यवेलायां गृहेषु गृहमेधिनं ब्रह्मण्यं समयाचेरन् राजन्या ब्रह्मलिंगिनः १७ राज न्विद्ध्यतिथीन् प्राप्तानर्थिनो दूरमागतान् तन्नः प्रयच्छ भद्रं ते यद्वयं कामयामहे १८ किं दु र्मर्षं तितिक्षूणां किमकार्यमसाधुभिः किं न देयं वदान्यानां कः परः समदर्शिनां १९ योऽनित्ये न शरीरेण सतां गेयं यशो ध्रुवं नाचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः २० हरिश्चंद्रो रं तिदेव उंछवृत्तिः शिबिर्बलिः॥ सहं नास्ति वदान्यानामत्युदाराणामदेयं नास्ति समदर्शिनां परश्च नास्ति अ तः किं विशेषनिर्देशेनेत्यर्थः १९ किंच अर्थिने धीरेण मुद्गलादिवत् प्राणा अपि न वंचनीया इत्याशयेनाहुः योऽनि त्येनेति नाचिनोति न संपादयति स वाच्यः स निंद्यः २० विश्वामित्रार्थानृण्याय हरिश्चंद्रो भार्यात्मजादि सर्वं विक्रीय स्वयं। चांडालतां प्राप्तोऽपि अनिर्विण्णः सहायो ध्यावासिभिर्जनैः स्वर्गं गतः रंतिदेवः सकुटुंबोऽष्टचत्वारिंशदहान्यलब्धोदकोऽपि कथंचिल्लब्धान्नोदकाद्यर्थिभ्यो दत्वा ब्रह्मलोकं गतः उंछवृत्तिर्मुद्गलः षण्मासं सीदत्कुटुंबोप्यातिथ्यादानेन ब्रह्मलोकं गतः

राम
७५

शिविः शरणागतकपोतरक्षणाय स्वमांसं श्येनाय दत्वा दिवं गतः बलिः सर्वस्वं ब्राह्मणवेषधारिणे हरये दत्वा तमेवात्मसा
च्चकार कपोतश्चातिथये व्याधाय कपोत्या सहात्ममांसं दत्वा विमानेन दिवं गतः व्याधस्तयोः सत्वं वीक्ष्य स्वयमतिनिर्विण्णो म
हाप्रस्थाने वनाग्निदग्धदेहो निष्कल्मषो दिवमारुरोह एवमन्ये च बहवोऽध्रुवेण शरीरेण ध्रुवं लोकं गता इति २१ ज्याह

व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः २१ श्रीशुक उवाच स्वरैराकृतिभिस्तांस्तु प्रकोष्ठै
र्ज्याहतैरपि राजन्यबंधून्विज्ञाय दृष्टपूर्वानचिंतयत् २२ राजन्यबंधवो ह्येते ब्रह्मलिंगानि
बिभ्रति ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजं २३ बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वक
ल्मषा ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना २४ श्रियं जिहीर्षतेंद्रस्य विष्णवे द्विजरू
पिणे जानन्नपि महीं प्रादाद्वार्यमाणोपि दैत्यराट् २५ जीवता ब्राह्मणार्थाय को न्वर्थः क्षत्र
बंधुना देहेन पतमानेन नेहता विपुलं यशः २६ इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान्
हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः २७ ॥ ॥ तैः ज्याघातकिणांकितैः भुजैः दृष्टपूर्वान्द्रौ
पदीस्वयंवरादिषु २२ २३ इंद्रस्य श्रियं जिहीर्षता विप्रव्याजेन विष्णुना भ्रंशितस्यापि बलेर्नु अहो नेति पाठे।
न श्रूयते किं अपि तु श्रूयत इति २४ तं श्लाघते विष्णव इति शुक्रेण वार्यमाणोपि अत एव विष्णुरिति जानन्न
पि २५ पतमानेन पतता क्षत्रबंधुना देहेन ब्राह्मणार्थाय विपुलं यशो नेहता नेहमानेन असंपादयता कोन्व
र्थः न कोपीत्यर्थः २६ एवं निश्चित्य प्राह हे विप्रा इति २७

२८ राजन्यतामेवप्रपंचयतिअसाविति २९ ३० यतोमद्भयात्समुद्रंशरणंगतः ३१ वयसाप्यतुल्यः नातिसत्त्वो
नातिबलश्चनचदेहेनमयासमः अतोऽर्जुनोयोद्धानभवेत् भीमस्तुभवेत्सोममतुल्यबलः ३२ प्रादायदत्वेत्यर्थः ३३

श्रीभगवानुवाच युद्धंनोदेहिराजेंद्रद्वंद्वशोयदिमन्यसे युद्धार्थिनोवयंप्राप्ताराजन्यानान्न
काङ्क्षिणः २८ असौवृकोदरःपार्थस्तस्यभ्राताऽर्जुनोह्ययंअनयोर्मातुलेयंमांकृष्णंजानी
हितेरिपुं २९ एवमावेदितोराजाजहासोच्चैःस्ममागधः आहचामर्षितोमंदायुद्धंतर्हिद
दामिवः ३० नत्वयाभीरुणायोत्स्येयुधिविक्लवचेतसा मथुरांस्वपुरींत्यक्त्वासमुद्रंशरणंग
तः ३१ अयंतुवयसातुल्योनातिसत्वोनमेसमः अर्जुनोनभवेद्योद्धाभीमस्तुल्यबलोमम
३२ इत्युक्त्वाभीमसेनायप्रादायमहतींगदां द्वितीयांस्वयमादायनिर्जगामपुराद्बहिः ३३
ततःसमेखलेवीरौसंयुक्ताविंतरेतरौ जघ्नतुर्वज्रकल्पाभ्यांगदाभ्यांरणदुर्मदौ ३४ मंड
लानिविचित्राणिसव्यंदक्षिणमेवच चरतोःशुशुभेयुद्धंनटयोरिवरंगिणोः ३५ ततश्चट
चटाशब्दोवज्रनिष्पेषसंनिभः गदयोःक्षिप्तयोराजन्दंतयोरिवदंतिनोः ३६ ॥

समेखलेयुद्धांगणे ३४ मंडलानिगदायुद्धगतिभेदान्सव्यंदक्षिणंचयथाभवतितथारंगिणोःरंगगतयोःनटयोरिवो
तिनिर्भयत्वेनोपमा ३५ चटचटेतिगदयोःपरस्पराघातशब्दानुकरणंवज्रस्यनिष्पेषःपातःतत्सदृशः युध्यतोर्दंतिनोर्दंतौ

असकृद्या दीनुपेत्यदीप्तोमन्युर्ययोस्तयोर्द्विरदयोर्गजयोरर्कशाखाभ्यांसमंयुद्ध्यतो स्तेयथाचूर्णीभवतस्तद्वत् ३७
अपिष्टांचूर्णींचक्रतुः ३८ शिक्षा अभ्यासः बलंसत्वं ओजः प्रभावः समानिनानिययोस्तयोः ३९ ४० ४१ जन्मश

तेवैगदेभुजजवेननिपात्यमाने अन्योन्यतोंसकटिपादकरोरुजत्रू न्चूर्णी बभूवतुरुपेत्य
यथार्कशाखेसंयुद्ध्यतोर्द्विरदयोरिवदीप्तमन्व्योः ३७ इत्यंतयोः प्रहतयोर्गदयोर्नृवीरौ
क्रुद्धौस्वमुष्टिभिरयःस्पर्शैरपिष्टां शब्दस्तयोःप्रहरतोरिभयोरिवासीन्निर्घातवज्रपरुष
स्तलताडनोत्थः ३८ तयोरेवंप्रहरतोःसमशिक्षाबलौजसोः निर्विशेषमभूद्युद्धमक्षीण
जवयोर्नृप ३९ एवंतयोर्महाराजयुद्ध्यतोःसप्तविंशतिः दिनानिनिरगंस्तत्रसुहृद्वन्निशि
तिष्ठतोः ४० एकदामातुलेयंवैप्राहराजन्वृकोदरः नशक्तोहंजरासंधंनिर्ज्जेतुंयुधिमाध
व ४१ शत्रोर्जन्ममृतीविद्वान्जीवितंचजराकृतं पार्थमाप्याययन्स्वेनतेजसाऽचिंतयद्धरिः
४२ संचिंत्यारिवधोपायंभीमस्यामोघदर्शनः दर्शयामासविटपंपाटयन्निवसंज्ञया ४३
तद्विज्ञायमहासत्वोभीमःप्रहरतांवरः गृहीत्वापादयोःशत्रुंपातयामासभूतले ४४॥ १॥

न्मरूपंमृतिःपुनःशकलीभावः तेविद्वान्जानन्जरानामराक्षसीनत्कृतं अचिंतयन् कथमसौशकलीभवेदिति ४२
विटपंशाखाकारेणविटपंगृहीत्वाहरिःभीमस्ययथाऽहंविटपंपाटयामितथात्वमेनंपाटयेतिसंज्ञयासंकेतेन अरिवधोपा

७२
भा०द०
उ०
७७

४५ एकैकःपादादिर्यस्तेशकले ४६ ४७ दुर्हन्तत्वादसौहतः नतुराज्याभिलाषेणेतिदर्शयन्नाहसहदेवमिति ४८
॥इतिदशमेटीकायांद्विसप्ततितमोऽध्यायः ७२॥ ततस्त्रिसप्ततितमेमोचयित्वानृपान् हरिः राजार्हभोगैः स्वान्देशा

एकंपादंपदाक्रम्यदोर्भ्यामन्यंप्रगृह्यसः गुदतःपाटयामासशाखामिवमहागजः ४५
एकपादोरुवृषणकटिपृष्ठस्तनांसके एकबाहुक्षिभ्रूकर्णेशकलेददृशुःप्रजाः ४६ हा
हाकारोमहानासीन्निहतेमगधेश्वरे पूजयामासतुर्भीमंपरिरभ्यजयाच्युतौ ४७ सहदे
वंतत्तनयंभगवान्भूतभावनः अभ्यषिंचदमेयात्मामगधानांपतिंप्रभुः मोचयामास
राजन्यान्संरुद्धान्मागधेनये ४८॥ ॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेजरासं
धवधोनामद्विसप्ततितमोऽध्यायः ७२॥ श्रीशुकउवाच अयुतेद्वेशतान्यष्टौलीलयायुधि
निर्जिताः तेनिर्गतागिरिद्रोण्यांमलिनामलवाससः १ क्षुत्क्षामाःशुष्कवदनाःसंरोध
परिकर्शिताः ददृशुस्तेघनश्यामंपीतकौशेयवाससं २ श्रीवत्सांकंचतुर्बाहुंपद्मगर्भा
रुणेक्षणं चारुप्रसन्नवदनस्फुरन्मकरकुंडलं ३॥ ऍनप्रस्थाप्यपुनरागमत् १ अतुन्नद्धजरासं
धवधानद्धद्धभूपतीन् विमोह्यकृपयाकृष्णोनिजरूपमदर्शयत् २ येनिर्ज्जिताजरासंधेननिरुद्धाश्चगिरिद्रोण्यांतेत
तोनिर्गताःसंतोघनश्यामंददृशुरित्युत्तरेणान्वयः १ क्षुधाक्षामाःकृशाःसंरोधेनपरिकर्शिताःक्लेशिताः २। ३॥

एम्ः
७७

४ भ्राजत् भ्राजमानो वरमणिः कौस्तुभो यया सा ग्रीवा यस्य तं निवीतं कंठलंबितया व्याप्तं पिबंत इवेत्यादीनां हरेः पादयोः प्रणेमुरित्युत्तरेणान्वयः ५ रंभंतः परिरंभमाणा इव ६ श्रीकृष्णदर्शनाल्हादेन ध्वस्तः संरोधनक्लमो येषां ते ७ संरोधाद्व्यथितानस्मान् घोरायाः संसृतेरपि पाहि मोचय ८ ननु भवंतो जरासंधासूयाविष्टा इहामुत्र भोगासक्ताश्च कथं

पद्महस्तं गदाशंखरथांगैरुपलक्षितं किरीटहारकटककटिसूत्रांगदाचितं ४ भ्राजद्वरमणिग्रीवं निवीतं वनमालया पिबंतइव चक्षुर्भ्यां लिहंतइव जिह्वया ५ जिघ्रंतइव नासाभ्यां रंभंतइव बाहुभिः प्रणेमुर्हतपाप्मानो मूर्द्धभिः पादयोर्हरेः ६ कृष्णसंदर्शनाल्हादध्वस्तसंरोधनक्लमाः प्रशशंसुर्हृषीकेशं गीर्भिः प्रांजलयो नृपाः ७ राजान ऊचुः नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय प्रपन्नान्पाहि नः कृष्ण निर्विण्णान् घोरसंसृतेः ८ नैनं नाथानुसूयामो मागधं मधुसूदन अनुग्रहो यद्भवतो राज्ञां राज्यच्युतिर्विभो ९ ॥११॥ राज्यैश्वर्यमदोन्नद्धो न श्रेयो विंदते नृपः त्वन्मायामोहितो नित्यान्मन्यते संपदोऽचलाः १० मृगतृष्णां यथा बाला मन्यंत उदकाशयं ॥ ११ ॥

संसृतेर्मोचनीया इत्याशंक्य संप्रति न वयं तथाभूता इत्याहुः नैनमित्यष्टभिः हे नाथ वयं एनं नानुसूयामः अयं तु दोषदृष्ट्या न पश्यामः कुत इत्यत आहुः अनुग्रह इति यत् यस्मात् ९ एतदेव व्यतिरेकेणोपपादयंति राज्यैश्वर्येति राज्यैश्वर्याभ्यां मदस्तेनोन्नद्ध उच्छृंखलो नित्या अचलाश्च संपदो मन्यते यद्वा अनित्याः सत्यः अचलाः शाश्वतीर्मन्यते १० किंच अवस्तु सद्वस्तुतया पश्यंतीत्याहुः मृगतृष्णामिति ॥

क १

७३
भा॰द॰
उ॰
७८

वैकारिकीं सृष्ट्यादिविकारापन्नां अयुक्ता अविवेकिनः ११ राज्यस्य प्राप्तिवियोगयोरनर्थत्वेऽप्यर्थावहत्वमस्माभिस्त्वद्दृष्टमित्या हुः वयमिति द्वाभ्यां श्रीमदेन नष्टा दृष्टिर्येषां ते अस्याः पृथिव्याः इतरेतरस्पृधः परस्परं स्पर्द्धमानाः पुरः पुरतः त्वां मृ त्युमविगणय्य पुरा ये दुर्मदा वयं १२ हे ईश स्मत एव वयं अद्य विनष्टदर्पाः सन्तश्चरणौ स्मरामः स्मरन्तु मा शास्महे कथं भू ताः भवतस्तत्त्वामूर्त्या कालेन श्रियो विचालिता विभ्रंशिताः अतो राज्यच्युतिर्भवदनुग्रह एवेत्यर्थः १३ अत एव अथो

एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ११ वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयाऽस्या इ तरेतरस्पृधः घ्नंतः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वाऽविगणय्य दुर्मदाः १२ त एव कृष्णाऽद्य गभीररंहसा दुरंतवीर्येण विचालिताः श्रियः कालेन तन्वा भवतोऽनुकंपा या विनष्टदर्पाश्चरणौ स्मरामते १३ अथो न राज्यं मृगतृष्णिरूपितं देहेन शश्वत्पतता रु जां भुवा उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनं १४ तन्नः समादि शोपायं येन ते चरणाब्जयोः स्मृतिर्यथा न विरमेदपि संसरतामिह १५॥ अनंतरं मृगतृष्णिभि

स्तद्वद्राज्यं शश्वत्पतता प्रतिक्षणं क्षीयमाणेन तथा रुजां रोगाणां भुवा जन्मक्षेत्रेण देहेन उपासितव्यं सेव्यं न स्पृहयाम हे प्रेत्य परलोके च क्रियाफलं स्वर्गादिभोगं उपासितव्यं न स्पृहयामहे कथंभूतं कर्णयोः रोचनं रुचिजनकमात्रं न तत्र गनस्य स्पर्द्धाद्यनपगमेन सुखाभावादित्यर्थः १० यद्येवं भूता यूयं तर्हि मम चरणौ स्मरत ततो अनायासेन मुक्तिर्भविष्यतीति किं मदपेक्षयेति चेदत आहुः तन्न इति त्वच्चरणस्मृतिरपि त्वत्प्रसादफलमेवेत्यर्थः॥ १५ ॥ १५॥ ॥ २॥

एम
७८

१६ श्लक्ष्णयामंजुलया १७ यथाभवद्भिराशंसितंतथावाढंनिश्चितंवोमयिभक्तिर्जायतेर्ज्जायतामित्यर्थः १८ हे
भूपाः मद्भजनमेवकर्त्तव्यमितिभवद्भिर्व्यवसितंसंकल्पितंदिष्ट्याभद्रंभवद्भिरुक्तंचसत्यमेवेत्याहभवंतइति श्रीश्चऐश्व
र्यंचताभ्यांमदस्तेनोन्नाहंउद्बंधनंस्वैराचारमित्यर्थः पश्यपश्यामि १९ तदेवाहहैहयइति हैहयः कार्त्तवीर्यश्चक्रवर्ती

कृष्णायवासुदेवायहरयेपरमात्मने प्रणतक्लेशनाशायगोविंदायननोनमः १६ श्री
शुकउवाच संस्तूयमानोभगवान्राजभिर्मुक्तबंधनैः तानाहकरुणस्तातशरण्यः श्ल
क्ष्णयागिरा १७ श्रीभगवानुवाच अद्यप्रभृतिवोभूपामय्यात्मन्यखिलेश्वरे सुदृढाजा
यतेभक्तिर्वाढमाशंसितंतथा १८ दिष्ट्याव्यवसितंभूपाभवंतऋतभाषिणः श्रियैश्वर्य
मदोन्नाहंपश्यउन्मादकंनृणां १९ हैहयोनहुषोवेनोरावणोनरकोऽपरे श्रीमदाद्भ्रंशिताः
स्थानाद्देवदैत्यनरेश्वराः २० भवंतएतद्विज्ञायदेहाद्युत्पाद्यमंतवत् मांयजंतोऽध्वरैर्यु
क्ताः प्रजाधर्मेणरक्षथ २१ संतन्वंतः प्रजातंतून्सुखंदुःखंभवाभवौ॥।९ नरेश्वरः पितुः का

मधेनुहरणात्परशुरामेणसपुत्रोहतः नहुषोदेवेंद्रतांप्राप्तः उन्मत्तः शचीसंगायब्राह्मणान्शिविकांवाहयन् ॥
तैरेवततोभ्रंशितोऽजगरत्वमवाप वेनोप्युन्मत्तोब्राह्मणानधिक्षिपंस्तैरेवहुंकृतैर्हतः रावणोराक्षसेश्वरः सीताम
भिलषन्राघवेणहतः नरकोदैत्येश्वरोऽदितिकुंडलाद्याहरणात्मयैवहतः अपरेपिश्रीमदात्स्थानाद्भ्रंसिता ॥
॥ २०॥ यदुत्पाद्यंदेहादितदंतवत् एवंविज्ञाययुक्ता अप्रमत्ता रक्षथरक्षतेत्यर्थः २१ प्रजातंतून्पुत्रादिसंततीः॥

प्राप्तंप्राप्तंसमत्वेनसेवमानाः २२ मांब्रह्मयास्यथ २३ स्त्रियश्चतेषांमज्जनकर्मणीअभंगस्नानादौन्ययुंक्त २४ २५

प्राप्तंप्राप्तंचसेवंतोमच्चित्ताविचरिष्यथ २२ उदासीनाश्चदेहादावात्मारामाधृतव्रताः म
य्यावेश्यमनःसम्यङ्मामंतेब्रह्मयास्यथ २३ श्रीशुकउवाच इत्यादिश्यनृपान्कृष्णोभ
गवान्भुवनेश्वरः तेषांन्ययुंक्तपुरुषान्स्त्रियोमज्जनकर्मणि २४ सपर्य्याकारयामा
ससहदेवेनभारत नरदेवोचितैर्वस्त्रैर्भूषणैःस्रग्विलेपनैः २५ भोजयित्वावरान्नेनसु
स्नातान्समलंकृतान् भोगैश्चविविधैर्युक्तान्तांबूलाद्यैर्नृपोचितैः २६ तेपूजितामुकुंदे
नराजानोमृष्टकुंडलाः विरेजुर्मोचिताःक्लेशात्प्रावृडंतेयथाग्रहाः २७ रथान्सदश्वा
नारोप्यमणिकांचनभूषितान् प्रीणय्यसूनृतैर्वाक्यैः स्वदेशान्प्रत्ययापयत् २८ तए
वंमोचिताःकृच्छ्रात्कृष्णेनसुमहात्मना ययुस्तमेवध्यायंतःकृतानिचजगत्पते २९ ॥
जगदुःप्रकृतिभ्यस्तेमहापुरुषचेष्टितं यथाऽन्वशासद्भगवांस्तथाचक्रुरतंद्रिताः ३०
श्रीशुकउवाच जरासंधंघातयित्वाभीमसेनेनकेशवः पार्थाभ्यांसंयुतःप्रायात्सहदेवेन

सुस्नातान्सम्यगलंकृतान्भोगैश्चयुक्तान्वरेणान्नेनभोजयित्वा पुनस्तेषांसपर्य्यांसहदेवेनकार(( पूजितः ३१॥
यामास २६ ग्रहाश्चंद्रादयोयथा २७ प्रीणय्यनंदयित्वा २८ । २९ जगदुःऊचुः ३० । ३१

खांडवप्रस्थंइंद्रप्रस्थंदुर्हृदांदुर्योधनादीनां ३२ शांतंमृतंआप्तमनोरथोवभूव ३३ ३४ ३५ इतिदशमेटीकायांत्रि॥
सप्ततितमोध्यायः ७३ चतुर्युक्सप्ततितमेराजसूयक्रियाद्विजैः अग्रपूजाप्रसंगेनचैद्यघातादिवर्ण्यते १ राजसू
सुखेहत्वाजरासंधंतदंतरे चैद्यंतदंतेकुर्वंतंवीजे कलिमिवावपत् २ कृष्णस्यचानुभावमितिचकारात्तस्याज्ञा

गत्वातेखांडवप्रस्थंशंखान्दध्मुर्जितारयः हर्षयंतःस्वसुहृदोदुर्हृदांचाऽसुखावहाः ३२
तच्छ्रुत्वाप्रीतमनसइंद्रप्रस्थनिवासिनः मेनिरेमागधंशांतंराजाचाप्तमनोरथः ३३ अभि
वंद्याथराजानंभीमार्जुनजनार्द्दनाः सर्वमाश्रावयांचक्रुरात्मनायदनुष्ठितं ३४ निशम्
म्यधर्मराजस्तत्केशवेनानुकंपितं आनंदाश्रुकलांमुंचन्प्रेम्णानोवाचकिंचन॥ ३५॥
॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेराजसूयदिग्विजयेजरासंधवधोनामत्रिसप्तति
तमोध्यायः ७३॥ श्रीशुकउवाच॥ एवंयुधिष्ठिरोराजाजरासंधवधंविभोः कृष्णस्य
चानुभावंतंश्रुत्वाप्रीतस्तमब्रवीत् १ युधिष्ठिरउवाच येस्युस्त्रैलोक्यगुरवः सर्वेलो
कमहेश्वराः वहंतिदुर्लभलब्ध्वाशिरसैवानुशासनं २ सभवानरविंदाक्षोदीनानामीश

नुविधापितंचालस्येत्यर्थः १ तदाह येस्युरिति येत्रैलोक्यस्यापिगुरवःस्युःसनकादयः((मानिनां॥
सर्वेचलोकाःलोकपालाश्चतेशिरसैवतवानुशासनंवहंति दुर्लभंलब्ध्वेति भाग्येनैतल्लब्धमितिवहुमानेनेत्यर्थः २स

ननुरूपमनुकरणंस्वतेजोहानिप्रसंगादित्यर्थः ३ अथवातवपरिपूर्णस्याज्ञापनाज्ञाधारणाभ्यांनतेजसोहानि
र्वृद्धीअतः कृपयासर्वसंगच्छतइत्याह नह्येकस्याद्वितीयस्येति समानासमानरहितस्यब्रह्मणस्तवोभयंमायांप
रमात्मनइतिसर्वजीवनियंतुस्तवनियम्यत्वंसुतरांनवास्त्येवंअतः परानुग्रहार्थैरेतैः कर्मभिस्तवतेजोनवर्द्धतेनचा
ह्रसति स्वैरिवोदयास्तमयादिकर्मभिरित्यर्थः तथाच श्रुतिः नकर्मणावर्द्धतेनोकनीयानिति ४ नन्वेवमप्यहंप

धत्तेऽनुशासनंभूमनतदत्यंतविडंबनं ३ नह्येकस्याद्वितीयस्यब्रह्मणःपरमात्मनः॥
कर्म्मभिर्वर्द्धतेतेजोह्रसतेचयथारवेः ४ नवैतेऽजितभक्तानांममाहमितिमाधवत्वंत
वेतिचनानाधीः पशूनामिववैकृता ५ श्रीशुकउवाच इत्युक्त्वायाज्ञियेकालेवव्रेयुक्ता
नृत्विजः कृष्णानुमोदितःपार्थोब्राह्मणान्ब्रह्मवादिनः ६ द्वैपायनोभरद्वाजःसुमं
तुर्गौतमोऽसितः वसिष्ठश्च्यवनःकण्वोमैत्रेयःकवषस्त्रितः ७ विश्वामित्रोवामदेवःसु
मतिर्जैमिनिःक्रतुः पैलःपराशरोगर्गोवैशंपायनएवच ८ अथर्वाकश्यपोधौम्योरामो
भार्गवआसुरिः वीतिहोत्रोमधुछंदावीरसेनोऽकृतव्रणः ९ ॥एवमीश्वरःममेदंनीचंकर्म्मयो

ग्यमितिमनसिकथंनभवेदतआह नवैतइतिहेअजिततवभक्तानामेवनावदियंनानाधीर्भेदमतिर्नास्ति यथापशूना
मज्ञानांवैकृताशरीरविषयातवतुनास्तीतिकिंपुनर्वक्तव्यमित्यर्थः ५ याज्ञियेयज्ञोचितेवसंतादिकालेयुक्तान्अभियु
क्तानसयुधिष्ठिरःऋत्विजोहोतृप्रमुखान्वव्रेवृतवान् ६ नानाहद्वैपायनइतित्रिभिः ७।८ अकृतव्रणंतान्एतान्

अन्ये चोपहूता यज्ञं दिदृक्षवस्तत्रेयुरित्यन्वयः १० ११ देवयजनं यज्ञभूमिं कृष्ट्वा कर्षणादिभिः संशोध्य दीक्षयां च
क्रिरे दीक्षासंस्कारयुक्तमकुर्वन् १२ उपकरणा उपस्कराः वरुणस्य राजसूयेयथा आसन्निति शेषः किंच इंद्रादयो

उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः धृतराष्ट्रः सहसुतो विदुरश्च महामतिः १० ब्रा
ह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञं दिदृक्षवः तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ११ तत
स्ते देवयजनं ब्राह्मणाः स्वर्णलांगलैः कृष्ट्वा तत्र यथाम्नायं दीक्षयां चक्रिरे नृपम् १२ हैमाः
किलोपकरणा वरुणस्य यथा पुरा इंद्रादयो लोकपाला विरिंचभवसंयुताः १३ सगणाः
सिद्धगंधर्वा विद्याधरमहोरगाः मुनयो यक्षरक्षांसि खगकिन्नरचारणाः १४ राजानश्च स
माहूता राजपत्न्यश्च सर्वशः राजसूयं समीयुः स्म राज्ञः पांडुसुतस्य वै १५ मेनिरे कृष्णभक्त
स्य सूपपन्नमविस्मिताः अयाजयन्महाराजं याजका देववर्चसः राजसूयेन विधिवत्प्र
चेतसमिवामराः १६ सौत्येऽहन्यवनीपालो याजकान्सदसस्पतीन् अपूजयन्महाभा
गान्यथावत्सुसमाहितः १७ सदस्याग्र्यार्हणार्हं वै विमृशंतः सभासदः ॥

१४ ये च राजादयः समाहूताः तत्र समीयुः स्म १५ ते सर्वे कृष्णभक्तस्य पांडुसुतस्य राज्ञो युधिष्ठिरस्य राजसूयममविस्मि
ताः संतः सूपपन्नं सुसंपन्नं मेनिरे इत्यन्वयः याजका ऋत्विजः १६ सौत्येऽहनि सोमाभिषवदिने १७ अग्र्यार्हणं अग्रपूजा ॥

१४
भा॰द॰
उ॰
८१

तस्मात्अर्हे योग्यं अनैकांत्यात् योग्यानां बहुत्वेनैकस्यानिश्चयात् १८ १९ सांख्यं ज्ञानं योगउपासना २० ननु सांख्यं केवलपरं योगः सविशेषणपरः कथमुभयोरेकपरत्वं तत्राह एकएवाद्वितीयोसौ अतः सांख्यस्यैतत्परत्वं युक्तं विशेषणभूतस्य सर्वप्रपंचस्य तन्मयत्वात्सविशेषणविषयस्य योगस्यापि युक्तमद्वितीयपरत्वमित्याह ऐतदात्म्यमिति एषः श्रीकृष्णः आत्मायस्यतत् एतदात्म तस्य भावऐतदात्म्यं भवितव्ये च भावनिर्देशः ऐतदात्म्यमिदं सर्व्वमिति श्रुतेः

नाध्यगच्छन्ननैकांत्यात्सहदेवस्तदाब्रवीत् १८ अर्हतिह्यच्युतः श्रैष्ठ्यं भगवान् सात्वतां पतिः एषवैदेवताः सर्वा देशकालधनादयः १९ यदात्मकमिदं विश्वं क्रतवश्चयदात्मकाः अग्निराहुतयोमंत्राः सांख्यं योगश्चयत्परः २० एकएवाद्वितीयोसावैतदात्म्यमिदं जगत् आत्मनात्माश्रयः सभ्याः सृजत्यवतिहंत्यजः २१ विविधानीहकर्माणि जनयन्यदवेक्षया ईहतेयदयं सर्वः श्रेयोधर्मादिलक्षणं २२ तस्मात्कृष्णायमहते दीयतां परमार्हणं एवंचेत्सर्वभूतानामात्मनश्चार्हणंभवेत् २३ सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने देयं शांताय पूर्णाय दत्तस्यानंत्यमिच्छता २४॥९ अत्रहेतुः आत्मनेतिहे सभ्याः आत्माश्रयः अन्यनिरपेक्षः स्वयमजः इदंजगत्सृजति अवति हंति चेति २१ किंच विविधानीति यस्यावेक्षया अनुग्रहेण विविधानि नानाप्रकाराणि कर्म्माणि तपोयोगादीनि जनयन् कुर्वन् यत् यस्मात् अयं सर्वोपि जनो धर्म्मादिलक्षणं श्रेयईहते साधयति कर्म्माणि तत्फलानि च यदधीनानीत्यर्थः २२ २३ ननु आत्मना क्रियमाणमर्हणमात्मनः कथं स्यात्तत्राह सर्वभूतानामात्मभूताय अनन्यदर्शि

राम:
८१

श्रीकृष्णानुभावविन्सहदेवइत्युक्त्वातूष्णीमभूत् २५ द्विजेरितंसाधुसाध्वीतिघोषंश्रुत्वाहार्दमभिप्रायं २६ २७ २८

इत्युक्त्वासहदेवोभूत्तूष्णींकृष्णानुभाववित् तच्छ्रुत्वातुष्टुवुःसर्वेसाधुसाध्वितिसत्तमाः २५
श्रुत्वाद्विजेरितंराजाज्ञात्वाहार्दंसभासदां समर्हयद्धृषीकेशंप्रीतःप्रणयविह्वलः २६॥
तत्पादाववनिज्यापःशिरसालोकपावनीः सभार्य्यःसानुजामात्यःसकुटुंबोऽवहन्मुदा २७
वासोभिःपीतकौशेयैर्भूषणैश्चमहाधनैः अर्हयित्वाश्रुपूर्णाक्षोनाशकत्समवेक्षितुं २८
इत्थंसभाजितंवीक्ष्यसर्वेप्रांजलयोजनाः नमोजयेतिनेमुस्तंनिपेतुःपुष्पवृष्टयः २९ इ
त्थंनिशम्यदमघोषसुतःस्वपीठादुत्थायकृष्णगुणवर्णनजातमन्युः उत्क्षिप्यबाहुमिद
माहसदस्यमर्षीसंश्रावयन्भगवतेपरुषाण्यभीतः ३० ईशोदुरत्ययःकालइतिसत्यव
तीश्रुतिः वृद्धानामपियद्बुद्धिर्बालवाक्यैर्विभिद्यते ३१ यूयंपात्रविदांश्रेष्ठामामन्ध्वंबा
लभाषितं सदसस्पतयःसर्वेकृष्णोयत्संमतोऽर्हणे ३२ तपोविद्याव्रतधरान्ज्ञानविध्वस्तक
ल्मषान् परमर्षीन्ब्रह्मनिष्ठान्लोकपालैश्चपूजितान्॥३३॥ ॥ २९॥२९॥३०॥३१॥

हेसदसस्पतयःसर्वेबालस्यभाषितंमामन्यध्वंमाजानीतमीगृह्णीतकिंनतद्यत्यतःकृष्णोऽर्हणेअग्रपूजायांसंमत

भा॰ द॰ ७४

असैवववास्तवोऽर्थः पूर्ववदुन्नेयः गोपाल इति वेदपृथिव्यादिपालकइत्यर्थः कुत्सितंवेदविपरीतंलपंतीतिकुलपाः
पाखंडास्तान् असनेसमाघातयतीतितथासः अकाकः कंच अकंचकाकेसुखदुःखेतेनविद्येतेयस्यसः अकाकः आ
प्तकाम इत्यर्थः सयथा आप्तकामोदेवयोग्यंकेवलंपुरोडाशमात्रंनार्हति अपितुसर्वस्वमपितथाऽयंश्रीकृष्णोपिब्रह्म
र्षियोग्यंसपर्यामात्रंकथमर्हति किंत्वात्मसमर्प्पणमप्यर्हतीत्यर्थः ३४ वर्णाश्रमकुलेभ्योऽपेतोब्रह्मत्वात् अनामगो
त्रमितिश्रुतेः अतएवानधिकारित्वात् सर्वैधर्मैर्वहिष्कृतः स्वैरवर्त्ती परमेश्वरत्वात् अतएवनिर्गुणः तम आदिरहितः ए
वंभूतोजीवानांयोग्यंतुच्छंसपर्यामात्रंकथमर्हतीत्यर्थः ३५ अपिचकथंवर्णनीयोमादृशैरेषांयदूनांमहिमायद्यस्मादे

सदस्पतीन तिक्रम्यगोपालः कुलपांसनः यथाकाकः पुरोडाशंसपर्य्यांकथमर्हति ३४ वर्णा
श्रमकुलापेतः सर्वधर्मवहिष्कृतः स्वैरवर्त्तीगुणैर्हीनः सपर्य्यांकथमर्हति ३५ ययातिने
षांहिकुलंशप्तंसद्भिर्वहिष्कृतं वृथापानरतंशश्वत्सपर्य्यांकथमर्हति ३६ ब्रह्मर्षिसेवितान्
देशान्हित्वैतेब्रह्मवर्चसं॥ एषांकुलंययातिनाशप्तमपि किंसद्भिर्वहिष्कृतं अपितुशिरसाधृतं किंच अस्मदादि
कुलवत् किंवृथापानरतं अपित्वतिनियताचारमित्यर्थः अहोयदूनामेवनावदीदृशंमाहात्म्यंयद्कुलवृद्धस्यययातेः शा
पोन प्रादुरभूदित्यादि अयंतुसाक्षादीश्वरः अतः सपर्यामात्रंकथमर्हतीत्यर्थः ३६ किंचयेराजानोदुष्टानुग्राह्यंतितेन
दर्थंकीकटादिदेशानप्याश्रयंति एतेतुब्रह्मर्षिसेवितानेवदेशानाश्रित्य अब्रह्मवर्चसंसमुद्रंदुर्गमपिहित्वाहापयि
तित्यर्थः वाधंतेतथायाः दस्यवः प्रजाः ताश्च अयमर्थः वेदतदर्थाभियोगोब्रह्मवर्चसंतनिरुद्धमब्रह्मवर्चसंसमुद्रंमुद्राऽ
त्रलिंगंतत्सहितेसमुद्रंवेदविरुद्धंलिंगधारणंपाखंडमित्यर्थः तद्धित्रिंगत्वाजयित्वावाधंतेदंडयंतिकथंभूतं॥ ६ ॥

दुर्गंधर्मवत्प्रतीतेरधर्मतयादुर्ज्ञेयमित्यर्थः तथा दस्यवः दस्यूनपि प्रजावेषेण वर्तमाना न दंडयंति अतोयदुभ्यो ऽन्यः को
नामधार्मिकोस्तीतिपारुष्यं तूक्तार्थमेव ३७ शिवाफेरुः तस्यारुतं श्रुत्वायथा सिंहो न किंचिद्भूते न दूत ३८ ३९ ४० ४१

समुद्रं दुर्गमाश्रित्य वाधंते दस्यवः प्रजाः ३७ एवमादीन्यभद्राणि वभाषे नष्टमंगलः नोवा
च किंचिद्भगवान् यथा सिंहः शिवारुतं ३८ भगवन्निंदनं श्रुत्वा दुःसहं तत्सभासदः कर्णौपि
धाय निर्ज्जग्मुः शपंतश्चेदिपं रुषा ३९ निंदां भगवतः शृण्वन् तत्परस्य जनस्य वा ततो ना
पैति यः सोपि यात्यधः सुकृताच्युतः ४० ततः पांडुसुताः क्रुद्धा मत्स्यकैकयसृंजयाः उदायुधाः
समुत्तस्थुः शिशुपालजिघांसवः ४१ ततश्चैद्यस्त्वसंभ्रांतो जगृहे खड्गचर्मणी भर्त्सयन् कृष्ण
पक्षीयान् राज्ञः सदसि भारत ४२ तावदुत्थाय भगवान् स्वान्निवार्य्य स्वयं रुषा शिरः क्षुरांतच
क्रेण जहारापततो रिपोः ४३ शब्दः कोलाहलोप्यासीत् शिशुपाले हते महान् तस्यानुयायि
नो भूपा दुद्रुवुर्जीवितैषिणः ४४ चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् पश्यतां सर्वभूता
नामुल्केव भुवि खाच्युता ४५ जन्मत्रयानुगुणितवैरसंरब्धया धिया॥ ॥ ४२ तावदुत्थायेतस्यायम

भिप्रायः एषमत्पार्षदोमत्तुल्यवलः सर्वानेतान्हन्यात् अतो मयैव शीघ्रं हंतव्य इति तत् क्षणमेवोत्थाय शिरोजहारेइ
ति ४३ ४४ ४५ नन्वेवं निंदकस्य कथं वासुदेवे प्रवेशः तत्राह जन्मत्रयेति जन्मत्रये अनुगुणितमनुवर्णितं यद्वैरं तेन

॥ टी ॥

यास्त्राविष्टयातन्मयतांतत्स्वरूपतांयातःपुनःपार्षदोबभूवेत्यर्थः अत्रहेतुःभावोहीति भावोभावनाअनुध्यानंभवस्य

ध्यायंस्तन्मयतांयातोभावोहिभवकारणं ४६ ऋत्विग्भ्यःससदस्येभ्योदक्षिणांविपुला।
मदात् सर्वान्संपूज्यविधिवच्चक्रेऽवभृथमेकराट् ४७ साधयित्वाक्रतुंराज्ञःकृष्णोयोगे
श्वरेश्वरः उवासकतिचिन्मासान्सुहृद्भिरभियाचितः ४८ ततोनुज्ञाप्यराजानमनिच्छंत
मपीश्वरः ययौसभार्यःसामात्यःस्वपुरंदेवकीसुतः ४९ वर्णितंतदुपाख्यानंमयातेबहुवि
स्तरं वैकुंठवासिनोर्जन्मविप्रशापात्पुनःपुनः ५० राजसूयावभृथ्येनस्नातोराजायुधि।
ष्ठिरः ब्रह्मक्षत्रसभामध्येशुशुभेसुरराडिव ५१ राज्ञासंपूजिताःसर्वेसुरमानवखेचराः कृ
ष्णंक्रतुंचशंसंतःस्वधामानिययुर्मुदा ५२ दुर्योधनमृतेपापंकलिंकुरुकुलामयं योनसे
हेश्रियंस्फीतांदृष्ट्वापांडुसुतस्यतां ५३ यइदंकीर्तयेद्विष्णोःकर्मचैद्यवधादिकं राजमो
क्षंवितानंचसर्वपापैःप्रमुच्यते ५४॥ ॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेशिशु
पालवधोनामचतुःसप्ततितमोध्यायः॥७४॥

ध्येयाकारजन्मनःकारणं पेशस्कारिध्यानेनकीटादौ
तयादृष्टत्वादित्यर्थः ४६ ४७ ४८ ४९ ५० ५१ सुरामानवाःखेचराःप्रमथाश्च ५२ पापंधर्मद्विषं अत्रहेतुःकलिंकलेरंश
अतएवकुरुकुलस्यामयंव्याधिवन्नाशकं ५३ वितानंय
ज्ञंच ५४ ॥इतिदशमेटीकायांचतुःसप्ततितमोध्यायः ७४॥

पत्तयुक्तस्य प्रतितनमेयज्ञावभृथसंभ्रमः सुयोधनस्य चाक्षांत्यामानभंगोदृशिभ्रमात् १ दुर्योधनस्यैकस्यैव दुःखे कारणं प्र
ष्टुमुक्तमनुवदति अजातशत्रोरिति १ इति श्रुतं त्वन्मुखादेवेत्यर्थः २ दुर्योधनस्यासहनकारणत्वेनयागमहोत्सवमेवपुनः

राजोवाच अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयं सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः १
दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः इति श्रुतं नो भगवंस्तत्र कारणमुच्यतां २ ऋषिरु
वाच पितामहस्य ते यज्ञे राजसूये महात्मनः बांधवाः परिचर्यायां तस्यासन्प्रेमबंधनाः ३
भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ४ सतां
शुश्रूषणे जिष्णुः कृष्णः पादावनेजने परिवेषणे द्रुपदजा कर्णो दाने महामनाः ५ युयुधा
नो विकर्णश्च हार्दिक्यो विदुरादयः बाल्हीकपुत्रा भूर्याद्या ये च संतर्दनादयः ६ निरूपिता
महायज्ञे नानाकर्मसु ते तदा प्रवर्त्तंते स्म राजेंद्र राज्ञः प्रियचिकीर्षवः ७ ऋत्विक्सदस्य
बहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः चैद्ये च सात्वतपतेश्चरणं प्रविष्टे।
चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्यां ८॥ एतत्सिंहावलोकनेन निरूपयति पितामहस्येत्यादिना एकादशभिः पु

रतस्येत्यतः प्राक्तनेन ग्रंथेन प्रेमबंधनाः प्रेमयंत्रिताः ३ पूजायां संमानने द्रव्यसाधने नानावस्तुसंपादने ४ सतां शुश्रूषणे
चंदनालेपनादौ ५।६ निरूपिता नियुक्ताः संतो नानाकर्मसु प्रवर्त्तंते स्म ७ ऋत्विजश्च सदस्याश्च सभासदः बहुविदश्च तेषु स्वि

॥ ८

॥ आदितआरभ्यश्रीकृष्णचरितकीर्त्तनसफलमाह यएतदितिद्वाभ्यां २७ शंतमानिपरममंगलानि परमहंसंगतौश्रीकृष्णे २८ एवमेकादशस्कंधभावार्थस्यप्रदीपिका स्वाज्ञानध्वांतभीतेनश्रीधरेणप्र

यएतद्देवदेवस्यविष्णोःकर्माणिजन्मच कीर्त्तयेच्छ्रद्धयामर्त्यः सर्वपापैः प्रमुच्यते २७ ३ त्थंहरेर्भगवतोरुचिरावतारवीर्याणिबालचरितानिचशंतमानि अन्यत्रचेहचश्रुतानिगृणन् मनुष्योभक्तिंपरांपरमहंसगतौलभेत २८ इतिश्री भागवतेमहापुराणेएकादशस्कंधेपारमहंस्यांसंहितायामेकादशस्कंधेमौशलंनाम एकत्रिंशत्तमोध्यायः ३१ ॥ ६

काशिता १ ॥ ॥ इतिश्रीश्रीधरस्वामीविरचितायांश्रीभागवतभावार्थदीपिकायांएकादशस्कंधे टीकायांएकत्रिंशत्तमोऽध्यायः ३१ ॥ ❋ ॥

॥१९ २० सदुक्तिभिः सतोऽवितथाउक्तयो येषु तैः नाहंप्रकाशः सर्वस्य योगमायासमावृतः मूढोऽयंनाभिजाना

प्राणांश्चविजहुस्तत्र भगवद्विरहातुराः उपगुह्यपतींस्तात चितामारुरुहुस्त्रियः॥
१९ रामपत्न्यस्तु तद्देहमुपगुह्याग्निमाविशन् वसुदेवपत्न्यस्तद्गात्रंप्रद्युम्नादीन्ह
रेः स्नुषाः कृष्णपत्न्योऽविशन्नग्निंरुक्मिण्याद्यास्तदात्मिकाः २० अर्ज्जुनःप्रे
यतःसख्युः कृष्णस्य विरहातुरः आत्मानंसांत्वयामास कृष्णगीतैः सदुक्ति
भिः २१ बंधूनांनष्टगोत्राणामर्ज्जुनः सांपरायिकं हतानांकारयामास यथा
वदनुपूर्वशः २२ द्वारकांहरिणात्यक्तांसमुद्रोऽप्लावयत्क्षणात् वर्जयि
त्वामहाराजश्रीमद्भगवदालयं २३ नित्यंसंन्निहितस्तत्र भगवान्मधुसूदनः
स्मृत्याऽशेषाशुभहरंसर्वमंगलमंगलम् २४ स्त्रीवालवृद्धानादायहतशेषा
न्धनंजयः इंद्रप्रस्थंसमावेश्यवज्रंतत्राभ्यषेचयत् २५ श्रुत्वासुहृद्वधं
राजन्नर्ज्जुनात्तेपितामहाः त्वांतुवंशधरंकृत्वाजग्मुः सर्वेमहापथम् २६॥९

तिलोकोमामजमव्ययमित्यादिभिः २१ नष्टगोत्राणांनष्टसंततीनांसांपरायिकंपिंडोदकादि २२ २३ २४ २५ २६

ननु यदि समर्थस्तर्हि किंचित्कालमत्रैव तेनैव वपुषा किंनातिष्ठत् तत्राह तथाऽपीति यद्यपि उक्तप्रकारेणाशेषस्य जगतः चराचरस्य स्थित्यादिषु अनन्यहेतुर्निरपेक्ष एव कारणं स्वयं यद्यस्मादशेषशक्तिधृक् तथापि यादवत्वात् स्वं निजं वपुः अत्र शेषितं अवशेषितं प्रणेतुं कर्तुं नैच्छत् किंतु स्वमेव लोकमनयत् तत्र हेतुः मर्त्त्येन देहेन किंचित्कार्यमि

तथाऽप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्त्येन किं स्वस्थगतिं प्रदर्शयन् १३ य एतां प्रातरुत्थाय कृष्णस्य पदवीं परां प्रयतः कीर्त्तयेद्भक्त्या तामेवाप्नोत्यनुत्तमां १४ दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः पतित्वा चरणावस्रैर्न्यषिंचत्कृष्णविच्युतः १५ कथयामास निधनं वृष्णीनां कृत्स्नशो नृप तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्छिताः १६ तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः व्यसवः शेरते यत्र ज्ञातयो घ्नंत आननं १७ देवकी रोहिणी चैव वसुदेवस्तथा सुतौ कृष्णरामावपश्यंतः शोकार्त्ता विजहुः स्मृतिं १८ ॥ इति स्वस्थानामात्म

निष्ठानां दिव्यां गतिमेव प्रकृष्टां दर्शयन् अन्यथा तेऽपि दिव्यां गतिमनादृत्य योगबलेन देहसिद्धिं विधाय अत्रैव रंतुं यतेरन् तन्माभूदित्येतदर्थमिति भावः १३ य एतां उक्तप्रकारां पदवीं गतिं १४ तदैव भगवतः स्वलोकं गच्छतां वसुदेवादीनामपि तत्प्राप्तये य उपायस्तं इति तत्र आसीत्तमाह दारुक इत्यादिना १५ १६ १७ कृष्णरामौ सुतावपश्यंतः १८

अविज्ञातगतित्वं दृष्टांतेन स्पष्टयति सौदामिन्यागतिर्यथा मर्त्यैर्न लक्ष्यते देवैस्तु लक्ष्यते तथा भूमंडलं हित्वा गच्छतः
श्रीकृष्णस्य गतिः देवैरपि न लक्ष्यते किंतु तत्पार्षदैरेवेत्यर्थः ९ १० अभिप्रायापरिज्ञानात् प्रथमं परिक्ल्
ष्टं ततस्त्वदृष्टं दृष्ट्वा पुनस्तमेवार्थं प्रपंचयति राजन्निति त्रिभिः परस्य सर्वकारणस्य तनुभृतां यादवादिषु जनना
प्ययेहाः आविर्भावतिरोभावरूपा चेष्टा इयं मायया अनुकरणमात्रमवेहि नटो यथा विकृत एव नानारूपै जन्मा
दीन् विडंबयति तद्वत् आस्तां तावद्यादवादिषु जन्मादिशंका यद्विश्वसर्गनिरोधादिष्वप्यसावविकृत एवास्त इत्याह

सौदामिन्या यथाऽऽकाशे यांत्या हित्वाऽभ्रमंडलं गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ९
ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः विस्मितास्तां प्रशंसंतः स्वं स्वं लोकं ययुस्तदा १०
राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडंबनमवेहि यथा नटस्य सृष्ट्वात्मनेदमनु
विश्य विहृत्य चांते संहृत्य चात्ममहिम्नोपरतः स आस्ते ११ मर्त्येन यो गुरुसुतं यमलो
कनीतं त्वां चाऽनयच्छरणदः परमास्त्रदग्धं। जिग्येऽतकांतकमपीशमसावनीशः किं
स्वावने स्वरनयन्मृगयुं सदेहम् १२॥ ॥ सृष्ट्वेति आत्मना स्वयमेवेदं जगत्सृष्ट्वा अंतर्यामित्वेनानुविश्य आत्ममहि
नास्त्वमहिम्ना उपरत आस्ते ११ न पुनरन्यथा मंतव्यं यतोऽस्मिन्नेवावतारे तत्प्रभावो निरतिशयो दृष्ट इत्याह मर्त्येनेति यमेन स्व
लोकं प्रतिनीतं गुरुसुतं मर्त्येन तेनैव शरीरेण य आनयत् आनीतवान् शरणदः शरणागतरक्षकः त्वां च ब्रह्मास्त्रदग्धं योऽर
क्षितवान् यश्च अंतकानामंतकमपि ईशं श्रीरुद्रं बाणसंग्रामे जितवान् मृगयुं लुब्धकं सदेहं स्वः स्वर्गं अनयत् निन्ये

दिदानीं च स्वं स्वलोकं प्रतिनेतुमागतत्वाद्धड्गुषु च तेषु दाक्षिण्यात्सान्त्वं चयित्वा तं समाधिमिव कुर्वन्नेत्रे न्यमीलयदिति ५
योगिनामिव स्वच्छंदमृत्युभ्रमं वारयति लोकाभिरामामिति अयमर्थः योगिनो हि स्वच्छंदमृत्यवः स्वां तनुमाग्नेय्या
योगधारणया दग्ध्वा लोकांतरं प्रविशंति भगवांस्तु न तथा किंतु अदग्ध्वैव स्वतनुं सह हि नएव स्वकं धाम वैकुंठाख्य
माविशत् तत्र हेतुः लोकाभिरामाम् लोकानामभिरामः अभितो रमणं स्थितिर्यस्यां तां जगदाश्रयत्वेन जगतोऽपि
दाहप्रसंगादित्यर्थः किंच धारणायां ध्यानस्य च मंगलं शोभनं विषयं इतरथा तद्योनिर्विषयत्वं स्यात् दृश्यते चाद्या

संयोज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ५ लोकाभिरामां स्वतनुं धारणाध्यानमंग
लं योगधारणयाग्नेय्याऽदग्ध्वा धामाऽविशत्स्वकम् ६ दिवि दुंदुभयो नेदुः पेतुः सुम
नसश्च खात् सत्यं धर्मो धृतिर्भूमेः कीर्त्तिः श्रीश्चानु तं ययुः ७ देवादयो ब्रह्ममुख्या न
विशंतं स्वधामनि अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ८॥ ९ ध्युपासकानां तथैव तत्

द्रूपसाक्षात्कारः फलप्राप्तिश्चेति भावः इच्छाशरीराभिप्रायेण वा यथाश्रुतमेवास्तु तत्रापि तु लोकाभिरामामित्यादिवि
शेषणानामानर्थक्यप्रसंगात् तद्यदग्ध्वा तिरोधाय निर्गत इत्येव साम्प्रतम् ६ तदा तु स्वं स्वमेव लोकमागमिष्य
तीति संभ्रमेण देवादिकृतः सर्वतो दुंदुभिनादपुष्पवृष्ट्यादिमहोत्सवोऽभवदित्याह दिवीति भूमेः सकाशात्श्रीकृष्ण
मनुययुः ७ तदा श्रीकृष्णेंऽतरहिते सति कुतो गत इति वितर्कयंतोऽपि ब्रह्ममुख्या देवादयः स्वधामनि विशंतं श्री
कृष्णं न ददृशुः तत्र हेतुः अविज्ञातगतिमिति क्वचित्क्वचिद्ददृशुश्च ततोऽतिविस्मिता बभूवुरित्यर्थः ८ ॥ ॥

यारचनामेतांविज्ञायेति निजश्रीमूर्त्तेरन्तर्हितत्वाद्दुःखाशोकंमाकुर्वित्यर्थः ४९ कुलस्यविनष्टत्वात्दुर्मनाः ५० इति श्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांत्रिंशोऽध्यायः ३० एकत्रिंशेस्वकंधामजगामभगवानितिः तमेवानु ययुःप्रीत्यावसुदेवादयस्ततः १ देवान्यदून्विधायादौभूयोदेवान्विधायचश्रीकृष्णःस्वेच्छयाधामस्वतश्चैवसमा।

मन्मायारचनामेतांविज्ञायोपशमंव्रज ४९ इत्युक्तस्तंपरिक्रम्यनमस्कृत्यपुनःपुनःतत्पादौ शीर्ष्ण्युपाधायदुर्मनाःप्रययौपुरीं ५० इतिश्रीभागवतेमहापुराणेएकादशस्कंधेय दुकुलसंक्षयोनामत्रिंशतितमोऽध्यायः ३० श्रीशुकउवाच अथतत्राऽगमद्ब्रह्माभवा। न्याचसमंभवःमहेंद्रप्रमुखादेवामुनयःसप्रजेश्वराः १ पितरःसिद्धगंधर्वाविद्याधरमहोर गाःचारणायक्षरक्षांसिकिंनराप्सरसोद्विजाः २ द्रष्टुकामाभगवतोनिर्याणंपरमोत्सुकाःगा यंतश्चगृणंतश्चशौरेःकर्माणिजन्मच ३ ववृषुःपुष्पवर्षाणिविमानावलिभिर्नभःकुर्वंतःसं कुलंराजन्भक्त्यापरमयायुताः ४ भगवान्पितामहंवीक्ष्यविभूतीरात्मनोविभुः॥ १ विशत् २ मुन यःसनकादयःप्रजेश्वराःमरीच्यादयः १ द्विजाःगरुडलोकवासिनःपक्षिणःमैत्रेयादयोवा २ भगवतोनिर्याणंद्रष्टुका माःसंतःपरमोत्सुकास्तत्रागमन्तेषामौत्सुक्यचक्रतंमहोत्सवमाहसार्द्धेनगायंतश्चेति ३।।४ विभूतीःइंद्रादींश्च पश्चान्नेत्रेन्यमीलयदित्यत्रायंभावःपूर्वंब्रह्मादिभिःसलोकांल्लोकपालान्नःपाहिवैकुंठकिंकरानितिप्रार्थितत्वा॥ ९

वनमात्रमिति एतदेवस्फुटीकरिष्यन्निदेवादयोब्रह्ममुख्याइत्यादिना ५० ५१ तंपतितंतत्रदृष्ट्वातस्यपादयोर्नि
पपात ५२ ५३ उदीक्षतः उदीक्ष्यमाणस्यसूतस्यसतः ५४ ५५ निर्याणंयोगमार्गेणमदृश्यामितीच्छाशरीरा

त्रिःपरिक्रम्यतंनत्वाविमानेनदिवंययौ ५० दारुकःकृष्णपदवीमन्विच्छन्नधिगम्य
तां वायुंतुलसिकामोदमाघ्रायाऽभिमुखंययौ ५१ तंतत्रतिग्मद्युभिरायुधैर्वृतंह्यः
श्वत्थमूलेकृतकेतनंपतिं स्नेहप्लुतात्मानिपपातपादयोरथादवप्लुत्यसबाष्पलोचनः ५२
अपश्यतस्त्वच्चरणांबुजंप्रभोदृष्टिःप्रनष्टातमसिप्रविष्टा दिशोनजानेनलभेचशांतिं
यथानिशायामुडुपेप्रनष्टे ५३ इतिब्रुवतिसूतेवैरथोगरुडलांछनः खमुत्पपातराजेंद्रसा
श्वध्वजउदीक्षतः ५४ तमन्वगच्छन्दिव्यानिविष्णुप्रहरणानिच तेनातिविस्मितात्मानंसू
तमाहजनार्दनः ५५ गच्छद्वारवतींसूतज्ञातीनांनिधनंमिथः संकर्षणस्यनिर्याणंबंधुभ्योब्रू
हिमद्दशां ५६ द्वारकायांचनस्थेयंभवद्भिस्वस्वबंधुभिः मयात्यक्तांयदुपुरींसमुद्रःप्लावयि
ष्यति ५७ स्वंस्वंपरिग्रहंसर्वेआदायपितरौचनः अर्जुनेनाविताःसर्वेइंद्रप्रस्थंगमिष्यथ
५८ त्वंतुमद्धर्ममास्थायज्ञाननिष्ठउपेक्षकः ॥ १९ भिप्रायेण ५६ ५७ अविताःरक्ष्यमाणाः इंद्रप्रस्थं
गमिष्यथेतिब्रूहीतिपूर्वेणान्वयः ५८ ननुतेसर्वेइंद्रप्रस्थंभगवद्वचनात्गमिष्यंतिमयाकिंकर्तव्यमित्यपेक्षायामा

जरानामकश्चिल्लुब्धको मृगयुः मृगास्यासमिवाकारो यस्य तच्चरणं ३३ ३४ ३५ ३६ ३७ ब्रह्मशापकृतमेतत्॥
नतवापराध इति चेदत आह यस्येति त्वात्मयोगरचितं स्वाधीनमायया रचितं विरिंच्यः अस्य तनयाः रुद्रादयश्च ये

मुषलावशेषायःखंडकृतेषुर्लुब्धको जरा। मृगास्याकारं तच्चरणं विव्याध मृगशंकया।
३३ चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः भीतः पपात शिरसा पादयोरसुरद्विषः ३४
अजानता कृतमिदं पापेन मधुसूदन क्षंतुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ३५ यस्या
ऽनुस्मरणं नृणामज्ञानध्वांतनाशनं वदंति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो ३६ त
माशु जहि वैकुंठ पाप्मानं मृगलुब्धकं यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ३७ यस्यात्
मयोगरचितं न विदुर्विरिंचो रुद्रादयोऽस्य तनयाः पतयो गिरां ये त्वन्मायया पिहितदृष्ट
य एतदंजः किं तस्य ते वयमसद्गतयो गृणीमः ३८ श्रीभगवानुवाच मा भैर्जरे त्वमु
त्तिष्ठ काम एष कृतो हि मे याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदं ३९ इत्याऽदिष्टो भग
वता कृष्णेनेच्छाशरीरिणा॥ ((चान्ये गिरां तयो वेदद्रष्टारः तेऽपि न विदुः तस्य ते अचिंत्यमायस्य ए

तत् ब्रह्मशापादि अंजसा असद्गतयः पापयोनयो वयं किं गृणीमः कथं वर्णयामः अतस्तदास्तां आशु मां जहि
इति भावः ३८ ३९ इच्छाशरीरिणेत्यस्यायं भावः शुद्धसत्त्वमयीं निजां श्रीमूर्तिमंतर्धाय तत्प्रतिकृत्यैवं विडं

स्पर्द्धानिमित्तः क्रोधः कुलंक्षयंनिन्ये २४ २५ पौरुषंयोगंपरमपुरुषध्यानलक्षणं तमेवाह संयोज्येति मानु
ष्यंलोकं मूर्त्तौकंमनुष्यरूपतांवा २६ धरोपस्थेभूतले २७ भ्राजिष्णुरूपंबिभ्रदिति २८ तदेवानुवर्णयति

ब्रह्मशापोपसृष्टानांकृस्नमायावृतात्मनां स्पर्द्धाक्रोधः क्षयं निन्येवैणवोग्निर्यथावनं
२४ एवंनष्टेषुसर्वेषुलोकेषुस्वेषुकेशवः अवतारितोभुवोभारइतिमेनेवशेषितः २५ रामः
समुद्रवेलायांयोगमास्थायपौरुषं तत्याजलोकंमानुष्यंसंयोज्यात्मानमात्मनि २६ राम
निर्याणमालोक्यभगवान्देवकीसुतः निषसाद धरोपस्थेतूष्णीमासाद्यपिप्पलम् २७
बिभ्रच्चतुर्भुजंरूपंभ्राजिष्णुप्रभयास्वया दिशोवितिमिराःकुर्वन्विधूमइवपावकः ३८
श्रीवत्सांकंघनश्यामंतप्तहाटकवर्चसम् कौशेयांबरयुग्मेनपरिवीतंसुमंगलं २९ सुंदर
स्मितवक्त्राब्जंनीलकुंतलमंडितं पुंडरीकाभिरामाक्षंस्फुरन्मकरकुंडलं ३० कटिसूत्र
ब्रह्मसूत्रकिरीटकटकांगदैः हारनूपुरमुद्राभिः कौस्तुभेनविराजितं ३१ वनमालाप
रीतांगंमूर्त्तिमद्भिर्निजायुधैः कृत्वोरौदक्षिणेपादमासीनंपंकजारुणं ३२ ॥ ९ ६ १ ॥

श्रीवत्सांकमितिचतुर्भिः २९ सुंदरस्मितंवक्त्राब्जंयस्मिन् तत् पुंडरीकवदभिरामेसुंदरेअक्षिणीयस्मिन्तत् ३०
३१ वनमालापरीतान्यंगानियस्मिन्तत् निजायुधैश्चपरीतांगंपंकजारुणंवामंपादंदक्षिणेउरौकृत्वाआनंदरूप

पुत्रश्चापरस्तौ सुमित्रासुरथाविति दैर्घमार्षं असुरथनामावाकश्चित् १६ मदांधेनमदतमसावलात्कारिताः १७
दाशार्हादयोनवतत्तद्वंश्याः अर्बुदामाथुराः शूरसेनाश्चतत्तद्देशीयाः १८ भ्रातृभिश्चेति भ्रात्रादिशब्दानांसप्रति।

सुभद्रसंग्रामजितौसुदाहृणौगदोसुमित्रासुरथौ समीयतुः १६ अन्येचयेवैनिशठोल्मुकाद
यः सहस्रजिच्छतजिद्भानुमुख्याः अन्योऽन्यमासाद्यमदांधकारिताजघ्नुर्मुकुंदेनविमोहि
ताभृशं १७ दाशार्हवृष्ण्यंधकभोजसात्वतामध्वर्बुदामाथुरशूरसेनाः विसर्जनाकुकुराः
कुंतयश्चजघ्नुर्मिथस्तेथविसृज्यसौहृदं १८ पुत्राअयुध्यन्पितृभिर्भ्रातृभिश्चस्वस्त्रीय।
दौहित्रपितृव्यमातुलैः मित्राणिमित्रैःसुहृदःसुहृद्भिर्ज्ञातींस्त्वऽहन्ज्ञातयएवमूढाः १९
शरेषुहीयमानेषुभज्यमानेषुधन्वसु शस्त्रेषुक्षीयमाणेषुमुष्टिभिर्जह्रुरेरकाः २० तावज्र
कल्पाह्यभवन्परिघामुष्टिनाभृताः जघ्नुर्द्विषस्तैःकृष्णेनवार्यमानास्तुतंचते २१ प्रत्य।
नीकंमन्यमानावलभद्रंचमोहिताः हंतुंकृतधियोराजन्नापन्नाआततायिनः २२ आ।
पतावपिसंक्रुद्धावुद्यम्यकुरुनंदन एरकामुष्टिपरिघौचरतौजघ्नतुर्युधि २३ ॥ ६ ॥

योगिवाचित्वाद्भ्रातरो मातुलादृत्यादिज्ञेयं मित्रैश्चमित्राणिच अहनहतवंतः १९ धन्वसुधनुःषुजह्रुःजगृहुः २०
परिघालोहदंडाःभृताःधृताः तेचश्रीकृष्णमपि २१ प्रत्यनीकंप्रतिपक्षं २२ एरकामुष्टिरूपौपरिघावुद्यम्य २३॥

विधिःप्रकारः मंगलायनंचकिंच देवद्विजगवांपूजा भवउद्भवहेतुः देवलोकेपरमउद्भवोभविष्यतीतिभावः ९ मधुद्वि
षोवाक्यमाकर्ण्यतथेत्यभिनंद्यउत्तीर्यसमुद्रं १० सर्वश्रेयोपबृंहितमित्यत्रसंधिरार्षः भगवताऽनुक्तैरपिसर्वैःश्रेयोभिःस
हितंचक्रुः ११ पीयतइतिपानंमैरेयकंमदिराविशेषंमधुररसं दिष्टेनदैवेनविभ्रंशितधियःनह्यन्यथातस्मिन् स्थाने।

विधिरेवह्यरिष्टघ्नोमंगलायनमुत्तमं देवद्विजगवांपूजाभूतेषुपरमोद्भवः ९ इतिसर्वेसमा
कर्ण्ययदुवृद्धामधुद्विषःतथेतिनौभिरुत्तीर्यप्रभासंप्रययूरथैः १० तस्मिन्भगवतादिष्टंयदुदे
वेनयादवाः चक्रुःपरमयाभक्त्यासर्वश्रेयोपबृंहितम् ११ ततस्तस्मिन्महापानंपपुर्मैरेयकंम
धु दिष्टविभ्रंशितधियोयद्द्रवैर्भ्रश्यतेमतिः १२ महापानाभिमत्तानांवीराणांदृप्तचेतसां।
कृष्णमायाविमूढानांसंघर्षःसुमहानभूत् १३ युयुधुःक्रोधसंरब्धावेलायामाततायिनःध
नुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः १४ पतत्पताकैरथकुंजरादिभिःखरोष्ट्रगोभिर्महिषै
र्नरैरपि मिथःसमेत्याऽश्वतरैः सुदुर्मदान्यहनञ्शरैर्दद्भिरिवद्विपावने १५ प्रद्युम्नसांबौयु
धिरूढमत्सरावऽक्रूरभोजाऽवनिरुद्धसात्यकी।।

॥तदुचितमितिभावःयद्द्रवैःयस्यद्रवैरसैः१२
कृष्णमायाविमूढानामितिमुख्योहेतुःसंघर्षःकलहः १३ ततोयुयुधुश्च १४ पतन्त्यइतस्ततश्चलंत्यःपताः
कायेषुतैरथादिभिर्मिथःसमेत्यन्यहनन्न्यघ्नन्निमर्थःदद्भिर्दन्तैरिव १५ मिथःसमेत्येत्यस्यप्रपंचःप्रद्युम्नेत्यादिचतुः

३०
भा॰ए॰
१३२

तत्प्रपंचयति प्रत्याकृष्टमिति यस्मिन्रूपेलग्नंनयनंप्रत्याकृष्टंपरावर्त्तेपितुमवलानशेकुः यच्चकर्णाविष्टं कर्णरंध्रेणप्रविष्टंयत्तन्नामात्मनिलग्नंलिखितमिवतिष्ठति ततोनसरतिन निर्गच्छति यस्यश्रीः शोभासंकीर्त्तिमानाकवीनावाचांरतिमुल्लासविशेषंजनयतिते षांमानंजगत्पूज्यतांजनयतीतिकिंनुवक्तव्यं यच्चविलो

प्रत्याकृष्टंनयनमवलायनमवलायत्रलग्नंन शेकुःकर्णाविष्टंनसरतिततोयत्सनामात्मल ग्नम् यच्छ्रीर्वाचांजनयतिरतिंकिंनुमानंकवीनांदृष्ट्वा जिष्णोर्युधिरथगतंयच्चतत्साम्प्रमीयुः ३ ऋषिरुवाच दिविभुव्यंऽतरिक्षेचमहोत्पातान्समुत्थितान् दृष्ट्वाऽसीनान्सुधर्मायांकृष्णः प्राहयदूनिदं ४ श्रीभगवानुवाच एतेघोरामहोत्पाताद्वार्वत्यांयमकेतवः मुहूर्त्तमपिनस्थे यमत्रनोयदुपुंगवाः ५ स्त्रियोबालाश्ववृद्धाश्वशंखोद्धारंव्रजंत्वितः वयंप्रभासंयास्यामोय। त्रप्रत्यक्सरस्वती ६ तत्राऽभिषिच्यशुचयउपोष्यसुसमाहिताः देवताःपूजयिष्यामःस्नपनाले पवार्हणैः ७ ब्राह्मणांस्तुमहाभागान्कृतस्वस्त्ययनावयंगोभूहिरण्यवासोभिर्गजाश्वरथवेश्म

रूपंजिष्णोरर्जुनस्यरथोस्थितंदृष्ट्वायुधिमृतास्तत्साम्यंसारूप्यंईयुःप्राप्ताःतत्केनरूपेणात्सजदित्यन्वयः ३॥((भि॰८॥ दिविसूर्यपरिवेषादीन्भुविभूकंपादीन्अन्तरिक्षेदिग्दाहादीन् महोत्पातान्स्वयमेवोत्पादितत्वाद्दस्मैर्दुश्रेतीकारान् ४ यमस्यकेतवोध्वजाःरवमृत्युसक्कारःत्यर्थः नः अस्माभिः ५ प्रत्यक्पश्चिमवाहिनी ६ अभिषिच्यस्नात्वा ७ ब्राह्मणां ॥ स्वैतःकृतशांतिकाःसंतोगवादिभिःपूजयिष्यामः ८॥

भाग
१३२

एवंकृतोपदेशो जगद्गुरुं प्रणमति भवभयमिति भवः संसारः भयंच जरारोगादिनिमित्तं तदुभयनिवृत्तानां प्रवृ
त्तानां च भृत्यवर्गाणां यथायोग्यमपहंतुं योऽमृतद्वयमुपजह्रे उद्धृतवान् तदेवाह वेदसारमेकं किं तत् ज्ञानविज्ञा
नरूपं च तत्सारं श्रेष्ठं च भृंगवत् भृंगो यथा पुष्पमकोपयन्नेवामृतमुपहरति तथा स्वयं स्वकृतवेदानुसारेणैव उ
दधितश्चैकं तच्चोभयं यथायथं भृत्यवर्गानपाययत् तं नतोऽस्मीति ४९ येनानुकंपितं विश्वमुद्धवप्रश्ननिर्णयैः तं
वंदे परमानंदं दनंनदरूपिणं १ ॥इति श्रीभागवते महापुराणे एकादशस्कंधे टीकायां एकोनत्रिंशोऽध्यायः २९॥

भवभयमपहंतुं ज्ञानविज्ञानसारं निगमकृदुपजह्रे भृंगवद्वेदसारं अमृतमुदधितश्चाऽपा
ययद्भृत्यवर्गान्पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोस्मि ४९ ॥ ॥इति श्रीभागवे महा
पुराणे एकादशस्कंधे भगवदुद्धवसंवादे बदरिप्रवेशं नाम एकोनत्रिंशतितमोऽध्यायः
२९ राजोवाच ततो महाभागवते उद्धवे निर्गते वनं द्वारवत्यां किमकरोत् भगवान्भूतभा
वनः १ ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् २॥

त्रिंशे तु प्राग्उपक्षिप्तमौशलं छलतो हरिः स्वधामं गंतुमन्विच्छन् संजहार निजं कुलं १ विराग्यायपु
राघोरमुपक्षिप्तं हि मौशलं कथाऽवसाने तत्रैव विशेषं परिपृच्छति २ तत इति त्रिभिः १ ब्रह्मशा
पोपसंसृष्टे कुले सति अयं भावः भगवति न हि शापः प्रभवति यादवत्वानुकरणाच्चसोऽपि कथं चि
न्मान्यः अतः किमकरोदिति तदेतदुक्तं कथमत्यजदिति सर्वनेत्राणामिति सर्वेंद्रियोपलक्षणं २॥

यस्सतेन श्रीकृष्णेन अद्वंद्वपरोऽपि सुखदुःखविनिर्मुक्तोऽपि अपक्रमे निर्गमनसमये ४५ किंच सुदुस्त्यजः स्नेहो यस्मिन् तेन वियोगात्कातरो भीतः अतएव तं परिहातुमशक्नुवन्नातुरो विह्वलः सन् कृच्छ्रं कष्टं ययौ प्राप ततश्च भर्तृपादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रत् अतिनिर्बंधरूपया तदाज्ञया तं पुनः पुनर्नमस्कृत्य ययौ अत्र च एष्टतोऽवगमं भर्तुःपादविश्लेषणाक्षमः इत्यादि तृतीयस्कंधोपक्रमोक्तानुसारेण बदरिकाश्रमं गच्छन् भगवतः प्रभासयात्रामुपश्रुत्य शनैः पृष्ठतो गतः सन् उपसंहृतनिजकुलं भगवंतमेकांते दृष्ट्वा तत्कालप्राप्तेन मैत्रेयेण सह पुनः कृपया भगवतोपदिष्टं

शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिंचदद्वंद्वपरोऽप्यपक्रमे ४५ सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः कृच्छ्रं ययौ मूर्द्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनः पुनः ४६ ततस्तमंतर्हृदि संनिवेश्य गतो महाभागवतो विशालां यथोपदिष्टां जगदेकबंधुना तपः समास्थाय हरेरगाद्गतिं ४७ य एतदानंदसमुद्रसंभृतं ज्ञानामृतं भागवताय भाषितं कृष्णेन योगेश्वरसेविताङ्घ्रिणा सच्छ्रद्धयासेव्य जगद्विमुच्यते ४८॥ ॥

तत्त्वमाकलय्य तदाज्ञातो यया वा इति द्रष्टव्यं ४६ विशालां बदरिकाश्रमं गतः सन् हरेर्गतिमगात् कथंभूतां तेनैव जगदेकबंधुना यथोपदिष्टां तदाऽमृतत्वं प्रतिपद्यमानो मयात्मभूताय च कल्पते वै अतिव्रज्यगतोऽस्ति स्नामामेष्यसि ततः परमित्येवमुक्तप्रकारां ४७ आनंदसमुद्रो भगवद्भक्तिमार्गस्तस्मिन् संभृतमेकीकृतं एतत्यः सच्छ्रद्धया आसेव्य ईषदपि सेवित्वा वर्त्तते स विमुच्यत इति किं वक्तव्यं तत्संगेन जगदपि विमुच्यत इत्यर्थः ४८॥

किंच दाशार्हादिषु त्वयायः स्वमायया स्नेहपाशः प्रसारितः स त्वयैवात्मतत्त्वज्ञानशस्त्रेण त्वक्णः छिन्नः ३९ एवं
यद्यपि त्वया बहुकृतं तथाऽप्येतावत्प्रार्थय इत्याह नमोस्त्विति अनुशाधि अनुशिक्षय अनुशासनीयमाह यथेति
भुक्तावप्यनपायिनी ४० तदुक्तमोमित्यंगीकृत्य तथाऽपि मयाऽदिष्टो लोकसंग्रहार्थमेतावत्कुर्वित्याह गच्छेति आ

त्वक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यंधकसात्वतेषु प्रसारितः सृष्टिविवृद्धये त्वया स्वमा
यया ह्यात्मसुबोधहेतिना ३९ नमोऽस्तु ते महायोगिन्प्रपन्नमनुशाधि मां यथा त्वच्चरणां
भोजरतिः स्यादनपायिनी ४० श्रीभगवानुवाच गच्छोद्धव मयादिष्टो वदर्याख्यं ममा
श्रम तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ४१ ईक्षयाऽलकनंदाया विधूताशे
षकल्मषः वसानो वल्कलान्यंग वन्यभुक्सुखनिस्पृहः ४२ तितिक्षुर्द्वंद्वमात्राणां सुशीलः
संयतेंद्रियः शांतः समाहितधिया ज्ञानविज्ञानसंयुतः ४३ मत्तोऽनुशिक्षितं यत्ते विविक्तमनु
भावयन् मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः
परम् ४४ श्रीशुक उवाच स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः॥

दिष्टो नियुक्तः ४१ स्नानादेः पूर्वमेव मत्पादतीर्थोदकभूताया अलकनंदाया गंगायाः ईक्षया वसानः परिदधानः ४२ द्वंद्व
मात्राणां शीतोष्णादिविषयाणां सुशीलः आर्जवादिस्वभावः ४३ ते त्वया विविक्तं सुविचारितं तिस्रस्त्रिगुणात्मिका ग
तीरतिक्रम्य ४४ हरिमेधसा संसारहारिमेधा

कुतइत्यतआह मर्त्यइति यदात्यक्तसमस्तकर्मात्वय्येनिवेदितात्माभवतितदाऽसौमेविचिकीर्षितः विशेषेणक
र्तुमिष्टोभवति ततश्चअमृतत्वंमोक्षंप्रतिपद्यमानोमयात्मभूयायमदैक्यायमत्समानैश्वर्यायेतियावत् कल्पते
योग्योभवतिवैध्रुवं ३४ आदर्शितोयोगमार्गोयस्मैसः ३५ प्रणयेनावघूर्णअवक्षुभितंचित्तंधैर्येणविष्टभ्यबहुम
न्यमानः आत्मानंकृतार्थंमन्यमानः ३६ मेमयायः आश्रितआसीत् सतवसन्निधानेनैवविद्रावितः प्रभवेतिकिं।

मर्त्योयदात्यक्तसमस्तकर्मानिवेदितात्माविचिकीर्षितोमे तदाऽमृतत्वंप्रतिपद्यमानोम
यात्मभूयायचकल्पतेवै ३४ श्रीशुकउवाच सएवमादर्शितयोगमार्गस्तदोत्तमश्लोकव
चोनिशम्य बद्धांजलिःप्रीत्युपरुद्धकंठोनकिंचिदूचेऽश्रुपरिप्लुताक्षः ३५ विष्टभ्यचित्तंप्र
णयावघूर्णंधैर्येणराजन्बहुमन्यमानः कृतांजलिःप्राहयदुप्रवीरंशीर्ष्णास्पृशंस्तच्चरणा
रविंदम् ३६ उद्धवउवाच विद्रावितोमोहमहांधकारोयआश्रितोमेतवसन्निधानात्
विभावसोःकिंनुसमीपगस्यशीतंतमोभीःप्रभवंत्यजाद्य ३७ प्रत्यर्पितोमेभवताऽनुक
कंपिनाभृत्यायविज्ञानमयःप्रदीपः हित्वाकृतज्ञस्तवपादमूलंकोऽन्यत्समीयाच्छरणंत्व
दीयं ३८

तुबाधायसमर्थाभवंति अजाद्यब्रह्मणोऽपिजनक ३७ किंचयद्यपितवसन्निधानादेवगर्वः
तः तथाऽप्यनुकंपिनाभवताविज्ञानमयःप्रदीपश्चप्रत्यर्पितःस्वमाययाऽपहृतःपुनःसमर्पितः अतस्तव
कृतज्ञःयस्त्वयाकृतमनुग्रहंजानातिसःकोनामत्वदीयंपादमूलंहित्वाऽन्यच्छरणंसमीयात् आश्रयेत् ३८॥

समधीयीतउच्चैः पठेत् परमंशुचिरत्यन्तपापविशोधकं पूयेतशुध्येत २७ २८ सम्यग्ज्ञानानुत्पत्तौपुनरुपदेक्ष्या मीत्याशयेनपृच्छति अपीति अपिकिं २९ उपधारितमाकलय्याह नैतदिति शठायवंचकाय ३० शूद्रा णांयोषितांचयदिभक्तिः स्यात् तर्हिब्रूयात् ३१ एतज्ज्ञानेनपुमान्कृतार्थोभवतीत्याह नैतदिति अत्रदृष्टांत

यएतत्समधीयीतपवित्रंपरमंशुचि सपूयेताऽहरहर्मांज्ञानदीपेनदर्शयन् २७ यएतच्छ्र द्धयानित्यमव्यग्रःशृणुयान्नरः मयिभक्तिंपरांकुर्वन्कर्मभिर्नसवध्यते २८ अप्यु द्धवत्वयाब्रह्मसखेसमुपधारितं अपितेविगतोमोहः शोकश्चासौमनोभवः २९ नै तत्त्वयादांभिकायनास्तिकायशठायच अशुश्रूषोरभक्तायदुर्विनीतायदीयतां ३० ए तैर्दोषैर्विहीनायब्रह्मण्यायप्रियायच साधवेशुचयेब्रूयाद्भक्तिःस्याच्छूद्रयोषितां ३१ नैतद्विज्ञायजिज्ञासोर्ज्ञातव्यमवशिष्यते पीत्वापीयूषममृतंपातव्यंनाऽवशिष्यते ३२ ज्ञानेकर्मणियोगेचवार्त्तायांदंडधारणे यावानर्थोनृणांताततावांस्तेऽहंचतुर्विधः ३३॥

माह पीत्वेति पीयूषंस्वादु ३२ ननुसंतिवहूनिश्रेयांसितत्तत्फलसाधनानिसत्यंसंत्यभक्तानां भक्तस्यतुसर्वम हमेव अतोमदेकशरणोभवेत्याह ज्ञानइति ज्ञानादौयावान्धर्मादिलक्षणश्चतुर्विधोऽर्थस्तावान्सर्वोपितेऽह मेवतत्रज्ञानेमोक्षःकर्मणिविहितेधर्मः कर्मण्येवस्वाभाविकेतुकामः योगेत्वणिमादिसिद्धयः वार्त्तायांकृष्या ॥ दावर्थः दंडनीतावैश्वर्यमितिसिद्ध्यैश्वर्ययोरपिकामांतर्गतत्वाच्चातुर्विध्यं ३३॥

किंचयोयइति अयमर्थः किंवक्तव्यंमद्धर्मस्यनध्वंसइतियतोलौकिकोऽपियोयोनिरर्थःव्यर्थःआयासःसोऽपिमयिप
रेनिष्फलायचेत्कल्प्यतेनिष्कामतयाऽर्पितश्चेत्तर्हिधर्मएवस्यात् निरर्थायासेदृष्टांतः यथाभयशोकादेर्हेतोःपलाय
नाक्रंदनादिक्लेशस्तद्वत् २१ अतोमद्भजनमेवबुद्धेर्विवेकस्यमनीषायाश्चातुर्यस्यचफल मित्याहएषाइति तामेवदर्श
यतिसत्यममृतंचमामाअनृतेनासत्येन मर्त्येनविनाशिनामनुष्यदेहेनइहअस्मिन्नेवजन्मनिप्राप्नोतीतियत्सैवबुद्धि

योयोमयिपरेधर्मः कल्प्यतेनिष्फलायचेत् तदायासोनिरर्थःस्याद्भयादेरिवसत्तम २१
एषाबुद्धिमतांबुद्धिर्मनीषाचमनीषिणां यत्सत्यमनृतेनेहमर्त्येनाऽप्नोतिमाऽमृतम् २२ एष
तेऽभिहितः कृत्स्नोब्रह्मवादस्यसंग्रहः समासव्यासविधिनादेवानामपिदुर्गमः २३ अ
भीक्ष्णशस्तेगदितंज्ञानंविस्पष्टयुक्तिमत् एतद्विज्ञायमुच्येतपुरुषोनष्टसंशयः २४ सुवि
विक्तंतवप्रश्नंमयैतदपिधारयेत् सनातनंब्रह्मगुह्यंपरंब्रह्माऽधिगच्छति २५ यएतन्म
मभक्तेषुसंप्रदद्यात्सुपुष्कलं तस्याहंब्रह्मदायस्यदद्याम्यात्मानमात्मना २६॥ ६ ॥

र्मनीषाचेतिबुद्धिर्विवेकः मनीषाचातुर्यं २२ महाप्रकरणार्थमुपसंहरति द्वाभ्यांसमासव्यासविधिनासंक्षेपवि
स्तारप्रकारेणएषइति २३ २४ किंचआस्तांतावत्ज्ञानं एतदनुसंधानकथनपठनश्रवणपराणामप्येतदेव
फलंभवतीत्याह चतुर्भिः सुविविक्तमिति मयासुविविक्तंदत्तोत्तरं एतत् आख्यानमपियोधारयेत् अनुसं
दध्यात् ब्रह्मगुह्यंवेदेऽपिरहस्यं २५ सुपुष्कलंयथा भवतितथाब्रह्मदायस्यब्रह्मददातीतितथातस्यज्ञानोपदे

समोत्तमहीनेषु स्पर्द्धादयः स्वस्मिन्नहंकारश्च हि निश्चितं वियंति नश्यंति १५ अतोंतर्यामीश्वरदृष्ट्या सर्वान्प्रणमेदित्या
ह विसृज्येति स्मयमानानुहसतः स्वान् सखीन् तथा दैहिकीं दृशं अहमुत्तमः सतु नीच इति दृष्टिं तया दृशा या व्रीडा ल
ज्जा तां च विसृज्य श्वचांडालादीनभिव्याप्य प्रणमेत् १६ एवं पंचभिः श्लोकैरुक्तायाः समदृष्टेरवधिमाह द्वाभ्यां यावदिति
१७ तस्य एवं कुर्वतः पुंसः सर्वब्रह्मात्मकमेव भवति कुतः आत्ममनीषया सर्वत्रेश्वरदृष्ट्या या विद्या तया अतः परि।

स्पर्द्धासूयातिरस्काराः साहंकारा वियंति हि १५ विसृज्य स्मयमानान् स्वान् दृशं व्रीडां च
दैहिकीं प्रणमेद्दंडवद्भूमावाश्वचांडालगोखरं १६ यावत्सर्वेषु भूतेषु मद्भावो नोपजा
यते तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः १७ सर्वं ब्रह्मात्मकं तस्य विद्ययात्ममनी
षया परिपश्यन्नुपरमेत्सर्वतो मुक्तसंशयः १८ अयं हि सर्वकल्पानां सध्रीचीनो मतो मम
मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः १९ न ह्यंगोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्व
पि मया व्यवसितः सम्यङ्निर्गुणत्वादनाशिषः २० ॥ २९ ॥ ६ ॥ ६ ॥

तो ब्रह्मैव पश्यन् सर्वतः क्रियामात्रादुपरमेत् १८ किमयमेवोपायः अस्ति वान्योपि त्वपेक्षायां सत्त्विव
ह वः समीचीनस्त्वयमेवेत्याह अयं हीति १९ भगवद्धर्मलक्षणोपायस्य समीचीनत्वमेवोपपादयति।
द्वाभ्यां नहीति अंगाहे उद्धव अनाशिषो निष्कामस्य मद्धर्मस्य उपक्रमे सति अण्वपि ईषदपि वैगुण्यादिभि
र्नाशो नास्त्येव यतो मयैव निर्गुणत्वादयं धर्मः सम्यग्व्यवसितो निश्चितः न तु मन्वादिमुखेन कथंचित् २० ॥

पुण्यदेशलक्षणं मद्भक्तैरिति देवादिषु ये मद्भक्तास्तेषामाचरितानि कर्माणि चाश्रयेत् १० सत्रेण संभूय च ११ अंतरंगां भक्तिमाह मामिति त्रिभिः सर्वभूतेष्वात्मनि चात्मानमीश्वरं स्थितं मामेवेक्षेत ननु कथमेकस्य सर्वेषु वृत्तिः तत्राह बहिरंतरिति बहिरंतः पूर्णमित्यर्थः तत्कुतः अपावृतं अनावरणं तदपि कुतः यथा खं आसंगत्वादित्यर्थः १२ हे महाद्युते अतिप्राज्ञ इति अनेन प्रकारेण केवलं ज्ञानरूपां दृष्टिमाश्रितः सन् सर्वाणि भूतानि मद्भावेन मन्यमानः सभाज

देशान्पुण्यान्संश्रयेत मद्भक्तैः साधुभिः श्रितान् देवासुरमनुष्येषु मद्भक्ताचरितानि। च १० पृथक् सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ११ मामेव सर्वभूतेषु बहिरंतरपावृतं ईक्षेतात्मनि चात्मानं यथा खममलाशयः १२ इति सर्वाणि भूतानि मद्भावेन महाद्युते सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः १३ ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिंगके अक्रूरे क्रूरके चैव समदृक् पंडितो मतः १४ नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् ॥

११ यन्पंडितो मतः इत्युत्तरेणान्वयः १३ ननूत्तमाधमम धर्मेष्वेकरूपेण सभाजनमपांडित्यमेव स्यात् पूज्यपूजादिव्यतिक्रमादित्याशंक्यं तामेव ज्ञानदृष्टिं प्रपंचयति ब्राह्मण इति विषमेष्वपि समदृक् समं मामेव पश्यन् वैषम्यमेव च तद्बुद्धौ दर्शयति ब्राह्मणे पुल्कस इति जातितो वैषम्यं पुल्कसोऽन्त्यजातिविशेषः स्तेने ब्रह्मस्वहारिणि ब्रह्मण्ये ब्राह्मणेभ्यो दानशीले कर्मतः अर्के विस्फुलिंग इति गुणतः अक्रूरे शांते क्रूरे चेति स्वभावतः १४ नरेष्वीश्वरदृष्टिं कुर्वतः सद्यः फलविशेषमाह नरेष्विति ॥ ९

आत्मानमन्यभजनवार्त्तावत् कृतोपकारस्तव्यात्मनिवेदनेनैव निष्कृतिर्नान्यथेत्याह नैवेति अपचितिंप्रत्यु
पकारं आनृण्यमितियावत् कवयोब्रह्मविदोऽपिनैवप्राप्नुवंति यतः ततः कृतमुपकारंस्मरंतः ऋद्धमुदःउ
पचितपरमानंदाःउपकारमेवाह योभवानवहिराचार्यवपुषापुरुषरूपेण अंतश्चचैत्यवपुषांअंतर्यामिरूपेण
अशुभंविषयवासनांविधुन्वन्निरस्यन् स्वगतिंनिजंरूपंप्रकटयतितस्यतव ६ ईश्वरत्वेहेतुःजगत्क्रीडनकं

नैवोपयंत्यपचितिंकवयस्तवेशब्रह्मायुषाऽपिकृतमृद्धमुदःस्मरंतः योंऽतर्वहिस्त
नुभृतामशुभंविधुन्वन्नाचार्यचैत्यवपुषास्वगतिंव्यनक्ति ६ श्रीशुकउवाच इत्युद्ध
वेनाऽत्यनुरक्तचेतसापृष्टोजगत्क्रीडनकःस्वशक्तिभिः गृहीतमूर्त्तित्रयईश्वरेश्वरो
जगादसप्रेममनोहरस्मितः ७ श्रीभगवानुवाच हंततेवर्णयिष्यामिममधर्म्मान्
सुमंगलान् यांश्छ्रद्धयाचरन्मर्त्त्योमृत्युंजयतिदुर्जयं ८ कुर्यात्सर्वाणिकर्माणिमद
र्थंशनकैःस्मरन् मय्यर्पितमनश्चित्तोमद्धर्मात्ममनोरतिः ९॥ १ ॥ १ ॥

क्रीडोपकरणंयस्यसः ननुजगत्स्रष्टा दिनाब्रह्मेशादयःक्रीडंतितत्राह स्वशक्तिभिःसत्वादिभिः गृहीतंमूर्त्ति
त्रयंयेनसः सप्रेमप्रेमसहितमनोहरंस्मितंयस्यसः सप्रेमयथातथाजगादेतिवा ७ हंतेतिसहर्षसंबोधनंसुमंग
लान्सुखरूपान्मृत्युंसंसारंदुर्जयमन्यैरुपायैः ८ धर्मानेवाहकुर्यादितित्रयोदशभिः मांस्मरन् शनकैरसंर
भतःकुर्यात् तदाहमय्यर्पितेमनश्चितेसंकल्पवि कल्पानुसंधानात्मकेयेन अतएवमद्धर्मेष्वेवात्ममनसोःरति

तदधी त्वद्भक्तास्तु त्वत्प्रसादेन कृतार्था भवंतीति नातिचित्रमित्याह किमिति अनन्यशरणेषु दासेषु तवात्मसात्त्वं तत्रापि सहसा नत्वेतत्स्वयं नंदगोपीबलिप्रभृतिषु एतत् किं चित्रं नाश्चर्यमित्यर्थः यतो यो भवान् श्रीरामरूपेण मृगैर्वानरैः सहसख्यमितियावत् अरोचयत प्रीत्याकृतवान् कथंभूतः ईश्वराणां ब्रह्मादीनां यानि श्रीमंति किरीटादीनि तेषां तटान्यग्राणि तैः पीडितं विलुंठितं पादपीठं यस्य स्वयं तथाभूतोऽपि सन् ४ अतस्त्वां परित्यज्य कोनामान्यत्तं श्रयेदित्याह तं त्वेति तमेवंभूतं त्वां को नु विसृजेत न भजेत् कथंभूतः सुकृतवित् बलिप्रह्लादादिषु त्वया कृतमनुग्रहं जा

किं चित्रमच्युत तवैतदशेषबंधो दासेष्वनन्यशरणेषु यदात्मसात्त्वं योऽरोचयत्सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः ४ तं त्वाऽखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद्विसृजेत को नु को वा भजेत्किमपि विस्मृतयेऽनु भूत्यै किं वा भवेन्न तव पादरजोजुषां नः ५ ननु यद्ब्रह्मस्विमित्रे वांतर्यामिनं

नत्वा देवदमितया कृतमुपकारं विद्वान् तदेवाह अखिलात्मदयितेश्वरं अखिलस्य जगतः आत्मानं चेतयितारं आत्मत्वादेव दयितं श्रेष्ठं सुसेव्यं ईश्वरत्वादवश्यं भजनीयं किंच आश्रितानां सर्वार्थदं तर्हि किंफलोद्देशेनाहं सेव्यः न हि न हि किमपि अनिरुक्तं त्वद्व्यतिरिक्तं स्वर्गादि त्वया दत्तमपि को वा भजेत् सेवेत कथंभूतं ततयत्केवलं भूत्यै इंद्रियभोगाय अनुभूत्यै ऐश्वर्याय संसारस्य अनंतरमेव त्वद्विस्मृतये भवति यद्वा त्वद्व्यतिरिक्तं किमपि देवतांतरं धर्मज्ञानादिसाधनं वा भूत्यै विस्मृतये मोक्षाय वा को भजेत् न कोऽपि ननु तत्तत्साधनं विना भोगमोक्षादि फलं कथं स्यात्तत्राह किं वेति तदुक्तं यावेसा

॥ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे टीकायां ऽष्टाविंशोऽध्यायः २८ ऊनत्रिंशे तु यः पूर्वं विस्तरे
ण निरूपितः भक्तियोगस्तमेवाह स्वभक्तायसमासतः १ अति क्लेशमिवालक्ष्ययोगे ऽसंगैकसंपदि सुखो॥
पायं पुनः कृष्णमुद्धवः परिपृच्छति २ अनात्मनः अवशीकृतमनसः अंजसाऽप्रयासतो यथा सिद्ध्येत॥
तत्तथा यद्वा अंजसा सुबोधं यथा तथा मे ब्रूहि १ सुदुष्करतां प्रपंचयति प्रायश इति मनो युंजतो
निगृह्णतः वशीकुर्वतः विषीदंति क्लिश्यंति कुतः असमाधानात् अनिग्रहात् कथंचित् मनसो निग्रहे चक

॥ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे अष्टाविंशोऽध्यायः २८ उद्धव उ॥
वाच सुदुष्करामिमां मन्ये योगचर्यामनात्मनः यथां ऽजसा पुमान्सिद्ध्येत्तन्मे ब्रूह्यं ऽ॥
जसाच्युत १ प्रायशः पुंडरीकाक्ष युंजतो योगिनो मनः विषीदंत्यऽसमाधानान्मनोनि
ग्रहकर्शिताः २ अथात आनंददुघं पदांबुजं हंसाः श्रयेरन्नरविंदलोचन सुखं नु विश्वेश्वर
योगकर्मभिस्त्वन्मायया ऽमी विहता न मानिनः ३॥ ((र्शिताः श्रांताः संतः २ यस्मादेवं केचन विषीदंति

अथातः अत एव ये हंसाः सारासारविवेकचतुराः ते तु आनंददुघं समस्तानंदपरिपूरकं तव पदांबुजमेव सुखं
यथा भवति तथा नु निश्चितं श्रयेरन् सेवंते अमी तु त्वन्मायया विहताः के ये योगकर्मभिर्मानिनस्ते नाश्रयंते॥
यद्वा अमी त्वद्भक्ताः त्वन्मायया न विहताः अत एव योगकर्मभिः कृत्वा मानिनो न भवंति अन्ये तु त्वन्मायया मो॥
हिताः संतो वयं योगज्ञाः वयं कर्मकुशला इति केवलं गर्विता भवंति न तु मुच्यंत इत्यर्थः ३॥ ६ ६ ६ ॥

योगधारणयासोमसूर्यादिधारणयासंतापशैत्यादीन् आसनैर्वायुधारणान्वितैः वातादिरोगान् तपोमंत्रौषधैःपा-
पग्रहसर्पादिकृतान् ३९ ममानुध्यानादिभिःकामादीन् योगेश्वरानुवृत्त्यादंभमानादीन् हन्यात् ४० अस्मेतुदेहसिद्ध्य-
र्थमेवैतत्सर्वंकुर्वंतितत्दूषयति केचित्तुनरैतैरन्यैश्चोपायैर्देहमेवसुकल्पंजरारोगादिरहितंवयसितारुण्येस्थिरंचकृ-
त्वाअदृढपरकायप्रवेशादिसिद्धयेतत्तद्धारणारूपंयोगंयुंजंतिनतुज्ञाननिष्ठारूपं ४१ कुशलैःप्राज्ञैरादरणीयंनभ-

योगधारणयाकांश्चिदासनैर्धारणान्वितैः तपोमंत्रौषधैःकांश्चिदुपसर्गान्विनिर्दहेत् ३९
कांश्चिन्ममाऽनुध्यानेननामसंकीर्तनादिभिः योगेश्वरानुवृत्त्यावाहन्यादशुभदांश्छनैः ४०
केचिद्देहमिमंधीराःसुकल्पंवयसिस्थिरं विधायविविधोपायैरथयुंजंतिसिद्धये ४१॥
नहितत्कुशलादृत्यंतदायासोह्यपार्थकः अंतवत्त्वाच्छरीरस्यफलस्येववनस्पतेः ४२ यो-
गंनिषेवतोनित्यंकायश्चेत्कल्पतामियात् तच्छ्रद्दध्यान्नमतिमान्योगमुत्सृज्यमत्परः॥
४३ योगचर्यामिमांयोगीविचरन्मद्व्यपाश्रयः नांतरायैर्विहन्येत निस्पृहःस्वसुखानुभूः ४४

वतिवनस्पतिवदात्मैवस्थायीशरीरंतुफलवन्नश्वरमित्यर्थः ४२ ननुक्वचित्समाध्यंगत्वेनापिप्राणायामादियोगे
क्रियमाणेजरारोगाद्यभावोदृश्यते सत्यंतथाऽपिसमाधिमुत्सृज्यनतत्रसज्जेतेत्याह योगमितिनत्त्वांदेहसिद्धिंनश्रद्द-
ध्यातनविश्वसेत् ४३ तदेवंविघ्नप्रतीकारैर्योगंकुर्यादित्युक्तंमच्छरणस्यतुनविघ्नशंकापीत्याहयोगचर्यामितिविचरन्
आचरन्स्वसुखेअनुभूः अनुभूतिर्यस्यसः स्पृहामूलाहिविघ्नाःसाचमद्व्यपाश्रयस्यनिवर्ततेअतोऽतरायैरविहतःस्वानंद

॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांऽष्टाविंशोऽध्यायः २८ ऊनत्रिंशेतुयः पूर्वंविस्तरे
णनिरूपितः भक्तियोगस्तमेवाहस्वभक्तायसमासतः १ अतिक्लेशमिवालक्ष्ययोगेऽसंगेकसंपदि सुखो॥
पायंपुनःकृष्णमुद्धवः परिपृच्छति २ अनात्मनः अवशीकृतमनसः अंजसाऽप्रयासतोयथासिद्ध्येत्॥
तत्तथा यद्वा अंजसासुबोधंयथातथामेब्रूहि १ सुदुष्करतांप्रपंचयति प्रायशइति मनोयुंजतो
निगृह्णतः वशीकुर्वतः विषीदंतिक्लिश्यंति कुतः असमाधानात् अनिग्रहात् कथंचित्मनसोनिग्रहेचक

॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेअष्टाविंशोऽध्यायः २८ उद्धवउ।
वाच सुदुष्करामिमांमन्येयोगचर्यामनात्मनः यथांऽजसापुमान्सिद्ध्येत्तन्मेब्रूह्यं।
जसाच्युत १ प्रायशः पुंडरीकाक्षयुंजतोयोगिनोमनः विषीदंत्यऽसमाधानान्मनोनि
ग्रहकर्शिताः २ अथातआनंददुघंपदांबुजंहंसाश्रयेरन्नरविंदलोचन सुखंनुविश्वेश्वर
योगकर्मभिस्त्वन्मायया ऽमीविहतानमानिनः ३॥ ((र्शिताः श्रांताः संतः २ यस्मादेवंकेचनविषीदंति
अथातः अतएवयेहंसाः सारासारविवेकचतुराः तेतुआनंददुघंसमस्तानंदपरिपूरकंतवपदांबुजमेवसुखं
यथाभवतितथानुनिश्चितंश्रयेरन् सेवंते अमीतुत्वन्माययाविहताः केयेयोगकर्मभिर्म्मानिनस्तत्तोनश्रयंते॥
यद्वा अमीत्वद्भक्तास्त्वन्माययानविहताः अतएवयोगकर्मभिः कृत्वामानिनोनभवंति अन्येतुत्वन्माययामो॥
हिताः संतोवयंयोगज्ञाः वयंकर्म्मकुशलाइतिकेवलंगर्विताभवंतिनतुमुच्यंतइत्यर्थः ३॥ ६ ६ ६ ॥

ननुविदुषामपिसर्वथाकर्मदुष्परिहरमिति पुनःसंसारःस्यात् अतआह करोतीति विदुषोन्योसौजंतुर्देहएवभोज
नादिकर्म्मकरोति क्रियतेविक्रियतेच तेनकर्म्मणापुष्ट्याद्यपिप्राप्नोतीत्यर्थः केनापिसंस्कारादिनाचोदितःआ।
निपातान्मरणपर्यंतंकरोति विद्वांस्तुप्रकृतौदेहेस्थितोऽपितत्रकर्मणिनविक्रियतेनिरहंकारित्वात् हर्षविषादादि
भिःसंसारंनप्राप्नोति ३० किंच आस्तांतावद्दैहिककर्म्मभिर्विकारशंकायतोदेहमप्यसौनपश्यतीत्याह तिष्ठंतमि
ति उक्षंतंमूत्रयंतंस्वभावप्राप्तमन्यदपिदर्शनस्पर्शनादिर्ईहमानंकुर्वीतं आत्मानंदेहं ३१ नन्विंद्रियवतःसर्वथाक।

करोतिकर्मक्रियतेचजंतुः केनाऽप्यःसौचोदित आनिपातात् नतत्रविद्वान्प्रकृतौस्थितोपि
निवृत्ततृष्णः स्वसुखानुभूत्या ३० तिष्ठंतमासीनमुतव्रजंतंशयानमुक्षंतमदंतमन्नं स्वभावमन्य
त्किमपीहमानमात्मानमात्मस्थमतिर्नवेद ३१ यदिस्मपश्यत्यसदिंद्रियार्थंनानानुमानेनविरुद्ध
मन्यत् नमन्यतेवस्तुतयामनीषीस्वाप्नंयथोत्थायतिरोदधानम् ३२ पूर्वंगृहीतंगुणकर्मचित्रमज्ञा
नमात्मन्यऽविविक्तमंग॥

नन्वेवमदर्शनंसंभवतितत्राह यदिस्मेति यद्यपिअसतांबहिर्मुखानामिंद्रियाणामर्थं
पश्यति तथाऽपिनानात्वान्मिथ्यास्वप्नवदित्यनुमानेनविरुद्धंवाधितंसत् अन्यदात्म।व्यतिरिक्तंमनीषीवस्तुतयानम।
न्यते स्वप्नादुत्थायप्रबुद्धसंस्कारमात्रेणस्वाप्नंविषयंस्फुरंतं अतएवस्वयमेवतिरोभवंतंयथातद्वत् ३२ तदेवमात्मान
विक्रियतइत्युक्तंनन्वेतदनुपपन्नंवद्धावस्थयात्यज्यमानत्वात् मुक्तावस्थयाचगृह्यमाणत्वात् नहिव्रीहयोऽवघाते
नव्रीहिभावत्यागतस्तंडुलीभावेनगृह्यमाणानविक्रियंते तत्राह पूर्वमिति बद्धावस्थायांगुणैःकर्मभिश्चचित्रमज्ञा

आत्मन्यध्यासेनाविविक्तं गृहीतमासीत् तदेवपुनर्ज्ञानेनविनिवर्त्तते आत्मातुनकेनापिरूपेण गृह्यतेनापित्यज्यते अयं भावः मुक्तेः क्रियाफलत्वेतावदात्मनोविकारः नस्यारोपिताज्ञानमात्रनिवृत्तिरूपत्वान्नात्मसंस्पर्शित्वंबंधमोक्षयोः अतोन विकारइति ३३ एतदेवदृष्टांतेनस्पष्टयति यथेति नतुपूर्वमेवसद्घटादिपुनर्विधत्तेकरोति समीक्षाआत्मविद्या ३४ आत्म नोनिर्विकारतांप्रपंचयति एषइत्यनेनापरोक्षतयानित्यप्राप्तस्यात्मनःप्राप्तिंवारयति स्वयंज्योतिरित्यनेनाज्ञानमलायाव रणलक्षणांविकृतिंवारयति अजइत्युत्पत्तिंवारयति अप्रमेयइतिज्ञानलक्षणातिशयाधानेनसंस्कारंमहानुभूतिरि

निवर्त्तते तत्पुनरीक्षयैवनगृह्यतेनाऽपिविसृज्यआत्मा ३३ यथाहिभानोरुदयोन्नृचक्षुषां तमोनिहन्यान्नतुसद्विधत्ते एवंसमीक्षानिपुणासतीमेहन्यात्तमिस्रंपुरुषस्यबुद्धेः ३४॥
एषः स्वयंज्योतिरजोऽप्रमेयोमहाऽनुभूतिःसकलानुभूतिः एकोऽद्वितीयोवचसांविरा मेयेनेषितावागसवश्चरंति ३५॥

त्यनेनदेशकालपरिच्छेदाभावेनास्तित्ववृद्धिविपरिणामापक्षय नाशान् स्वयंज्योतिष्ट्वादौहेतुः सकलानुभूतिरिति एकोऽद्वितीयइतिविकारहेतोरप्यन्यस्याभावान्नकोपिविका रइतिदर्शयति ननुश्रुतिविषयस्यकथंस्वयंज्योतिष्ट्वादि तत्राह वचसांविरामेअगोचरत्वेननिवृत्तौसत्यां तथाच श्रुतिः यतोवाचोनिवर्त्ततेअप्राप्यमनसासहेति तत्रहेतुः येनेषिताःप्रेषिताः तथाचश्रुतिः केनेषितंपततिप्रे षितंमनः केनप्राणःप्रथमःप्रैतियुक्तः केनेषितांवाचमिमांवदंतिचक्षुःश्रोत्रंकउदेवोयुनक्ति श्रोत्रस्यश्रोत्रंयन् मनसोमनोयद्वाचोहवाचंप्राणस्यप्राणमुतचक्षुषश्चक्षुरिति ३५॥

अद्वितीयत्वमुपपादयितुं भेदस्यावास्तवत्वमाह एतावानिति केवलेऽभिन्ने आत्मन् आत्मनि विकल्प इति यत्
एतावान् सर्वोऽप्यात्मनो मनसः संमोहः भ्रमः यतः स्वमात्मानमृते विनाऽस्य विकल्पस्यावलंबः आश्रयो नास्ति रजत
भ्रमस्येव शुक्तिं विना नेह नानास्ति किंचन इंद्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेत्येवं इत्यादि
श्रुतेरित्यर्थः ३६ केचित्तु नः प्रत्यक्षादि प्रतीतस्य प्रपंचस्य बाधायोगात् वेदांतार्थानां चाक्रत्वर्थकर्तृप्रतिपा
दनपरत्वेनार्थवादत्वात् द्वैतं सत्यमिति मन्यंते तन्मतमनूद्य दूषयति यदिति नामाकृतिभिर्ग्राह्यं नामरूपोपल
क्षितं पंचवर्णं पंचभूतात्मकं द्वयं द्वैतं यत् तदबाधितमिति पंडितमानिनां अन्यत्र वयमेव पंडिता इत्यभिमानवतां

एतावानात्मसंमोहो यद्विकल्पस्तु केवले आत्मन्नृते स्वमात्मानमवलंबो न यस्य हि ३६
यन्नामाकृतिभिर्ग्राह्यं पंचवर्णमबाधितं व्यर्थेनाप्यऽर्थवादोऽयं द्वयं पंडितमानिनाम् ३७
योगिनोऽपक्वयोगस्य युंजतः काय उत्थितैः उपसर्गैर्विहन्येत तत्राऽयं विहितो विधिः ३८॥

वेदांतेष्वयमर्थवाद इति प्रतीतिः न तत्त्वविदां यतः व्यर्थेनापि विनाऽप्यर्थेन साप्रतीतिः तथाहि न ताव द्वि
ध्येक वाक्यत्वं तेषामस्ति यतोऽर्थवादत्वं स्यात् न वा कर्तृभोक्तृपरमानंदरूपात्मप्रतिपादनं कर्मविधिशेषतां
भजते न चाबाधितत्वं द्वैतस्य नामरूपात्मकत्वात् ग्राह्यत्वात् पंचवर्णात्मकत्वात् स्वप्नवदित्याद्यनुमानैर्वा
चारंभणादिश्रुतिभिश्च बाधितत्वादिति ३७ तदेवं ज्ञानयोगं सपरिकरं निरूप्येदानीं तन्निष्ठस्य विघ्नप्रतीका
रमाह योगिन इति त्रिभिः योगं युंजतः कायो यद्यंतरे वोत्पन्नैः उपसर्गै रोगाद्युपद्रवैः अभिभूयते विधिः प्रतीकारः ३८॥

योगधारणयासोमसूर्यादिधारणयासंतापशैत्यादीन् आसनैर्वायुधारणान्वितैः वातादिरोगान् तपोमंत्रौषधैःपा पग्रहसर्पादिकृतान् ३९ ममानुध्यानादिभिःकामादीन् योगेश्वरानुवृत्त्यादंभमानादीन् हन्यात् ४० अन्येतुदेहसिद्धि मेवैतत्सर्वंकुर्वंतितद्दूषयति केचित्तुनरेतरन्यैश्चोपायैर्देहमेवसुकल्पंजरारोगादिरहितंवयसितारुण्येस्थिरंचकृ त्वाअदंडुपरकायप्रवेशादिसिद्धयेतत्तद्धारणारूपंयोगंयुंजंतिनतुज्ञाननिष्ठारूपं ४१ कुशलैःप्राज्ञैरादरणीयंनभ

योगधारणयाकांश्चिदासनैर्धारणान्वितैः तपोमंत्रौषधैःकांश्चिदुपसर्गान्विनिर्दहेत् ३९
कांश्चिन्ममाऽनुध्यानेननामसंकीर्तनादिभिः योगेश्वरानुवृत्त्यावाहन्यादशुभदांश्छनैः ४०
केचिद्देहमिमंधीराःसुकल्पंवयसिस्थिरं विधायविविधोपायैरथयुंजंतिसिद्धये ४१॥
नहितत्कुशलादृत्यंतदायासोह्यपार्थकः अंतवत्त्वाच्छरीरस्यफलस्येववनस्पतेः ४२ यो गंनिषेवतोनित्यंकायश्चेत्कल्पतामियात् तच्छ्रद्दध्यान्नमतिमान्योगमुत्सृज्यमत्परः॥
४३ योगचर्यामिमांयोगीविचरन्मद्व्यपाश्रयः नांतरायैर्विहन्येत निस्पृहःस्वसुखानुभूः ४४

वतिवनस्पतिवदात्मैवस्थायीशरीरंतुफलवन्नश्वरमित्यर्थः ४२ ननुक्वचित्समाध्यंगत्वेनापिप्राणायामादियोगे क्रियमाणेजरारोगाद्यभावोदृश्यते सत्यंतथाऽपिसमाधिमुत्सृज्यनतत्रसज्जेतेत्याह योगमितिनतत्तांदेहसिद्धिंनश्रद्द ध्यात्नविश्वसेत् ४३ तदेवंविघ्नप्रतीकारैर्योगंकुर्यादित्युक्तंमच्छरणस्यतुनविघ्नशंकापीत्याहयोगचर्यामितिविचरन् आचरन्स्वसुखेअनुभूःअनुभूतिर्यस्यसःस्पृहामूलाहिविघ्नाःसाचमद्पाश्रयस्यनिवर्त्ततेअतोऽतरायैरविहतःस्वानंद

असंगब्रह्मत्वेनावस्थितस्य नकोऽपिगुणदोषाइत्याकाशदृष्टांतेनाह यथेति वाय्वादीनांशोषणदहनक्लेदनर
जोधूसरत्वादिभिर्गतागतैरागमापायिभिः ऋतुगुणैःशीतोष्णादिभिर्वा अहंमतेः अहंकारात्परमक्षरंसंसृतिहेतुभि
र्नयुज्यते यद्वा हंकारस्यसंसृतिहेतुभिरिति २६ मुक्तवदसम्यग्ज्ञानीनयथेष्टमाचरेदित्याह द्वाभ्यांनथाऽपी
तिगुणेषुविषयेषुरज रागः मनसः कषायइति दुर्निरासतामाह २७ तदेवंदृष्टांतेनोपपादयति यथेति नृणा

यथानभोवाय्वनलांवुभूगुणैर्गतागतैर्वर्तुगुणैर्नसज्जते तथाऽक्षरंसत्वरजस्तमोमलैर
हंमतेः संसृतिहेतुभिःपरम् २६ तथाऽपिसंगःपरिवर्ज्जनीयोगुणेषुमायारचितेषुतावत्
मद्भक्तियोगेनदृढेनयावद्रजोनिरस्येतमनःकषायः २७ यथाऽमयोऽसाधुचिकित्सितो
नृणांपुनःपुनःसंतुदतिप्ररोहान् एवंमनोऽपक्वकषायकर्म्मकुयोगिनंविध्यतिसर्वसं
गं २८ कुयोगिनोयेविहितांऽतरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः तेप्राक्तनाभ्यासवले
नभूयोयुंजंतियोगंनतुकर्मतंत्रं २९ ॥ १९ ॥

आमयोरोगः असाधुअसम्यक्कृयथाभवति तथाअ
पक्वकषायकर्म्म अदग्धाः कषायारागादयस्तन्मूलानिकर्म्माणियस्मिन्तत् अतएवसर्वसंगंसर्वेषुपुत्रा
दिषुसज्जमानंमनः कुयोगिनंअसम्यग्ज्ञानिनंविध्यतिभ्रंशयति २८ ननुकथंचिद्विषयसंगेयदियोगभ्रंशः
स्यात् अलंतर्हिसोपायेनयोगमार्गेणतत्राह कुयोगिनइति मनुष्यभूतैर्वंधुशिष्यादिरूपैः त्रिदशैरुपसृ
ष्टैःप्रेरितैः तथाचश्रुतिः यस्मात्तदेषांनप्रियंयदेतन्मनुष्याविद्युरिति भूयोजन्मांतरेनतुकर्मतंत्रंकर्म्मविस्तारं २९॥

उपसंहरति एवंनिगमतपः प्रत्यक्षमैतिह्यमनुमानैः स्फुटंयथाभवतितथाब्रह्मविवेकहेतुभिः तथापर।स्यदेहादेरपवादेन आत्मनिरासेनच कीदृशेनविशारदेननिपुणेनगुरुणा नि।मित्तभूतेनेति वा आत्म।विषयंसंदेहंछित्वास्वानंदतुष्टः सन्नखिलेभ्यः कामुकेभ्यइंद्रियादिभ्यउपारमेतनिःसंगोभवेत् २३ परापवादंप्रपंचयति वपुरात्मानभवति पार्थिवत्वात् घटवत् तथाइंद्रियाणितदधिष्ठातारोवादेवाः असुः प्राण।धिषणाबुद्धिः सत्वंचित्तंअहंकृतिरित्येतेआत्मानभवंतिकुतः अन्नमात्रअन्नोपष्टंभ्यत्वात् शरीरवत् वा।

एवंस्फुटंब्रह्मविवेकहेतुभिः परापवादेनविशारदेन छित्वाऽत्मसंदेहमुपारमेतस्वानंदतुष्टोऽखिलकामुकेभ्यः २३ नात्मावपुः पार्थिवमिंद्रियाणिदेवा।ह्यऽसुर्वायुजलंहुताशः मनोऽन्नमात्रंधिषणाचसत्वमहंकृतिः खंक्षितिरर्थसाम्यम् २४ समाहितैःकःकरणैर्गुणात्मभिर्गुणोभवेन्मत्सुविविक्तधाम्नः विक्षिप्यमाणैरुतकिंनुदूषणंघनैरुपेतैर्विगतैरवेःकिम् २५॥ वायुर्जलंचहुताशस्तेजः खंक्षितिरितिपंचभूतानि अर्थाःशब्दादयः साम्यंप्रकृतिः नात्माजडत्वात् घटवदितियद्वा हिशब्देनानुमानांतराणिसूचितानितद्यथाइंद्रियाण्यात्मानभवंति करणत्वात्मनोवत् प्राणत्वात् वायुत्वाद्वाबाह्यवायुवदित्यादि २४ एवंविवेकज्ञानवतोमुक्तस्यनेंद्रियादिकृतगुणदोषसंबंधइत्याह समाहितैरिति मत्सुविविक्तधाम्नः ममसुष्ठुविविक्तंधामस्वरूपंयेनतस्यप्रकाशकस्यप्रकाश्यगुणदोषानभवंतीतिरविदृष्टांतेनोक्तम् २५ ॥ १ ॥ १ ॥ १ ॥

नुभातिसर्वंतस्यभासासर्वमिदंविभातीति तथाचक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रंमनसोयेमनोविदुरित्यादिश्रुतेश्च
ननुविशेषविज्ञानव्यतिरेकेणनतुर्यनामोपलभामहेतत्राह व्यतिरेकतश्चसमाध्यादौयदस्तितदेवसत्यमिति २०
एवंकालत्रयेऽप्यव्यभिचारिणःसत्यत्वमुक्तं व्यभिचारिणस्त्वसत्यतामाह नयदितियद्भूतंकार्यंपुरस्तादुत्पत्तेर्नभवति
यच्चपश्चान्नाशाच्चन मध्येचतत्स्वरूपनास्तिकिंतुव्यपदेशमात्रंकुतःयतःयद्यत्परेणअन्येनभूतंजातंप्रसिद्धंप्रका
शितंचतत्तदेवकारणप्रकाशकंतावन्मात्रंस्यान्नपृथगितिमेमनीषाबुद्धिःवाचारंभणंविकारोनामधेयंमृत्तिके
त्येवसत्यं सर्वंखल्विदं ब्रह्मेत्यादिश्रुतेः कारणप्रकाशकव्यतिरेकेणकार्यस्यप्रकाश्यस्यचानुपलंभादितिभावः

समन्वयेनव्यतिरेकतश्चयेनैवतुर्येणतदेवसत्यम् २० नयत्पुरस्तादुतयन्नपश्चान्नमध्येच
तन्नद्व्यपदेशमात्रं भूतंप्रसिद्धंचपरेणयद्यत्तदेवतत्स्यादितिमेमनीषा २१ अविद्यमानो
प्यवभासतेयोवैकारिकोराजससर्गएषः ब्रह्मस्वयंज्योतिरतोविभातिब्रह्मेंद्रियार्थात्मविका
रचित्रम् २२॥५,२१ एवंसामान्यतःकार्यप्रकाश्ययोःकारणप्रकाशकाभ्यामभेदंव्युत्पाद्यप्रस्तुतेतदुभयवि

वेकपूर्वकंप्रपंचस्यब्रह्माभेदमाह अविद्यमानइतियोऽयंवैकारिकःविकारसमूहः सएवप्रागविद्यमानोरा
जससर्गःरजोद्वारेणब्रह्मकार्यभूतइत्यर्थः अवभासतेऽपिब्रह्मप्रकाश्यश्चेत्यर्थः ब्रह्मतुस्वयंस्वतःसिद्धं नतु
कार्यमित्यर्थः ज्योतिश्चप्रकाशकमित्यर्थः अतःकारणात् इंद्रियाणिचअर्थास्तन्मात्राणिचआत्मा मनश्च
देवानामप्युपलक्षणंविकाराः पंचभूतानिएवंचित्रंब्रह्मैवभातीति २२ ॥ २२ ॥ २२ ॥ २२ ॥

तदेवज्ञानंस्वरूपसाधनफलैर्निरूपयति ज्ञानमिति विवेकोज्ञानं साधनान्याह निगमोवेदः तपः स्वधर्मः प्रत्यक्षं।
स्वानुभवएतिह्यमुपदेशः अनुमानंतर्कः फलमाह आद्यंतयोर्यदस्यजगतः मध्येऽपितदेवकेवलंनतुजगदितिकिं
तत्कालः कलयतिप्रकाशयतियः तथाहेतुःकारणंचयत्तदेवएतदुक्तंभवतियदस्यविश्वस्यकारणंप्रकाशकंचब्र।
ह्मतदात्मकमेवैतत्ततः पृथगित्येवंनिश्चयकत्वेनिगमादिसाधनैर्जायतेयोविवेकः तत्ज्ञानमिति १८ तत्रनाना
भेदव्यवहारालंबनस्यापिविश्वस्यकारणमात्रात्मकत्वंसदृष्टांतमाह यथेतिसुकृतंसुष्ठुकुंडलादिरूपेणविरचितंय
द्धिरण्यकीदृशंहिरण्मयस्यकुंडलादेरुत्पत्तेःपुरस्तान्नाशाच्चपश्चाच्चयदस्तिकटककुंडलमित्यादिनानाव्यपदेशैर्व्यव

ज्ञानंविवेकोनिगमस्तपश्चप्रत्यक्षमैतिह्यमथाऽनुमानं आद्यंतयोरस्ययदेवकेवलंकाल
श्वहेतुश्चतदेवमध्ये १८ यथाहिरण्यंसुकृतंपुरस्तात्पश्चाच्चसर्वस्यहिरण्मयस्य तदेव
मध्येव्यवहार्यमाणंनानापदेशैरहमस्यतद्वत् १९ विज्ञानमेतत्त्रियवस्थमंगगुणत्रयकारणका
र्यकर्तृ॥ १९ हारंप्राप्यमाणमपितदेवयथा तद्वदस्यविश्वस्यकारणभूतोऽहमेवनानाव्यवहारालंब

नंनतुमत्तः पृथग्विश्वमिति १९ तदेवंकार्यस्यकारणमात्रात्मकतामुक्त्वाप्रकाशस्य प्रकाशकात्मतामा
हविज्ञानमितित्रियवस्थंयकारस्यपृथक्पाठश्छंदोनुरोधेनजाग्रदादित्र्यवस्थंयद्विज्ञानंमनः तदवस्थाकारण
रूपंचयद्गुणत्रयं यच्चकारणकार्यकर्तृकारणमध्यात्मंकार्यमधिभूतंकर्तृअधिदैवंएवंगुणत्रयकार्यभूः
तंत्रिविधंजगत्एतद्येनतुर्येणसामान्यज्ञानमात्रेणसमन्वयेनभवतियेनानुगतंप्रकाशतइत्यर्थः तमेवमंतम

२८
भा॰ए॰
१२२

ननुकथंचिज्ज्ञानतोविषयस्फूर्त्तिर्ज्जीवन्मुक्तस्यापिदुर्वारेत्यनिर्मोक्षप्रसंगः स्यात् तत्राह यथाहीति प्रस्वापः स्वप्नः बहूननर्थान्बिभर्त्तिपुष्णातीतितथा १४ अहंकारलक्षणोदेहादिसन्निकर्षएवसंसारालंबनमित्यन्वयव्यतिरेकाभ्यांदर्शयति शोकेति सुषुप्त्यादौतेषामदर्शनात् अहंसुखीतिवच्चैतन्यंसुखीतिप्रतीत्यभावाच्चदृश्यत्वाच्चसुखादीनांकृशत्वादिवत्द्रष्टृधर्म्मत्वानुपपत्तेरितिभावः १४ ननुयद्यहंकारस्यसंसारस्तर्हिमुक्तिरपितस्यैवेतिमुक्तावहंकारावशेषः प्रसज्येतत त्राह देहेतिदेहादिष्वभिमानोयस्यसः आत्मैवतेषामंतर्हितोजीवः

यथाह्यप्रतिबुद्धस्यप्रस्वापोबह्वनर्थभृत् सएवप्रतिबुद्धस्य नवैमोहायकल्पते १४ शोकहर्षभयक्रोधलोभमोहस्पृहादयः अहंकारस्यदृश्यंतेजन्ममृत्युश्चनात्मनः १५ देहेंद्रियप्राणमनोभिमानोजीवोऽंतरात्मागुणकर्म्ममूर्त्तिः सूत्रंमहानित्युरुधेवगीतः संसारआधावतिकालतंत्रः १६ अमूलमेतद्बहुरूपरूपितंमनोवचः प्राणशरीरकर्म्म ज्ञानासिनोपासनयाशितेनच्छित्वामुनिर्गांविचरत्यतृष्णः १७ ॥ ६ ॥

अतएवगुणकर्म्ममयीमूर्त्तिर्यस्यसः एवंचसूक्ष्मोपाधिभिर्बहुधेवसूत्रादिशब्दैर्गीतः संसारेषएवस्वराधीनः सर्वतोधावति अतोनायंदोषइतिभावः १६ तदेवमहंकारकृतंबंधमुपपाद्येदानींज्ञानेनतन्निवृत्तौमुक्तिरित्याह अमूलमितिवस्तुतोमूलशून्यंअज्ञानतस्तुबहुभीरूपैर्देवादिशरीरैरूपितंप्रकाशितंऐंद्रजालिकतुल्यमितिवाकिंतत् तदाह मनइतिमनआदीनांद्वंद्वः यद्वामनआदिषुक्रियतइतिकर्म्मअहंकरणंगुरूपासनयानिशितेनतीक्ष्णेनज्ञानखड्गेनछित्वा

राम
१२२

आत्मसंविदास्वानुभवेनसर्वंदृश्यमाद्यंतवत् असच्चेतिज्ञात्वानिः संगः तदासक्तिशून्यः ८ ननुयद्या
त्मसंविदासर्वंदृश्यमसदित्युच्यते तर्ह्यात्मास्वप्रकाशोदेहादिद्वैतंचजडमित्युक्तंस्यात् तथाचसंसारंप्रतिभा
सोनघटेतेतिचोदयतिनैवेति अनात्मसद्दृशोः जडाजडयोः अत्रहेतुः द्रष्टृदृश्ययोर्माभूत्द्वयोरपितत्राहउपल
भ्यतइति १० एतत्प्रपंचयति आत्मेति अव्ययत्वादिपंचविशेषणैर्नाशादिरागादिपुण्यापुण्याज्ञानपरिच्छेदाना
मसंभवंदर्शयति हेतुहेतुमत्वंतुयथेष्टम् अचित्जडः अयंभावः यथैवाग्निदारुणोर्भेदेनानुपलंभेऽपिदारुप्रका

आद्यंतवदसत्ज्ञात्वानिः संगोविचरेदिह ८ उद्धवउवाच नैवात्मनोनदेहस्यसंसृति
द्रष्टृदृश्ययोः अनात्मसद्दृशोरीशकस्यस्यादुपलभ्यते १० आत्माऽव्ययोगुणः शुद्धः स्वयं
ज्योतिरनावृतः अग्निवद्दारुवदचिद्देहः कस्येहसंसृतिः ११ श्रीभगवानुवाच यावद्दे
हेंद्रियप्राणैरात्मनः संनिकर्षणम् संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः १२ अर्थेह्यऽ
विद्यमानेपिसंसृतिर्ननिवर्त्तते ध्यायतोविषयानस्यस्वप्नेऽनर्थागमोयथा १३ ॥ ॥

श्यमेव अग्निश्चप्रकाशकः तथादेहात्मनोरपीति नसंसृतिस्तयोरन्यतरस्यापिघटतइति ११ सत्यंतथाऽप्युभ
योरेवमविवेकएवसंसारालंबनमित्याह पंचभिः यावदिति सन्निकर्षणंसंबंधः नन्वसंगस्यकुतः संबंधः तत्राह
अविवेकिनः अज्ञानकृतइत्यर्थः ननुस्वप्रकाशस्यकथमज्ञानतः संसारस्तत्राह अपार्थोपिकेवलंफलवान्
फलंस्फुर्त्तिर्नतुतत्वतोस्तीत्यर्थः १२ नन्वसतोदेहादेः कुतः संसारस्फूर्त्तिहेतुत्वमपितत्राह अर्थेहीति असात्मनः १३

द्वैतासत्यतयास्तुतिनिंदयोर्निर्विषयत्वंप्रपंचयतिसार्द्धैः षड्भिः किंभद्रमिति अवस्तुनोद्वैतस्यमध्येकिंभद्रंकिंवाऽभद्रंकियत्भद्रंकियद्वाऽभद्रमित्यर्थः अवस्तुत्वमेवाह वाचेतिवाद्यैंद्रियोपलक्षणं वाचाउदितंउक्तंचक्षुरादिभिश्चयद्दृश्यंतदनृतमिति ४ नन्वेवंसतिदेहादिभावानामप्यसत्वात्कथंभयहेतुत्वंतत्रसदृष्टांतमाह छायाप्रतिबिंबः प्रत्याह्वयः प्रतिध्वनिः आभासःशुक्तिरजतादिएतेयथाऽसंतोऽप्यर्थकारिणोभवंति अमृत्युतःमृत्युमभिव्याप्ययद्वामृत्युलयःयावन्नैवलीयंते

किंभद्रंकिमभद्रंवाद्वैतस्याऽवस्तुनःकियत् वाचोदिततदनृतंमनसाध्यातमेवच ४ छायाप्रत्याह्वयाभासाह्यऽसंतोऽप्यर्थकारिणः एवंदेहादयोभावायच्छंत्यामृत्युतोभयं ५ आत्मैवतदिदंविश्वंसृज्यतेसृजतिप्रभुः त्रायतेत्रातिविश्वात्माह्रियतेहरतीश्वरः ६ तस्मान्नह्यात्मनोऽन्यस्मादन्योभावोनिरूपितः निरूपितेयंत्रिविधानिर्मूलाभातिरात्मनि इदंगुणमयंविद्धित्रिविधंमाययाकृतं ७ एतानिजन्मदुदितंज्ञानविज्ञाननैपुणं॥ ॥ ननिंदतिनचस्तौतिलोकेचरतिसूर्यवत् ८ प्रत्यक्षेणानुमानेननिगमेनात्मसंविदा॥ एतावत्पर्यंतमित्यर्थः एतनुसृष्ट्यादिश्रुतिभिरेवद्वैतंनिरूपितंकथमसत्यंस्यात्तत्राह आत्मैवेतिसार्द्धद्वाभ्यां त्रायतेपाल्यतेत्रातिपालयति ६ अन्यस्मात्सृज्यादिव्यतिरिक्तात् त्रिविधा आध्यात्मिकादिरूपाभातिः प्रतीतिः ननुकथंनिर्मूलंप्रतीयते तत्राह इदमिति ७ ज्ञानविज्ञानयोर्निपुणंनिष्ठांसूर्यवत्समोभूत्वा ८ एतन्निष्ठाप्राप्त्युपायमाह प्रत्यक्षेणेतियदाद्यंतवत्तद्वैतंतदसदितिज्ञात्वानिःसंगोविचरेत् आद्यंतवत्वेप्रमाणानिप्रत्यक्षेणघटादिषुअनुमानेनसावयवत्वेनदृश्यंपृथिव्यादिनिगमेना

कर्तुर्यत्फलंतदेवान्येषामपीत्याह कर्तुरिति सारथेः सहकारिणो हेतोः प्रयोजकस्य अनुमोदितुश्च प्रेत्य एतत्फलमित्यन्वयः कुतः यतः कर्मणामेते भागिनः भागार्हाः तत्रापि विशेषमाह भूयसि कर्म्मणि सारथ्यादौ च भूयः अधिकं फलमिति पयः पत्रादिमात्रेण पूजितो यः परं पदं प्रागेवदिशति प्रीतः सकृष्णः शरणं मम ५५ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे टीकायां सप्तविंशोऽध्यायः २७ अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः ज्ञानयोगः पुनश्चासौ समाहृत्य निरूप्यते १ इदानीमति विस्तरेणोक्तं ज्ञानयोगं संक्षेपेण वक्तुमाह परेषां स्वभावान् शांतघोरादीन् कर्म्माणि तत्र हेतुः वि

कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलं ५५ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे सप्तविंशतितमोऽध्यायः २७ श्रीभगवानुवाच ॥

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च १

परः स्वभावकर्माणि यः प्रशंसति निंदति स आशु भ्रश्यते स्वार्थादसत्यभिनिवेशतः २ ॥

तैजसे निद्रयापन्ने पिंडस्थो नष्टचेतनः मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक्पुमान् ३ ॥

श्वमिति १ विपक्षे दोषमाह परेति स्वार्थात् ज्ञाननिष्ठालक्षणात् असति मिथ्याभूते द्वैतेऽभिनिवेशात् २ अंशमेव दृष्टांतेनोदर्शयति तैजसे राजसाहंकारकार्ये इंद्रियगणे निद्रया आपन्ने अभिभूते सति पिंडस्थो जीवः केवलं मनोमात्रेण मायां स्वप्नरूपां प्राप्नोति ततो मनसि लीने सति नष्टचेतनः सन् मृत्युं वा मृत्युतुल्यां सुषुप्तिं वा प्राप्नोति यथा तद्वदेव नानार्थदृक् द्वैताभिनिवेशी विक्षेपं लयं च प्राप्नोति यथा प्राज्ञसंपर्काद्धि स्वप्नसंभोगक्षयलक्षणोऽस्य भ्रंशः एवमनात्मसंपर्कादात्म

एतेष्वधिष्ठानेषु किं मुख्यतममित्यपेक्षायामाह अर्चादिष्विति यदा यत्र श्रद्धा तदा तत्र न त्वधिष्ठाने मुख्यामुख्यत्वं कुतः यतः
सर्वभूतेषु आत्मनि च सर्वात्माहमवस्थित इति ४८ उभयतः इहामुत्र च ४९ समर्थं प्रत्याह मदर्चामिति त्रिभिः पुष्पोद्याना
नि च कारयेत् पूजायात्रोत्सवाश्रितान् पूजा प्रत्यहं यात्रा विशिष्टे पर्वणि बहुजनसमागमः उत्सवः वसंतादिमहोत्सवः
तदाश्रितान् क्षेत्रादीन्दत्वा ५० पूजायात्रोत्सवाश्रितानित्यस्य विवरणं पूजादीनामिति प्रवाहार्थं संततानुवृत्त्यर्थं म

अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् सर्वभूतेष्वात्मनि च सर्वात्माऽहमवस्थितः ४८
एवं क्रियायोगपथैः पुमान्वैदिकतांत्रिकैः अर्चन्नुभयतः सिद्धिं मत्तो विंदत्यभीप्सितां ४९
मदर्चां संप्रतिष्ठाप्य मंदिरं कारयेद्दृढं पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान् ५०
पूजादीनां प्रवाहार्थं महापर्वस्वथाऽन्वहं क्षेत्रापणपुरग्रामान्दत्वा मत्सार्ष्टितामियात् ५१ प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयं पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात्
५२ मामेव नैरपेक्ष्येण भक्तियोगेन विंदति भक्तियोगं स लभत एवं यः पूजयेत मां ५३ यः
स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः वृत्तिं स जायते विड्भुग्वर्षाणामयुतायुतं ५४ ॥ ६ ॥

त्सार्ष्टितां मत्समानैश्वर्यं ५१ प्रतिष्ठादीनां व्यस्तसमस्तानां फलमाह प्रतिष्ठयेति मत्साम्यतां मया साम्यमित्यर्थः ॥
५२ सकामं प्रत्युक्तं अहैतुकभक्तं प्रत्याह मामेवेति अहैतुकः भक्तियोगः एव कथं भवति तत्राह भक्तियोगमिति
५३ दातुः फलमुक्तं अपहर्तारं निंदति य इति विड्भुक् विष्ठाभोजी कृमिः ५४ ॥ ६ ॥ ६ ॥ ६ ॥

ततोवन्हिस्थंभगवंतमंतर्यामिणमभ्यर्च्यपुष्पधूपादिभिः अथनमस्कृत्यपार्षदेभ्योनंदादिभ्योऽष्टसुदिक्षुवलिंहरेतत
तःपूजास्थानमागत्यदेवस्याग्रेसमुपविश्ययथाशक्तिमूलमंत्रंजपेत् ४२ तत्र उभयत्रभगवतोभोजनसमाप्तिंध्यात्वा
आचमनंदत्वाउच्छेषंविष्वक्सेनायकल्पयित्वातदनुज्ञयापश्चात्स्वयंभुंजीत ततःसुरभिमतस्सुगंधवत्तांबूलाद्यंमु
खवासंदत्वाऽथपुनरपिअर्हयेत्पुष्पांजलिनापूजयेत् ४३ अभिनयन्स्वस्मिन्नाविष्कुर्वन् क्षणिकःवैयग्र्यंपरित्य

अभ्यर्च्याऽथनमस्कृत्यपार्षदेभ्योवलिंहरेत् मूलमंत्रंजपेद्ब्रह्मस्मरन्नारायणात्मकं ४२ दत्वा
चमनमुच्छेषंविष्वक्सेनायकल्पयेत् मुखवासंसुरभिमत्तांबूलाद्यमथाऽर्हयेत् ४३ उपगा
पनृगृणन्नृत्यन्कर्माण्यऽभिनयन्मम मत्कथाःश्रावयंशृण्वन्मुहूर्तंक्षणिकोभवेत् ४४ स्त
वैरुच्चावचैःस्तोत्रैःपौराणैःप्राकृतैरपि स्तुत्वाप्रसीदभगवन्नितिवंदेतदंडवत् ४५ शिरोम
त्पादयोःकृत्वावाहुभ्यांचपरस्परं प्रपन्नंपाहिमामीशभीतंमृत्युग्रहार्णवात् ४६ इतिशे
षांमयादत्तांशिरस्याधायसादरं उद्वासयेच्चेदुद्वास्यंज्योतिर्ज्योतिषितत्पुनः ४७॥ ॥

त्यलब्धावसरोभवेत् ४४ स्तवस्तोत्राणांभेदंदर्शयति पौराणैःप्राकृतैरपीति ४५ कथंप्रणमेदित्यपेक्षायामाह शिर
इतिवाहुभ्यांदक्षिणोत्तराभ्यांपरस्परंममदक्षिणोत्तरौपादौगृहीत्वायद्वाएवंततःपरस्परंनिवद्धाभ्यांकृतापराधइवप्रप
न्नमित्यादियत्नस्याचप्रणमेत् ४६ ततःशेषाग्रहणपूर्वकंवैकल्पिकोद्वासनप्रकारमाह इतीति अनयैवप्रार्थनयाशेषां
निर्माल्यंमयादत्तांध्यात्वाशिरस्याधायधृत्वायद्युद्वासयेत्तर्हिप्रतिमायांयन्मत्तंज्योतिस्तत्पुनरपिहृत्पद्मस्थज्योतिषि

४७
भा. ए.
११६

विस्तारोच्छ्रायतस्तिस्रो मेखलाश्चतुरंगुलाः हस्तमात्रो भवेद्गर्तः स योनिर्वेदिका तथेत्यादि उदितं प्रज्वलितमग्निं परितः समू
हेत एकत्र मेलयेत् ३६ दर्भैः परिस्तीर्य परितः प्रोक्षयेत् अन्वाधाय अन्वाधानसंज्ञकं व्याहृतिभिः समित्प्रक्षेपादिरूपं कर्म।
हुत्वा अग्नेरुत्तरतो द्रव्याणि होमोपयोगीन्यासाद्य निधाय प्रोक्षण्या प्रोक्षणीपात्रोदकेन प्रोक्ष्याग्नौ मां ध्यायेत् ३७ शंखादि
भिरुद्भासमतः शोभमानाश्चत्वारो भुजा यस्य तं ३८ स्फुरंति किरीटादीनि यस्य तं ३९ हविषा घृतेन अभिघृतानि संसिक्तानि।
दारूणि शुष्कसमिधः प्रास्य प्रक्षिप्य आघारौ तत्संज्ञकौ यागौ एवमाज्यभागौ च दत्वा तदर्थौ आहुती ईर्हुत्वेत्यर्थः तत्राघारौ प्र

अग्निमाधाय परितः समूहेत्पाणिनोदितं ३६ परिस्तीर्याऽथ पर्युक्षेदन्वाधाय यथाविधि प्रोक्ष्या।
प्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत मां ३७ तप्तजांबूनदप्रख्यं शंखचक्रगदांबुजैः लसच्चतुर्भु।
जं शांतं पद्मकिंजल्कवाससम् ३८ स्फुरत्किरीटकटककटिसूत्रवरांगदं श्रीवत्सवक्षसं भ्राज
त्कौस्तुभं वनमालिनं ३९ ध्यायन्नभ्यर्च्य दारूणि हविषाऽभिघृतानि च प्रास्याज्यभागावाघारौ
दत्वा चाज्यप्लुतं हविः ४० जुहुयान्मूलमंत्रेण षोडशर्चावदानतः धर्मादिभ्यो यथान्यायं मंत्रैः स्वि
ष्टकृतं बुधः ४१ ॥ प्रजापतये स्वाहा इंद्राय स्वाहेति चोत्तरदक्षिणपरिधिसंधिमारभ्याग्निमध्यादापरिध्यंतं घृत
क्षरणरूपौ आज्यभागौ अग्नये स्वाहा सोमाय स्वाहेत्येवं त्येवहोमरूपौ ४० मूलमंत्रेण अष्टाक्षरेण तथा षोडशर्चाय।
स्मिन्तेन पुरुषसूक्तेन च अवदानतः प्रत्यृचमाहुतिग्रहणेनेत्यर्थः पुरुषसूक्तेनाराधनपक्षे स एव मूलमंत्रः तेनैव प्रत्यृच
मवदानतो होमः इति मंत्रैः स्वाहांतैर्नाममंत्रैः यथान्यायं पूजाक्रमेणैव अग्नये स्विष्टकृते स्वाहेत्येवं स्विष्टकृतं च हुत्वा ४२।

राम
११६

तानेवगुणविधिभिः प्रपंचयति चंदनेतिषड्भिः ३० मंत्रानाह स्वर्णघर्मानुवाकः सुवर्णघर्म्मपरिवेदनत्वेन मित्यादि महापुरु
षविद्या जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन सुब्रह्मण्य नमस्तेस्तु महापुरुष पूर्वजेति पौरुषंपुरुषसूक्तं सहस्रशीर्षेत्यादि
नीराजनादीनि सामानि इंद्रंनरोनेमधितावहंतइत्यस्यामृचिगातानि आदिशब्देन रौहिणादीनि ३१ वस्त्राद्युपचारेष्वलं
कारलक्षणंगुणंविधत्ते वस्त्रेति पत्राणि कपोलवक्षस्थलादिषु लिखिताः पत्रभंग्यः मद्भक्तश्चेत्सप्रेमयथाभवतितथा ३२

सलिलैः स्नापयेन्मंत्रैर्नित्यदा विभवे सति ३० स्वर्णघर्मानुवाकेन महापुरुषविद्यया पौरुषेणा।
पि सूक्तेन सामनीराजनादिभिः ३१ वस्त्रोपवीताभरणपत्रस्रगांधलेपनैः अलंकुर्वीत सप्रेम म।
द्भक्तो मां यथोचितं ३२ पाद्यमाचमनीयं च गंधं सुमनसोऽक्षतान् धूपदीपोपहार्याणि दद्यान्
मे श्रद्धयाऽर्चकः ३३ गुडपायससर्पींषि शष्कुल्यापूपमोदकान् संयावदधिसूपांश्च नैवेद्यं स।
तिकल्पयेत् ३४ अभ्यंगोन्मर्दनादर्शदंतधावाभिषेचनं अन्नाद्यंगीतनृत्यानि पर्वणि स्युरुतान्
वहं ३५ विधिना विहिते कुंडे मेखलागर्त्तवेदिभिः॥ (९ यथोचितमलंकुर्वीतेत्युक्तार्थं सर्वसाधारणं श्र

द्धालक्षणंगुणंविधत्ते पाद्यमिति ३३ नैवेद्यवैभवलक्षणंगुणंविधत्ते गुडपायसेति शष्कुल्यः तैलपक्वविशेषाः आपूपाः
अपूपानां मंडकादीनां समूहाः सूपाः व्यंजनादि सति विभव इति शेषः ३४ कालभेदेन गुणंविधत्ते अभ्यंगेति अभिषेचनं
पंचामृतादिस्नपनं अन्नाद्येति अन्नंभोज्यं आद्यं भक्ष्यं पर्वण्येकादश्यादौ अन्वहंप्रत्यहंवा विभवे सतीति ३५ फलभूय
स्त्वार्थिनोऽग्नावपि पूजाप्रकारमाह विधिनास्वगृह्योक्तप्रकारेण मेखलादिभिरुपलक्षिते विहिते निर्म्मिते तदुक्तं

२७
भा॰ए॰
११८

रुपचारैः संपूजयेत्तन्मय: सन्नर्ध्यादिष्वावाह्य स्थापनमुद्रया स्थापयित्वा २४ कथं पूजयेत्तदाह पाद्येति द्वाभ्यां धर्म्मादिभिर्म्ममास
नं २५ तत्र पद्मं च कल्पयित्वोभाभ्यां वेदतंत्राभ्यामुभयसिद्धये मह्यं पाद्यादीनुपचारान्प्रकल्पयेदित्यन्वयः उपस्पर्शः आचमनं अ
र्हणमर्घ्यम् उभयसिद्धये वेदतंत्रोक्तभुक्तिमुक्तिप्राप्तये अयमर्थः धर्मज्ञानवैराग्यैश्वर्याण्यासनपर्य्यंकस्याग्नेयादिचतुष्कोणे
षु पादाः अधर्म्मादीनि पूर्वादिदिक्षु गात्राणि त्रयो गुणाः पट्टिकाः तत्र पूर्वादिक्रमेण मध्ये च कर्णिकायां विमलोत्कर्षिणी

आवाह्यार्चादिषु स्थाप्य न्यस्तांगं मां प्रपूजयेत् २४ पाद्योपस्पर्शार्हणादीनुपचारान्प्रकल्पयेत् ध
र्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम २५ पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् उभाभ्यां वे
दतंत्राभ्यां मह्यं तूभयसिद्धये २६ सुदर्शनं पांचजन्यं गदासीषुधनुर्हलान् मुशलं कौस्तुभं मालां
श्रीवत्सं चानुपूजयेत् २७ नंदं सुनंदं गरुडं प्रचंडं चंडमेव च महाबलं बलं चैव कुमुदं कुमुदेक्षणं
२८ दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून्सुरान् स्वे स्वे स्थाने त्वभिमुखान्पूजयेत्प्रोक्षणादिभिः २९
चंदनोशीरकर्पूरकुंकुमागरुवासितैः॥ ५॥ ज्ञानाक्रियायोगा प्रह्वी सत्येशानाऽनुग्रहेति नव शक्तयः एवं य
थोपदेशं धर्मादिभिर्नवभिश्च शक्तिभिरासनं कल्पयित्वेति कर्णिकया केसरैस्तत्रस्थसूर्यादिमंडलैश्चोज्ज्वलमित्यर्थः २६
आयुधादिपूजामाह सुदर्शनमिति त्रिभिः तत्र न्यस्तांगमित्यंगावरणपूजा सूचिता आसनेनैव शक्त्यावरणमप्युक्तं ततः
सुदर्शनादिमुशलांतान्यायुधान्यष्टदिक्षु कौस्तुभमालाश्रीवत्सानुरसि २७ नंदादीन्पार्षदानष्टदिक्षु गरुडं पुरतः २८ दुर्गा
दीनि कोणेषु गुरून्वामतः सुरानिंद्रादिलोकपालान्पूर्वादिदिक्षु एवमेतान्देवस्याभिमुखान्प्रोक्षणादिभिः अर्घ्यादिभिः पूज

राम
११८

अनंतरं गुर्वादिनमस्कारपूर्वकं यथोपदेशं स्वस्मिन् कृतन्यासः कृतो मूलमंत्रन्यासो यस्यां तां ममार्चां आमृजेत् निर्माल्याद्यप
कर्षणादिना शोधयेत् कलशं पूर्णकुंभं प्रोक्षणीयं प्रोक्षणार्थोदकपात्रं उपसाधयेत चंदनपुष्पादिभिः संस्कुर्यात् २० तदद्भिः
प्रोक्षणीयाद्भिः देवयजनं देवपूजास्थानं पाद्यार्घार्थं त्रीणि पात्राणि कलशोदकैः पूरितानि तैस्तैर्द्रव्यैः साधयेत् २१ तत्र पाद्यादि
द्रव्याणि पाद्ये श्यामाकदूर्वाऽब्जविष्णुक्रांतादिरिष्यते गंधपुष्पाक्षतयवकुशाग्रतिलसर्षपाः दूर्वा चेति क्रमादर्घद्रव्याष्टकमु
दीरितं १ जातीलवंगकंकोलैर्मतमाचमनीयकमिति तानि च त्रीणि यथाक्रमं हृदयादिमंत्रैर्गायत्र्या च सर्वाण्यभि

कृतन्यासः कृतन्यासां मदर्चां पाणिना मृजेत् कलशं प्रोक्षणीयं च यथावदुपसाधयेत् २० त
दद्भिर्देवयजनं द्रव्याण्यात्मानमेव च प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् २१ पाद्या
र्घाचमनीयार्थं त्रीणि पात्राणि देशिकः हृदा शीर्ष्णाऽथ शिखया गायत्र्या चाऽभिमंत्रयेत् २२।
पिंडे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम अणवीं जीवकलां ध्यायेन्नादांते सिद्धभाविताम् २३ तया
ऽत्मभूतया पिंडे व्याप्ते संपूज्य तन्मयः॥

मंत्रयेत् २२ तदनंतरं पिंडे देहे वाय्वग्निसंशुद्धे इति कोष्ठगतेन
वायुना शोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचंद्रमंडलामृतप्लावनेनामृतमये जाते तस्मिन् हृत्पद्मस्थां प
रां श्रेष्ठां जीवकलां श्रीनारायणमूर्तिं ध्यायेत् कथंभूतां नादांते सिद्धैर्भावितां प्रणवस्याकारोकारमकारबिन्दुनादाः पं
चांशाः तत्र नादांते सिद्धैर्ध्यातां तथा च श्रुतिः यो वेदादौ स्वतः प्रोक्तो यो वेदांते प्रतिष्ठितः तस्य प्रकृतिलीनस्य यः परः स म
हेश्वर इति २३ तयाऽत्मभूतया स्वेनैव भावेन चिंतितया अमृतमये पिण्डे दीपेन प्रभया गृहमिव व्याप्ते सति तस्मिन्नेवादौ मानसै

२७
भा॰ए॰
११७

अस्थिरायामर्चने विकल्पः शालग्रामे न कुर्यात् सैकत्यां कुर्यात् अन्यत्र कुर्याद्वा न वेति अविलेप्यायां मृन्मयलेख्यव्यतिरिक्तायां अन्यत्र विलेप्यायां लेख्यानां च परिमार्जनमेव १४ इदानीं सकामनिष्कामभेदेन विशेषमाह द्रव्यैरिति प्रकर्षेण सिद्धैः सुशोभनैः अमायिनो निष्कामस्य भक्तस्य तु यथालब्धैः यत्र चंदनादि सर्वथा न लभ्यते तत्र हृदि भावेन भावनया यद्वा हृदि चेन्मद्यागः तदा भावेन मनोमयैर्द्रव्यैरित्यर्थः १५ अधिष्ठानभेदेन प्रधानोपचारमाह सार्द्धेन स्नानेति तत्त्व

अस्थिरायां विकल्पः स्यात्स्थंडिले तु भवेद्द्वयं स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् १४ द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः भक्तस्य च यथालब्धैर्हृदि भावेन चैव हि १५ स्नानालंकरणं प्रेष्ठमर्चायामेव तूद्धव स्थंडिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः १६ सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि १७ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते गंधो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः १८ शुचिः संभृतसंभारः प्राग्दर्भैः कल्पितासनः आसीनः प्रागुदग्वाऽर्चेदर्चायामथ संमुखः १९ ॥ ६ ॥

विन्यासः यथास्थानमंगप्रधानदेवतानां तत्तन्मंत्रैः स्थापनं १६ अभ्यर्हणं उपस्थानाचोदि सलिलादिभिस्तर्पणादिना यजनं सर्वत्र साधारणमाह श्रद्धयेति १७ १८ एवमधिकारादिव्यवस्थामुक्त्वेदानीं पूजाप्रकारमाह शुचिरिति संभृताः संभाराः पूजासाधनानि येन सः प्रागग्रैर्दर्भैः यद्वा प्रागेव संभृतसंभारः सन्नासीनः न त्वासीनः सन्यस्थानात्त्तत्संभारार्थं वारंवारमुत्तिष्ठेदित्यर्थः प्राङ्मुख उदङ्मुखो वा आसीनः अर्चायां तु स्थिरायां संमुख अर्चाभिमुख उपविष्टः

राम
११७

वैदिकएवमंत्रोवैदिकान्येवचांगानिचयस्मिन्पुरुषसूक्तादौसवैदिकः एवंतांत्रिकोऽपिमिश्रोऽष्टाक्षरादिःमखःपूजा ७ य।
दात्रैवर्णिकोयजेततदाविशेषमाह यदागर्भाष्टमैकादशद्वादशाब्दादिकालेस्वनिगमेनस्वाधिकारप्रवृत्तेनवेदेनोक्तंद्विज
त्वउपनयनं ८ अर्चायांप्रतिमादौ ९ स्नानेविशेषमाह उभयैर्वैदिकैस्तांत्रिकैश्चमंत्रैः १० किंचसंध्योपासनादीनिकर्म्माणि

वैदिकस्तांत्रिकोमिश्रइतिमेत्रिविधोमखः त्रयाणामीप्सितेनैवविधिनामांसमर्चयेत् ७ यदा।
स्वनिगमेनोक्तंद्विजत्वंप्राप्यपूरुषः यथायजेतमांभक्त्याश्रद्धयातन्निबोधमे ८ अर्चायांस्थंडि
लेऽग्नौवासूर्येवाप्सुहृदिद्विजे द्रव्येणभक्तियुक्तोऽर्चेत्स्वगुरुंमाममायया ९ पूर्वंस्नानंप्रकुर्वी
तधौतदंतोऽंगशुद्धये उभयैरपिचस्नानंमंत्रैर्मृद्ग्रहणादिभिः १० संध्योपास्त्यादिकर्माणि
वेदेनाचोदितानिमे पूजांतैःकल्पयेत्सम्यकूसंकल्पःकर्मपावनीं ११ शैलादारुमयीलौ
हीलेप्यालेख्याचसैकती मनोमयीमणिमयीप्रतिमाऽष्टविधास्मृता १२ चलाचलेतिद्विवि।
धाप्रतिष्ठाजीवमंदिरं उद्वासावाहनेनस्तःस्थिरायामुद्धवाऽर्चने १३॥ चोदितानिसाकल्येनवि

हितानियस्ययानितैःसहमेपूजांकुर्यात्ननतुतानिपरित्यज्येदित्यर्थः सम्यक्परमेश्वरविषयएवसंकल्पोयस्यतः।
थाभूतःसन्कर्म्मपावनींकर्म्मनिहारिणीं ११ अर्चाभेदानाहसार्द्धेनशैलाशिलामयीलेख्यामृच्चंदनादिमयी हृदिपूजा
यांमनोमयी १२ प्रकर्षेणतिष्ठत्यस्यामितिप्रतिष्ठाप्रतिमैवजीवस्यभगवतोमंदिरंयद्वाप्रतिष्ठयाकलान्यासेनभगव।
न्मंदिरंभवतीति प्रतिमाभेदेनविशेषमाह सार्द्धेन उद्वासोविसर्जनं १३॥ ❋॥ ९ ❋ ९॥ लोहीस्वर्णादिमयीउनु ॥

॥इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांषड्विंशोऽध्यायः २६ सप्तविंशेक्रियायोगःसद्यश्चित्तप्रसादकः। सर्वकामाप्तिहेतुश्च सांगःप्रोक्तः समासतः १ एगाद्याकुलचित्तानांकुतोऽसंगादिसंभवः इतिकृष्णार्चनंभद्रमनु स्मृत्यानुपृच्छति २ क्रियायोगमिति भवदाराधनरूपंयस्मादितिकरणाधिष्ठानादिप्रश्नः सर्वकारकाणांनिमित्तत्वस्याविशिष्टत्वात्तयेतिएकस्मिन्नधिष्ठानादौकेनप्रकारेणेतिप्रश्नः येऽधिकारिणः सात्वताःभक्ताः १ अस्यपुनर्विशेषतः प्रश्नेकारः

॥इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेऐलगीतंनामषड्विंशतितमोऽध्यायः २६ श्रीउद्धवउवाच क्रियायोगंसमाचक्ष्वभवदाराधनंप्रभो यस्मात्त्वांयेयथाऽर्चंतिसात्वताःसात्वतर्षभ १ एतद्वदंतिमुनयोमुहुर्निःश्रेयसंनृणां नारदोभगवान्व्यासआचार्योऽगिरसःसुतः २ निःसृतंतेमुखांभोजाद्यदाहभगवानजः पुत्रेभ्योभृगुमुख्येभ्योदेव्यैचभगवान्भवः ३ एतद्वैसर्ववर्णानामाश्रमाणांचसंमतं श्रेयसामुत्तमंमन्येस्त्रीशूद्राणांचमानद ४ एतत्कमलपत्राक्षकर्मबंधविमोचनं भक्तायचाऽनुरक्तायब्रूहिविश्वेश्वरेश्वर ५ श्रीभगवानुवाच नह्यंतोऽनंतपारस्यकर्मकांडस्यचोद्धव संक्षिप्तंवर्णयिष्यामियथावदनुपूर्वशः ६॥ १९ एणमाह चतुर्भिः एततत्वदर्चनंनिःश्रेयसकरंवदंति अंगिरसःसुतोबृहस्पतिः २ निःसृतंत्वयोपदिष्टमित्यर्थः देव्यैपार्वत्यै ३ सर्ववर्णानांत्रैवर्णिकानां ४ विश्वेश्वराणांब्रह्मादीनामीश्वरः ५ कर्मकांडस्यपूजाविधानस्य नास्त्यंतोग्रंथतःपारंवाऽनुष्ठानतोयस्यतस्य ६ ॥ ०॥

श्रवणादिभिरेव मत्पराः श्रद्दधानाश्च संतो भक्तिं विंदंति २९ ३० विभावसुमग्निं सेवमानस्य अप्येति नश्यति ॥
तथा कर्मादिजाड्यं आगामिसंसारभयं तन्मूलमज्ञानं च नश्यतीत्यर्थः ३१ निमज्ज्योन्मज्जतां उच्चावचयोनीर्गच्छ-
तां परमायणं परमाश्रयः ३२ किंच यथाऽन्नमेव प्राणो जीवनं अहमेव यथा शरणं धर्म एव यथा प्रेत्य परलोके

ता ये शृण्वंति गायंति ह्यनुमोदंति चादृताः मत्पराः श्रद्दधानाश्च भक्तिं विंदंति ते मयि २९
भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते मय्यनंतगुणे ब्रह्मण्यानंदानुभवात्मनि ३० य-
थोपश्रयमाणस्य भगवंतं विभावसुं शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा ३१ निम-
ज्ज्योन्मज्जतां घोरे भवाब्धौ परमायणं संतो ब्रह्मविदः शांता नौर्दृढेवाप्सु मज्जतां ३२ अ-
न्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहं धर्मो वित्तं नृणां प्रेत्य संतोऽर्वाग्बिभ्यतोऽरणं ३३॥
संतो दिशंति चक्षूंषि बहिरर्कः समुत्थितः देवता बांधवाः संतः संत आत्माऽहमेव च ३४॥
वैतसेनस्ततोऽप्येवमुर्वश्यालोकनिस्पृहः मुक्तसंगो महीमेतामात्मारामश्चचार ह ३५ ॥६

वित्तं तथा संत एव अर्वाक् संसारपाताद्बिभ्यतः पुंसः अरणं शरणं ३३ किंच संतश्चक्षूंषि सगुणनिर्गुणज्ञानानि
अर्कः पुनः सम्यगुत्थितोऽपि बहिः तदप्येकमेव चक्षुरित्यर्थः ३४ अध्यायार्थमपसंहरति वैतसेन इति मघम्नभा-
वेनैमावनप्रविष्टस्य वीतासेनाह्यस्त्रीभावप्राप्तायस्ततस्य स्त्रीभावप्राप्तस्य पुत्रो वैतसेनः पुरूरवाः एवमुक्तप्रकारेणोर्वश्यालोकात्स्था-
नादवलोकनाद्वा निस्पृहः ततोऽपि मत्संगादपि हेतोर्मुक्तसंगः सन्नात्मारामो भूत्वा यथेष्टं चचारेति ३५ ॥ ॥

त्वगादिसंहतौ तत्संघाते देहे विण्मूत्रादिसंहतौ रमतां कृमीणां वा २१ यद्यप्येवं बीभत्सिता एव स्त्रियः अथापि नो
पसज्जेत अवलोकनादिनाऽपि संगं न कुर्यात् अर्थवित् विवेकी अत्र हेतुः विषयेति २२ ननु क्वचिन्निमीलितन
यनादेरपि मनः क्षोभो दृश्यते सत्यं सोऽपि पूर्वदर्शनादिकं विना न भवतीत्याह अदृष्टादिति भावात् पदार्थात् भा

विण्मूत्रपूये रमतां कृमीणां कियदंतरं २१ अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चाऽर्थवि
त् विषयेंद्रियसंयोगान्मनः क्षुभ्यति नाऽन्यथा २२ अदृष्टादश्रुताद्भावान्न भाव उपजायते अ
संप्रयुंजतः प्राणान् शाम्यति स्तिमितं मनः २३ तस्मात्संगो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेंद्रियैः
विदुषां चाप्यविश्रब्धः षड्वर्गः किमु मादृशाम् २४ श्रीभगवानुवाच एवं प्रगायन्नृपदेव
देवः स उर्वशीलोकमथो विहाय आत्मानमात्मन्यवगम्य मां वै उपारमत् ज्ञानविधूतमो
हः २५ ततो दुःसंगमुत्सृज्य सत्सु सज्जेत बुद्धिमान् संत एतस्य छिंदंति मनोव्यासंगमुक्तिभिः
२६ संतोऽनपेक्षा मच्चित्ताः प्रशांताः समदर्शिनः निर्ममा निरहंकारा निर्द्वंद्वा निष्परिग्रहाः २७
तेषु नित्यं महाभाग महाभागेषु मत्कथाः संभवंति हिता नॄणां जुषतां प्रपुनंत्यघं २८ ॥ एवो मनःक्षो

भः अतः प्राणान् इंद्रियाणि असंप्रयुंजतः नियच्छतः स्तिमितं निश्चलं सत् २३ इंद्रियैः कृत्वा अविश्रब्धः अविश्वसनी
यः मादृशां अविवेकिनां २४ फलितमाह द्वाभ्यां एवमिति नृपेषु देवेषु च दीव्यतीति तथा २५ उक्तिभिः हितोपदेशैः
रिति तीर्थदेवादिसंगादपि सत्संगः श्रेयानिति दर्शयति २६ संतां लक्षणमाह संत इति विशेषणाष्टकस्य यथेष्टं हेतुहेतुम

पूर्वं पुंश्चल्या पहृतं चित्तमित्यादिना तस्या अपकारोऽनुस्मृतः इदानीं ममैवायमपराध इत्याह किमेतयेति नः अस्मा
कं कामिनां एतया किमपकृतं न किंचिदपि यथा रज्जुस्वरूपा विदुषो रज्जुद्रष्टुः पुंसस्तस्या सर्प्पकल्पनया खिद्य
तोऽपि रज्ज्वा किमपिनापकृतं तद्वत् यद्यस्माद्योऽहमेवंभूतः स एवाजितेंद्रियत्वादपराधीत्यर्थः १७ ननु तथाऽ
पि सैव सौगंध्यप्रेमादिगुणैः संमोहमूलमित्याशंक्य तेऽपि स्वमतिपरिकल्पिता एवेत्याह चतुर्भिः क्वायमिति मली
मसः अतिमलिनः सुमनसां कुसुमानामिव गंधसौकुमार्यादिसौमनस्यं शोभनमनोभावो वा १८ ममत्वमपि तस्मि

किमेतयानोपकृतं रज्ज्वा वा सर्प्पचेतसः रज्जुस्वरूपाविदुषो योऽहं यदजितेंद्रियः १७ क्वायं
मलीमसः कायो दौर्गंधाद्यात्मकोऽशुचिः क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः १८
पित्रोः किं स्विन्नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः किमात्मनः किं सुहृदामिति यो नावसीयते।
१९ तस्मिन्कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः २०॥
त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ॥

न्नपरिकल्पितमेवेत्याह पित्रोः किं स्वं कायः
जनकत्वात् नु वितर्के भार्याया वा भोगप्रत्वात् अत्रानुपयुक्तमप्येतन्न्यायतुल्यत्वादुक्तं स्वामिनो वा अधीन
त्वात् अग्नेर्वा अंते दाहकत्वात् श्वगृध्रयोर्वा भक्ष्यत्वात् किंवा आत्मनः तत्कृतशुभाशुभभागित्वात् सुहृदां वा उप
कारित्वात् एवं यो न निश्चीयते १९ तुच्छा कृमिविड्भस्मलक्षणा निष्ठा अंतो यस्य तस्मिन् काये कलेवरे प्रियत्वेन गृहीते वि
षंगमेवाह अहो इति सुनसं शोभननासिकं २० अतो गुणारोपेण रममाणा मादृशाः कृमिसमा इत्याह॥ ९ ॥

तत्रतदस्तीत्याह सपरिच्छदंराज्यादिसहितंईश्वरंचक्रवर्तिनंतृणमिवत्यक्त्वायांतीमपिअन्वगमंअनुगतोऽस्मि १० किं
चममप्रभावाद्यभिमानोवृथैवेत्याह कुतस्तस्यमेतेजोबलंखरोयथापादताडितोऽपिखरीमनुगच्छतितद्वत् ११ एवंभूत
स्यसर्वंसाधनंव्यर्थमित्याह किमितित्यागेनसंन्यासेन विविक्तेनएकांतसेवयामौनेनवाङ्नियमेन १२ अनुतप्तःसा
न्त्वात्मानंनिंदति द्वाभ्यांस्वार्थस्येति अकोविदमज्ञातारंगोखरवत् गौरिवखरइवेति १३ अधरासवंसेवमानस्या

पांतींस्त्रियंचान्वगमं नग्नउन्मत्तवद्रुदन् १० कुतस्तस्याऽनुभावःस्यात्तेजईशत्वमेववा यो
ऽन्वगच्छंस्त्रियंयांतींखरवत्पादताडितः ११ किंविद्ययाकिंतपसाकिंत्यागेनश्रुतेनवा किं
विविक्तेनमौनेनस्त्रीभिर्यस्यमनोहृतम् १२ स्वार्थस्याकोविदंधिङ्मांमूर्खंपंडितमानिनंयो
ऽहमीश्वरतांप्राप्यस्त्रीभिर्गोखरवज्जितः १३ सेवतोवर्षपूगान्मेउर्वश्याअधरासवं नतृप्यत्या
त्मभूःकामोवह्निराहुतिभिर्यथा १४ पुंश्चल्याऽपहृतंचित्तंकोन्वन्योमोचितुंप्रभुः आत्मारामे
श्वरमृतेभगवंतमधोक्षजम् १५ वोधितस्यापिदेव्यामेसूक्तवाक्येनदुर्मतेः मनोगतोमहामोहो
नाऽपयात्यजितात्मनः १६॥ १४ त्मभूर्मनसिजःपुनःपुनरुद्भवत् १४ एवमष्टभिःनिर्वेदोनिरूपितःइदानींतस्य
विवेकमाह दशभिः पुंश्चल्येतिअयंभावःकर्मभिर्देवानिष्टाद्दुःखमेवप्राप्तोऽस्मिअतःपरमेश्वर मेवभजेयमि
ति १५ परमेश्वरप्रसादंविनादेवैरुपदिष्टादपिवेदवाक्यान्मोहोननिवर्ततइत्याह वोधितस्यापीति देव्याउर्वश्यासूक्तवा
क्येनयथार्थवचनेन पुरूरवोमामृथामाप्रतप्तोमात्वाद्वृकासोअशिवासउक्षन् नवैस्त्रैणानिसख्यानिसंतिशालावृकी

ततोनिर्विण्णः सन्निमां गाथामगायत्तेतिनवमस्कंधानुसारेणद्रष्टव्यं ४ प्राक्तनीं मोहावस्थामाह त्यक्त्वेति आत्मानं राजानं सत्त्वा घोरेति। तिष्ठेति हयेजाये मनसातिष्ठ घोरे वचांसि मिश्राकृणवावहैनु ननौमं त्रा अनुदिता सएनेमयस्करन्नान रिचन्नाहत्रित्येवं मंत्रैर्विलपन् ५ वैक्लव्ये कारणमाह कामानिति वर्षाणां यामिनीः रात्रीः यांतीः अपयांतीः आयांतीः आगामिनीः उर्वश्या आकृष्टचेतनायस्सतः ६ तस्य गंधर्वलोके प्राप्तस्य बहुकालमुर्वशीसंभोगानंतरं निर्विण्णस्य।

उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ४ त्यक्त्वात्मानं व्रजंतीं तां नग्न उन्मत्तवन्नृपः विलपन्नन्वगाज्जाये घोरे तिष्ठेतिविक्लवः ५ कामानतृप्तोऽनुजुषन्क्षुल्लकान्वर्षयामिनीः नवेद यांतीर्नायांतीरुर्वश्याकृष्टचेतनः ६ ऐलउवाच अहो मे मोहविस्तारः कामकश्मलचेतसः देव्या गृहीतकंठस्य नायुःखंडाइमे स्मृताः ७ नाहं वेदाभिनिर्मुक्तः सूर्यो वाभ्युदितोऽमुया मुषितो वर्षपूगानां वताऽहानि गतान्युत ८ अहो मे आत्मसंमोहो येनात्मा योषितां कृतः॥ क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ९ सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरं॥

गाथामाहाष्टादशभिः तत्राष्टभिरनुतापः प्रपंच्यते अहो इति यतो मया इमे अहोरात्ररूपा आयुः खंडान। स्मृताः ७ तदेवाह नाहमिति अभिनिर्मुक्तः मयि रममाणे अस्तंगातः अभ्युदितो वा सूर्य इति अमुया उर्वश्या वंचितः वत खेदे उत अपि वर्षपूगानामिति गतान्यहानि नवेदेति ८ येन संमोहेन आत्मा देहः क्रीडामृग। वत अधीनः ९ ननु प्रणयकुपिताया अनुनयार्थमधीनतायुक्तैव सत्यंन

षड्विंशे योगनिष्ठाया विघातो दुष्टसंगतः साधुसंगेन तन्निष्ठा परा काष्ठेति वर्ण्यते १ योगिनो योगविभ्रंशः संगतः संभवेदिति स र्वथा तन्निवृत्त्यर्थं मैलगीतं वितन्यते २ निःसंगो मां भजेत् विद्वान् अप्रमत्तो जितेंद्रियः इत्युक्तं तत्र विपक्षे ऽनर्थं कथयिष्यन् जी वन्मुक्तस्यापि तर्हि संगो दुर्वार इत्यनर्थः स्यादित्याशंक्योक्तानुवादपूर्वकं परिहरति सार्द्धाभ्यां मल्लक्षणं मत्स्वरूपं लक्ष्यते ये न तमिमं नरदेहं लब्ध्वा मद्धर्मे भक्तिलक्षणे आस्थितः सन् आत्मस्थं आत्मन्येव नित्यं वृत्तत्वेन स्थितं परमानंदरूपमात्मानं मा मुपैति सम्यक् प्राप्नोति १ न चैवंभूतस्य विषयसंगो नामास्तीत्याह गुणमय्येति गुणमयी या जीवयोनिः जीवोपाधिस्त॥

श्रीभगवानुवाच मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः आनंदं परमात्मानमात्मस्थं समु पैति मां १ गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः २ वर्त्तमानो ऽपि न पुमान्युज्यते ऽवस्तुभिर्गुणैः संगं न कुर्यादसतां शिश्नोदरतृपां क्वचित् तस्या नुगस्तमस्यंधे पतत्यंधानुगांधवत् ३ ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः॥ ६ ॥

या विमुक्तः गुणेषु वर्त्तमानो ऽपि तैर्न युज्यते संगं न प्राप्नोति अत्र हेतुः अवस्तुभिः न न्ववस्तुभिरप्यन्ये युज्यमाना दृश्यंते त त्राह अवस्तुत्वेन दृश्यमानेषु २ तथापि संगं वर्जयेदित्याह संगमिति असतां लक्षणमाह शिश्नोदरे तर्पयंतीति शिश्नो दरतृपस्तेषां क्वचित्कदाचिदपि आस्तां तावद्बहूनां संगः किं तु तस्यैकस्याप्यनुगः अनुवर्त्ती अंधमनुगच्छतीति यो ऽध स्तद्वत् ३ अत्रेतिहासमाह ऐलः पुरूरवाः सम्राट् चक्रवर्त्ती बृहच्छ्रवः कीर्त्तिर्यस्य सः उर्वशीविरहात्प्रथमं मुह्य न्पश्चात् कुरुक्षेत्रे तां समागमय्य गंधर्वदत्तेनाग्निनोदेवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य शोकसंयमे शोकापगमे सति

इदानीमुक्तं त्रैगुण्यस्य संसारहेतुत्वमनुवदंस्तन्निर्ज्जयान्मोक्ष इत्याह एता इति सार्द्धेन येन निर्ज्जिताः स पश्चाद् अविक्षिप्तेन भक्तियोगेन मन्निष्ठः सन् मद्भावाय मोक्षाय प्रपद्यते योग्यो भवति ३२ तस्माद्विवेकिनामिदमेव युक्तमित्याह तस्मादिति ज्ञानविज्ञानयोः संभवो यस्मिन् तमिमं नरदेहं ३३ भजनप्रकारमाह निःसंग इति सार्द्धेन सात्त्वं सत्त्वसंसेवया सात्त्विकान्येव सेवेत पुमान् सत्त्वविशुद्धय इति प्रागुक्तया नैरपेक्ष्येण उपशमात्मकेन सत्त्वेनैव ३४ एवं च सति मां प्राप्नोति

एताः संसृतयः पुंसो गुणकर्म्मनिबंधनाः येनेमे निर्ज्जिताः सौम्य गुणा जीवेन चित्तजाः ३२ भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसंभवं ३३ गुणसंगं विनिर्धूय मां भजंतु विचक्षणाः निःसंगो मां भजेद्विद्वान् अप्रमत्तो जितेंद्रियः ३४ रजस्तमश्चाभिजयेत् सत्त्वसंसेवया मुनिः सत्त्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शांतधीः ३५ संपद्यते गुणैर्मुक्तो जीवो जीवं विहाय मां जीवो जीवेन निर्मुक्तो गुणैश्चाशयसंभवैः मयैव ब्रह्मणा पूर्णो न बहिर्नांतरश्चरेत् ३६ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे पारमहंस्यां संहितायां पंचविंशोऽध्यायः २५ ॥

ततः किमित्याह संपद्यत इति जीवं जीवत्वकारणं लिंगशरीरं मां प्राप्नस्य न पुनः संसार इत्याह जीव इति न बहिः विषयभोगेन नान्तरः तत्स्मरणेन ३५ गुणकृतामनुसंसरणप्रथाम् अजितपुण्यकथाकथनादिभिः धुनुत भक्तिरसेन विवेकिनो न हि पुनः सुलभं जनुरीदृशं ३६ इति श्रीभागवते महापुराणे एकादशस्कंधे टीकायां पञ्चविंशोऽध्यायः २५ ॥ ६ ॥ पञ्चविंशोऽध्यायः २५ ॥

२५
भा.ए.
११२

कारकः कर्त्ता असंगी अनासक्तः रागांधः अत्यभिनिवेशवान् स्मृतिविभ्रष्टः अनुसंधानशून्यः मदपाश्रयः मदेकशरणः सहि निरहंकारत्वान्निर्गुणः २६ अधर्म्मे धर्मइतिया श्रद्धा २७ पथ्यं हितं पूतं शुद्धं अनायस्तं अनायासतः प्राप्तं आहार्य्यं भक्ष्यभोज्यादि इंद्रियाणां प्रेष्ठं कट्वम्ललवणादि आर्त्तिदाशुचि दैन्यकरमशुद्धं चचशब्दान्मन्निवेदितं निर्गुणमभिप्रेतं २८ आत्मोत्थं सुखं मदपाश्रयमित्यपि त्वंपदार्थविषयत्वेन ज्ञानवदेवद्रष्टव्यं २९ उक्तं संसारहेतुभूतं त्रै

सात्विकः कारकोऽसंगी रागांधो राजसः स्मृतः तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः २६

सात्विक्याध्यात्मिकी श्रद्धा कर्म्मश्रद्धा तु राजसी तामस्यधर्म्मे या श्रद्धा मत्सेवायां तु निर्गुणा

२७ पथ्यं पूतमनायस्तमाहार्य्यं सात्विकं स्मृतं राजसं चेंद्रियप्रेष्ठं तामसं चार्त्तिदाशुचि २८॥

सात्विकं सुखमात्मोत्थं विषयोत्थं तु राजसं तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयं २९ द्रव्यं

देशः फलं कालो ज्ञानं कर्म्म च कारकः श्रद्धाऽवस्थाऽकृतिर्निष्ठा त्रैगुण्यः सर्व्व एव हि ३०॥

सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ३१॥ ६॥

गुण्यमुपसंहरति द्वाभ्यां द्रव्यं पथ्यपूतादि देशो वनग्रामादिः फलं सात्विकं सुखमित्यादि कालः यदा भजेत मां भक्त्या पायदे तराजयदित्यादिना योऽर्थादुक्तः ज्ञानं कैवल्यं सात्विकं ज्ञानमित्यादि कर्म मदर्पणमित्यादि कारकः सात्विकः कारकोऽसंगीत्यादि श्रद्धा सात्विक्याध्यात्मिकीत्यादि अवस्था सत्वाज्जागरणमित्यादि आकृतिः उपर्युपरि गच्छंतीत्यादिनोक्ता देवत्वादिरू पानिष्ठा सत्वे प्रलीनाः स्वर्यांतीत्यादिनोक्तः स्वर्गादिः एवं सर्वोऽप्ययं भावस्त्रैगुण्यस्त्रिगुणात्मकः ३० न केवलमेष एव किंतु या

एम
११२

तुरीयं चतुर्थमवस्थान्तरं नामत्रिषु जागरणादिषु संततमेकरूपमात्मतत्वमेवेत्यर्थः २० गुणोत्कर्षद्वारेण तत्तत्कर्म्मफल निष्ठां दर्शयति उपर्युपरीति ब्राह्मणा वेदार्थानुष्ठानाभियुक्ताः आब्रह्मण इति पाठे ब्रह्मलोकमभिव्याप्येत्यर्थः आमुख्यात् स्था वरानभिव्याप्य अंतरचारिणः मनुष्या एव संभवंति २१ देहादुत्क्रांतकालीनगुणोत्कर्षफलमाह सत्वे वृद्धे सति प्रलीना मृताः रजोलयाः रजसि प्रवृद्धे सति लयो येषां ते एवं तमोलया इत्यपि निर्गुणा इत्यत्र तु लयशब्दानुपादानाज्जीवंतोऽपि निर्गुणाश्चेन्मामेव यांतीत्यर्थः २२ इदानीं गुणोत्कर्षकृतमेव तत्तत्फलसाधनकर्म्मत्रैविध्यमाह मदर्पणं मत्प्रीत्यु॥

प्रस्वापं तमसा जंतोस्तुरीयं त्रिषु संततं २० उपर्युपरि गच्छंति सत्वेन ब्राह्मणा जनाः तमसाऽधो ऽध आमुख्याद्रजसोऽंतरचारिणः २१ सत्वे प्रलीनाः स्वर्यांति नरलोकं रजोलयाः तमोलयास्तु निरयं यांति मामेव निर्गुणाः २२ मदर्प्पणं निष्फलं वा सात्विकं निजकर्म्म तत् राजसं फलसं कल्पं हिंसाप्रायादि तामसं २३ कैवल्यं सात्विकं ज्ञानं रजो वैकल्पिकं तु यत् प्राकृतं तामसं ज्ञा नं मन्निष्ठं निर्गुणं स्मृतं २४ वनं तु सात्विको वासो ग्रामो राजस उच्यते तामसं द्यूतसदनं मन्नि केतं तु निर्गुणं २५॥

[illegible]द्देशेन कृतं निष्फलं केवलं दासभावेनैव कृतं यन्निजकर्म्म इत्यादि तत्सात्विकं फलं संक ल्प्यते यस्मिन् तत्तत् हिंसाप्रायं हिंसोद्देशेन कृतं हिंसाबहुलं च आदिशब्दाद्दंभमात्सर्यादिकृतं २३ इदानीं सगुणनिर्गुणभेदे न ज्ञानादीनां चातुर्विध्यमाह कैवल्यं देहादिव्यतिरिक्तात्मविषयं वैकल्पिकं देहाद्यव्यतिरिक्तात्मविषयं यत्तद्रजः राजसं प्राकृतं बालमूकादिज्ञानतुल्यं मन्निष्ठं परमेश्वरविषयं २४ वनं विविक्तत्वात्सात्विको वासः भगवन्निकेतनं तु साक्षात्

यदारजः सत्वं च कर्म्मभूतं च तमः कर्त्तृ जयेत् मूढं विवेकभ्रंशकं लयं आवरणात्मकं जडमनुद्यमात्मकम् अतो मूढत्वाच्छोकमोहहिंसाभिः लयत्वान्निद्रया जडत्वादुद्यमाभावेन केवलमाशया युज्येतेति द्रष्टव्यं जनइतिपाठे लयात्मकत्वमेव निद्राशयोर्हेतुः १५ किंच यदा चित्तं प्रसीदेत स्वच्छं भवेत् निर्वृतिरुपरतिः तत्तदा मत्पदं मदुपलब्धिस्थानं सत्वमुद्रिक्तं विद्धि १६ यदा पुनः क्रियया विकुर्वन् विकारं प्राप्नुवत् आधीभवति आसमंतात् क्षिप्ता धीर्यस्य सः चेतसां बुद्धींद्रियाणां

यदा जयेद्रजः सत्वं तमो मूढं लयं जडम् युज्येत शोकमोहाभ्यां निद्रया हिंसयाशया १५ यदा चित्तं प्रसीदेत इंद्रियाणां च निर्वृतिः देहेऽभयं मनोऽसंगं तत्सत्वं विद्धि मत्पदं १६ विकुर्वन् क्रियया चाधीरनिर्वृत्तिश्च चेतसां गात्रास्वास्थ्यं मनो भ्रांतं रज एतैर्निशामय १७ सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमं मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय १८ एधमाने गुणे सत्वे देवानां बलमेधते असुराणां च रजसि तमस्युद्धव रक्षसां १९ सत्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत्

अनिर्वृत्तिः अनुपरतिः गात्राणि कर्म्मेंद्रियाणि तेषामस्वास्थ्यं विकाराधिक्यं मनो भ्रांतं चंचलं अस्थिरं तदा रजउत्कटं निशामय जानीहीति १७ यदा सीदत् तिरोभवत् चेतसो ग्रहणे चिदाकारपरिणामे अक्षमं सच्चित्तं विलीयेत मनोऽपि संकल्पात्मकं नष्टं लीनं तमोऽज्ञानं ग्लानिर्विषादश्च भवति तत्तदा तमउत्कटं उपधारय विद्धि १८ किंच एधमाने इति इंद्रियाण्येव निवृत्तिप्रवृत्तिमोहस्वभावानि देवासुररक्षांसि इति ज्ञेयम् यद्वा प्रसंगादाधिदैविकानां गुणानामुत्कर्षकार्याण्युक्तानीति ज्ञेयं १९ गुणोत्कर्षतोऽवस्थाभेदं दर्शयति सत्वादिति प्रसंगान्निर्गुणावस्था

हिंसांशत्रुमरणादिकमाशास्य यो यथा भजेत्तं तामसं विद्यात् एतैर्गुणैरेवंभूतो भवतीति तात्पर्यार्थः ११ ननु त
वापि गुणवशेन कर्तृत्वाविशेषात्केन विशेषेण त्वं सेव्यो जीवस्तु सेवक इति नियमः यतो मां भजेतेति वारं वारमुच्यते
तत्राह सत्वमिति जीवस्यैव न मे कुतः यतश्चित्तजाः जीवोपाधौ चित्ते ऽभिव्यज्यन्ते अतो यैः स एव बध्यते कीदृशः
भूतानां देहरूपाणामन्येषां च मध्ये सज्जमानः अहंत्व सज्जमानो गुणानियंतृत्वेन स्रष्टृत्वादिकर्त्रा ऽपि नित्यमु
क्तः अतो महान्विशेष इति भावः यद्वा भूतानामपंचीकृतानां यत्कार्यभूतं चित्तं अन्नमयं हि सौम्य मन इति श्रुतेः

यदा आशिष आशास्य मां भजेत स्वकर्म्मभिः तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसं ११
सत्वं रजस्तम इति गुणा जीवस्य नैव मे चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते १२ यदे
तरौ जयेत्सत्वं भास्वरं विशदं शिवं तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् १३ यदा ज
येत्तमः सत्वं रजः संगं भिदा बलं तदा दुःखेन युज्येत कर्म्मणा यशसा श्रिया १४॥ तत्प्रभवाः अ
तो भूतोपहितस्य जीवस्यैवेति अन्नं तत्समानं १२ तदेवं मिश्रामिश्रगुणकार्य्याणि प्रदर्श्येदानीमेकैकगुणोद्रेक।
कार्याणि दर्शयति यदेति सप्त भिः यदेतरौ गुणौ जयेत् अभिभवेत् भास्वरं प्रकाशकं विशदं स्वच्छं शिवं शांतं
शिवत्वविशदत्वभास्वरत्वानां यथाक्रमं सुखधर्मज्ञानहेतुत्वात्तदा तैर्युज्येत आदिशब्दाच्छमदमादिभिश्च १३ तमः
सत्वं च कर्म्मभूतं रजः कर्तृ संगं संगहेतुः भिदा भेदहेतुः बलं प्रवृत्तिस्वभावं अतः संगहेतुत्वात् यशसा श्रिया च युज्येत
तत्कामः पुमान्भवतीत्यर्थः भिदाहेतुत्वात् दुःखेन युज्येत द्वितीयाद्वै भयं भवतीति श्रुतेः बलहेतुत्वात्कर्मणा युज्येत १४

विभक्तानांगुणानांवृत्तयोवर्णिताः मिश्राणामाह सन्निपातइतित्रिभिः अहंममेतिममतानुषक्तसर्ववृत्ति
सामानाधिकरण्यदर्शनात् सन्निपातजत्वं अहंशांतः कामीक्रोधीत्यादि तथाममशांतिरस्तिकामःक्रो
धइत्यादिद्रष्टव्यं तत्पूर्वकःस वौव्यवहारश्चसन्निपातकार्यमित्याह व्यवहारइति अत्रहेतुः मनश्चमात्राणि।
चइंद्रियाणिच असवश्चतैः मनआदीनांसात्विक नामसराजसत्वान्नैर्व्यवहारः सन्निपातजइतिभावः
६ असौपुरुषोयदाधर्म्मादिषुपरिनिष्ठितोभवतितदाअयंत्रिषुनिष्ठारूपः सन्निकर्षःसन्निपातकार्यंधर्मादीनां

सन्निपातस्त्वऽहमितिममेत्युद्धवयामतिः व्यवहारःसन्निपातोमनोमात्रेंद्रियासुभिः ६
धर्मेचाऽर्थेचकामेचयदाऽसौपरिनिष्ठितः गुणानांसन्निकर्षोयंश्रद्धारतिधनावहः ७॥
प्रवृत्तिलक्षणेनिष्ठापुमान्यर्हिगृहाश्रमे स्वधर्म्मेऽचानुतिष्ठेतगुणानांसमितिर्हिसा ८
पुरुषंसत्वसंयुक्तमनुमीयाच्छमादिभिः कामादिभीरजोयुक्तंक्रोधाद्यैस्तमसायुतं ९ यदा
भजतिमांभक्त्यानिरपेक्षःस्वकर्म्मभिः तंसत्वप्रकृतिंविद्यात्पुरुषंस्त्रियमेवच १०॥ ९॥

सत्वतमोरजःकार्यत्वात् विषयतः सन्निपातजत्वमुक्तंफलतश्चतथात्वमाहश्रद्धारतिधनानिसत्वरजस्तमोमयान्या
वहतीतितथा ७ धर्म्मनिष्ठायामेवसन्निपातंदर्शयतिप्रवृत्तिलक्षणेकाम्येधर्म्मेयदापुंसोनिष्ठाभवति तथापुमान्
यदागृहाश्रमएवासक्तस्तिष्ठेत अनुपस्थातस्वधर्मेचनित्यनैमित्तिकेतिष्ठेत्साऽपिसमितिः सन्निपातःहियस्मा।
त्काम्यधर्म्मगृहासक्तिस्वधर्म्माराजस्तमःसत्वमयाइत्यर्थः ८ तदेवंमिश्रामिश्रगुणवृत्तीःप्रदर्श्येदानींपुमान्वयनय

तत्रसत्त्ववृत्तीराह शमइति ईक्षा विवेकः तपः स्वधर्म्मवर्त्तित्वं स्मृतिः पूर्व्वापरानुसंधानं तुष्टिर्यथालाभसं तोषः त्यागो व्ययशीलत्वम् अस्पृहा विषयेषु वैराग्यं श्रद्धा आस्तिक्यं गुर्वादिषु ह्रीः अनुचितेकर्म्मणि लज्जा तेषा मनवलोकनम् दयादानं दयदानगतिरक्षणेष्विति स्मरणात् आदिशब्देनार्ज्जवविनयादि स्वनिर्वृत्तिः॥ आत्मरतिः २ रजोवृत्तीराह कामोऽभिलाषः स्वर्गादिः ईहा व्यापारः यज्ञादिः मदो दर्पः तृष्णा लाभेसत्य प्यसंतोषः स्तंभो गर्वः आशीः धनाद्यभिलाषेण देवतादिप्रार्थनं भिदा अहमन्य इति भेदः वुद्धिः सुखं

शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः २ कामईहा मदस्तृष्णा स्तंभ आशीर्भिदा सुखं मदोत्साहो यशःप्रीतिर्हास्यं वीर्यं वलोद्यमः ३ क्रोधो लोभोऽनृतं हिंसा याच्ञा दम्भः क्लमः कलिः शोकमोहौ विषादार्त्ती निद्राऽऽशा भीरनुद्यमः ४ सत्वस्य रजसश्चैतास्तमसश्चानुपूर्व्वशः वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ५॥९

विषयभोगः मदोत्साहः मदेन युद्धाद्यभिनिवेशः यशःप्रीतिः स्तुतिप्रियता हास्यमुपहासः वीर्यं प्रभावाविष्कारः वलेनोद्यमः न्यायेनोद्यमः सात्विक एव ३ तमोवृत्तीराह क्रोधइति क्रोधः असहिष्णुता लोभो व्ययपराङ्मुखता अनृतम् अशास्त्रीयप्रमाणं हिंसा द्रोहः याच्ञा प्रार्थना दंभो धर्म्मध्वजित्वं क्लमः श्रमः कलिः कलहः शोकमो हौ अनुशोचनं भ्रमश्च विषादार्त्ती दुःखं दैन्यं च निद्रा तंद्रा आशा इदं मे भविष्यत्यासत्वीक्षा भीर्भयं अनुद्यमो जाड्यं ४ अनुपूर्व्वशः क्रमेणैताः श्लोकत्रयोक्ताः वर्णितप्रायाः अन्या अप्यूह्या इति भावः ५॥ ९॥ ९॥

क्षेमधामप्रपद्यइति जीवश्चात्मनि प्रकृतिलीनत्वेनप्रतियोग्यभावात् परिपूर्णत्वेनसद्रूपेणावतिष्ठते आत्मा
चात्मस्थएवनान्यत्रलीयते यतः केवलोनिरुपाधिः अत्रहेतुः विकल्पापायाभ्यांविश्वोत्पत्तिप्रलयाभ्यांलक्ष्यते
अधिष्ठानत्वेनावधित्वेनवेतितथास्तः २६ अस्यकथनस्यप्रस्तुतोपयोगमाह एवमिति मनसः कथंभे
दनिमित्तोभ्रमः स्यात् जातोवाकथंहृदितिष्ठेदिति २७ उपसंहरतिएषइति २८ प्रत्यक्षमिवयेनेदंदर्शितंत
त्वमात्मनः सांख्यप्रख्यानतस्तस्मैहरयेगुरवेनमः २९ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांभावा

आत्माकेवलआत्मस्थोविकल्पापायलक्षणः २६ एवमन्वीक्षमाणस्यकथंवै
कल्पिकोभ्रमः मनसोहृदितिष्ठेतव्योम्नीवार्कोदयेतमः २७ एषसांख्यविधिः
प्रोक्तः संशयग्रंथिभेदनः प्रतिलोमानुलोमाभ्यांपरावरदृशामया २८॥ इतिश्रीभागवतेम
हापुराणेएकादशस्कंधेभगवदुद्धवसंवादेचतुर्विंशतितमोऽध्यायः २४ श्रीभगवानुवाच
गुणानामसमिश्राणांपुमान्येनयथाभवेत् तन्मेपुरुषवर्येदमुपधारयशंसतः॥१॥ ६॥

र्थदीपिकायांचतुर्विंशोऽध्यायः २४ पंचविंशेस्वनैर्गुण्यप्रतिपत्त्यैनिरूप्यतेचित्तप्रभवसत्वादिगुणवृत्तिरनेक
धा १ प्रकृतिपुरुषविवेकज्ञानवतोऽपियावत्प्रयत्नविशेषेणगुणत्रयप्रवृत्तिजयोनस्यात्नतावद्द्वंद्वो
परमः अतस्तज्जयोपायकथनायगुणवृत्तिनिरूपणार्थमाह गुणानामिति सहमिश्रीभूयवर्त्तमानाः समिश्र
आः नसमिश्राअसमिश्रास्तेषांविभक्तानांगुणानांमध्येयेनगुणेनयथायादृशोभवेत् तदिदंकथयतोमत्तोनिबो

वायुश्चकालप्रेरितेनांवरेणग्रस्तःस्पर्शमात्रःसंस्तस्मिन् अंवरंचभूतादिनाहंकारेणग्रस्यमानंशब्दतन्मात्रेनतद्देवंनामसाहंका
रस्कार्य्यस्यशब्दपर्यंतंलयमुक्त्वाराजसाहंकारकार्यस्याप्याह इंद्रियाणिस्वयोनिष्वितिस्वप्रवर्तकदेवतासुतेषांप्रवृत्तिस्वभा
वत्वात्प्रवृत्तेश्चदेवताधीनत्वात्तासुलयइतिवाचोयुक्तिः वस्तुतस्तुस्वकारणेराजसाहंकारेलयोऽभिप्रेतः २३ योनिरित्युद्दे
श्यगतत्वादेकत्वमविवक्षितं योनयोदेवतास्तुमनसिकुतईश्वरेनियंतरिमनोवशेऽन्येह्यभवंसदेवाइत्युक्तत्वात् इंद्रियल
योक्त्वात्राप्यभिप्रायः मनश्चदेवताभिःसहवैकारिके अहंकारइत्यर्थः तामससाहंकारस्कार्यविशेषितस्यशब्दस्यलयमाह श
ब्दोभूतादितामससाहंकारं अप्येतितस्मिन्लीयतइत्यर्थः भूतादिरित्युपलक्षणं त्रिविधोऽप्यहंकारोमहतिजडांशंविहायज्ञा

रूपंवायौसचस्पर्शोलीयतेसोऽपिऽचांवरे अंवरंशब्दतन्मात्रइंद्रियाणिस्वयोनिषु २३ योनिर्वै
कारिकेसौम्यलीयतेमनसीश्वरे शब्दोभूतादिमप्येतिभूतादिर्महतिप्रभुः २४ सलीयतेमहान्स्वेषु
गुणेषुगुणवत्तमः तेऽव्यक्तेसंप्रलीयंतेतत्कालेलीयतेऽव्यये २५ कालोमायामयेजीवेजीवआत्म
निमय्यजे॥ नक्रियाशक्तिमात्ररूपोभवति कथंभूतः प्रभुः समर्थः सर्वजगन्मोहकत्वात् २४ सचमहान्स्वकारणे
षुगुणेषुज्ञानक्रियाशक्तिमत्वाद्गुणवत्तमस्तादृग्भावंविहायगुणमात्ररूपोभवति तेऽव्यक्तेप्रकृतौ साम्यावस्थांगच्छंतीत्य
र्थः तदव्यक्तंकालेकालेकालाधीनत्वात्तेनैकीभूयावतिष्ठते अव्ययेउपरतवृत्तौ २५ मायामयेमायाप्रवर्त्तकेज्ञानमयेवा
अतएवजीवयतीतिजीवस्तस्मिन्महापुरुषे अयंभावः विश्वस्रष्टुर्म्महापुरुषस्योपकरणरूपःकालोवृत्त्यंशे
नस्वरूपस्थात्मस्तदात्मनाऽवतिष्ठतइति तदुक्तंसप्तमे कालंचरंतंसृजतीश आश्रयंप्रधानपुंभ्यांनरदेवसत्यकृत्
दिति दशमेच योऽयंकालस्तस्यतेऽव्यक्तबंधोचेष्टामाहुश्चेष्टतेयेनविश्वं निमेषादिर्वत्सरांतोमहीयांस्तंत्वेशानं

पायाः स्थितेरवधिमाह सर्गइतिमहान् बहुलः पौर्वापर्येण पितृपुत्रादिरूपेण नित्यशः अविच्छेदेन किमर्थं प्रवर्त्तते तदाह
गुणेषु देहेषु विविधतयासृज्यतइति गुणविसर्गो जीवः तदर्थः ——— तद्भोगप्रयोजनः किंपर्यंतं प्रवर्त्तते यावत् स्थि
तेरंतः सोऽपि किमवधिः तदाह यावदीक्षणं परमेश्वरस्य तावत् १९ प्रलयं निरूपयति विराट् ब्रह्मांडं मयाकालात्मना आ।
साद्यमानः व्याप्यमानः लोकानामहरहः कल्पाः सृष्टिप्रलया विविधाः कल्प्यंते यस्मिन् तान्वा तस्मिन् लोकान् विकल्पयतीति
सतथा भूतोऽपि पंचत्वरूपाय विशेषाय विभागाय कल्पते योग्यो भवति पंचानां भूतानामैक्यरूपस्तेषां पृथग्भावापत्यानश्य
तीत्यर्थः २० तत्र तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृ।

महान्गुणविसर्गार्थः स्थित्यंतो यावदीक्षणम् १९ विराण्मयाऽसाद्यमानो लोककल्प।
विकल्पकः पंचत्वाय विशेषाय कल्पते भुवनैः सह २० अन्नेप्रलीयते मर्त्यमन्नं धाना
सुलीयते धानाभूमौ प्रलीयंते भूमिर्गंधे प्रलीयते २१ अप्सु प्रलीयते गंध आपश्च स्वगु
णे रसे लीयते ज्योतिषि रसो ज्योतीरूपे प्रलीयते॥ २२॥ ॥ ॥ ॥

थिव्या ३७षधयः ३७षधीभ्योऽन्नं अन्नात्पुरुषइति श्रुत्युक्तसृष्टिक्रमप्रातिलोम्येन प्रलयमाह अन्नइति मर्त्यः शरीरं ये
नोपचितं तस्मिन्नन्ने शतवर्षीयामनावृष्ट्या क्षीणे सति तत्रैव लीयतइत्यर्थः अन्नं धानासु बीजमात्रावशेषं भवतीत्यर्थः
धाना भूमौऽन्नानप्ररोहंतीत्यर्थः भूमिर्गंधे संवर्त्तकादित्यशोषिता संकर्षणमुखाग्निना दग्धा च सती भूतसूक्ष्मरूपगंध
मात्रावशेषा भवति २१ अप्सु गंधः शत वार्षिकया वृष्ट्या प्लाव्यमानो प्सु लीयते एवमेवापश्च ज्योतिषा शोष्यमाणा रसमा।
त्रावशेषा भवंति ततो रसोऽपि तस्मिं ल्लीयते ज्योतिश्च वायुनाऽभिभूयमानं रूपमात्रं सत्तस्मिं ल्लीयते २२॥ ॥

इदानीं कार्यस्य कारणात्मतां दर्शयति यस्येति कार्यस्य य आदिः कारणं अंतः लयस्थानं च तस्य मध्यं मध्यावस्थाऽपि स एव
वै प्रसिद्धं मृत्सुवर्णादिषु अत एवाव्यभिचारित्वात्स एव सत् नेतरः अलं तर्हि मिथ्याभूतकार्यसृष्ट्या तत्राह विकार इति तैज
साः कटककुंडलादयः पार्थिवा घटशरावादयश्च यथेति १६ नन्वेवं तर्हि स्वकार्यं प्रति महदादीनामप्याद्यंतरूपत्वात्स
त्वं स्यात् तत्राह यदिति यद्रूपमुपादाय उपादानकारणतया स्वीकृत्य पूर्वः कारणरूपो महदादिर्भावः अपरं अहंकारादि
कं भावं विकुरुते सृजति यथा पिंडो मृदमुपादाय स्वयं निमित्तभूतो घटं सृजति तद्वत् स एव सन्निति पूर्वस्यानुषंगः कथं त

यस्तु यस्यादिरंतश्च स वै मध्यं च तस्य सत् विकारो व्यवहारार्थो यथा तैजसपार्थिवाः १६ यदुपा
दाय पूर्वस्तु भावो विकुरुते परं आदिरंतो यदा यस्य तत्सत्यमभिधीयते १७ प्रकृतिर्ह्यस्योपा
दानमाधारः पुरुषः परः सतोऽभिव्यंजकः कालो ब्रह्म तत्त्रितयं त्वहम् १८ सर्गः प्रवर्त्तते ता
वत्पौर्वापर्येण नित्यशः ॥

॥ ९ हि मृत्तिकेत्येव सत्यमित्यादिश्रुतिः तत्राह आदिरिति यद्यदा यस्यादिरंतश्च वि
वक्ष्यते तदा तत्सत्यमित्यभिधीयते श्रुत्या परमकारणस्यात्मनः सत्यत्वविवक्षयेत्यर्थः १७ ननु तथापि प्रकृतिपुरु
षकालानामकार्यभूतानां निमित्तत्वात्कथमद्वितीयता तत्राह प्रकृतिरिति अस्य सतः कार्यस्योपादानं या प्रकृतिः
प्रसिद्धा यश्च तस्या आधारः अधिष्ठाता परः पुरुषः यश्च गुणक्षोभेणाभिव्यंजकः कालस्तत्त्रितयं ब्रह्मरूपोऽहमेव न तु
पृथक् प्रकृतेः शक्तित्वात् पुरुषकालयोरवस्थारूपत्वात् १८ एवं तावत्कालत्रयेऽप्यव्यभिचारित्वात् ब्रह्मैव सत्यमि
ति वक्तुं तस्य सृष्टिकारणत्वेनानादेः सत्यत्वमुक्त्वा मध्येऽपि तस्यैव सत्त्वमुपपाद्यांतेऽप्यवधित्वेन सत्त्वं दर्शयिष्यन्सर्गप्रवाहः

२४
भा॰ए॰
१०७

तत्रचात्मभूः चतुराननरूपभोगविग्रहेणपुनर्वैराजएवतस्मिन्नाविर्भूतइत्यर्थः १० रजसायुक्तोमदनुग्रहात्तप
साऽसृजत भूः अतलादिसहिता भुवः अंतरिक्षलोकः स्वः स्वर्गः महर्लोकादेरप्युपलक्षणं ११ लोकसृष्टिप्रयोज
नमाह देवानामितिसार्द्धेन ओकोनिवासः पदंस्थानंत्रितयात्परंमहर्लोकादि भूमेरधः अतलादि १२ एवंभव
स्यायाकारणमाहसार्द्धेन त्रिलोक्यांपातालादिसहितायां १३ योगादितारतम्येनयथोत्तरंमहर्लोकादयः मद्गति

ममनाभ्यामभूत्पद्मंविश्वाख्यंतत्रचात्मभूः १० सोऽसृजत्तपसायुक्तोरजसामदनुग्रहात्
लोकान्सपालान्विश्वात्माभूर्भुवःस्वरितित्रिधा ११ देवानामोकआसीत्स्वर्भूतानांचभुवः
पदं मर्त्यादीनांचभूर्लोकःसिद्धानांत्रितयात्परम् अधोऽसुराणांनागानांभूमेरोकोऽसृजत्प्र
भुः १२ त्रिलोक्यांगतयःसर्वाःकर्मणांत्रिगुणात्मनां योगस्यतपसश्चैवन्यासस्यगतयो
ऽमलाः १३ महर्जनस्तपःसत्यंभक्तियोगस्यमद्गतिः मयाकालात्मनाधात्राकर्मयुक्तमिदंज
गत् गुणप्रवाहएतस्मिन्नुन्मज्जतिनिमज्जति १४ अणुर्बृहत्कृशःस्थूलोयोयोभावःप्रसि
ध्यति सर्वोऽप्युभयसंयुक्तःप्रकृत्यापुरुषेणच १५ ॥ (वैकुंठलोकः तत्रतुमद्गतिव्यतिरेकेणेतरागा॥

तयश्चलाइत्याहवैराग्यार्थंमयाकालशक्तिनाधात्रापरमेश्वरेणकर्मफलप्रदेनहेतुभूतेनगुणप्रवाहेसं।
सारेउन्मज्जतिआसत्यलोकमुत्तमागतीःप्राप्नोतिपुनर्निमज्जतिआस्थावरंनीचागतीःप्राप्नोति १४ सृष्टिनिरू
पणस्यद्वितीयान्तप्रतिपन्नार्थत्वात्तत्प्रतिपादनायकारणेनकार्यस्यव्याप्तिमाह अणुरिति उभयेनसंयुक्तोव्याप्तः ते

राम
१०७

यतस्तन्मात्रादीनां कारणं मनः शब्देन देवानामप्युपलक्षणं चिदचिन्मयः चिदाभासव्याप्तत्वादुभयग्रंथिरूपइति जी
वोपाधित्वं दर्शितं यद्यपि तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादिश्रुतेरन्नमयं हि सोम्य मन इत्यादिश्रुते
श्च प्रथमं भूतानि जायंते तेभ्यश्चापंचीकृतेभ्यः प्राणादिक्रमेण समष्ट्यात्मकं लिंगशरीरं पंचीकृतेभ्यश्च ब्रह्मांडं
एतस्मिन्वैराजस्तदंतर्यामी लीलाविग्रहः क्षीराब्धिशायी श्रीनारायणः तन्नाभिपद्मे च वैराजस्य भोगविग्रहश्चतुराननः
ततो यथावसरमन्येषां जीवानामाविर्भाव इति प्रक्रिया तथाऽपि चिन्नाभिव्यक्तिपूर्वको हंकारस्ततो भूतेंद्रियादि व्यव

वैकारिकस्तैजसश्च तामसश्चेत्यऽहं त्रिवृत् तन्मात्रेंद्रियमनसां कारणं चिदचिन्मयः ७ अर्थस्त
न्मात्रिकाज्जज्ञे तामसादिंद्रियाणि च तैजसाद्देवता आसन्नेकादश च वैकृतात् ८ मया संचो
दिता भावाः सर्वे संहत्यकारिणः अंडमुत्पादयामासुर्ममायतनमुत्तमं ९ तस्मिन्नहं समभव
मंडे सलिलसंस्थितौ ॥ १० ॥

हार इत्येतावता महदादिक्रमेण सृष्टिरुच्यते तथा चोक्तं मृत्लोहविस्फुलिंगाद्यैः सृ
ष्टिर्या चोदिताऽन्यथा उपायः सोऽवताराय नास्ति भेदः कथंचनेति ७ तस्मात्त्रिविधात्त्रिविधप्रपंचोत्पत्तिं दर्शयति अ
र्थ इति तन्मात्रिकात् शब्दादितन्मात्रकारणात् तामसात्तद्द्वारा अर्थो महाभूतरूपो जज्ञे वभूव भूतानामावरणस्वभावत्वा
त इंद्रियाणि दश तैजसात् तेषां प्रवृत्तिस्वभावत्वात् वैकृतात् सात्विकात् देवताः दिग्वातार्कप्रचेतोऽश्विवह्नींद्रोपेंद्रमि
त्रकाश्चंद्रश्चेत्येकादश च शब्दान्मनश्च तेषां प्रकाशस्वभावत्वात् ८ मम वैराजोंतर्यामिणः ९ सलिले संस्थितिर्यस्य त
त् सलिलसंस्थिति तस्मिन् सलिलसंस्थितावंडे श्रीनारायणरूपो लीलाविग्रहेण समभवं स्थित इत्यर्थः विश्वाख्यं लोक

२४
भा॰ए॰
१०६

तद्इतिवक्ष्यमाणंस्वंप्रस्तौति अथेति पूर्वैःकपिलादिभिर्विनिश्चितंवैकल्पिकंभेदनिमित्तंभ्रमंसुखदुःखादिरूपं १ अथोशब्दःकात्स्न्येंज्ञानंद्रष्टातेनदृश्यःकृत्स्नोप्यर्थश्चअविकल्पितंविकल्पशून्यमेकमेवब्रह्मण्येवलीनमासीदि त्यर्थः कदेत्यपेक्षायामाह अयुगेयुगेभ्यःपूर्वंप्रलयइत्यर्थः तथाआदौयत्कृतयुगंतस्मिंश्च अन्यदाऽपियदावि वेकनिपुणाजनाभवंतितदाऽपितेषांभेदास्फूर्तेः २ तद्दृग्दृश्यरूपंवाङ्मनोगोचरंयथाभवतितथामायादृश्यफलं

यत् विज्ञायपुमान्सद्योजह्याद्वैकल्पिकंभ्रमं १ आसीत्ज्ञानमथोह्यर्थएकमेवाविकल्पित म् यदाविवेकनिपुणाआदौकृतयुगेऽयुगे २ तन्मायाफलरूपेणकेवलंनिर्विकल्पितम् वा ङ्मनोगोचरंसत्यंद्विधासमभवद्बृहत् ३ तयोरेकतरोऽह्यर्थःप्रकृतिःसोभयात्मिका ज्ञानंत्वऽ न्यतमोभावःपुरुषःसोऽभिधीयते ४ तमोरजःसत्वमितिप्रकृतेरभवन्गुणाः मयाप्रक्षोभ्य माणायाःपुरुषानुमतेनच ५ तेभ्यःसमभवत्सूत्रंमहान्सूत्रेणसंयुतः ततोविकुर्वतोजातो योऽहंकारोविमोहनः ६ ॥

१ तत्प्रकाश्यःतद्रूपेणमायाविलासरूपेणवाद्विधाऽभूत् ३ तयोर्द्विधाभूतयो र्दृश्ययोर्मध्येउभयात्मिकाकार्यकारणरूपिणी ४ अभवन्अभिव्यक्तावभूवुःमयापरमेश्वरेण पुरुषानुमतेनतत्त वपुरुषस्यकः संबंधःजीवादृष्टप्रयुक्तत्वात्तस्यैः पुरुषानुमतत्वंयद्वातस्यैवप्रकृतीक्षणरूपायापुरुषावस्थातद नुमतेनतद्द्वारेणेत्यर्थः ५ सूत्रंक्रियाशक्तिमान्प्रथमोविकारः ततोमहान्ज्ञानशक्तिःनन्वयंमहानेवप्रथमोविकारःप्र सिद्धःतत्राहसचज्ञानक्रियागर्भत्वात्सूत्रेणसंयुतःनपृथक्एकमेवतत्त्वंक्रियाज्ञानशक्तिभ्यांद्विधोच्यतेइत्यर्थःविमो

ए॰स्क॰
१०६

प्रस्तावेन सह गाथार्थं संक्षेपतो दर्शयति द्वाभ्यां इत्थं नष्टद्रविणो निर्विण्णगतक्लमः प्रव्रज्यां गां पर्यटन् सद्भिर्निराकृ
तोऽपि स्वधर्म्मादकंपितः सन्मुनिरमूं गाथामगायतेत्यन्वयः ५८ मित्रोदासीनरिपवः सर्वोऽपि च संसारः तमसः अ
ज्ञानतः आत्मनो मनसो विभ्रममात्रकृतः न तात्त्विक इत्यर्थः ५९ उक्तं द्वंद्वसहनोपायमुपसंहरन्नि तस्मादिति ६०
मनोनिग्रहाशक्तोऽप्येतच्छ्रवणादिनिष्ठस्तत्फलं प्राप्नोतीत्याह य इति द्वंद्वैः सुखादिभिः ६१ भिक्षुगीतमिवं कृत्वा

श्रीभगवानुवाच निर्विण्णनष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम् निराकृतोऽस
द्भिरपि स्वधर्मादकंपितो मूं मुनिराह गाथाम् ५८ सुखदुःखप्रदो नान्यः पुरुषस्यात्मवि
भ्रमः मित्रोदासीनरिपवः संसारस्तमसः कृतः ५९ तस्मात्सर्वात्मना तात निगृहाण मनो धि
या मय्यावेशितया युक्त एतावान्योगसंग्रहः ६० य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः
धारयञ्छ्रावयञ्छृण्वन् द्वंद्वैर्नैवाभिभूयते ६१॥ इति श्रीभागवते महापुराणे एकादशस्कं
धे भगवदुद्धवसंवादे भिक्षुगीता नाम त्रयोविंशोऽध्यायः २३॥ श्रीभगवानुवाच अथ ते संप्रवक्ष्या
मि सांख्यं पूर्वैर्विनिश्चितं॥ एभक्तचित्तगतं हरिः मोहं निघ्नन्निवाभाति परमानंदरूपतः १॥ इति श्री भागवते महा
पुराणे एकादशे स्कंधे टीकायां त्रयोविंशोऽध्यायः २३ चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते आत्मनः सर्वभावानामा
गमापायचिंतया १ स्वपदं द्वंद्वभक्तानामद्वंद्वं हूत्वा यसंयमः चित्तसोक्तः पुनः क्रमः सांख्यमत्राह तन्न्कृते २ अद्वि
तीयात्परमात्मनो मायया प्रकृतिपुरुषद्वारा सर्वं द्वैतमुदेति पुनस्तत्रैव लीयत इत्यनुसंदधानस्य द्वंद्वभ्रमो निवर्त्तेत

११
भा० ए
१७५

अचितजडो देहः अतस्तस्य हतिर्न संभवति पुरुषस्तु सुपर्णः शुद्धज्ञानरूपः अतः कस्मै क्रुध्येत यतः सुखदुःखयोर्मूल
भूतं कर्म्मैव नास्तीति ५४ तत्रपक्षे कालपक्षेपि न तदात्मक एव ब्रह्मांशत्वात् स्वांशस्य ततः पीडा नास्तीत्यत्र दृष्टां
तः नाग्नेर्हि तोस्तदंशस्य ज्वालादेस्तापो दाहतो नाशोऽस्ति तत्रोपाधिभूतकाष्ठांशदाहान्न स्यादिति दृष्टान्तांतरमा
ह हिमस्य तत् शैत्यं तदंशस्य तुषारकणस्य नाशकं न स्यादित्यर्थः किंच आत्मा मंशकत्वं वस्तुतः पर एवायं नच पर
स्य द्वंद्वं सुखदुःखादिकमस्तीति ५५ तदेवं षडेते हेतवः प्रसिद्धा निरस्ताः यदि कश्चिद्धेत्वंतरमुद्भावयेत तदपि वस्तु

देहस्त्वऽचित्पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै नहि कर्म्म मूलम् ५४ कालस्तु हेतुः
सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ नाग्नेर्हि तापो न हिमस्य तत्स्यात्क्रु
ध्येत कस्मै न परस्य द्वंद्वम् ५५ न केनचित्क्वापि कथंचनास्य द्वंद्वोपरागः परतः॥
परस्य यथाहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न विभेति भूतैः ५६ एतां समा
स्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः अहं तरिष्यामि दुरंतपारं तमो
मुकुंदांघ्रिनिषेवयैव ५७॥९ महिमापेक्षायां न संभवतीत्याह न केनचिदिति नन्वपरोक्षः कथमपा
रूप्यते तत्राह यथेति संसृतिमविद्यमानामेव रूपयति प्रकाशयतीति तथा तस्य अहमः अहंकारस्य यथा स्यात् न तथा
परतः प्रकृतेः परस्यात्मनो द्वंद्वसंबंधः अहंकारनिमित्तो सौ न वास्तव इत्यर्थः एवं प्रबुद्धो यः स भूतैः कृत्वा न विभेति ५६ अ
नोऽहमपि तथैव परमात्मनि ष्ठतया तरिष्यामीत्याह एतामिति सोहमित्यन्वयः नन्वियं निष्ठैव कथं भवेत् तदाह मुकुंदे

टी०
राम
१७५

देवतानां च सर्व्वदेहेष्वभेदान्न कोपविषयोऽस्तीति स्वदेहदृष्टांतमाह यत्पदाऽऽगं देवताधिष्ठानं हस्तमुखादि अतएव पूर्व्वत्र देवताऽनधिष्ठानरूपभूविकारदंतोदाहरणं ५१ आत्मनः सुखदुःखाद्याकाराःपरिणामः अतः स एव हेतुर्यदि स्यात्तत्र तस्मिन्पक्षेऽन्यतः किंनकिंचिदन्यतो भवति यस्मै कुप्येदित्यर्थः यतो निज एव स्वभावः सः नन्वात्मनास्तथापरिणामोऽन्यनिमित्तो भवति अतोऽस्ति कोपविषय इति चेत्तत्राह नहीति आत्मव्यतिरेकं नास्त्येव यदि स्यात् अस्तीति प्रतीयेत तर्हि तन्मृषैव अतः कस्माद्धेतोः क्रुध्येत यतो नास्ति निमित्तं न च सुखं दुःखं चेत्यर्थः ५२ ग्रहपक्षेऽप्यजस्यात्मनः

यदंगमंगेन निहन्यते क्वचित्क्रुध्येत कस्मै पुरुषः स्वदेहे ५१ आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः नह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्क्रुध्येत कस्मान्न सुखं न दुःखं ५२ ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै ग्रहैर्ग्रहस्यैव वदंति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ५३ कर्म्मास्तु हेतुः सुखदुःखयोर्वै किमात्मनस्तद्धि जडाजडत्वे॥ ((किंयतो जन्मत इति

जनो देहस्तस्यैव जन्मलग्नापेक्षया द्वादशाष्टमादिराशिस्थास्ते सुखदुःखयोर्निमित्तं भवंति किंच अंतरिक्षस्थैर्ग्रहैस्तत्रस्थस्य ग्रहस्यैव पादादृष्ट्यादिदृष्ट्यादिभेदैः पीडां वदंति दैवज्ञाः न तु ग्रहकोणादिषु स्थितस्य तत्तद्दृष्टिगोचरस्य ग्रहगतैव तु पीडा तद्द्रष्टाणोऽस्य न्नेदेहे तस्याभिमानाद्भवति अतः पुरुषस्ततो ग्रहात् देहाच्चान्यः कस्मै कुप्येत ५३ कर्म्म हेतुश्चेत् अस्त्वित्यभ्युपगमः कर्म्मैव नास्ति कुतस्तस्य हेतुत्वमिति तदाह हि यस्मात् तत् कर्म्म एकस्य जडाजडत्वे सति स्यात् जडत्वाद्धिकारित्वोपपत्तेः अजडत्वाच्च हिताहितानुसंधानतः प्रवृत्तिसंभवात्॥ ६॥

अनः असह्याद्रागादयो वेगा यस्य तं अत एव अरुंतुदं अरु मर्म्म तत्तुदति व्यथयतीत्यरुंतुदः तं तत्त्वे तिष्ठेद्दुः तन्नविजि
त्य अजित्वा ततः ये केचिन्मर्त्यैः केश्चित् असद्विग्रहं कुर्वन्ति तत्र चानुकूलप्रतिकूलादीन् अमान्मित्रादीन् कुर्वंति
ते मूढा इत्यर्थः ४८ ततश्चानेन प्रकारेण संसारे भ्रमंतीत्याह देहमिति मनोमात्रपरिकल्पितमिमं स्वदेहमहमिति
पुत्रादिदेहं च ममेति स्वीकृत्य तमसि संसारे ४९ तदेवं मन स एव दुःखकारणत्वमुपपाद्येदानीं जनादीनां षण्णामका
रणत्वं प्रपंचयति जनस्त्विति षड्भिः अत्र च अस्मिन्नपि पक्षे आत्मनः किं न किंचिन सुखदुःखकर्म्मत्वं तत्कर्तृत्वं चेत्यर्थः

तं दुर्जयं शत्रुमसह्यवेगमरुंतुदं तन्न विजित्य केचित् कुर्वंत्यसद्विग्रहमत्र मर्त्यैर्मित्राण्यु
दासीनरिपून्विमूढाः ४८ देहं मनोमात्रमिमं गृहीत्वा ममाऽहमित्यंधधियो मनुष्याः
एषोऽहमन्योयमिति भ्रमेण दुरंतपारे तमसि भ्रमंति ४९ जनस्तु हेतुः सुखदुःखयोश्चेत्कि
मात्मनश्चाऽत्र हि भौमयोस्तत् जिह्वां क्वचित्संदशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत्
५० दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकारयोस्तत् ॥ ५१ कुत इत्यत आह हि निश्चितं भौ
मयोर्मृद्विकारयोर्देहयोस्तत् न त्वात्मनः अमूर्तस्याक्रियस्य च हननादिषु कर्म्मत्वकर्तृत्वानुपपत्तेः तथापि
दुःखमात्मपर्यवसाय्येवेति चेत् एवमपि परमात्मन उभयत्राप्येकत्वान्न कोपविषयोस्तीति स दृष्टांतेन दर्शय
ति जिह्वामिति ५० यदि देवता अस्तु नाम तत्रापि पक्षे आत्मनः किं यतो विकारयोर्विक्रियमाणयोर्देहयो
वयोस्तत् हस्तेन मुखेऽभिहते तेन बाहुस्तेन दष्टेन तदभिमानिनोर्वन्हींद्रयोरेव तत् न त्वविक्रियस्यानहंकारस्य चात्मनः ॥

मनसासमीहमानेनसहनियंतृत्वेनवर्त्तमानोपिपरमात्मा अनीहः तत्क्रियासंगरहितः यतोहिरण्मयः विद्याशक्तिप्रधा
नः कुतः यतोमत्सखः ममजीवस्यसखानियंता अतः उत्तउच्चैर्विचष्टे अतिरोहितज्ञानेनकेवलंपश्यतीत्यर्थः असौपुन
रहंजीवः स्वलिंगंस्वस्मिन्नात्मनिलिंगयतिद्योतयतिसंसारमितितथातन्मनः परिगृह्य आत्मत्वेनस्वीकृत्यतस्यमनसो
गुणैःकर्म्मभिः संगतःसंबद्धः गुणसंगाद्धकामानजुषन्निवद्धइति ४४ अतोमनोनिग्रहेकृतेसर्वंकृतंतस्मात्तंविनातुस
र्वमपार्थमित्याह दानमितिद्वाभ्यांस्वधर्म्मः नित्यनैमित्तिकः सद्व्रतान्येकादश्युपवासादीनि अन्यानिचयावन्तिकर्म्माणि

मनःस्वलिंगंपरिगृह्यकामानजुषन्निबद्धोगुणसंगतोऽसौ ४४ दानंस्वधर्मोनियमोयमश्च
श्रुतानिकर्म्माणिचसद्व्रतानि सर्वेमनोनिग्रहलक्षणांताःपरोहियोगोमनसःसमाधिः
४५ समाहितंयस्यमनःप्रशांतंदानादिभिःकिंवदतस्यकृत्यं असंयतंयस्यमनोविनश्यद्दा
नादिभिश्चेदपरंकिमेभिः ४६ मनोवशेन्येह्यभवंस्मदेवामनश्चनान्यस्यवशंसमेति भी
ष्मोहिदेवःसहसःसहीयान्युंज्याद्वशेतंसहिदेवदेवः ४७॥१

निष्फलंयेषांतेतथा ननुज्ञानांगत्वंतेषांप्रसिद्धंतत्राह मनसःसमाधिर्निग्रहएवपरोयोगःज्ञानं ४५ अतोयस्यमनः
समाहितंभवति तस्यकिंकृत्यमस्तिवदेत्यपरंप्रत्युपदर्शः किमपरंप्रयोजनंस्यात्तन्नकिंचिदित्यर्थः ४६ नन्विंद्रियजयःप्रयो
जनंस्यात्तत्नेत्याह मनोवशइतिदेवाइंद्रियाणितदधिष्ठातारोवाभीष्मःयोगिनामपिभयंकरोमनोलक्षणोदेवःकुतःसहसो
बलादपिबलिनोऽपिवासहीयानबलीयान् अतस्तंयोवशवर्तिनंकुर्यात्सएवदेवदेवःसर्वेंद्रियजेताभवतिनान्यःतथाचश्रुतिः

यो हि देवः सहसः सहीयानिति ४७॥

त्वबंधुः स्वंखलैः निरुरुधुः कारागृहादिषु द्विजं शुकसारिकादियथा भौतिकं दुर्जनादिकृतं दैहिकं ज्वरादिनिमित्तं
दैविकं शीतोष्णादिप्रभवं ४० दिष्टं दैवप्राप्तं धर्म्मात्पातयद्भिः परिभूतोऽपि सात्विकीं धृतिमास्थायस्वधर्म्मएवस्थि
तइमांवक्ष्यमाणां गाथामगायतसात्विकी धृतिश्चतदुक्तं भगवता धृत्यायया धारयते मनः प्राणेंद्रियक्रियाः योगे
नाव्यभिचारिण्या धृतिः सा पार्थसात्विकीतिस्मृतेः ४१ तामेवाष्टादशश्लोकींगाथामाह नायमिति नचात्मानापि

तंववंधुर्निरुरुधुर्यथाक्रीडनकंद्विजं एवंसभौतिकंदुःखंदैविकंदैहिकंचयत् ४० भोक्त
व्यमात्मनोदिष्टंप्राप्तंप्राप्तमवुध्यत परिभूतइमांगाथामगायतनराधमैः पातयद्भिःस्वध
र्म्मस्थोधृतिमास्थायसात्विकीं ४१ द्विजउवाच नाऽयंजनोमेसुखदुःखहेतुर्नदेवतात्मा
ग्रहकर्म्मकालाः नमःपरंकारणमाममनंतिसंसारचक्रंपरिवर्त्तयेद्यत् ४२ मनोगुणान्वैसृ
जतेवलीयस्ततश्चकर्म्माणिविलक्षणानि शुक्लानिकृष्णान्यथलोहितानितेभ्यःसवर्णाः
सृतयोभवंति ४३ अनीहआत्मामनसासमीहताहिरण्मयोमत्सखउद्विचष्टे ॥ ९ ग्रहादयःमनः

परंकेवलंसुखदुःखयोः कारणंवदंतिमनसाह्येवपश्यतिमनसाशृणोतीत्याद्याः श्रुतयः ४२ परिवर्त्तनप्रकारमेवा
ह मनइत्यादिगुणान्गुणवृत्तीः सृजति ततश्चतेभ्योगुणेभ्यः शुक्लानिसात्विकानि कृष्णानितामसानि लोहितानि
राजसानि सवर्णास्तत्तत्कर्म्मानुरूपाः सृतयः देवतिर्यङ्नरादयस्तज्जातयः ४३ तर्हिमनसएवसंसारः स्यान्नात्मनइ
त्याशंक्याह अनीहइति अयमर्थः अविद्यया मनोध्यासेनेयमात्मनः संसृतिर्नेतुस्वतः यतस्तद्द्रहितस्येश्वरस्यसानो

असंगः आसक्तिशून्यः अलक्षितः अप्रख्यमद्योतयत् ३२ प्रवयसं वृद्धं अवधूतं मलिनं पर्यभवन् अवमेनिरे हे भद्र प
रिभूतिभिस्तिरस्कारैः ३३ परिभवानेव दर्शयति केचिदिति सप्तभिः भो भगवन् गृहाणेति दर्शितानि संति प्रदाय पु

स च चार महीमेतां संयतात्मेंद्रियानिलः भिक्षार्थं नगरग्रामानसंगोऽलक्षितोऽविशत् ३२
तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः दृष्ट्वा पर्यभवन्भद्र बह्वीभिः परिभूतिभिः ३३ केचित्त्रि
वेणुं जगृहुरेके पात्रं कमंडलुं पीठं चैके ऽक्षसूत्रं च कंथां चीराणि केचन प्रदाय च पुनस्तानि
दर्शितान्याददुर्मुनेः ३४ अन्नं च भैक्षसंपन्नं भुंजानस्य सरित्तटे मूत्रयंति च पापिष्ठाः ष्ठी
वंत्यस्य च मूर्द्धनि ३५ यतवाचं वाचयंति ताडयंति न वक्ति चेत् तर्जयंत्यपरे वाग्भिः स्तेनो ऽ
यमिति वादिनः ३६ बध्नंति रज्ज्वा तं केचिद्बध्यतां बध्यतामिति क्षिपंत्येके ऽवजानंत एष ध
र्मध्वजः शठः ३७ क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः अहो एष महासारो धृतिमा
न्गिरिराडिव ३८ मौनेन साधयत्यर्थं बकवद्दृढनिश्चयः इत्येके विहसंत्येनमेके दुर्वातयंति
च ३९ ॥ ॥

॥ ९ नश्चाददुः ३४ अन्ने मूत्रयंति मूर्द्धनि च ष्ठीवंति फूत्कारेण श्लेष्माणं प्रक्षिपंति ।
३५ ३६ क्षिपंति निंदंति निन्दामेवाह एष धर्मध्वजः त्रिदंडलिंगोपजीवी शठो लोकवंचकः ३७ ॥
तदेवाह क्षीणवित्त इति महासारः अतिवली ३८ दुर्वातयंति तदुपर्यधोवायुं मुंचंति ३९ ॥ ॥

एवंविमृश्यानुतप्यमानआह व्यर्थयाऽर्थेहयाप्रमत्तस्यममवित्तादिगतमितिशेषः येनवित्तादिनाकुशलाः विवेकिनः
सिद्ध्यंतिमुच्यंतेजरठोवृद्धः २५ अन्यमपिस्वसदृशंशोचति कस्मादेवमनर्थेविद्वानपिसंक्लिश्यतइति कारणंसंभावय
ति कस्यचिदिति २६ ननुनायंमोहितःक्लिश्यति किंतुधनादिभिर्भोगादिविधित्सयाअतआह किंधनैरितिउतपुन
रपि २७ इदानींसंपन्नविवेकःसंहृष्यन्नाह नूनमितित्रिभिः येनप्रीतेनात्मनःप्लवरूपोनिर्वेदश्चभवतिसहरिर्मेनू

व्यर्थयाऽर्थेहयावित्तंप्रमत्तस्यवयोवलं कुशलायेनसिद्ध्यंतिजरठः किंनुसाधये २५ कस्मात्सं
क्लिश्यतेविद्वान्व्यर्थयाऽर्थेहयाऽसकृत् कस्यचिन्माययानूनंलोकोऽयंसुविमोहितः २६ किं
धनैर्धनदैर्वाकिंकामैर्वाकामदैरुत मृत्युनाग्रस्यमानस्यकर्मभिर्वोतजन्मदैः २७ नूनंमेभगवां
स्तुष्टः सर्वदेवमयोहरिः येननीतोदशामेतांनिर्वेदश्चात्मनःप्लवः २८ सोहंकालावशेषेणशो
षयिष्येंऽगमात्मनः अप्रमत्तोऽखिलस्वार्थेयदिस्यात्सिद्धआत्मनि २९ तत्रमामनुमोदेरन्देवा
स्त्रिभुवनेश्वराः मुहूर्तेनब्रह्मलोकंखट्वांगःसमसाधयत् ३० श्रीभगवानुवाच इत्यऽभिप्रेत्य
मनसाह्यावंत्योद्विजसत्तमः उन्मुच्यहृदयग्रंथींश्शांतोभिक्षुरभून्मुनिः ३१॥एनंप्रीतइति २८ अंगं॥

शोषयिष्येतपसा यद्वाविद्ययालयंनेष्यामि यदिस्यात्कालावशेषस्तर्ह्यात्मन्येवसिद्धस्तुष्टःसन् अखिलेस्वार्थेध
र्मादिसाधने अप्रमत्तःसन् २९ अनुमोदेरन् अनुगृह्णंतुननुदेवैरनुमोदितोऽपिजरठःस्वल्पेनकालेनकिंसाध
यिष्यसितत्राहमुहूर्तेनेति ३० अभिप्रेत्यनिश्चित्यआवंत्यः अवंतिदेशभवः हृदयग्रंथीन् अहंकारममताकारा

मात्रेऽर्थे स्मयादयो व्यसनैः सहनव व्यसनानि स्त्रीद्यूतमद्यविषयाणि त्रीणि १८।१९ भेदवैरस्पर्द्धाः प्रपंचयति द्वाभ्यां भिद्यं
ते स्नेहं त्यजंति कथंभूताः एकास्निग्धाः एके एकप्राणाः ते च ते आस्निग्धाः अतिप्रियाश्चेत्यर्थः कुतः काकिणिना पुंस्त्व
मार्थं विंशतिवराटिका काकिणी तया २० संरब्धाः क्षुभिताः स्पर्धाः स्पर्द्धमानाः २१ इह तावदर्थनिष्ठानामेतेऽनर्थाः
परलोकेऽप्यनर्था एव तेषामित्याह लब्ध्वेति त्रिभिः मानुष्यं जन्म तत्रापि द्विजाग्र्यतां श्रेष्ठकुलं ब्राह्मण्यं स्वार्थं

भेदो वैरमविश्वासः संस्पर्द्धा व्यसनानि च १८ एते पञ्चदशानर्था ह्यर्थमूला मता नृणां तस्मा-
दनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् १९ भिद्यंते भ्रातरो दाराः पितरः सुहृदस्तथा एकास्निग्धाः
काकिणिना सद्यः सर्वेऽरयः कृताः २० अर्थेनाऽल्पीयसा ह्येते संरब्धा दीप्तमन्यवः त्यजं-
त्याशु स्पृधो घ्नंति सहसोत्सृज्य सौहृदं २१ लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यतां तद-
नादृत्य ये स्वार्थं घ्नंति यान्त्यशुभां गतिं २२ स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् द्रविणे को
नुषज्जेत मर्त्योऽनर्थस्य धामनि २३ देवर्षिपितृभूतानि ज्ञातीन्बंधूंश्च भागिनः असंविभज्य
चात्मानं यक्षवित्तः पतत्यधः २४ ॥ ९. घ्नंति आत्महितं न कुर्वंति ये ते यांति २२ अमरप्रार्थ्यतां द-
र्शयन्नाह स्वर्गेति लोकं देहं अनुषज्जेत आसक्तिं कुर्यात् २३ ऋषयो मनुष्ययज्ञब्रह्मयज्ञयोर्देवताः देवपितृ
भूतानीतरे ज्ञातयः सगोत्राः बांधवा विवाहादिना संबद्धाः तान् अन्यांश्च भागिनः भागार्हान् आत्मानं च असंविभ
ज्य अन्नादिभिरसंतर्प्य २४ ॥

२३

भा॰ए॰ तेषामवध्यानमनादरः तेनविस्रस्तो विशीर्णः पुण्यस्यस्कंधः अर्थलाभमात्रहेतुरंश्रोयस्यतस्यवह्वायासैः कृष्यादि

१०१ भिः केवलश्रमोयस्मिन्नसः १० दैवतः गृहदाहादिनाकालतः निखातधान्यादिनानृणांपार्थिवानांचद्रुहद्रुहकंतस्मात् ११

१२ नष्टरायः नष्टोराः अर्थोयस्यतस्यतपस्विनः संतप्तस्य १३ मेमयाआत्मादेहः वृथैवात्मानुतापंप्रपंचयति नधर्मो

तदवध्यानविस्रस्तपुण्यस्कंधस्यभूरिद अर्थोऽप्यगच्छन्निधनंबह्वायासपरिश्रमः १०।

ज्ञातयोजगृहुः किंचित्किंचिद्दस्यवउद्धव दैवतः कालतः किंचिद्ब्रह्मबंधोर्नृपार्थिवात् ११ स

एवंद्रविणेनष्टेधर्मकामविवर्जितः उपेक्षितश्चस्वजनैश्चिंतामापदुरत्ययां १२ तस्यैवंध्याय

तोदीर्घंनष्टरायस्तपस्विनः खिद्यतोवाष्पकंठस्यनिर्वेदःसुमहानभूत् १३ सचाहेदमहोक

ष्टंवृथात्मामेऽनुतापितः नधर्मायनकामाययस्याऽर्थायासईदृशः १४ प्रायेणार्थाः कदर्यो

णांनसुखायकदाचन इहचात्मोपतापायमृतस्यनरकायच १५ यशोयशस्विनांशुद्धंश्ला

घ्यायेगुणिनांगुणाः लोभःस्वल्पोपितान्हंतिश्वित्रोरूपमिवेप्सितं १६ अर्थस्यसाधनेसि

द्धउत्कर्षेरक्षणेव्यये नाशोपभोगआयासस्त्रासश्चिंताभ्रमोनृणां १७ स्तेयंहिंसाऽनृतंदंभःका

मःक्रोधःस्मयोमदः॥ एवेत्यादिनायस्यईदृशोऽर्थायासस्तेनमया १४ नरकायचसत्यप्यर्थेधर्माननुष्ठाना

त् १५ श्वित्रःश्वेतकुष्ठं १६ सिद्धेऽप्यर्थेतस्योत्कर्षेसंवर्धने नाशोपभोगयोर्द्वंद्वैकंनाशेउपभोगेचेत्यर्थः साधनोत्क

र्षयोरायासः ततस्त्रासः चिंताचनाशेभ्रमइति १७ किंचअर्थप्राप्तअर्थास्तेयादयःषट्॥

एम

१०१

पुरुषोक्तिरूपा इषवस्तुदंति व्यथयंति तथा इतरे बाणा न तुदंति अतस्तैस्तथा न तप्यत इत्यर्थः ३ तथाऽपि मया वक्ष्यमाणै
रूपायैः सर्वसो दुःखाक्रमित्यभिप्रायेणेतिहासं प्रस्तौति महद्यथा भवति तथा पुण्यमितिहासं गाथां कथयंति ४ ५ स तु
भिक्षुः पूर्वं धनाढ्यः कृच्छ्रार्जितस्य धनस्य नाशेन संतप्यमानो निर्विण्णः सन् प्रव्रज्य भिक्षामटन् दुर्जनैरुपद्रुतः प्रस्तुतो

यथा तुदंति मर्मस्था ह्यसतां पुरुषेषवः ३ कथयंति महत्पुण्यमितिहासमिहोद्धव त
महं वर्णयिष्यामि निबोध सुसमाहितः ४ केनचिद्भिक्षुणा गीतं परिभूतेन दुर्ज्जनैः
स्मरता धृतियुक्तेन विपाकं निजकर्मणां ५ अवंतिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया
वार्त्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ६ ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि ना
र्चिताः शून्यावसथ आत्मापि काले कामैरनर्चितः ७ दुःशीलस्य कदर्यस्य द्रुह्यंते पुत्रबां
धवाः दारा दुहितरो भृत्या विषण्णा नाचरन् प्रियं ८ तस्यैवं यक्षवित्तस्य च्युतस्योभयलो
कतः धर्मकामविहीनस्य चुक्रुधुः पंचभागिनः ९ ॥ ९ पयोगिनीं गाथामगायतेति वक्तुं तस्य चरि
तमाह अवंतिष्वित्यादिना अवंतिषु मालवेषु वार्त्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य कदर्यश्च कदर्यस्तु स्मृता
वुक्तः आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् देवतातिथिभृत्यांश्च स कदर्य इति स्मृत इति ६ तस्य ये ज्ञातयो बां
धवा अतिथयो ध्वनीनाश्च ते तेन नार्चिता इत्यर्थः शून्यावसथे धर्मकर्महीने गृहे देहे वा ७ ८ यक्षाणां वित्तमिव

एवंत्वदुक्तंयथा च अनुवुध्येयंतथानः अस्मानप्रतिवद ५९ त्वद्धर्म्मनिरतान्तेविदुषामपिअसद्भिः कृतमतिक्रमंअ
पराधंसुदुःसहमहंमन्ये इत्यन्वयः प्रकृतिः स्वभावः निरस्तसर्वसंदेहमेकीकृत्यसुदर्शनं प्रकाशितरहस्यंतंभजत्वगुरुमी
श्वरं ६०॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायां द्वाविंशोऽध्यायः २२ त्रयोविंशेतिरस्कारसहनोपायईं
र्यते भिक्षुगीतप्रकारेणमनसःसंयमोधिया १ दुर्जनोपद्रवोनूनंदुःसहोपिमहीयसां अतस्त्रतुर्भिरध्यायैःसहनोपा

उद्धवउवाच यथैवमनुवुध्येयंवदनोवदतांवर सुदुःसहमिमंमन्ये आत्मन्यसदतिक्रमं ५९
विदुषामपिविश्वात्मन्प्रकृतिर्हिवलीयसी ऋतेत्वद्धर्म्मनिरतांश्छांतांस्तेचरणालयान्॥
६०॥ इतिश्रीभागवतेएकादशस्कंधेद्वाविंशोऽध्यायः २२॥ वादरायणिरुवाच सएवमा
शंसितउद्धवेनभागवतमुख्येनदाशार्हमुख्यः सभाजयन्भृत्यवचोमुकुंदस्तमावभाषेश्रव
णीयवीर्यः १ श्रीभगवानुवाच वार्हस्पतसनैवात्रसाधुर्वैदुर्जनेरितैः दुरुक्तैर्भिन्नमा
त्मानंयः समाधातुमीश्वरः॥ २॥ नतथातप्यतेविद्धः पुमान्वाणैः सुमर्म्मगैः॥ ३ यवर्णने २ तत्रता
वदस्मिन्नध्याये भिक्षुगीतयामनोविजयः उत्तरस्मिन्प्रकृतिपुरुषविवेकः तदुत्तरस्मिन् गुणवृत्तिविजयः ततःपर
स्मिन्नैलगीतया विषयसंगत्यागेनसत्संगइति क्रमेणोपायाभगवतावर्ण्यन्ते आसंशितःप्रार्थितः भृत्यस्यवचःसत्कु
र्वन्तंभृत्यंप्रति आवभाषे १ तत्रतावदंगीकुर्वंस्तद्वचःसंपूजयनिद्धाभ्यां हेवार्हस्पत्यवृहस्पतेःशिष्य अत्रलोकेसाधु
र्नास्ति योदुर्जनोक्तैर्भिन्नंक्षुभितंमनःसमपितुमीश्वरःस्यात् २ कुतइत्यत आह नेति यथामर्मस्थाः मर्मस्वेवनितंस्थिताः

उपाधिधर्म्मोस्योपहितेऽवभासंतेइत्यत्र दृष्टांतमाह यथांभसेतितीरस्थास्तरवोधावंतइवेतिदृश्यंते जलेप्रतिविंवि
तावाचंचलाइवेति विषयग्राहकेणमनसापरिकल्पिताएवतेषुलावण्यादयोगुणाःनवस्तुतःसंति अतोमनोनि
वंधनएवसंसारइत्यभिप्रेत्यग्राहकगुणाग्राह्येऽवभासंतइत्यत्रदृष्टांतमाहचक्षुषेति ५३ भोगस्यापिमिथ्यात्वेदृष्टां
तद्वयमाह यथेति यथाएताः प्रसिद्धाः मनोरथधियः स्वप्नदृष्टाश्चधियोयथामृषा एवंआत्मनोविषयानुभवः

यथांऽभसाप्रचलतातरवोपिचलाइव चक्षुषाभ्राम्यमाणेनदृश्यतेभ्रमतीवभूः ५३ य
थामनोरथधियोविषयानुभवोयथा स्वप्नदृष्टाश्चदाशार्हतथासंसारआत्मनः ५४ अ
र्थेह्यविद्यमानेपिसंसृतिर्ननिवर्तते ध्यायतोविषयानस्यस्वप्नेनर्थागमोयथा ५५ तस्मा
दुद्धवमाभुंक्ष्वविषयानसदिंद्रियैः आत्माऽग्रहणनिर्भातंपश्यवैकल्पिकंभ्रमं ५६ क्षि
प्तोऽवमानितोऽसद्भिःप्रलब्धोऽसूयितोथवा ताडितःसंनिरुद्धोवावृत्त्यावापरिहापितः ५७
निष्ठितोमूत्रितोवाऽज्ञैर्बहुधैवंप्रकंपितः श्रेयस्कामःकृच्छ्रगतःआत्मनाऽत्मानमुद्धरेत् ५८

संसारोमृषा ५४ ननुयदिमृषातर्हिकिंतन्निवृत्तिश्रमेणतत्राह अर्थेहीति अस्यात्मनः ५५ अतोभो
गोद्यमोनकर्त्तव्यइत्याह तस्मादिति ५६ दुःखप्रतीकारोद्यममपिपरित्यज्यपरमेश्वरनिष्ठैवभाव्य
मित्याह क्षिप्तइतिद्वाभ्यां क्षिप्तः ——— आक्षिप्तः नुन्नइतिवा प्रलब्धउपहसितः ५७ निष्ठितः नि
ष्ठीवनविषयीकृतः मूत्रितः मूत्रेणार्द्रीकृतः प्रकंपितःपरमेश्वरनिष्ठातःप्रच्यावितोऽपिकृच्छ्रगतःकष्टंप्राप्तोऽ

ननुतदानींमूर्छितत्वेनजन्ममरणवान्देहोनदृश्यतेतत्राह आत्मनइति पितृदेहस्यौर्ध्वदेहिकंकुर्वतोऽप्ययदर्शनात्त
पुत्रदेहस्यचजातकर्म्मणिजन्मदर्शनादात्मनःस्वस्यदेहस्यापिभवाप्ययावनुमेयौएवंचदृश्यत्वेसतिभवाप्ययवतां
वस्तूनांदेहानामभिज्ञोद्रष्टाऽद्वयलक्षणःभवाप्ययधर्म्मकोनभवति ४८ एतदेवदृष्टांतेनस्पष्टयति तरोरिति तरू
शब्दोनोद्भिज्जमात्रस्योपलक्षणंकिंतुफलपाकान्तस्यव्रीह्यादेरित्यर्थः यद्वातरोर्योंऽत्यःपरिणामोविपाकःबीजाज्ज
न्मापिपाकांतंयमंनाशंचविद्वान् ४९ अविवेकिनःसंसारंप्रपंचयति प्रकृतेरितिपंचभिः तत्वेनतत्वतोऽविवि

आत्मनःपितृपुत्राभ्यामनुमेयौभवाप्ययौ नभवाप्ययवस्तूनामभिज्ञोद्वयलक्षणः ४८
तरोर्बीजविपाकाभ्यांयोविद्वाञ्जन्मसंयमौ तरोर्विलक्षणोद्रष्टाएवंद्रष्टातनोःपृथक् ४९
प्रकृतेरेवमात्मानमविविच्याऽबुधःपुमान् तत्वेनस्पर्शसंमूढःसंसारंप्रतिपद्यते ५० सत्वसंगा
दृषीन्देवान्रजसासुरमानुषान् तमसाभूततिर्यक्त्वंभ्रामितोयातिकर्मभिः ५१ नृत्यतोगाय
तःपश्यन्यथैवानुकरोतितान् एवंबुद्धिगुणान्पश्यन्ननीहोऽप्यनुकार्यते ५२॥ ॥

च्यतत्वमदृष्ट्वास्पर्शेषुविषयेषुसंमूढइतिवा ५० गुणभेदेनत्रिविधंतत्रापिचतारतम्येनैकैकत्रद्विवि
धंसंसारमाहसत्वेति ५१ नन्वकर्त्तुरात्मनःकुतःकर्म्मभिर्भ्रमणं तत्राह नृत्यतोगायतोजनान्पश्य
न् अनुकरोतितद्गतस्वरतालादिगतिं शृंगारकरुणादिरसंचमनस्यनुवर्त्तयतीत्यर्थः एवंअनुकार्य
तेगुणैर्बलादित्यर्थः अनेनदृष्टांतेनदृश्यधर्म्मोद्रष्टरिस्फुरतीतिदर्शितं ५२ ॥ ॥ ॥

कथं तर्हि प्रत्यभिज्ञा तद्देवसादृश्यावलंबिनीत्याह सोऽयमिति सादृश्यादर्चिषामेव यथा सोऽयं दीप इति प्रत्यभिज्ञा
यथा च स्रोतसां प्रवाहजलानामेव तदिदं जलमिति तथा सोऽयं पुमानिति धीर्गीश्च मृषा नृणां बहूनां शरीरिणां मृषा व्य
र्थमायुर्येषामविवेकिनां तेषां भवति ४४ ननु कथं देहाध्यासवतः पुंसः कर्म्मजन्ममरणानि संततिनाम्न्येति व्यवस्था
न हि घटते घटस्य पुरुषभेदेन सत्वमसत्वं चेति न अतस्तापि वस्तुतस्तदभावादित्याह मास्वस्येनैवात्मनः कर्म्मणा॥
वीजभूतेन सोपि अजोपि पुमान् जायते म्रियते वा किंतु अयं भ्रांत्या अजन्मापि जायत इव अमरोपि म्रियत इव य

सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलं सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषां ४४ मा
स्वस्य कर्म्मवीजेन जायते सोप्ययं पुमान् म्रियते वाऽमरो भ्रांत्या यथाऽग्निर्दारुसंयुतः ४५ नि
षेकगर्भजन्मानि वाल्यकौमारयौवनं वयोमध्यं जरामृत्युरित्यवस्थास्तनोर्नव ४६ एतान्म
नोरथमयीन्ह्यन्यस्योच्चावचास्तनूः गुणसंगादुपादत्ते क्वचित्कश्चिज्जहाति च ४७॥ ९

था महाभूततेजोरूपोऽग्निरा कल्पांतमवस्थितोऽपि दारुयोगवियोगाभ्यां जन्मनाशौ प्राप्नोतीति तद्वत् ४५ सिद्धवत्क
ल्पिता नवावस्थाः प्रपंचयति निषेको जठरे प्रवेशः गर्भस्तन्मध्ये वृद्धिः वाल्यं शिशुत्वं आपंचमाब्दात् कौमारं आषो
डशाद्वर्षात् ततो यौवनमापंचाशत् ततो वयोमध्यमाषष्ठिवर्षात् तत उपरि जरा तदुपरि मृत्युः ४६ देहसंवंधाज्जन्मम
रणादीत्युपपादितमर्थमुपसंहरति एतानिति हि स्फुटं अन्यस्य देहस्य तनूः अवस्थाः गुणसंगात् प्रकृत्यविवेकात्
कश्चित् परमेश्वरानुग्रहतः क्वचित् कथंचित् जहाति अवस्थावतो देहस्य द्रष्टा नासाववस्थावानिति विवेकज्ञानेन ४७॥

२२
भा॰ए॰
६८

दृष्टांतौ विवृणोति स्वप्नमिति तत्र वर्त्तमाने स्वप्नादौ पूर्वं चेति अपूर्व्वमिवेति वान्वयः पूर्व्वसिद्धमप्यात्मानमपूर्व्वमिवा
द्यजातमिव पश्यतीत्यर्थः ५० उपसंहरति इंद्रियाणामयनं मनस्तस्य देहांतराभिनिवेशनया सृष्टिः उत्पत्तिस्तया याव
स्तुनि आत्मनि तदभिमानेनेदं त्रैविध्यं उत्तममध्यमनीचत्वं असदेव भातीत्यन्वयः एवंभूत आत्मा वाह्याभ्यंतरभेदहे
तुश्च भवति वाह्यविषयात् आंतरान् सुखादींश्च पश्यतीत्यर्थः यथा जनो जीवः स्व एव बहून् असतो जनान् देहान् कुर्वन् पश्यन्
बहुरूपो भाति तद्वत् यद्वा इदं त्रैविध्यं आध्यात्मादिरूपं भाति असज्जनकृत् दुष्टपुत्रात्मादकः जनः पिता स्वयं समो।

स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ तत्र पूर्व्वमिवात्मानमपूर्व्वं चानुपश्यति ५० इंद्रिया-
यनसृष्टेदं त्रैविध्यं भाति वस्तुनि वहिरंतर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ५१ नित्यदा ह्य-
ङ्ग भूतानि भवंति न भवंति च कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ५२ यथार्च्चिषां स्रो-
तसां च फलानां वा वनस्पतेः तथैव सर्व्वभूतानां वयोवस्थादयः कृताः ५३॥ पिपुत्राभिमानतस्तद्

भिमित्रारिपुत्रयथा भेदहेतुर्भवति नित्यदा तत्ह्यद्दि ति अन्यत्समानं ५१ तदेवं लोकप्रसिद्धौ जन्म तू निरूप्य सूक्ष्मावस्थ
ह्रावपि तौ वैराग्याय निरूपयति नित्यदा प्रतिक्षणं भूतानि शरीराणि उत्पद्यंते नश्यंति च कालस्याति सूक्ष्मत्वात्तन्न तं भवा-
न भवनं वा विवेकिभिरपि लक्ष्यते ५२ ननु जन्ममरणयोरज्ञाने कारणमेतद्भवेत् सत्वमेव तयोः कुत इत्याशंक्यानुमाने
न साधयति यथेति अर्च्चिषां परिणामादिभिः स्रोतसां गत्यादिभिः फलानां रूपादिभिर्यथावस्थाविशेषाः कृताः का
लेनेति पूर्वस्यानुषंगः आदिशब्देन तेजोबलकामकौशलादीनामुपादानं विमतं प्रतिक्षणोत्पत्तिविनाशवत् अव

एम
६८

लिंगशरीराध्यासेन सर्वं घटत इत्युत्तरमाह मन इति प्रधानत्वेन पंचभिरिति निर्देशोऽन्येषामप्युपलक्षणार्थे देहाद्देहांतरं प्रतियाति ततोऽन्य एवात्मा तन्मनोऽनुवर्त्तते अहंकारेणानुगच्छति ३६ ननु मनसोऽपि पूर्वदेहवियोगो देहांतरयोगश्च कथं भवतो नि चेतनस्मृति वियोग योगाभ्यामिति वक्तुं तयोः कारणमाह ध्यायन्निति कर्मतंत्रत्वात्कर्मोपस्थापितान् दृष्टान्वा अनुश्रुतान् वेदोक्तान्विषयान् अनुध्यायन् अथानंतरं ध्यायमानेषु उद्यत् आविर्भवत् पूर्वविषयेषु च सीदत् लीयमानं भवति तदनन्तरं तस्य स्मृतिः पूर्वापरानुसंधानं नश्यति ३७ ततः किं अत आह विषयेति कर्म्मोपस्थापितदेवादिदे

श्रीभगवानुवाच मनः कर्ममयं नृणामिंद्रियैः पंचभिर्युतं लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्त्तते ३६ ध्यायन्मनोऽनुविषयान् दृष्टान्वाऽनुश्रुतानथा उद्यत्सीदत्कर्मतंत्रं स्मृतिस्तदनुशाम्यति ३७ विषयाभिनिवेशेन नात्मानं यत्स्मरेत्पुनः जंतोर्वै कस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः ३८ जन्मत्वात्मतया पुंसः सर्वभावेन भूरिद विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथाः ३९॥

हाऽत्यंताभिनिवेशेन आत्मानं पूर्वदेहं पुनर्मनो न स्मरेत् इति यत्तस्यैव यातनादेहाभिनिवेशेन भयशोकादेर्देवादिदेहाभिनिवेशेन वा हर्षतर्षादेर्हेतोः पूर्वदेहे अत्यंतविस्मृतिः अहंकारनिवृत्तिस्तदभिमानिनो जंतोर्जीवस्य मृत्युरुच्यते न तु देहवन्नाशः ३८ जन्म तु विषयस्य देहस्य आत्मतया स्वीकृतिं अभिमानं प्राहुः ननु देहवदुत्पत्तिः न च पुत्रादिहेहवत्प्रीत्यतिशयमात्रेण किंतु सर्वभावेन अभेदेन अभिमानमात्रेणोत्पत्तिमरणे दृष्टांतद्वयं यथा स्वप्नस्वप्नमनोरथश्चेत्यर्थः ३९॥ ॥ ॥ ॥ ॥

ननुपुनरपिविकल्पमात्रमेवोक्तंत्रिविधप्रपंचव्यतिरिक्तात्मप्राप्तिस्तुकुतःस्यात् अहंकारनिवृत्यात्तत्कुतःत्रिविधविविधविक
ल्पनिवृत्तिरेवेत्याशयेनाह योसौ अहं अहंकारः तमेवाह गुणक्षोभंकरोतीतितथाततः परमेश्वरात्कालनिमित्तात् प्रधानंमू
लमुपादानंयस्यतस्मान्महतःप्रसूतोविकारःसत्रिवृत् त्रिविधः मोहमयस्यविकल्पस्यहेतुः त्रिवृत्त्वमेवाहवैकारिकइति अ
स्यकुतोनिवर्त्तते आत्माज्ञानविलसितत्वात्तत् ज्ञानेनेत्याशयेनाह आत्मापरिज्ञानमयइति ननुकथंमोहमयत्वंविकल्प
स्याहंकारस्यवाकैश्चित्सत्यत्वांगीकारात् तत्राह विवादइति अयंभिदार्थेनिष्ठोविवादोऽप्यात्मापरिज्ञानमयइत्यन्वयः

योसौगुणक्षोभकृतोविकारःप्रधानमूलान्महतःप्रसूतः अहंत्रिवृन्मोहविकल्पहेतुर्वैकारि
कस्तामसऐंद्रियश्च ३२ आत्मापरिज्ञानमयोविवादोह्यस्तीतिनास्तीतिभिदार्थनिष्ठः व्यर्थोऽ
पिनैवोपरमेतपुंसांमत्तःपरावृत्तधियांस्वलोकात् ३३ उद्धवउवाच त्वत्तःपरावृत्तधियःस्वकृ
तैःकर्म्मभिःप्रभो उच्चावचान्यथादेहान्गृह्णंतिविसृजंतिच ३४ तन्ममाख्याहिगोविंददुर्वि
भाव्यमनात्मभिः नह्येतत्प्रायशोलोकेविद्वांसःसंतिवंचिताः ३५॥ एवंयद्वाविवादःसर्वोऽपिभिदार्थनिष्ठएव

नतुवस्तुमात्रनिष्ठःअतःपरस्परंयुक्तिभिरेवभेदस्यनिराकृतत्वात् मोहमयत्वंसिद्धमिति ननुयद्यहंकारोविकल्पश्च
नास्तिअलंतर्हि तन्निवृत्तिप्रयासेनतत्राह व्यर्थोऽपिअर्थरहितोऽपिस्वरूपभूतान्मत्तोवहिर्मुखानांनैवोपरमेत् प्रत्युत
तत्कृतैःकर्म्मभिरुच्चनीचदेहेषुतेसंसरंतीति ३३ तत्रपृच्छति त्वत्तइति व्यापकस्यात्मनोदेहाद्देहांतरगमनंअकर्तुःक
र्म्माणिनित्यस्यचजन्ममरणादीनिकथमितिभावः ३४ एतद्विद्वांसोनसंतिहियस्मात्तमायया वंचिताःमोहिताः ३५॥

नानात्वमाह ममेति विकल्पं भेदः तद्बुद्धीश्च अनेकधात्वं प्रपंचयति वैकारिक अनेकविकारवानपि स्थूलेन मार्गेण तावत्त्रि विधः त्रैविध्यमेवाह अध्यात्ममिति एकं रूपं ३० तानि रूपाणि दर्शयति दृक् अध्यात्मं रूपं अधिभूतं अत्र रंध्रे च चक्षुर्गोलके प्रविष्टं आर्कं वपुः अंशोऽधिदैवमिति सापेक्षप्रकाशतामाह परस्परमिति चक्षुषा रूपं ज्ञायते तदन्यथानुपपत्त्या चक्षुस्तत्स्व वृत्त्यन्यथानुपपत्यात दधिष्ठात्री देवता ततश्च चक्षुषः प्रवृत्तिस्ततो रूपज्ञानमित्येवमेतत् त्रयं परस्परं सिध्यति अत्र रंध्र इति वि शेषणस्याव र्त्यमाह दृष्टांतोपयोगितया यस्तु खे आकाशे अर्को वर्त्तते मंडलात्मा स तु स्वतः सिध्यति चक्षुर्विषयत्वेऽपि प्रति योग्यपेक्षाभावमात्रेण स्वत इत्युक्तं इदानीमात्मनो विकारित्वाद्यभावेन भेदमाह यत् यस्मात् आत्मा एषामध्यात्मादीना

ममांऽग माया गुणमय्यऽनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते वैकारिकस्त्रिविधोऽध्यात्ममे कमथाधिदैवमधिभूतमन्यत् ३० दृग्रूपमार्कं वपुरत्र रंध्रे परस्परं सिध्यति यः स्वतः खे आत्मा यदे षामपरो य आद्यः स्वयाऽनुभूत्याऽखिलसिद्धसिद्धिः एवं त्वगादि श्रवणादि चक्षुर्जिह्वादि नासादि च चित्तयुक्तम् ३१॥

॥ माद्यः कारणं अत एव कारूपः अभिन्नश्च तस्मादेतेभ्योऽपरो भिन्नः स्वप्रकाशत्वादपीत्याह स्वयाऽनु भूत्या स्वतः सिद्धप्रकाशेन अखिलानां सिद्धानां परस्परप्रकाशकानामपि प्रकाशकः सर्वेषामपि सामान्यतस्त्रित्वप्रकाशविष यत्वात् अत एव तस्य प्रकाशकत्वं सिद्धं चक्षुषि दर्शितं त्रैविध्यमिंद्रियांतरेष्वऽप्यतिदिशति एवमिति यथा चक्षुः एवं त्वगाद्यपी त्यर्थः त्वक् स्पर्शो वायुरिति श्रवणं शब्दो दिश इति जिह्वा रसो वरुण इति नासा गंधोऽश्विनाविति चित्तेन युक्तमंतःकरणां तरमपि तत्र चित्तं चेतयितव्यं वासुदेव इति मनो मंतव्यं चंद्र इति बुद्धिर्बोद्धव्यं ब्रह्मेति अहंकारोऽहंकर्त्तव्यं रुद्र इत्येवं त्रिविधमित्य

भा० ए०
९९

उपसंहरतिइतीतित्रिभिःप्रकारैः तत्वानांगणनंऋषिभिःकृतंप्रकृतिपुरुषभेदंज्ञापनायेत्यर्थः नत्वेतेषांमध्येकतमःपक्षोत्या
ज्यइतिचेत्तत्राहसर्वमिति २५ ननुगुणसाम्यंप्रकृतिस्तसाःसत्वादयोगुणाःनात्मनइतितयोर्भेदाप्रतीतेःकथंज्ञात्वंशक्य
तइति तत्रउद्धवःपृच्छतिप्रकृतिरिति आत्मनाजडाजडस्वभावेनविलक्षणौअन्योन्यापाश्रयात्परस्परपरिहारेणाप्रतीते
रित्यर्थः २६ तदेवव्यनक्तिप्रकृतावितिप्रकृतौतत्कार्येदेहेप्रकृतिःआत्मनितेनविनातस्याअप्रतीतेःअहमित्यभेदप्रती॥
तिर्न्नदेहात्मनोर्भेदोलक्ष्यतइत्यर्थः हृदिवर्तमानंसंशयंनयेनयुक्त्यानैपुण्यंप्रावीण्यंयेषांतैः २७ अहंसोत्युक्तेतत्र

श्रीशुकउवाच इतिनानाप्रसंख्यानंतत्वानामृषिभिःकृतं सर्वंन्याय्यंयुक्तिमत्वाद्विदुषां
किमशोभन २५ उद्धवउवाच प्रकृतिःपुरुषश्चोभौयद्यप्यात्मविलक्षणौ अन्योन्यापा
श्रयात्कृष्णदृश्यतेनभिदातयोः २६ प्रकृतौलक्ष्यतेह्यात्माप्रकृतिश्चतथात्मनि एवंमे
पुंडरीकाक्षमहान्तंसंशयंहृदि छेत्तुमर्हसिसर्वज्ञवचोभिर्न्नयनैपुणैः २७ त्वत्तोज्ञानंहि
जीवानांप्रमोषस्तेऽत्रशक्तितः त्वमेवह्यात्ममायायागतिंवेत्थनचाऽपरः २८ श्रीभगवानु
वाच प्रकृतिःपुरुषश्चेतिविकल्पःपुरुषर्षभ एषवैकारिकःसर्गोगुणव्यतिकरात्मकः २९॥

हितुमाह हियस्मात्त्वत्तःत्वत्प्रसादादेवअत्रज्ञानंप्रमोषःभ्रंशश्चतेशक्तितःमायातःननुचस्वप्रकाशस्यात्मनःकथंज्ञा
नप्रमोषःज्ञानदानेनतत्प्रमोषेवाममकिंप्रयोजनंतत्राहत्वमेवेति २८ विकाराविकाराभ्यांनानात्वैकत्वाभ्यांसापेक्षनि
रपेक्षाभ्यांप्रकाशाभ्यांचात्यंतभेदंवक्तुमाह प्रकृतिःपुरुषश्चेतिविकल्पोऽत्यंतभेदएव कुतइत्यपेक्षायांप्रकृतिशब्दोक्त
देहादिसंघातस्यविकारित्वंतावद्दर्शयतिएषइतिद्वाभ्यांएषःसर्गःसृज्यतइतिसर्गोदेहादिसंघातःवैकारिकःविकारवान्
तु॰ २ हेपुरुषर्षभयन्महदादिरूपेणपरिणमतिसाप्रकृतिःयदपरिणामिसपु॰

राम
९९

एवंस्वमतं उपसं हृत्य मतांतरेष्वपि सामान्यतो निरूपितां घटनां विशेषतः सतात्पर्य्यं दर्शयति सप्तैवेति ज्ञानं जानातीति द्रष्टा जीवः उभयोर्द्दृग्दृश्ययोराधारः आत्मा चेति सप्त तत्र प्रकृत्यादीनां कारणत्वेन खादिष्वंतर्भावं अन्तरे षामंतर्भावार्थमाह ततस्तेभ्यः सप्तभ्यः देहेंद्रियासवः सर्वकार्य्याणि जायंते १९ षडिति मते भौतिकस्य भूतांतर्भावे जीवस्य परमात्मांतर्भावमाह तैर्युक्त इति स च परः पुमान् तैरात्मसंभूतैः पंचभूतैर्युतः इदं देहादिकं सृष्ट्वा तत्स्वयं समुपाविशत् पूर्वस्मिन्कारणं पंचभूतात्मके भौतिके इंद्रियादीनामंतर्भाव उक्तः पूर्वोक्तयाज्ञात्व्यः २० चत्वारिपक्षे तेजः आपः अन्नं पृथ्वी आत्मनो जातानि आत्मना सह चत्वारि तत्त्वानि अंतर्भावार्थमाह तैरिति तैस्तत्त्वैरिदं जगज्जातं अवयविनं कार्य्यं

सप्तैव धातव इति तत्रार्थाः पंच खादयः ज्ञानमात्मोभयाधारस्ततो देहेंद्रियासवः १९
षडित्यत्रापि भूतानि पंच षष्ठः परः पुमान् तैर्युक्त आत्मसंभूतैः सृष्ट्वेदं समुपाविशत् २०
चत्वार्य्येवेति तत्रापि तेज आपोन्नमात्मनः जातानि तैरिदं जातं जन्मावयविनः खलु २१
संख्याने सप्तदशके भूतमात्रेंद्रियाणि च पंच पंचैकमनसा आत्मा सप्तदशः स्मृतः २२
तद्वत्षोडशसंख्याने आत्मैव मन उच्यते भूतेंद्रियाणि पंचैव मन आत्मा त्रयोदश २३ एका
दशत्वमात्मासौ महाभूतेंद्रियाणि च अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ २४॥

स॥ ॥ २९॥ ॥ भूतानि च मात्राणि च इंद्रियाणि च पंच पंच एकेन मनसा सह आत्मा सप्तदशः २२ आत्मैव संकल्पयन्मन उच्यते त्रयोदशपक्षे भूतानि तन्मात्रैरेकीकृतानि पंचैव इंद्रियाणि तत्र काशकानि यं चैव मनश्चैकमिंद्रियाधिष्ठातृ आत्मा च द्विविधः एवं त्रयोदश २३ एकादशपक्षे पंच महाभूतानि पंचेंद्रियाणि जीव

तत्र नव दर्शयति पुरुष इति सार्द्धद्वाभ्यां व्यक्तं महत्तत्त्वं नभआदीनि पंच तन्मात्राणि मे मया १४ एकादश दर्शयति श्रोत्रमिति द
र्शनं चक्षुर्ज्ञानशक्तयः ज्ञानेंद्रियाणि पंच वागादि पाय्वंतानि द्वंद्वैकोनोक्तानि चत्वारि अंघ्रिश्चेति कर्म्माणि कर्मेंद्रियाणि
पंच उभयात्मकं मनः अंग हे उद्धव एवमेतान्येकादश १५ पंच दर्शयति शब्दादीनि विषयतया परिणतानि पंच महाभूता
नि ननु गत्यादिभिस्तत्त्वाधिक्यं पक्षत्रयेपि स्यात्तत्राह गतीति गतिश्च उक्तिश्च उत्सर्गौ च शिल्पं च तानि कर्मायतनानां
कर्मेंद्रियाणां सिद्धयः फलानि न तत्त्वांतराणीत्यर्थः १६ तदेवं मतत्रयेपि तत्संख्याभेदं निरूप्य यद्विवक्षया गायंतीति य

पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोनिलः ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव १४ श्रो
त्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः वाक्पाण्युपस्थपाय्वंघ्रिः कर्म्माण्यंगोभयं मनः १५
शब्दः स्पर्शो रसो गंधो रूपं चेत्यर्थजातयः गत्युक्त्युत्सर्गशिल्पानि कर्म्मायतनसिद्धयः १६ सर्गादौ
प्रकृतिर्ह्यस्य कार्य्यकारणरूपिणी सत्वादिभिर्गुणैर्धत्ते पुरुषोव्यक्त ईक्षते १७ व्यक्तादा
यो विकुर्वाणा धातवः पुरुषेक्षया लब्धवीर्य्याः सृजंत्यंडं संहताः प्रकृतेर्बलात् १८ ॥ ॥

त्पक्षं तत्रान्यतत्तात्पर्य्यं दर्शयति सर्गादाविति कार्य्याणि षोडश विकाराः कारणानि महदादीनि सप्त तद्रूपिणी सती
प्रकृतिः अस्य विश्वस्य सर्गादौ गुणैः सृजत्वाद्यवस्था धत्ते उपादानकारणरूपत्वात् पुरुषस्त्वव्यक्तः अपरिणामी निमि
त्तभूतः केवलमीक्षते अतः परिणामिन्याः प्रकृतेः पुरुषो भिन्न इति १७ तत्वैरारब्धस्य कार्य्यस्य तद तर्भावमभिप्रेत्याह
व्यक्तादय इति व्यक्तादयो महदादयः प्रकृतेरुत्पन्नाः ये धातवस्ते विकुर्वाणाः पुरुषेक्षणेन लब्धवीर्य्याः संहता अंडं का

ननुकार्य्यकारणतत्वानां पृथक्त्वापृथक्त्वविवक्षया भवतु नाम संख्याभेदः जीवेश्वरयोस्तु कथं भेदाभेदविवक्षयाऽयं षड्विंशतिपंचविंशतिपक्षौ प्रवृत्तौ अत आह अनादीति स्वतो न संभवति अन्यतस्तु संभवात् स्वतः सर्वज्ञः परमेश्वरोऽन्यो भवितव्य इति षड्विंशतिपक्षाभिप्राय इत्यर्थः १० कथं तर्हि पंचविंशतिपक्षस्तत्राह पुरुषेति वैलक्षण्यं विसदृशत्वं नास्ति द्वयोरपि चिद्रूपत्वात् अतस्तयोरत्यंतमन्यत्वकल्पना अपार्था व्यर्था एवं पंचविंशतिपक्षः प्रवृत्त इत्यर्थः नन्वेवमपीश्वरप्रसादलभ्यज्ञानस्य पृथक्त्वात्संख्याद्वयमपि न घटते अत आह ज्ञानं चेति सत्वगुणवृत्तित्वात् तदंतर्भूतमित्यर्थः ११ ननु।

अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् स्वतो न संभवादन्यस्तत्वज्ञो ज्ञानदो भवेत् १० पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ११ प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणाः सत्वं रजस्तम इति स्थित्युत्पत्त्यंतहेतवः १२ सत्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते गुणव्यतिकरः कालः स्वभावः सूत्रमेव च १३॥

ज्ञानं जीवधर्म्मः कथं प्रकृतेर्गुणस्तत् अत आह प्रकृतिरिति गुणसाम्यं हि प्रकृतिः अतस्तद्विशेषरूपा गुणास्तस्या एव न त्वात्मनो जीवस्याकर्तृत्वात् तस्य स्थित्यादिहेतुभूतगुणाश्रयत्वानुपपत्तेः १२ अतः सत्वं सत्वमयं ज्ञानं प्रकृतेर्गुण इति पूर्वेणैवान्वयः ननु तर्हि तत्तन्निबन्धकर्म्माज्ञाने च तत्वान्तरे स्यातां न रजः कर्म्म रजसो वृत्तिः अज्ञानं च तमसः अतः कर्म्मज्ञानयोः रजस्तमोद्वारा प्रकृतावेवान्तर्भाव इति भावः तथापि कालस्वभावयोस्तत्वान्तरता स्यात् न गुणव्यतिकर इति गुणानां व्यतिकरो यस्मात् स ईश्वर एव कालो नाम स्वभावो नाम सूत्रं महत्तत्वमेव तस्य सत्वे शक्तिमत्वात् न देवं ज्ञानादीनां यथायथमंतर्भावान्न पक्षद्वयेऽपि तत्ववृद्धिः एतच्च पक्षांतरेष्वपि ज्ञेयं पक्षांतरसुज्ञ वयन्ति केते गुणाः किं प्रयोजनाः किं स्वरूपाः एतत्सर्वं दर्शयन् अर्थान्नवैकादशपंचत्रीन्स्वतत्वप्रतिपादनश्लोके जीनिति पदं व्या

प्टे ३ सत्वरजस्तम इति मतांतरे कालः सूत्रं पुरुष इति स्वमते तु गुणा नामा ग माया पि त्वात् प्रकृतेर्भेदो विवक्षितः अतो गुणास्त्रीणि तत्वानि १४ अ पणिप चविंशतितत्वानि पूर्वोक्तप्रसंख्यसाधारणानि २३॥

२१
भा॰ए॰
६५

एतेषांवाक्यानामालंवनभूतः सः विकल्पः ग्रं ४ ॥३॥

ननुयदिसर्वमपियुक्तंतर्हिकुतोविवादः यदिचमायैवालंवनंतर्हिकुतोहेतुंप्रतिविवादःतत्राहनैतदिति हेतुंप्रतिचविवद मानानांमदीयादुरतिक्रमाःशक्तयःअन्तःकरणवृत्तिविशेषरूपेणपरिणताःसत्वाद्याएवहेतुरित्यर्थः ५ तासांविवादहेतु त्वमुपपादयति यासामिति यासांव्यतिकरात्क्षोभात् वदतांपदंविषयः विकल्पोभेदआसीत् अंतःकरणवृत्तिविकल्पो वातन्मूलभूतः एतदेवव्यतिरेकेणद्रढयति शमदमयोर्द्वैकंतस्मिन्प्राप्तेविकल्पोऽप्येतिलीयतेतंचविकल्पनाशमनु वादःशाम्यतीति ६ संतिसर्वत्रेतियदुक्तंतत्प्रपंचयति परस्परेतिद्वाभ्यां अन्योन्यस्मिन्ननुप्रवेशात् वक्तुर्यथाविवक्षितंतथा

नैतदेवंयथात्थत्वंयदहंवच्मितत्तथा एवंविवदतांहेतुंशक्तयोमेदुरत्ययाः ५ यासांव्यति करादासीद्विकल्पोवदतांपदं प्राप्तेशमदमेऽप्येतिवादस्तमनुशाम्यति ६ परस्परानुप्रवेशा त्तत्वानांपुरुषर्षभ पौर्वापर्यप्रसंख्यानंयथावक्तुर्विवक्षितं ७ एकस्मिन्नपिदृश्यंतेप्रवि ष्टानीतराणिच पूर्वस्मिन्वापरस्मिन्वाततत्वेतत्वानिसर्वशः ८ पौर्वापर्य्यमतोऽमीषांप्रसंख्या नमभीप्सताम् यथाविविक्तंयद्वक्त्रंगृह्णीमोयुक्तिसंभवात् ९॥ पूर्वंकारणंअपरंकार्यंकार्यकारण भावेनप्रसंख्यानंभवति यद्वापूर्वाअल्प संख्याअपराअधिकसंख्यातयोर्भावःपौर्वापर्यंतेनप्रसंख्यानंगणन मिति ७ अनुप्रवेशंदर्शयति एकस्मिन्नपीति पूर्वस्मिन्कारणभूतेतत्वेकार्यंतत्वानिसूक्ष्मरूपेणप्रविष्टानीतिमृ दिघटवत् अपरस्मिन्कार्येतत्वेकारणतत्वान्यनुगतत्वेनप्रविष्टानिघटेमृद्वत् ८ अविरोधमुपसंहरति अतःअ मीषांतत्वानांपौर्वापर्यंतत्कारणकार्यत्वंप्रसंख्यानंचन्यूनाधिकमभीप्सतांवादिनांमध्येययाविवक्षयायद्व यस्य

राम
६४

॥इति श्रीभागवते महापुराणे एकादशस्कंधे टीकायां एकविंशोऽध्यायः २१ द्वाविंशे तत्वसंख्यानामविरोध

विधोच्यते पुंप्रकृत्योर्विवेकश्च जन्ममृत्युविधादिच १ तदेवं वेदादीनां प्रवृत्तिपरत्वं निराकृत्य मोक्षपरत्वं निर्णीतं स

तिच मोक्षपरत्वेऽपि तदवा तरविवादाः तथाहि केचित्तत्वसंख्यासु विवदंति तत्रापि बाह्यार्थसदसत्वे आत्मतत्वेऽप्ये

कत्वनानात्वादिषु तत्र किं सत्यमिति जिज्ञासया पृच्छति कतीति ऋषिभिरागमेषु बहुधा संख्यातानि तेषु कतियुक्तानीत्य

॥इति श्रीभागवते महापुराणे एकादशस्कंधे एकविंशोऽध्यायः २१ उद्धव उवाच कति तत्वानि

विश्वेश संख्यातान्यृषिभिः प्रभो नवैकादश पंच त्रीण्यात्थ त्वमिह शुश्रुम १ केचित्षड्विंशतिं

प्राहुरपरे पंचविंशतिं सप्तैके नव षट् केचिच्चत्वार्येकादशापरे २ केचित्सप्तदश प्राहुः षो

डशैके त्रयोदश एतावत्वं हि संख्यानामृषयो यद्विवक्षया गायंति पृथगायुष्मन्निदं नो वक्तुमर्हसि ३ श्रीभगवानुवाच युक्तयः संति सर्वत्र भाषते ब्राह्मणा यथा मायां मदीयामुद्गृह्य वदतां किं

नु दुर्घटं ४॥ पृथं भगवन्मतानुवादपूर्वकं बहुधा संख्यानं प्रपंचयति नवेति त्रिभिः त्वं तावदष्टाविंशति तत्वा

न्यात्थ तानि च वयं शुश्रुम श्रुतवंतः १ २ एतावत्वं नानाभाव एतावत्वनानात्वमित्यर्थः यद्विवक्षया यत्प्रयोजनमभिप्रेत्य

गायेति आयुष्मन् नित्यमूर्ते ३ विवक्षाभेदेन सर्वं युक्तमेव मायया च किं नाम न युक्तमित्याह युक्तय इति यथा ब्राह्मणा

भाषंते तत्सर्वं युक्तं च न वस्तुतः यस्मात् संति सर्वत्रांतर्भूतानि सर्वाणि तत्वानि किंच मायामिति असत्वेऽपि मायाश्रयत्वात् घ

टत एवेत्यर्थः उद्गृह्य स्वीकृत्य न हि मरीचिजल परिमाणादि विवादे किंचिदघटितमिव भवति ४॥ ६ ॥ ६ ॥

तेषु कतिचित् छंदांसि दर्शयति गायत्रीति तत्र चतुर्विंशत्यक्षरा गायत्री ततश्चतुरक्षरवृद्ध्योष्णिगादिछंदांसि अष्टाविंशत्य क्षराउष्णिक् द्वात्रिंशत्यक्षरानुष्टुप् एवं सर्वाणि चतुरुत्तराणि छंदांसि अत्यष्टिः अतिजगती अतिविराडि त्यर्थः एतैश्छंदोभिरुपलक्षितामिति पूर्वेणैवान्वयः अतो वृहत्त्वपि साकल्येन स्वरूपतो दुर्ज्ञेयेत्युक्तं ४१ अर्थतोऽपि दुर्ज्ञेयत्वमाह किमिति कर्म्मकांडे विधिवाक्यैः किं विधत्ते देवताकांडे मंत्रवाक्यैः किमाचष्टे प्रकाशयति ज्ञानकांडे च किमनूद्य विकल्पये त्तन्निषेधार्यमित्येवमस्या हृदयं तात्पर्यं मत् मत्तोऽन्यः कश्चित् नवेद ४२ ननु तर्हि त्वं मत्कृपया कथय ॐमिति कथयति

गायत्र्युष्णिगनुष्टुप् च वृहती पंक्तिरेव च त्रिष्टुब्जगत्यतिच्छंदो ह्यत्यष्ट्यतिजगद्विराट् ४१ किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् इत्यस्या हृदयं लोके नाऽन्यो मद्वेद कश्चन ४२ मां विधत्तेऽभिधत्ते मां विकल्प्याऽपोह्यते ह्यहं एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम् मायामात्रमनूद्याऽन्ते प्रतिषिध्य प्रसीदति ४३॥ मामेव यज्ञरूपं विधत्ते मामेव तत्तद्देवतारूपमभिधत्ते न मंत्रः एष च यच्चाकाशादिप्रपंचजातं तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादिना विकल्प्यापोह्यते निराक्रियते त दप्यहमेव न मत्तः पृथग् गस्तिकुत इत्यपेक्षायां सर्ववेदार्थं संक्षेपतः कथयति एतावानेव सर्वेषां वेदानामर्थः तमेवा ह शब्दो वेदः मां परमार्थरूपमाश्रित्य भिदां मायामात्रमित्यनूद्य नेह नानास्ति किंचनेति प्रतिषिध्य प्रसीदति निवृत्त व्यापारो भवति अयं भावः यथा ह्यंकुरेयोरसः स एव तद्विस्तारभूत नानाकांडशाखास्वपि तथैव प्रणवस्य योऽर्थः पर मेश्वरः स एव तद्विस्तारभूतानां सर्ववेदकांडशाखानामपि संगच्छते नान्य इति नित्यमुक्तः स्वतः सर्ववेदकृत् सर्ववेदवि

तत्र मनीषिभिरेव ज्ञेयं सूक्ष्मं रूपं दर्शयति मयेति मयांऽतर्यामिणोपबृंहितं अधिष्ठितं अंतस्यतेऽस्यपरिच्छेदमाह भूम्नेति अधिष्ठातृत्वेप्यविकारित्वमाह ब्रह्मणेति अविकृतस्यापि नियंतृत्वं घटयति अनंतशक्तिनेति भूतेषु सर्वप्राणिषु घोषरूपेण नादरूपेण लक्ष्यते मनीषिभिः अंतः सूक्ष्मत्वेन दर्शने दृष्टांतः विसेषूर्णातंतुरिवेति ३७ ततो वैखर्याख्यां वाचं हृत्वा वा च उत्पत्तिप्रकारं सदृष्टांतमाह यथेति त्रिभिः हृदयात्मकाशात् मुखात् तद्वारा तत् उद्गमते बहिः प्रकटयति। दार्ष्टांतिके दर्शयति आकाशादिति प्राणः तदुपाधिर्हिरण्यगर्भरूपः प्रभुर्भगवान् तेन रूपेण ३९ छंदोमयो वेदमूर्तिः

मयोपबृंहितं भूम्ना ब्रह्मणानंतशक्तिना भूतेषु नादरूपेण विसेषूर्णेव लक्ष्यते ३७ यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् आकाशात् घोषवान्प्राणो मनसा स्पर्शरूपिणा ३८॥ छंदोमयोऽमृतमयः सहस्रपदवीं प्रभुः ओंकाराद्व्यंजितस्पर्शस्वरोष्मांतस्थभूषितां ३९ विचित्रभाषाविततां छंदोभिश्चतुरुत्तरैः अनंतपारां बृहतीं सृजत्याक्षिपते स्वयं ४०॥

यः घोषवान् नादोपादानवान् मनसा निमित्तभूतेन निमित्तनामेव दर्शयति स्पर्शादीन् वर्णान् रूपयति संकल्पयतीति स्पर्शरूपिणा तेन स्पर्शग्रहणमुपलक्षणं हृदयाकाशाद् बृहतीं वेदलक्षणां वाणीं सृजतीति तृतीयश्लोकेनान्वयः बृहतीशब्दार्थं व्याख्यानाय विशेषणानि सहस्रपदवीं बहुमार्गां अनेकपुरुषार्थसाधनवतीं नदेवाह ओंकारात् उरकं णादिसंगे नव्यंजितैः स्पर्शादिभिर्भूषितां ओंकारस्यात्र हृद्गतः सूक्ष्मोऽभिप्रेतः नत्वकारादिवर्णरूपः तस व्यंग्यकोटित्वात् तत्र स्पर्शाः कादिपंचवर्गाः स्वराः अकारादयः षोडश ऊष्माणः शषसहाः अंतस्था यरलवाः तैरुपलक्षितां ३९ एवं विचित्राभिर्वैदिकलौकिकभाषाभिर्विततां यथो

तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य प्रकृतं निवृत्तिपरत्वमेवोपसंहरति वेदा इति कर्मब्रह्मदेवताकांडविषया इमे वेदाः ब्रह्मात्मविषयाः ब्रह्मैवात्मा न संसारी त्येतत्पराः तत्परत्वाप्रतीतौ च फलश्रुतिरियं नृणां न श्रेयो रोचनपरं श्रेयो विवक्षया प्रोक्तं यथा भैषज्यरोचनमित्युक्तमेव कारणमनुस्मारयति परोक्षेति ऋषयो मंत्राः तद्द्रष्टारो वा ननु किमिति यतः परोक्षमेव मम च प्रियं अयं भावः गुह्यांतःकरणैरेवावबोद्धव्यं नान्यैरनधिकारिभिः वृथा कर्मत्यागेन भ्रंशप्रसंगादिति ३५ ननु वेदज्ञा अपि जैमिन्यादयः किमिति तथा न वर्णयंति मां विना तत्त्वतो वेदं तदर्थं वा न कोऽपि वेदेत्याशयेनाह शब्दब्रह्मेति यावत्समाप्ति स्वरूपतोऽर्थतश्च दुर्विज्ञेयं तच्च सूक्ष्मं स्थूलं चेति द्विविधं तत्र सूक्ष्मं तावत्स्वरूपतोऽपि दुर्ज्ञेयमित्याह प्राणेंद्रिय

वेदा ब्रह्मात्मविषयास्त्रिकांडविषया इमे॥ परोक्षवादा ऋषयः परोक्षं मम च प्रियं ३५ शब्दब्रह्म सुदुर्बोधं प्राणेंद्रियमनोमयं अनंतपारं गंभीरं दुर्विगाह्यं समुद्रवत् ३६॥ १॥

मनोमयं प्रथमं प्राणमयं परा ख्यं ततो मनोमयं पश्यंत्याख्यं तत इंद्रियमयं मध्यमाख्यं तस्याभिव्यंजकत्वेन वागिंद्रियत्वमाह गंभीरं निगूढार्थं अतो दुर्विगाह्यं मतिप्रवेशानर्हं तथा च श्रुतिः चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहा त्रीणि निहिता नेंगयंति तुरीयं वाचो मनुष्या वदंतीति अयमर्थः वाचः शब्दब्रह्मणः परिमितानि गणितानि तानि पद्यते ज्ञायते परं तत्त्वमेभिरिति पदानि रूपाणि चत्वारि चत्वार्यपि ये मनीषिणोऽतद्देष्टयः ते विदुर्नान्ये यतो गुहायां देहमध्ये त्रीणि निहितानि नेंगयंति स्वरूपं न प्रकाशयंति यतः केवलं वाचश्च तुर्थभागं वैखरीरूपं मनुष्याः प्राणिनो वदंति तमपि

यकत्वेन चोदने तत्वेवंरूपं यद्यपि नित्यनैमित्तिकयोः कामविशेषानुवंधो नास्ति तथापि कर्म्मणा पितृलोक इति श्रुतेः।
श्यकत्वेन चोदनेत्येवंरूपं यद्यपि नित्यनैमित्तिकयोः कामविशेषानुवंधो नास्ति तथापि कर्म्मणा पितृलोक इति श्रुतेः।
सामान्यतः पितृलोककामना ऽस्त्येव अंतःकरणशुद्धिकामना चेति भावः तदुक्तं नाकामस्य क्रिया काचित् दृश्यते चेह कर्हि
चित् यद्यद्धि कुरुते जंतुस्तत्तत्कामस्य चेष्टितमिति २९ अवताद्देवहिंसया विहारः क्रीडा येषां ते ३० किं च ते ऽतिमंदबुद्धयः
त्याह स्वप्नोपममिति अमुं परलोकं आशिषश्चास्मिं ल्लोके संकल्प्य न तु निश्चित्य विघ्नवाहुल्यात् त्यजंति कर्मसु विनियोज
यंति यथा कश्चिद्वणिक् दुस्तरसमुद्रादिलंघनेन वहुधनार्जनेच्छया सिद्धं धनं त्यजन् तु भयभ्रष्टो भवति तद्वदित्यर्थः ३१॥

हिंसायां यदि रागः स्यात् यज्ञ एव न चोदना २९ हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया य
जंते देवता यज्ञैः पितृभूतपतीन् खलाः ३० स्वप्नोपममम् लोकमसंतं श्रवणप्रियं आशिषो ह
दि संकल्प्य त्यजंत्यर्थान् यथा वणिक् ३१ रजःसत्वतमोनिष्ठा रजःसत्वतमोजुषः उपासत इंद्र
मुख्यान् देवादीन्न तथैव मां ३२ इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि तस्यांत इह भूयास्म महा
शाला महाकुला ३३ एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणां मानिनां चातिस्त
व्धानां मद्वार्त्तापि न रोचते ३४॥

अतो रजःसत्वतमोनिष्ठास्ते रजःसत्वतमोजुषः स्वानुरूपानिंद्रादीनेवोपासते
ननु मां गुणातीतं यद्यपींद्रादीनामपि मदंशत्वान्मदुपासनमेव तत् तथापि यथावन्नोपासते भेदादर्शित्वादित्यर्थः
३२ हरिसंकल्पेसुक्तं तमेव संकल्पं दर्शयति इष्ट्वेति तस्य भोगस्यांते महाशाला महागृहस्थाः ३३ ततः किं
मित्यत आह एवमिति अतो मत्श्रवणलाभावान्नित्यं संसारिणो भवंतीति भावः ३४॥ ६ ६ ६॥ ६ ६ ६॥

२१
भा॰ए॰
८१

कथं तर्हि कर्म्ममीमांसकाः फलपरतां वदंति तत्राह एवमिति व्यवसितं वेदस्याभिप्रायं कुसुमितां अवांतरफलप्ररोचना॥
यां रमणीयां परमफलश्रुतिं वदंति कुतस्ते कुबुद्धयस्तदाह हि यस्माद् वेदज्ञाः व्यासादयस्तथा न वदंतीति २६ कुबुद्धितां प्रपंचय
ति कामिन इत्यष्टभिः कामित्वात् कृपणाः ततो लुब्धाः तृष्णाकुलाः अतः पुष्पेष्ववांतरफलेषु परमफलबुद्धयः अत एव अग्नि
मुग्धाः अग्निसाध्यकर्माभिनिवेशेन लुप्तविवेकाः ततश्च धूमतांताः धूमता धूममार्गो नेता येषां ते स्वलोकं आत्मतत्वं न विदुः
तथा च श्रुतिः कश्चिद्वा अस्माल्लोकात्प्रेत्य आत्मानं न वेद अयमहमस्मीति कश्चित्स्वं लोकं न प्रतिजानाति अग्निमुग्धो हैव
धूमतांत इति २७ कोऽसौ स्वलोकस्तमाह नेति हृदिस्थमात्मानं मां स्वलोकं ननु हृदिस्थमहंकारास्पदं जानंत्येव सत्यंप

एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः फलश्रुतिं कुसुमितां न वेदज्ञा वदंति हि २६ कामिनः कृ
पणा लुब्धाः पुष्पेषु फलबुद्धयः अग्निमुग्धा धूमतांताः स्वं लोकं न विदंति ते २७ न ते मामंग जा
नंति हृदिस्थं य इदं यतः उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः २८ ते मे मतमविज्ञाय परोक्षं
विषयात्मकाः ॥

परमात्मानं तु न जानंतीत्याह य इदं यद्व्यतिरिक्तं जगन्नास्ति कुतः यत इदं जगज्जातं तं कुतो न जा
नंति हि यस्मात् उक्थं कर्म्म च शस्त्रं शंसकथनीयं पशुहिंसासाधनं वा येषां ते अतः केवलं असुतृपः प्राणतर्पणपराः
नीहारं तमः तेन व्याप्तानि चक्षूंषि येषां ते यथा संनिहितमपि न जानंति तद्वत् तथा च श्रुतिः न तं विदाथ य इमा जजानान्य
द्युष्माकमंतरं बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरंतीति २९ वेदतात्पर्याज्ञानाच्चान्यान्यजंती
त्याह ते परोक्षमस्फुटं मे मतमविज्ञाय देवादीन्यजंत इत्युत्तरेणान्वयः स्वमतमेवाह हिंसायां मांसभक्षणार्थं तत्फ
लार्थं च यदि रागः स्यात्तर्हि यज्ञ एवैतदनुज्ञाद्वारा परिसंख्येयं न हिंस्यात्सर्वभूतानि अग्नीषोमीयं पशुमालभेत इति न त्वावश्

एम
८१

तत्तुल्यत्वं प्रपंचयति विषयेति नापरं अनात्मानं देहादिकं च व्यर्थं वृक्षजीविकया एव यो जीवन् वर्त्तते स मूर्छिततुल्य
अतएव यो भस्त्रेव श्वसन् वर्त्तते स मृततुल्यः अतः स्वार्थनाश इत्यर्थः २२ ननु प्रवृत्तस्य स्वर्गादिफलश्रवणात्कुतः स्वार्थ
विभ्रंशः तत्राह इयं फलश्रुतिः नृश्रेयः परमपुरुषार्थपरा न भवतीत्यर्थः किंतु वहिर्मुखाणां नृणां मोक्षविवक्षया अ
वांतरफलैः कर्मसु रुच्युत्पादनमात्रं यथा भैषज्ये औषधे रोचनं रुच्युत्पादनं तथाहि पिव निंवं प्रदास्यामि खलु ते खंड
लड्डुकान् पित्रैवमुक्तः पिवति न फलं तावदेव तु तया मातृवाक्यं च शिखा तेवर्द्धते वत्स गुडूचीं इद्धया पिवति न फलं तावदेव तु

विषयाभिनिवेशेन नात्मानं वेद नाऽपरं वृक्षजीविकया जीवन्व्यर्थं भस्त्रेव यः श्वसन् २२॥
फलश्रुतिरियं नृणां न श्रेयो रोचनं परं श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनं २३ उत्पत्त्यैव
हि कामेषु प्राणेषु स्वजनेषु च आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु २४ न तानविदुषः
स्वार्थं भ्राम्यतो वृजिनाध्वनि कथं युंज्यात्पुनस्तेषु तांस्तमो विशतो वुधः २५॥ १ किंतु आरोग्यम् २३ न

नु कर्मकांडे मोक्षस्य नामापि न श्रूयते कुत एवं व्याख्यायते तथा श्रुतस्याघटनादित्याह उत्पत्त्यैवेति द्वाभ्यां उत्पत्त्या स्वभावत एवे
व कामेषु पश्वादिषु प्राणेषु आयुरिंद्रियवलवीर्यादिषु स्वजनेषु पुत्रादिषु अनर्थहेतुषु परिपाकतो दुःखहेतुषु २४ अत
स्तान्स्वार्थं परमसुखमविदुषः अतो नतान् प्रह्वीभूतान् वेवोयद्बोधयिष्यति तदेव श्रेय इति विश्वसितानित्यर्थः तानेवं
भूतान् वृजिनाध्वनि कामवर्त्मनि देवादियोनिषु भ्राम्यतः ततः पुनः तमः वृक्षादियोनिं विशतः पशुकाम इति आयुरिंद्रिया
दिकाम इति च पुत्रादिकाम इति च कथं पुनस्तेष्वेव कामेषु स्वयं वुधो वेदो युंज्यात् प्रवर्त्तयेत् तथा सत्यनाप्तः स्यादिति भा

२१
भा.ए.
८०

दोषस्य क्वचित् दोषत्वाभावे गुणत्वे चोदाहरणं दर्शयति समानस्य तस्यैव कर्म्मणः सुरापानादेराचरणं अपतितानां प-
तनहेतुरपि जात्या कर्म्मणा वा पतितानां पुनः पातकं अधिकारभ्रंशकं न भवति पूर्वमेव पतितत्वात् अतोऽत्र दो-
षस्यापि दोषता नास्तीत्यर्थः तथा संगोऽपि यो यतेर्द्दोषः स गृहस्थस्यौत्पत्तिकः पूर्वस्वीकृतो न दोषः अपितुणगुणः
ऋतौ भार्यामुपेयादित्यादिविधानात् उभयत्र दृष्टांतः पूर्वमेवाधः शयानो यथा न पततीति १७ अतो गुणदोषनियमविधी-
नां प्रवृत्तिसंकोचद्वारा निवृत्तावेव तात्पर्यमित्यभिप्रेत्याह यतो यत इति १८ यथाश्रुतप्रवृत्तिपरतां वेदस्य निराकर्तुं प्रवृ-

समानकर्म्माचरणं पतितानां न पातकं औत्पत्तिको गुणः संगो न शयानः पतत्यधः १७
यतो यतो निवर्त्तेत विमुच्येत ततस्ततः एष धर्म्मो नृणां क्षेमः शोकमोहभयापहः १८ विष-
येषु गुणाध्यासात्पुंसः संगस्ततो भवेत् संगात्तत्र भवेत्कामः कामादेव कलिर्न्नृणां १९ कलेर्दुर्वि-
षहः क्रोधस्तमस्तमनुवर्त्तते तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतं २० तयाचरहितः साधो जं-
तुः शून्याय कल्पते ततोऽस्य स्वार्थविभ्रंशो मूर्छितस्य मृतस्य च २१॥ ६ ॥ ६ ॥

त्तिमार्गस्यानर्थहेतुतां दर्शयति विषयेष्विति चतुर्भिः संगः आसक्तिः तत्र तेषु विषयेनश्रुयेन प्रतिहा-
न्यते कामः तेन सह कामादेव कलिः कलहो विवादः भवति १९ दुर्विषहं तीव्रं तमः संमोहः तं क्रो-
धं चेतना कार्याकार्यस्मृतिः द्रुतं शीघ्रं २० हे साधो तया कार्याकार्यस्मृत्या रहितो जंतुः शून्याय कल्प-
ते असत्तुल्यो भवतीत्यर्थः स्वार्थः स्वार्थविभ्रंशः पुरुषार्थहानिः मूर्छितस्य मृततुल्यस्य २१ ॥ ६ ॥ ६ ॥

राम
८०

अस्पृश्यस्पर्शे शुद्धिमुक्त्वा लेपविषयेऽप्याह यत्पीठपात्रवस्त्रादि येन तत्क्षणक्षाराम्लोदकादिना गंधं लेपं च व्यपोहति त्य
जति स्वगतं च मलं त्यक्त्वा प्रकृतिं स्वमेव रूपं भजते तस्य तत् शौचं शोधकं यावता च तत्क्षणादिना व्यपोहति तावत्प्रमाणं
स्वरूपतश्चावृत्तितो वा ततत्कर्तव्यमिष्यते १३ एवं तावद्द्रव्यशुद्धिरुक्ता इदानीं कर्तृशुद्धिमाह स्नानेति अवस्था कौमारा
दिः वीर्यं शक्तिः संस्कारः उपनयनादिः कर्म संध्योपासन दीक्षादिलक्षणं आत्मनः साहंकारस्य कर्तुः एतैः स्नानादिभिर्य
थायथं तत्कार्यानुसारिणी शुद्धिः इयं च शुद्धिर्न व्यवहारार्था किंतु विहितकर्मार्थेत्याह शुद्ध इति द्विज इत्युपलक्षणं शू

अमेध्यलिप्तं यद्येन गंधलेपं व्यपोहति भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते १३ स्नान
दानतपोवस्थावीर्यसंस्कारकर्मभिः मत्स्मृत्या चात्मनः शौचं शुद्धः कर्माचरेद्द्विजः १४
मंत्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणं धर्मः संपद्यते षड्भिरधर्मस्तु विपर्ययः १५ क्वचित्
गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः गुणदोषार्थनियमस्तद्भिदामेव बाधते १६ ॥ ॥

द्रादेरपि १४ मंत्रशुद्धिमाह सद्गुरुमुखाद्यथावत्परिज्ञानं मंत्रस्य शुद्धिः कर्मशुद्धिमाह ईश्वरार्पणं कर्मणः शुद्धिः ध
र्माधर्मौ शुद्ध्यशुद्धिप्रपंचतः प्रदर्श्योपसंहरति धर्म इति देशकालद्रव्यकर्तृमंत्रकर्मभिः षड्भिः शुद्धैर्धर्मः संपद्यते।
एतेषां यो विपर्ययः सोऽधर्मः तद्धेतुरित्यर्थः १५ अयं च गुणदोषविभागो न वास्तव इत्याह क्वचिदिति आपदि प्र
तिग्रहो गुणोऽप्यनापदि निषिद्धत्वाद्दोषः परधर्मश्च परस्य गुणोऽपि अन्यस्य दोषः दोषोऽपि कुटुंबत्यागादिर्विरक्तादेर्न
दोषः अपि तु विधिबले न गुणः एवं योऽयं गुणदोषयोरेकस्मिन्नेवार्थे नियमः गुणदोषार्थं वा यो नियमः नियामकं शा

संस्कारेणप्रोक्षणादिनापुष्पादेः शुद्धिः अवघ्राणादिनात्वशुद्धिः कालेनदशाहादिनानवोदकादेः शुद्धिः कालेमेघोदकं ग्राह्यंवर्ज्यंतुअहमेवहिअकालेदशरात्रंस्यात्ततःशुद्धिर्विधीयतेदशाहादिनानवोदकादेः शुद्धिः विपरीतेनाशुद्धिःपर्युषितान्नादेरशुद्धिः अंत्यजाद्युपहतानांतडागाद्युदकानांमहत्वाल्पत्वाभ्यांशुद्ध्यशुद्धी १० शक्त्याऽशक्त्यासूर्योपरागादिसूतकान्नादेः शक्तान्नस्यशुद्धिः अशक्तानप्रतिशुद्धिः बुद्ध्यापुत्रजन्मादौदशाहादूर्ध्वंहिर्ज्ञानेनाशुद्धिः अंतर्ज्ञानेनाशुद्धिःसमृद्धाजीर्णमलवदस्त्रादेःसमृद्धस्यशुद्धिः दरिद्रंप्रतिशुद्धिःतत्रापिविशेषमाह यदिति एतेचद्रव्यवचनादयोद्रव्याशुद्धिहेतवः आत्मनेयदघंकुर्वंतितत् देशावस्थाऽनुसारतएव यथावत्कुर्वंतिनसर्वतःतथाहि निर्भयएवदेशेकुर्वंतिनतुचौराद्या।

संस्कारेणाथकालेनमहत्वाल्पतयाऽथवा १० शक्त्याऽशक्त्याथवाबुद्ध्यासमृद्ध्याचयदात्मने अघंकुर्वंतिहियथादेशावस्थाऽनुसारतः ११ धान्यदार्वस्थितंतूनांरसतैजसचर्मणां कालवाय्वग्निमृत्तोयैःपार्थिवानांयुतायुतैः १२ ॥

कुलेतथारोगादिव्यतिरिक्तयुवाद्यवस्थायामेवकुर्वंति नवाल्परोगाद्यवस्थायामिति तथाचस्मृतिः देशंकालंतथाऽत्मानंद्रव्यंद्रव्यप्रयोजनंउपपत्तिमवस्थांचज्ञात्वाशौचंप्रकल्पयेदिति ११ द्रव्यादिभिर्द्रव्यस्यशुद्धिरित्युक्तंतत्रवचनादिशुद्धिरेकरूपैवद्रव्यतस्तुशुद्धिर्बहुरूपेतितांप्रपंचयति धान्येति दारुलौकिकंग्रहचमसादिव्रीहिधान्यानांवापुनादारूणांयज्ञपात्रादीनांरुहचमसानांचतोयाम्बुस्योदकैः अस्थिनांगजदंतानांकालेनतंतुनांतोयेनरसानांतैलघृतादयःतैजसाःसुवर्णादयस्तेषांअग्निनाशुद्धिःकालावस्थाद्यनुसारेणैवएतैरम्लैश्चयुतायुतैर्मिलितैःकेवलैश्चकालस्यपुनर्ग्रहणंयुतत्वप्रदर्शनार्थं १२ ॥

नकेवलंदेहेष्वेव अपितु देशकालादिभावानामपि आदिशब्देनानुपादेयानांफलनिमित्ताधिकारिणांग्रहणं वस्तूनांउ
पादेयानांव्रीह्यादीनामपि ममममयानियमार्थं संकोचार्थमित्यर्थः ७ एवंगुणदोषविषयंपरिशोध्यतयोः शुद्ध्यशुद्धि
मूलत्वात् शुद्ध्यशुद्धी प्रपंचयति अकृष्णसारइत्यष्टभिः देशानांमध्येकृष्णहरिणरहितो अशुचिः तत्रापि अब्रह्मण्यः॥
ब्राह्मणभक्तिशून्योऽत्यंतमशुचिः कृष्णसारोपिकृष्णेनमृगेणसारः श्रेष्ठोयः सोऽपि असौवीरः कीकटः सुवीराः सत्पुरुषा
स्तद्धान्सौवीरः कीकटोऽपिशुचिः तदुक्तं सर्वेपुण्यतमोदेशःसत्यान्नेयत्रलभ्यतइति तद्वर्जितोयःकीकटः मगधः अंग

देशकालादिभावानांवस्तूनांममसत्तम गुणदोषौविधीयेते नियमार्थंहिकर्म्मणां ७ अ।
कृष्णसारोदेशानामब्रह्मण्योऽशुचिर्भवेत् कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणं ८
कर्म्मण्योगुणवान्कालोद्रव्यतः स्वतएववा यतोनिवर्त्ततेकर्म्मसदोषोऽकर्म्मकःस्मृतः ९॥
द्रव्यस्यशुद्ध्यशुद्धीचद्रव्येणवचनेनच॥ ए, वंगकलिंगादिः असंस्कृतः संमार्जनादिशून्यः म्लेच्छबहुलो।
वाईरिणंऊषरंएकवद्भावः ततअशुचि तदन्यः शुचिरित्यर्थोदुक्तंभवति ८ कालस्यशुद्ध्यशुद्धीदर्शयतिकर्मण्यइति द्र
व्यतः द्रव्यसंपत्यास्वतोपूर्वाह्णादिर्यः कर्म्मण्यः कर्म्मार्हः सकालस्तस्मिन्कर्म्मणिगुणवान् यतः यस्मिन्द्रव्यालाभेन
वाराष्ट्रविप्लवादिनावाकर्म्मनिवर्त्तते यश्चसूतकादौदशाहादिलक्षणोऽकर्मकः कर्मानर्हः स्मृतः सकालोदोषः अ
शुद्धइत्यर्थः ९ वस्तुशब्दोपात्तानांद्रव्याणांशुद्ध्यशुद्धीदर्शयति द्रव्यस्येति चतुर्भिः द्रव्येणतोयादिना शुद्धिः अ
स्रक्मूत्रादिनात्वशुद्धिः वचनेनशुद्धमशुद्धंवेतिसंदेहे शुद्धमित्येवंरूपेणब्राह्मणवचनेनशुद्धिः विपरीतेन अ

ननु नैस्वकर्मभिः केचिद्गुणदोषभाजः केचिन्नेति कुतो वैषम्यं न ह्यग्निना केचिन्तप्यंते केचिन्नेति संभवति तत्राह स्वे स्व इति अधिकारभेदेन कल्पितौ गुणदोषौ न वस्तुनिष्ठाविति भावः २ तदाह शुद्ध्यशुद्धी इति विचिकित्सार्थे योग्यमयोग्यं वेति संदेहद्वारा स्वाभाविकप्रवृत्तिप्रतिबंधार्थमित्यर्थः तत्र शुद्ध्यशुद्धी योग्यत्वायोग्यत्वे गुणदोषौ तन्निमित्तोपादेयत्वानुपादेयत्वे शुभाशुभौ तन्निमित्तावर्थानर्थौ ३ तत्र शुद्ध्यशुद्धी धर्मार्थे शुद्धेन धर्मः अशुद्धेनाधर्म इति गुणदोषौ व्यवहारार्थे अशुद्धावपि राजादीनां व्यवहारदर्शनादुपादेयं नान्यदिति शुभाशुभौ यात्रार्थे दोषत्वेऽप्यापत्सु शरीरनिर्वाहमात्रोपादानेन पापं

स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः २ शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ३ धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ दर्शितोयं मयाऽचारो धर्ममुद्वहतां धुरं ४ भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पंच धातवः आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ५ वेदेन नामरूपाणि विषमाणि समेष्वपि धातुषूद्धव कल्प्यंत एतेषां स्वार्थसिद्धये ६॥ ९ अधिकोपादाने तु पापमिति मयामन्वादिरूपेण धर्मरूपां धुरं भारं कर्मजडानामित्यर्थः ४ शुद्ध्यशुद्धी प्रपंचयिष्यन्देहा...त्वेन तदभिनिवेशो मा भूदिति समानेष्वपि वस्तुष्विति यदुक्तं तत्प्रपंचयति भूमीति त्रिभिः भूतानां प्राणिनां धारयंतीति धातवः कारणानि शारीराः शरीरारंभकाः देहतः साम्यमुक्तं जीवतोऽप्याह आत्मसंयुता इति ५ धातुषु देहेषु नामरूपाणि वर्णाश्रमादीनि कल्पनायाः प्रयोजनमाह एतेषां प्राणिनां स्वार्थसिद्धये प्रवृत्तिनियमद्वारा धर्मादिपुरुषार्थसिद्धये ६॥ । ॥

काम्यकर्मनिष्ठांनिंदिष्यन्नेतान्मुक्तिमार्गानुपसंहरति एवमिति मेपथः मत्प्राप्त्युपायान् येऽनुतिष्ठंति ते क्षेमं काल मायादिरहितं ममलोकं विंदंति यत्परं ब्रह्म तच्च विदुः ३७ इत्येकादशे टीकायां विंशतितमोऽध्यायः २० जयति स्व परानंदः परानंदनकेसरी यत्कृपालवलेशेन श्रीधरः सत्कृतिः कृती १ ईक्षतामिच्छयासेतुः स्वमंतां मम साहसम् म याहि स्वीयबोधाय कृतमेतन्न सर्वतः २ एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् कामिनां द्रव्यदेशादिगुणदोषाः प्रपंचिताः ३ तदेवं गुणदोषव्यवस्थार्थं योगत्रयमुक्तम् तत्र ज्ञानभक्तिसिद्धानां न किंचिद्गुणदोषौ साधकानां तु प्रथम तो नित्यतिकर्मनिष्ठानां यथाप्राप्तनित्यनैमित्तिकं कर्म सत्वशोधकत्वाद्गुणः तदकरणं निषिद्धकरणं च तन्मलीमस-

एवमेतान्मयादिष्टाननुतिष्ठंति मे पथः क्षेमं विंदंति मत्स्थानं यद्ब्रह्म परमं विदुः ३७ इति श्री भागवते महापुराणे एकादशस्कंधे विंशतितमोऽध्यायः २० श्रीभगवानुवाच य एतान्मत्प थो हित्वा भक्तिज्ञानक्रियात्मकान् क्षुद्रान्कामांश्चलैः प्राणैर्जुषंतः संसरंति ते १ १ ॥

करणत्वाद्दोषः तन्निवर्तकत्वाच्च प्रायश्चित्तं गुणः विशुद्धसत्वानां तु ज्ञाननिष्ठानां ज्ञानाभ्यास एव सिद्धिहेतुत्वाद्गु णः भक्तिनिष्ठानां पुनः श्रवणकीर्तनादिभक्तिरेव गुणः तद्विरुद्धं सर्वमुभयेषां दोष इत्युक्तम् इदानीं ये तु न सिद्धा ना पि साधकाः किंतु केवलं काम्यकर्मप्रधानाः तेषां सकलगुणदोषान्प्रपंचयिष्यन्नादौ तानतिबहिर्मुखान्निंदति य एतानिति मत्पथः मदुक्तमार्गान् क्षुद्रान्तुच्छान् चलैः अस्थिरैः प्राणैर्देहवायुभिरिंद्रियैर्वा जुषंतः सेवमाना भवंति ते संसरंति निखिलगुणदोषभाक्त्वेन नानायोनीः प्राप्नुवंतीत्यर्थः १॥

तदेवंव्यवस्थयाऽधिकारत्रयमुक्तम् तत्रचभक्तेरन्यनिरपेक्षत्वादन्यस्यचतत्सापेक्षत्वात् भक्तियोगएवश्रेष्ठइत्युपसंहरतितस्मादिति
त्रिभिः मदात्मनः मयिआत्माचित्तंयस्य तस्यश्रेयःश्रेयःसाधनम् ३१ तत्रहेतुःयत्कर्मभिरित्यादि इतरैरपितीर्थयात्रादिभिःश्रेयःसा
धनैर्यद्भाव्यंसत्वशुद्ध्यादितत्सर्वंअंजसाअनायासेनैव ३२ स्वर्गमपवर्गंमद्धामवैकुंठंलभतएव वांछातुनास्तीत्युक्तम् यदिवांछतीति
३३ तत्रहेतुमाह नकिंचिदिति धीराःधीमंतः यतोममएकांतिनःमय्येवप्रीतियुक्ताः अतोमयादत्तमपिनगृण्हंति किंवक्तव्यंनवांछं

तस्मान्मद्भक्तियुक्तस्ययोगिनोवैमदात्मनः नज्ञानंनचवैराग्यंप्रायःश्रेयोभवेदिह ३१ यत्कर्मभिर्यत्त
पसाज्ञानवैराग्यतश्चयत् योगेनदानधर्मेणश्रेयोभिरितरैरपि ३२ सर्वंमद्भक्तियोगेनमद्भक्तोल
भतेंऽजसा स्वर्गापवर्गंमद्धामकथंचिद्यदिवांछति ३३ नकिंचित्साधवोधीराभक्ताह्येकांतिनो
मम वांछंत्यपिमयादत्तंकैवल्यमपुनर्भवम् ३४ नैरपेक्ष्यंपरंप्राहुर्निःश्रेयसमनल्पकम् तस्मा
न्निराशिषोभक्तिर्निरपेक्षस्यमेभवेत् ३५ नमय्येकांतभक्तानांगुणदोषोद्भवागुणाः साधूनांस
मचित्तानांबुद्धेःपरमुपेयुषाम् ३६ ॥

तीत्यर्थः अपुनर्भवमात्यंतिकमपिकैवल्यम् ३४ तदुपपादयति नै
रपेक्ष्यमेवपरमुत्कृष्टमनल्पकं महत्निःश्रेयसंफलंतत्साधनंचप्राहुः मेभक्तिःनिराशिषःप्रार्थनाशून्यस्यनिरपेक्ष
स्य प्रार्थनाकारणभूतापेक्षारहितस्यपुंसोभवेत् यद्वा मेनिरपेक्षस्ययाभक्तिःसानिराशिषोभवेदित्यर्थः ३५ अनेनप्र
कारेणसिद्धानां नगुणादोषाइतिविरोधपरिहारमुपसंहरति नमयीति गुणदोषैर्विहितप्रतिषिद्धैरुद्भवोयेषांतेगुणाःपु
ण्यपापादयः साधूनांनिरस्तरागादीनामतःसमचित्तानामतएव बुद्धेःपरमीश्वरंप्राप्तानाम् ३६ ३६ ॥

कुतइत्यतआह जाताउत्पन्नैवाशुद्धानां सचप्राप्तानांसंगानांत्याजनेच्छया अयंभावः पुरुषस्याशुद्धिर्नामनप्रवृ
त्तेरन्याऽस्तिस्वाभाविकप्रवृत्तेरेवतस्यमलिनत्वात् नचसहसासर्वतोनिवृत्तिःकर्त्तुंशक्यते अतइदंनकर्त्तव्यमिदमेवक
र्त्तव्यमितिस्वाभाविकप्रवृत्तिसंकोचद्वारेणनिवृत्तिरेवक्रियते यथाचनप्रवृत्तिपरोवेदस्तथोत्तराध्यायेवक्ष्यामः उत्प
त्त्यैवहिकामेष्वित्यादिना अतोयोगिनःस्वाभाविकप्रवृत्त्यभावान्नप्रायश्चित्तादिविधिर्गोचरतेति २६ भक्त्यधिकारि
णोभक्तियोगमाह जातश्रद्धइतित्रिभिः मत्कथासुजातश्रद्धः अतएवान्येषुकर्मसुउद्विग्नः ननुतत्फलेषुविरक्तः॥

गुणदोषविधानेनसंगानांत्याजनेच्छया २६ जातश्रद्धोमत्कथासुनिर्विण्णःसर्वकर्मसु वेद
दुःखात्मकान्कामान्परित्यागेऽप्यनीश्वरः २७ ततोभजेतमांप्रीतःश्रद्धालुर्दृढनिश्चयः जुष
माणश्चतान्कामान्दुःखोदर्कांश्चगर्हयन् २८ प्रोक्तेनभक्तियोगेनभजतोमाऽसकृन्मुनेः॥
कामाहृदय्यानश्यंतिसर्वेमयिहृदिस्थिते २९ भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः क्षी
यंतेचास्यकर्म्माणिमयिदृष्टेऽखिलात्मनि ३०॥ एतदाहवेदेतियद्यपिवेदतथाऽपितत्परित्यागेऽनीश्वरः
अशक्तः २७ एवंभूतोयःसश्रद्धालुःसन्भक्त्यैवसर्वंभविष्यतीतिदृढनिश्चयःसन्ततःतदनंतरंमांप्रीत्याभजेतविष
यान्सेवमानोऽपितेषुप्रीतिंनकुर्यादित्याहगर्हयन्निति २८ कथंभजेतकिंवाततोभवतितदाहप्रोक्तेनेतिद्वाभ्यां श्र
द्धाऽमृतकथायांमेशश्वन्मदनुकीर्त्तनमित्यादिनातत्रतत्रोक्तेनमांअसकृत्नित्यंभजतःहृदय्याःहृद्गताःकामानश्यं
ति२९ हृदमेवग्रंथिरहंकारः तत्पूर्वकाश्चसर्वेसंशयाःअसंभावनादयःकर्माण्यनारब्धफलानिसंसारहेतुभूतानि

पृथिव्यादिक्रमेणाप्ययंच अन्वनुध्यायेत् प्रसीदतीति निश्चलं भवति २२ ननूपायसहस्रेणापि मनो विषयाका
रतां न त्यजति किं भूयो भूय उपदेशेनेति चेत्तत्राह निर्विण्णस्येति ततश्चागमापायिषु तेष्वधिभूतात्मदर्शनात्तद
विवेकापन्नसंसारे निर्विण्णस्य अतो विरक्तस्य ततश्च उक्तवेदिनः गुरूपदिष्टार्थालोचकस्य ततो गुरूपदिष्टस्यैव चिंति
तस्य पुनः पुनरनुचिंतया दौरात्म्यं देहाद्यभिमानं त्यजति २३ किंच यमादिभिर्योगमार्गैः आन्वीक्षिक्या पदार्थद्वयशो
धनेन ममार्चनध्यानादिभिर्वा वाशब्देनास्य पक्षस्य स्वातंत्र्यं दर्शयति एतैरुपायैर्योग्यं परमात्मानं मनः स्मरेत् नान्यैः

भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति २२ निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः॥
मनस्त्यजति दौरात्म्यं चिंतितस्यानुचिंतया २३ यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया म
मार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः २४ यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितं योगे
नैव दहेदंहो नान्यत्तत्र कदाचन २५ स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः कर्म्मणां जात्यशुद्धानामनेन नियमः कृतः॥ ९

अतोऽन्यं न कुर्यादित्यर्थः २४ ननु पापाय त्तौ प्रायश्चित्तं कार्यं
भवतत्राह यदीति योगेन ज्ञानाभ्यासेनैव एतच्च भक्तस्यापि नामकीर्तनाद्युपलक्षणार्थं नान्यत् कृच्छ्रादि॥
२५ ननु नित्यनैमित्तिकं कर्म्म सत्वशोधकत्वाद्गुणः हिंसादिकं त्वशुद्धिहेतुत्वात् दोषः तत्र च तन्निवर्तकत्वात् कृच्छ्रादि
प्रायश्चित्तं गुण इति विधिप्रतिषेधाभ्यामुक्तत्वात् प्रायश्चित्तं विना योगेनैव कथं पापं दहेत् तत्राह स्वे स्व इति सार्द्धेन स
स्व गुणः नेतरः तदुपपादयति यस्माद्विधिप्रतिषेधाभ्यामनेन गुणदोषविधानेन कर्मणां नियमः संकोचः कृतः॥

एवंतावदविरक्तस्यवैराग्यद्वाराज्ञानभक्तिसाधकं कर्म्मयोगमुक्त्वेदानींसम्यग्विरक्तस्यज्ञानयोगंतस्यचज्ञानप्राप्तेः पूर्व्वं
किंचित्कार्यंवर्जनीयंचाह सार्द्धैर्नवभिः यदातुआरंभेषुकर्म्मसुनिर्विण्णःदुःखदर्शनेनोद्विग्नःतत्फलेषुविरक्तश्च तदा
संयतेंद्रियःसन् आत्मनोऽभ्यासेनआत्मविषयवृत्तिसंततयाअचलंयथाभवतितथामनोधारयेत् १८ तत्रप्रथममेवा
न्यतधारणासंभवात्तत्त्वभावानसारेणावशीकरणमाह यर्हिआशुआम्यत्परिभ्रमदनवस्थितंभवतितदाअनुरोधे
नकिंचिदपेक्षापूरणद्वारेण १९ ननुतर्हियथापूर्वमेवस्यात् तत्राह मनोगतिंतुनविसृजेत् नोपेक्षेतकिंतुअप्रमत्तःसन्

यदाऽरंभेषुनिर्विण्णोविरक्तःसंयतेंद्रियः अभ्यासेनात्मनोयोगीधारयेदचलंमनः १८ धार्य
माणंमनोयर्हिभ्राम्यदाश्वऽनवस्थितं अतंद्रितोऽनुरोधेनमार्गेणात्मवशंनयेत् १९ ॥
मनोगतिंनविसृजेज्जितप्राणोजितेंद्रियः सत्वसंपन्नयाबुद्ध्यामनआत्मवशंनयेत् २० ए
षवैपरमोयोगोमनसःसंग्रहःस्मृतः हृदयज्ञत्वमन्विच्छन्दम्यस्येवाऽर्वतोमुहुः २१ सां
ख्येनसर्वभावानांप्रतिलोमानुलोमतः ॥ १९लक्षयेदित्यर्थः २० अनुरोधमार्गस्यदृष्टांतंस्तौति एषः
अनुवृत्तिमार्गेणमनसःसंग्रहः परमोयोगः तत्साधनत्वात् उपचारेणस्तुतिःयथाअदांतस्यदमनीयस्यअर्वतःअ
श्वस्यहृदयज्ञत्वंस्वाभिप्रायेणगतिमन्विच्छन् अपेक्षमाणःअश्वधारकःप्रथमंकिंचित्तद्गतिमनुवर्त्तते सचरश्मि
नातंधृत्वैवगच्छतिनतूपेक्षतेतद्वदित्यर्थः २१ एवमीषद्वशीकृतस्यमनसोऽत्यंतनैश्चल्योऽपायानाह सांख्येने
तित्रिभिः सांख्येनतत्वविवेकेनसर्वभावानांमहदादिदेहांतानांअनुलोमतःप्रकृत्यादिक्रमेणभवंप्रतिलोमतः

२०
भा.ए.
८५

अतो नरः स्वर्गतिं न कांक्षेत नारकीमिति दृष्टांतः यद्वा स्वर्गनरकसाधनकर्म्माणि न कुर्यादित्यर्थः अस्मातिश्रेष्ठत्वात् नरपि मनुष्यो भवेयमित्यपि न कांक्षेत यतो देहावेशात् देहासक्त्या स्वार्थे प्रमाद्यति अवधानशून्यो भवति १३ अपितु एतद्देहसाधकमिति विद्वान् तत्त्वार्थसिद्धिदमपि मर्त्यं ज्ञात्वा अप्रमत्तः अनलसः सन् मृत्योः पूर्वमेव मोक्षाय घटेत प्रयत्नं कुर्यात् १४ अप्रमत्तो मुक्तसंगः सुखं प्राप्नोतीत्यत्र दृष्टांतः छिद्यमानमिति यमैः यमवन्निर्दयैः पुरुषैः कृतनीडं यस्मिन् तं स्वकेतं स्वस्याश्रयं अलंपटः अनासक्तः १५ दार्ष्टांतिकमाह अहोरात्रैः छिद्यमानमायुर्बुद्ध्वा भयेन वेपथुः कंपो यस्य सः

न नरः स्वर्गतिं कांक्षेन्नारकीं वा विचक्षणः नेमं लोकं च कांक्षेत देहावेशात्प्रमाद्यति १३
एतद्विद्वान्पुरा मृत्योरभवाय घटेत सः अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदं १४ छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिं खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलंपटः १५
अहोरात्रैश्छिद्यमानं बुद्ध्वाऽयुर्भयवेपथुः मुक्तसंगः परं बुद्ध्वा निरीह उपशाम्यति १६ नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारं मयाऽनुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा १७॥ ११ १६ एवमप्रयतमानं प्रमत्तं निंदति नृदेहं प्लवं नावं प्राप्येत्यध्याहारः यो भवाब्धिं न तरेत् स आत्महा तत्र हेतवः आद्यं सर्वफलानां मूलं एतदुपार्जितकर्मभिः सर्वप्राप्तेः किंच सुदुर्लभं उद्यमकोटिभिरपि प्राप्तुमशक्यं तथापि तु सुलभं यदृच्छया लब्धत्वात् तं च सुकल्पं पटुतरं किंच गुरुः संस्मितमात्र एव कर्णधारो नेता यस्य तं मया च स्मृतमात्रेणानुकूलमारुतेन प्रेरितं १७॥

राम
८५

ण्णानां दुःखबुद्ध्या तत्फलेषु विरक्तानां अत एव तत्साधनभूतकर्मन्यासिनां ज्ञानयोगः सिद्धिद इत्युत्तरेणान्वयः अनिर्विण्णचित्ता
नां दुःखबुद्धिशून्यानां अतः कामिनां तत्फलेष्वविरक्तानामित्यर्थः ७ यदृच्छया केनापि भाग्योदयेन तत्र काम्यकर्मसु प्रवर्त्तमानस्य
सर्वात्मना विधिप्रतिषेधाधिकार इत्युत्तराध्याये वक्ष्यति निष्कामकर्मयोगाधिकारिणस्तु यथाशक्ति सच ज्ञानभक्तियोगाधिकार
प्रागेव तदधिकृतयोस्तु स्वल्पः तासां सिद्धौ नांतु न किंचिदिति ८ सावधिकर्मयोगमाह तावदिति एवंभिः कर्म्माणि नित्यनैमित्ति
कानि यावता यावत् ९ कर्मयोगिनो ज्ञानभक्तिभूमिकारोहप्रकारमाह स्वधर्मस्थ इति अनाशीःकामः अफलकामः अन्य

तेष्वः निर्विण्णचित्तानां कर्म्मयोगस्तु कामिनां ७ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् न नि
र्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ८ तावत्कर्म्माणि कुर्व्वीत न निर्विद्येत यावता मत्क
थाश्रवणादौ वा श्रद्धा यावन्न जायते ९ स्वधर्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव न याति स्व
र्गनरकौ यद्यन्यन्न समाचरेत् १० अस्मिंल्लोके वर्त्तमानः स्वधर्मस्थोऽनघः शुचिः ज्ञानं विशुद्धमा
प्नोति मद्भक्तिं वा यदृच्छया ११ स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा साधकं ज्ञानभक्तिभ्या
मुभयं तदसाधकं १२॥ एतन्निषिद्धं नरकयानं हि हेतुद्धेव विहितातिक्रमाद्वा निषिद्धाचरणाद्वा अतः स्वधर्मस्थत्वा
न्निषिद्धवर्जनाच्च नरकं न याति अफलकामत्वान्न स्वर्गमपीत्यर्थः १० किंतु अस्मिन् लोके अस्मिन्नेव देहे अनघः निषि
द्धत्यागी अतः शुचिः निवृत्तरागादिमलः यदृच्छयेति केवलज्ञानादपि भक्तेर्दुर्लभतां द्योतयति ११ अनेन प्रकारेण ज्ञा
नभक्तिसाधनत्वान्नरदेहस्तौति स्वर्गिणोऽपीति निरयिण इति द्वयं तत्त्वेनोक्तं ज्ञानभक्तिभ्यां ज्ञानभक्त्योः तदुभयं स्वर्गिनार

कथंतत्त्ववचोंतरेणनॄणांनिःश्रेयसंकथंस्यात्तत्रापिश्रोतव्योमंतव्यइत्यादिसाधनविधेःनानुध्यायेद्बहून्शब्दान्वाचोविग्लापनंहितदित्यादिनिषेधस्यचावश्यकत्वादितिभावः यद्वा गुणदोषभिदादृष्टिमंतरेणनिषेधविधिलक्षणंतववचो विनेतिसामानाधिकरण्यमेवास्तु यद्वा गुणदोषभिदादृष्टिमंतरेणनिषेधविधिलक्षणमपिवचःकथंनुतत्वमस्यादिवाक्यवत्निःश्रेयसपरंस्यात्सर्वस्यवेदस्यतत्परत्वांगीकारादित्यर्थः २ ननुपितरोदेवाश्चसर्वज्ञाःप्रत्यक्षतोदृष्ट्वामनुष्येभ्यःकथयिष्यंतिनेत्याह पित्रादीनांसर्वेषांतवत्वद्वाक्यरूपोवेदएवतुश्रेयःश्रेष्ठंचक्षुःप्रमापकंक्व अनुपलब्धेर्थेमोक्षस्वर्गादौचतः॥

निःश्रेयसंकथंनॄणांनिषेधविधिलक्षणम् २ पितृदेवमनुष्याणांवेदश्चक्षुस्तवेश्वर श्रेयस्त्वनुपलब्धेर्थेसाध्यसाधनयोरपि ३ गुणदोषभिदादृष्टिर्निगमात्तेनहिस्वतः निगमेनापवादश्चभिदायाइतिहभ्रमः ४ श्रीभगवानुवाच योगास्त्रयोमयाप्रोक्तानॄणांश्रेयोविधित्सया ज्ञानंकर्मचभक्तिश्चनोपायोन्योस्तिकुत्रचित् ६ निर्विण्णानांज्ञानयोगोन्यासिनामिहकर्मसु॥

यासाध्यसाधनयोःइदमस्यसाध्यमिदमस्यसाधनमित्यत्रापि तदेवंगुणदोषदृष्ट्यभावेनिःश्रेयसंनघटेत ४ किंचशास्त्रेणैवविहितांभेददृष्टिंतस्मिन्नेवविषयेशास्त्रंकथंनिवर्तयेदित्याह तेनिगमात्त्वदाज्ञारूपादेवदेवनहिस्वतःयस्मादर्थप्राप्तत्वेननिवर्तेतहस्फुटंभ्रमोभवतितंनिवर्तयेतितिशेषः ५ विषयाभेदेप्यधिकारिभेदेनाविरोधंवक्तुंप्रथमयोगत्रयमाहयोगाइतियोगाउपायाःब्रह्मकर्मदेवताकांडैःप्रोक्ताःकर्मचनिष्कामंश्रेयोविधित्सयामोक्षसाधनेच्छयाअन्यउपायोनास्तीतिकाम्यकर्मादिकंव्यावर्तयतितत्याचोत्तराध्यायेस्फुटीकरिष्यतियएतानित्यादिना ६ तेष्वधिकारिभेदमाह निर्विण्णानामितिद्वाभ्यांइहएषांमध्येकर्मसुनिर्वि

सर्व्वंगुणदोषयोर्विवेकायोद्धवेनपृष्टमितितयोःसंक्षेपतोलक्षणमाह किंबहुनावर्णितेनगुणदोषयोर्लक्षणमेताव
देवतदाह गुणदोषयोर्दृशिर्दर्शनंदोषः गुणस्तुतदुभयदर्शनविवर्ज्जितस्वभावइति ४५ इतिश्रीभागवतेमहा
पुराणएकादशस्कंधेटीकायांएकोनविंशोऽध्यायः १९ विंशेयोगत्रयंप्रोक्तंभक्तिज्ञानक्रियात्मकं गुणदोषव्यवस्था
र्थमधिकारिविभागतः १ गुणदोषदृशिर्दोषोगुणस्तूभयवर्ज्जितइत्युक्तंतदाक्षिपति विधिश्चेति पंचभिः विधिश्च
प्रतिषेधश्चेश्वरस्यतवनिगमस्त्वाज्ञा रूपोवेदः सचविधेयानांप्रतिषेध्यानांचकर्म्मणांगुणदोषंचपुण्यपापफल

गुणदोषदृशिर्द्दोषोगुणस्तूभयवर्ज्जितः ४५॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधे
भगवदुद्धवसंवादेएकोनविंशतितमोऽध्यायः १९ श्रीउद्धवउवाच विधिश्चप्रतिषेधश्च
निगमोहीश्वरस्यते अवेक्षतेऽरविंदाक्षगुणदोषंचकर्म्मणां १ वर्णाश्रमविकल्पंचप्रति
लोमानुलोमजं द्रव्यदेशवयःकालान्स्वर्गंनरकमेवच २ गुणदोषभिदादृष्टिमंतरेणवचस्तव

रूपमेवेक्षतेउत्तमाधमभावेनतदधिकारिणांवर्णानामाश्रमाणांविकल्पंभेदंचगुणदोषरूपमेवेक्षते प्रतिलोमानुलोम
जंचगुणदोषंतथैवावेक्षतेप्रतिलोमजाःउत्तमवर्णासुस्त्रीषुहीनवर्णेभ्यःपुरुषेभ्योजाताः सूतवैदेहकादयः अनुलोमजा
स्तूत्तमवर्णेभ्यपुरुषेभ्योहीनवर्णासुस्त्रीषुजाताःमूर्द्धावसिक्तांवष्ठादयः तेषांचअसत्वंसत्वंतस्तुविज्ञेयाःप्रतिलोमानुलोम
जाइतिगुणदोषौद्रव्यादीनकर्माहंताऽनर्हताभ्याम् स्वर्गंनरकंचतत्फलतयागुणदोषरूपमेवावेक्षतेएतच्चोत्तराध्या
येप्रपंचयिष्यते १ २ तथापिप्रस्तुतेकिमायातंअतआह गुणदोषेति गुणदोषदृशिर्दोषइतिनिराकृतत्वात्गुणदो

गुणाएवश्रीर्मंडनं न किरीटादिः दुःखसुखयोरत्ययः अतिक्रमः अननुसंधानंसुखंनभोगः विषयभोगापेक्षैवदुःखं नाभिरदाहादिवंधमोक्षद्वयंचयोवेत्तिसपंडितः नविद्वन्मात्रं ४१ अहंवुद्धिरित्युपलक्षणंदेहगेहादिष्वहंममेत्यभिमानवान्मूर्खइत्यर्थः मन्निगमः मांनितरांगमयतिप्रापयतियोनिवृत्तिमार्गः सतुपंथाः सन्मार्गः नकंटकादिशून्यः। चित्तविक्षेपः प्रवृत्तिमार्गः सउत्पथः कुमार्गः नतुचौराद्याकुलः सत्वगुणस्योदयः उद्रेकः स्वर्गः नेंद्रादिलोकः ४२ तमसउन्नाहउद्रेकः सनरकः नतामिस्रादिः गुरुरेववंधुर्नभ्रात्रादिः सचाऽहमेवयथाऽहंजगद्गुरुः एकएवपरोवंधु

श्रीर्गुणानैरपेक्ष्याद्याः सुखंदुःखसुखात्ययः दुःखंकामसुखापेक्षापंडितोवंधमोक्षवित्। ४१ मूर्खोदेहाद्यहंवुद्धिः पंथामन्निगमः स्मृतः उत्पथश्चित्तविक्षेपः स्वर्गः सत्वगुणोदयः ४२ नरकस्तमउन्नाहोवंधुर्गुरुरहंसखे गृहंशरीरंमानुष्यंगुणाढ्योह्याढ्यउच्यते ४३ दरिद्रोयस्त्वऽसंतुष्टः कृपणोयोऽजितेंद्रियः गुणेष्वऽसक्तधीरीशोगुणसंगोविपर्ययः ४४ एतउद्धवतेप्रश्नाः सर्वेसाधुनिरूपिताः किंवर्णितेनवहुनालक्षणंगुणदोषयोः॥ १९ ॥ १९ ॥

विषमेसमुपस्थितेने गुरुः सकलधर्मात्मायत्राकिंचनगोहरिरितिससा धनंभोगायतनंगृहं तच्चमानुष्यंमानुषरूपंशरीरमेवनहर्म्यादि गुणैः संपन्नआढ्यउच्यतेनधनी ४३ असंतुष्टोयः सदरिद्रः ननिःस्वः योऽजितेंद्रियः सकृपणः शोच्यः नदीनः विषयेष्वनासक्तधीर्यः सईशः स्वतंत्रः नराजादिः गुणसंगः गुणेषुसंगोयस्यसः विपर्ययः अनीशः एतच्चशमादिविपर्ययोपलक्षणार्थम् ४४ उपसंहरतिएतइति साधुमोक्षोपयोगितयाएतच्च॥

रादेः जिह्वोपस्थयोर्जयो वेगधारणं धृतिः नत्वनुद्वेगमात्रं ३६ दंडो भूतद्रोहः तस्य त्यागो दानं न धनार्पणं का
मत्यागः भोगोपेक्षा तपः न कृच्छ्रादि स्वभावो वासना तस्य जयः प्रतिबंधः शौर्यं न विक्रांतिः समं ब्रह्म तस्य दर्शनमा
लोचनं सत्यविषयत्वात्सत्यं न यथार्थभाषणमात्रं ३७ अन्यच्च ऋतं सूनृता सत्या प्रिया च वाक् एवं च ऋतसत्य
योः स्फुट एव विवेकः क्रमप्राप्तं त्यागं व्याख्यातुमादौ ततोऽर्थभेदेन शौचं व्याचष्टे तस्यापि मङ्गलत्यागरूपत्वेन त्या
गादभेदप्रतीतेः कर्मसु असंगमः अनासक्तिः शौचं त्यागस्तु सन्यास इति तयोर्भेद इत्यर्थः ३८ नृणां इष्टं धनं धर्मः न

तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः ३६ दंडन्यासः परं दानं कामत्यागस्तपः स्मृ
तं स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ३७ ऋतं च सूनृता वाणी कविभिः परिकीर्त्ति
ता कर्मस्वऽसंगमः शौचं त्यागः सन्यास उच्यते ३८ धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः द
क्षिणा ज्ञानसंदेशः प्राणायामः परं बलं ३८ भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः॥
विद्याऽत्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु ४०॥ ऐश्वर्यादिसाधारणं भगवत्तमः परमेश्वरोऽहमेव यः

ज्ञः मद्ध्याय यज्ञोऽनुष्ठेयः न क्रियावुद्ध इत्यर्थः यज्ञार्थं दानं दक्षिणा दिसा च ज्ञानोपदेशः न हिरण्यादिदानं तेन हिय
ज्ञरूपो विष्णुः प्राप्यते दुर्दमदमनं वलं तच्च मनोदमनरूपत्वात्प्राणायाम इति इयालोकप्रसिद्धेवाऽभिमता ३८
लाभव्याविख्यास्तु प्रथमं भगततो भेदं न व्याचष्टे लोके तयोरभेदप्रसिद्धेः भगो भाग्यं तच्च मे ऐश्वरो भावो मदीयं ऐश्वर्या
दिवाद्रूप्यमित्यर्थः उत्तमो लाभस्तु मद्भक्तिः न पुत्रादिः विद्या चात्मनि प्रतीतस्य भेदस्य बाधः न ज्ञानमात्रं अकर्मसु जुगुप्सा

परेतिविद्यादीनांविशेषणंश्रीर्मेउनम् ३० ३१ प्रश्नान्पृष्टानर्थान्विपरीतान् अशमादीन् ३२ यमनियमान
ह अहिंसेतित्रिभिः अस्तेयंमनसाऽपिपरस्वाग्रहणं आस्तिक्यंधर्मेविश्वासः ३३ शौचंबाह्यमाभ्यंतरंचेतिद्वर
अतोद्वादशनियमाः श्रद्धाधर्मादरः ३४ उभयोःश्लोकयोर्येस्मृताः तेयमानियमाश्च यद्वाउभयोःप्रवृत्तनिवृत्तयो
मुमुक्षोर्यमामुख्याःसकामस्यनियमामुख्या स्मृताइत्यर्थः अत्रहेतुमाह॥ हियस्मात् उपासिताः सेविताःसंतःपुं

पुंसः किंस्विद्वलंश्रीमन्भगोलाभश्चकेशव काविद्याह्रीःपराकाश्रीः किंसुखंदुःखमेवच
३० कःपंडितःकश्चमूर्खः कःपंथाउत्पथश्चकः कःस्वर्गोनरकःकः स्वित्कोवंधुरुतकिंगृहं
३१ कआढ्यःकोदरिद्रोवाकृपणःकःकईश्वरः एतान्प्रश्नान्ममब्रूहिविपरीतांश्चसत्पते ३२
श्रीभगवानुवाच अहिंसासत्यमस्तेयमसंगोह्रीरसंचयः आस्तिक्यंब्रह्मचर्यंचमौनंस्थैर्यं
क्षमाऽभयं ३३ शौचंजपस्तपोहोमःश्रद्धातिथ्यंमदर्चनं तीर्थाटनंपरार्थेहातुष्टिराचार्यसेव
नं ३४ एतेयमाःसनियमाउभयोर्द्वादशस्मृताः पुंसामुपासितास्तातयथाकामंदुहंतिहि ३५
शमोमन्निष्ठतावुद्धेर्दमइंद्रियसंयमः॥ ५ प्रवृत्तानांनिवृत्तानांचयथाकामंकामानुसारेण।
मोक्षमभ्युदयंचदुहंतीति ३५ मुमुक्षोरुपादेयान् शमादीनहेयांश्चदुःखादीन्महाजनप्रसिद्धेभ्योविलक्ष
णानाह शमइत्यादिनायावत्समाप्तिएतेनैवतद्विपरीताअशमादयोऽप्युन्नेयाः शमोमन्निष्ठतावुद्धेः॥
ननुशांतिमात्रं दमइंद्रियसंयमः नचौरादिदमनेनितिक्षाविहितदुःखस्यसंमर्षः सहनंनभा॥ ॥

मदर्थेमद्भजनार्थंतद्विरोधिनोऽर्थस्यपरित्यागः भोगस्यतत्साधनस्यचंदनादेःसुखस्यपुत्रोपलालनादेःइष्टादिवैदिकं
यत्कर्मतदपिमदर्थंकृतंभक्तेःकारणमित्यर्थः २३ भक्तिःप्रेमलक्षणासंजायते अस्यभक्तस्यअन्यःकोर्थःसाधनरूपःसा
ध्यरूपोवाऽवशिष्यतेसर्वोपिस्वतएवभवतीत्यर्थः २४ तदेवाहकिंवहुनाचित्तमेवान्तर्वहिर्निष्ठमर्थानर्थयोःकारणम् तदेवाह।
यदात्मनीतिद्वाभ्यां यदाआत्मनिमयीश्वरेचित्तमर्पितंतदापुमान्धर्मादीन्प्राप्नोत्येव २५ एतदेवव्यतिरेकेणद्रढयति यत्

मदर्थेऽर्थपरित्यागोभोगस्यचसुखस्यच इष्टंदत्तंहुतंजप्तंमदर्थंयद्व्रतंतपः २३ एवंधर्मैर्मनुष्या
णामुद्धवात्मनिवेदिनां मयिसंजायतेभक्तिःकोऽन्योऽर्थोस्याऽवशिष्यते २४ यदात्मन्यर्पितंचि
त्तंशान्तंसत्वोपबृंहितं धर्मंज्ञानंसवैराग्यमैश्वर्यंचाभिपद्यते २५ यदर्पितंतद्विकल्पे इंद्रियैः
परिधावति रजस्वलंचाऽसन्निष्ठंचित्तंविद्धिविपर्ययं २६ धर्मोमद्भक्तिकृत्प्रोक्तोज्ञानंचैकात्म्यदर्श
नंगुणेष्वऽसंगोवैराग्यमैश्वर्यंचाऽणिमादयः २७ उद्धवउवाच यमःकतिविधःप्रोक्तोनियमोवाऽ
रिकर्शन कःशमःकोदमःकृष्णकातितिक्षाधृतिःप्रभो २८ किंदानंकिंतपःशौर्यंकिंसत्यमृतमु
च्यते कस्त्यागःकिंधनंचेष्टंकोयज्ञःकाचदक्षिणा २९॥ एयदातच्चित्तंविकल्पेदेहगृहादावर्पितंसत्

परिधावतितदाऽधिकंरजस्वलमसन्निष्ठंचभवति ततश्चविपर्ययंअधर्मादिकंविद्धि २६ स्वाभिप्रेतान्धर्म्मादीन्व्याचष्टेध
र्म्मोमद्भक्तिकृततःसएवप्रोक्तःप्रकृष्टउक्तःशास्त्रेषु २७ धर्मादीनांमहाजनप्रसिद्धानामन्यथाव्याख्यातत्वाद्यमादिष्वपिसंख्या
तःस्वरूपतोवाकिंचिद्वैलक्षण्यंस्यादितिएवंसंभावनयातद्विशेषंजिज्ञासुःपृच्छतियमइतिपंचभिः २८ इष्टंअभ्यर्हितंधनंचकिं

५४

वैराग्यमाह श्रुतिमिति द्वाभ्यां श्रुतिः नेह नानास्ति किंचनेत्यादि प्रत्यक्षं पटादिकार्यं तंत्वादिव्यतिरेकेण न दृश्यते चैतन्यव्यतिरेकेण च न किंचित् दृश्यत इति ऐतिह्यं महाजनप्रसिद्धिः क्षेत्रज्ञं मां विद्धीति एक एव हि भूतात्मा भूते भूते व्यवस्थितः इति पर्य्यायं अनुमानं विमतं मिथ्या दृश्यत्वात् शुक्तिरजतादिवत् इत्यादि एवं प्रमाणचतुष्टयं एतेष्वनवस्थानात् एतैर्बाधितत्वात् स एवं सर्वानुगतं सत्यमात्मतत्त्वं पश्यन् विकल्पस्य च मिथ्यात्वान्न तो विरज्यते विरक्तो भवतीत्यर्थः १७

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयं प्रमाणेष्वनवस्थानाद्विकल्पात्स विरज्यते १७ कर्मणां परिणामित्वादाविरिंच्यादमंगलं विपश्चिन्नश्वरं पश्येदहृष्टमपि दृष्टवत् १८ भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेनघ पुनश्च कथयिष्यामि मद्भक्तेः कारणं परं १९ श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्त्तनं परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम २० आदरः परिचर्यायां सर्वांगैरभिवादनं मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः २१ मदर्थेष्वंगचेष्टा च वचसा मद्गुणेरणं मय्यर्पणं च मनसः सर्वकामविवर्ज्जनं २२ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

ननु वेदोक्तस्वर्गादिसुखाशया न विरज्यते त्याह कर्म्मणामिति आविरिंच्यात् ब्रह्मलोकपर्यंतं अदृष्टमपि सुखं अमंगलं दुःखरूपं नश्वरं च पश्येत् १८ भक्तियोगस्य कारणमाह भक्तियोगः पूर्वमुक्त एव तथाऽपि तस्मिन्प्रीतिं प्राप्नुवते तुभ्यं पुनश्च कथयिष्यामि १९ श्रद्धा श्रवणादरः शश्वदिति सर्वत्रानुषज्यते मदनुकीर्त्तनं श्रवणानंतरं मत्कथाव्याख्यानमित्यर्थः २० २१ अंगचेष्टा लौकिकी क्रिया वचसा लौकिकेनापि मद्गुणानामीरणं कथनं २२॥

ज्ञानादिभिरुपबृंहितानान्तत्सहितानित्यर्थः १३ तत्र ज्ञानं कथयति नवेति प्रकृतिपुरुषमहदहंकाराः पंचतन्मात्राणि एकादशेंद्रियाणि पंच
महाभूतानि त्रयोगुणाः एतान् भावानष्टाविंशतितत्त्वानि भूतेषु ब्रह्मादिस्थावरांतेषु कार्येषु अनुगतानि येन ज्ञानेनेक्षेत अथ एषु अपि भावे
षु एकपरमात्मतत्त्वमनुगतं येनेक्षेत कार्यकारणात्मकं जगत्पश्येत् परमकारणात्मकमेवेतत् न तु ततः पृथगिति येन पश्यति तत् त
ज्ञानमित्यर्थः १४ विज्ञानमाह एतदेवेति श्लोकार्द्धेन यत्तु यदा येनैकेनानुगतानेकात्मकान्भावान् पूर्वमैक्षत तान्तथापूर्ववन्नेक्षेत।
किंतु तदेकं परमकारणं ब्रह्मैव तदा एतदेव विज्ञानमुच्यते एतदुक्तं भवति परोक्षज्ञाने नापरोक्षभ्रमस्य विद्रोहादिष्विव निवृत्तेर्भावान्ना
दात्मकं जगत्पश्यंस्तथात्मनः पृथक्सदिति मन्यते अपरोक्षज्ञाने तु बाधितमेव जीवन्मुक्तः संस्कारशेषं पश्यति ततः परं न पश्यति च

तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् ज्ञानवैराग्यविज्ञानश्रद्धाभक्त्युपबृंहितान् १३ नवैकादश
पंच त्रीन् भावान्भूतेषु येन वै ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितं १४ एतदेव हि विज्ञानं न तथै।
केन येन यत् स्थित्युत्पत्त्यप्ययान्पश्येद्भावानां त्रिगुणात्मनां १५ आदावंते च मध्ये च सृज्यात्सृज्यं यद
न्वियात् पुनस्तत्प्रतिसंक्रामे यच्छिष्येत तदेव सत् १६॥ ए अतः परोक्षापरोक्षज्ञाने ज्ञानविज्ञानशब्दाभ्यामुच्येत इ
ति एकेन सर्वकार्याणामनुगतिं कार्याणां कारणात्पृथगसत्त्वं चोपपादयति सार्द्धेन तत्र यदि न कदाचिदनीदृशं जगदित्यादिमतेनै
तेषां भावानामुत्पत्त्यादयो न स्युः तर्हि कारणस्यैकस्याभावादेकात्मता मिथ्यात्वं च न स्यात् अतस्तेषामुत्पत्त्यादीन्साधयति स्थित्येति
त्रिगुणात्मनां सावयवानामित्यर्थः विमता भावा उत्पत्त्यादिमंतः सावयवत्वात् घटादिवदिति पश्येत् १५ ततश्चादावुत्पत्तौ अंते परि।
णामांतरापत्तौ च कारणत्वेन मध्ये चाश्रयत्वेन सृज्यात् सृज्यं कार्यात्कार्यांतरं प्रति यदन्वियात् अनुगच्छेत् तत्प्रतिसं।
क्रामे तेषां प्रलये च यदवशिष्येत तदेव सदिति पश्येदित्यर्थः १६॥ ॥

आद्यंतयोर्यदस्ति रज्ज्वादि तदेव मध्येऽपि न तु सर्पादि तद्वदयं विकारो नास्तीत्यर्थः यद्वा आद्यंतयोर्यदस्ति तन्मध्येऽप्य
स्येव न तस्य जन्मादयः संति अतस्त्वं निर्विकारं ब्रह्मेति ७ ज्ञानादेर्विशेषं जिज्ञासुः पृच्छति ज्ञानमिति विशुद्धमे
तत् ज्ञानं विपुलं यथा भवति तथा कथयेति महद्भिर्ब्रह्मादिभिर्विमृग्यं ८ महद्विमृग्यत्वमभिनयेनाह तापत्रयेणे
ति तापत्रयेण आध्यात्मादिना अभिहतस्य अतः संतप्यमानस्य अंघ्रिद्वंद्वमेवातपत्रं तस्मात् न केवलमातपात् त्रातुः

जन्मादयोऽस्य यदमी तव तस्य किं स्युराद्यंतयोर्यदसतोऽस्ति तदेव मध्ये ७ श्रीउद्धव उवाच ज्ञा
नं विशुद्धं विपुलं यथैतत् वैराग्यविज्ञानयुतं पुराणं आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्ति
योगं च महद्विमृग्यं ८ तापत्रयेणाऽभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश पश्यामि
नाऽन्यच्छरणं तवांघ्रिद्वंद्वातपत्रादमृताभिवर्षात् ९ दष्टं जनं संपतितं बिलेऽस्मिन् का
लाहिना क्षुद्रसुखोरुतर्षं समुद्धरैनं कृपयाऽपवर्ग्यैर्वचोभिरासिंच महानुभाव १० श्रीभग
वानुवाच इत्थमेतत्पुरा राजा भीष्मं धर्मभृतां वरं अजातशत्रुः पप्रच्छ सर्वेषां नोऽनुशृण्व
तां ११ निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः श्रुत्वा धर्मान्बहून्पश्चान्मोक्षधर्मान पृच्छत १२

किंतु अमृतमप्यभितो वर्षति यत् तस्मात् ९ अतिकृपामुत्पादयन्नाह दष्टमिति अस्मिन् बिले संसारकूपे पतितं त
त्र च कालाहिना दष्टं एवमपि क्षुद्रसुखेष्ववउरुस्तर्षः तृष्णा यस्य तं दह्यमानः कथं समुद्धरणीय इति चेत्तत्राह आप
वर्ग्यैः अपवर्गबोधकैः वागमृतैः आसिंचेति १० तद्धि स्वासार्थं विद्वत्सभायां निर्णीतमहं वक्ष्यामीत्याशयेनाह इत्थमिति

अत्रहेतुमाह ज्ञानिनस्त्विति यस्मादहमेवतस्येष्टः अपेक्षितः स्वार्थः फलंहेतुः तत्साधनंचसंमतः स्वर्गोऽभ्युदयश्च अपवर्गः संसारनिवृत्तिश्च अतस्तस्यनप्राप्यंकृत्यंवाकिंचिदस्तीत्यर्थः २ अत्रविद्वदनुभवंप्रमाणयति ज्ञानेति य थोक्तंज्ञानिनमभिनंदतिज्ञानीति यतोऽसौज्ञानेनामांधारयति ३ तस्यज्ञानंस्तौतितपइतिअलंअत्यर्थंज्ञानस्यकल यालेशेन ४ ज्ञानेनसहितंतत्पर्यंतंयथाभवतितथाज्ञात्वातत्संपन्नःसन्मामेवभजअन्यत्सर्वंत्यजेत्यर्थः५तस्यप्रत्ययार्थं

ज्ञानिनस्त्वऽहमेवेष्टः स्वार्थोहेतुश्चसंमतः स्वर्गश्चैवापवर्गश्चनान्योऽर्थोमदृतेप्रियः २ ज्ञा नविज्ञानसंसिद्धाःपदंश्रेष्ठंविदुर्मम ज्ञानीप्रियतमोऽतोमेज्ञानेनाऽसौविभर्त्तिमां ३ तपस्तीर्थं जपोदानंपवित्राणीतराणिच नाऽलंकुर्वंतितांसिद्धिंयाज्ञानकलयाकृता ४ तस्मात्ज्ञानेन सहितंज्ञात्वास्वात्मानमुद्धव ज्ञानविज्ञानसंपन्नोभजमांभक्तिभावितः ५ ज्ञानविज्ञानयज्ञे नमामिष्ट्वाऽत्मानमात्मनि सर्वयज्ञपतिंमांवैसंसिद्धिंमुनयोऽन्वगमन् ६ त्वय्युद्धवाश्रयतिय स्त्रिविधोविकारोमायाऽन्तरापततिनाऽद्यपवर्गयोर्यत्॥ ७ ७ ॥ ॥ ॥

पूर्वेषांवृत्तमाह ज्ञानेति मामेवसंसिद्धिंप्राप्ताः ६ तदेवज्ञानंसंक्षेपतउपदिशति त्वयीतित्रिविधः आ ध्यात्मिकादिः विकारः देहादिः सःमायानतुपरमार्थः यत् यस्मात् अंतरामध्यएवापततिरज्जौसर्पमालादिवत् नाद्यपवर्गयोः तत्वादावंतेचास्तिअतः यत् यदाअस्यविकारस्यामीजन्मादयस्तु तदातस्यतवाधिष्ठान भूतस्यकिंनकिंचिदित्यर्थः ननु तस्यापिवस्तुतोनसंतितस्यासत्वादित्याह आद्यंतयोरिति असतःसर्पादेः॥

१८
भा॰ए॰
७८

ततश्चासौमुक्तएवेत्याह इतिएवंभूतेनस्वधर्म्मेणनिर्णिक्तंशुद्धंसत्वंयस्यसः अतएवनिर्ज्ञातामद्गतिरैश्वर्यंयेन ४६
उक्तमर्थंसंक्षिप्याह यएषआचारलक्षणःपितृलोकप्राप्तिफलःसएवमद्भक्तियुतमदर्पणेनकृतः ४७ प्रकरणार्थमुप
संहरति एतत्तेऽभिहितं यथाभक्तोभूत्वामांपरंसंप्राप्नुयादिति ४८ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायां
ऽष्टादशोध्यायः १८ ज्ञानादेर्निर्णयःपूर्वंकृतोह्याश्रमधर्म्मतः अत्रोनविंशतितमेज्ञानादेस्त्यागउच्यते १ तदेवंतर्कितो
बाधितोऽपिदेहादिप्रपंचोयावदपरोक्षानुभवेनदिङ्मोहादिरिवनलीयतेतावन्नतज्ज्ञानाभ्यासस्ततोमुक्तिरित्युक्तं आदे

इतिस्वधर्म्मनिर्णिक्तसत्वोनिर्ज्ञातमद्गतिः ज्ञानविज्ञानसंपन्नोनचिरात्समुपैतिमां ४६ वर्ण्णाश्र
मवतांधर्म्मएषआचारलक्षणः सएवमद्भक्तियुतोनिःश्रेयसकरःपरः ४७ एतत्तेऽभिहितंसा
धोभवान्पृच्छतियच्चमां यथास्वधर्मसंयुक्तोभक्तोमांसमियात्परं ४८ इतिश्रीभागवतेमहा
पुराणेएकादशस्कंधेऽष्टादशोध्यायः १८ ॥ श्रीभगवानुवाच योविद्याश्रुतसंपन्नआत्म
वान्नानुमानिकः मायामात्रमिदंज्ञात्वाज्ञानंचमयिसंन्यसेत् १ ॥ ॥ ॥ ॥

हांतान्कचित्तख्यातिस्ततःसंपद्यतेमयेत्यादिना यस्त्वपरोक्षानुभवेनप्रपंचोलीनप्रायस्तस्यनकिंचित्कृत्यमस्ती
त्याहयइति विद्याअनुभवः तत्पर्यंतेनश्रुतेनसंपन्नः अतएवआत्मवान्प्राप्तात्मतत्त्वः नानुमानिकःकेवलपरोक्ष
ज्ञानवान्नभवति अनकाररपाठेप्राक्श्रुत्यनुकूलतर्कतोनिर्णीतार्थइत्यर्थः सएतद्द्वैतंतत्रिद्धत्तिसाधनंचम
यिमायामात्रमितिज्ञात्वाज्ञानंचतत्साधनंसंन्यसेत् अयमेवविद्वत्संन्यासोनाम १ ॥ ॥ ॥ ॥ ॥ ॥

राम
७८

अत्रहेतुमाह ज्ञानिनस्त्विति यस्मादहमेवतस्येष्टः अपेक्षितः स्वार्थः फलंहेतुः तत्साधनंचसंमतः स्वर्गोऽभ्युदयश्च
अपवर्गः संसारनिवृत्तिश्च अतस्तस्यनप्राप्यंकृत्यंवाकिंचिदस्तीत्यर्थः २ अत्रविद्वदनुभवंप्रमाणयति ज्ञानेति य
थोक्तंज्ञानिनमभिनंदतिज्ञानीति यतोऽसौज्ञानेनमांधारयति ३ तस्यज्ञानंस्तौतितपइति अलंअत्यर्थंज्ञानस्यकल
यालेशेन ४ ज्ञानेनसहितंतत्त्वंयथाभवतितथाज्ञात्वातत्संपन्नःसन्मामेवभज अन्यत्सर्वंत्यजेत्यर्थः ५ तस्यप्रत्ययार्थं

ज्ञानिनस्त्वहमेवेष्टः स्वार्थोहेतुश्चसंमतः स्वर्गश्चैवापवर्गश्चनान्योऽर्थोमदृतेप्रियः २ ज्ञा
नविज्ञानसंसिद्धाःपदंश्रेष्ठंविदुर्मम ज्ञानीप्रियतमोऽतोमेज्ञानेनाऽसौबिभर्तिमां ३ तपस्तीर्थं
जपोदानंपवित्राणीतराणिच नाऽलंकुर्वंतितांसिद्धिंयाज्ञानकलयाकृता ४ तस्मात्ज्ञानेन
सहितंज्ञात्वास्वात्मानमुद्धव ज्ञानविज्ञानसंपन्नोभजमांभक्तिभावितः ५ ज्ञानविज्ञानयज्ञे
नमामिष्ट्वाऽत्मानमात्मनि सर्वयज्ञपतिंमांवैसंसिद्धिंमुनयोऽन्वगमन् ६ त्वय्युद्धवाश्रयतिय
स्त्रिविधोविकारोमायाऽन्तरापततिनाऽद्यपवर्गयोर्यत् ॥ ७ ७ ॥ ॥ ॥

पूर्वेषांवृत्तमाह ज्ञानेति मामेवसंसिद्धिंप्राप्ताः ६ तदेवज्ञानंसंक्षेपतउपदिशति त्वयीतित्रिविधः आ
ध्यात्मिकादिः विकारः देहादिः सः माया ननुपरमार्थः यत् यस्मात् अंतरामध्यएवापततिरज्जौसर्पमालादिवत्
नाद्यपवर्गयोः नत्वादावंतेचास्तिअतः यत् यदाअस्यविकारस्यामीजन्मादयस्तुः तदातस्यतवाधिष्ठान
भूतस्यकिंनकिंचिदित्यर्थः ननु तस्यापिवस्तुतोनसंततिस्यासत्वादित्याह आद्यंतयोरिति असतःसर्पादेः ॥

ततश्चासौ मुक्त एवेत्याह इति एवंभूतेन स्वधर्मेण निर्णिक्तं शुद्धं सत्त्वं यस्य सः अत एव निर्ज्ञाता मम गतिरैश्वर्यं येन ४६
उक्तमर्थं संक्षिप्याह य एष आचारलक्षणः पितृलोकप्राप्तिफलः स एव मद्भक्तियुतः मदर्पणेन कृतः ४७ प्रकरणार्थमुप
संहरति एतत्त्वतेऽभिहितं यथा भक्तो भूत्वा मां परं संप्राप्नुयादिति ४८ इति श्रीभागवते महापुराणे एकादशस्कंधे टीकायां
ऽष्टादशोऽध्यायः १८ ज्ञानादेर्निर्णयः पूर्वोक्तो ह्याश्रमधर्मतः अत्रैकोनविंशतितमे ज्ञानादेस्त्याग उच्यते १ तदेवं तर्कतो
बाधितोऽपि देहादिप्रपंचो यावदपरोक्षानुभवेन दिङ्मोहादिरिव न लीयते तावत्तज्ज्ञानाभ्यासस्ततो मुक्तिरित्युक्तं आदे

इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः ज्ञानविज्ञानसंपन्नो न चिरात्समुपैति मां ४६ वर्णाश्र
मवतां धर्म एष आचारलक्षणः स एव मद्भक्तियुतो निःश्रेयसकरः परः ४७ एतत्तेऽभिहितं सा
धो भवान्पृच्छति यच्च मां यथा स्वधर्मसंयुक्तो भक्तो मां समियात्परं ४८ इति श्री भागवते महा
पुराणे एकादशस्कंधेऽष्टादशोऽध्यायः १८ ॥ श्रीभगवानुवाच यो विद्याश्रुतसंपन्न आत्म
वान्नानुमानिकः मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत् १ ॥ ॥ ॥ ॥

हां तान्कांश्चित्ख्याति स्वतः संपद्यते मयेत्यादिना यस्य त्वपरोक्षानुभवेन प्रपंचो लीनप्रायस्तस्य न किंच न कृत्यमस्ती
त्याह य इति विद्या अनुभवः तत्पर्यंतेन श्रुतेन संपन्नः अत एव आत्मवान् प्राप्तात्मतत्त्वः नानुमानिकः केवलपरोक्ष
ज्ञानवान्न भवति अनकार पाठे प्राक् श्रुत्यनुकूलतर्कतो निर्णीतार्थ इत्यर्थः स एतद्द्वैतं तत्त्रिवृत्तिसाधनं च म
यि मायामात्रमिति ज्ञात्वा ज्ञानं च तत्साधनं संन्यसेत् अयमेव विद्वत्संन्यासो नाम १ ॥ ॥ ॥ ॥ ॥ ॥

मामेवमद्रूपमेवगुरुंपरिचरेत् ततःपरमेकश्चरेदित्यादिधर्मैर्वर्त्तेत इतिभावः ३९ अनधिकारिणःसंन्यासंनिंदतिद्वाभ्यांय
स्त्विति प्रचंडोऽत्यासक्तोइंद्रियसारथिर्बुद्धिर्यस्यसः ४० सुरान्यष्टव्यान् देवान् आत्मानंचस्वात्मानं आत्मस्थंमांचनिह्नुतेअप्रता
रयति निह्नवफलमाह अस्मादिति ४१ चतुर्णांप्रधानधर्मानाभिक्षोरिति ४२ अन्यधर्मान्कांश्चित्गृहस्थस्याऽप्याति

तावत्परिचरेद्भक्तःश्रद्धावाननसूयकः यावद्ब्रह्मविजानीयान्मामेवगुरुमादृतः ३९ यस्त्वऽ
संयतषड्वर्गःप्रचंडेंद्रियसारथिः ज्ञानवैराग्यरहितस्त्रिदंडमुपजीवति ४० सुरानात्मानमा
त्मस्थंनिह्नुतेमांचधर्महा अविपक्वकषायोऽस्मादमुष्माच्चविहीयते ४१ भिक्षोर्धर्मःशमो
हिंसातपईक्षावनौकसः गृहिणोभूतरक्षेज्याद्विजस्याचार्यसेवनं ४२ ब्रह्मचर्यंतपःशौचं
संतोषोभूतसौहृदं गृहस्थस्याप्यृतौगंतुःसर्वेषांमदुपासनं ४३ इतिमांयःस्वधर्मेण
भजन्नित्यमनन्यभाक् सर्वभूतेषुमद्भावोमद्भक्तिंविंदतेऽचिरात् ४४ भक्त्योद्धवाऽनपायि
न्यासर्वलोकमहेश्वरं सर्वोत्पत्त्यप्ययंब्रह्मकारणंमोपयातिसः ४५॥ ॥दिशति ब्रह्मचर्यमितिशौचं
रागादिराहित्यंचतस्यब्रह्मचर्यप्रकारमाह ऋतौगंतुरिति ४३ एवंभूतवर्णाश्रमधर्मफलमाह इतिमामितिद्व
ाभ्यां मद्भक्तिंविंदते ४४ ततःकिमतआह भक्त्येति महेश्वरत्वेहेतुःसर्वोत्पत्त्यप्ययंसर्वस्योत्पत्त्यप्ययौयस्मात् अतएवत
त्कारणंमांब्रह्मरूपंवैकुंठनिवासिनं यद्वा ब्रह्मणोवेदस्यकारणंमांउपयातिसामीप्येनप्राप्नोति ४५॥ ९ ॥

दैवतंत्रितंदैवाधीनंयतः ३३ अलंतर्हि भिक्षाप्रयत्नेनापि तत्राह आहारमात्रार्थंसमीहेतैव यतःतस्यप्राणधारणंयुक्तं
सम्यक्कृतयतेनप्राणधारणेनतत्त्वंविचार्यते किंतेनापितदाहतद्विज्ञायेति ३४ तर्हिकिंमिष्टान्नादिकमग्राह्यमेवकेने
वमुक्तमित्याह यदृच्छयेति ३५ यथाऽहमीश्वरोलीलयाचरामि तथा ज्ञानीज्ञाननिष्ठः अनासक्तः कुर्यात्ननुवि

यथेंदुरुदपात्रेषुभूतान्येकात्मकानिच अलब्ध्वानविषीदेतकालेऽशनंक्वचित् लब्ध्वान
हृष्येद्धृतिमानुभयंदैवतंत्रितं ३३ आहारार्थंसमीहेतयुक्तंतत्प्राणधारणं तत्त्वंविमृश्यते
तेनतद्विज्ञायविमुच्यते ३४ यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुताऽपरं तथावासस्तथाश
य्यांप्राप्तंप्राप्तंभजेन्मुनिः ३५ शौचमाचमनंस्नानंनतुचोदनयाचरेत् अन्यांश्चनियमान्
ज्ञानीयथाऽहंलीलयेश्वरः ३६ नहितस्यविकल्पाख्यायाचमद्वीक्षयाहता आदेहांतात्
क्वचित्ख्यातिस्ततःसंपद्यतेमया ३७ दुःखोदर्केषुकामेषुजातनिर्वेदआत्मवान् अजिज्ञा
सितमद्धर्मोगुरुंमुनिमुपाव्रजेत् ३८॥ धिकिंकरत्वेनतस्यज्ञाननिष्ठाविरोधादित्यर्थः ३६ कुतोवि

धिकिंकरत्वाभावस्तस्यतत्राह नहितस्यविकल्पाख्याभेदप्रतीतिःनन्वस्तिसासत्यंयाचासीत्सापिमद्वीक्षयाज्ञानेनह
ताननुनहतापुनर्दृश्यमानत्वात् तत्राह आदेहांतात्क्वचित्कदाचित्बाधितैवख्यातिर्भवति ३७ तदेवंविरक्तस्य
परोक्षज्ञानवतःसंन्यासंतद्धर्मांश्चोक्त्वाकेवलंवैराग्यवंतंविविदिषुंप्रत्याह दुःखोदर्केष्विति नजिज्ञासितोमद्धर्मोयेन

एवंवहूदकादिधर्मानुक्त्वायमहंसधर्मानाह ज्ञाननिष्ठइतिसार्द्धैर्दशभिः वहिर्विरक्तोमुमुक्षुः सन्योज्ञाननिष्ठोवामोक्षेऽ
प्यनपेक्षोमद्भक्तोवासलिंगान् त्रिदंडादिसहितानाश्रमान् तद्धर्मान्त्यक्त्वातदासक्तिंत्यक्त्वायथोचितंधर्मंचरेदित्यर्थः ननु
नरतस्यतत्त्यागएवविवक्षितःपुनर्धर्मविधानात् अक्रियत्वस्योत्तराध्यायेवक्ष्यमाणत्वाच्चतर्हिपूर्वस्मात्कोविशेषःतमाह अवि
धिगोचरःविधिकिंकरोनस्यादिति एतदेवस्फुटीकरिष्यति शौचमाचमनंस्नानंनतुचोदनयाचरेदित्यादिना २८ कथंचरेत्॥
तदाह बुधःविवेकवालकवत् मानावमानविवेकशून्यःकुशलःनिपुणोऽपिजडवत् फलानुसंधानाभावेन विद्वान्पंडि॥

ज्ञाननिष्ठोविरक्तोवामद्भक्तोवाऽनपेक्षकः सलिंगानाश्रमांस्त्यक्त्वाचरेदविधिगोचरः २८ बुधो
वालकवत्क्रीडेत्कुशलोजडवच्चरेत् वदेदुन्मत्तवद्विद्वान्गोचर्यांनैगमश्चरेत् २९ वेदवादरतो
नस्यान्नपाषंडीनहैतुकः शुष्कवादविवादेनकंचित्पक्षंसमाश्रयेत् ३० नोद्विजेतजनाद्धी।
रोजनंचोद्वेजयेन्नतु अतिवादांस्तितिक्षेतनाऽवमन्येतकंचन ३१ देहमुद्दिश्यपशुवद्वैरंकु।
र्यान्नकेनचित् एकएवपरोह्यात्माभूतेष्वात्मन्यवस्थितः ३२॥ ६ ॥ ६ ॥ ६ ॥

तोऽप्युन्मत्तवत् लोकरंजनाभावेननैगमः वेदार्थनिष्ठोऽपिगोचर्यां अनियताचारमिव २९ वेदवाद॥
रतः कर्मकांडव्याख्यानादिनिष्ठः पाषंडीश्रुतिस्मृतिविरुद्धानुष्ठाता हैतुकः केवलतर्कनिष्ठः शुष्कवादे।
निष्प्रयोजनगोष्ठ्यांयोविवादस्तस्मिन् ३० अतिवादान्दुरुक्तानि ३१ आत्मदृष्ट्यातावद्वैरकारणंनास्तीत्यु
क्तंएकएवेतिदेहदृष्ट्याऽपिनास्तीत्याह भूतानिचदेहाअपिकारणरूपेणैकात्मकानि ३२॥ ६ ॥ ६ ॥

विविक्तं विजनं क्षेमं निर्भयं शरणं स्थानं यस्य सः मयि भावेन विमल आशयो यस्य सः २१ वंधं मोक्षं च केन वंधः केन वा मोक्ष
इति तावाह वंध इति २२ २३ पुराणि हट्टादिमंति ग्रामास्तद्रहिताः व्रजाः गोष्ठानि तान् सार्थान् यात्रिकजनसमूहान् २४
यतः शिलवृत्त्या प्राप्तेन नदीयेनांधसा अन्नेन शुद्धसत्त्वः सन् निवृत्तमोहः संसिध्यति मुच्यते २५ ननु मिष्टान्नं विहाय कथं शि
लान्ने प्रवृत्तिः स्यादत आह नैतदिति एतत् दृश्यमानं मिष्टान्नादि वस्तुतया न पश्येत् यतो विनश्यति अत इहामुत्र च लोके अ

विविक्तक्षेमशरणो मद्भावविमलाशयः आत्मानं चिंतयेदेकमभेदेन मया मुनिः २१ अन्वी
क्षेतात्मनो वंधं मोक्षं च ज्ञाननिष्ठया वंध इंद्रियविक्षेपो मोक्ष एषां च संयमः २२ तस्मान्निय
म्य षड्वर्गं मद्भावेन चरेन्मुनिः विरक्तः क्षुद्रकामेभ्यो लब्ध्वात्मनि सुखं महत् २३ पुरग्रामव्रजा
न् सार्थान् भिक्षार्थं प्रविशंश्चरेत् पुण्यदेशसरिच्छैलवनाश्रमवतीं महीं २४ वानप्रस्थाश्रम
पदेष्वभीक्ष्णं भैक्ष्यमाचरेत् संसिध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलांधसा २५ नैतद्वस्तुत
या पश्येत् दृश्यमानं विनश्यति असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् २६ यदेतदात्मनि ज
गत् मनोवाक्प्राणसंहतम् सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत् २७॥ ॥

सक्तचित्तः सन् चिकीर्षितात्तदर्थकृत्याद्विरमेत् २६ ननु तथापि यावद्विनाशं सुखहेतुत्वात्तच्चिंतावतः कुतो विरागः
स्यात् तत्राह यदेतदिति एतज्जगत् ममतास्पदं मनो वाक् प्राणैः संहतं सहितमहंकारास्पदं शरीरं च सर्वं तज्जन्यं सुखं
च आत्मनि मायामात्रमिति तर्केण स्मादिदृष्टांतेन त्यक्त्वा स्वस्थः आत्मनिष्ठः सन् पुनः तन्न स्मरेत् न चिंतयेत् २७॥ ॥

एवंप्रव्रजितस्य धर्म्मानाह विभृयाच्चेदिति यदि कौपीनादन्यद्वासोयदि धारयितुमिच्छति तर्हि कौपीनमाच्छाद्यतेयावतातावन्मात्रं धारयेदित्यर्थः त्यक्तंप्रैषो द्वारात्पूर्वमेव अतोऽन्यत्किंचिदपि न विभृयात् दंडपात्राभ्यामित्यावश्यकजलपात्रादेरुपलक्षणं १५ मनःपूतंमनसासम्यग्विचार्ययच्छुद्धंतदाचरेत् १६ मौनंवाचोदंडः अनीहाकाम्यकर्मत्यागोदेहस्यप्राणायामश्चेतसः एते अंतर्यस्यदंडायस्यनसंति अंगहेउद्धव अंगेधृतैर्वेणुभिरितिवा १७ चतुर्ष्विति ब्राह्मणेष्वेवव्रत्तिभेदेनचतुर्विधेषुपू

विभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनंपरं त्यक्तंनदंडपात्राभ्यामन्यत्किंचिदनापदि १५ दृष्टिपूतंन्यसेत्पादं वस्त्रपूतंपिवेज्जलं सत्यपूतांवदेद्वाचंमनःपूतंसमाचरेत् १६ मौनानीहानिलायामादंडावाग्देहचेतसां नह्येतेयस्यसंत्यंगवेणुभिर्नभवेद्यतिः १७ भिक्षांचतुर्षुवर्णेषुविगर्ह्यान्वर्जयंश्चरेत् सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेनतावता १८ वहिर्जलाशयंगत्वातत्रोपस्पृश्यवाग्यतः विभज्यपावितंशेषंभुंजीताऽशेषमाहृतं १९ एकश्चरेन्महीमेतांनिःसंगःसंयतेंद्रियः आत्मक्रीड आत्मरत आत्मवान्समदर्शनः २०॥ पूर्वावस्थायांपूर्वसंभवेचविगर्ह्यान् अभिशस्तपतितान् असंक्लृप्तान्

अत्रायंलाभोभविष्यतीतिपूर्वमनुद्दिष्टान् १८ वहिर्ग्रामात्पावितंप्रोक्षणादिभिःशोधितंविभज्यविष्णुब्रह्मार्कभूतेभ्यः अशेषमित्यधिकाहरणंनिरस्तं याचितमितिपाठेमाधुकरेणयाचितमन्नंचेत् तर्हिविभज्यभुंजीतनत्वयाचितादिभैक्ष्यचतुष्टयमित्यर्थः माधुकरेतुनैवद्यभैक्ष्यनानेषुविद्यतेनैवद्यरुक्षिपेदप्सुत्रितयंभौतिकंवहिरीतिस्मृतेः यद्वातदानींकेनापियाचितंचेत् तन्मध्येतस्मैकिंचिद्विभज्यदत्वेत्यर्थः १९ किंच एकश्चरेदिति आत्मन्येवक्रीडाकौतुकंयस्यसः आत्मन्येवचरतःसंतु

११
७९

आम्नातानि कथितानि ८ अस्य निष्कामस्य फलमाह एवमिति धमनीभिः शिराभिः संततः व्याप्तः यावज्जीवं कृतेन त
पसा शुष्कमांसः इत्यर्थः ऋषिलोकान् महर्लोकादिक्रमेण अयं भावः अंतःकरणशुद्धिभक्तिद्वाराऽत्रैव तावन्मुच्येत प्र
तिबंधकबाहुल्ये त्वनेन क्रमेण मुच्यत इति ९ तं सकामं निंदति यस्त्विति निःश्रेयसं मोक्षफलं अल्पीयसे आविरिंच्याद
त्यल्पएव तस्मै १० एवं यावज्जीवं वर्तमानस्य मोक्षः तृतीयभागावसाने तु मंदविरागेऽपि संन्यासाधिकारः यदि तु न तोऽ।

चातुर्मास्यानि च मुनेराम्नातानि च नैगमैः ८ एवं चीर्णेन तपसा मुनिर्धमनिसंततः मां तपोमय
माराध्य ऋषिलोकादुपैति मां ९ यस्त्वेतत्कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत् कामायाऽल्पी
यसे युंज्याद्बालिशः कोऽपरस्ततः १० यदाऽसौ नियमेऽकल्पो जरया जातवेपथुः आत्मन्यग्नी
न् समारोप्य मच्चित्तोऽग्निं समाविशेत् ११ यदा कर्मविपाकेषु लोकेषु निरयात्मसु विरागो जायते
सम्यङ्न्यस्ताग्निः प्रव्रजेत्ततः १२ इष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे अग्नीन्स्वप्राण आवेश्य
निरपेक्षः परिव्रजेत् १३ विप्रस्य वै संन्यसतो देवा दारादिरूपिणः विघ्नान्कुर्वंत्ययं ह्यस्मानाक्रम्य स
मियात्परं १४

र्वागेव स्वधर्माशक्तो भवेत्तदाऽपि स्यात् गविरक्तः विरक्तो वा तत्राविरक्तस्य कृत्यमाह यदेति जातो वेपथुः कं
पो देहे यस्य सः ११ विरक्तं प्रत्याह यदेति १२ लोकेषु ब्रह्मलोकपर्यंतेषु निरयात्मसु दुःखोदर्केषु न्यस्ताऽग्निः ततः इति चातुर्हो
त्र कर्मणः वर्णाश्रमाद्वा तत्रादौ कृत्यमाह इष्ट्वेति यथोपदेशं श्राद्धाष्टकपूर्वकं प्राजापत्येष्ट्या मामिष्ट्वा स्वप्राणे आत्मनि १३।
संन्यासे विघ्ना भवंति तानविगणय्य संन्यसेदेवेत्याशयेनाह विप्रस्येति केनाभिप्रायेण कुर्वंति तमाह अयमिति परं परंब्रह्म १४

राम
७९

अष्टादशेऽवदद्धर्म्मंवनस्थयतिगोचरं अधिकारविशेषेणविशेषंचापितद्गतं १ क्रमप्राप्तान्वनस्थधर्म्मनाह वनमिति।
आयुषस्तृतीयंभागंपंचसप्ततिवर्षपर्यंतं ततः परंक्षीणेंद्रियस्यैषदृिरागेऽपिसंन्यासाधिकारःस्यादितिभावः १ व।
सीतपरिदधीत २ दतः दंतान्नधावेत् नशोधयेत् त्रिकालमप्सुमज्जेतमुशलवत्स्नायात् स्थंडिलेशयः भूमिशायी।

श्रीभगवानुवाच वनंविविक्षुःपुत्रेषुभार्यांन्यस्यसहैववा वनएववसेच्छांतस्तृतीयंभागमा।
युषः १ कंदमूलफलैर्वन्यैर्मेध्यैर्वृत्तिंप्रकल्पयेत् वसीतवल्कलंवासस्तृणपर्णाजिनानिच २
केशरोमनखश्मश्रुमलानिबिभृयाद्दतः नधावेदप्सुमज्जेतत्रिकालंस्थंडिलेशयः ३ ग्रीष्मेतप्ये
तपंचाग्नीन्वर्षास्वासारषाड्जले आकंठमग्नःशिशिरेएवंवृत्तस्तपश्चरेत् ४ अग्निपक्वंसम
श्नीयात्कालपक्वमथापिवा उलूखलाश्मकुट्टोवादंतोलूखलएववा ५ स्वयंसंचिनुयात्सर्वमा
त्मनोवृत्तिकारणं देशकालबलाभिज्ञोनाददीतान्यदाहृतं ६ वन्यैश्चरुपुरोडाशैर्निर्वपेत्काल
चोदितान् नतुश्रौतेनपशुनामांयजेतवनाश्रमी ७ अग्निहोत्रंचदर्शश्चपूर्णमासश्चपूर्ववत्॥

३ तप्येतपंचाग्नीन् सूर्येणसहचतुर्दिशमग्नीन्निधायात्मानंतापयेदित्यर्थः आसारषाट् आसारंधारासंपातंसहतइतितथाऽभ्र
अवकाशंनामव्रतंचरेत् जले आकंठमग्नःउदकवासंनामव्रतंचरेत् ४ उलूखलेनवाश्मनावाकुट्टयतिकंडयतीतितथा दं
ताएवोलूखलंयस्यसतथा ५ संचिनुयात् आहरेत् अन्यदाकालांतरे आहृतंकालांतरेनाददीतलब्धेन वेनवेऽन्नाद्ये
पुराणंतुपरित्यजेदितिनारदोक्तेः ६ कालचोदितान् आग्रयणादीन् ७ किंच अग्निहोत्रमिति मुनेश्च नैगमैर्वैदवादिभिः॥ ८

ननुदृष्टादृष्टार्थकर्मासक्तस्यकथमस्मादः विचारइत्याह विपश्चिदिति ५१ तत्रापिदृष्टव्यासक्तेरधिकत्वात्तेषांनश्वरतांप्रपंच
यति पुत्रादीनामेकत्रसंगमःपांथानांप्रपायांसंगमइव तत्रहेतुः अनुदेहंप्रतिदेहमेतेवियंतिनश्यंतिनिद्रानुवर्तीस्वप्नो
निद्राऽपायेयथेति ५२ अतिथिवदुदासीनः ५३ असाध्याश्रमविकल्पमाह कर्मभिरिति गृहाश्रमएवतिष्ठेत्यदिप्रजा

विपश्चिन्नश्वरंपश्येददृष्टमपिदृष्टवत् ५१ पुत्रदाराप्तबंधूनांसंगमःपांथसंगमः अनुदेहंविय
न्त्येतेस्वप्नोनिद्रानुगोयथा ५२ इत्थंपरिमृशन्मुक्तोगृहेष्वतिथिवद्वसन् नगृहैरनुबध्येतनि
र्ममोनिरहंकृतः ५३ कर्मभिर्गृहमेधीयैरिष्ट्वामामेवभक्तिमान् तिष्ठेद्वनंवोपविशेत्प्रजावान्वा
परिव्रजेत् ५४ यस्त्वासक्तमतिर्गेहेपुत्रवित्तैषणातुरः स्त्रैणःकृपणधीर्मूढोममाहमितिबध्य
ते ५५ अहोमेपितरौवृद्धौभार्याबालात्मजात्मजाः अनाथामामृतेदीनाःकथंजीवंतिदुःखिताः
५६ एवंगृहाशयाक्षिप्तहृदयोमूढधीरयं अतृप्तस्ताननुध्यायन्मृतोऽधंविशतेतमः ५७॥ इति
श्रीभागवतेमहापुराणेएकादशस्कंधेसप्तदशोऽध्यायः १७॥ ❋ ॥ ७ ६ ७ ॥ ६ ॥

वानतर्हिप्रव्रजेद्वा ५४ गृहाद्यासंगेदोषमाह यस्त्वितित्रिभिः ५५ बंधमेवाभिनयेनदर्शयति अहोइति वा
लाआत्मजायस्याः साआत्मजाश्च मांविनाअनाथाः संतः कथंजीविष्यंतीति ५६ गृहेयआशयोवासनातेनआसर्वे
तःक्षिप्तंहृदयंयस्यसः अंधंतमः अतितामसींयोनिं ५७ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांसप्तदशोऽध्या

४५ सर्वेषामापद्वृत्तीराह सीदन्निति त्रिभिः पण्यैर्विक्रयार्हैः नतु सुरालवणाद्यैः तत्राप्यापदाक्रांतश्चेत् खड्गेन क्षत्रियवृत्त्या वा
यद्यपि गौतमोऽनंतरां पापीयसीं वृत्तिमातिष्ठेत् इति स्मरन् खड्गधारणं पण्यविक्रयाच्छ्रेष्ठं मन्यते तथापि हिंसातो वणिग्वृत्ति
रेव श्रेष्ठेति भगवतो मतं नतु श्ववृत्त्या नीचसेवया ४६ तत्राप्यापदि मृगयया विप्ररूपेण वाऽध्यापनादिना ४७ कारवः प्रति
लोमजविशेषाः बुरुडादयः तेषां वृत्तिं कटादिक्रियां आपदुत्तीर्णस्तु नानुकल्पेन वर्त्तेतेत्याह कृच्छ्रादिति ४८ तदेवंवृ

एवंविधो नरपतिर्विमानेनाऽर्कवर्चसा विधूयेहाऽशुभं कृत्स्नमिंद्रेण सह मोदते ४५ सीदन्विप्रो
वणिग्वृत्त्या पण्यैरेवापदं तरेत् खड्गेन वाऽपदाक्रांतो न श्ववृत्त्या कथंचन ४६ वैश्यवृत्त्या तु राजन्यो
जीवेन्मृगययाऽपदि चरेद्वा विप्ररूपेण न श्ववृत्त्या कथंचन ४७ शूद्रवृत्तिं भजेद्वैश्यः शूद्रः कारुक
टक्रियां कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्म्मणा ४८ वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथो
दयं देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत् ४९ यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा धनेनाऽ
पीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून् ५० कुटुंबेषु न सज्जेत न प्रमाद्येत्कुटुंब्यपि ॥ ॥ नित्यव्यवस्थामुक्त्वापु

नर्गृहस्थस्यावश्यकान्पंचयज्ञानाह वेदाध्ययनं ब्रह्मयज्ञः तेन ऋषीन् स्वधाकारेण पितॄन् स्वाहाकारेण देवान् बलिहर
णेन भूतानि अन्नाद्यैरन्नोदकादिभिर्मनुष्यानिति ज्ञातव्यं यथोदयं विभवानुसारतः तेष्वीश्वरदृष्टिं विधत्ते मद्रूपाणीति ४९
आवश्यकं धर्म्ममुक्त्वा शक्त्यनुसारं धर्ममाह यदृच्छया उद्यमं विना उपार्जितेन वा शुक्लेन स्ववृत्त्या लब्धेन शुद्धेन धनेन वा भृ
त्यान्पोष्यान् ५० गृहस्थस्यापि निवृत्तिनिष्ठामेवाह कुटुंबेष्विति त्रिभिः न प्रमाद्येत् ईश्वरनिष्ठायां प्रमत्तो न भवेत् ॥

यानुक्रमं ब्राह्मणक्षत्रियविशांभार्याः स्वा शूद्रजन्मनः इति स्मृतेः शूद्रस्य भार्या शूद्रैव सा च स्वा च विशः स्मृता ते च स्वा चैव राज्ञः ताश्च स्वा चाग्रजन्मनः इति मनुः ३९ इज्यादयस्त्रैवर्णिकानामावश्यका धर्माः ३८ प्रतिग्रहादित्रयं तु वृत्तिः सा च ब्राह्मणस्यैव तत्रापि मुख्यामुख्यतमां चान्यां च वृत्तिमाह प्रतिग्रहमिति तयोर्याजनाध्यापनयोरपि कार्पण्यादिदोषं पश्यन् शिलैः स्वामित्यक्तैः क्षेत्रपतितैः कणिशैः ४० एवं च वृत्तिकार्श्यं ब्राह्मणेन सोढव्यमित्याह ब्राह्मणस्येति ४१ उंछवृत्तिर्नाम विप

यवीयसीं तु वयसा यां सवर्णामनुक्रमात् ३९ इज्याध्ययनदानानि सर्वेषां च द्विजन्मनां प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनं ३८ प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदं अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक्तयोः ४० ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते कृच्छ्राय तपसे चेह प्रेत्यानंतसुखाय च ४१ शिलोंछवृत्त्या परितुष्टचित्तो धर्मं महांतं विरजं जुषाणः मय्यर्पितात्मा गृह एव तिष्ठन्नातिप्रसक्तः समुपैति शांतिं ४२ समुद्धरंति ये विप्रं सीदंतं मत्परायणं तानुद्धरिष्ये नचिरादापद्भ्यो नौरिवार्णवात् ४३ सर्वाः समुद्धरेद्राजा पितेव व्यसनात्प्रजाः आत्मानमात्मना धीरो यथा गजपतिर्गजान् ४४ ॥

ऋणादिपतितकणोपादानं तां शिलवृत्त्यैकीकृत्य तया तुष्टचित्तस्य मोक्षफलमाह शिलोंछेति महांतं आतिथ्यादिलक्षणं विरजं निष्कामं सेवमानः गृह एव गृहस्थाश्रम एव नातिप्रसक्तः अतिशयेन रागमकुर्वन् शांतिं समुपैति मुख्याधिकारी भवति ४२ एवमधनस्य महत्फलमुक्त्वा सधनानामप्याह त्रिभिः समुद्धरंति दारिद्र्याद्दुस्तरात् यं विप्रमित्युपलक्षणं मत्परायणं यं कमपि ४३ राज्ञस्त्वावश्यकमेतदित्याह सर्वा इति ४४ ॥

९५ सर्वेषामापद्वृत्तीराह सीदन्निति त्रिभिः पण्यैर्विक्रयार्हैः न तु सुरालवणाद्यैः तत्राप्यापदाक्रांतश्चेत् खड्गेन क्षत्रियवृत्त्या वा
यद्यपि गौतमोऽनंतरां पापीयसीं वृत्तिमातिष्ठेत् इति स्मरन् खड्गधारणं पण्यविक्रयाच्छ्रेष्ठं मन्यते तथापि हिंसातो वणिग्वृत्ति
रेव श्रेष्ठेति भगवतो मतं न तु स्ववृत्त्या नीचसेवया ९६ तत्राप्यापदि मृगयया विप्ररूपेण वा अध्यापनादिना ९७ कारवः प्रति
लोमजविशेषाः कुलालादयः तेषां वृत्तिं कटादिक्रियां आपदुत्तीर्णस्तु नानुकल्पेन वर्त्तेतेत्याह कृच्छ्रादिति ९८ तदेवंवृ

एवंविधो नरपतिर्विमानेनार्कवर्चसा विधूयेहाऽशुभं कृत्स्नमिंद्रेण सह मोदते ९५ सीदन्विप्रो
वणिग्वृत्त्या पण्यैरेवापदं तरेत् खड्गेन वाऽपदाक्रांतो न स्ववृत्त्या कथंचन ९६ वैश्यवृत्त्या तु राजन्यो
जीवेन्मृगययाऽऽपदि चरेद्वा विप्ररूपेण न स्ववृत्त्या कथंचन ९७ शूद्रवृत्तिं भजेद्वैश्यः शूद्रः कारुक
टक्रियां कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्म्मणा ९८ वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथो
दयं वेदर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत् ९९ यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा धनेनाऽ
पीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून् १०० कुटुंबेषु न सज्जेत न प्रमाद्येत्कुटुंब्यपि॥ वृत्तिव्यवस्थामुक्त्वा पुन
र्गृहस्थस्यावश्यकान्पंचयज्ञानाह वेदाध्ययनेन ब्रह्मयज्ञः तेन ऋषीन् स्वधाकारेण पितॄन् स्वाहाकारेण देवान् बलिहर
णेन भूतानि अन्नाद्यैरन्नोदकादिभिर्मनुष्यानिति ज्ञातव्यं यथोदयं विभवानुसारतः तेष्वीश्वरदृष्टिं विधत्ते मद्रूपाणीति ९९
आवश्यकं धर्म्ममुक्त्वा शक्त्यनुसारं धर्ममाह यदृच्छया उद्यमं विना उपार्जितेन वा शुक्लेन स्ववृत्त्या लब्धेन शुद्धेन धनेन वा भृ
त्यान् पोष्यान् १०० गृहस्थस्यापि निवृत्तिनिष्ठामेवाह कुटुंबेष्विति त्रिभिः न प्रमाद्येत ईश्वरनिष्ठायां प्रमत्तो न भवेत् ॥

अशौचमिति शुष्कविग्रहः निर्मूलकलहः तर्षः तृष्णा १९ तत्र तावत्सर्वसाधारणं धर्ममाह अहिंसेति वर्णग्रहणमु
पलक्षणार्थं वर्णधर्मान् गृहस्थधर्मप्रकरणे वक्ष्यति २० प्रथमं तावदाश्रमेषु ब्रह्मचारिणो धर्मा वर्ण्यंते स धर्मो द्विवि
धः उपकुर्वाणको नैष्ठिकश्च तत्र उपकुर्वाणकस्य धर्मानाह द्वितीयमिति नवभिः द्विजः त्रैवर्णिकः आनुपूर्व्यात् गर्भाधा
नादिसंस्कारमात्रेण द्वितीयमुपनयनाख्यं जन्म प्राप्याचार्येणाहूतो ब्रह्म वेदमधीयीत चकारात्तदर्थं च विचारयेत् २१

कामः क्रोधश्च तर्षश्च स्वभावोऽतेऽवसायिनां १९ अहिंसासत्यमस्तेयमकामक्रोधलोभता भू
तप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः २० द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः वसन्गु
रुकुले दांतो ब्रह्माऽधीयीत चाहुतः २१ मेखलाजिनदंडाक्ष ब्रह्मसूत्रकमंडलून् जटिलोऽधौ
तदद्भासोऽरक्तपीठः कुशान्दधत् २२ स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः नछिंद्यान्नखरोमा
णि कक्षोपस्थगतान्यपि २३ रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयं अवकीर्णोऽवगाह्याप्सु यतासु
स्त्रिपदीं जपेत् २४ अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुरांश्छुचिः समाहित उपासीत संध्ये च यतवाग्द्व

किं च मेखलादीन् कुशांश्च दधत तत्राक्षशब्देनाक्षमाला कथंभूतः जटिलः अनभ्यंगादिना जातजटः तथा अधौतद
द्वासा तत्पीठः दंताश्च वासश्च दद्वासासि न धौतानि तानि यस्य सः अधौतदद्वासाः स चासावरक्तपीठश्च नतु कौतुकादिना रक्तं पी
ठमासनं यस्य सः २२ जपश्च उच्चारो मूत्रपुरीषोत्सर्गश्च जपोच्चारं तस्मिन् वाग्यतः मौनी भवेत् २३ रेतो बुद्धिपूर्वं नावकिरेत् नोत्सृ
जेत् ब्रह्मव्रतधरः अग्रहस्थः स्वयमेव कथंचिदवकीर्णं अवगाह्य स्नात्वा यतासुः कृतप्राणायामः त्रिपदीं गायत्रीं जपेत् २४ संध्ये च द्वे

१७
भा०ए०
७३

अन्यदपि यत्संप्राप्तं तच्च निवेदयेत् तेनानुज्ञातं तु यं यतः सन्नुपभुंजीतेत्यर्थः २६ २७ यानशय्यासनस्थानैः यांतं पृष्ठतो या|
येन निद्रितम प्रमत्तया समीप शयनेन विश्रांतं पादसंवाहनादिभिः समीपासनेन आसीनं कृतांजलिर्नियोगप्रतीक्षया नादि|
दूरे स्थानेनेत्यर्थः २८ एवंभूतं वृत्तं यस्य सः २९ एवमुपकुर्वाणकस्य धर्मानुक्त्वा नैष्ठिकस्य विशेषधर्मानाह यदीति यदि|
असौ ब्रह्मचारी यदि छंदसां लोकं महर्लोकं ततो ब्रह्मलोकं चारोक्षन् आरोढुमिच्छतीत्यर्थः यद्वा छंदसां लोकमिति नेः

आचार्यं मां विजानीयान्नाऽवमन्येत कर्हिचित् न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः २६ सायं प्रा|
तरुपानीय भैक्ष्यं तस्मै निवेदयेत् यच्चान्यदप्यऽनुज्ञातमुपयुंजीत संयतः २७ शुश्रूषमाण आ|
चार्यं सदोपासीत नीचवत् यानशय्यासनस्थानैर्नातिदूरे कृतांजलिः २८ एवंवृत्तो गुरुकुले वसे|
द्भोगविवर्जितः विद्या समाप्यते यावद्बिभ्रद्व्रतमखंडितं २९ यद्यसौ छंदसां लोकमारोक्षन् ब्रह्म|
विष्टपं गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः ३० अग्नौ गुरावात्मनि च सर्वभूतेषु मां परं अपृथ|
ग्धीरुपासीत ब्रह्मवर्चस्व्यऽकल्मषः ३१ स्त्रीणां निरीक्षणस्पर्शसंलापक्ष्वेलनादिकं प्राणिनो|
मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ३२॥ ॥ १ ब्रह्मलोकविशेषणं यत्र मूर्त्तिधराः कलाः

तुक्तत्वात् नर्हि इह हृतः सन् इह तत् नैष्ठिकं व्रतं यस्य सः विन्यसेत् समर्पयेत् अधिकस्वाध्यायार्थं अधीननिष्क|
यार्थं च ३० ब्रह्मवर्चः वेदाभ्यासजं तेजः तद्वान् ३१ नस्यैव वनस्थयतिसाधारणधर्मानाह स्त्रीणामिति निरीक्षणं|
भावगर्भं मं क्ष्वेलनं परिहासः एवमादिकं त्यजेत् मिथुनीभूतानां भूतान्यग्रतस्त्यजेत् न पश्येदित्यर्थः ३२॥ ६॥

राम
७३

तस्यैव सर्वाश्रमसाधारणं धर्ममाह शौचमिति द्वाभ्यां ३३ ३४ निष्कामनैष्ठिकस्य तु मोक्षफलमाह एवमिति अम
लः निष्कामश्चेत् दग्धः कर्म्माशयो ऽतः करणं यस्य तथाभूतः सन् मद्भक्तो भवति ३५ उपकुर्वाणस्य समावर्त्तन प्रका
रमाह अथेति अनंतरं द्वितीयाश्रमं आविक्षन् प्रवेष्टुमिच्छन् यथायथावद्विचारितवेदार्थः स्नायात् अभ्यंगादिकं कु
त्वा समावर्त्तेतेत्यर्थः ३६ तस्याधिकारानुरूपमाश्रमविकल्पसमुच्चयावाह गृहमिति सकामश्चेद्गृहं अंतः करणशुद्ध्या
दिकामश्चेद्वनं प्रविशेत् शुद्धांतः करणः स च द्विजोत्तमः ब्राह्मणश्चेत् प्रव्रजेदित्यर्थः द्विजोत्तम इत्युक्तत्वात् क्षत्रियवैश्यप्र

शौचमाचमनं स्नानं संध्योपासनमार्जवं तीर्थसेवा जपो ऽस्पृश्याभक्ष्यासंभाष्यवर्जनं ३३ सर्वा
श्रमप्रयुक्तो ऽयं नियमः कुलनंदन मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ३४ एवं बृहद्व्रत
धरो ब्राह्मणो ऽग्निरिव ज्वलन् मद्भक्तस्तीव्रतपसा दग्धकर्माशयो ऽमलः ३५ अथानंतरमावे
क्ष्यन् यथाजिज्ञासितागमः गुरवे दक्षिणां दत्वा स्नायाद्गुर्वनुमोदितः ३६ गृहं वनं वोपविशेत्प्रव्र
जेद्वा द्विजोत्तमः आश्रमादाश्रमं गच्छेन्नान्यथामत्परश्चरेत् ३७ गृहार्थी सदृशीं भार्यामुद्वहे
दजुगुप्सितां ॥ ऽयोः प्रव्रज्यानधिकारं सूचयति यद्वा आश्रमादाश्रमांतरं गच्छेत् अन्यथा अनाश्रमी प्रतिलोमं
च नाचरेदित्यर्थः अमत्पर इति वा छेदः स्वभक्तस्याश्रमनियमाभावस्य वक्ष्यमाणत्वात् ३७ विवाहनियमपूर्वकं वर्ण
धर्मैः सह गृहस्य धर्मानाह गृहार्थीति सदृशीं सवर्णां अजुगुप्सितां कुलतो लक्षणतश्चानिंदितां कामतस्तु
यामन्यामुद्वहेत् तां सवर्णामनु तस्या अनंतरं तत्रापि वर्णक्रमेणोद्वहेदित्यर्थः तिस्रो वर्णानुपूर्व्येण द्वे तथैकाय

थाक्रमं ब्राह्मणक्षत्रियविशांभार्याःस्वा शूद्रजन्मनः इतिस्मृतेः शूद्रस्यभार्याशूद्रैवसाचस्वाचविशःस्मृता तेचस्वाचैवराज्ञश्चताश्चस्वाचाग्रजन्मनः इतिमनुः ३८ इज्यादयस्त्रैवर्णिकानामावश्यकाधर्म्माः ३९ प्रतिग्रहादित्रयंतुवृत्तिः साचब्राह्मणस्यैवतत्रापिमुख्यामुख्यतमांचान्यांचवृत्तिमाह प्रतिग्रहमितितयोर्याजनाध्यापनयोरपिकार्पण्यादिदोषंपश्यन् शिलैः स्वामित्यक्तैः क्षेत्रपतितैःकणिशैः ४० एवंचवृत्तिकार्श्यंब्राह्मणेनसोढव्यमित्याह ब्राह्मणस्येति ४१ उंछवृत्तिर्नामविप

यवीयसींतुवयसायांसवर्णामनुक्रमात् ३८ इज्याऽध्ययनदानानिसर्वेषांचद्विजन्मनां प्रतिग्रहोऽध्यापनंचब्राह्मणस्यैवयाजनं ३९ प्रतिग्रहंमन्यमानस्तपस्तेजोयशोनुदं अन्याभ्यामेवजीवेतशिलैर्वादोषदृक्तयोः ४० ब्राह्मणस्यहिदेहोऽयंक्षुद्रकामायनेष्यते कृच्छ्रायतपसेचेह प्रेत्याऽनंतसुखायच ४१ शिलोंछवृत्त्यापरितुष्टचित्तोधर्मंमहांतंविरजंजुषाणः मय्यर्पितात्मागृहएवतिष्ठन्नाऽतिप्रसक्तः समुपैतिशांतिं ४२ समुद्धरंतियेविप्रंसीदंतंमत्परायणं तानुद्धरिष्ये नचिरादापद्भ्योनौरिवाऽर्णवात् ४३ सर्वाःसमुद्धरेद्राजापितेवव्यसनात्प्रजाः आत्मानमात्मना धीरोयथागजपतिर्गजान् ४४ ॥

णादिपतितकणोपादानंतांशिलवृत्त्यैकीकृत्यतयातुष्टचित्तस्यमोक्षफलमाह शिलोंछेति महांतं आतिथ्यादिलक्षणं विरजं निष्कामं सेवमानः गृहएव गृहस्थाश्रमएव नातिप्रसक्तः अतिशयेनरागमकुर्वन् शांतिंसमुपैति मुख्याधिकारीभवति ४२ एवमधनस्यमहत्फलमुक्त्वासधनानामप्याह त्रिभिः समुद्धरंतिदारिद्र्यादुत्तारयंति विप्रमित्युपलक्षणं मत्परायणंयंकमपि ४३ राज्ञस्त्वावश्यकमेतदित्याह सर्वाइति ४४ ॥

पश्चात्त्रेतायुगप्रवेशे मे वैराजरूपस्य प्राणान्निमित्तात् हृदयात्सकाशात् तस्याः त्रय्याः सकाशात् हौत्राध्वर्यवौद्गात्रैः
त्रिवृत्त्रिरूपः यज्ञो वै विष्णुरिति श्रुतेः ११ वर्णानामाश्रमाणां च धर्मान्वक्तुं तेषामुत्पत्तिमाह विप्रेति द्वाभ्यां आत्माचारः
स्वधर्म एव लक्षणं ज्ञापको येषां ते १२ मम वैराजरूपस्य हृदः वक्षसोऽधस्तात् ब्रह्मचर्यमिति नैष्ठिकाभिप्रायम् १३ तेषां

त्रेतामुखे महाभाग प्राणान्मे हृदयात्त्रयी विद्या प्रादुरभूत्तस्या अहमासंत्रिवृन्मखः ११ विप्र
क्षत्रियविट्शूद्रा मुखबाहूरुपादजाः वैराजात्पुरुषाज्जाता य आत्माचारलक्षणाः १२ गृहा
श्रमो जघनतो ब्रह्मचर्यं हृदो मम वक्षःस्थलाद्वने वासो न्यासः शीर्षणि संस्थितः १३ वर्णानामा
श्रमाणां च जन्मभूम्यनुसारिणीः आसन्प्रकृतयो नॄणां नीचैर्नीचोत्तमोत्तमैः १४ शमो दमस्तपः
शौचं संतोषः क्षान्तिरार्जवं मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः १५ तेजो बलं धृतिः शौर्यं
तितिक्षौदार्यमुद्यमः स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्रप्रकृतयस्त्विमाः १६ आस्तिक्यं दाननिष्ठा च अदंभो
ब्रह्मसेवनं अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः १७ शुश्रूषणं द्विजगवां देवानां चाप्यमा
यया तत्र लब्धेन संतोषः शूद्रप्रकृतयस्त्विमाः १८ अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः

मधिकारिविशेषेण स्वभावानाह वर्णानामिति पंचभिः जन्मस्थानानुसारिण्यः नीचैरित्यन्वयं अतो यमर्थः मंदाभिर्जन्म
भूमिभिर्मंदाः उत्तमाभिरुत्तमाश्चेति १४ तप आलोचनं १५ तेजः प्रतापः एतैरेवाश्रमस्वभावा अपि ज्ञेयाः १६ १७ १८ तद्वाह्यं

अत्र हेतुमाह वक्तेति द्वाभ्यां येवदंति ब्राह्मणा ये च कर्त्तारो महांतो ये च पालयंते क्षत्रियास्तेषां मध्ये त्वधर्मस्य तेत्वत्तोऽन्यः
कलावेदाद्याः ५ ६ तत्तस्मात्तनः अस्माकं मनुष्याणां मध्ये यस्य यथा विधीयते ७ धर्म्यो धर्मादनपेतः कुतः नैःश्रेयसक
रः भक्तिजनकः अतः मे मतः तं धर्मं निबोध ८ तत्रादौ मदुपासनालक्षण एव मुख्यो धर्म आसीत् आचारलक्षणस्तु पश्चा।
त्प्रवृत्तः स चैव मनुष्ठितो भक्तिहेतुरिति वर्णयितुमाह आदाविति कल्पादौ यत्कृतयुगं तस्मिन् ते च तदा मामुपासत एव

वक्ता कर्त्ताऽविता नान्यो धर्मस्याऽच्युत ते भुवि सभायामपि वैरिंच्यां यत्र मूर्त्तिधराः कलाः ५ क
र्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति ६ तत्त्वं नः स
र्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः यथा यस्य विधीयेत तथा वर्णय मे प्रभो ७ श्रीबादरायणि
रुवाच इत्थं स्वभृत्यमुख्येन पृष्टः स भगवान् हरिः प्रीतः क्षेमाय मर्त्यानां धर्म्मानाह सनातना
न् ८ श्रीभगवानुवाच धर्म्य एष तव प्रश्नो नैःश्रेयसकरो नृणां वर्णाश्रमाचारवतां तमुद्धव
निबोध मे ८ आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः कृतकृत्याः प्रजा जात्या तस्मात्कृत।
युगं विदुः ९ वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः १०

केवलं नामैव तत् कुर्वंतीति वक्तुं कृतयुगनामनिरुक्तिमाह कृतकृत्येति जात्या जन्मनैव ९ किंच विधायकाभावादपि तदानीं
नान्यत्कर्मासीदित्याह वेद इति धर्मश्च मनोविषयोऽहमेव वृषरूपधृक् चतुष्पात् न क्रियाविशेषो यज्ञादिः अतः तपोनिष्ठाः
मनसश्चेंद्रियाणां चैकाग्र्यं परमं तप इति वचनादेकाग्रतया हंसं शुद्धं मां ध्यायंतीत्यर्थः १०॥ ९ ॥ ९ ॥ ९ ॥

असंयमनेदोषमाह यइति असंयच्छन्नसंयच्छति ४३ परिसमाप्यतेकृतकृत्योभवतीत्यर्थः ४४ इतिश्रीभागवतेमहापु
राणेएकादशस्कंधेमहाविभूतिर्नामषोडशोध्यायः १६ ततःसप्तदशेपृष्ठेस्वधर्मभक्तिलक्षणे हंसोक्तंधर्ममन्वाहब्रह्म
चारिगृहस्थयोः १ कर्माहंविद्धिसात्वतामित्यत्रभक्त्याकृतंकर्ममोक्षसाधनंमद्विभूतिरित्युक्तंभक्तिसाधनत्वंचकर्मणां॥
मयोदितेष्ववहितःस्वधर्मेष्वित्यादिनातत्रतत्रोक्तं नचकर्मानुष्ठानान्नृणांनियमेनभक्तिर्दृश्यते अतःपृच्छतियस्त्वये

योवैवाङ्मनसीसम्यगसंयच्छन्धियायतिः तस्यव्रतंतपोदानंस्रवत्यामघटांबुवत् ४३ ता॥
स्माद्वचोमनःप्राणान्नियच्छेन्मत्परायणः मद्भक्तियुक्तयाबुद्ध्याततःपरिसमाप्यते ४४ इतिश्री
भागवतेमहापुराणेएकादशस्कंधेमहाविभूतिर्नामषोडशोऽध्यायः १६ श्रीउद्धवउवाच या॥
त्वयाभिहितःपूर्वंधर्मस्त्वद्भक्तिलक्षणः वर्णाश्रमाचारवतांसर्वेषांद्विपदामपि १ यथाऽनु॥
ष्ठीयमानेनत्वयिभक्तिर्नृणांभवेत् स्वधर्मेणारविंदाक्षतत्समाख्यातुमर्हसि २ पुराकिलमहा
बाहोधर्मंपरमकंप्रभो यत्तेनहंसरूपेणब्रह्मणेऽभ्यात्थमाधव ३ सइदानींसुमहताकालेना
मित्रकर्शन नप्रायोभवितामर्त्यलोकेप्रागनुशासितः ४ ॥ १९

णःतज्ज्ञापकः तत्साधनमित्यर्थःवर्णाश्रमहीनानामपिद्विपदांनराणां १ यथायेनप्रकारेणानुष्ठीयमानेनस्वध
र्मेण २ ननुसंप्रदायादेवज्ञास्यतेकिंपुनर्वर्णनेनतत्राह पुरेति परमकंपरमस्यासौकंसुखरूपस्तं यत् यंहंसरूपेण
धर्मोऽप्युक्तएवनतुयोगमात्रंजानीतमागतंयज्ञंयुष्मद्धर्मंविवक्षयेत्युक्तत्वात् ३ प्रागनुशासितोऽपिनभवितानमविष्य

त्रिसप्तभिःपूर्वंकल्पादौत्वद्भक्तिलक्षः॥

किंच एतत्प्रसंख्यानं एतेषां परिगणनं एतेषां लक्षणतो ज्ञानं च तत्फलं तत्वविनिश्चयश्चाहमेव एतदेव संक्षिप्याह मयेति॥
जीवेश्वररूपो द्विविधो यो भावः यश्च गुणि गुणरूपः यश्च क्षेत्रक्षेत्रज्ञरूपः स सर्वोपि मया विना मद्व्यतिरेकेण नास्ति अहमे
व सर्वमित्यर्थः ३८ ननु सामान्यतः किमेवं संक्षिप्य कथयसि पूर्ववन्निर्द्धारण संबंधाभ्यां विशेषतः सर्वाः कथयेति चेत् तत्रा
ह संख्यानं पृथिव्यादिपरमाणूनां कालेन महता न दपि मयैव क्रियते कृत्वा च वक्तुं शक्यते तथा मे विभूतीनां संख्यानं कर्त्तुं

अहमेतत्प्रसंख्यानं ज्ञानं तत्वविनिश्चयः मयेश्वरेण जीवेन गुणेन गुणिना विना सर्वात्मनाऽपि
सर्वेतान भावो विद्यते क्वचित् ३८ संख्यानं परमाणूनां कालेन क्रियते मया न तथा मे विभूतीनां
सृजतोऽण्डानि कोटिशः ३९ तेजः श्रीः कीर्त्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः वीर्यं तितिक्षा विज्ञानं
यत्र यत्र स मेंशकः ४० एतास्ते कीर्त्तिताः सर्वाः संक्षेपेण विभूतयः मनोविकारा एवैते यथा वाचा
भिधीयते ४१ वाचं यच्छ मनो यच्छ प्राणं यच्छेन्द्रियाणि च आत्मानमात्मना यच्छ न भूयः का
ल्पसेऽध्वने ४२ ॥ न शक्यते कुत इत्यत आह सृजतोऽण्डानीति यदा मया सृज्यमानानां ब्रह्माण्डानामेव तावत्सं
ख्या नास्ति तदा कुतस्तद्गतानां विभूतीनां संख्येत्यर्थः ३९ तथापि विशेषत एव सर्वा अपि संक्षेपतः कथयामीत्याह तेजः प्र
भावः श्रीः संपत् सौभगं मनोनयनाह्लादकत्वं भगः भाग्यं वीर्यं बलं अंशकः विभूतिः ४० उपसंहरति एता इति एते च विभूति
भेदा मयि चित्तावतारायकल्पिताः अतो नात्रातीवाभिनिवेशः कर्त्तव्य इत्याह मनोविकारा एव न तु परमार्थः यथा किंचित् ख
पुष्पादि वाङ्मात्रेणाभिधीयते न तत्तुल्याः ४१ तस्माद्वागादीन्नियच्छ आत्मानं बुद्धिं आत्मना सत्संपन्नया तयैव नियच्छ

वलवतां ओजश्च सहश्च सात्वतां भागवतानां भक्त्या कृतं कर्म्माहमित्यर्थः तेषामेव नवव्यूहाः तत्र नेवासुदेवसंकर्षणप्रद्युम्नानि
रुद्ध नारायण हयग्रीव वराह नृसिंह वामन इति या नव मूर्त्तयस्तासां मध्ये वासुदेवाख्या ३२ गंधर्वाणां विश्वावसुः अप्सरसां
पूर्वचित्तिः गंधमात्रं अविकृतम् ३३ परमः मधुरः परः पराख्यः शब्दः ३४ अर्ज्जुनः पार्थः भूतानां प्राणिनां प्रतिसंक्रमः प्र
लयः ३५ गत्यादयः पंचकर्म्मेंद्रियव्यापाराः स्पर्शादयो ज्ञानेंद्रियव्यापाराः तत्तल्लक्षणं दर्शने सर्वेंद्रियाणामिंद्रियं तत्तद

ओजः सहो वलवतां कर्म्माहं विद्धि सात्वतां सात्वतां नवमूर्त्तीनामादिमूर्त्तिरहं परः ३२ विश्वावसुः
पूर्वचित्तिर्गंधर्वाप्सरसामहं भूधराणामहं स्थैर्यं गंधमात्रमहं भुवः ३३ अपां रसश्च परमस्तेजि
ष्ठानां विभावसुः प्रभा सूर्येंदुताराणां शब्दोऽहं नभसः परः ३४ ब्रह्मण्यानां वलिरहं वीराणामहम
र्ज्जुनः भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसंक्रमः ३५ गत्युक्त्युत्सर्गोपादानमानंदस्पर्शलक्षणं आ
स्वादश्रुत्यवघ्राणमहं सर्वेंद्रियेंद्रियम् ३६ पृथिवी वायुराकाश आपो ज्योतिरहं महान् विकारः
पुरुषोऽव्यक्तं रजः सत्वं तमः परं ३७॥ एवं ग्रहणशक्तिरप्यहं ३६ तदेवं तत्र निर्धारणेन तत्तत्संवंधेन च विशेषतो
विभूतीर्निरूप्येदानीं सामान्यतः सर्वा अपि निरूपयति पृथिवीति सार्द्धद्वयेन पृथिव्यादिशब्दैस्तन्मात्राणि विवक्षितानि अहं अ
हंकारः महान् महत्तत्वं एताः सप्तप्रकृतिविकृतयः विकारः पंच महाभूतानि एकादशेंद्रियाणि चेत्येवं षोडशसंख्याकः
पुरुषो जीवः अव्यक्तं प्रकृतिः एवं पंचविंशति तत्वानि तदुक्तं मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त षोडशक
श्च विकारो न प्रकृतिर्न विकृतिः पुरुष इति किंच रजः सत्वं तम इति प्रकृते — गुणाश्च परं ब्रह्म च तदेवं तत्सर्वमहमेव ३७॥

कुमारः सनत्कुमारः २५ संन्यासः भूताभयदानं क्षेमाणां अभयस्थानानां मध्ये अवहिर्मतिः अंतर्निष्ठा सूनृतं प्रियवा
चनं मौनं च न हि प्रियभाषणे मौने च पुरुषस्याभिप्रायो ज्ञायते अजः प्रजापतिः यस्य देहाद्द्विभागं मिथुनमभूत् स एव मुख्यं
मिथुनं अर्द्धो ह वा एष आत्मनो यत्पत्नीति श्रुतेः २६ अनिमिषा अनिमिषाणां अप्रमत्तानां मधुमाधवौ वसंतः इत्यर्थः अ
भिजित् उत्तराषाढा चतुर्थपादः श्रवणप्रथमपादश्च तथा च श्रुतिः अभिजिन्नाम नक्षत्रं उपरिष्टादषाढानां अवस्ताच्छ्रो

स्त्रीणां तु शतरूपाऽहं पुंसां स्वायंभुवो मनुः नारायणो मुनीनां च कुमारो ब्रह्मचारिणां २५ धर्म्मा
णामस्मि संन्यासः क्षेमाणामवहिर्मतिः गुह्यानां सूनृतं मौनं मिथुनानामजस्त्वहं २६ संवत्सरोऽ
स्म्यऽनिमिषामृतूनां मधुमाधवौ मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाऽभिजित् २७ अहं युगा
नां च कृतं धीराणां देवलोऽसितः द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् २८ वासुदेवो भ
गवतां त्वं तु भागवतेऽष्वहं किंपुरुषाणां हनुमान्विद्याध्राणां सुदर्शनः २९ रत्नानां पद्मरागोऽस्मि
पद्मकोशः सुपेशसां कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविःष्वहम् ३० व्यवसायिनामहं लक्ष्मीः
कितवानां छलग्रहः तितिक्षाऽस्मि तितिक्षूणां सत्वं सत्ववतामहम् ३१ ॥ ६ ॥ ६ ॥

णायाः इत्यादि २७ कृतं कृतयुगं देवलः असितश्च व्यासानां वेदविभागकर्तॄणां कवीनां विदुषां काव्यः शुक्रः २८ भग
वतोऽत्पत्तिं प्रलयं चैव भूतानामागतिं गतिं वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति एवं लक्षणानां २९ सुपेशसां
सुंदराणां दर्भजातीनां काशदूर्वादीनां हविःषु चरुपुरोडाशादिषु घृतेषु वा ३० लक्ष्मीः धनादि संपत् ३१ ॥ ॥

यादसांप्रभुंतपतांतापयतांद्युमतांदीप्तिमतांचमध्ये १७ संयमतांदंडयतामित्यर्थः १८ शृंगिणांदंष्ट्रिणांचमध्येतेषांप्रभुर्वातुर्यैः संन्यासः प्रथमः ब्राह्मणः १९ स्रोतसांप्रवाहाणांच सरसांस्थिरोदकाशयानां २० धिष्ण्यानांनिवासस्थानानांगहनानांदुर्गमानां २१ ब्रह्मिष्ठानांवेदार्थनिष्ठानांसेनान्यांचभूपतीनां अग्रण्यांसन्मार्गप्रवर्त्तकानांअजःब्रह्मा २२ शुचीनांशोधका

ऐरावतंगजेंद्राणांयादसांवरुणंप्रभुं तपतांद्युमतांसूर्यंमनुष्याणांचभूपतिं १७ उच्चैःश्रवास्तुरंगाणांधातूनामस्मिकांचनं यमःसंयमतांचाहंसर्पाणामस्मिवासुकिः १८ नागेंद्राणामनंतोःहंमृगेंद्रःशृंगिदंष्ट्रिणां आश्रमाणामहंतुर्यौवर्णानांप्रथमोऽनघ १९ तीर्थानांस्रोतसांगंगासमुद्रःसरसामहं आयुधानांधनुरहंत्रिपुरघ्नोधनुष्मतां २० धिष्ण्यानामस्म्यहंमेरुर्गहनानांहिमालयः वनस्पतीनामश्वत्थओषधीनामहंयवः २१ पुरोधसांवसिष्ठोहंब्रह्मिष्ठानांबृहस्पतिः स्कंदोऽहंसर्वसेनान्यामग्रण्यांभगवानजः २२ यज्ञानांब्रह्मयज्ञोऽहंव्रतानामविहिंसनं वाय्वग्न्यर्काबुवागात्माशुचीनामप्यहंशुचिः २३ योगानामात्मसंरोधोमंत्रोऽस्मिविजिगीषतां आन्वीक्षिकीकौशलानांविकल्पःख्यातिवादिनां २४॥ ९नामपिमार्जनतक्षणघर्षणादीनांमध्येवाय्वादिरूपःशोधकोहं २३ योगानांयोगांगानामष्टानांमध्येआत्मसंरोधः समाधिरहम् मंत्रोनीतिःकौशलानांविवेकादिनैपुणानां मध्येआन्वीक्षिकीआत्मानात्मविवेकविद्या अख्यात्यन्यथाख्यातिशून्यख्यात्यसत्ख्यात्यनिर्वचनीयख्यातिवादिनांएवमिदमे

तेषष्ठी चक्रवित्निर्द्धारणेसंबंधेचक्रचिघयायोग्यंद्रष्टाव्याततस्वामीषांभूतानां आत्मेतिसुहृदितिर्ईश्वरइतिचसामान्येना
हमुपास्यइत्यर्थः एवंसर्वत्रतेषांस्थितुद्भवाप्ययःतत्रहेतुरित्यर्थः ८ विशेषतोविभूतीराह कलयतांवशीकुर्वतांमध्येगुणा
नांसत्वादीनांसाम्यमव्याकृतंगुणिनिधर्म्मिणिऔत्पत्तिकःस्वाभाविकोयोगुणःसोहं १० सूत्रंप्रथमकार्य्यमहान्सहत्तत्वं

अहंसर्व्वाणिभूतानितेषांस्थितुद्भवाप्ययः ८ अहंगतिर्गतिमतांकालःकलयतामहं गुणा
नांचाप्यहंसाम्यंगुणिन्यौत्पत्तिकोगुणः १० गुणिनामप्यहंसूत्रंमहतांचमहानहं सूक्ष्माणा
मप्यहंजीवोदुर्ज्जयानामहंमनः ११ हिरण्यगर्भोवेदानांमंत्राणांप्रणवस्त्रिवृत् अक्षराणा
मकारोऽस्मिपदानिछंदसामहम् १२ इंद्रोहंसर्वदेवानांवसूनामस्मिहव्यवाट् आदित्यानाम
हंविष्णूरुद्राणांनीललोहितः १३ ब्रह्मर्षीणांभृगुरहंराजर्षीणामहंमनुः देवर्षीणांनारदो
हंहविर्द्धान्यऽस्मिधेनुषु १४ सिद्धेश्वराणांकपिलःसुपर्णोऽहंपतत्रिणां प्रजापती
नांदक्षोऽहंपितृणामहमर्यमा १५ ॥ मांविद्ध्युद्धवदैत्यानांप्रह्लादमसुरेश्वरं सोमंना
क्षत्रौषधीनांधनेशंयक्षरक्षसां १६ ॥ ७ सूक्ष्मोपाधित्वात् दुर्ज्ञेयत्वाच्चजीवस्यसूक्ष्मत्वंवुद्धेर्गुणे
नात्मगुणेनचैववालाग्रमात्रोह्यवरोऽपिदृष्टइतिश्रुतेः ११ वेदानांसंवंधीतेषामध्यापकःपदानित्रिपदागाय
त्रीत्यर्थः १२ १३ हविर्धानीकामधेनुः १४ १५ नक्षत्रौषधीनांप्रभुंसोमं यक्षरक्षसांप्रभुं १६ ॥ ६ ॥

एवंकारणतत्वेन सर्वात्मकत्वमनूद्यविभूतीः पृच्छति येष्विति उपासीनाः सेवमानाः संतः ३ दुर्ज्ञेयत्वमेवाहगूढः असु
टः भूतानां प्राणिनां मध्ये अत्र हेतुः भूतानामात्मांतर्यामी अत्रापि हेतुः हे भूतभावनेति तेन त्वया ४ ता एव साकल्ये
न पृच्छति हे महाविभूतेयाः काश्चिद्भूम्यादिषु ते विभूतयः रसायां रसातले अनुभाविताः त्वयैव के नचिच्छक्तिविशेषे
ण संयोजिताः तीर्थानां पदं च तदंघ्रिपद्मं च ५ नरावतारभूतार्जुनप्रश्नसंवादित्वात् तवायं प्रश्नः साधीयानिति नावदनु

येषु येषु च भावेषु भक्त्या त्वां परमर्षयः उपासीनाः प्रपद्यंते संसिद्धं तद्वदस्व मे ३ गूढश्चर सि
भूतात्मा भूतानां भूतभावन न त्वां पश्यंति भूतानि पश्यंतं मोहितानि ते ४ याः काश्च भूमौ
दिवि वैरसायां विभूतयो दिक्षु महाविभूते तामह्यमाख्याह्यनुभाविताः तेन मामिते तीर्थपदां
घ्रिपद्म ५ श्रीभगवानुवाच एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वरः युयुत्सुना विनशने सपत्नैरर्जु
नेनवै ६ ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकं ततो निवृत्तोहंतां हं हतोयमिति लौकिकः ७॥
स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ८ अहमात्मोद्ध
वामीषां भूतानां सुहृदीश्वरः॥ ९ मोदत एवमिति त्रिभिः प्रश्नं पृष्टवान् सपत्नैर्योद्धुमिच्छता विनशने कुरुक्षेत्रे ६ यु
युत्सोर्विभूतिप्रश्ने कः प्रसंगस्तत्राह ज्ञात्वेति लौकिकः प्राकृतमतिः सन् ७ स च यदा ततो ज्ञातिबाधान्निवृत्तः तदा मया प्र
तिबोधितः सन् यथा त्वमभिभाषसे एवं संग्राममुखे मामभ्यभाषत तद्वदेव तवापि कथयिष्यामीति भावः ८ ताः विभूतीः
कथयति अहमिति अस्मच्छब्दसमानाधिकरणाः प्रथमांता द्वितीयांताश्च सर्वा विभूतयः तास्ताश्चोपासनार्थं कथ्यं

॥इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांपंचदशोध्यायः १५ षोडशेतुहरेराविर्भावयुक्ताविभूतयः ज्ञानवीर्यप्रभावा
दिविशेषेणोपवर्णिताः १ अंतश्चितेनयद्ध्यानंमशकामकृतात्मनां अतस्तद्योग्यतापत्त्यैविभूत्यादिनिरूपणं २ एवंतावन्न
वाध्यायामध्ये प्रश्नानिरूपिताः प्रथमतः षडध्यायान्विहायपंचदशाध्यायपर्य्यंतंनवाध्यायाभवंति ब्रह्मत्वसंभवेतावत्सप्तमा
दिचतुष्टये ३ बंधमुक्त्योस्तुनिर्द्धारेसद्भक्तोस्वततःपरे द्वादशेऽनंतरंकर्मकृतित्यागव्यवस्थितौ ४ हंसेतिहासतोयोगनिष्ठा
याचत्रयोदशेश्रेयः साधननिर्द्धारेध्यानेनैवचतुर्दशे ५ धारणासिद्धिभेदेचप्रसंगेननिरंतरे उद्धवप्रश्नतोदत्तमुत्तरंहरिणोचितं ६
षोडशेभूतिविस्तारेद्वयोर्वर्णाश्रमव्रतेज्ञानादिनिर्णयेचातोयमादीनांचनिर्णये ७ योगत्रयाधिकारेतुविंशेचतदनंतरे तत्वसंख्या

॥इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेपंचदशोध्यायः १५ श्रीउद्धवउवाच त्वं
ब्रह्मपरमंसाक्षादनाद्यंतमपावृत्तं सर्वेषामपिभावानांत्राणस्थित्यप्ययोद्भवः १ उच्चावचेषुभूतेषुदुर्ज्ञे
यमकृतात्मभिः उपासतेत्वांभगवन्याथातथ्येनब्राह्मणाः २॥ ११ विवादेचपुंप्रकृत्योर्विवेचने ८ जन्ममृत्यु
प्रकारेचहाविंशेदत्तमुत्तरं परापराधसहनेचतुर्भिस्तदनंतरैः ९ सप्तविंशेक्रियायोगप्रश्नेतदुपवर्णनं अष्टाविंशेततःप्रोक्ता
ज्ञानयोगोपसंहृतिः १० संसारासंभवप्रश्नेतन्मध्येदत्तमुत्तरं तदशक्त्यापुनःप्रश्नेभक्तियोगोपसंहृतिः ११ एवंप्रश्नोत्तराण्य
त्रक्रमेणैतानिविंशतिः अहमात्मांतरोबाह्योऽनावृतः सर्वदेहिनां १२ यथाभूतानिभूतेषुवहिरंतःस्वयंतथेत्युक्तंतत्रभू
तानियथाकचित्केनचिद्गुणविशेषेणोद्रिक्तानिवर्त्ततेक्वचित्सामान्यरूपेणैवतथात्वमपिक्वकथंवर्त्तसइतिविभूतीःप्रष्टुंप्र
थमंतावदुक्तमेवसर्वात्मकत्वमनुवदतित्वंब्रह्मेतिअपावृत्तंनिरावरणंस्वतंत्रंवा अतएवसर्वेषामपित्राणंरक्षणंस्थितिर्जीवनं
त्राणस्थितिसहितौअप्ययोद्भवौयस्मात् सत्वंउपादानकारणमित्यर्थः १ अत्रसदाचारंप्रमाणमाह याथातथ्येनयथार्थत्वेन

॥३६॥

उपसंहरति उपासकस्येति एवंपृथक् पृथक् धारणादिभिः ३१ यद्वा किंनानाधारणाप्रयासेन एकयैव सर्वाः सिद्धयो भवंतीत्याह जितेंद्रियस्येति मद्धारणां नारायणे तुरीयाख्ये इत्यत्रोक्तां या सुदुर्लभा स्यात् सा कान काचिदित्यर्थः ३२ यद्यप्येवं तथापि न प्रार्थ्या इत्याह अंतरायानिति ३३ तस्माद् अहैतुकीयमेव धारणा कार्या नान्याः काम्या इत्याह जन्मेति जन्मनैव काश्चित् सिद्धयो भवंति यथा देवानाम् यथा च यादसाम् उदकस्तंभः पक्ष्यादीनां खेचरत्वादि तदुक्तं पाते जले जन्मौषधितपोमंत्र

उपासकस्य मामेवं योगधारणया मुनेः सिद्धयः पूर्वकथिता उपतिष्ठंत्यशेषतः ३१ जितेंद्रियस्य दांतस्य जितश्वासात्मनो मुनेः मद्धारणां धारयतः का सा सिद्धिः सुदुर्लभा ३२ अंतरायान् वदंत्येता युंजतो योगमुत्तमम् मया संपद्यमानस्य कालक्षपणहेतवः ३३ जन्मौषधितपोमंत्रैर्यावतीरिह सिद्धयः योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ३४ सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः अहं योगस्य सांख्यस्य धर्मस्य ब्रह्मवादिनां ३५ अहमात्मांऽतरो बाह्योऽनावृतः सर्वदेहिनां यथा भूतानि भूतेषु बहिरंतः स्वयं तथा ३६ ॥

एयोगजाः सिद्धय इति योगेन मद्धारणामित्युक्तेन । योगगतिं मत्सालोक्यादिरूपां ३४ कुत इत्यत आह सर्वासामित्यर्द्धेन प्रभुत्वोपपादनं हेतुः कारणं पतिः पालयिता चेति किंच न केवलं सिद्धीनामेव प्रभुः अपितु मोक्षादीनामपीत्याह अहमिति योगो मोक्षः सांख्यं तत्साधनं ज्ञानं धर्मस्य तदुपदेष्टृणां ब्रह्मवादिनां च ३५ कुत इत्यत्राह अहमिति सर्वदेहिनां जीवानामात्मा यतः आंतरः अंतर्यामी एष त आत्मांतर्याम्य् इति श्रुतेः तर्हि किमंतर्वर्तित्वात्परिच्छिन्नः न बाह्यश्च व्यापक इत्यर्थः तत्र हेतुः अनावृतः एतत् सदृष्टांतमाह भूतेषु चतुर्वि

राम
६७

पार्ष्ण्यापार्ष्णिनागुदं निरुध्य प्राणं प्राणोपाधिमात्मानं ब्रह्मरंध्रेण मूर्द्धद्वारेण ब्रह्मोपलक्षणं ब्रह्म वा अन्यद्वा अपेक्षितं स्था
नं मनसा नीत्वा २४ मत्स्थं मन्मूर्तिरूपं शुद्धं सत्वं चिंतयेत् तदा सत्ववृत्तयः सत्वांशभूताः २५ यदा वा अकालेपि यथा वेति पाठे य
था वा येन केनापि प्रकारेण बुद्ध्या संकल्पयेत् तत्तथा यथावत्प्राप्नोतीत्यर्थः यद्वा यथा संकल्पयेत् यथा वा मत्परो मयि विश्वासवा
न् भवति तथा तदनुरूपं सर्वं प्राप्नोतीत्यर्थः किं कुर्वन् सत्ये सत्यसंकल्पे मयि मनो युंजन् २६ मदिति पृथक्पदं ममेत्यर्थः ईशितुः

आरोप्य ब्रह्मरंध्रेण ब्रह्म नीत्वोत्सृजेत्तनुम् २४ विहरिष्यन्सुराक्रीडे मत्स्थं सत्वं विभावयेत् विमाने।
नोपतिष्ठंति सत्ववृत्तीः सुरस्त्रियः २५ यथा संकल्पयेद्बुद्ध्या यदा वा मत्परः पुमान् मयि सत्ये मनो युंजं
स्तथा तत्समुपाश्नुते २६ यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् कुतश्चिन्न विहन्येत तस्य चा
ज्ञा यथा मम २७ मद्भक्त्या शुद्धसत्वस्य योगिनो धारणाविदः तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूप
बृंहिता २८ अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः मद्योगश्रांतचित्तस्य यादसामुदकं यथा २९
मद्विभूतीरभिध्यायन् श्रीवत्सास्त्रविभूषिताः ध्वजातपत्रव्यजनैः स भवेदपराजितः ३० ॥ सर्वनियंतुः वशितुः स्वतं
त्रस्य मम भावं स्वभावं प्राप्तः एता गुणहेतवः २७ अतः परं क्षुद्राः धारणा विद इति त्रिकालज्ञेश्वरधारणासूचिता त्रैकालिकी
त्रिकालवस्तुविषया स्वजन्ममृत्युभ्यामुपबृंहिता तत्सहिता अनयैव परचित्ताद्यभिज्ञतापि व्याख्याता २८ अग्न्यादिसर्वोप
घातशून्यो भगवानित्येवंभूत योगमयं तैर्नाभिभूयेत अत्र हेतुः मद्योगेति यादसामुदकं यथा अभिघातकं न भवति तथा
तस्य वपुषो अग्न्यादय इत्यर्थः अनयैवाद्वंद्वतापि व्याख्याता २९ मद्विभूतीः ममावतारान् ध्वजादिभिः सह ३० ॥ ६ ॥

१५
भा॰ए॰
६६

आकाशात्मायः प्राणः समष्टिरूपस्तद्रूपे मयि मनसा घोषं नादं चिंतयन् असौ हंसो जीवः तत्र आकाशे उपलब्धात् ज्ञानास
नतत्रस्याः विचित्राः वाचः शृणोति यद्वा तत्राकाशे उपलब्धा अभिव्यक्तायाः भूतानां वाचस्ता दूरतः शृणोतीति १९ त्वष्टा आदि
त्यः तस्मिन्नपरिच्छिन्ने चक्षुः संयोज्य तं च चक्षुषि संयोज्य तत्रोभयसंयोगे मां ध्यायन् विश्वं दूरतः पश्यति २० मनो देहं च
तदनुवर्तिना वायुना सह मयि सुसंयोज्य यामद्धारणा क्रियते तस्याः प्रभावेन यत्र मनो याति तत्रात्मा देहो यातीत्यर्थः ॥
यद्वा मनः कर्तृ आत्मानं वायुना सह देहं च मयि सुसंयोज्य यत्र याति तदनु तत्र देहो यातीति २१ मनः उपादाय उपादान ।

मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ १९ च
क्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि मां तत्र मनसा ध्यायन् विश्वं पश्यति सूक्ष्मदृक् २० मनो म
यि सुसंयोज्य देहं तदनुवायुना मद्धारणानुभावेन तत्रात्मा यत्र वै मनः २१ यदा मन उपादाय यद्य
द्रूपं बुभूषति तत्तद्भवेन्मनोरूपं मद्योगबलमाश्रयः २२ परकायं विशन् सिद्ध आत्मानं तत्र भावये
त् पिंडं हित्वा विशेत्प्राणो वायुभूतः षडंघ्रिवत् २३ पार्ष्ण्यापीड्य गुदं प्राणं हृदुरःकंठमूर्द्धसु ॥ ६

कारणं कृत्वा यद्यद्देवादिरूपं भवितुमिच्छति तत्तत् मनोरूपं मनसोऽभीष्टरूपं योगी भवेत् कुतः यतो मद्योगबलं योऽहमचिं
त्यशक्तिर्नानाकारस्तस्मिन् मयि मनसो योगो धारणा तस्य बलं प्रभावः स एव आश्रयः कारणम् २२ यत्र प्रविविक्षति तत्रात्मा
नं चिंतयेत् ततः पिंडं स्वदेहं हित्वा प्राण प्राणप्रधानलिंगशरीरोपाधिर्वायुभूतः बाह्यवायो भूतः प्रविष्टः तेन मार्गेणेत्यर्थः षडंघ्रि
वत् भृंगो यथा पुष्पात् पुष्पांतरमनायासेन प्रविशति तद्वत् २३ पिंडं हित्वेत्युक्तं तत्प्रकारं कथयन् स्वच्छंदमृत्युमाह ॥ ६

राम
६६

वैकारिकाहंकारोपाधौमयि अखिलंएकाग्रं आत्मत्वं अधिष्ठातृत्वं अत्रहेतुः मन्मनाः मयिमनोधारणप्रभावादे
वभवतितात्रातीवहेतुरनुसंधेयइतिभावः एवंमद्धारणानुभावेनमद्योगवलमाश्रयइत्यादिषुद्रष्टव्यम् १३ क्रियाश
क्तिप्रधानंमहत्तत्त्वमेवसूत्रंतदुपाधौमयिसमेपारमेष्ठ्यंसर्वोत्कृष्टंआकाश्यंविंदतेकथंभूतस्यअव्यक्ताज्जन्मयस्यत
स्यसूत्रस्यतदुपाधेर्ममेत्यर्थः १४ अधीश्वरेत्रिगुणमायानियंतरि अतएवकालविग्रहे आकलयितृरूपे अंतर्यामि

धारयन्मय्यहंतत्त्वेमनोवैकारिकेऽखिलं सर्वेंद्रियाणामात्मत्वंप्राप्निंप्राप्नोतिमन्मना: १३ मह
त्यात्मनियः सूत्रेधारयेन्मयिमानसं प्राकाश्यंपारमेष्ठ्यंमेविंदतेऽव्यक्तजन्मनः १४ विष्णौ
त्र्यधीश्वरेचित्तंधारयेत्कालविग्रहे सईशित्वमवाप्नोतिक्षेत्रज्ञक्षेत्रज्ञचोदनां १५ नारायणेतुरी
याख्येभगवच्छब्दशब्दिते मनोमय्यादधद्योगीमद्धर्मावशितामियात् १६ निर्गुणेब्रह्मणि
मयिधारयन्विशदंमनः परमानंदमाप्नोतियत्रकामोऽवसीयते १७ श्वेतद्वीपपतौचित्तं
शुद्धेधर्ममयेमयि धारयन्श्वेततांयातिषडूर्मिरहितोनरः १८ ॥ णि ईशित्वंविशिनष्टि क्षे
त्रज्ञानांजीवानांक्षेत्राणांतदुपाधीनांचचोदनांप्रेरणंननुविश्वसृष्ट्यादिकर्तृत्वलक्षणमित्यर्थः १५ तुरीयाख्येविराट्
हिरण्यगर्भस्वकारणंचेत्युपाधयाईशस्यत्रिभिर्हीनंतुरीयंतत्पदंविदुरित्येवंलक्षणेऐश्वर्यस्यसमग्रस्यधर्मस्य
यशसःश्रियःज्ञानवैराग्ययोश्चैवषण्णांभगइतीरणानहूतिभगवच्छब्दशब्दिते १६ यत्रपरमानंदरूपेसर्वोऽपिकाम
स्तदंशभूतोऽवसीयतेसमाप्यतेतं १७ अतःपरंगुणहेतुकाःसिद्धीराह शुद्धेसत्त्वात्मके श्वेततांशुद्धरूपतां १८ ॥ ॥

गुणहेतुः सिद्धीराह अनूर्मिमत्वं क्षुत्पिपासादिराहित्यं दूरेश्रवणं दर्शनं चेति द्वे सिद्धी मनोवेगेन देहस्य गतिः कामितरूपप्राप्तिः परकायप्रवेशः ६ स्वेच्छामृत्युः अप्सरोभिः सह देवानां याः क्रीडास्तासामनुदर्शनं प्राप्तिः संकल्पानुरूपप्राप्तिः अप्रतिहताज्ञा समंतात् गतिर्यस्याः सा आज्ञा चेत्येता दश ७ क्षुद्रसिद्धीश्च पंचाह त्रिकालज्ञत्वमिति अद्वंद्वं शीतोष्णाद्यनभिभवः अग्न्यादीनां संस्तंभनं ८ तत्तद्धारणाभिः सह विशेषतो निरूपयति ययेति यावत्समाप्ति ९ भूतसूक्ष्मोपाधौ मयि मनो धारय

अनूर्मिमत्वं देहेऽस्मिन् दूरश्रवणदर्शनं मनोजवः कामरूपं परकायप्रवेशनं ६ स्वच्छंदमृत्युर्देवानां सह क्रीडाऽनुदर्शनं यथासंकल्पसंसिद्धिराज्ञाऽप्रतिहता गतिः ७ त्रिकालज्ञत्वमद्वंद्वं परचित्ताद्यभिज्ञता अग्न्यर्काम्बुविषादीनां प्रतिष्टंभोऽपराजयः ८ एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः यया धारणया या स्याद्यथा वा स्यान्निबोध मे ९ भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः अणिमानमवाप्नोति तन्मात्रोपासको मम १० महत्यात्मयि परे यथासंस्थं मनो दधत् महिमानमवाप्नोति भूतानां च पृथक् पृथक् ११ परमाणुमये चित्तं भूतानां मयि रंजयन् कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात् १२॥

तत्तन्मात्रं भूतसूक्ष्माकारं सः तन्मात्रोपासकः मम सदीयं अणिमानं १० ज्ञानशक्तिमहत्त्वाकारं भूतानां चेति आकाशादिभूतोपाधौ च मयि मनो धारयन् तत्तद्भूतमहिमानं प्राप्नोतीत्यर्थः ११ वाय्वादिभूतानां ये परमाणवः तन्मये तदुपाधौ चित्तं मयि रंजयन् योगी कालसूक्ष्मार्थतां कालपरमाणूपाधिरूपतामिति लघुत्वाविवरणं तदुक्तं स कालः परमाणुर्वै यो भुंक्ते परमाणुतामिति॥१२॥ १२ ॥ १२ ॥ १२ ॥ १२ ॥ १२ ॥ १२ ॥

ततः पंचदशे प्रोक्ताः सिद्धयो धारणाऽनुगाः श्रीविष्णुपदसंप्राप्तावंतरायतया मताः १ एवं मनो युंजतो योगिनोंतरा आविर्भवंत्यः
सिद्धयोप्यंतरायप्राया एव अतस्ताः परिहृत्य परमेश्वरपर एव भवेदिति वक्तुं सिद्धीराह जितेंद्रियस्येति युक्तस्य स्थिरचित्तस्य १
सिद्धिरिति वितर्के का स्वित् किंनामा वा कथं स्वित् कीदृशी वा धारणा च कतीति प्रश्नांतरे वा शब्दः त्वमेव तज्ज्ञाता नासि नान्य इत्याश
येनाह योगिनामिति २ धारणा च अष्टादशेत्यनुषंगः योगपारगैरिति त्रिकालज्ञत्वादि क्षुद्रसिद्धीरन्येपि जानंतीति भावः।

श्रीभगवानुवाच जितेंद्रियस्य युक्तस्य जितश्वासस्य योगिनः मयि धारयतश्चेत उपतिष्ठंति सिद्धयः
१ श्रीउद्धव उवाच कया धारणया कास्वित्कथं वा सिद्धिरच्युत कति वा सिद्धयो ब्रूहि योगिनां सि।
द्धिदो भवान् २ श्रीभगवानुवाच सिद्धयोष्टादश प्रोक्ता धारणा योगपारगैः —— तासामष्टौ मत्प्र
धाना दशैव गुणहेतवः ३ अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिंद्रियैः प्राकाश्यं श्रुतदृष्टेषु श।
क्तिप्रेरणमीशिता ४ गुणेष्वसंगो वशिता यत्कामस्तदवस्यति एता मे सिद्धयः सौम्य अष्टावौत्प
त्तिकामताः ५॥

१ अहमेव प्रधानं मुख्यः स्वभावतश्च आश्रयो यासां ताः मत्सारूप्यं प्राप्तेषु किंचिन्न्यूना भवंतीति भा
वः गुणहेतवः सत्त्वोत्कर्षहेतुकाः ३ ताः स्वरूपेणोपदिशति अणिमेति सार्द्धैः पंचभिः अणिमा महिमा लघिमा च मूर्तेर्देह
स्येति त्रयः सिद्धयः प्राप्तिर्नाम सिद्धिः सर्वप्राणिनामिंद्रियैः सह तत्तदधिष्ठातृदेवतारूपेण संबंध इत्यर्थः श्रुतेषु पारलौकि
केषु दृष्टेषु दर्शनयोग्येष्वपि सर्वेषु भूविवरादिपिहितेष्वपि प्राकाश्यं भोगदर्शनसामर्थ्यं सिद्धिः शक्तीनां मायातदंशभूता
नां प्रेरणं तत्रेश्वरे मायायाः अमेषु तदंशानां प्रेरणं ईशिता नाम सिद्धिः ४ विषयभोगेष्वसंगो वशिता सिद्धिः यत्कामः यद्यत्सुखं
कामयते तत्तदवस्यति तस्य सीमानं प्राप्नोतीत्यवस्यति। सिद्धिः अष्टौ औत्पत्तिकाः स्वाभाविक्यो निरतिशयाश्चेत्यर्थः ५॥

सुकुमारं अतिकोमलं सविशेषणं ध्यानमुपसंहरति इंद्रियाणीति प्रकर्षेण नयेत् सर्वतः सर्वांगयुक्ते ४२ यादृश मित्यस्योत्तरत्वेन सविशेषणमुक्त्वा यदात्मकमित्यस्योत्तरतया शनैर्विशेषणत्यागेन ध्यानमेव समाधिपर्यंतमाह ॥ तदिति त्रिभिः एकत्रांगे अन्यान्यंगानि न चिंतयेत् एकत्रेति यदुक्तं तदेवांगं दर्शयति सुस्मितमिति ४३ व्योम्नि सर्वकारणरूपे तच्च कारणत्वमपि त्यक्त्वा मदारोहः मयि शुद्धे ब्रह्मण्यारूढः सन् किंचित् ध्यातृध्येयविभागमपि न चिंतये

सुकुमारमभिध्यायेत् सर्वांगेषु मनो दधत् इंद्रियाणींद्रियार्थेभ्यो मनसाकृष्य तन्मनः बुध्या सारथिना धीरः प्रणयेन्मयि सर्वतः ४२ तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् नान्यानि चिंतयेद्भूयः सुस्मितं भावयेन्मुखं ४३ तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् तच्च त्यक्त्वा मदारोहो न किंचिदपि चिंतयेत् ४४ एवं समाहितमतिर्मामेवात्मानमात्मनि विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतं ४५ ध्यानेनेत्थं सुतीव्रेण युंजतो योगिनो मनः संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ४६ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे चतुर्दशोऽध्यायः १४ ॥ एत् ४४ मामेवात्मनि विचष्टे आत्मानं च सर्वात्मनि मयि संयुतं विचष्टे ज्योतिर्ज्योतिषि संयुक्तमिवेत्यन्वयः ४५ एवंभूत समाधिपर्यंत ध्यानस्य फलमाह ध्यानेनेति मनो युंजतः समादधतः द्रव्यज्ञानक्रियाभ्रमः अधिभूताधिदैवाध्यात्मरूपः दृश्यद्रष्टृदर्शनरूपो वा भ्रमः निर्वाणं शांतिं सम्यक् यास्यतीति ४६ ॥ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे टीकायां चतुर्दशोऽध्यायः १४ ॥

भगवदुद्धवसंवादे ४त्रु॰

यद्वा मूलाधारादारभ्य मूर्द्धान्तपर्यन्तं बिसतंतुवत्सूक्ष्ममविच्छिन्नं संतं हृदि मनसि प्राणेनोदीर्य्याभिव्यज्य अथ पुनस्तत्रोंका रे घंटानादतुल्यस्वरं उदात्तं नादं स्थिरीकुर्य्यादिति ३४ मासादर्वाग्जितानिलो भवति ३५ एवं ध्यानांगमुक्त्वा यादृशमित्यस्यो त्तरं वक्तुं ध्येयपीठमाह हृत्पुंडरीकमिति सार्द्धेन अंतस्थं देहांतर्वर्त्ति ऊर्द्ध्वनालमधोमुखं मुकुलितं च कदलीपुष्पसंकाशं यद

प्राणेनोदीर्य्य तत्राथ पुनः संवेशयेत्स्वरं ३४ एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत् दशकृत्वस्त्रि षवणं मासादर्वाग्जितानिलः ३५ हृत्पुंडरीकमंतस्थमूर्द्ध्वनालमधोमुखं ध्यात्वोर्द्धमुखमुन्नि द्रमष्टपत्रं सकर्णिकं ३६ कर्णिकायां न्यसेत्सूर्य्यसोमाग्नीनुत्तरोत्तरं वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमं गलं ३७ समं प्रशांतं सुमुखं दीर्घचारुचतुर्भुजं सुचारुसुंदरग्रीवं सुकपोलं शुचिस्मितं ३८ समा नकर्णविन्यस्तस्फुरन्मकरकुंडलं हेमांबरं घनश्यामं श्रीवत्सश्रीनिकेतनं ३९ शंखचक्रगदाप द्मवनमालाविभूषितं नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतं ४० द्युमत्किरीटकटककटि सूत्रांगदायुतं सर्वांगसुंदरं हृद्यं प्रसादसुमुखेक्षणम् ४१॥

यत्तद्विशेषणं ध्यानमाह वह्निमध्य इति षड्भिः ध्यानमंगलं ध्यानस्य शुभविषयं ३७ समं अनुरूपावयवं दीर्घाश्चारवश्चत्वा रो भुजा यस्मिन् तत् सुचारु अतिरम्यं ३८ समानयोः कर्णयोर्विन्यस्ते स्फुरती मकराकारे कुंडले यस्मिन्तत् श्रीवत्सश्रियो निकेतनं वक्षसि दक्षिणवामतस्ताभ्यां युक्तमित्यर्थः ३९ ४० द्युमद्भिः किरीटादिभिः आसमंतात् युतं अलंकृतं प्रसादेन

मांचिंतयेदित्युक्तंतत्प्रकारंपृच्छति यथेतिध्यानांगप्रश्नः यादृशमितिध्येयविशेषणप्रश्नः यदात्मकमितियस्यैता
निवेशेषणानितत्स्वरूपप्रश्नः एतन्मेध्यानंमेववक्तुमर्हसीतिपाठः तत्रायमर्थः मुमुक्षुस्त्वांयथाध्यायेत्तन्मेवक्तुम
र्हसीतिजिज्ञासोःकथनाय मेपुनरेतत् त्वद्दास्यमेवपुरुषार्थः नतुध्यानेनकृत्यमस्तीति तदुक्तं त्वयोपभुक्तस्रग्गंधेत्या
दि त्वंवक्तुमर्हसीतिपाठःसुगमः ३१ तत्रध्यानांगत्वेनासनप्राणायामप्रकारमाह समइतिचतुर्भिः समेनात्युच्छ्रितेनाति
नीचेआसनेकंबलादौसमकायःसन्यथासुखमासीनइतिनास्तिस्वस्तिकादिनियमइत्युक्तंनासाग्रनिरीक्षणंचचित्तस्थैर्य्याय

उद्धवउवाच यथात्वामरविंदाक्षयादृशंवायदात्मकं ध्यायेन्मुमुक्षुरेतन्मेध्यानंमेवक्तुमर्हसि ३१
श्रीभगवानुवाच समआसनआसीनःसमकायोयथासुखंहस्तावुत्संगआधायस्वनासा-
ग्रकृतेक्षणः ३२ प्राणस्यशोधयेन्मार्गंपूरकुंभकरेचकैः विपर्य्ययेणापिशनैरभ्यसेन्निर्जितें-
द्रियः ३३ हृद्यविच्छिन्नमोंकारंघंटानादंबिसोर्णवत्॥ ९ अंतर्लक्ष्योवहिर्दृष्टिः स्थिरचित्तः सुसंयत

इतियोगशास्त्रोक्तेः ३२ विपर्य्ययेणरेचकपूरककुंभकक्रमेणापि यद्वावामनाड्यापूरितंदक्षिणयात्यजेत् तया
वापूरितंवामयेत्येवं विपर्य्ययेणयथोक्तंयोगशास्त्रे इडयापूरयेद्वायुंत्यजेत्पिंगलयाततइतिनिर्जितेंद्रियइतिप्र
त्याहारउक्तः ३३ प्राणायामोद्विविधः सगर्भोऽगर्भश्चेति तत्रश्रेष्ठत्वात्प्रणवगर्भमाह हृदीतिद्वाभ्यांमूलाधारा
दारभ्यअविच्छिन्नंसंततंघंटानादतुल्यमोंकारंहृदिसंतंप्राणेनउदीर्य्य ऊर्द्ध्वंद्वादशांतपर्य्यंतंनीत्वाकथंबिसो
र्णवत्कमलनालतंतुवत्तत्रमात्राऽतीतस्वरंपंचदशंबिंदुंसंवेशयेदथपुनरित्यस्यतंचबिंदुंशिरस्कंकुर्य्यादित्यर्थः॥

स्वंनिजंरूपंचभजते कर्मानुशयंकर्मवासनां मांभजतेमद्रूपतामापद्यते २५ ननुब्रह्मविदाप्नोतिपरंतमेवविदित्वाऽतिमृ-
त्युमेतीत्यादिश्रुतिभ्योज्ञानादेवाविद्यानिवृत्त्यात्मप्राप्तिरवगम्यते कुतोभक्तियोगेनेत्युच्यते तत्राह यथायथेति आत्माचित्तंपरि-
मृज्यतेशोध्यते मत्पुण्यकथानांश्रवणैरभिधानैश्च भक्तेरेवावांतरव्यापारोज्ञानंनपृथगित्यर्थः २६ किंचज्ञानंनामचित्तस्यम-
दाकारपरिणामः सचमांभजतःस्वभावतएवभवतिनचयत्नांतरमपेक्षतइतिसदृष्टांतमाह विषयानिति २७ यस्मादन्य

आत्माचकर्मानुशयंविधूयमद्भक्तियोगेनभजत्यऽथोमा २५ यथायथात्मापरिमृज्यतेसौमत्पुण्य-
गाथाश्रवणाभिधानैः तथातथापश्यतितत्वसूक्ष्मंचक्षुर्यथैवांजनसंप्रयुक्तं २६ विषयान्ध्या-
यतश्चित्तंविषयेषुविषज्जते मामनुस्मरतश्चित्तंमय्येवप्रविलीयते २७ तस्मादसदभिध्यानं
यथास्वप्नमनोरथं हित्वामयिसमाधत्स्वमनोमद्भावभावितं २८ स्त्रीणांस्त्रीसंगिनांसंगंत्य-
क्त्वादूरतआत्मवान् क्षेमेविविक्तआसीनश्चिंतयेन्मामतंद्रितः २९ नतथाऽस्यभवेत्क्लेशोबंध-
श्चाऽन्यप्रसंगतः योषित्संगाद्यथापुंसोयथातत्संगिसंगतः ३० ॥ १ साधनंतत्फलंचस्वप्नमनोरथवदस-

दभिध्यानमात्रंतस्मात्तद्विहायमय्येवमनःसमाहितंकुर्विति प्रकरणार्थमुपसंहरति तस्मादिति मद्भावभावितंमद्भावेन।
भजनेनैवशोधितं २८ विशेषतोवात्स्यायनाद्युक्तकाममार्गाःपरित्याज्याइत्याह स्त्रीणामिति आत्मवान् धीरःसन् क्षेमे
निर्भयेदेशेविविक्तेविजने २९ एतदुपपादयति नतथेति अस्यपुंसःयथातत्संगिसंगतःक्लेशोभवेत् यथाचबंधोयोषि-
त्संगतःतथान्यप्रसंगतोनभवेदिति ३० ॥ ॥

१४
भा॰ए॰
६२

पाकाद्यर्थं प्रज्वालितोऽप्यग्निर्यथा काष्ठानि भस्मीकरोति तथा रागादिनापि कथंचिन्मद्विषया सती भक्तिः समस्तपापा
नीति भगवानपि स्वभक्तिमहिमाश्चर्येण संबोधयति अहो उद्धव विस्मयं शृण्विति १९ अत एवंभूतं श्रेयो नान्यदस्तीत्याह
न साधयतीति द्वाभ्यां २० श्रद्धयाया भक्तिस्तया संभवात् जातिदोषादपीत्यर्थः २१ भक्त्यभावेऽन्यत्साधनं व्यर्थमित्याह

यथाऽग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः १९
न साधयति मां योगो न सांख्यं धर्म उद्धव न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता २० ॥
भक्त्याऽहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सतां भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात् २१
धर्मः सत्यदयोपेतो विद्या वा तपसान्विता मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि २२ क॰
थं विना रोमहर्षं द्रवता चेतसा विना विनानंदाश्रुकलया शुद्ध्येत् भक्त्या विनाशयः २३ वाग्ग
द्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भु
वनं पुनाति २४ यथाग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपं ॥ ॥ ॥

द्वाभ्यां धर्म इति २२ रोमहर्षादिकं विना कथं भक्तिर्गम्यते भक्त्या विना कथमाशयः शुद्ध्येदिति २३ किंच भक्तिः स्वा
श्रयं शोधयतीति किं वक्तव्यं यतो गद्गदवागादिलक्षणो मद्भक्तियुक्तो लोकं सर्वं पुनातीत्याह वागिति २४ अपिच
भक्त्यैवात्मशुद्धिर्नान्यत इति सदृष्टांतमाह यथेति यथाग्निना ध्मातं तापितमेव हेम सुवर्णं अंतर्मलं जहाति न क्षाल

श्रीधरी
राम
६२

भक्तस्तु परिपूर्णमित्याह अकिंचनस्येति १३ परिपूर्णतामेवाहेनपारमेष्ठ्यमिति रसाधिपत्यंपातालादिस्वाम्य अपुनर्भवंमोक्षमपि मद्विनामांहित्वा अन्यन्नेच्छतिअहमेवतस्य प्रेष्ठइत्यर्थः १४ ममापिसएवप्रेष्ठइत्याह नतथेतिद्वाभ्यां आत्मयोनिर्ब्रह्मापुत्रोपि शंकरो मत्स्वरूपभूतोऽपिसंकर्षणः भ्रातापिश्रीभार्यापि आत्मामूर्त्तिरपियथाभक्तइतिवक्तव्येऽति हर्षेणाह भवानीति १५ पूयेयमदंतर्वर्त्तिब्रह्मांडानिपवित्रीकुर्यामितिभावेनेत्यर्थः १६ किंच मद्भक्तानांसुखंमेतावदेवंभू

मयासंतुष्टमनसः सर्वाःसुखमयादिशः १३ नपारमेष्ठ्यंनमहेंद्रधिष्ण्यं नसार्वभौमंनरसाधिपत्यं नयोगसिद्धीरपुनर्भवंवामय्यर्पितात्मेच्छतिमद्विनाऽन्यत् १४ नतथामेप्रियतमआत्मयोनिर्नशंकरः नचसंकर्षणोनश्रीर्नैवात्माचयथाभवान् १५ निरपेक्षंमुनिंशांतंनिर्वैरंसमदर्शनं अनुव्रजाम्यहंनित्यंपूयेयेत्यंघ्रिरेणुभिः १६ निष्किंचनामय्यनुरक्तचेतसःशांतामहांतोऽखिलजीववत्सलाः कामैरनालब्धधियोजुषंतियत्तन्नैरपेक्ष्यंनविदुःसुखंमम १७ वाध्यमानोपिमद्भक्तोविषयैरजितेंद्रियः प्रायःप्रगल्भयाभक्त्याविषयैर्नाभिभूयते १८॥ एतंमितिवाकोवक्तुंसमर्थः यतस्तत्स्वसंवेद्यंनिरुपममित्याह निष्किंचनाइतिमहांतः निरभिमानाः अनालब्धधियः अस्पृष्टचित्ताः निष्किंचनत्वादीनां परस्परंहेतुहेतुमद्भावः एवंभूताः ममामदीयाः यत्सुखंजुषंतिसेवंतेतत्सुखंतएवविदुःलभंतेनाऽन्येकुतः नैरपेक्ष्यंनास्तिअपेक्षणीयंयेषांतेनैरपेक्ष्याः तैःकेवलभ्यंनतुमोक्षापेक्षैरपीत्यर्थः यद्वाएवंभूताःसंतोयेममामामित्यर्थः जुषंतेप्रीणंतेतएवयन्नैरपेक्ष्यसुखंतद्विदुर्नान्यइत्यर्थः १७ अपिच आस्तांतावदुत्तमभक्तकथायतःप्राकृतोऽपिभक्तःकृतार्थएवेत्याह वाध्यमानइति

द्वाभ्यांविषयैराकृष्यमाणोऽपिप्रगल्भयासमर्थया १८ ॥

एवमित्युक्तोपसंहारः केषांचिदध्ययनादिशून्यानामप्युपदेशपारंपर्येण अपरे पाखंडमतयः वेदविरुद्धार्थमतयः ८ न त्वकृतीनां मायागुणमूलत्वान्मन्मायामोहितधियः अनेकांतं नानाविधं ९ तदेवाह धर्ममितिसार्द्धेन धर्मं कर्ममीमांसकाः यद्युक्तं मोक्षार्थी न प्रवर्तेतत त्र काम्यनिषिद्धयोः नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासयेत्यादि यशः काव्यालंकारकृतः यथाहुः यावत्कीर्तिर्मनुष्यस्य पुण्या लोकेषु गीयते तावद्वर्षसहस्राणि स्वर्गलोके महीयत इति कामं वात्स्यायना

एवंप्रकृतिवैचित्र्याद्भिद्यंते मतयो नृणां पारंपर्येण केषांचित्पाखंडमतयोऽपरे ८ मन्मायामोहितधियः पुरुषाः पुरुषर्षभ श्रेयो वदंत्यनैकांतं यथाकर्म यथारुचि ९ धर्ममेके यशश्चान्ये कामं सत्यं दमं शमं अन्ये वदंति स्वार्थं वा ऐश्वर्यं त्यागभोजनं केचिद्यज्ञं तपो दानं व्रतानि नियमान्यमान् १० आद्यंतवंत एवैषां लोकाः कर्मविनिर्मिताः दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानंदाः शुचार्पिताः ११ मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः मयात्मना सुखं यत्तत्कुतः स्याद्विषयात्मनां १२ अकिंचनस्य दांतस्य शांतस्य समचेतसः॥

ऽदयः सत्यं दमं शमं च योगशास्त्रकृतः अन्ये स्वार्थवादिनो दंडनीतिकृतः वेप्रसिद्धं ऐश्वर्यमेव स्वार्थं पुरुषार्थं वदंति अतः सामाद्युपाया एव श्रेयः साधनमिति तेषां मतं तथैव त्यागभोजनं च लोकायतिकाः बौद्धाश्च यज्ञं तपो दानं यज्ञो देवतानां पूजनं तपश्च दानं च १० तेषां तुच्छफलत्वमाह आद्यंतवंत इति एषां लोकाः एतैः साध्यानि फलानि तमोनिष्ठा मोहावसानाः भोगकालेऽप्यसूयादिभिः शुचार्पिताः व्याप्ताः ११ मद्भक्तेर्मुख्यत्वमाह मयीति यावत्समाप्ति हे सभ्य मया परमानंदरूपेण आत्मना स्वरूपत्वेन स्फुरता १२ किंच अन्येषां तत्तल्लोकादि परिच्छिन्नं सुखं॥

एकमुख्यतया पक्षोऽन्यानेकारणं भवतेति अनःपेक्षितः न अपेक्षितं अपेक्षा यस्मिन् सः अहैतुकः अयमर्थः भवता यो भक्तियोग उक्तः अन्ये च यानि श्रेयःसाधनानि वदंति तेषां किं साक्षात्फलसाधनत्वेन प्राधान्यमेव सर्वेषां उतांगांगित्वं प्राधान्येऽपि किं विकल्पेन सर्वेषां तुल्यफलत्वं यद्वा कश्चिदस्ति विशेष इति २ तत्र भक्तिरेव महाफलत्वेन मुख्या अन्यानि तु स्वस्वप्रकृत्यनुसारेण पुरुषस्यानीयस्वर्गादिफलवुद्धिभिः प्राणिभिः प्राधान्येन परिकल्पितानि क्षुद्रकफलानीति विवेक्तुं प्रकृत्यनुसारेण वहुधा।

भवतोदाहृतः स्वामिन्भक्तियोगोऽनपेक्षितः निरस्य सर्वतः संगं येन त्वय्याविशेन्मनः २ श्रीभगवान् च कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता मयाऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ३ तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ततो भृग्वादयोऽगृह्णन्सप्त ब्रह्ममहर्षयः ४ तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः मनुष्याः सिद्धगंधर्वाः सविद्याधरचारणाः ५ किंदेवाः किन्नरा नागा रक्षः किंपुरुषादयः वह्व्यस्तेषां प्रकृतयो रजः सत्वतमोभुवः ६ याभिर्भूतानि भिद्यंते भूतानां मतयस्तथा यथाप्रकृति सर्वेषां चित्रा वाचः स्रवंति हि ७॥ वेदार्थप्रतिपत्तिमाह कालेनेति सप्तभिः मदात्मकः मय्येवात्मा चित्तं येन सः ३ भृग्वादयः भृगुश्च मरीचिरत्रिरंगिरसौ पुलस्त्यः पुलहः क्रतुरित्येते च सप्त ब्रह्माणः प्रजापतयः ते च ते ब्रह्मर्षयश्च ४ ५ किंदेवाः क्लमस्वेददौर्गंध्यादिरहितत्वेन किं देवाः मनुष्या वेति संदेहास्पदभूता द्वीपांतरमनुष्याः एवं किन्नराः किंचिन्नराद्वमुखतः शरीरतो वा किंपुरुषाः किंचित्पुरुषा इव वानरादयः प्रकृतयः वासनाः वह्व्यः कुतः रजः सत्वतमांसि भुवः जन्मस्थानानि यासां ॥ ॥ ताः ६ भूतानि देवासुरमनुष्यादीनि चित्रा वाचः वेदार्थव्याख्यानविषयाः ७॥

अतएव यत्तेनहंसरूपेणब्रह्मणेऽभ्यात्थमाधवेत्यनुवादोभविष्यति ऋतंप्रमीयमानोधर्मः सत्यंअनुष्ठीयमानोधर्मः तेजःप्रभावः एतेषांपरायणंपरमयनं ३९ किंच मामिति कथंभूताः अगुणाःगुणपरिणामरूपा नभवंति किंतुनित्याइत्यर्थः ४० मेमया अगृणतमांतुष्टुवुः ४१ प्रत्येयायप्रत्यागतोऽस्मि ४२ ॥ ❋ ॥
॥इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांत्रयोदशोऽध्यायः १३ चतुर्दशेपरंश्रेयोभक्तिरेव

अहंयोगस्यसांख्यस्यसत्यस्यर्तस्यतेजसः परायणंद्विजश्रेष्ठाःश्रियःकीर्तेर्दमस्यच ३९॥
मांभजंतिगुणाःसर्वेनिर्गुणंनिरपेक्षकं सुहृदंप्रियमात्मानंसाम्याऽसंगादयोऽगुणाः ४०
इतिमेछिन्नसंदेहामुनयःसनकादयः सभाजयित्वापरयाभक्त्यागृणतसंस्तवैः ४१ तैरहंपूजितः सम्यक्संस्तुतःपरमर्षिभिःप्रत्येयायस्वकंधामपश्यतःपरमेष्ठिनः ४२॥ ६ ॥
॥इतिश्रीभागवतेमहापुराणेएकादशस्कंधेत्रयोदशोऽध्यायः १३॥ श्रीउद्धवउवाच॥ ६
॥वदंतिकृष्णश्रेयांसिवहूनिब्रह्मवादिनः तेषांविकल्पप्राधान्यमुताहोएकमुख्यता १॥

नचेतरत् इत्येतदुर्ण्यतेध्यानंयोगश्चसहसाधनैः १ एवंतावद्भगवतोभक्त्यामोक्षइत्युक्तं अन्यैस्त्वन्यानिसाधनानिवदंति तत्रविशेषनिर्द्धारणायएच्छतिवदंतीति श्रेयांसिश्रेयःसाधनानि किंविकल्पेनप्राधान्यंउताहोकिंवाएकस्यैवमुख्यता ॥१॥१ ॥ १॥

निरीहश्च भवेत् मनोवाक्कायव्यापाररहित इत्यर्थः ननु देहवतः सर्वथा द्वैतदृष्टिप्रतिनिवर्त्तनायोगात्पुनः संसारः स्यादेव तत्राह।
संदृश्यत इति क्वचिदावश्यकाहारादिषु यद्यपीदं संदृश्यते तथापि पूर्वमवस्तुबुद्ध्या यत्त्यक्तं न तु तत्पुनर्मोहाय न भवेदेव किंतु देहपात
पर्य्यंतं स्मृतिरिव स्मृतिः संस्कारमात्रेणावभासो भवेदित्यर्थः ३५ एतदेवोपपादयति देहमिति आसनादुत्थितमुत्थाय तत्रैवस्थि
तं ततः क्वचिदपेतं निर्गतं पुनस्तत्रैवोपेतं वा देहमपि नानुसंधत्ते कुतोऽन्यत् यतः येन देहेन स्वस्वरूपमध्यगमत् ज्ञातवान् तं देहं यतः कारणा
दिति वा परिकृतं परिहितं वासो गतं स्थितं वा यथा न वेत्ति तद्वत् ३६ ननु च यः परिपाल्यमानोपि मुमूर्षति तं चेन्न पश्यति तर्हि पते

संदृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात् ३५ देहं च नश्वरमवस्थित
मुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपं दैवादपेतमथ दैववशादुपेतं वासो यथा परिकृतं
मदिरामदान्धः ३६ देहोऽपि दैववशगः खलु कर्म यावत्स्वारंभकं प्रतिसमीक्षत एव सासुः तं सप्रपंचम
धिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तु ३७ मयैतदुक्तं वो विप्रा गुह्यं यत्सांख्ययोगयोः
जानीत मागतं यज्ञं युष्मद्धर्मविवक्षया ३८ ॥

त्, देव नेत्याह देहोऽपीति देहो दैववशेन गच्छन् स्वारंभकं कर्म याव
दस्ति तावत्पर्यंतं प्रतिसमीक्षत एव जीवत्येव सासुः प्राणेंद्रियसहितः ननु तर्हि तस्मिन् कदाचिदासज्जेतापि नेत्याह तमिति स्वा
प्नं स्वप्नतुल्यं अधिरूढः प्राप्तः समाधिपर्यंतो योगो येन अत एव प्रतिबुद्धं ज्ञातं परमार्थवस्तु येन सः तथा च श्रुतिः तस्य ता
वदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्यत इति ३७ उक्तार्थे तेषां विश्वासार्थं स्वस्वरूपमाह मयेति सांख्यमात्मानात्मवि
वेकः योगोऽष्टांगः तयोर्गुह्यं रहस्यं यज्ञः विष्णुरिति श्रुते युष्मद्धर्मविवक्षयेत्यनेन धर्मा अप्युपदिष्टा इति ज्ञेयं ३८ ॥ १ ॥

वासनामयान् भुंक्ते यश्च सुषुप्ते तान् सर्वान् उपसंहरति स एकः कुतः त्रिगुणवृत्तिदृक् अवस्थात्रयद्रष्टा ननु जाग्रदवस्थायां सर्वेंद्रियाणि पश्यंति स्वप्ने मनः सुषुप्तिं तत्संस्कारशेषा बुद्धिः कथमात्मा तत् द्रष्टा तत्राह इंद्रियेशः ननु इंद्रियेशा अपि विश्वतैजसप्राज्ञा भिन्नाः न कुतः स्मृत्या प्रतिसंधानेन सर्वावस्थासु अन्वयात् यः स्वप्नान् द्राक्षं यश्च तदनंतरं न किंचिदवेदिषं स एवैत तर्हि जागर्मी ति उपाधिभेदेन विश्वादिव्यवहार इति भावः एतेन बाल्ययुवाद्यवस्थास्वपि प्रतिसंधानेनात्मैक्यं द्रष्टव्यं ३२ ततः किं अत आह एवमिति गुणतो याः एता मनसः अवस्थाः ताः मद्विद्ययाम यिकृताः न तत्वतः संतीति निश्चित आत्मरूपोऽर्थो यैः ते यूयं अवि

स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात् त्रिगुणवृत्तिदृगिंद्रियेशः ३२ एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम् ३३ ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रं विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ३४ दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवेन्निजसुखानुभवो निरीहः ॥ एल संशयानामाधिं आधीयंते ऽस्मिन्निति आधिरहंकारः तं संछिद्य हार्दं हृदि स्थितं मां भजत केन छित्वा तदाह अनुमानैः सदुक्तिभिः सतामुपदेशैः श्रुतिभिश्च तीक्ष्णेन ज्ञानखड्गेन ३३॥ अनुमानानि दर्शयति ईक्षेतेति इदं जगत् विभ्रमम् ईक्षेत तत्र हेतवः मनोविजृंभितत्वात् दृष्टत्वात् विनाशित्वात् च स्वप्नवत् अतिचंचलत्वात् च अलातचक्रवत् ननु भ्रमोऽपि निर्विषयः कथं स्यात् तत्राह विज्ञानमिति निगमनं तस्मात् त्रिधा योऽयं गुणपरिणामकृतो विकल्पो भेदः स मायेति ३४ तस्मात् ततो दृश्यात् दृष्टिं प्रतिनिवर्त्य निजसुखानुभवो भवेत् तन्न इच्छल्यार्थं च निवृत्ततृष्णः तूष्णीं

ननु तर्हि कथमहं जागर्मीत्यादिप्रतीतिस्तत्राह यर्हीति यस्मात् सम्यक् सृतिः सरणमनयेति संसृतिर्बुद्धिः तया बंधोऽयमात्मनो
गुणवृत्तीर्ददातीति तस्मान्मयि तुर्ये स्थितः सन्निमं संसृतिबंधं जह्यात् तत तदा गुणचेतसां गुणानां चेतसश्चात्मनोन्न —
त्यागो भवति २८ कथं संसृत्या बंधः कथं च तं जह्यात्तदाह अहंकारेण कृतं बंधं आत्मनः अर्थविपर्यये आनंदाद्यावरणे
नानर्थहेतुं विद्वान् जानन् सन् निर्विद्य दुःखमेतदिति ज्ञात्वा तुर्ये स्थितो भूत्वा संसारचिंतां संसारे बुद्धिः तस्मिन् चिंता अ
भिमानं तत्कृतां भोगचिंतां च त्यजेदिति २९ यावदेव न त्यजेत्तावत्तस्य कर्मज्ञानादि सर्वं व्यर्थमित्याह यावदिति यद्यपि॥

यर्हि संसृतिबंधोऽयमात्मनो गुणवृत्तिदः मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसां २८ अहंका
रकृतं बंधमात्मनोऽर्थविपर्ययं विद्वान्निर्विद्य संसारचिंतां तुर्ये स्थितस्त्यजेत् २९ यावन्नानार्थधीः
पुंसो न निवर्त्तेत युक्तिभिः जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ३० असत्वादात्मनोऽन्येषां भावानां
तत्कृता भिदा गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ३१ यो जागरे बहिरनुक्षणधर्मिणोऽर्थान्
भुंक्ते समस्तकरणैर्हृदि तत्सदृक्षान्॥ जागर्त्ति कर्मादिषु तथाऽपि स्वपन् स्वप्नान्पश्यन्निव भवति यतोऽज्ञः अ

सम्यग्दर्शी अज्ञजागरत्वस्य स्वप्नत्वे दृष्टांतः स्वप्न इति ३० ननु कथं वेदप्रतिपादितवर्णाश्रमकर्मादिना नानाधीर्निवर्त्तेत त
त्राह असत्वादिति भावानां देहादीनां तत्कृता भिदा वर्णाश्रमादिरूपा गतयः स्वर्गादिफलानि हेतवः कर्माणि चास्यात्मनो मृ
षा अविद्यावृद्धिविषयो वेद इति भावः ३१ युक्तिभिरित्युक्तं ता एव युक्तीराह य इति अर्थान् स्थूलान् देहादीन् समस्तकरणैः
चक्षुरादिभिर्भुंक्ते कथंभूतान् अनुक्षणधर्मिणः क्षणिकबाल्यतारुण्यादिधर्मवतः यश्च स्वप्ने हृदि जागरदृष्टसदृशान्

तत्रपंचात्मकत्वंप्रत्यक्षादिसिद्धमेवेतिपरमकारणाभेदमेवोपपादयतिमनसेतिमनआदिभिर्यद्यत्गृह्यतेतेनतद्दहमेवेत्य-
र्थः अंजसातत्वविचारेण एतेनैवसर्वात्मकोहमित्यंजसाप्युत्तरमुक्तंभवति २४ एवंप्रश्नखंडनमिषेणैवात्मस्वरूपंसामान्य-
तोनिरूप्यब्रह्मणोऽपिदुर्ज्ञेयमिहंयत्पृष्टंतत्रोत्तरमाहगुणेष्वित्यादिना यावदध्यायसमाप्ति अयमभिप्रायः यदिकर्तृत्वभोक्तृ-
त्वादिरूपतयाविषयैः संग्रथितंचित्तंबुद्ध्यादिशब्दवाच्यमेवजीवस्यस्वरूपंभवेत् ततस्तद्वियोगोनघटेत नतस्यतुस्वरूप-
महंब्रह्मैवचित्ताध्यासेनतुतत्स्वभावतयाविषयैः संग्रथितं अतः स्वस्यब्रह्मत्वभावनयाविषयाणांचमिथ्यात्वानुसंधाने

मनसावचसादृष्ट्यागृह्यतेन्यैरपीन्द्रियैः अहमेवनमत्तोऽन्यदितिबुध्यध्वमंजसा २४ गुणेष्वा-
विशतेचेतोगुणाश्चेतसिचप्रजाः जीवस्यदेहउभयंगुणाश्चेतोमदात्मनः २५ गुणेषुचाविशच्चि-
त्तमभीक्ष्णंगुणसेवया गुणाश्चचित्तप्रभवामद्रूपउभयंत्यजेत् २६ जाग्रत्स्वप्नसुषुप्तंच
गुणतोबुद्धिवृत्तयः तासांविलक्षणोजीवःसाक्षित्वेनविनिश्चितः २७ ॥

एतत्सर्वंतोनिर्विद्यभगवंतंभजतोभवत्ये-
वपरिपूर्णस्वरूपावस्थानमितिहेप्रजाः पुत्रकाः सत्यंगुणेषुचेत आविशतितेचगुणाश्चेतसिएवंगुणाश्चेतश्चोभयंग्रथितंम-
दात्मनोब्रह्मस्वरूपस्यजीवस्यदेहः अध्यस्तउपाधिः नतुस्वरूपं २५ तस्मात् अभीक्ष्णंपुनःपुनर्गुणसेवयातत्संस्कारेणगुणे-
ष्वाविशच्चित्तंतेचपुनर्वासनारूपेणचित्तेप्रकर्षेणभवंतीतितथातेगुणाश्चेतश्चएवंयदुभयंतन्मद्रूपः सन्त्यजेत् २६ ननु
जाग्रदाद्यवस्थावतः कुतः कूटस्थत्वरूपतातत्राह जाग्रत् जागरः स्वप्नः सुषुप्तंचेतिबुद्धेरेतावृत्तयः ताश्चनस्वाभाविकाः किं-
तुसत्वाज्जागरणंविद्याद्रजसास्वप्नमादिशेत् प्रस्वापंतमसाजंतोस्तुरीयंत्रिषुसंततमितिवक्ष्यमाणक्रमेणत एवजीवस्तुविल-

विचारयन्नपिप्रश्नस्यबीजंयदज्ञानादयंप्रश्नः तन्नाविंदत्यतः कर्मविक्षिप्तधीः १८ प्रश्नस्यपारमुत्तरमभिप्रायोवा
तस्यतितीर्षयाजिज्ञासयाहंसरूपेणेति यथाहंसोनीरंक्षीरंचपृथक्कर्तुंशक्तः एवमहंगुणांश्चेतश्चेतिद्योतयि
तुंहंसरूपेणागतोऽस्मीति १९ २० इत्यहंमुनिभिः पृष्टइतिपृथग्वाक्यंयदवोचमितिचपृथक् अतोऽस्वच्छत्वा
वृत्तिरदोषः तेभ्योयदवोचंतन्मेवचनंनिबोध २१ देहादिविविक्तात्मज्ञानेसति तन्निष्ठस्यरागाद्यसंभवात्स्वयमेव

ध्यायमानः प्रश्नबीजंनाभ्यपद्यतकर्मधीः १८ समाममचिंतयद्देवः प्रश्नपारतितीर्षया तस्याऽहं
हंसरूपेणसकाशमगमंतदा १९ दृष्ट्वामांतउपव्रज्यकृत्वापादाभिवंदनं ब्रह्माणमग्रतः कृत्वा
पप्रच्छुः कोभवानिति २० इत्यहंमुनिभिः पृष्टस्तत्वजिज्ञासुभिस्तदा यदवोचमहंतेभ्यस्तदुद्धव
निबोधमे २१ वस्तुनोयद्यनानात्वआत्मनः प्रश्नईदृशः कथंघटेतवोविप्रावक्तुर्वामेकआश्रयः
२२ पंचात्मकेषुभूतेषुसमानेषुचवस्तुतः कोभवानितिवः प्रश्नोवाचारंभोह्यनर्थकः २३ ॥ ६ ॥

विषयचेतसोर्विश्लेषोभवतीतिवक्तुंप्रश्नखंडनमिषेणैवतावदात्मानात्मविवेकमाह वस्तुनइतित्रिभिः किमात्मनोयंप्र
श्नः तदुपाधेर्भूतसंघस्यवाऽऽयद्यात्मनविषयः तर्हितस्यवस्तुनः परमार्थरूपस्यअनानात्वेसतिहेविप्राः वःयुष्माभिःकृत
प्रश्नः ईदृशः बहुषुनिर्धारणरूपः कथंघटेत वक्तुरुत्तरदातुर्वामेममकआश्रयः अविशेषेआत्मनिकं जातिगुणादि
विशेषमाश्रित्योत्तरंवक्ष्यामीत्यर्थः २२ भूतसंघविषयत्वेपिअयंवःप्रश्नःवाचारंभः वाङ्मात्रेणारब्धः यतो
नर्थकः कुतः भूतेषुदेवमनुष्यादिदेहेषुपंचभूतात्मकेषु अतःसमानेषु अभिन्नेषुपुनश्चवस्तुतः परमकारणात्मनाअ

११
भा॰ए॰
५९

यदिपियद्यपिरजस्तमोभ्यां विक्षिप्तधीर्मूढधीश्चतथापिविद्वान् विवेकीपुनर्मनोनिरुंधन्नसज्जते १२ विषयदोषदृष्ट्या
पिमनोनिरोधाशक्तौसुखंतन्निरोधोपायमाह अप्रमत्तइति अनिर्विण्णः अनलसः यथाकालं त्रिषवणंमयिपरमानंद
रूपेअर्पयन्समादध्यात् १३ विषयैःसंग्रथितस्यमनसस्तद्वियोगेनेश्वरनिष्ठत्वमसंभावितंमन्यमानेप्रतितन्निरूपणा
येतिहासमुपक्षिपति एतावानितियथायथावन्मय्यावेश्यतइत्येतावानित्यर्थः १४ मच्छिष्यैरित्युक्तेनेषामतिज्यायसाम

अतंद्रितोमनोयुंजन्दोषदृष्टिर्नसज्जते १२ अप्रमत्तोऽनुयुंजीतमनोमय्यर्पयंश्छनैः अ
निर्विण्णोयथाकालंजितश्वासोजितासनः १३ एतावान्योगआदिष्टोमच्छिष्यैःसनकादिभिः
सर्वतोमनआकृष्यमय्यद्धावेश्यतेयथा १४ श्रीउद्धवउवाच यदात्वंसनकादिभ्योयेनरूपेणके
शव योगमादिष्टवानेतद्रूपमिच्छामिवेदितुं १५ श्रीभगवानुवाच पुत्राहिरण्यगर्भस्यमानसाःस
नकादयः पप्रच्छुःपितरंसूक्ष्मांयोगस्यैकांतिकींगतिं १६ सनकादयऊचुः गुणेष्वाविशतेचेतोगु
णाश्चेतसिचप्रभो कथमन्योन्यसंत्यागोमुमुक्षोरतितितीर्षोः १७ श्रीभगवानुवाच एवंपृष्टोमहा
देवःस्वयंभूर्भूतभावनः॥ तेनरूपेणनिरूपणासंभवात्पृच्छतियदेति तंकालंतदेतद्रूपंचवेदितुमिच्छामित

त्कथयेति १५ मानसाःपुत्राः सूक्ष्मांदुर्ज्ञेयांएकांतिकींगतिंपरांकाष्ठां १६ तदेवाह गुणेष्विति विषयेषुस्वभावतोरा
गादिवशाच्चेतःप्रविशति तेचानुभूताविषयावासनारूपेणचेतसिप्रविशंति अतितितीर्षोर्विषयानतिक्रमितुमिच्छोः१७

राम
५९

ननु गुणव्यतिकराज्जातो देहः कथं स्वाश्रयभूतान् गुणान् स्वत एवोत्पन्नया विद्यया ऽपोह्य स्वयमप्युपरमेत् तत्राह वेणू
नां संघर्षोज्जातोग्निर्यथा स्वत एवोत्पन्नाभिर्ज्वालाभिस्तद्वनं सर्वं दग्ध्वा पश्चात् स्वयं शाम्यति एवं देहोपि तत्क्रियः तस्याग्ने
रिव क्रिया व्यापारो यस्य सः ७ ननु नियतेंद्रियतया सात्त्विकसेवायामियानस्ति पुरुषार्थः तथापि राजसादीन् विषयान्
दुःखमिति जानंतोपि कथं सेवंत इति पृच्छति विदंतीति पदं स्यानं श्वानो यथा पत्न्या भर्त्स्यमाना अपि खरा यथा पत्न्या पद्भ्यां

वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनं एवं गुणव्यत्ययजो देहः शाम्यति तत्क्रियः ७ श्रीउद्धव
उवाच विदंति मर्त्याः प्रायेण विषयान् पदमापदां तथापि भुंजते कृष्ण तत्कथं श्वखराजवत्
८ श्रीभगवानुवाच अहमित्यन्यथाबुद्धिः प्रमत्तस्य यथा हृदि उत्सर्पति रजो घोरं ततो वैकारि
कं मनः ९ रजोयुक्तस्य मनसः संकल्पः सविकल्पकः ततः कामो गुणध्यानात् दुःसहः स्याद्धि
दुर्मतेः १० करोति कामवशगः कर्माण्यविजितेंद्रियः दुःखोदर्काणि संपश्यन् रजोवेगविमोहितः
११ रजस्तमोभ्यां यदपि विद्वान् विक्षिप्तधीः पुनः ॥ ८ताड्यमाना अपि शुनीं खरीमनुधावंतः अजा यथा निर्ल
ज्जाः हंतुमानीता अपि तद्वत् ८ मिथ्याभिनिवेशेन भुंजत इति सहेतुकमाह अहमिति त्रिभिः प्रमत्तस्य विवेकशून्य
स्य देहादावहमिति मिथ्याबुद्धिर्हृदि यथोत्सर्पति ततो ऽहंबुद्धेश्च वैकारिकं सत्त्वप्रधानमपि मनः अति घोरदुःखात्मकं रजः
उत्सर्पति मनो व्याप्नोतीत्यर्थः ९ इदमेवमिदमेवं भोग्यमिति सविकल्पः संकल्पः स्यात् ततश्च अहो रूपमहो भाव इति गुणाभि
ध्यानात् दुर्धरः कामः स्यात् १० ततो विषयान्भोक्तुं कर्माणि करोति ११ एवं चेन्न कस्यापि दुःखनिवृत्तिः स्यादित्याशंक्याह

सचधर्मोरजस्तमश्चहन्यात् कुतः नविद्यतेउत्तमोयस्मात् सः सर्वोत्तमः यतः सत्ववृद्धिः सत्वस्यवृद्धिर्यस्मिन् कारणंसः
अतएवतत्कार्योऽधर्मप्रतिबंधोपिनास्तीत्याह तस्मिन्नुभयस्मिन् हते तन्मूलः तेरजस्तमसीरागद्वेषादिना प्रमादालस्या
दिनाचमूलंयस्यसः ३ सात्विकोपासनयासत्त्ववर्द्धतइत्युक्तं तानेवसत्ववृद्धिहेतून् दर्शयितुंसामान्यतोगुणत्रयवृद्धिहेतूना
ह आगमः शास्त्रं अपः आपः कचिदागमोऽर्थइतिपाठः प्रजापुत्रः देशः वाराणस्यादिः कालः वसंतादिः कर्मवेदोक्तं जन्मध्यानंचदे
वादीनांमंत्रोद्वादशाक्षरादिः संस्कारः जातकर्मादिः एतेदशत्रिगुणोत्पत्तिहेतवः ४ एषांसात्विकादिनिर्णयमाह एषामेवम
ध्येयद्वृद्धाःशास्त्रज्ञाः प्रचक्षतेप्रशंसंतितत्सात्विकं यच्चनिंदंतितत्तामसं यत्तुतैर्वृद्धैरुपेक्षितंनस्तुतंनचनिंदितंत
द्राजसंस्मृतं ५ सात्विकान्येवेति निवृत्तानिशास्त्राण्येवसेवेतनप्रवृत्तिपाखंडशास्त्राणितीर्थ्यापएवन

धर्मोरजस्तमोहन्यात्सत्ववृद्धिरनुत्तमः आशुनश्यतितन्मूलोह्यधर्मउभयेहते ३ आगमोऽ
पःप्रजादेशःकालः कर्मचजन्मच ध्यानंमंत्रोथसंस्कारोदशैतेगुणहेतवः ४ तत्तत्सात्विकमे
वैषांयद्यत्वृद्धाःप्रचक्षते निंदंतितामसंयत्तद्राजसंतदुपेक्षितं ५ सात्विकान्येवसेवेतपुमान्स
त्वविवृद्धये ततोधर्मस्ततोज्ञानंयावत्स्मृतिरपोहनं ६ ॥

५ वेतनप्रवृत्तिपाखंडशास्त्राणितीर्थ्यापएवन
गंधोदकसुराद्याःप्रजाःजनाः निवृत्तान्जनान्नप्रवृत्तदुराचारान् विविक्तदेशंनरथ्याद्यूतदेशान् कालंब्राह्ममुहूर्तादिकं
ध्यानादौनप्रदोषनिशीथादीन् कर्मचनित्यंनकाम्याभिचारादीनि जन्मचवैष्णवशैवदीक्षालक्षणंनशाक्तक्षुद्रदी
क्षारूपं ध्यानंश्रीविष्णोः नकामिनीविद्विषां मंत्रंप्रणवादिकंनकाम्यक्षुद्रादीन् संस्कारंआत्मनःशोधकंनतुके
वलंदेहगृहादीनांनतुज्ञानंमहावाक्यश्रवणादेवोत्पद्यते किंतत्रसत्ववृद्ध्याधर्मेणवा अत आहयावत्स्मृ

तंचैवंज्ञात्वाकृतकृत्यः सर्वसाधनंत्यजेत्याह एवमिति एकांतभक्त्याशितेननतीक्ष्णेन ज्ञानकुठारेणस्वतंत्रतावाहृयोर्ज्ञानभक्त्योः
जीवोपाधिंत्रिगुणात्मकंलिंगशरीरंविवृश्च्यछित्वापरमात्मानंचसंपद्यप्राप्य अथास्त्रंसाधनंत्यजेति २४॥ इतिश्रीभागवतेम
हापुराणेएकादशस्कंधेटीकायांद्वादशोऽध्यायः १२ त्रयोदशेऽथसत्वस्यवृद्ध्याविद्योदयक्रमः हंसेतिहासतस्चित्तगुणविश्लेष
वर्णनं १ विद्याकुठारेणजीवाशयंसंवृश्च्यसाधनंत्यजेत्युक्तं ननुतत्रतमआदिगुणत्रयवृत्तिप्रतिबंधेसतिकथंविद्योत्पत्तिरि
त्याशंक्यतन्निवृत्त्याविद्योत्पत्तिप्रकारमाह सत्वमिति सप्तभिः तत्रयद्यानंदादिवदात्मधर्मागुणाः स्युस्तर्हितत्स्वरूपत्वान्नेषां

एवंगुरूपासनयैवभक्त्याविद्याकुठारेणशितेनधीरः विवृश्च्यजीवाशयमप्रमत्तः संपद्यचात्मान
मथत्यजास्त्रं २४॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेद्वादशोऽध्या
यः १२ श्रीभगवानुवाच सत्वंरजस्तमइतिगुणाबुद्धेर्नचात्मनः सत्वेनान्यतमौहन्यात्सत्वंसत्वेनचै
वहि १ सत्वाद्धर्मोभवेद्वृद्धात्पुंसोमद्भक्तिलक्षणः सात्विकोपासयासत्वंततोधर्मःप्रवर्त्तते २॥ ६॥

निवृत्त्याविद्योत्पत्तिर्नस्यात् नत्वेतदस्तीत्याह बुद्धेः प्रकृतेरेतेगुणाः नत्वात्मनइति अतः सत्वेनसत्ववृद्ध्याऽन्य
तमौहन्यात् रजस्तमोवृत्तीर्जयेदित्यर्थः सत्वंचसत्वदयादिवृत्तिरूपमुपशमात्मकेनसत्वेनेवहन्यात् १ ॥६
ननुगुणत्रयवृत्तीनांपरस्परोपमर्दनरूपत्वात्कथंसत्ववृद्धेवेतरवृत्तयोनियमेनहंतव्यास्तत्राह सत्वादिति॥
मद्भक्तिलक्षयतियोधर्मः सः मद्भक्तिरूपएववा सत्त्वमेवकथंवर्द्धेत तत्राह सात्विकानांपदार्थानामुपा
सयासेवयासत्वंवृद्धंभवतीत्यर्थः २ ॥ ॥

१२
भा०ए०
५५

तस्मात्तन्मायाविलसितत्वात्तदाश्रयमिदं जगत्ततः पृथगिति सदृष्टांतमाह यस्मिन्निति तंतुविताने संस्था स्थितिर्य
स्य सः पटो यथा तथा यस्मिन्निदं विश्वमोतं दीर्घतंतुषु पट इव प्रोतं तिर्यक्तंतुष्विव एवंभूतं समष्टिव्यष्ट्यात्मकं विश्वमविद्य
यात्मन्यध्यस्तं तद्द्वारा रूपं जीवस्य कर्तृत्वादि संसारहेतुः अतस्तद्विवेकज्ञानेन कर्मादि सर्वं त्याज्यमिति मुक्तमित्याशयेनाह।
यएष इति सार्द्धैस्त्रिभिः पुराणः अनादिः कर्मात्मकः प्रवृत्तिस्वभावः पुष्पफले भोगापवर्गौ कर्मतत्फले वा प्रसूते जनयति
२१ द्वद्वात्मकं प्रपंचयति द्वे इति द्वे पुण्यपापे अस्यबीजे स च शतमूलः शतं अपरिमिताः वासनाः मूलानि यस्य त्रयो गु

यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तंतुवितान संस्थः यएष संसारतरुः पुराणः कर्मात्मकः
पुष्पफले प्रसूते २१ द्वे अस्य बीजे शतमूलस्त्रिनालः पंचस्कंधः पंचरसप्रसूतिः दशैकशा।
खो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः २२ अदंति चैकं फलमस्य गृध्रा ग्रामेचरा ए
कमरण्यवासाः हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदं २३

णाः नालानि प्रकांडा यस्य पंच
भूतानि स्कंधा यस्य पंचरसाः शब्दादिविषयास्तेषां प्रसूतिर्यस्मात् दश च एका च शाखाः इंद्रियाणि यस्य द्वयोः सुपर्णयोर्जी
वपरमात्मनोर्नीडं यस्मिन् त्रीणि वल्कलानि त्वचो वातपित्तश्लेष्माणो यस्य द्वे सुखदुःखे फले यस्य सः अर्कं प्रविष्टः सूर्यमं
डलपर्यंतं व्याप्तः तन्निर्भिद्य गतस्य संसाराभावात् २२ तत्फलभोक्तॄनाह गृध्यंतीति गृध्राः कामिनः ग्रामेचराः गृहस्थाः अस्य
वृक्षस्यैकं फलं दुःखमदंति परिणामतः स्वर्गादेरपि दुःखस्वरूपत्वात् हंसा विवेकिनः अरण्यवासाः संन्यासिनः एकं फ।
लं सुखमदंति एकं परमात्मानं मायामयमेव बहुरूपं इज्यैः पूज्यैर्गुरुभिः ज्ञात्वा यो वेद स वेदं वेदतत्त्वार्थं वेद २३॥ ८॥

भा०
५५

॥ उक्तां वाक्प्रवृत्तिमुपसंहरन्नितरेंद्रियवृत्तिर्व्वतिदिशति एवंगदिर्गदनं भाषणंमेव्यक्तिरित्युपसंहारः वाणीवागिंद्रियस्य कर्मेहमनयोर्वृत्तिः गतिःपादयोर्विसर्गः पायूपस्थयोः इतिकर्मेंद्रियाणां घ्राणः अव घ्राणं रसो रसने दृक् दर्शनं स्पर्शः नंस्पर्शनं श्रुतिः श्रवणमिति ज्ञानेंद्रियाणां व्यापारः ॥ संकल्पो मनसः विज्ञानं बुद्धिचित्तयोः अभिमानोहंकारस्य सूत्रंप्रधानस्य सत्वरजस्तमसां विकारोऽधिदैवादिस्त्रिविधः प्रपंचोमेव्यक्तिरितिपूर्वे।

एवंगदिः कर्मगतिर्विसर्गो घ्राणो रसो दृक्स्पर्शः श्रुतिश्च
संकल्पविज्ञानमथाभिमानः सूत्रंरजः सत्वतमोविकारः १९
अयंहिजीवस्त्रिवृदब्जयोनिरव्यक्त एकोवयसासआद्यः वि
श्लिष्टशक्तिर्बहुधेवभातिवीजानियोनिंप्रतिपद्ययद्वत् २०

णान्वयः १९ तस्मादीश्वरादिव्यक्तिरूपः प्रपंचोनेश्वराद्भिन्नोस्तीत्याह अयमिति अयंजीवईश्वरः आदावव्यक्त एकएववयसाकालेन विश्लिष्टाविभक्तावागादीयरूपाः शक्तयोयस्ययद्वा विशेषेण श्लिष्टा आलिंगिता। मायाशक्तिर्येनसः बहुप्रकार इवाभाति यः सएव आद्यस्त्रिवृत्त्रिगुणाश्रयः अब्जयोनिः लोकपद्मस्य कारणभूतः एकस्यबहुधाभानेदृष्टांतः योनिंक्षेत्रंप्रतिपद्यप्राप्यवीजानियद्वदिति २० ॥ २० ॥ २० ॥

तथाचश्रुतिः चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणायेमनीषिणः गुहात्रीणिनिहितानेंगयंतितुरीयंवाचोम
नुष्यावदंतीतिश्रुतेरर्थः वाक्परिमितानिवाचःपरिमितानिशास्त्राणितानिचत्वारिपदानिस्थानानिपरापश्यंतीमध्यमावैखरीति
तानिचयेब्राह्मणामनीषिणोऽध्यात्मकुशलाः तेविदुः तेषांमध्येआद्यौत्रीणिपदानिशरीरेआधारनाभिहृदयेषुनिहितानिनेंगयं
तिनजानंति तुरीयंचतुर्थंवैखर्याख्यंमनुष्यावदंति मनुष्याणांवदनेवर्तमानोर्थबोधकःशब्दोभवतीत्यर्थः अभियुक्तःश्लोकश्च
यासामित्रावरुणसदनादुच्चरंतीत्रिषष्टिर्वर्णानतःप्रकटकरणैः प्राणसंगात्प्रसूते तांपश्यंतींप्रथममुदितांमध्यमांबुद्धिसंस्थांवाचं
वक्त्रेकरणविशदांवैखरींचप्रपद्ये १ श्लोकार्थश्च तांत्रिविधांभारतींप्रपद्ये यासामित्रावरुणसदनात् अग्निसोमस्थानातउ

मनोमयंसूक्ष्ममुपेत्यरूपंमात्रास्वरोवर्णइतिस्थविष्ठः १७ यथाऽनलःखेऽनिलबंधुरूष्माब
लेनदारुण्यधिमथ्यमानः ॥ अणुःप्रजातोहविषासमिध्यतेतथैवमेव्यक्तिरियंहिवाणी १८॥

च्चरंतीउद्भवंतीमित्रोऽग्निर्वरुणः सोमः तयोःसदनमावासस्थानंपरमात्मा यतःश्वासश्चशीतोष्णत्वंतस्मादुच्चरंतीत्रिषष्टिवर्णा॰
नूजनयतिवायुसंगाज्जातप्रकटकरणैः बुद्धिंगतैःप्रत्यक्षरूपैः इंद्रियैः अंतःपश्यति नतूच्चारयतिसापश्यंत्याख्यातांप्रथममुदि
तांउत्पन्नांबुद्धिसंस्थांउच्चारयामीति विचारयुक्तांमध्यमांमुखेवस्थितांकरणविशदांस्थानप्रयत्ननिर्मलांवैखरींचप्रपद्येत्रिषष्टिं
वर्णानितिह्रस्वदीर्घप्लुतभेदेनस्वराएकविंशतिः ऋलोरप्लुतत्वात्संध्यक्षराणामह्रस्वत्वाच्चव्यंजनानित्रयस्त्रिंशत् अनुना॰
सिकाःङञणनमाःपंच विसर्गानुस्वारौ‌ऽःकःपौचेति १७ अव्यक्तस्समतःसूक्ष्ममध्यमक्रमेणाभिव्यक्तौदृष्टांतः यथेति यथाऽ
ग्निःखेऊष्मा अव्यक्तोप्यरूपःदारुणिअधिकंमथ्यमानःअनिलसहायःसन् अणुःसूक्ष्मविस्फुलिंगादिरूपोभवति पुनःप्र
रूढोजातोहविषासंवर्धते तथैवेयंवाणीममाभिव्यक्तिः १८॥

पूर्वंतावन्मयोदितेष्ववहितः स्वधर्मेष्वित्यादिना कर्मकर्त्तव्यमित्युक्तं इदानींतु सर्वं त्यक्त्वा मां शरणं याहीत्युच्यते तत्र आ-
किमात्मनः कर्तृत्वाद्यस्ति नास्ति वेत्यात्मस्थः आत्मविषयः संशयो न निवर्त्तते यद्वा कर्मकार्यंत्याज्यं वेत्यात्मस्थः
हृदिस्थः संशयो न निवर्त्तत इति पृच्छति संशय इति येन संशयेन ॥ १६ ॥ उक्तं स एष इत्यष्टभिः अयंभावः ईश्वरस्तावत् ॥
स्वमायावशात्प्रपंचात्मना भाति तत्प्रपंचाध्यासाच्च जीवानामनाद्यविद्यया कर्तृत्वादि ततो विधिप्रतिषेधाधिकारः ता-
दानीं सत्त्वशुद्ध्यर्थं कर्माणि कुर्वित्युक्तम् सत्वे च शुद्धे पुनः कर्मजाड्यपरिहाराय भक्तिविक्षेपककर्मादरं परित्यज्य दृढविश्वा-

श्रीउद्धव उवाच संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ॥
न निवर्त्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १६ ॥ श्रीभगवा-
नुवाच स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः

सू १

सेन भजेत्युक्तं जातायां तु विद्यायां न किंचित्कर्त्तव्यमस्तीति तत्र तावदीश्वरात्त्वागादींद्रियद्वारा जीवसंसृतिकारणभूतं प्र-
पंचोद्भवमाह साईश्चतुर्भिः स एषः अपरोक्षः जीवयतीति जीवः परमेश्वरः अपरोक्षत्वे हेतुः विवरेषु आधारादिच-
क्रेषु प्रातिर्विप्रसूतिरभिव्यक्तिर्यस्य सः तामेवाभिव्यक्तिमाह घोषेणेति घोषेण पराख्येन नादवता प्राणेन सह गु-
हां आधारचक्रं प्रविष्टः सन् मनोमयं सूक्ष्मं रूपं पश्यंत्याख्यं मध्यमाख्यं च मणिपूरकचक्रे विशुद्धिचक्रे च उपेत्य प्राप्य
वक्त्रे मात्रा ह्रस्वादिः स्वर उदात्तादिः वर्णः अकारादिरित्येवं वैखर्याख्यः स्थविष्ठः अतिस्थूलो नानावेदशाखात्मको भवति

कुतः वियोगेनतीव्रोदुःसहः आधिर्यासांताः अत्रहेतुःमयिविगाढेनअतिदृढेनभावेनप्रेम्णाअनुरक्तानिसंसक्तानिचि
त्तानियासांताः १० तीव्राधित्वंव्यनक्ति तास्ताइतिमयासहताएवक्षपाःरात्रयःक्षणार्द्धवन्नीतास्ताएवपुनःमयाहीनास्ता
सांकल्पसमाबभूवुः कथंभूताःतासांवाचामगोचराइत्यर्थः ११ किंच एवंतीव्राधयस्ताःमोहमिषेणसमाधिंप्राप्ताइत्या
ह ताइति मयिअनुषंगेणआसक्त्याबद्धाधियोयाभिस्ताःस्वमात्मानंस्वदेहं अदः दूरस्थंइदंसंनिहितंचनाविदन् यद्वास्वं

विगाढभावेननमेवियोगतीव्राधयोऽन्यंददृशुःसुखाय १० तास्ताःक्षपाःप्रेष्ठतमेननीतामयैव
वृंदावनगोचरेण क्षणार्द्धवत्ताःपुनरंगतासांहीनामयाकल्पसमाबभूवुः ११ तानाविदन्मय्य
नुषंगबद्धधियःस्वमात्मानमदस्तथेदं यथासमाधौमुनयोऽब्धितोयेनद्यःप्रविष्टाइवनामरूपे
१२ मत्कामारमणंजारमस्वरूपविदोऽबलाःब्रह्ममांपरमंप्रापुःसंगाच्छतसहस्रशः १३ त
स्मात्त्वमुद्धवोत्सृज्यचोदनांप्रतिचोदनांप्रवृत्तंचनिवृत्तंचश्रोतव्यंश्रुतमेवच १४ मामेकमे
वशरणमात्मानंसर्वदेहिनांयाहिसर्वात्मभावेनमयास्याह्यकुतोभयः १५ ॥ पतिपुत्रादिममा
तास्पदंआत्मानंअहंकारास्पदंदेहंअदःपरंलोकंइमंलोकंचनाविदन्निति यथामुनयःसमाधौनामरूपेनविदुःत
द्वत् किंतु अब्धितोयेनद्यइवमयिप्रविष्टाइत्यन्वयः १२ एवंताअबलाःकेवलंमत्कामाःअस्वरूपविदःस्वरूपंतुन
जानंतितथापिसत्संगात् जारंब्रह्मजारबुद्धिवेद्यमपिब्रह्मस्वरूपमेववमांपरमंप्रापुरित्यर्थः १३ यस्मादेवंभूतोमद्भज
नप्रभावःतस्मात्त्वंचोदनांश्रुतिंप्रतिचोदनांस्मृतिंच यद्वा विधिंचनिषेधंचउत्सृज्यमांशरणंयाहि १४ मयैवाकुतो

ऋक्षो जांबवान् गृध्रो जटायुः वणिक्पथस्तुलाधारः व्याधः धर्मव्याधः यज्ञपत्न्यः दीक्षितनार्यः ६ तेषां सत्संगव्यतिरि-
क्तसाधनांतराभावमाह तइति न अधीताः श्रुतिगणा यैः तदर्थं च न उपासिता महत्तमा यैः ते तथा किंच अव्रतातप्ततप-
सः न विद्यते व्रतानि येषां न तप्तानि तपांसि यैः ते च ते च तथा सत्संगादिति सद्भिः संगो नाम मय्येव संग इत्यभिप्रेत्योक्तं
यद्वा स्वसंगस्यापि सत्संगत्वं विवक्ष्यते स्वस्यापि सत्वात् यद्वा मदीयसंगादित्यर्थः ७ तत्र वृत्रादीनां भवतु नाम कथंचित्सा-
धनांतरं गोपीप्रभृतीनां तु नान्यदस्तीत्याह केवलेनेति सत्संगलब्धेन केवलेनैव भावेन प्रीत्या नगाः यमलार्जुनादयः

सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथाऽपरे ६
तेनाधीतश्रुतिगणा नोपासितमहत्तमाः अव्रतातप्ततपसः सत्संगान्मामुपागताः ७ केवलेन
हि भावेन गोप्यो गावो नगा मृगाः येऽन्ये मूढधियो नागाः सिद्धा मामीयुरंजसा ८ यं न योगेन सां-
ख्येन दानव्रततपोऽध्वरैः व्याख्यास्वाध्यायसन्यासैः प्राप्नुयाद्यत्नवानपि ९ रामेण सार्द्धं मथुरां
प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ॥ ८ नागाः कालियादयः यद्वा तदानींतनानां सर्वतरुगुल्मादीना-
मपि भगवति भावोस्तीति गम्यते तदुक्तं भगवतैव अहो अमी देववरामरार्चितं पादांबुजं ते सुमनःफलार्हणं नमंत्युपादाय
शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतमित्यादि सिद्धाः कृतार्थाः संतः ईयुः प्रापुः ८ स्वप्राप्तेर्दुर्लभतामाह यमिति यो-
गादिभिः कृतप्रयत्नोपि यं मां न प्राप्नुयात् तं मामीयुरिति पूर्वेणान्वयः अत्र च प्रथमं या गोप्यः पश्चाद्या वा श्रीकृष्णेन सह
संगताः ते संतः तत्संगोऽन्येषां सत्संगः तेन च तेषां भक्तिरिति ज्ञातव्यं ९ गोपीनां भावं प्रपंचयति रामेणेति चतुर्भिः श्वाफल्कि-

इदानीं सांख्ययोगादीनि साधनांतरसापेक्षाणि सव्यभिचाराणि च सत्संगस्तु स्वतंत्र एव समर्थः फलाव्यभिचारी चेति वर्णयितुमाह अथेति एतद्वक्ष्यमाणं परमं गुह्यं अतः शृण्विति अर्थः ४८ ॥ इति श्रीभागवते एकादशे टीकायां एकादशोऽध्यायः ११ द्वादशे साधुसंगस्य महिमा वर्णितः पुरा कर्माननुष्ठाने तत्त्यागव्यवस्था च ततः परं १ नरोधयति न वशीकरोति योगः आसनप्राणायामादिः सांख्यं तत्त्वानां विवेकः धर्मः सामान्यतोऽहिंसादिः स्वाध्यायो वेदजपः तपः

अथैतत्परमं गुह्यं शृण्वतो यदुनंदन सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखा ४९ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे एकादशोऽध्यायः ११ श्रीभगवानुवाच नरोधयति मां योगो न सांख्यं धर्म एव च न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा १ व्रतानि यज्ञश्छंदांसि तीर्थानि नियमा यमाः यथाऽवरुंधे सत्संगः सर्वसंगापहो हि मां २ सत्संगेन हि दैतेया यातुधाना मृगाः खगाः गंधर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ३ विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोंत्यजाः रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ ४ वहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः वृषपर्वा वलिर्वाणो मयश्चाथ विभीषणः ५ ॥ १ ॥ ॥



कर्मादित्यागः सन्न्यासः इष्टापूर्त्तं इष्टं च पूर्त्तं च तत्रेष्टमग्निहोत्रादि पूर्त्तं कूपारामादिनिर्माणं दक्षिणाशब्देन सामान्यतो दानं लक्ष्यते १ व्रतानि एकादश्युपवासादीनि यज्ञः देवपूजा छंदांसि रहस्यमंत्राः अवरुंधे वशीकरोति । २ यातुधानाः राक्षसाः ३ ४ त्वाष्ट्रो वृत्रः कायाधवः प्रह्लादः ५ ॥ ॥

इदानीमेकादशपूजाधिष्ठानान्याह सूर्यइतिहेभद्र ४२ अधिष्ठानभेदेनपूजासाधनान्याह सूर्यइति त्रिभिः त्रय्याविद्ययासूक्तैरुपस्थानादिनाहे अग्नहेउद्धवयवसादिनातृणादिना ४३ वंधुसत्कृत्यावंधुंवत्संमानेन हृदिखेहृदयाकाशे मुख्यधियाप्राणदृष्ट्यातोयेतोयादिभिर्द्रव्यैस्तर्पणादिना ४४ स्थंडिलेभुविमंत्रहृदयैः रहस्यमंत्रन्यासैः ४५ सर्वाधिष्ठानेषुध्येयमाह धिष्ण्येष्विति इतिअनेनमंत्रप्रकारेण एवुधिष्ण्येषु ४६ उक्तायाः भक्तेः फलमाह इष्टापूर्तेनेतिसद्भ

सूर्योऽग्निर्ब्राह्मणोगावोवैष्णवः खंमरुज्जलं भूरात्मासर्वभूतानिभद्रपूजापदानिमे ४२ सूर्ये तुविद्ययात्रय्याहविषाऽग्नौयजेतमां आतिथ्येनतुविप्राग्र्येगोष्वंगयवसादिना ४३ वैष्णवेवंधुसत्कृत्याहृदिखेध्याननिष्ठया वायौमुख्यधियातोयेद्रव्यैस्तोयपुरस्कृतैः ४४ स्थंडिलेमंत्रहृदयैर्भोगैरात्मानमात्मनि क्षेत्रज्ञंसर्वभूतेषुसमत्वेनयजेतमां ४५ धिष्ण्येष्वेष्विति मद्रूपंशंखचक्रगदांबुजैः युक्तंचतुर्भुजंशांतंध्यायन्नर्चेत्समाहितः ४६ इष्टापूर्तेनमामेवंयोयजेतसमाहितः लभतेमयिसद्भक्तिंमत्स्मृतिंसाधुसेवया ४७ प्रायेणभक्तियोगेनसत्संगेनविनोद्धव नोपायोविद्यतेसध्र्यङ्प्रायणंहिसतामहं ४८ ॥ ॥ किंदृढांभक्तिम् अस्याभक्तेरंतरंगसाधनमाह इत्यंमत्स्मृतिः साधुसेवयाभवति यद्वास्मृतिर्ज्ञानं ततश्चदृढभक्तिमतः पुंसः साधुसेवयामत्ज्ञानंभवतीत्यर्थः ४७ ज्ञानभक्तिमार्गावुक्तौतत्रज्ञानमार्गादपिभक्तिमार्गः श्रेष्ठइत्याहप्रायेणेतिसत्संगेनयोभक्तियोगः तेनविनोपायः संसारतरणेनविद्यतेसत्संगेनेत्यत्रहेतुमाह हियस्मात् सतामहंप्रायणंप्रकृष्टमयनंआश्रयः अतः सत्संगोमय्यंतरंगइत्यर्थः

॥११।१०।१४॥

सर्वलाभोपहरणं सर्वस्य लब्धस्य समर्पणं ३५ पर्वाणि जन्माष्टम्यादीनि तदनुमोदनं ३६ वलिविधानं पुष्पोपहारादिसमर्पणं सर्ववार्षिकपर्वसु चातुर्मास्यैकादश्यादिषु विशेषतः ३७ उद्यानादिकरणे सामर्थ्ये सति स्वतः असति चान्यैः संभूयोद्यमः उद्यानं पुष्पप्रधानं उपवनं फलप्रधानवनं आक्रीडं क्रीडास्थानं ३८ संमार्जनं रजसोपाकरणं उपलेपः गोमयोदकादिभिरालेपनं सेकः तैरेव प्रोक्षणं मंडलवर्त्तनं सर्वतोभद्रादिकरणं मह्यं मम ३९ मे मह्यं निवेदिते दीपे अवलोकं न कुर्यात् तद्दोषपरिहारार्थेव त्रिदूयदीपं कुर्यात् स्वयमन्येन वा निवेदितं न स्वीकुर्यात् एतच्च साधारणस्थावरविषयं रागप्राप्तविषयं वा भक्तपातुग्राह्यमेवष

मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव सर्वलाभोपहरणं दास्येनात्मनिवेदनं ३५ मज्जन्मकर्मकथनं मम पर्वानुमोदनं गीततांडववादित्रगोष्ठीभिर्मद्गृहोत्सवः ३६ यात्रा वलिविधानं च सर्ववार्षिकपर्वसु वैदिकी तांत्रिकी दीक्षा मदीयव्रतधारणं ३७ ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः उद्यानोपवनाक्रीडपुरमंदिरकर्मणि ३८ संमार्जनोपलेपाभ्यां सेकमंडलवर्त्तनैः गृहशुश्रूषणं मह्यं दासवद्यदमायया ३९ अमानित्वमदंभित्वं कृतस्याऽपरिकीर्त्तनं अपि दीपावलोकं मे नोपयुंज्यान्निवेदितं ४० यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः तत्तन्निवेदयेन्मह्यं तदानंत्याय कल्पते ४१

द्विर्मासोपवासैस्तु यत्फलं परिकीर्त्तितं विष्णोर्नैवेद्यसिक्थेन पुण्यं तद्भुंजतां कलौ हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युत इत्यादिवचनेभ्यः यद्वा अन्यस्मै निवेदितं मे नोपयुंज्यात् मह्यं न निवेदयेदित्यर्थः विष्णोर्निवेदितान्नेन यष्टव्यं देवतांतरं पितृभ्यश्चैव तद्देयं तदानंत्याय कल्पते पितृशेषं तु यो दद्याद्धरये परमा

कामैरक्षुभितचित्तः दांतः संयतबाह्येंद्रियः मृदुः अकठिनचित्तः शुचिः सदाचारः अकिंचनः अपरिग्रहः अनीहः दृष्टक्रियाशून्यः मितभुक् लब्धाहारः शांतः नियतांतःकरणः स्थिरः स्वधर्मे मच्छरणः मदेकाश्रयः मुनिः मननशीलः ३० अप्रमत्तः सावधानः गभीरात्मा निर्विकारः धृतिमान् विपद्यप्यकृपणः जितषड्गुणः क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः एते जिता येन सः अमानी न मानाकांक्षी अन्येभ्यो मानदः कल्यः परबोधने दक्षः मैत्रः अवंचकः कारुणिकः करुणयैव प्रवर्त्तमानः न दृष्टलोभेन कविः सम्यक्ज्ञानी ३१ किंच मया वेदरूपेणादिष्टानपि स्वधर्मान् संत्यज्य यो मां भजेत

कामैरहतधीर्दांतो मृदुः शुचिरकिंचनः अनीहो मितभुक्शांतः स्थिरो मच्छरणो मुनिः ३० अप्रमत्तो गभीरात्मा धृतिमान्जितषड्गुणः अमानी मानदः कल्यो मैत्रः कारुणिकः कविः ३१ आज्ञायैवं गुणान्दोषान्मयादिष्टानपि स्वकान् धर्मान्संत्यज्य यः सर्वान्मां भजेत स सत्तमः ३२ ज्ञात्वाऽज्ञात्वाथ ये वै मां यावान्यश्चास्मि यादृशः भजंत्यनन्यभावेन ते मे भक्ततमा मताः ३३ मल्लिंगमद्भक्तजनदर्शनस्पर्शनार्चनं परिचर्या स्तुतिः प्रह्वगुणकर्मानुकीर्तनं ३४

॥ सोऽपि एवं पूर्वोक्तवत् सत्तमः किमज्ञानात् नास्तिक्याद्वा न धर्माचरणे सत्वशुद्ध्यादीन् गुणान् विपक्षे दोषांश्च आज्ञाय ज्ञात्वाऽपि मद्ध्यानविक्षेपकतया मद्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयेनैव धर्मान् संत्यज्य यद्वा भक्तिदार्ढ्येन निवृत्ताधिकारतया संत्यज्य अथवा विद्धैकादश्युपवासः एकादश्यनुपवासो निवेद्यश्राद्धादयो ये भक्तिविरुद्धा धर्मास्तान् संत्यजेदित्यर्थः ३२ किंच यावान् देशकालापरिच्छिन्नः यश्च सर्वात्मा यादृशः सच्चिदानंदादिरूपः तं मां ज्ञात्वा अज्ञात्वापि यद्वा विशेषतः न पुनः पुनर्ज्ञात्वा एकांतभावेन ये भजंती

आचरन्नसेवमानः २४ ततश्चानेनप्रकारेणमयिसत्संगेनलब्धयाभक्त्यामद्भक्तः मांउपासिताध्याता भवति सचध्यानशीलः सद्भिर्दर्शितंवैनिश्चितंसुखेनैवममपदंस्वरूपंप्राप्नोति २५ सत्संगलब्धयाभक्त्येत्युक्तंतत्रसतांभक्तेश्चविशेषंपृच्छति साधुरिति साधवःस्वस्वमतिपरिकल्पिताःसंतिबहवःतत्वतुकीदृशःसंमतःभक्तिरपिबहुविधालोकेकीदृशीपुनस्त्वय्युपयुज्येत सद्भिश्चनारदादिभिरादृता एतच्चकथ्यतां २६ इदंचातिगुह्यंत्वयैववक्तव्य

मदर्थेधर्मकामार्थानाचरन्मदपाश्रयः लभतेनिश्चलांभक्तिंमय्युद्धवसनातने २४ सत्संगलब्धयाभक्त्यामयिमांसउपासिता सवैमेदर्शितंसद्भिरंजसाविंदतेपदं २५ श्रीउद्धवउवाच साधुस्तवोत्तमश्लोकमतःकीदृग्विधःप्रभो भक्तिस्त्वय्युपयुज्येतकीदृशीसद्भिरादृता २६ एतन्मेपुरुषाध्यक्षलोकाध्यक्षजगत्प्रभो प्रणतायाऽनुरक्तायप्रपन्नायचकथ्यतां २७ त्वंब्रह्मपरमंव्योमपुरुषःप्रकृतेःपरः अवतीर्णोऽसिभगवन्स्वेच्छोपात्तपृथग्वपुः २८ श्रीभगवानुवाच कृपालुरकृतद्रोहस्तितिक्षुःसर्वदेहिनां सत्यसारोऽनवद्यात्मासमःसर्वोपकारकः २९

मित्यैश्वर्यमाविष्करोति हेपुरुषाध्यक्षेत्यादिना ब्रह्मादिनियंतः २७ अत्रहेतुःत्वमिति व्योमवदसंगःयतःप्रकृतेःपरःस्वेषांभक्तानामिच्छयाऽपात्तंपृथक्परिमितंवपुर्येनसः २८ तत्रत्रिंशल्लक्षणैःसाधुंनिरूपयति कृपालुरितिपंचभिः कृपालुःपरदुःखासहिष्णुः सर्वदेहिनांकेषांचिदपिअकृतद्रोहः तितिक्षुःक्षमावान् सत्यंसारःस्थिरंबलंवायस्यसः अनवद्यात्माअसूयादिरहितःसुखदुःखयोःसमः यथाशक्तिसर्वेषामुपकारकः २९॥

हर्षविषादरहितः ३१

एतदेवान्यार्थैर्निदर्शनैः प्रपंचयति गामिति दुह्यत इति दोहः पयः दुग्धो दोहो नो यस्याः तां अयशस्यां असतीं भार्यां कामस्यूतां देहं पराधीनं प्रतिक्षणं दुःखहेतुं असत्प्रजां दृष्टादृष्टसाधनशून्यं पुत्रं अतीर्थीकृतं आगते पात्रे अदत्तं वित्तं दुष्कीर्तिं दुरितापादकं अंग हे उद्धव दुःखानंतरं दुःखमेव यः स्यात् सः रक्षति १९ मया हीनां वाचमित्युक्तं विवृणोति यस्यामेजगतः शोधकं चरित्रं न स्यात् किं तत् अस्य विश्वस्य स्थित्यादिरूपं तद्धेतुरित्यर्थः लीलावतारैरुईप्सितं जगतः

गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च वित्तं त्वऽतीर्थीकृतमंग वाचं हीनां ।

मया रक्षति दुःखदुःखी १९ यस्यां न मे पावनमंग कर्म स्थित्युद्भवप्राणनिरोधमस्य ॥

लीलाऽवतारेप्सितजन्म वा स्याद्वंध्यां गिरं तां बिभृयान्न धीरः २० एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि उपारमेत विरजं मनो मय्यऽर्प्य सर्वगे २१ यद्यऽनीशो धारयितुं मनो ब्रह्मणि निश्चलं मयि सर्वाणि कर्माणि निरपेक्षः समाचर २२ श्रद्धालुर्मे कथाः शृण्वन्सुभद्रा लोकपावनीः गायन्ननुस्मरन्कर्म जन्म चाऽभिनयन्मुहुः २३॥ ६ ॥ ❋ ॥ ६ ॥

प्रेमास्पदं श्रीरामकृष्णादिजन्म वा न स्यात् तां निष्फलां गिरं धीरो धीमान्न धारयेत् २० उक्तं ज्ञानमार्गमुपसंहरति एवं निश्चित्य विचारेणात्मनि नानात्वभ्रमं देहाद्यध्यासं निरस्य निर्मलं मनो मयि सर्वगे परिपूर्णे समर्प्य संधार्य उपारमेत् न शास्त्रपाठितमात्रेणेत्यर्थः २१ यद्यनीशः असक्तः तर्हि आस्तामिदं मद्भक्तैव वक्तृनार्थो भविष्यसीत्याह मयीति २२ मदर्पणेन कर्मभिर्विशुद्धसत्वस्यांतरंगां भक्तिमाह श्रद्धालुरिति द्वाभ्यां अभिनयन्स्वयमनुकुर्वन् २३॥

दयं विहरेदित्यस्योत्तरत्वेन वैलक्षण्यांतरमाह यस्यस्युरिति तद्गुणैः देहगुणैः संकल्पशून्याभिः प्राणादिवृत्तिभिर्वि
हरन्मुक्त इत्यर्थः १४ एवं तावद्बद्धमुक्तयोः स्वसंवेद्यमेव वैलक्षण्यमुक्तं इदानीं कैर्वा ज्ञायेत लक्षणैरित्यस्योत्तरतया प
रैरपि सुज्ञेयं वैलक्षण्यमाह यस्यात्मेति त्रिभिः हिंस्रैर्दुर्जनैरन्यैर्वा प्राणिभिः यस्यात्मा देहः पीड्यते यद्दृच्छया येन के।
नापि क्वचित् किंचिदर्च्यते वा सः बुधस्तेन तत्र न व्यतिक्रियते नातिविक्रियत इत्यर्थः तदुक्तं याज्ञवल्क्येन यः कंटकैर्वितु
दति चंदनैर्यश्च लिंपति अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च नस्य चेति १५ किंच साध्वसाधु वा कुर्वतो वदतो वाज।

यस्यस्युर्वीतसंकल्पाः प्राणेंद्रियमनोधियां वृत्तयः स विनिर्मुक्तो देहस्थोपि हि तद्गुणैः १४ यस्या
त्मा हिंस्यते हिंस्रैर्येन किंचिद्यदृच्छया अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः १५ न स्तुवीत न
निंदेत कुर्वतः साध्वसाधु वा वदतो गुणदोषाभ्यां वर्जितः समदृग्मुनिः १६ न कुर्यान्न वदेत्किंचि
न्न ध्यायेत्साध्वसाधु वा आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः १७ शब्दब्रह्मणि निष्णातो न
निष्णायात्परे यदि श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः १८॥ न स्तुवीत न च निंदेत् यो लौकि
कव्यवहारे विमुखः स मुक्त इत्यर्थः १६ अपि च न कुर्यादिति यो देहिकेपि कर्मण्युदासीनः स मुक्त इतरो बद्ध इत्य
र्थः एतान्येव सर्वाणि मुमुक्षोः साधनानि ज्ञातव्यानि १७ यस्तु केवलं शब्दब्रह्मण्यभिज्ञः पांडित्यमात्रश्लाघी न तूक्तैः
साधनैस्तदर्थनिष्ठो भवेत् तं निंदति शब्दब्रह्मणि निष्णातः अर्थतः पारंगतोपि परे ब्रह्मणि न निष्णायात् ध्या
नाद्यभियोगं न कुर्यात्तस्य शास्त्रश्रमः श्रमैकफलः न तु पुरुषार्थपर्यवसायी अधेनुं चिरप्रसूतां १८॥ ❋ ॥

अत्र हेतुत्वेन वैलक्षण्यांतरमाह द्वाभ्यां इंद्रियैरिंद्रियार्थेषु गृह्यमाणेष्वपि यस्तु विद्वान्स नाहंकुर्यात् अहं गृह्णामीति म
तिं न कुर्यादित्यर्थः कुतः गुणैर्गुणेषु गृह्यमाणेषु अत एव अविक्रियः रागादिशून्यः तदुक्तं गीतासु तत्ववित्तु महाबाहो गु
णकर्मविभागयोः गुणा गुणेषु वर्त्तंत इति मत्वा न सज्जत इति ९ अबुधस्तु पूर्वकर्माधीनेऽस्मिंश्छरीरे वर्त्तमानः गुणैरिंद्रिये
र्निर्मितेन कर्म्मणा तत्र देहादौ निबध्यते कुतः कर्त्ताऽस्मीत्यहंकारेण तदुक्तं तत्रैव प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः
अहंकारविमूढात्माऽकर्त्ताऽहमिति मन्यत इति एतैस्त्रिभिः श्लोकैः कथं वर्तेत त्यस्य प्रश्नस्य सुखदुःखशून्यो निरभिमान।

इंद्रियैरिंद्रियार्थेषु गुणैरपि गुणेषु च गृह्यमाणेष्वहंकुर्यान्न विद्वान्यस्त्वविक्रियः ९ दैवाधी।
नेशरीरेस्मिन्गुणभाव्येन कर्म्मणा वर्त्तमानोबुधस्तत्र कर्त्ताऽस्मीति निबध्यते १० एवं विरक्तः।
शयनआसनाटनमज्जने दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ११ न तथा बध्यते विद्वांस्तत्र
तत्राऽदयन्गुणान् प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः १२ वैशारद्येक्षयाऽसंगशितया
छिन्नसंशयः प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्त्तते १३॥ स्वदेहे वर्त्तेत इत्युत्तरमुक्तं भवति १० वैलक्ष
ण्यांतरं वदन् किं भुंजीतेत्यादिप्रश्नोत्तरमाह एवमिति त्रिभिः अन्यगतमेव कर्म मां बध्नातीत्येवं विरक्तो विद्वान् ११ तथाऽपि
अविद्वानिव शयनासनादिषु न बध्यते कुतः तत्र तत्र विषयेषु गुणान् इंद्रियाणि आदयन् भोजयन् तत्साक्षित्वेन वर्त्तमा
न भुंक्ते स्वयमदन् एतदेव कुतस्तत्राह प्रकृतिस्थोऽपीति सार्द्धेन यथा खं सर्वत्र स्थितमपि न सज्जते तथा सविता जले प्र
तिबिंबितोऽपि यथाऽनिलः सर्वत्र संचरन्नपि तद्वत् १२ असंगेन वैराग्येण शितया तीक्ष्णया छिन्नाः संशया असंभावना

सुपर्णौ वृक्षात्पक्षिणाविव देहात्पृथग्भूतौ सदृशौ चिद्रूपत्वात् सखायौ अवियोगादेकमत्याच्च यदृच्छया अनिरुक्त-
यामायया वृक्षमतः इति वृक्षो देहः ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रतीतिश्रुतेः ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्रा-
हुरव्ययम् छंदांसि यस्य पर्णानि यस्तं वेद स वेदविदिति स्मृतेश्च तस्मिन्कृतनीडं निकेतनं हृदयरूपं याभ्यां तौ तयोर्मध्ये
एको जीवः पिप्पलान्नं पिप्पलोऽश्वत्थः देहस्तस्मिन्नदनीयं कर्मफलमित्यर्थः खादति भक्षयति अन्यः ईश्वरः निरन्नः अभो-
क्तापि निजानंदतृप्तो बलेन ज्ञानादिशक्त्या भूयान् अधिकः श्रुतिश्च द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते

सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे एकस्तयोः खादति पिप्पलान्नमन्यो नि-
रन्नोऽपि बलेन भूयान् ६ आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः योऽविद्यया यु-
क् स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ७ देहस्थोऽपि न देहस्थो विद्वान्स्वप्नाद्यथोत्थितः अ-
देहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग्यथा ८॥

११ तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीति
६ बलाधिक्यमेवाह आत्मानमिति अतः योऽविद्यया युक् युक्तः स तु नित्यबद्धः अनादिबद्धः यस्तु विद्याप्रधानः स तु नि-
त्यमुक्तः मायाया अनावरकत्वात् आश्रयाव्यामोहकत्वाच्च ७ इदानीं बद्धमुक्तजीवानामेव मिथो वैलक्षण्यमाह
देहस्थोऽपीति दशभिः विद्वान् मुक्तः संस्कारवशेन देहस्थोऽपि देहस्थो न भवति यथा स्वप्नादुत्थितः स्मर्यमा-
णे स्वप्नदेहे स्थितोऽपि तत्रस्थो न भवति तद्गतसुखदुःखाद्यभावात् तद्वत् तथा च वस्तुतः अदेहस्थोऽपि कुमतिः अवि-
द्वान् देहस्थः तन्निमित्तसुखदुःखभाक् यथा स्वप्नदेहगत इति ८॥

त्वनित्यत्वेन स्यातां न आद्ये अनादी अतोयावदविद्यां प्रवर्त्तयामि तावद्बंधः यदा विद्यां ददामि तदा मोक्षः स्फुरतीत्यर्थः
तथा च स्कंदपुराणे बंधको भवपाशेन भवपाशाच्च मोचकः कैवल्यदः परंब्रह्म विष्णुरेव सनातन इति ३ तत्र शरीरिणा
मिति बहुवचननिर्देशाद्विषयभेदेनाऽविरोध उक्त इति भ्रांतिं व्यावर्त्तयन्बंधमोक्षव्यवस्थामुपपादयति एकस्यैवेति
तर्हि किमात्माभेदात्तवापि बंधः नहीत्याह अस्य जीवस्यैवेति नन्वात्माभेदे जीवो नाम कोन्योऽस्ति एथक्कथं च बंधमोक्ष
सुखदुःखादिव्यवस्था तत्राह ममांऽशस्येति अयं भावः यथैकस्यापि चंद्रादेर्जलाद्युपाधिनां विंबप्रतिविंबरूपोभेदः य
था च तत्र जलकृताः कंपादयः प्रतिविंबस्यैव तथा च तत्र प्रतिविंबानामुपाधिभेदेन भेदादेकस्मिन्नुदकुंभे भग्नेता

मोक्षबंधकरी आद्ये मायया मे विनिर्मिते ३ एकस्यैव ममांशस्य जीवस्यैव महामते बंधोऽ
स्याविद्ययाऽनादिर्विद्यया च तथेतरः ४ अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते विरुद्धधर्मि
णो स्तात स्थितयोरेकधर्मिणि ५॥

दृशतप्रतिविंबस्यैव विवेकं नान्यगतस्य तथाऽविद्यायां प्रतिविंबितस्य
मदंशस्य जीवस्यैव तत्कृतो बंधः तस्य चोपाधितो भेदान्नाव्यवस्थेति तथा चाहुः यथैकस्मिन्घटाकाशे रजोधूमादिभि
र्युते न सर्वे संप्रयुज्यंते तथा जीवाः सुखादिभिरिति एतच्चाऽतिरहस्यं स्वबुद्ध्या निश्चेतव्यमिति संबोधयति हे महामते इ
तरो मोक्षः ४ तदेवं व्यवस्थामुपपाद्य कथं वर्त्तेतेत्यादि वैलक्षण्यप्रश्नस्योत्तरमाह अथेति तच्च वैलक्षण्यं द्विविधं जीवे
श्वरयोरेकं जीवानां चैकं तत्र जीवेश्वरयोर्वैलक्षण्यमाह विरुद्धधर्म्मिणोरिति सार्द्धद्वयेन शोकानंदधर्मवतोः एकस्मि
न्धर्मिणि शरीरे नियम्यानियंतृत्वेन स्थितयोः ५ ॥ ५ ॥ ५ ॥ ५ ॥ ॥ ५ ॥ ५ ॥ ५ ॥ ५ ५ ५ ॥

॥ गीकार्यंस्यात् तत्रमेभ्रमोभवतीत्याह नित्यवद्धइति ३७ ॥ इतिश्रीभागवतेएकादशस्कंधेटीकायांदशमोऽध्या
यः १० एकादशेतुवद्धानांमुक्तानांचाथलक्षणंसाधूनांचतथाभक्तेर्लक्षणंहरिणेरितं १ नित्यवद्धोनित्यमुक्तएकएवे
तिमेभ्रमइतियदुक्तं तत्किंवस्तुतोविरोधः प्रतीतितोवानाद्यः वंधमोक्षयोर्वास्तवत्वाभावादित्याह वद्धोमुक्तइतिद्वाभ्यां
आत्मावद्धोमुक्तश्चमेगुणतः मदधीनसत्वादिगुणोपाधितः नतुवस्तुतः नन्वौपाधिकत्वेऽपितंडुलपाकादिवद्वास्तवत्वं
किंनस्यात् तत्राह गुणस्यमायामूलत्वाद्वंधनंनास्ति अतएवमोक्षश्चनास्तीति ननुकथंसर्वशास्त्रविरुद्धमुच्यते तत्राह।

नित्यमुक्तोनित्यवद्धएकएवेतिमेभ्रमः ३७ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभा
गवदुद्धवसंवादेदशमोऽध्यायः १० श्रीभगवानुवाच वद्धोमुक्तइतिव्याख्यागुणतोमेनवस्तुतः ॥
गुणस्यमायामूलत्वान्नमेमोक्षोनवंधनं १ शोकमोहौसुखंदुःखंदेहोत्पत्तिश्चमाययास्वप्नोयथा
ऽत्मनःख्यातिःसंसृतिर्नतुवास्तवी २ विद्याविद्येममतनूविद्ध्युद्धवशरीरिणां ॥ ((इतिमेव्याख्येतिएवंमत्त
तोनिर्णयः अलमतिकुतर्कैरित्यर्थः अथवैवमन्वयः आत्मावद्धोमुक्तइतियाव्याख्याउक्तिः सामेगुणतः मद्गुणपारतंत्र्या
त् अत्रहेतुत्वेनगुणनियंतरिस्वस्मिंस्तद्व्यतिरेकमाह अतएवनमेवंधनंमोक्षोवेतिअन्यस्तमानं १ एवंकारणभूतगुणानां
मायामयत्वात्तत्कार्यसंसृतिर्माययेतिप्रपंचयति शोकमोहाविति यथास्वप्नः आत्मनःबुद्धेरेवख्यातिर्विवर्त्तः तद्वत् २ अ
तोवस्तुतोविरोधस्तावन्नास्ति प्रतीतिस्त्वौपाधिकीघटतइत्याह विद्याविद्येइति नन्वेतेमोक्षवंधाविवाभ्यामितितनूशक्ती
कुतःममास्ययाविनिर्मितेमायावृत्तिरूपत्वात् वंधमोक्षकरीत्येकवचनंद्विवचनार्थे ननुतत्कार्यत्वेवंधमोक्षयोरनादि

यच्चगूढमभिप्रेतंप्रवृत्तिरेवश्रेयसीतितत्राह यएतदितिएततगुणवैषम्यंतत्कृतंभोगंकर्मचेत्यर्थः उपासीरन्नसेवेरन्ते
लोकादीनामनित्यत्वाच्छुचाऽर्पिताः प्रोताः संतोमुह्यंति ३३ नकेवलमनित्यतामात्रंकिंतुमायामयत्वमपीत्याहका
लइति स्वभावोदेवत्वादिपरिणामहेतुः धर्मस्तद्भोगकारणंगुणव्यतिकरेमायाक्षोभेसतिमामेवप्राहुःनतुमत्तोनिरि
क्ताःसंति ३४ ततोनिवृत्तिरेवमुक्तिहेतुत्वाच्छ्रेयसीतिसिद्धं एवंतावदेकएवात्मातस्यचगुणकार्यदेहसंबंधकृतःसंसारः
आत्मज्ञानाच्चमुक्तिरित्युक्तंविलक्षणः स्थूलसूक्ष्मादित्यादिना तदेवचमतांतरनिरासेनदृढीकृतंअथैषामित्यादिना तत्रव

यावदस्याऽस्वतंत्रत्वंतावदीश्वरतोभयं यएतत्समुपासीरंस्तेमुह्यंतिशुचाऽर्पिताः ३३ कालआ
त्माऽगमोलोकःस्वभावोधर्मएवच इतिमांबहुधाप्राहुर्गुणव्यतिकरेसति ३४ श्रीउद्धवउवा
च गुणेषुवर्त्तमानोऽपिदेहजेष्वनपावृतः गुणैर्नबध्यतेदेहीबध्यतेवाकथंविभो ३५ कथं
वर्तेतविहरेत्कैर्वाज्ञायेतलक्षणैः किंभुंजीतोतविसृजेत्शयीतासीतयातिवा ३६ एतदच्युतमे
ब्रूहिप्रश्नंप्रश्नविदांवर॥ पृच्छति गुणेष्विति अयमर्थः गुणेष्वसत्सुमुक्तिः सत्स्वेववा आद्येज्ञानसाधनाभावा
न्नमुक्तिः द्वितीयेचगुणेषुवर्त्तमानोऽपितत्कार्यदेहजेषुकर्मसुसुखादिषुचकथंनबध्येत तथापितैरावरणाभावदनावृत
त्वान्नबध्यतइतिचेत्तर्हिबंधोनसंभवतीत्याह अनपावृतःकथंबध्यतइति ३५ यदितुसत्त्वेवतदहंकारेणबध्यते न
न्निवृत्याचमुच्यतइतिमतंतर्हितत्कथंज्ञातव्यमितिपृच्छतिबद्धोमुक्तोवाकथंवर्त्तेतेत्यादि किंभुंजीतकथंभुंजीतेत्यर्थः
३६ एततएतद्विषयप्रश्नं किंच एकएवात्माऽनादिगुणसंबंधान्नित्यबद्धः मुक्तेर्जन्यत्वेऽनित्यत्वप्रसंगान्नित्यमुक्तइत्य

किंचदुष्टजनप्रलोभितोधनाद्यर्थंपशून्विधिनाहत्वाऽल्वणंदुःखंनरकंयातितदनुमतःस्थावरतांयाति २८ एवंकर्मसुप्र-
वृत्तस्यनसुखंनचनिवृत्तिरित्युपसंहरतिकर्माणीति २९ तथापिलोकानांनित्यत्वादमर्त्यधर्मत्वाच्चलोकपालानांसुखम-
स्तीतिचेत्तत्राहलोकानामितिद्वौपरार्द्धौपरमायुर्यस्यतस्यब्रह्मणोऽपितथाचश्रुतिः भीषाऽस्माद्वातःपवतेभीषोदेति
सूर्यः भीषाऽस्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमइति अतःप्रवृत्तिमार्गस्यैवमनर्थहेतुत्वाद्विरक्तस्यततोनिवृत्तिरेवयुक्ते-
तितात्पर्यार्थः ३० एतेनैवस्वपर्यायेश्वरत्वाविष्कारेणेश्वराभावांगीकारःपरित्यक्तः अन्यदपिप्रौढ्यापूर्वमंगीकृतंनिराकरो-

पशून्विधिनालभ्यप्रेतभूतगणान्यजन् नरकानवशोजंतुर्गत्वायात्युल्वणंतमः २८ का-
र्माणिदुःखोदर्काणिकुर्वन्देहेनतैःपुनः देहमाभजतेतत्रकिंसुखंमर्त्यधर्मिणः २९ लो-
कानांलोकपालानांयद्भयंकल्पजीविनां ब्रह्मणोऽपिभयंमत्तोद्विपरार्द्धपरायुषः ३० गु-
णाः सृजंतिकर्माणिगुणोऽनुसृजतेगुणान् जीवस्तुगुणसंयुक्तोभुंक्तेकर्मफलान्यसौ ३१
यावत्स्याद्गुणवैषम्यंतावन्नानात्वमात्मनः नानात्वमात्मनोयावत्पारतंत्र्यंतदैवहि ३२॥ ९

तिचतुर्भिः तत्रयदुक्तंकर्तृभोक्तृरूपएवात्मेतितन्निराकरोति गुणाइति गुणाइंद्रियाणिकर्माणिसृजंतिनत्वात्मा आ-
त्मैवेंद्रियाणिप्रवर्त्तयन्कर्माणिकरोतीतिचेन्नेत्याहगुणाइति गुणाःसत्वादिः गुणानिंद्रियाणि अनुसृजतेप्रवर्त्तयंति।
नत्वात्मा अतः आत्मनःकर्तृत्वंतावन्नास्तिभोक्तृत्वमप्यौपाधिकमित्याहजीवस्त्वितिगुणसंयुक्तइंद्रियादिसंयुक्तःकु-
तइत्यतआह असौतेषु अहंकारवानित्यर्थः ३१ यच्चोक्तमात्मनोनानात्वंतदप्यौपाधिकमित्याहयावत्स्यादितिगुणानां
वैषम्यं अहंकारादिकार्यरूपंनत्वात्मनएकत्वेकथंपारतंत्र्यमुक्तंकथंवालोकपालादीनामपितद्भयमित्युक्तंतत्राहनाना-

मुपार्जितमित्यर्थः त्रु॰ ३

वह्वींतरायावैगुण्यादिरूपाविघ्नायस्मिन् कामेसुखेतस्यभावः तत्वंतस्मात् कृषिर्यथाबहुविघ्नातद्वत्।
बहुसुखत्वेनश्रुतमपिनिष्फलं २१ विघ्नवैगुण्याद्यभावमंगीकृत्यापिनाशादुःखदुष्परिहरमित्याह अंतरा
येरितिपंचभिः निर्जितंसाधितम् २२ यज्ञैर्देवताइंद्रादिरूपाइष्ट्वा २३ स्वपुण्यैरूपचितेसर्वभोगसंपन्नेदेवी।
नांमध्येविहरत् गंधर्वैरुपगीयते २४ कामगेनइच्छयागच्छताविमानेन किंकिणीजालमालिनाक्षुद्रघं।

बह्वंतरायकामत्वात्कृषिवच्चापिनिष्फलं २१ अंतरायैरविहतोयदिधर्मःस्वनुष्ठितः
तेनापिनिर्जितंस्थानंयथागच्छतितच्छृणु २२ इष्ट्वेहदेवतायज्ञैः स्वर्लोकंयातियाज्ञिकः
भुंजीतदेववत्तत्रभोगान् दिव्यान्निजार्जितान् २३ स्वपुण्योपचितेशुभ्रेविमानउपगीयते गं
धर्वैर्विहरन्मध्येदेवीनांहृद्यवेषधृक् २४ स्त्रीभिःकामगयानेनकिंकिणीजालमालिना
क्रीडन्नवेदात्मपातंसुराक्रीडेषुनिर्वृतः २५ तावत्प्रमोदतेस्वर्गेयावत्पुण्यंसमाप्यते॥
क्षीणपुण्यःपतत्यर्वागनिच्छन्कालचालितः २६ यद्यऽधर्मरतःसंगादसतांवाऽजितेंद्रियः
कामात्माकृपणोलुब्धःस्त्रैणोभूतविहिंसकः २७॥ टिकासमूहशोभिनासहस्त्रीभिः।।

सुराक्रीडेषुनंदनादिषुक्रीडन्नात्मपातंनवेद २५ कालेनचालितःपातितः २६ प्रवृत्तिर्द्विविधा विध्यनुसारेण
काम्यकर्मणिवातद्वत्रघनेनाधर्मेवातत्रकाम्यप्रवृत्तेर्गतिरुक्ता अधर्मप्रवृत्तेर्गतिमाहयद्यीति यदिचेत्यन्वयः अ
जितेंद्रियत्वात्कामात्मा अतः कृपणः अतोलुब्धोभोगतृष्णाकुलः अतःस्त्रैणःस्त्रीलंपटः तदर्थंभूतविहिंसकः २७॥

तत्रतावत्तदुक्तमंगीकृत्यवैराग्योपपादनायप्रवृत्तिमार्गस्यानर्थहेतुत्वंप्रपंचयति एवमपीत्यादिनालोकानांलोकपाला
नामित्यतःप्राक्तनेनग्रंथेनऋग्हेउद्धवकालावयवतःसंवत्सरादिरूपात् १६ अत्रापीति स्वातंत्र्यपक्षेदुष्कर्मणोदुःखभो
गस्यवासंभवादित्यर्थः १७ ननुयेसम्यक्कर्मकर्तुंजानंतितेसुखिनएव येतुनजानंतितएवदुःखिनइतिचेत्तत्राहनेति
विदुषामपिक्वचित्सुखंनविद्यतेतथामूढानामपिदुःखंनविद्यते अतोवयंकर्मकुशलत्वात्सुखिनइतितेषांकेवलंवृथैवा

एवमप्यंगसर्वेषांदेहिनांदेहयोगतः कालावयवतःसंतिभावाजन्मादयोऽसकृत् १६ अत्रा
पिकर्मणांकर्तुरस्वातंत्र्यंचलक्ष्यते भोक्तुश्चदुःखसुखयोःकोन्वर्थोविवशंभजेत् १७ नदेहि
नांसुखंकिंचिद्विद्यतेविदुषामपि तथाचदुःखंमूढानांवृथाऽहंकरणपरं १८ यदिप्राप्तिंविघा
तंचजानंतिसुखदुःखयोः तेऽप्यद्धानविदुर्योगंमृत्युर्नप्रभवेद्यथा १९ कोन्वर्थःसुखयत्येनं
कामोवामृत्युरंतिके आघातंनीयमानस्यवध्यस्येवनतुष्टिदः २० श्रुतंचदृष्टवद्दुष्टंस्पर्द्धाऽसू
याऽत्ययव्ययैः ॥ ९(?)हंकारइत्यर्थः १८ अंगीकृत्याप्याह यदीति तंयोगंउपायंनविदुर्यथासाक्षान्मृत्यु॥
र्नप्रभवेत् १९ तथापियावज्जीवंसुखंभविष्यतीतिचेत् नेत्याह कोन्विति यतःअंतिकेवर्त्तमानोमृत्युर्नतुष्टिदःन
तुष्टिंददाति आघातंवधस्थानंप्रतिनीयमानस्यवध्यमानस्यस्रक्चंदनादिसुखंनभवेत् २० एवमस्मिन्लोकेसुखंनास्तीत्युक्त्वालो
कांतरेऽपितथैवेत्याह श्रुतमिति श्रुतंस्वर्गादितदपिदुष्टं स्पर्द्धापरसुखासहनं असूयापरगुणेदोषाविष्करणं अत्ययोनाशः
व्ययःपक्षयः तैर्दुष्टं यद्वा व्ययोनाशः अत्ययोऽन्यस्यातिशयः तदृष्ट्वातदप्राप्त्यादुःखमित्यर्थः किंच॥ ६॥ ६॥

एवंतावत्स्वप्रकाशज्ञानस्वरूपोनित्यएकएवात्मा कर्तृत्वादयश्च धर्मास्तस्यदेहोपाधिकाः तद्व्यतिरिक्तंचसर्व
मनित्यंमायामयंच अतः सर्वतोविरक्तः सन्नात्मज्ञानेनमुच्यतइत्युक्तं विलक्षणः स्थूलसूक्ष्मादित्यादिनातदेव
श्रुतिसमन्वयेननिर्णीतेऽप्यर्थेमतांतरविरोधेनसंदेहोमाभूदितितन्मतंनिराकर्तुमुद्भावयति अथेतिअ
यमन्येसे एषांजीवात्मनांकर्मकर्तॄणांसुखदुःखयोर्भोक्तॄणांचनानात्वमिति एवंहिजैमिनीयामन्यंते अहंप्र
त्ययविज्ञेयएवात्मासचप्रतिशरीरंभिन्नः कर्ताभोक्तृरूपश्चनतुतत्त्वरूपभूतोनिर्विकारएकः परमात्माऽस्तीति॥
यथाहुः अहंप्रत्ययविज्ञेयोज्ञातव्यः सर्वदैवहीति तथावैराग्यंचनसंभवति तथाहिभोगस्यानानामनित्य
त्वाद्वावैराग्यंभवेत् भोगकालस्यवातदुपायकर्मबोधकागमस्यवाभोक्तुरात्मनोवानत्वेतदस्तीत्याह अथनि

अथैषांकर्मकर्तॄणांभोक्तॄणांसुखदुःखयोः नानात्वमथनित्यत्वंलोककालागमात्मनां
१४ मन्यसेसर्वभावानांसंस्थाह्यौत्पत्तिकीयथा तत्तदाकृतिभेदेनजायतेभिद्यतेचधीः १५॥

त्यत्वंलोककालागमात्मनांमन्यसइति १४ नचसर्वभोग्यानांविच्छेदान्मायामयत्वाद्वावैराग्यंस्यादित्याहसर्वभावा
नांस्रक्चंदनादीनांसंस्थास्थितिः औत्पत्तिकीप्रवाहरूपेणनित्यातथाचवदंति नकदाचिदनीदृशंजगदितिअतस्त
त्कालेकश्चिदीश्वरोपिनास्तीतिभावः किंचयथायथावत् नतुमायामयीत्यर्थः नचात्मस्वरूपभूतंनित्यमेकंज्ञानमस्ती
त्याहतत्तद्धितिघटपटाद्याकारभेदेनधीर्जायते अतोऽनित्याभिद्यतेच अयंगूढोऽभिप्रायः नहिनित्यज्ञानरूपआ
त्मा अपितुज्ञानपरिणामवान् नचविकारित्वेनानित्यत्वप्रसंगः यथाहुः विक्रियाज्ञानरूपास्यननित्यत्वेविरोत्स्य
नइति अतोमुक्त्याविद्याद्विरहितस्यपरिणामासंभवाज्जडत्वेनतत्प्राप्तेरपुरुषार्थत्वात्प्रवृत्तिरेवश्रेयसीननिवृत्तिरिति १५॥

संबंधेवाकुतस्तन्निवृत्तिः तत्राह योऽसाविति पुरुषस्येश्वरस्याधीनैर्मायागुणैर्योसौसूक्ष्मः अयंचस्थूलोदेहोविरचितः पुंसो
जीवस्यायंसंसारः तन्निबंधनः तदध्यासकृतः हियस्मादेवंतस्मादात्मविद्यातन्निवर्त्तिकेत्याह आत्मनोविद्याविज्ञानंतस्य
छित्तछेत्री आच्छिदितिवापदच्छेदः १० यस्मादेवतस्मात् जिज्ञासया विचारेण आत्मस्थं आत्मनिकार्यकार्यकारणसंघा
तएवस्थितंसम्यक्ज्ञात्वाएततएतस्मिन्देहादौवस्तुबुद्धिं स्थूलसूक्ष्मक्रमेणनिरसेत्त्यजेत् ११ गुरोर्लब्धाविद्याअवि
द्यातत्कार्यनिरसनक्षमेतिस्फुटीकर्त्तुंविद्योत्पत्तिमग्न्युत्पत्तिरूपकेणनिरूपयति आ॰ चार्यइति आद्यः अधरः त

संसारस्तन्निबंधोऽयंपुंसोविद्याच्छिदात्मनः १० तस्माज्जिज्ञासयात्मानमात्मस्थंकेवलंपरं सं
गम्यनिरसेदेतद्वस्तुबुद्धिंयथाक्रमं ११ आचार्योऽरणिराद्यःस्यादंतेवास्युत्तराऽरणिः तत्संधानं
प्रवचनंविद्यासंधिःसुखावहः १२ वैशारदीसातिविशुद्धबुद्धिर्धुनोतिमायांगुणसंप्रसूतां गु
णांश्चसंदह्ययदात्ममेतत्स्वयंचशाम्यत्यसमित्यथाऽग्निः १३॥ ६ ॥ ॥ ६ ॥

त्संधानंतयोर्मध्यमंमथनकाष्ठंप्रवचनंउपदेशः विद्यातुसंधिःसंधौभवन्नग्निरिव तथाचश्रुतिः आचार्यः
पूर्वरूपं अंतेवास्युत्तररूपंविद्यासंधिःप्रवचनंसंधानमिति १२ अग्निसादृश्यमेवाह वैशारदीति विशार
दोतिनिपुणः तेनशिष्येणप्राप्तातेनगुरुणोपदिष्टावा अतिविशुद्धाबुद्धिः गुणकार्यरूपांमायांनिवर्त्तयतिय॥
दात्मकमेतद्धिश्वंजीवस्यसंसृतिनिमित्तंतान् गुणांश्चदग्ध्वा असमित् निरिंधनः तस्मात्कार्येणकारणेनविद्या॥
याचस्वयंधानाभावात्साक्षात्परमानंदरूपोभवतीति १३ ॥

गुरुसेवकस्य धर्मानाह अमानीति दक्षः अनलसः निर्ममः जायादिषु ममताशून्यः गुरौ तु दृढसौहृदः असत्वरः अव्य
ग्रः अमोघवाक् व्यर्थालापरहितः एतान्येव शिष्यस्य लक्षणानि ज्ञेयानि ६ ननु स्वजायादिषु कथं निर्ममः स्यात् तत्राह
जायेति औदासीन्यहेतुं विवेकं दर्शयति आत्मनोऽर्थं प्रयोजनं सर्वत्र सममिव पश्यन्निति अयं भावः सर्वदेहेष्वात्मन एक
त्वाज्जायादिदेहेऽस्मिंश्च देहे आत्मनोऽर्थः सुखादिः सम एव केन विशेषेण तेष्वेव ममत्वाभिनिवेश इत्येवमुदासीनः
सन् गुरुं प्रपद्येतेति ७ अहो कोऽसौ देहादिव्यतिरिक्त आत्मा यस्यैक्यादर्थः सर्वेषु समः स्यात् तमाह विलक्षण इति स्थू

अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ६ जाया
ऽपत्यगृहक्षेत्रस्वजनद्रविणादिषु उदासीनः समं पश्यन्सर्वेष्वर्थमिवात्मनः ७ विलक्षणः
स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् यथाऽग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः ८ निरोधो
त्पत्त्यणुबृहन्नानात्वं तत्कृतान्गुणान् अंतःप्रविष्ट आधत्त एवं देहगुणान्परः ९ योऽसौ गुणैर्वि
रचितो देहोऽयं पुरुषस्य हि॥ लसूक्ष्मदेहद्वयादात्माऽन्यः यतो विलक्षणः द्विधा वैलक्षण्यं दर्शयति ईक्षिता

सदृगिति द्रष्टा हि दृश्याद्विलक्षणः स्वप्रकाशश्च जडात् विलक्षणस्तयोरन्यत्वे दृष्टांतः यथाऽग्निर्दाहकः प्रकाशकश्च दाह्या
त् प्रकाश्याच्च दारुणः काष्ठादन्यस्तद्वदिति ८ अनेनैव दृष्टांतेन नित्यत्वानादित्वविभुत्वैकत्वादयोऽपि सिद्धा इत्याह निरो
धेति तथा दारुष्वंतः प्रविष्टोऽग्निस्तत्कृतान्नाशादीन्प्राप्नोति न तु स्वतो नाशादिमान् एवं देहगुणाननित्यत्वादीन्देहात्प
रो नित्यादिस्वरूपोऽप्यात्माऽनुभवति ततश्चानित्यत्वादिभिरपि वैलक्षण्यादन्यत्वमिति भावः ९ नन्वग्नेर्दारुसंयोगात्तद्

म्यामुत्पन्नविवेकज्ञानस्तत्वज्ञानायादितआरभ्यसाधनान्युपदिशतिभगवान् मयेति मयापंचरात्रादावुक्तैर्वैष्णवधर्मैः
स्ववहितः अप्रमत्तः सन् तदविरोधेनवर्णाद्याचारमनुतिष्ठेत् १ कथमकामात्मतासंभवतितत्राह अन्वीक्षेतेति स्वध
र्मैर्विशुद्धचित्तः सन् देहिनांविषयेषुसत्यत्वाभिनिवेशेनयेसर्वेआरंभास्तेषांफलवैपरीत्यंपश्येत् एवंफलवैपरी
त्यादकामःस्यात् २ किंच काम्यविषयाणांमिथ्यात्वादपीत्याह सुप्तस्येति विफलः अर्थशून्यः अत्रैवंप्रयोगः इंद्रि
येर्यावहिर्नानाबुद्धिःसाविफलानानात्मकत्वादेंद्रियकत्वाच्चमनोजन्यस्वप्नमनोरथवदिति ३ मोक्षार्थीनप्रवर्त्तेत

वर्णाश्रमकुलाचारमकामात्मासमाचरेत् १ अन्वीक्षेतविशुद्धात्मादेहिनांविषयात्मनां गु
णेषुतत्वध्यानेनसर्वारंभविपर्ययम् २ सुप्तस्यविषयालोकोध्यायतोवामनोरथः नानात्मक
त्वाद्विफलस्तथाभेदात्मधीर्गुणैः ३ निवृत्तंकर्मसेवेतप्रवृत्तंमत्परस्त्यजेत् निवृत्तंकर्मसेवेत
प्रवृत्तंमत्परस्त्यजेत् जिज्ञासायांसंप्रवृत्तोनाद्रियेत्कर्मचोदनां ४ यमानभीक्ष्णंसेवेतनिय
मान्मत्परः क्वचित् मदभिज्ञंगुरुंशांतमुपासीतमदात्मकं॥ ५॥ एतत्रकाम्यनिषिद्धयोः नित्यनैमि
त्तिकेकुर्यात्प्रत्यवायजिहासयाइतिस्मृतिः अतः प्रवृत्तंकाम्यंकर्मत्यजेन्निवृत्तन्त्वित्यनैमित्तिकमेवकुर्यात् आत्मवि
चारेतुसम्यक्प्रवृत्तोनिवृत्तकर्मचोदनामपिनाद्रियेतनित्यनैमित्तिकंसंकोच्यआदरेणजिज्ञासाकर्त्तव्या ४ किंच
यमानहिंसादीन् अभीक्ष्णमादरेणसेवेतशौचादींस्तुनियमान्क्वचित्यदाशक्तिः तदाआत्मज्ञानाविरोधेनयमान्
द्वादशनियमांश्चैकोनविंशेऽध्याये वक्ष्यतिकिंचयमेष्वत्यादरंपरित्यज्यगुरुमुपासीतेत्याहमदभिज्ञमितितदात्म

ननु किं बहुभिर्गुरुभिः नहि श्वेतकेतुभृगुप्रमुखैर्बहवो गुरव आश्रिताः तत्राह नह्येकस्मादिति बहुधा सप्रपंचनिष्प्र पंचभेदादिभिः अयं भावः नैते परमार्थोपदेशगुरवः किंत्वन्वयव्यतिरेकाभ्यामात्मन्यसंभावनादिमात्रनिवर्त्तकाः तेषां बहुत्वं युक्तमेवेति ज्ञानप्रदं तु गुरुमेकमेव वक्ष्यति मदभिज्ञं गुरुं शांतमुपासीतेति उक्तं च तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तममिति ३१ विप्रो दत्तात्रेयः योगर्द्धिमापुरुषं यी यदुः हैहयाद्याः ईश्वरत्वात् यथागतं तथैव यदृच्छयायया वित्यर्थः ३२ भगवान्स्वीयं ब्रह्मवित्कुलमिति श्लाघते नः पूर्वेषां पूर्वज इति अत्र संग्रहश्लोकाः कपोतमीनहरिणकुमारीग

नह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलं ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ३१ श्रीभगवानुवाच इत्युक्त्वा स यदुं विप्रस्तमामंत्र्य गभीरधीः वंदितोऽभ्यर्थितो राज्ञा ययौ प्रीतो यथागतं ३२ अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः सर्वसंगविनिर्मुक्तः समचित्तो बभूव ह ३३ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे नवमोऽध्यायः ९ श्रीभगवानुवाच मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ॥ १

जपन्नगाः पतंगः कुररश्चाष्टौ हेयार्थगुरवो मताः १ ॥ मधुहन्मधुहर्त्ता च पिंगला चाहयोस्त्रयः उपादेयार्थविज्ञाने शेषाः पृथ्व्यादयो मताः २ तदवांतरभेदश्च तत्तत्त्वत्रफुटीकृतः अध्यायत्रितये चाष्टनवाष्टावीरिताः क्रमात् ३ ३३ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे टीकायां नवमोऽध्यायः ९ चतुर्विंशतिगुर्वाख्यालब्धसंभावनाभुवः उद्धवस्यात्मतत्त्वाप्तौ साधनोक्तिरतः परैः १ दशमे देहसंबंधात्संसृतिर्नात्मनः स्वतः इत्येतद्वर्णयामास मतांतरनिरासतः २ तदेवमन्वयव्यतिरेका

६
भा॰ए॰
४२

पुराणिशरीराणि पुरुषंपुरुषदेहं ब्रह्मणोऽवलोकायअपरोक्षायधिषणाबुद्धिर्यस्मिन्तं तदुक्तंतासांमे पौरुषीप्रियेति श्रुतिश्च पुरुषत्वेचाविस्तरामात्मेत्यादिर्ईश्वरोहिकरणाधिष्ठात्रीरग्न्यादिदेवताः वागादिभिः सहसृष्टवान् ताश्चतंप्रतिभोगार्थंशरीरमयाचंतसचताभ्योगोशरीरं अश्वशरीरं पुरुषशरीरंयथाक्रममानीतवान् ततस्तादेवताः सोऽब्रवीत्यथायतनंचक्षुरादिस्थाने अस्मिन्देहेप्रविशतेतितदाहताभ्यइत्यादि॥ तयाताभ्योगामानयत्ता अब्रुवन्नवैनोऽयमलमितिताभ्योऽश्वमानयत्ता अब्रुवन्नवैनोयमलमितिताभ्यःपुरुष

तैस्तैरतुष्टहृदयः पुरुषंविधायब्रह्मावलोकधिषणंमुदमापदेवः २८ लब्ध्वासुदुर्लभमिदंबहुसंभवांतेमानुष्यमर्थदमनित्यमपीहधीरः तूर्णंयतेतनपतेदनुमृत्युयावन्निःश्रेयसायविषयःखलुसर्वतःस्यात् २९ एवंसंजातवैराग्योविज्ञानालोकआत्मनि विचरामिमहीमेतांमुक्तसंगोऽनहंकृतिः ३०॥ ❀ ॥

मानयत्ता अब्रुवन्सुकृतंवतेतिच २८ तस्मात् बहूनांसंभवानांजन्मनामंतेमानुष्यं अनित्यमप्यर्थदंपुरुषार्थप्रापकंदैवाल्लब्ध्वाइदं अनुमृत्यु अन्वनुनिरंतरं मृत्यवोयस्यतत् यावन्नपचतेत्तावदेवतूर्णंशीघ्रंनिःश्रेयसायप्रयतेत विषयः पुनःसर्वतः पश्वादियोनिष्वपिस्यादेव २९ तदेवंहेयोपादेयविवेकंबहुधानिरूप्येदानीयदुक्तंत्वंतुकल्पःकविर्दक्षइत्यादितत्रोत्तरमाह एवमिति एवंबहुभ्योगुरुभ्यःशिक्षितेन विशिष्टंज्ञानमेवालोकःप्रदीपोयस्यसः सप्तम्यंतंवा आत्मविशेषणं आत्मनिस्थितएवमहींविचरामि ३०॥ ❀ ॥

राम
६२

सततसंततेआर्त्त्युदर्के दुःखमेवोत्तरोत्तरफलं बिभ्रत् यद्वा सततान्निरेवउदकउत्तरफलं यस्य ततस्तत्वनिधनं बिभ्रत् विवेक
हेतुत्वमाह तत्वानीति यथायथावत् एवमत्युपकारित्वेऽपि देहे नैवास्याकर्त्तव्येत्याह तथापीति पारक्यं श्वशृगाला
दिभक्ष्यमिति विनिश्चितवान् २५ सततार्त्युदर्कतां प्रपंचयति जायेति द्वाभ्यां यस्य देहस्य प्रियचिकीर्षया भोगसंपाद
नेच्छया जायादिवर्गान्वितन्वन् पुष्णाति पुरुषः कथंभूतः सकृच्छ्रं यथा भवति तथाऽवरुद्धानि संचिनानि धनानि ये
न सः देहविशेषणं वा स देहः स्वांते स्वस्यायुषोंते अवसीदति नश्यति किंच देहनाशेऽपि न दुःखसमाप्तिरित्याह अस्य पुरुष

नत्वान्यऽनेन विमृशामि यथा तथापि पारक्यमित्यऽवसितो विचराम्यऽसंगः २५ जायात्मजार्थप
शुभृत्यगृहाप्तवर्गान्पुष्णाति यत्प्रियचिकीर्षया वितन्वन् स्वांते सकृच्छ्रमवरुद्धधनः स देहः
सृष्ट्वास्य बीजमवसीदति वृक्षधर्मा २६ जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोऽन्यतस्त्व
गुदरं श्रवणं कुतश्चित् घ्राणोऽन्यतश्चपलदृक्क्वच कर्मशक्तिर्वह्व्यः सपत्न्य इव गेहपतिं लुनंति
२७ सृष्ट्वा पुराणि विविधान्यऽजयात्मशक्त्या वृक्षान्सरीसृपपशून्खगदंशमत्स्यान् ॥ अस्य देहांतरबी
जं कर्म सृष्ट्वेति वृक्षस्येव धर्मो यस्य सः २६ किंच जिह्वेति अमुं देहं तदभिमानिनं पुरुषं वा एकतः रसंप्रति जिह्वा अपक
र्षति आच्छिनत्ति कर्हि कदाचित् तर्षा पिपासा जलंप्रति शिश्नो व्यवायंप्रति त्वक् स्पर्शंप्रति उदरं अन्नमात्रंप्रति श्रवणं श
ब्दंप्रति घ्राणो गंधंप्रति चपलदृक् रूपंप्रति क्वच क्वचित् स्वस्वविषयंप्रति कर्मशक्तिः अन्यदपि कर्मेंद्रियं लुनंत्ति त्रोटयंति
२७ तरेवं देहाद्गुरुरित्यादित्रिभिर्विरक्तिविवेकहेतुत्वमुपपाद्येदानीमस्य देहस्यातिदुर्लभत्वं दर्शयन्नीश्वरनिष्ठां विधत्ते सृष्ट्वेति

सूत्रस्यैवव्यक्तिशब्देनोच्यमानस्यतामितिस्त्रीलिंगेनपरामर्शः त्रिगुणव्यक्तिंगुणत्रयस्यकार्यंअतएवविश्वतोमुखं
नानाविधंत्रिगुणात्मकंविश्वमहंकारद्वारेणसृजंतींत्रिगुणकार्यस्यसूत्रसंज्ञायांकारणमाहयस्मिन्नितिकारणभू-
तेसमष्टिरूपेयस्मिन्निदंविश्वंओतंग्रथितं वायुर्वैगौतमसूत्रंवायुनावैगौतमसूत्रेणायंचलोकःपरश्चलोकःसर्वा-
णिचभूतानिसंदृब्धानीतिश्रुतेः येनवाह्यात्मप्राणरूपेणजीवःसंसरति २० नदेवंशिक्षितमर्थमुक्त्वादृष्टांतमाह

तामाहुस्त्रिगुणव्यक्तिंसृजंतींविश्वतोमुखंयस्मिन्प्रोतमिदंविश्वंयेनसंसरतेपुमान् २० यथो-
र्णनाभिर्हृदयादूर्णांसंतत्यवक्त्रतः तयाविहृत्यभूयस्तांग्रसत्येवंमहेश्वरः २१ यत्रयत्रमनो
देहीधारयेत्सकलंधिया स्नेहाद्द्वेषाद्भयाद्वाऽपियातितत्तत्सरूपतां २२ कीटःपेशस्कृतंध्या-
यन्कुड्यांतेनप्रवेशितः यातितत्सात्मतांराजन्पूर्वरूपमसंत्यजन् २३ एवंगुरुभ्यएतेभ्यएषा
मेशिक्षितामतिः स्वात्मोपशिक्षितांबुद्धिंशृणुमेवदतःप्रभो २४ देहोगुरुर्ममविरक्तिविवेक
हेतुर्बिभ्रत्स्मसत्वनिधनंसततार्त्युदर्कं॥ यथेतिहृदयादुद्गतांवक्त्रतःवक्त्रेणसंतत्यप्रसार्यविहृत्यक्रीडि-
त्वा २१ भगवद्ध्यानपराणांतत्सारूप्यंनचित्रमितिपेशस्कृतोभ्रमरविशेषात्ज्ञातमित्याह यत्रयत्रेति सकलंएका-
ग्रं २२ कुड्यांप्रवेशितःनिरुद्धःभयेनध्यायन् सात्मतांतत्सारूप्यं साम्यतामितिपाठेत्वार्षता पूर्वरूपमसंत्यजन्नित्य-
स्याभिप्रायःयदातेनैवदेहेनान्यसारूप्यंदृश्यतेतदाकिंवक्तव्यंदेहांतरेणसारूप्यंघटतइति २३ स्वदेहादवशिक्षितं।
माहस्वात्मेतिस्वात्मनोदेहाच्छिक्षितं २४ गुरुत्वेहेतुःविरक्तिविवेकयोर्हेतुःविरक्तेहेतुत्वमाहसत्वनिधनंउत्पत्तिविनाशौबिभ्रत्स्म

अएकांतवासीच आचारैर्गतिभिः सविद्योनि विद्योवेतिनलक्ष्यतेच असहायश्चमितभाषीचतद्वत्‌ मुनिर्वर्त्तेतेत्य र्थः १४ किंचगृहारंभइति अध्रुवात्मनः नश्वरदेहस्यसुखंयथाभवति तथावर्द्धते १५ कारकसामग्रीनिरपेक्षान्केवला दीश्वरादिश्वसृष्टिसंहारावुर्णनाभिदृष्टांतेनमयासंभाविवितिवक्तुंप्रथमंसंहारप्रकारमाह एकइतिसार्द्धत्रयेण एकः कार कनिरपेक्षः पूर्वसृष्टमिदंजगत्‌ कालकलयाकालशक्त्यासंहृत्य १६ एकएवाद्वितीयः सजातीयविजातीयभेदशून्योऽ

अलक्ष्यमाणआचारैर्मुनिरेकोऽल्पभाषणः १४ गृहारंभोऽतिदुःखायविफलश्चाध्रुवात्मनः सर्पः परकृतंवेश्मप्रविश्यसुखमेधते १५ एकोनारायणोदेवः पूर्वसृष्टंस्वमायया संहृत्यकाल कलयाकल्पांतइदमीश्वरः १६ एकएवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः कालेनात्मानु भावेनसाम्यंनीतासुशक्तिषु सत्वादिष्वात्मपुरुषः प्रधानपुरुषेश्वरः १७ परावराणांपरम आस्तेकैवल्यसंज्ञितः केवलानुभवानंदसंदोहोनिरुपाधिकः १८ केवलात्मानुभावेनस्व मायांत्रिगुणात्मिकांसंक्षोभयन्सृजत्यादौतयासूत्रमरिंदम १९॥ भूत्‌ कारणभूतासुसत्वादिषुशक्तिषु पिसाम्यंनीतासुसतीषुसाम्यगुणसाम्यंप्रधानंतदुपाधिःपुरुषःतयोरीश्वरः १७ परावराणांपरेब्रह्मादयः अवरे अन्येचमुक्ताजीवास्तेषांपरमः आप्यआस्ते कुतः कैवल्यसंज्ञितः मोक्षशब्दाभिधेयः तत्रहेतुः केवलेति निर्विषयःस्व प्रकाशः आनंदानांसंदोहःसमूहः परमानंदइत्यर्थः कुतः निरुपाधिकः १८ अतः केवलादेवसृष्टिंदर्शयतिकेवले नात्मानुभावेनकालेनसूत्रंक्रियाशक्तिप्रधानंमहत्तत्वंसृजतिजीवसंसारहेतुभूतेसूत्रेसृष्टेऽपित्वंमाभैरितिसंबोधयति

चित्तैकाग्रताद्वैतास्फूर्त्तिलक्षणसमाधिहेतुरिति शरकाराच्छिक्षितमित्याह मनइति तत्रोपायमाह जितेति आसनज
येश्वासजयः तस्य च जये श्वासाधीनं मनो निश्चलं भवति ननु क्षणं निश्चलं सदपि मनो विषयवासनया यदि वि
क्षिप्येत सुषुप्ताविव सर्वथा लीयेत वा तदा किं तत्राह वैराग्येति वैराग्येणाविक्षिप्यमाणं अभ्यासयोगेन लक्ष्ये ध्रि
यमाणं स्थिरीक्रियमाणं ११ एकत्रेति कुत्र तदाह यस्मिन्निति यत् लयविक्षेपात्मकं मनः एतद्यस्मिन् परमानंदरूपे
भगवति लब्धास्पदं सत्कर्मरेणून् कर्मवासनाः मुंचति तस्मिन् ननु कर्मवासनात्यागेपि सुषुप्ताविव द्वयोर्दुर्वारः न सत्वेत्या।

मन एकत्र संयुज्याज्जितश्वासो जितासनः वैराग्याभ्यासयोगेन ध्रियमाणमतंद्रितः ११ यस्मिन्म
नो लब्धपदं यदेतच्छनैः शनैर्मुंचति कर्मरेणून् सत्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यऽ
निंधनम् १२ तदैवमात्मन्यवरुद्धचित्तो न वेद किंचिद्बहिरंतरं वा यथेषुकारो नृपतिं व्रजंतमिषौ ग
तात्मा न ददर्श पार्श्वे १३ एकचार्यऽनिकेतः स्यादप्रमत्तो गुहाशयः ॥ ९.नेति वृद्धेन उपशमात्मकेन

रजस्तमसोरभावे विक्षेपलययाभावान्निर्वाणं अवृत्तिकं ध्येयाकारेणावस्थानमुपैति कुतः अनिंधनं इंधनं गुणाः
तत्कार्यं च तद्रहितं तदुक्तं योगशास्त्रे मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः याऽसंप्रज्ञातनामासौ समाधिरभिधी
यत इति १२ ततश्च नद्वैतस्फूर्त्तिरित्याह तदेति वहिर्दर्शनाद्बिना अंतरं स्मृत्या इषौ गतात्मा तस्य ऋजूकरणदत्त
चित्तः भेरीघोषैः रंतिके व्रजंतं नृपतिमपि न वेद तद्वत् १३ सर्पात् शिक्षितमाह एकचारीति योगिसंमर्दस्यापित्या
गे कुमारी गुरुः जनसंगत्यागे सर्पः स यथा जनाच्छंकमान एकाकी विचरति नियतनिकेतरहितश्च सदाऽप्रमत्त।

अर्भकशिक्षामाह नेति गेहपुत्रिणांतद्धतांयाभवतिसाचिंताचमेनास्ति आत्मनैवक्रीडायस्यआत्मनिरात्मनि रतिःप्रीतिर्यस्यसः ३ नन्वज्ञसर्वज्ञयोःकिंसादृश्यंनैश्चिंत्यंपरमसुखमित्याह द्वाविति विमुग्धाअज्ञःजडःअनुद्यमःए वंभूतोयोबालःयश्चप्रकृतेःपरमीश्वरंप्राप्तःतौद्वौ ४ कुमार्याःशिक्षितवक्तुमाख्यायिकामाह क्वचिदित्यादिना

नमेमानावमानौस्तोनचिंतागेहपुत्रिणां आत्मक्रीडआत्मरतिर्विचरामीहबालवत् ३ द्वावेव चिंतयामुक्तौपरमानंदआप्लुतौ योविमुग्धोजडोबालोयोगुणेभ्यःपरंगतः ४ क्वचित्कुमा रीत्वात्मानंवृणानान्गृहमागतान् स्वयंतानर्हयामासक्वापियातेषुबंधुषु ५ तेषामभ्यव हारार्थंशालीन्रहसिपार्थिव अवघ्नंत्याःप्रकोष्ठस्थाश्चक्रुःशंखाःस्वनंमहत् ६ सात ज्जुगुप्सितंमत्वामहतीव्रीडितातततः वभंजैकैकशःशंखान्द्वौद्वौपाण्योरशेषयत् ७ उभयो रप्यभूद्घोषोह्यवघ्नंत्याःस्मशंखयोः तत्राप्येकंनिरभिदत्देकस्मान्नाभवत्ध्वनिः ८॥ अन्वशिक्षमिमंतस्याउपदेशमरिंदम लोकाननुचरन्नेताँल्लोकतत्वविवित्सया ९ वासे बहूनांकलहोभवेद्वार्ताद्वयोरपि एकएवचरेत्तस्मात्कुमार्याइवकंकणः १०॥ वृणानान्स्वव रणायागतान्बंधुषुपित्रादिषु ५ शंखाःशंखवलयाःमहद्यथाभवतितथास्वनंचक्रुः ६ सामहतीबुद्धिमतीतत्स्वयंशा ल्यवहननंजुगुप्सितंचदरिद्रताद्योतकं एकैकशःक्रमेणैकमेकंबभंजकरादपसारितवती ७ निरभिदत्पृथक्कृ तवती ८ ननुकुमार्यास्तिवचकथंसंगतिः तत्राह लोकानिति ९ वासइतिप्रथमांतपाठेकलहहेतुःवार्तागा

क्वापिक्षेत्रादौ३त्रु

ननु ब्रह्मादीन् हित्वा अमुनैवेति कोयं नियमः तत्राह संसारेति मुषिते क्षणं अपहृतविवेकं ४० तर्हि किमात्म
त्राणोपाधिना तं भजिष्यसि न तत्र सर्वतो निर्विद्य भगवद्भजने प्रवृत्तस्यात्मन एव समर्थत्वादित्याह आत्मैवेति यदा एवं
जगत्पश्येत्तत्तस्मात् अप्रमत्तः सन् निखिलात् इहामुत्र च भोगान्निर्विद्येत तदा हि आत्मनैवात्मनो गोप्तेत्यन्वयः अतः केव

संसारकूपे पतितं विषयैर्मुषितेक्षणं ग्रस्तं कालाहिनाऽत्मानं कोऽन्यस्त्रातुमधीश्वरः ४०
आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाऽखिलात् अप्रमत्त इदं पश्येत् ग्रस्तं कालाहिना ज
गत् ४१ श्रीब्राह्मण उवाच एवं व्यवसितमतिर्दुराशां कांततर्षजां छित्वोपशममास्था
य शय्यामुपविवेश सा ४२ आशा हि परमं दुःखं नैराश्यं परमं सुखं यथा संछिद्य कांता
शां सुखं सुष्वाप पिंगला ४३॥ ॥इति श्रीभागवते महापुराणे एकादशस्कंधे अष्टमोऽ
ध्यायः ८ श्रीब्राह्मण उवाच परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणां अनंतं सुखमाप्नोति
तद्विद्वान्यस्त्वऽकिंचनः १ सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः तदामिषं परि

त्यज्य स सुखं समविंदत॥२॥ ॥त्वं प्रेम्णैव भजामीति भावः ४१ कांतस्य तर्षोभिलाषस्ततो जातां ४२ फलि
तमाह आशा हीति ४३॥ इति श्रीभागवते महापुराणे एकादशस्कंधे टीकायां अष्टमोऽध्यायः ८ नवमे कुररादिभ्यो
देहतश्चोपशिक्षितं अन्वायदुः कृतार्थोभूदिति कृत्स्नं वर्णितं १ कुरराच्छिक्षितमाह परिग्रहो हीति यद्यत्प्रियतमं
तस्य परिग्रहः तद्विद्वान् परिग्रहो दुःखमिति विद्वान् स न यस्त्वकिंचनः स्तत्र परिग्रहः ननु दरिद्रः १ तदाह सामिषमिति

सत्संगतो सत्यामप्यहो मम मोह इत्याह विदेहानामिति याऽहमसती अच्युतादन्यं कामं भोगमिच्छंती सा ३३ एवं निर्विण्णा सती अतः परमेवं करिष्यामीत्याह सुहृदिति अयमीश्वरः आत्मनैव आत्मानमेव निवेदितं विक्रीय विशेषेण क्रीत्वा अनेनैव सह रमे रमा लक्ष्मीर्यथा ३४ अन्यस्या सेव्यत्वं दर्शयति कियदिति आद्यंतवंतो ये कामा विषयाः कामदा नरा वा देवा वा कालकलिता भार्यायाः कियत्प्रियं कृतवंतः न किंचित् अतो नेह अमुत्र च तद्व्यतिरिक्तः कोऽपि सेव्योऽस्तीत्यर्थः ३५ एवं नि

विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः याऽन्यमिच्छंत्यसत्यस्मादात्मदात्कामम च्युतात् ३३ सुहृत्प्रेष्ठतमो नाथ आत्मा चाऽयं शरीरिणां तं विक्रीयाऽत्मनैवाहं रमेऽनेन यथा रमा ३४ कियत्प्रियं ते व्यभजन्कामा ये कामदा नराः आद्यंतवंतो भार्याया देवा वा कालविद्रुताः ३५ नूनं मे भगवान्प्रीतो विष्णुः केनापि कर्मणा निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ३६ मैवं स्युर्मंदभाग्यायाः क्लेशा निर्वेदहेतवः येनाऽनुबंधं निर्हृत्य पुरुषः शममृच्छति ३७ तेनोपकृतमादाय शिरसा ग्राम्यसंगताः त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरं ३८ संतुष्टा श्रद्दधत्येतद्यथाला- भेन जीवती विहराम्यऽमुनैवाहमात्मना रमणेन वै ३९ ॥ ॥ ९॥ श्चित्यस्वभाग्यमभिनंदति

नूनमिति दुष्टा आशा यस्यास्तस्या मे ३६ ननु धनाप्राप्त्या क्लिष्टाऽसि कथं विष्णुः प्रीतः तत्राह मैवमिति मंदभाग्या चेदहं स्यां तर्ह्येवं निर्वेदहेतवः क्लेशा न स्युरित्यर्थः येन निर्वेदेन अनुबंधं गृहादिकं निर्हृत्य परित्यज्य ३७ अतः तेन । श्रीविष्णुनोपकृतं कृतमुपकारं निर्वेदलक्षणं ग्राम्येषु नरेषु विषयेषु वा संगताः ३८ कथं व्रजसि तदाह संतुष्टेति ३९॥

८
भा॰ ए॰
३९

अविजितात्मत्वे हेतुः याऽहं वालिशा विवेकशून्या तस्मात् कुतः येन कारणेन असतः तुच्छान्नरात् कामं कामये वा
लिशत्वं प्रपंचयति संतमिति चतुर्भिः समीपे संतं अंतर्यामित्वात् इमं अपरोक्षमीश्वरं ३० अति विगर्ह्या अतिनिंद्या ।
यावार्त्ता जीविका तया कुतः सांकेत्येन या वृत्तिः तया बहुत्रीहिणा स्वविशेषणं वा परितापं प्रपंचयति स्त्रैणादिति ॥
स्त्रीलंपटात् अथ च अर्थतृषः लुब्धात् अत एवानुशोच्यान्नरात् याहं वित्तं रतिं चेच्छती मया वृथाऽत्मा परितापि
तः केन वित्तमिच्छतीति तेन नरेण क्रीतेन स्वयं विक्रीतेनात्मना देहेन ३१ अहो धिङ्मां याऽहमति वीभत्सितं भजा

पिंगलोवाच अहो मे मोहविततिं पश्यताऽविजितात्मनः या कांतादसतः कामं कामये येन वालि
शा २९ संतं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय अकामदं दुःखभयादिशोकमो
हप्रदं तुच्छमहं भिजेज्ञा ३० अहो मयाऽत्मा परितापितो वृथा सांकेत्यवृत्त्याऽतिविगर्ह्यवार्त्ता।
या स्त्रैणान्नरादर्थतृषोऽनुशोच्यात् क्रीतेन वित्तं रतिमात्मनेच्छती ३१ यदस्थिभिर्निर्मितं।
वंशवंश्यस्थूणं त्वचा रोमनखैः पिनद्धं क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति कान्या ३२

मीत्याह यदिति वंशो नाम स्थूणासु निहितस्तिर्यक् वेणुः वंश्यास्तस्मिन्नुभयतो निहिता वेणवः अस्थिभिरेव निर्मितं वं
शादयो यस्मिन् तत् तत्र पृष्ठे दीर्घमस्थि यत् स वंशः पार्श्वस्थानि वंश्यानि स्थूणा हस्तपादास्थीनि तथा रोमभिर्नखैः
अपि नद्धमाच्छादितं तथाऽपि क्षरंति नव द्वाराणि यस्मिन् तत् एवंभूतागाररूपेण नरशरीरमेतत् मत् मत्तोऽन्या
का वा कांत बुद्ध्या उपैति सेवते ३२ ॥

राम
३८

सत्संगतो सत्यामण्यहो मममोहइत्याह विदेहानामिति याऽहमसती अच्युतादन्यं कामं भोगमिच्छंती सा ३३ एवं निर्विण्णा सती अतःपरमेवंकरिष्यामीत्याह सुहृदिति अयमीश्वरः आत्मनैव आत्मानमेव निवेदितं विक्रीय विशेषेण क्रीत्वा अनेनैव सह रमे रमा लक्ष्मीर्यथा ३४ अन्यस्यासेव्यत्वं दर्शयति कियदिति आद्यंतवंतो ये कामाः विषयाः कामदा नरा वा देवा वा कालकलिताः भार्यायाः कियत्प्रियं कृतवंतः न किंचित् अतो नेह अमुत्र च तद्व्यतिरिक्तः कोऽपि सेव्यो ऽस्तीत्यर्थः ३५ एवं नि

विदेहानां पुरे ह्यऽस्मिन्नहमेकैव मूढधीः याऽन्यमिच्छंत्यसत्यस्मादात्मदात्काममच्युतात् ३३ सुहृत्प्रेष्ठतमो नाथ आत्मा चाऽयं शरीरिणां तं विक्रीयाऽत्मनैवाहं रमेऽनेन यथा रमा ३४ किय त्प्रियं ते व्यभजन्कामा ये कामदा नराः आद्यंतवंतो भार्याया देवा वा कालविद्रुताः ३५ नूनं मे भगवान्प्रीतो विष्णुः केनापि कर्म्मणा निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ३६ मैवं स्युर्मंदभाग्यायाः क्लेशा निर्वेदहेतवः येनाऽनुबंधं निर्हृत्य पुरुषः शममृच्छति ३७ तेनोपकृतमादाय शिरसा ग्राम्यसंगताः त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरं ३८ संतुष्टा श्रद्दधत्येतद्यथालाभेन जीवती विहराम्यऽमुनैवाहमात्मना रमणेन वै ३९॥ ॥

(१. ?)श्चित्यस्व भाग्यमभिनंदति नूनमिति दुष्टा आशा यस्यास्तस्या मे ३६ ननु धनाप्राप्त्या क्लिष्टाऽसि कथं विष्णुः प्रीतः तत्राह मैवमिति मंदभाग्या चेदहं स्यां तर्ह्येवं निर्वेदहेतवः क्लेशा न स्युरित्यर्थः येन निर्वेदेन अनुबंधं गृहादिकं निर्हृत्य परित्यज्य ३७ अतः तेन श्रीविष्णुनाऽपकृतं कृतमुपकारं निर्वेदलक्षणं ग्राम्येषु नरेषु विषयेषु वा संगताः ३८ कथं व्रजसि तदाह संतुष्टेति ३९॥

किंच अणुभ्यश्चेति १० द्विविधोमधुकृत् मधुकृंततिपुष्पादाच्छिद्यगृह्णातीतिमधुकृत् भ्रमरः :मधुकरोतिआ
हारत्वेनस्वरूपेणचेतिमधुमक्षिकाचतत्राप्रथमोच्छिक्षितमुक्तं द्वितीयाच्छिक्षितमाहसायमिदंभोक्ष्या
मीतिभिक्षितमन्नादिनसंगृह्णीतकिंतुपात्रस्तन्मात्रग्राहीयद्वाउदरमेवामत्रंपात्रंयस्यसः एकभिक्षायामुदरमात्रग्राहीभ
वेत्संग्रहीतुमक्षिकेवननभवतिनजीवतीत्यर्थः ११ एतद्विवृणोतिपुनःसायंतनमिति १२ स्पर्शासक्तिर्नाशहेतुरितिग

अणुभ्यश्चमहद्भ्यश्चशास्त्रेभ्यःकुशलोनरः सर्वतःसारमादद्यात्पुष्पेभ्यइवषट्पदः १० सायं
तनंश्वस्तनंवानसंगृह्णीतभिक्षितं पाणिपात्रोदरामत्रोमक्षिकेवनसंग्रही ११ सायंतनंश्वस्त
नंवानसंगृह्णीतभिक्षुकः मक्षिकाइवसंगृह्णन्सहतेनविनश्यति १२ पदाऽपियुवतीभिक्षुर्न
स्पृशेद्दारवीमपि स्पृशन्करीवबध्येतकरिण्याअंगसंगतः १३ नाधिगच्छेत्स्त्रियंप्राज्ञःकर्हि
चिन्मृत्युमात्मनः बलाधिकैःसहन्येतगजैरन्यैर्गजोयथा १४ नदेयंनोपभोग्यंचलुब्धैर्यत्दुः
खसंचितं भुंक्तेतदपितच्चाऽन्योमधुहेवाऽर्थविन्मधु १५ ॥ १२जाच्छिक्षितमित्याहपदाऽपीतिपादेना

पिदारवींदारुमयीमपिगजोहिकरिणींप्रदर्श्यनिखातपिहितगर्त्तेनिपात्यबध्यते १३ किंचनाधिगच्छेतिद्विनोप
गच्छेत् १४ त्यागभोगविहीनोधनसंचयःपरगामीभवतीत्यत्रमधुहागुरुरित्याहनदेयमितितदन्योबलवान्भुंक्तेत
दप्यन्यस्तच्चान्यःमधुहामक्षिकाभिःसंचितंमधुयथाभुंक्तेतद्वत् ननुसुगुप्तंधनंकथमन्योज्ञास्यतिहरिष्यतिचेतितत्रा
हअर्थवित्लिंगैरर्थंतदुपायंचवेत्तीत्यर्थवित् यथामधुहातरुकोटरादिगतंमधुवेत्तिहरतिच १५ ॥ ॥

स्त्रोपममंविनाऽपिभोगः संभवतीत्यत्रापिसएवगुरुरित्याह सुदुःखेति आशासानानामितिवक्तव्येवर्णलोप आर्षः यतिश्चब्रह्मचारीचपक्वान्नस्वामिनावुभौ तयोरन्नमदत्वातुभुक्त्वाचांद्रायणंचरेदितिगृहिणामावश्यकत्वेनदानविधानात् १६ हरिणाच्छिक्षितमाह ग्राम्येति भगवद्गीतंतुशृणुयादेव मृगयोर्लुब्धकस्य १७ हरिणशब्दादेवहरिणीसुतऋष्यशृंगोऽपिगुरुर्ज्ञातव्यइत्याह नृत्येतिवश्योवभूवेतिशेषः १८ रसासक्तिर्नाशहेतुरिति

सुदुःखोपार्जितैर्वित्तैराशासानांगृहाशिषः मधुहेवाग्रतोभुंक्तेयतिर्वैगृहमेधिनां १६
ग्राम्यगीतंनशृणुयाद्यतिर्वनचरः क्वचित् शिक्षेतहरिणाद्बद्धान्मृगयोर्गीतमोहितात् १७
नृत्यवादित्रगीतानिजुषन्ग्राम्याणियोषितां आसांक्रीडनकोवश्यऋष्यशृंगोमृगीसुतः
१८ जिह्वयातिप्रमाथिन्याजनोरसविमोहितः मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तुवडिशैर्यथा १९
इंद्रियाणिजयंत्याशुनिराहारामनीषिणः वर्ज्जयित्वातुरसनंतन्निरन्नस्यवर्द्धते २० तावज्जितेंद्रियोनस्याद्विजितान्येंद्रियःपुमान् नजयेद्रसनंयावज्जितंसर्वंजितेरसे २१ ॥ ६ ॥

मीनाच्छिक्षितमित्याह जिह्वयेति अतिप्रमाथिन्याअतिक्षोभिकयादुर्जयया ऋच्छतिप्राप्नोतिवडिशैः॥ आमिषलिप्तैर्लोहकंटकैः १९ दुर्जयत्वमुपपादयति इंद्रियाणीतिद्वाभ्यां अयंभावः यदाहारस्त्यज्यतेतर्ह्यन्येंद्रियजयः केवलंभवतिरसनेंद्रियंतुवर्द्धते यदितुभुज्यतेतर्हिपुनश्चरसासक्त्यासर्वेंद्रियक्षोभः स्यात् अतोरसासक्तिंपरित्यज्यौषधवद्भुंजीतेतिप्राणवृत्त्यैवसंतुष्येदित्यत्रोक्तमपिरसनस्यातिदुर्ज्जयत्वज्ञापनायोच्यतइतिविशेषः २०२१

पिंगलायानैराश्यं शिक्षितमितिवक्तुंतदाख्यानमाह पिंगलेत्यादिना मेमयाशिक्षितं २२ स्वैरिणीकामाचारिणी संकेतेरतिस्थाने २३ तान्वित्तवतः सधनान् अतएवशुल्कदान्मूल्यदान् कांतान्सुरताहर्न् २४ अपिसंभावनायां ॥ अन्योऽपिमामुपैष्य त्येवंदुराशयेत्युत्तरेणान्वयः २५ द्वार्यवलंबमानापुनःप्रविशतिपुनर्निर्गच्छति एवंकुर्वती ॥

पिंगलानाम वेश्यासीद्विदेहनगरेपुरा तस्यामेशिक्षितंकिंचिन्निबोधनृपनंदन २२ सास्वैरिण्येकदाकांतंसंकेतउपनेष्यती अभूत्कालेवहिर्द्वारिबिभ्रतीरूपमुत्तमं २३ मार्गआगच्छतोवीक्ष्यपुरुषान्पुरुषर्षभ तान्शुल्कदान्वित्तवतः कांतान्मेनेर्थकामुका २४ आगतेष्वऽपयातेषुसासंकेतोपजीविनी अप्यन्योवित्तवान्कोपिमामुपैष्यतिभूरिदः २५ एवंदुराशयाध्वस्तनिद्राद्वार्यवऽलंबिनी निर्गच्छंतीप्रविशतीनिशीथंसमपद्यत २६ तस्याविन्नाशयाशुष्यद्वक्त्रायादीनचेतसः निर्वेदः परमोजज्ञेचिंताहेतुः सुखावहः २७ तस्यानिर्विण्णचित्तायागीतंशृणुयथामम निर्वेदआशापाशानांपुरुषस्ययथाऽह्यसिः न ह्यंऽगाजातनिर्वेदोदेहवंधंजिहासति ॥२८॥ ॥२८॥ ॥२८॥ ॥२८॥

निशीथंअर्धरात्रंप्राप्य २६ निर्वेदः अलंबुद्धिः वित्तचिंतैवहेतुर्यस्यसः २७ यथायथावत् ममसत्तःशृणु ननुकिंनिर्विण्णयायागीतश्रवणेनतत्राह हियस्मात्पुरुषस्याशापाशानांनिर्वेदोऽसिर्यथातथाछेत्तातत्रहेतुःनहि

भा॰ ए॰ ३९ ८

अविजितात्मत्वेहेतुः याऽहंवालिशाविवेकशून्यातस्मात्कुतः येनकारणेनअसतःतुच्छान्नरात्कामंकाममयेवालिशत्वंप्रपंचयतिसंतमितिचतुर्भिः समीपेसंतंअंतर्यामित्वात् इमंअपरोक्षमीश्वरं ३० अतिविगर्ह्यातिनिंद्या। यावान्तोजीविकातयाकृतः सांकेत्येनयावृत्तिः तयाबहुव्रीहिणास्वविशेषणंवापरितापंप्रपंचयतिस्त्रैणादिति॥ स्त्रीलंपटतत् अयचअर्थतृषःलुब्धात् अतएवानुशोच्यान्नरात् याहंवित्तंरतिचेच्छतीमयावृथाऽत्मापरितापितःकेनवित्तमिच्छतीति तेननरेणक्रीतेनेस्वयंविक्रीतेनात्मनादेहेन ३१ अहोधिङ्मांयाऽहमतिबीभत्सितंभजा।

पिंगलोवाच अहोमेमोहवितर्तिंपश्यताऽविजितात्मनःयाकांतादसतःकामंकामयेयेनवालिशा २९ संतंसमीपेरमणंरतिप्रदंवित्तप्रदंनित्यमिमंविहाय अकामदंदुःखभयादिशोकमोहप्रदंतुच्छमहंभिजेज्ञा ३० अहोमयाऽत्मापरितापितोवृथासांकेत्यवृत्त्याऽतिविगर्ह्यवार्त्त्या। स्त्रैणान्नरादर्थतृषोऽनुशोच्याक्रीतेनवित्तंरतिमात्मनेच्छती ३१ यदस्थिभिर्निर्मितवंशवंश्यस्थूणंत्वचारोमनखैःपिनद्धं क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णंमदुपैतिकान्या ३२

मीत्याहयदितिवंशोनामस्थूणासुनिहितस्तिर्यक्वेणुःवंश्यास्तस्मिन्नुभयतोनिहितावेणवःअस्थिभिरेवनिर्मितावंशादयोयस्मिनततत्रपृष्ठेदीर्घमस्थियतसवंशःपार्श्वस्थानिवंश्यानिस्थूणाहस्तपादास्थीनितथारोमभिर्नखैश्चपिनद्धछादितं तयाऽपिक्षरंतिनवद्वाराणियस्मिन् तत् एवंभूतागाररूपेनरशरीरमेततत् मत् मत्तोऽन्याकावाकांतबुद्ध्याउपैतिसेवते ३२ ॥

राम ३९

समुद्राच्छिक्षितमाह मुनिरिति बहिः प्रसन्नश्चासौ अंतर्गंभीरश्च दुर्विगाह्यः एवंभूत इति परिकलयितुमशक्यः अलक्ष्याभिप्रायत्वात् दुरत्ययः अनतिक्रमणीयः तेजस्वित्वात् अनंतपारः कालतो देशतश्चापरिच्छेद्यः स्वरूपाविर्भावात् अक्षोभ्यः अविकार्यः रागाद्यभावात् स्तिमितोदः निश्चलोदको ऽर्णवो यथा तद्वदेतैर्गुणैर्भवेदित्यर्थः ५ किंच वर्षासु सरिद्भिः समृद्धो ऽपि सागरो यथा नोत्सर्पेत ग्रीष्मे तद्विहीनो ऽपि न शुष्येत तथा समृद्धकामस्तद्विहीनो वा न हृष्येत न शोचेदित्यर्थः अत्र हेतुः नारायणपरः न तु विषयपर इति ६ रूपगंधस्पर्शशब्दरसैः पंचभिर्विषयैर्मोहिताः पतंगमधुकरगजहरिण

मुनिः प्रसन्नगंभीरो दुर्विगाह्यो दुरत्ययः अनंतपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ५ समृद्धकामो हीनो वा नारायणपरो मुनिः नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ६ दृष्ट्वा स्त्रियं देवमायां तद्भावैर-जितेंद्रियः प्रलोभितः पतत्यंधे तमस्यग्नौ पतंगवत् ७ योषिद्धिरण्याभरणांबरादिद्रव्येषु मायार-चितेषु मूढः प्रलोभितात्मा ह्युपभोगबुद्ध्या पतंगवन्नश्यति नष्टदृष्टिः ८ स्तोकं स्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता गृहानहिंसन्नातिष्ठेद्वृत्तिं माधुकरीं मु[illegible] ९॥ मीनाहताः अतस्तेष्वनासक्तो पंचैते गुरवः तद्

कं पतंगमातंगकुरंगभृंगमीनाहताः पंचभिरेव पंच एकः प्रमादी स कथं न हन्यते यः सेवते पंचभिरेव पंचेति तत्र रूपविलासमोहितो नश्यतीति पतंगाच्छिक्षितमाह दृष्ट्वेति तस्या भावैः प्रलोभितः ७ स्त्रियमुपलक्षणीकृत्यैतत्प्रपंचयति योषिदिति ८ मधुकराच्छिक्षितमाह स्तोकमिति गृहान् गृहस्थान् अहिंसन् अपीडयन् अयं भावः यथा मधुकरो विशिष्टगंधलोभेनैकस्मिन्नेव पद्मे वसन्नसमये मुसमये मुकुलितेन तस्मिन् ध्मते एवं मुनिरपि गुणलोभेनैकमेव गृहमाश्रितस्त

गृहासक्तिस्त्रिरश्चामप्यनर्थहेतुः मानुषस्यत्वतिनिंदितेत्याह यः प्राप्येति ७४ ॥ ॥इतिश्रीभागवतेमहापु
राणेएकादशस्कंधेटीकायांसप्तमोऽध्यायः ७॥ अष्टमेऽजगरादिभ्योनवभ्यः शिक्षितंहरिः अवधूतगिराप्राह
विवेकायोद्धवंप्रति १ प्रारब्धकर्मभोगस्यावश्यंभावित्वात्तदर्थोद्यमैर्नायुर्व्ययोवृथाकर्त्तव्यइतिअजगराच्छिक्षित
मित्याह सुखमित्यादिना यदैंद्रियकंसुखंतत्स्वर्गेनरकेचभवत्येवयथादुःखंतस्मात् बुधस्तन्नेच्छेत् १ शरीरनिर्वा

यःप्राप्यमानुषंलोकंमुक्तिद्वारमपावृतं गृहेषुखगवत्सक्तस्तमारूढच्युतंविदुः ७४॥ ॥
इतिश्रीभागवतेमहापुराणेएकादशस्कंधेपारमहंस्यांअवधूतोपाख्यानेसप्तमोध्यायः ७॥
श्रीब्राह्मणउवाच सुखमैंद्रियकंराजन्स्वर्गेनरकएवच देहिनांयद्यथादुःखंतस्मान्नेच्छेत
तद्बुधः १ ग्रासंसुमृष्टंविरसंमहांतंस्तोकमेवच यदृच्छयैवापतितंग्रसेदाजगरोऽक्रियः
२शयीताहानिभूरीणिनिराहारोऽनुपक्रमः यदिनोपनमेद्ग्रासोमहाहिरिवदिष्टभुक् ३
ओजःसहोबलयुतंबिभ्रद्देहमकर्मकं शयानोवीतनिद्रश्चनेहेतेंद्रियवानपि ४॥ ॥

हमात्रंतुयथालब्धेनकर्त्तव्यमित्याहग्रासमिति आजगरः अजगरवृत्तिः अक्रियःउदासीनः २ यदानापततितत
दाकिंकर्त्तव्यंतत्राहशयीतेति अनुपक्रमःनिरुद्यमः दिष्टभुक्दैवमेवप्रापकमितिधैर्यवान् ३ ननुसमर्थोपिशयी
तैवकिंओमित्याह ओजइति ओजइंद्रियबलं सहोमनोबलंबलंशारीरमेव तद्युक्तमपिदेहमकर्मकमेवबिभ्रत्श
यानएवभवेत् वीतनिद्रःस्वार्थदत्तदृष्टिश्चभवेत् नपुनरीहेत इंद्रियवानपीतिदर्शनादिव्यापारमपिनिवारयति ४॥

७

भा॰ए॰ उत्सुकत्वादेवचतत्पोषणार्थंगतौसंतौपोषणंभक्ष्यं ६४ ६५ शिचाजालेन ६६ आत्मानुरूपांभार्यांवि

३५ ललापसुशोच ६७ विलापमाह त्रयेण अहोइति अतृप्तस्यदृष्टसुखे अकृतार्थस्य अदृष्टमसंपादितवतः॥

कपोतश्चकपोतीचप्रजापोषेसदोत्सुकौ गतौपोषणमादायस्वनीडमुपजग्मतुः ६४ कपोती

स्वात्मजान्वीक्ष्यवालकान्जालसंवृतान् तानभ्यधावत्क्रोशंतीक्रोशतोभृशदुःखिता ६५

साऽसकृत्स्नेहगुणितादीनचित्ताऽजमायया स्वयंचाऽवध्यतशिचावद्धान्पश्यत्यपस्मृतिः॥

६६ कपोतश्चात्मजान्वद्धानात्मनोऽप्यधिकान्प्रियान् भार्यांचात्मसमांदीनोविललापातिदुः

खितः ६७ अहोमेपश्यताऽपायमल्पपुण्यस्यदुर्मतेः अतृप्तस्याऽकृतार्थस्यगृहस्त्रैवर्गिको

हतः ६८ अनुरूपाऽनुकूलाचयस्यमेपतिदेवता शून्येगृहेमांसंत्यज्यपुत्रैःस्वर्यातिसाधुभिः ६९

सोहंशून्येगृहेदीनोमृतदारोमृतप्रजः जिजीविषेकिमर्थंवाविधुरोदुःखजीवितः ७० तांस्त

थैवावृतान्शिग्भिर्मृत्युग्रस्तान्विचेष्टतः स्वयंचकृपणःशिक्षुपश्यन्नप्यवुधोऽपतत् ७१ तंल

ब्ध्वालुब्धकःक्रूरःकपोतंगृहमेधिनं कपोतकान्कपोतींचसिद्धार्थःप्रययौगृहं ७२ एवंकुटुंब्य

शांतात्माद्वंद्वारामःपतत्रिवत् पुष्णन्कुटुंबंकृपणःसानुवंधोऽवसीदति ७३॥ २६९ ॥

६८ ६९ ७० तानावृतान् पश्यन्नपिशिक्षुजालेषु ७१ ७२ दार्ष्टांतिकेयोजयतिएवमिति ७३॥ २७९ ॥ राम ३५

विस्रब्धौ निःशंकौ ५५ सा कपोती तर्पयंती सहासवीक्षिताला पादिभिः प्रीणयंती अत एव तेनानुकंपिता सती यं
यं वांछति तं तं कामं समनयत् संपादयामास राजन्निति त्वं यथेति रूचिं ५६ ५७ तेषु जलभरितेष्वंरे पुहरोः स्व

शय्यासनाटनस्थानवार्त्ताक्रीडाऽशनादिकं मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ५५ यं यं
वांछति सा राजंस्तर्पयंत्यऽनुकंपिता तं तं समनयत्कामं कृच्छ्रेणाप्यजितेंद्रियः ५६ कपोती प्र
थमं गर्भं गृह्णती काल आगते अंडानि सुषुवे नीडे स्वपत्युः संनिधौ सती ५७ तेषु काले व्यजायंत
रचितावयवा हरेः शक्तिभिर्दुर्विभाव्याभिः कोमलांगतनूरुहाः ५८ प्रजाः पुपुषतुः प्रीतौ
दंपती पुत्रवत्सलौ शृण्वतौ कूजितं तासां निर्वृतौ कलभाषितैः ५९ तासां पतत्रैः सुस्पर्शैः कू
जितैर्मुग्धचेष्टितैः प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ६० स्नेहानुबद्धहृदयावऽन्योन्यं
विष्णुमायया विमोहितौ दीनधियौ शिशून्पुपुषतुः प्रजाः ६१ एकदा जग्मतुस्तासा
मन्नार्थौ तौ कुटुंबिनौ परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरं ६२ दृष्ट्वा तान्लुब्धकः
कश्चिद्यदृच्छातो वनेचरः जगृहे जालमातत्य चरतः स्वालयांतिके ६३॥ ॥भावकर्मादिशक्तिभिः

रचितावयवाः पक्षिणः कोमलान्यंगानि तनूरुहाश्च येषां ते ५८ ५९ पतत्रैः पक्षैः अदीनानां हृष्टानां ६० शि
शून्बालान् प्रजाः पुत्रान् ६१ ६२ स्वालयांतिके चरतः क्रीडतः तान् कपोतपुत्रान् आतत्य प्रसार्य ६३॥ ॥

सिंहावलोकनेनाग्निदृष्टांतेनैव देहानां क्षणभंगुरतया वैराग्यं शिक्षितमित्याह कालेनेति ओघवद्वेगो यस्य तेन आत्मनः संबंधिनां भूतानां देहानामित्यर्थः अर्चिषां ज्वालानां ४८ आदित्याच्छिक्षितमाह द्वयेन गुणैरिंद्रियैर्गुणान्विषयानुपादत्ते यथाकालं अर्थिन्यागते सति विमुंचति च न तेषु युज्यते लब्धमिति दत्तमिति वाऽभिनिवेशं न करोति गोभिः रश्मिभिः गाः जलानि गोपतिः सूर्यो यथा ५० स्वतो भेदशून्यस्याप्यात्मनो भेदप्रतीतिरूपाधिवशा

कालेन ह्योघवेगेन भूतानां प्रभवाप्ययौ नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथाऽर्चिषां ४९ गुणैर्गुणानुपादत्ते यथाकालं विमुंचति न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ५० बुध्यते स्वे न भेदेन व्यक्तिस्थ इव तद्गतः लक्ष्यते स्थूलमतिभिरात्मा चाऽवस्थितोऽर्कवत् ५१ नातिस्नेहः प्रसंगो वा कर्तव्यः क्वापि केनचित् कुर्वन्विंदेत संतापं कपोत इव दीनधीः ५२ कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ कपोत्या भार्यया सार्द्धं उवास कतिचित्समाः ५३ कपोतौ स्नेहगुणितहृदयौ गृहधर्म्मिणौ दृष्टिं दृष्ट्याऽङ्गमंगेन बुद्धिं बुद्ध्या ववंधतुः ५४ ॥ ॥ ॥

दित्यादित्यदृष्टांतेनैव संभावितमित्याह बुध्यत इति स्वे स्वरूपेऽवस्थित आत्मा भेदेन न बुध्यते अभिव्यनक्तीति व्यक्तिरुपाधिः व्यक्तिस्थः उपाधौ प्रतिबिंबितस्तु तद्गत इव उपाधिप्रविष्ट इव भेदेन स्थूलमतिभिर्लक्ष्यते अर्कवदित्यन्वयः ५१ कपोताच्छिक्षितमाह नातिस्नेह इति स्नेहः प्रीतिः प्रसंगः उपलालनाद्यासक्तिः ५२ दृष्टांतं प्रपंचयति कपोतः कश्चनेति ५३ उभयोर्मिथः स्नेहप्रसंगौ दर्शयति कपोताविति त्रयेण स्नेहेन गुणितं निबद्धं हृदयं ययोस्तौ ५४॥

अग्नेः शिक्षितमाह तेजस्वीति तेजस्वी ज्ञानातिशयात् विशेषतस्तपसा दीप्तः दुर्धर्षः अक्षोभ्यः सचासावुदरभाजनश्च अपरिग्रहः युक्तात्मामुनिः ४५ अग्नेरेव शिक्षांतरमाह क्वचिदिति यथाऽग्निः परेच्छयैवहविर्गृह्णातितथामुनिरित्याह दातृणामिति प्रागुत्तराशुभंभूतं भविष्यच्चपापं ४६ आत्मनोदेहोपाधिकमेवोच्चनीचत्वादिनस्वाभाविकमित्यप्यग्निदृष्टांतेनसंभावितमित्याह स्वमाययेति स्वमायया स्वाविद्यया सृष्टं सदसल्लक्षणं देवतिर्यगादिरूपं विप्रशूद्रादिरूपं वा ४७ आत्मनोजन्मादिषड्विकाराभावश्चंद्रदृष्टांतेन संभावितइत्याह विसर्गाद्याइति विसर्गोजन्मश्मशानं नाशः तत्रेयंज्योतिःशा

तेजस्वीतपसादीप्तोदुर्द्धर्षोदरभाजनः सर्वभक्षोऽपियुक्तात्मानादत्तेमलमग्निवत् ४५ क्वचिच्छन्नः क्वचित्स्पष्टउपास्यः श्रेयइच्छतां भुंक्तेसर्वत्रदातॄणांदहन्प्रागुत्तराशुभं ४६ स्वमाययासृष्टमिदं सदसल्लक्षणंविभुः प्रविष्टईयतेतत्तत्स्वरूपोऽग्निरिवैधसि ४७ विसर्गाद्याःश्मशानांताभावादेहस्यनात्मनः कलानामिवचंद्रस्यकालेनाऽव्यक्तवर्त्मना ४८॥

स्त्रप्रक्रिया आप्यमंडलंचंद्रः तेजोमयमंडलमादित्यः तयोरेकनक्षत्रावस्थानेचंद्रोनदृश्यतेचक्षुषा आदित्यमंडलेनसमदेशस्थितेनव्यवधानात् साअमावस्या अथषष्टिघटिकाभिश्चंद्रोनक्षत्रांतरंगच्छति आदित्यस्तुत्रयोदशभिरहोरात्रैः अतःप्रतिपदमारभ्यविषमस्थितस्यआदित्यमंडलस्यपंचदशः पंचदशोभागआप्यमंडलेप्रतिबिंबितोदृश्यते साकलेत्युच्यते एवंपंचदशेऽह्नित्रयोदशभिर्नक्षत्रैरंतरमितिराशिचक्रस्यसप्तविंशतिनक्षत्रात्मकस्यमध्येसंमुखौचंद्रादित्यौतिष्ठतः तदासंपूर्णप्रतिबिंबं भूच्छायालांछितंदृश्यतेसापूर्णिमा तस्यामेवामावास्याप्रतिबिंबेनसहषोडशकलश्चंद्रः उपचर्यते ततःपुनःप्रतिपदमारभ्यमंडलयोर्विषमीभावात्कला

वायोरेवशिक्षितमित्याह पार्थिवेष्विति ४१ एकस्यैवाद्वितीयस्यात्मनोंतर्बहिर्भावेनवर्त्तमानत्वमसंगत्वं चेतिआकाशाच्छिक्षितसंभावनाद्वयमाह अंतर्हितश्चेतिद्वयेन अंतर्हितश्चदेहांतर्गतोऽपिमुनिरात्मनो देहाद्यसंगं अतएवाव्यवच्छेदंचभावयेत् कुतः स्थिरजंगमेषुसमन्वयेनयाव्याप्तिस्तया किंमणिषुसूत्रस्येव व्याप्तिः नवितततस्यसर्वगतस्य तत्कुतः ब्रह्मात्मभावेनब्रह्मस्वरूपभावनयातत्त्वमसीतिश्रुतेः नन्वेतत्सर्वं कथंसंभवतितत्राह नभस्त्वंतत्तुल्यत्वंसंभावयेत् यथानभसः सर्वगतस्यनघटादिभिःसंगः परिच्छेदोवा

गुणैर्नयुज्यतेयोगीगंधैर्वायुरिवाऽत्मदृक् ४१ अंतर्हितश्चस्थिरजंगमेषुब्रह्मात्मभावेन समन्वयेनव्याप्त्याऽव्यवच्छेदमसंगमात्मनोमुनिर्नभस्त्वंविततस्यभावयेत् ४२ तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः नस्पृश्यतेनभस्तद्वत्कालसृष्टैर्गुणैःपुमान् ४३ स्वच्छःप्रकृतितः स्निग्धोमाधुर्यस्तीर्थभूर्नृणां मुनिःपुनात्यपांमित्रमीक्षोपस्पर्शकीर्त्तनैः ४४ ॥ ॥

एवमात्मनोऽपिसंभवतीति ४२ किंच कूटस्थस्यात्मनोनानागपापादिदेहादिसंबंधइत्याह तेजोवन्नमयैः तेजश्चआपश्चअन्नंपृथिवीचतन्मयैः कालसृष्टैर्गुणैर्देहादिभिःपुमान्नसंस्पृश्यतइतिनभोवत्संभवतीति ४३ स्वच्छत्वादिभिर्गुणैःउदकंजगत्पुनातीतितद्गुणमयाशिक्षितमित्याह स्वच्छःनिर्मलः प्रकृतितःस्वभावतःस्निग्धःजनेष्वनुरागवान् माधुर्यःमधुरालापीतीर्थभूःतीर्थस्थानं अपांमित्रंउदकतुल्यः अघादितिपाठेसर्वांयंपापात्पुनाति स्वच्छत्वादिगुणैर्यादुदकसादृश्यंज्ञातव्यं ४४ ॥ ९ ॥

क्षितेः क्षमांशि क्षितवानित्याह भूतैरिति आक्रम्यमाणः पीड्यमानः तद्विद्वान् भूतानांदैववशवर्त्तित्वंविद्वान् व्रतंनियमं ३७ पर्वतरूपावृक्षरूपाचयापृथिवीतस्याःशिक्षितमाह शश्वदिति सर्वदापरार्थाः परोपकारार्थाःसर्वाईहायस्यसः परार्थएवएकांततः संभवोयस्यसः भूभृत्तः पर्वतात् तस्यहिवृक्षतृणनिर्झरप्रसवक्रियाः परार्थाएवयथातद्वत् तथान गशिष्यः वृक्षशिष्यः सन् परात्मतांपराधीनात्मतां वृक्षोयथापरैस्वखंड्योत्पाद्यवानयनमप्यनुमन्यतेतद्वत् ३८ वा युरपिद्विविधः प्राणोवाह्यश्चतत्रप्राणस्यगुरुत्वमाह प्राणवृत्त्येतिप्राणोह्याहारादिमात्रेणप्रवर्त्ततेरूपरसादीनिंद्रियवि

भूतैराक्रम्यमाणोपिधीरोदैववशानुगैः तद्विद्वान्नचलेन्मार्गादन्वशिक्षंक्षितेर्व्रतं ३७ शश्व त्परार्थसर्वेहः परार्थैकांतसंभवः साधुःशिक्षेतभूभृत्तोनगशिष्यःपरात्मतां ३८ प्राणवृत्त्यै वसंतुष्येन्मुनिर्नैवेंद्रियप्रियैः ज्ञानंयथाननश्येतनावकीर्येतवाङ्मनः ३९ विषयेष्वाविशं न्योगीनानाधर्मेषुसर्वतः गुणदोषव्यपेतात्मानविषज्जेतवायुवत् ४० पार्थिवेष्विहदेहेषु प्रविष्टस्तद्गुणाश्रयः॥

एवंयांस्तुनापेक्षते तथामुनिरपिभवेदित्यर्थः प्राणवृत्तेरकरणेमनोवैकल्येनज्ञाननाशः स्या त् अतोदेहनिर्वाहः कर्त्तव्यः गुणलिप्सायांतुवाक्मनश्चविक्षिप्येत अतोनाधिकंलिप्सेदित्याह ज्ञानमिति नावकीर्येतन विक्षिप्येत ३९ विषयान्सेवमानोपितेष्वनासक्तिंवाह्याद्वायोःशिक्षेदित्याह विषयेति नानाधर्मेषुशीतोष्णादिधर्मके षु नहिवायुर्वनेदहनेवासज्जतेतद्वत् ४० यथावायुर्गंधादिधर्मयोगेनप्रतीयमानोऽपिवस्तुतोनतद्योगी एवंदे हादिधर्मयोगेनाहंप्रत्ययेनप्रतीयमानोऽप्यात्मा नतद्धर्मवानितिसंभावितमिति॥ ज्ञानंयथाननश्येतमनोवाग्यथा ३९

त्वंतु न कस्यचित्कर्मणः कर्त्ताभवसि नच किंचिदीहसे इच्छसि नन्वशक्त्यावा अज्ञानेनवा अनैपुण्येनवा विरूपत्वेनवा ॥ देहः पुष्टःदृढः ॥ अवाप्तितयावा औदासीन्यं घटत एवनेत्याह कल्प इत्यादिना २८ महानानंदश्चनवकुत इति पृच्छति जनेष्विति २९ स

त्वंतु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः नकर्त्ता नेहसे किंचिज्जडोन्मत्तपिशाचवत् २८ जा॰

नेषुदह्यमानेषु कामलोभदवाग्निना नतप्यसेऽग्निनामुक्तो गंगांभःस्थ इवद्विपः २९ त्वं हिनः

पृच्छतां ब्रह्मन्न्नात्मन्यानंदकारणं ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ३० श्रीभगवानु

वाच यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा पृष्टः सभाजितः प्राह प्रश्रयावनतं नृपं ३१ श्री

ब्राह्मणउवाच संतिमेगुरवोराजन्बहवोबुद्ध्युपाश्रिताः यतोबुद्धिमुपादाय मुक्तोऽटामीह तां

छृणु ३२ पृथिवीवायुराकाशमापोऽग्निश्चंद्रमारविः कपोतोऽजगरः सिंधुः पतंगोमधुकृद्गजः ३३ मधुहाहरिणोमीनः पिंगलाकुररोऽर्भकः कुमारीशरकृत्सर्प्प ऊर्णनाभिः सुपेशकृत् ३४

एतेमेगुरवोराजंश्चतुर्विंशतिराश्रिताः शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ३५ यतो

यदनुशिक्षामि यथावानाहुषात्मज तत्तथापुरुषव्याघ्रनिबोधकथयामिते ३६ ॥ स्पर्शविहीनस्य विषय

भोगरहितस्य अत्रहेतुः केवलात्मनः कलत्रादिशून्यस्य ३१ बुद्ध्यैवोपाश्रिताः स्वीकृताः नतूपदेशेन अटामि पर्यटामि ३२

३३ शोभनं रूपं कीटस्य करोतीति सुपेशकृत् ३४ मेमयाआश्रिताः तदाह एतेषां वृत्तिभिः आत्मनः शिक्षाः शिक्षणीयानर्थान्

गुरुणाह पृथिवीति ॥ १३ ॥

[illegible]

अतः पुरुषं स्तौति एकेति एकः पादो येषां तदादयः पुरः शरीराणि मया सृष्टास्तासां पुरां मध्ये पौरुषी तनुर्मे मम प्रिया २२
अनुमानमाह अत्रेति अत्र पौरुष्यां पुरि युक्ता अप्रमत्ताः अग्राह्यं ग्राह्येभ्योऽहंकारादिभ्यो व्यतिरिक्तं मां अद्धा सा
क्षात् मृगयंति मार्गणप्रकारद्वयमाह गृह्यमाणैर्बुद्ध्यादिभिर्गुणैर्हेतुभिः जडानां प्रकाशः स्वप्रकाशमेकं विना न
घटत इति अनुपपत्तिमुखेन लक्षकैः तथा तैरेव लिंगैः व्याप्तिमुखेनानुमानत ईश्वरं प्रवर्त्तकं मृगयंते बुद्ध्यादिकरणानि

एकद्वित्रिचतुष्पादो बहुपादस्तथाऽपदः बह्व्यः संति पुरः सृष्टास्तासां मे पौरुषी प्रिया २२ अत्र
मां मार्गयंत्यद्धा युक्ता हेतुभिरीश्वरं गृह्यमाणैर्गुणैर्लिंगैरग्राह्यमनुमानतः २३ अत्राप्युदाह
रंतीममितिहासं पुरातनं अवधूतस्य संवादं यदोरमिततेजसः २४ अवधूतं द्विजं कंचिच्चरं
तमकुतोभयं कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् २५ यदुरुवाच कुतो बुद्धिरियं ब्रह्म
न्नकर्त्तुः सुविशारदा यामासाद्य भवाल्लोकं विद्वांश्चरति बालवत् २६ प्रायो धर्मार्थकामेषु
विवित्सायां च मानवाः हेतुनैव समीहंते आयुषो यशसः श्रियः २७॥ ((कर्तृप्रयोज्यानि करणत्वाद्वा

स्यादिवदिति तदुक्तं भगवान् सर्वभूतेषु लक्षितः स्वात्मना हरिः दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैरिति न चैता
वता आनुमानिक आत्मेति मंतव्यं देहादिव्यतिरिक्तत्वं पदार्थशुद्धिमात्रस्यैवानुमानेन विवक्षितत्वात् २३ भूयोऽन्वय
व्यतिरेकाभ्याम संभावनादि निवृत्तावितिहासमाह अत्रापीति २४ २५ सुविशारदा अतिनिपुणा सर्वलोकविलक्षणा
२६ सर्वलोकवैलक्षण्यमेवाह प्राय इति धर्मादिषु विवित्सायां आत्मविचारे च मानवाः समीहंते प्रवर्त्तंते तत्रापि आयुरादे

नरसखनरोजीवः नीयते विक्षिप्यते दुःखैरिति ७ नु॰
केचित् दुःशीला भवंति केचित्तेविताः फलकालेविनश्यंति केचिदज्ञाः केचिद्रक्षणेऽसमर्थाः केचित्तुस्थानभ्रष्टाः
तस्मात्त्वमेवानवद्यमित्यादीनि पंच विशेषणानि नअंततः कालतः पारं देशतश्चयस्यतं कालादिभिरकुंठो विकुंठलो
को धिष्ण्यं स्थानं यस्य तं उहेभगवन् हस्फुट निर्वेदहेतुः वृजिनैर्दुःखैरभितप्तः हकारगौरवाययद्वकारोयुक्तइवपठ
नीयः नन्वनवद्यत्वादीनि कुतो मम तदाह नारायणमिति अनुकंपितामाहैँनरो जीव तस्य सखायं भवंतं शरणं
प्रपद्ये १८ तदेवमसंभावनाविपरीतभावनाभ्यामुपदिष्टं तत्वमनवमाहमानप्रतितन्निरूह्नयेगुरूपदेशं विनाऽपि

तस्माद्भवंतमनवद्यमनंतपारं सर्वज्ञमीश्वरमकुंठविकुंठधिष्ण्यं निर्विण्णधीरहमुहवृ
जिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये १८ श्रीभगवानुवाच प्रायेण मनुजा॥
लोके लोकतत्वविचक्षणाः समुद्धरंति ह्यात्मानमात्मनैवाऽशुभाशयात् १९ आत्मनो
गुरुरात्मैव पुरुषस्य विशेषतः यत्प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविंदते २० पुरुष॥
त्वे च मां धीराः सांख्ययोगविशारदाः आविस्तरां प्रपश्यंति सर्वशक्त्युपबृंहितं २१ ॥ ॥

स्वान्वयव्यतिरेकाभ्यामेव तत्वप्रतिपत्तिर्भवतीति दर्शयितुमितिहासमाह प्रायेणेति लोकतत्वस्य विचक्षणाः परीक्ष
काः अशुभाशयात् विषयवासनातः १९ तदुपपादयति आत्मनः पश्वादिशरीरेऽप्यात्मैव हिताहितज्ञाने गुरुः २० तत्र
प्रत्यक्षं दर्शयति पुरुषत्वे चेति तथा च श्रुतिः पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञा॥
तं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिज्ञानमिति

त्वंतुसर्वंपरित्यज्येत्याद्युपदेशमात्मनोऽयोग्यंमन्वानः पृच्छति योगेशेति योगफलदायिन् योगविदांन्यासोना
मातिगोप्योनिक्षेपविशेषः॥ ॥यद्वायोगोविन्यस्यतेक्रियते यस्मिन् योगात्मन् योगेआत्माप्रकटोभवति
यस्ययोगस्वरूपेतिवा योगस्यसंभवोयस्मात् चतुर्भिरेतैः संबोधनैः स्वमहिम्नाकेवलंत्वयोपदिष्टंनतुमदधिका
रंपर्यालोच्येतिद्योतितं तदाह निःश्रेयसायेतिनत्वारोग्याद्यर्थंसर्वस्वदानादिवदर्थत्यागः किंतुसंन्यासलक्षणः अप्रत्या
पत्तिरूपः १४ १५ यंप्रतित्यागाद्युपदिष्टंसोहं मूढमतिः कुतः ममेतिअहमितिचसानुबंधेपुत्रादिसहितेत्वन्माय

उद्धवउवाच योगेशयोगविन्यासयोगात्मन्योगसंभव निःश्रेयसायमेप्रोक्तस्त्यागः संन्यास
लक्षणः १४ त्यागोऽयंदुष्करोभूमन्कामानांविषयात्मभिः सुतरांत्वयिसर्वात्मन्नभक्तैरिति
मेमतिः १५ सोऽहंममाऽहमितिमूढमतिर्विगाढस्त्वन्माययाविरचितात्मनिसानुबंधे तत्त्वंऽज
सानिगदितंभवतायथाऽहंसंसाधयामिभगवन्ननुशाधिभृत्यं १६ सत्यस्यतेस्वदृशआत्मनआ
त्मनोऽन्यंवक्तारमीशविबुधेष्वपिनानुचक्षे सर्वेविमोहितधियस्तवमाययेमेब्रह्मादयस्तनुभृ
तोवहिरर्थभावाः १७॥ एयाविरचितेआत्मनिदेहेविगाढोनिमग्नः अतः तत्तुभवतानिगदितंयथाऽ
हमंजसासंसाधयामितथाभृत्यंमामनुशाधिशनैःशिक्षय १६ मयासंक्षेपतउक्तंविस्तरतस्त्वमान्पृच्छे
तिचेत् अतआह सत्यस्येति स्वदृशः स्वप्रकाशस्यसत्यस्यात्मनः आत्मनोमांप्रतिवक्तारंत्वत्तः अन्यंनानुचक्षेनप
श्यामि स्वदृशः स्वतः सिद्धज्ञानात्त्वत्तोऽन्यमितिवाकुतइत्यतआह सर्वइति वहिरर्थभावाः विषयेष्वर्थबुद्धयः १७॥

कथमात्मनिपरिच्छिन्नेविततंजगदीक्षणीयं तत्राह आत्मानमिति मयिब्रह्मणितद्रूपेणेक्षस्व ८ नन्वेवं युक्तचित्तत्वेनकर्माकरणेदेवादयोविघ्नान्करिष्यंति तत्राह ज्ञानेति ज्ञानंवेदतात्पर्यनिश्चयः विज्ञानं। तदर्थानुभवः ताभ्यांसम्यक्युक्तः ततश्चआत्मानुभवेनैवतुष्टचित्तः अतः शरीरिणांदेवादीनां आत्मभूतः अं। तरायैर्नप्रतिहन्यसे अयंभावः यावदनुभवंयथाश्रमंकर्माणिकुर्यादेव तदनंतरंसर्वेषामात्मभूतत्वान्नकोऽ

तस्माद्युक्तेंद्रियग्रामोयुक्तचित्तइदंजगत् आत्मनीक्षस्वविततमात्मानंमय्यधीश्वरे ९
ज्ञानविज्ञानसंयुक्तआत्मभूतः शरीरिणां आत्मानुभवतुष्टात्मानांतरायैर्विहन्यसे १०
दोषबुद्ध्योभयातीतोनिषेधान्ननिवर्त्तते गुणबुद्ध्याचविहितंनकरोतियथाऽर्भकः ११
सर्वभूतसुहृच्छांतोज्ञानविज्ञाननिश्चयः पश्यन्मदात्मकंविश्वंनविपद्येतवैपुनः॥
१२ श्रीशुकउवाच इत्यादिष्टोभगवतामहाभागवतोनृप उद्धवःप्रणिपत्याहतत्व
जिज्ञासुरच्युत १३ ॥ ९ पिविघ्नानाचरतीति तथाचश्रुतिः तस्यहनदेवाश्चनाभूत्याईशिरे आत्माह्येषांसभवतीति १० नचोत्पन्नज्ञानस्यापियथेष्टाचरणप्रसंगइत्याह दोषबुद्ध्येति गुणदो षबुद्ध्यातीतोऽपिप्राक्तनसंस्कारान्निषेधान्निवर्त्ततएव किंतुनदोषबुद्ध्या विहितंचप्रायशः करोतिन गुणबुद्ध्या यथाऽर्भकः संकल्पविकल्परहितः किंचित्करोतिकुतश्चिन्निवर्त्ततेतद्वत् ११ एवंभूत स्यनपुनः संसारइत्याह सर्वभूतेति नविपद्येतनपुनः संसरेत १२ १३॥ ॥ ॥

सप्तमे तूद्धवस्यात्मज्ञानसिद्ध्यै हरिः स्वयं अवधूतेतिहासोक्तगुरुष्वऽष्टाववर्णयत् १ यदात्थ संहृत्यैतत् कुलमिति स्ववीसं वैकुंठवासं प्रति १ २ त्वं च सर्वत्यागेनात्मनिष्ठो भवेति वक्तुमाह कुलमिति त्रयेण ३ तदैवायं नष्टमंगलो भविष्यति निराकृतः नितरामाक्रान्तः ४ न वस्तव्यमेव त्वया ५ ६ ननु गुणदोषाभ्यां विषमे लोके कुतः समदृष्टिः स्यां अत आह यदि

श्रीभगवानुवाच यदात्थ मां महाभाग तच्चिकीर्षितमेव मे ब्रह्मा भवो लोकपालाः स्ववीसं मेऽभिकांक्षिणः १ मया निष्पादितं ह्यत्र देवकार्यमशेषतः यदर्थमवतीर्णोऽहमंशेन ब्रह्मणाऽर्थितः २ कुलं वै शापनिर्दग्धं नंक्ष्यत्यन्योन्यविग्रहात् समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ३ यर्ह्येवाऽयं मया त्यक्तो लोकोऽयं नष्टमंगलः भविष्यत्यचिरात्साधो कलिनाऽपि निराकृतः ४ न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ५ त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबंधुषु मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गां ६ यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः नश्वरं गृह्यमाणं च विद्धि मायामनोमयं ७ पुंसोऽयुक्तस्य नानाऽर्थो भ्रमः स गुणदोषभाक् कर्माकर्मविकर्मेति गुणदोषधियो भिदा ८ ॥ यदिदमिति मनआदिभिर्गृह्यमाणं मनोमयत्वान्मायेति विद्धि तदपि न स्थिरं किंतु नश्वरं च विद्धि ७ मनोमयत्वे हेतुः पुंस इति अयुक्तस्य विक्षिप्तमनसः नानार्थो भेदविषयो भ्रमः स भ्रम एव गुणदोषभाक् ननु वेदेनैव विधिनिषेधाभ्यां भेदस्य सत्यतोक्ता न भ्रमविजृंभितगुणदोषबुद्धेः पुंसः कर्म विहितं अकर्म तल्लोपः विकर्म निषिद्धमिति भेदः अविद्यावद्विषय एव वेद इत्यर्थः ८ ॥

भा॰ए॰ २९

६

॥ ४४ ॥ शय्यादिषुत्वांभक्ताः नित्यंसेवितवंतोवयं कथंत्यजेम ४५ त्यक्तुमशक्तावत् प्रार्थयतेनमायाः
भयादित्याहत्वयेति चर्चिताअलंकृताः हिनिश्चितम् जयेम ४६ सन्यासिनोहिब्रह्मचर्यादिक्लेशैःका

तवविक्रीडितंकृष्णनृणांपरममंगलं कर्णपीयूषमास्वाद्यत्यजत्यऽन्यस्पृहांजनः॥ ४४ शय्यासनाटनस्थानस्नानक्रीडाऽशनादिषु कथंत्वांप्रियमात्मानंवयंभक्तास्त्यजेमहि ४५ त्वयोपभुक्तस्रक्गंधवासोलंकारचर्चिताः उच्छिष्टभोजिनोदासास्तवमायांजयेमहि ४६ वाताशनायऋषयःश्रमणाऊर्ध्वमंथिनः ब्रह्माख्यंधाम तेयांतिशांताःसन्यासिनोऽमलाः ४७ वयंत्विहमहायोगिन्भ्रमंतःकर्मवर्त्मसु त्वद्वार्त्तयातरिष्यामस्तावकैर्दुस्तरंतमः ४८ स्मरंतःकीर्त्तयंतस्तेकृतानिगदितानिच गत्युत्स्मितेक्षणक्ष्वेलियन्नृलोकविडंवनं ४९ शुकउवाच एवंविज्ञापितोराजन्भगवान् देवकीसुतः एकांतिनंप्रियंभृत्यमुद्धवंसमभाषत ५० ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेषष्ठोध्यायः ६ ॥ ॥ ॥

थंचित्तरंनिवयंत्वन्मायांस्तैन्वतरिष्यामइत्याह वाताशनाइतिऊर्ध्वमंथिनःऊर्ध्वरेतसः ४७ तावकैर्भक्तैःसहत्वद्वार्तया ४८ क्ष्वेलीपरिहासःद्वंद्वैकत्वं ४९ एकांतिनमित्यादिस्वाभिप्रायवचनेहेतुः ५०॥इतिश्रीभागवतेमहापुराणेए
दुस्तरंतमःसंसारंप्रत्यु॰

राम २९

सद्योमोक्षं द्वारवत्यां मृतामुच्येरन् तस्मादभ्युदयफलं प्रभासं नेष्यामीति ३५ दक्षशापाद्यक्ष्मणा गृहीतश्चंद्रो
यत्र स्नानमात्रं कृत्वा किल्विषात्तस्माद्रोगदुःखात्सद्यो विमुक्तः सन् कलावृद्धिं भेजे ३६ उशिजः कमनीयान् ॥

प्रभासं सुमहापुण्यं यास्यामोऽद्यैव माचिरं ३५ यत्र स्नात्वा दक्षशापात् गृहीतो यक्ष्मणोडु
राट् विमुक्तः किल्विषात्सद्यो भेजे भूयः कलोदयं ३६ वयं च तस्मिन्नाप्लुत्य तर्प्पयित्वा
पितॄन्सुरान् भोजयित्वोशिजो विप्रान्नानागुणवतांऽधसा ३७ तेषु दानानि पात्रेषु श्रद्धयो
प्त्वा महांति वै वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवं ३८ श्रीशुकदेव उवाच एवं भ
गवतादिष्टा यादवाः कुलनंदन गंतुं कृतधियस्तीर्थं स्यंदनान्समयूयुजन् ३९ तन्निरी
क्ष्योद्धवो राजन् श्रुत्वा भगवतोदितं दृष्ट्वारिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ४० विविक्त
उपसंगम्य जगतामीश्वरेश्वरं प्रणम्य शिरसा पादौ प्रांजलिस्तमभाषत ४१ उद्धव उवा
च देवदेवेश योगेश पुण्यश्रवणकीर्त्तन संहृत्यैतत्कुलं नूनं लोकं संत्यक्ष्यते भवान् वि
प्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः ४२ नाहं तवांघ्रिकमलं क्षणार्द्धमपि केशव त्यक्तुं समुत्स
हे नाथ स्वधाम नय मामपि ४३ ॥ अंधसा अन्नेन ३७ उप्त्वेति यथा सुक्षेत्रे बीजमुप्तं बहुफलं भवति त
था दानं सत्पात्रे इति द्योतयति ३८ ३९ ४० ४१ लोकं मर्त्यलोकं न प्रत्यहन् न प्रतिहतवान् ४२ ४३ ॥

६
भा०११०
२८

२४ २५ २६ २७ २८ वीर्यशौर्ययुक्तयाश्रिया २९ उद्वेलेनलंघितमर्यादेन ३० वैकुंठ्यास्यनूतवभवनंयासामि
यानितेचरितानीशमनुष्याः साधवः कलौ शृण्वंतः कीर्तयंतश्चतरिष्यंत्यंजसातमः २४ य
दुवंशेऽवतीर्णस्यभवतः पुरुषोत्तमः शरच्छतंव्यतीयायपंचविंशाधिकंप्रभो २५ नाऽधुना
तेऽखिलाधारदेवकार्यावशेषितं कुलंचविप्रशापेननष्टप्रायमभूदिदं २६ ततः स्वधामप
रमंविशस्वयदिमन्यसे सलोकान्लोकपालान्नः काहिवैकुंठकिंकरान् २७ श्रीभगवानुवाच
अवधारितमेतन्मेयदात्थविबुधेश्वरः कृतंवः कार्यमखिलंभूमेर्भारोऽवतारितः २८ तदिदंयाद
वकुलंवीर्यशौर्यश्रियोद्धतं लोकंजिघृक्षद्रुद्धंमेवेलयेवमहार्णवः २९ यद्यऽसंहृत्यदृप्तानां
यदूनांविपुलंकुलं गंतास्म्यऽनेनलोकोयमुद्वेलेनविनंक्ष्यति ३० इदानींनाशआरब्धः कुलस्य
द्विजशापतः यास्यामिभवनंब्रह्मन्नेतदंतेतवाऽनघ ३१ श्रीशुकउवाच इत्युक्तोलोकनाथेनस्वयंभूः
प्रणिपत्यतं सहदेवगणैर्देवः स्वधामसमपद्यत ३२ अथतस्यांमहोत्पातान् द्वारवत्यांसमुत्थितान्
विलोक्यभगवानाहयदुवृद्धान्समागतान् ३३ श्रीभगवानुवाच एतेवैसुमहोत्पाताव्युत्तिष्ठंती
हसर्वतः शापश्चनः कुलस्यासीद्ब्राह्मणेभ्योदुरत्ययः ३४ नवस्तव्यमिहाऽस्माभिर्जिजीविषुभिरा
र्यकाः॥ ११ ३१ ३२ ३३ ३४ प्रभासंयास्यामइतिवदतोऽयमभिप्रायः एतेदेवांशाः स्वाधिकारानेवार्हंतिनतु

अलिप्तत्वमाह॥ स्मायेति स्मायावलोकोमंदस्मितविलसितोऽवलोकः तस्यलवः कटाक्षः तेनदर्शितोयोभावोभिप्रायः तेनमनोहारियद्भ्रूमंडलंतेनप्रहितायेसौरतमंत्राः तैः शौंडैः प्रगल्भैः अनंगवाणैः कामस्यवाणैः संमोहनैः करणैः कामकलादिभिःषोडशसहस्रंपत्न्यः यस्येंद्रियंमनः विमथितुंक्षोभयितुंनविभ्व्यः नसमर्थाः सभवान्नलिप्तइति॥

स्मायावलोकलवदर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः पत्न्यस्तुषोडशसहस्रमनंगवाणैर्यस्येंद्रियंविमथितुंकरणैर्नविभ्व्यः १८ विभ्व्यस्तवाऽमृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानिहंतुम् आनुश्रवंश्रुतिभिरंघ्रिजमंगसंगैस्तीर्थद्वयंशुचिषदस्त उपस्पृशंति १९ श्रीबादरायणिरुवाच इत्यभिष्टूयविबुधैः सेशः शतधृतिर्हरिं अभ्भाषतगोविंदंप्रणम्यांवरमाश्रितः २० ब्रह्मोवाच भूमेर्भारावतारायपुराविज्ञापितः प्रभो त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितं २१ धर्मश्चस्थापितः सत्सुसत्यसंधेषुवैत्वया कीर्तिश्चदिक्षुविक्षिप्तासर्वलोकमलापहा २२ अवतीर्ययदोर्वंशेबिभ्रद्रूपमनुत्तमं कर्माण्युद्दामवृत्तानिहितायजगतोऽकृथाः २३॥ ॥पूर्वेणान्वयः १८ तस्मात्तवअमृतरूपायाकथातदेवउदकंवहंतीतितथाकीर्त्तिनद्यः तथापादावनेजसरितोगंगाद्याश्चत्रिलोक्याः शमलानिहंतुंविभ्व्यः केनप्रकारेण आनुश्रवंगुरोरुच्चारणमनुश्रूयतइत्यनुश्रवोवेदः तत्रभवंकीर्त्तिरूपंतीर्थंश्रुतिभिः श्रवणेंद्रियैः अंघ्रिजंचांगसंगैः एवंशुचिषदः स्वाश्रमधर्मस्थितास्तवतीर्थद्वयमुपस्पृशंतिसेवंतइति १९ विबुधैः सह २० २१ विक्षिप्ताविस्तारिता २२ उद्दामानि

उद्भटानिविक्रमाद्भुतानिकर्माणि २३॥

जीवः पुरुषः महान् महत्तत्त्वं तेषां कालं नियंतारं त्वामाहुः अक्षरात्परतः परः महतः परमव्यक्तमव्यक्तात्पुरुषः परः पुरुषान्न परं किंचित्साकाष्ठा सपरागतिरित्याद्याः श्रुतयः किंच अयं संवत्सरात्मको यः कालः त्रिणाभिः त्रीणि चातुर्मास्यानि नाभयोयस्य सोऽपि त्वमेव अतस्त्वमुत्तमः पुरुष इति तथा च गीतासु यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः अतोऽस्मिन्लोके वेदे च प्रथितः पुरुषोत्तम इति १५ त्वमेव प्रकृत्यादिद्वारा जगत्सृष्ट्यादिहेतुरित्युक्तं तत्केन प्रकारेण तदाहुः त्वत्त इति त्वत्तः पुरुषो वीर्यं शक्तिं समधिगम्य प्राप्य यया मायया सह महांतं धत्ते कमिव अस्य वि।

सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वं १५ त्वत्तः पुमान्समधिगम्य ययाऽस्य वीर्यं धत्ते महांतमिव गर्भममोघवीर्यः सोऽयं तयाऽनुगत आत्मन आंडकोशं हैमं ससर्ज बहिरावरणैरुपेतं १६ तत्तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् अर्थान्जुषन्नपि हृषीकपते न लिप्तो येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म १७

श्वस्य गर्भमिव सोऽयं महान् तयैव मायया ऽनुगतः सन् आत्मनः सकाशादांडकोशं ससर्ज त्वया ऽनुगत इति पाठे पि यया मायया त्वया ऽधिष्ठितः सन्निति १६ नन्वेवं भूतमीश्वरं त्वं मर्कुतोऽवगातं तदाहुः तदिति तत्तस्मात् तस्थुषः स्थावरस्य जगतो जंगमस्य च भवानधीशः यद्यस्मान्मायया उत्थाउज्जृंभिता या गुणविक्रियाइंद्रियवृत्तिः तयोपनीतान् अर्थान् विषयान् जुषन् जुषमाणोऽपि हे हृषीकपते न लिप्तस्त्वं ये त्वन्ये जीवा योगिनो वा स्वतः परिहृतादपि अविद्यमानात्पक्वाद्वा विषयजोषणाद्बिभ्यति वासनामात्रेण बध्यंत इत्यर्थः १७॥

त्वच्चरणस्य भक्तपक्षपातः प्रसिद्ध एवेति स्तुवंतः प्रार्थयंते केतुरिति वलिं वंधनेत्रिभिर्विक्रमैर्युतः तत्र द्वितीयविक्रमे सत्यलोकं गतस्तवपादः केतुः अत्युच्छ्रितो विजयध्वज इव तत्संपादयति त्रिपतत्पताकः त्रिधापतंती त्रिषु लोकेषु वापतंती गंगा पताका यस्य सः तथा असुरदेवचम्वोः तत्सेनयोः भयाभयकरः साधुषु सुरेषु स्वर्गाय खलेष्वसुरेषु इतराय इतरस्मै अधोगमनाय यत्स एवं केतुरूपस्त्वत्पादः सभजतां नः अघं पुनातु शोधयतु अघादिति पाठे भजतां नः इति कर्मणि षष्ठी अघाज्जातोऽस्मान्पुनात्विति तथा च श्रुतिः चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेमेति

केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः स्वर्गाय साधुषु खलेष्वितराय भूमन् पादः पुनातु भगवन्भजतामघं न १२ नस्योतगाव इव यस्य वशे भवंति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य १४ अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ॥ एतानिं तरेमलोकस्य द्वारमर्चिमत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत् अमृतस्य धारा वहुधा दोहमानं चरणं नो लोके सुधितां दधात्विति १३ ननु युद्धे देवासुरादयः परस्परं जयंति जीयंते च किमहं तत्रेत्यत आहुः नसीति मिथुः मिथः अर्द्यमानाः युद्धादिभिः पीड्यमानाः ब्रह्मादयोऽपि यस्य तव वशे भवंति न तु जये पराजये वा स्वतंत्राः के इव नसि नासिकायां ओताः नासिकामाविध्य वद्धाः गावो वलीवर्द्दा इव कुतः कालस्य कलयितुः प्रवर्तकस्य तदेव कुतः प्रकृतिपुरुषयोरपि परस्य तस्य ते पुरुषोत्तमस्य पादो नः शं तनोतु १४ प्रकृतिपुरुषाभ्यां परत्वमुपपादयंतः कालत्वेन पुरुषोत्तमत्वमाहुः अस्येति अस्य जगत उदयादीनां हेतुरसि कुतः अव्यक्तं प्रकृतिः

किंच प्रयतपाणिभिः संयतहस्तैर्हविर्गृहीत्वा अध्वराग्नौ आहवनीयादौ याज्ञिकैर्यस्मिंस्त्वत्ते ननु यस्मै देवतायै हविर्गृहीतं तस्यां ध्यायेद्वषट्करिष्यन्निति वचनात्तत्तद्देवतास्मिंस्त्वत्ते अत आहुः त्रय्या निरुक्तेन विधिनाइन्द्रादिरूपेण वयज्ञपुरुषस्त्वं त्वत इत्यर्थः उत किंच अध्यात्मयोगे आत्माधिकारे योगे योगिभिरपि आत्मनस्तव मायाअणिमादिस्तां जिज्ञासुभिस्तत्तत्कामैर्यस्मिंस्त्व ति परमभागवतैस्तु मुमुक्षैर्यः परीष्टः सर्वतः पूजितः सतवां घ्रिर्नोऽशुभाशयधूमकेतुः स्यादिति पूर्वेणान्वयः ११ एतेषां च मु निसात्वतादीनां वृष्णीसेवकानाम ध्येपरमभागवतेषु लक्ष्म्या अपितव प्रीतिरधिकेति सूचयन्ति पर्युष्टयेति इउभावस्तं दस्तः अहं यत्र वसामि तत्रैव वक्षसि पर्युषिताऽपीयं वसतीति प्रतिपत्निवत् सपत्नीवत् श्रीः संस्पर्द्धमाना भवति तथापि

यस्मिंस्त्वते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा अध्यात्मयोग उत यो गिभिरात्ममायां जिज्ञासुभिः परमभागवतैः परीष्टः ११ पर्युष्टया तव विभो वनमालयेयं संस्पर्द्धिनी भगवती प्रतिपत्निवच्छ्रीः यः सुप्रणीतममुयाऽर्हणमाददन्नो भूयात्सदांऽघ्रिरशुभाशयधूमकेतुः १२

तां स्पर्द्धमानां श्रियमनादृत्य योभवान्पर्युषितयाऽपि अमुया वनमालया भक्तैरर्पितेयमिति प्रीत्या सुप्र णीतं सुष्ठुसंपादितं यथाभवति तथा अर्हणं पूजामाददत् स्वीकृतवान् सुप्रणीतमित्यर्हणविशेषणं वा तस्यतवांघ्रिर्नोऽ शुभाशयधूमकेतुर्भूयात् यद्वायांघ्रिरमुया सुप्रणीतमर्हणमाददत् सनोऽशुभाशयधूमकेतुर्भूयादित्यन्वयः अथ एवं सं वेधः एतेभ्यो ध्यानार्चनादिनिष्ठेभ्योऽपितव यशसि प्रवृद्धसच्छ्रद्धावंत एव कृतार्था भगवतो यशः प्रियत्वादित्याहुः पर्यु टया वशं कांतावित्यस्मात् परितः सर्वांगे उष्टया कांतया शोभितवनमालया वक्षसि एकदेशे वर्त्तमाना श्रीः संस्पर्द्धमा ना भवति तथाप्याम्नाय मधुव्रतैर्वहुधा वर्णितया कीर्त्तिमय्या वैजयंत्या वनमालयेव यो भवान् सुप्रणीतमर्हणमाददद्दि

राम
२६

आस्तामिदानींतनमिदमत्पल्यंकमर्त्वंव्यक्तंमहदादिप्रपंचंसृजसिपालयसिसंहरसिच तदप्यात्मन्येवनपृथक्
दुर्विभाव्यंमनसाऽव्यवितर्क्यं तद्गुणस्थः तस्यामायायागुणेषुनियंतृत्वेनस्थितः अतएवतैः कर्मभिःभवान्नलिप्यतेनलि
प्यतेकुतः योभवान्अनवद्यः रागादिरहितः यतः स्वेआत्मरूपेसुखेअव्यवहिते अनावृते अभिरतः अतस्त्वंकर्मकुर्व्वा
न्नप्यात्मारामःपरमेश्वरइतिमुमुक्षुभिश्चिंत्यतइतिभावः ८ नन्वात्मारामस्यकिंकर्म्मीकरणेन अत आहुः शुद्धिरितिहेईड्यहे
ऋषभदुराशयानांरागिणांविद्याउपासनाविद्यादिभिः तथाशुद्धिर्नभवति सत्वात्मनांसतांते यशसिश्रवणेनसंभृतयाप

नैतैर्भवानजितकर्मभिरज्यतेवैयत्स्वेसुखेऽव्यवहितेभिरतोऽनवद्यः ८ शुद्धिर्नृणांनतुतथेड्य
दुराशयानांविद्याश्रुताध्ययनदानतपःक्रियाभिः सत्वात्मनामृषभतेयशसिप्रवृद्धसच्छ्रद्द
याश्रवणसंभृतयायथास्यात् ९ स्यान्नस्तवांघ्रिरशुभाशयधूमकेतुः क्षेमाययोमुनिभिरा
र्द्रहृदोह्यमानः यःसात्वतैःसमविभूतयआत्मवद्भिर्व्यूहेर्चितःसवनशःस्वरतिक्रमाय १० ॥

रिपुष्टयाअभिवृद्धयासच्छ्रद्धयायथास्यात् परमपावनस्ययशसोविततानायतवकर्म्माचरणमितिभावः ९
तदेवंत्वद्यशःश्रवणमेवशुद्धिहेतुः अस्माभिस्तुतवांघ्रिर्दृष्टः अतस्तवांघ्रिर्नोऽस्माकंअशुभाशयानांविषयवास
नानांधूमकेतुः तद्दाहकः स्यात् कथंभूतः यः क्षेमायमोक्षायमुनिभिः मुमुक्षुभिः प्रेमार्द्रहृदाऊह्यमानश्चिं
त्यमानः यश्चसात्वतैर्भक्तैः समविभूतयेसमानैश्वर्यायवा सुदेवादिव्यूहेऽर्चितः तेषुचकैश्चिदात्मवद्भिर्धी
रैः स्वरतिक्रमायस्वर्गंअतिक्रम्यवैकुंठप्राप्तयेसवनशस्त्रिकालंअर्चितः १० ॥ ❋ ॥ ० ॥ ० ॥

६

भा०टी०

११

२ ३ ननुतेषामुपेंद्रादिरूपंभगवंतंनित्यंपश्यतांकेयमतिदिदृक्षा अतआह वपुषेति येनवपुषानरलोकमनोरमः सन्स
र्वलोकेषुयशोवितेनेतदतिसुंदरंवपुर्दिदृक्षवः ४ व्यचक्षत अपश्यन् ५ स्वर्गोद्यानस्थैर्माल्यैः चित्राणिशृंखलाबंधप्रायो
णिपदानि अर्थाश्चयासुताभिर्गीर्भिः ६ बुद्धींद्रियादिभिर्दर्शनादिनाप्राणेनचबलहेतुनादंडवत्प्रणिपातेननतावयंन

इंद्रोमरुद्भिर्भगवानादित्यावसवोऽश्विनौ ऋभवोऽगिरसोरुद्राविश्वेसाध्याश्चदेवताः २
गंधर्वाप्सरसोनागाःसिद्धचारणगुह्यकाः ऋषयःपितरश्चैवसविद्याधरकिन्नराः ३ द्वार
कामुपसंजग्मुःसर्वेकृष्णदिदृक्षवः वपुषायेनभगवान्नरलोकमनोरमः ४ यशोवितेनेलो
केषुसर्वलोकमलापहं तस्यांविभ्राजमानायांसमृद्धायांमहर्द्धिभिः व्यचक्षतावितृप्ताक्षाः
कृष्णमद्भुतदर्शनं ५ स्वर्गोद्यानोपगैर्माल्यैश्छादयंतोयदूत्तमं गीर्भिश्चित्रपदार्थाभिस्तुष्टु
वुर्जगदीश्वरं ६ देवाऊचुः नताःस्मतेनाथपदारविंदंबुद्धींद्रियप्राणमनोवचोभिः यच्चिंत्य
तेंऽतर्हृदिभावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ७ त्वंमाययात्रिगुणयात्मनिदुर्विभा
व्यंव्यक्तंसृजस्यऽवसिलुंपसितद्गुणस्थः ॥

मस्कृतवंतःस्मेतिविस्मये यथाहुः दोर्भ्यांपदाभ्यांजा
नुभ्यामुरसाशिरसादृशामनसावचसाचेति प्रणामोऽष्टांगईरितइति स्मशब्दोक्तविस्मयायविशेषणंकर्म
मयादुरुपाशान्मुमुक्षुभिर्भावयुक्तैरपियत्केवलमंतर्हृदिचिंत्यतेनतुदृश्यतेतद्दृश्यंनताः अहोभाग्यमित्यर्थः
७ ननुममापिदृष्टादृष्टकर्मकरणात्कुतोमत्पदारविंदचिंतनंकर्मपाशान्मुमुक्षुभिःक्रियतेतत्राहुःत्वमितिहेअजि

एतदेवकैमुत्यन्यायेनस्फुटयति वैरेणेति यंशयनाशनादौवैरेणापिध्यायंतस्तस्यगतिविलासाद्यैःआहृतधियःतत्तदाकाराधी
यंबांतेनतत्सारूप्यमापुः किंपुनर्वात्मानमनुरक्तधियांतत्साम्यंभवतीति ४८ ननुपुत्रस्नेहश्चेन्मोक्षहेतुस्तर्हि सर्वैर्मुच्येरत तत्राहमा
ऽपत्यबुद्धिमिति अपत्यमितिबुद्धिंमाऽकृथाः अऽगमस्माद्दस्तः ४९ ननुकथमीश्वरोमानुषः स्यात कथंवातस्यविश्वसृष्ट्यादि

वैरेणयंनृपतयःशिशुपालपौंड्रशाल्वादयोगतिविलासविलोकनाद्यैः ध्यायंतआकृतधियः
शयनाशनादौतत्साम्यमापुरनुरक्तधियांपुनःकिं ४८ माऽपत्यबुद्धिमकृथाःकृष्णेसर्वात्मनी
श्वरेमायामनुष्यभावेनगूढैश्वर्येपरेऽव्यये ४९ भूभारासुरराजन्यहंतवेगुप्तयेसतां अवतीर्ण
स्यनिर्वृत्यैयशोलोकेवितन्वते ५० श्रीशुकउवाच एतच्छ्रुत्वामहाभागोवसुदेवोऽतिविस्मितः
देवकीचमहाभागाजहतुर्मोहमात्मनः ५१ इतिहासमिमंपुण्यंधारयेद्यःसमाहितःसविधूये
हशमलंब्रह्मभूयायकल्पते ५२ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेपञ्चमोध्यायः ५॥
श्रीबादरायणिरुवाच अथब्रह्माऽत्मजैर्देवैःप्रजेशैरावृतोऽभ्यगात भवश्चभूतभव्येशोययौभूत
गणैर्वृतः १॥ ॥कर्तुः पूतनाशोषणादिकर्मैश्वर्यमिवनिरूप्यतेतत्राह भूभाररूपाअसुराएवयेराजन्यास्ते

षांहंतवेनानहंतुंसतांनिर्वृत्यैमोक्षाय ५० ५१ इहअस्मिन्नेवदेहेशमलंमोहंविधूयब्रह्मत्वायकल्पते ५२ इतिश्रीभा
गवतेमहापुराणएकादशस्कंधेटीकायांपञ्चमोध्यायः ५ षष्ठेब्रह्मादिभिःस्तुत्वागंतुंविज्ञापितंहरिं उद्धवःप्रार्थयामास
स्वधामनयमामिति १ अतःपरमतिविस्तरेणात्मविद्यांनिरूपयितुंतत्प्रस्तावमाह अथेति आत्मजैःसनकादिभिःअभ्यगा

कर्त्तं कृत्यं परिहृत्य परित्यज्य यद्वा कर्त्तं भेदं परिहृत्य कृतीत्थेदनइत्यस्मात वासुदेवः सर्वमिति वुद्ध्येत्यर्थः ४१ विहितकर्म निवृत्तिमुक्त्वा निषेधनिमित्तप्रायश्चित्तनिवृत्तिमाह स्वपादमूलमिति त्यक्तः अन्यस्मिन् देहादौ देवतांतरे वा भावो येन अतएव तस्य विकर्म्मणि प्रवृत्तिर्न संभवति यत्तु कथंचित्प्रमादादिना उत्पतितं भवेत् तदपि हरिर्धुनोति ननु यमस्त्वमन्येत तत्राह परेशः ननु च श्रुतिस्मृती ममैवाज्ञे इति भगवद्वचनात्त्वाज्ञाभंगं कथं सहेत तत्राह प्रियस्य ननु नायं पापं

सर्वात्मनायः शरणं शरण्यं गतो मुकुंदं परिहृत्य कर्त्तम् ४१ स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः विकर्म्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि संनिविष्टः ४२ नारद उवाच धर्मान्भागवतानित्थं श्रुत्वाथ मिथिलेश्वरः जायंतेयान्मुनीन्प्रीतः सोपाध्यायो ह्यपूजयत ४३ ततोंतर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः राजा धर्म्मानुपातिष्ठन्नवाप परमां गतिं ४४ त्वमप्येतान्महाभाग धर्मान्भागवतांश्छ्रुतान् आस्थितः श्रद्धया युक्तो निःसंगो यास्यसे परं ४५ युवयोः खलु दंपत्योर्यशसा पूरितं जगत् पुत्रतामगमद्यद्वां भगवानीश्वरो हरिः ४६ दर्शनालिंगनालापैः शयनासनभोजनैः आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ४७॥

(द्रव्यार्थं भजतेनत्राह हृदि संनिविष्टः न हि वस्तुशक्तिरर्थितमपेक्षत इत्यर्थः ४२ जायंतेयान् जयंत्याः पुत्रान् ४३ उपातिष्ठन् अनुतिष्ठन् ४४ निःसंगो भूत्वा ४५ शास्त्रप्रक्रियेयमुक्ता युवां तु संगत एव कृतार्था इत्याह युवयोरिति वां युवयोः ४६ न च स्वकर्मार्पणादि भागवतधर्म्मैरन्येषामिव युवयोः सत्त्वशुद्धिरापादनीया पुत्रोपलालनेनैव भागवतधर्मसर्वस्वनिष्पन्नेरित्या

राम २४

युगानुरूपाभ्यां नामरूपाभ्यां ३५ एतेषु चतुर्षु युगेषु कलिरेव श्रेष्ठ इत्याह कलिमिति गुणज्ञाः कलेर्गुणं जानंति यतः ननु दोषाणां बहुत्वात्कथं सभाजयंति तत्राह सारभागिनः गुणांशग्राहिणः कोऽसौ गुणः तमाह यत्रेति न तु कृते ध्यायन् त्रेतेयजन् यज्ञैस्त्रेतायां द्वापरेर्चयन् यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवमिति ३६ तस्मात्क लौ अतः अस्मात् संकीर्तनात् परमो लाभो नास्ति यतः संकीर्तनात् ३७ किंच कृतादिष्विति ३८ ३९ अमलाशयाः॥

एवं युगानुरूपाभ्यां भगवान्युगवर्त्तिभिः मनुजैरिज्यते राजंश्रेयसामीश्वरो हरिः ३५ कलिं सभाजयंत्यार्या गुणज्ञाः सारभागिनः यत्र संकीर्त्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ३६ नह्यः तः परमो लाभो देहिनां भ्राम्यतामिह यतो विंदेत परमां शांतिं नश्यति संसृतिः ३७ कृतादि षु प्रजा राजन्कलाविच्छंति संभवं कलौ खलु भविष्यंति नारायणपरायणाः ३८ क्वचित्क्वचि न्महाराज द्रविडेषु च भूयशः ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ३९ कावेरी च महापु ण्या प्रतीची च महानदी ये पिबंति जलं तासां मनुजा मनुजेश्वर प्रायो भक्ता भविष्यंति वा सुदेवेऽमलाशयाः ४० देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन्॥ ४१ ॥

संतः प्रायः प्रायशो भगवति भक्ता भविष्यंति ४० भक्तस्य विधिनिषेधनिवृत्तिः कृतकृत्यतामाह देवर्षीति आप्ताः पोष्याः कुटुंबिनः इतरे देवादयः पंचयज्ञदेवताः एतेषां यथा अभक्तः ऋणी अत एव तेषां किंकरः तदर्थे नित्यं पंच यज्ञादिकर्त्ता तथा च स्मृतिः हीनजातिं परिक्षीणमृणार्थं कर्म्म कारयेदिति अयं तु न तथा कोऽसौ यः सर्वभावेन श्रीमुकुंदशरणं

५
मा०र०
२३

हृत्क्षनां व्यावर्त्तयति त्विषाकांत्या अकृष्णं इंद्रनीलमणिवदुज्ज्वलं यद्वा त्विषाकृष्णं कृष्णावतारं अनेन कलौ कृष्णावतारस्य प्रा
धान्यं दर्शयति अंगानि हृदयादीनि उपांगानि कौस्तुभादीनि अस्त्राणि सुदर्शनादीनि पार्षदाः सुनंदादयः तत्सहितं यज्ञैः
अर्चनैः संकीर्त्तनं नामोच्चारणं स्तुतिश्च तत्प्रधानैः सुमेधसो विवेकिनः ३२ स्तुतिमाह ध्येयमिति हे प्रणतपाल हे महापु
रुषते चरणारविंदं वंदे कथंभूतं ध्येयं ध्यातुं योग्यं सदेति सर्वत्र संबध्यते ध्येयत्वे हेतवः इंद्रियकुटुंबादिभिर्यः परिभवस्ति
रस्कारः तं हंतीति तथा ततं किंच अभीष्टदोहं मनोरथपूरकम् किंच तीर्थास्पदं गंगाद्याश्रयत्वेन परमपावनं शिवविरिं।

कृष्णवर्णं त्विषाऽकृष्णं सांगोपांगास्त्रपार्षदं यज्ञैः संकीर्त्तनप्रायैर्यजंति हि सुमेधसः ३२ ध्येयं
सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिंचिनुतं शरण्यं भृत्यार्त्तिहं प्रणतपाल भवाब्धि
पोतं वंदे महापुरुष ते चरणारविंदम् ३३ त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यव
चसा यदगादरण्यं मायामृगं दयितयेप्सितमन्वधावत् वंदे महापुरुष ते चरणारविंदं ३४ ॥९

चिभ्यां नुतं स्तुतं महत्तमं ननु नौ कृतार्थावेव किमर्थं ताभ्यां नुतं तत्राह शरण्यं आश्रययोग्यं सुखात्मकमित्यर्थः तर्हि ब्रह्मा
दिस्तुत्यं प्राकृतस्य कथं गोचरं स्यात् तत्र भृत्यार्त्तिहं यस्य कस्यापि भृत्यमात्रस्यार्त्तिहंत्तृ न केवलमागंतुकार्त्तिमात्रं हंति किंतु
भवाब्धिपोतं संसारार्णवतारकं च ३३ इदानीं स्वयमाप्तकामत्वान्निरपेक्षं भक्तार्थं च सापेक्षतां दर्शयन् श्रीरामचंद्रं स्तौ
ति त्यक्त्वेति अन्यैः सुदुस्त्यजां सुरेप्सितां राजलक्ष्मीं त्यक्त्वा यदिति यत्पदमित्यर्थः यः अरण्यमगात् किं राज्यवैकल्यदर्शने
न धर्मिष्ठः कुतः आर्यस्य गुरोः दशरथस्य वचसा किंच एवं राज्यं त्यक्त्वाऽपि भक्तवात्सल्येन दयितया सीतया ईप्सितं मायामृ
गं स्वर्णाकारं यो ऽन्वधावत् तस्य भगवतश्चरणारविंदं वंदे हे धर्मिष्ठेति संबोधनं वा तया ऽप्यविवक्षितत्वादार्यपदेन संधिर्नेभ

क्तिनिशायद्ब्रह्मादिभिश्चिंत्यचरणारविंदमिविक्तिवति यद्विमायामृगा
मन्वधावततेपदारविंदं वंदे इति अन्वयः अस्समातं ३४॥

२२ त्रिगुणादीक्षांगभूतामेखलायस्यसः यज्ञमूर्त्तिः हिरण्यकेशः पिशंगकेशः २३ त्रय्याविद्ययावेदत्रयोक्तकर्म्मभिः २४ पृश्नि
गर्भः पृश्निः सुतपसः प्रजापतेः पत्नीतस्याः पुत्रः वृषाकपिः स्मृतः सन्वर्षतिकामान् आकंपयतिक्लेशानितितथा जयत्येवस
र्वदाजयंतः २६ श्यामः अतसीपुष्पसंकाशः निजानिचक्रादीन्यायुधानि यस्यसः श्रीवत्सोनामवक्षसोदक्षिणभागेरोमा

हंसः सुपर्णो वैकुंठो धर्म्मो योगेश्वरोऽमलः ईश्वरः पुरुषोऽव्यक्तः परमात्मेतिगीयते २३ त्रेतायां
रक्तवर्णोसौचतुर्बाहुस्त्रिमेखलः हिरण्यकेशस्त्रय्यात्मास्रुक्स्रुवाद्युपलक्षणः २४ तंतदामनु
जादेवं सर्वदेवमयं हरिं यजंति विद्यया त्रय्या धर्म्मिष्ठा ब्रह्मवादिनः २५ विष्णुर्यज्ञः पृश्निग
र्भः सर्वदेव उरुक्रमः वृषाकपिर्जयंतश्च उरुगाय इतीर्यते २६ द्वापरे भगवान् श्यामः पीतवासा
निजायुधः श्रीवत्सादिभिरंकैश्च लक्षणैरुपलक्षितः २७ तंतदापुरुषं मर्त्त्या महाराजोपलक्ष
णं यजंति वेदतंत्राभ्यां परं जिज्ञासवो नृप २८ नमस्ते वासुदेवाय नमः संकर्षणाय च प्रद्युम्ना
यानिरुद्धाय तुभ्यं भगवते नमः २९ नारायणाय ऋषये पुरुषाय महात्मने विश्वेश्वराय विश्वा
य सर्वभूतात्मने नमः ३० इति द्वापर उर्वीश स्तुवंति जगदीश्वरं नानातंत्रविधानेन कलावपि य

प्रदक्षिणावर्त्तः सआदिर्येषां करचरणादिगतपद्मादीनां तैः अंकैः अंकितैश्चिह्नैः लक्षणैर्बाह्यैः कौस्तुभा (द्याश्च णु) २७
दिभिः २७ महाराजोपलक्षणं छत्रचामरादियुक्तं वेदतंत्राभ्यां वैदिकेनागमिकेन च मार्गेण यजंति पूजयंति परं ईश्वरं ज्ञा
तुमिच्छवः २८ नामान्याह नमस्त इति २९ ३० नानातंत्रविधानेनेति कलौ तंत्रमार्गस्य प्राधान्यं दर्शयति ३१ ॥ ॥

भा०ए० २२

अज्ञास्तत्वज्ञैरनुकंपिताः स्तरंति तत्वज्ञास्तु स्वतः येतुनात्यंतमज्ञाः नचतत्वज्ञाः तेंऽतरालवर्त्तिनः पतंतीत्याह यइति कैव ल्यंतत्वज्ञानमसंप्राप्ताः अत्रहेतुः त्रिवर्गप्रधानाः अक्षणिकाः उप शांतिक्षणरहिताः देहादिस्थैर्यबुद्ध्योवा स्वयमेवात्मा नंघातयंति १६ तदाह एतइति आत्महनः आत्मापन्हवकर्त्तारः अज्ञानेकर्म्मणि तथाचश्रुतिः असुर्यानामतेलोका अं धेनतमसावृताः तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाइति १७ यागृहापत्यसुहृच्छ्रियस्ताः हित्वा १८ तदेवंभगव

येकैवल्यमसंप्राप्तायेचातीताश्चमूढतां त्रैवर्गिकाह्यक्षणिकाआत्मानंघातयंतिते १६ एतआ त्महनोऽशांताअज्ञानेज्ञानमानिनः सीदंत्यऽकृतकृत्यावैकालध्वस्तमनोरथाः १७ हित्वाऽत्मा यासरचितागृहापत्यसुहृच्छ्रियः तमोविशंत्यऽनिच्छंतोवासुदेवपराङ्मुखाः १८ राजोवाच कस्मिन्कालेसभगवान्किंवर्णः कीदृशोनृभिः नाम्नावाकेनविधिनापूज्यतेतदिहोच्यतां १६ श्रीकरभाजनउवाच कृतंत्रेताद्वापरंचकलिरित्येषुकेशवः नानावर्णाभिधाकारोनानैवविधि नेज्यते २० कृतेशुक्लश्चतुर्वाहुर्जटिलोवल्कलांवरः कृष्णाजिनोपवीताक्षान्विभ्रद्दंडकमंड लू २१ मनुष्यास्तुतदाशांतानिर्वैराः सुहृदः समाः यजंतितपसादेवंशमेनचदमेनच २२ ॥

तस्मात्भक्तिरेवकर्त्तव्येतिस्थिते तत्रविशेषंपृच्छति कस्मिन्कालइति किंवर्णः कीदृक्वर्णवान् कीदृशः कीदृगाकारः केनवानाम्नाकेनवाविधिना १६ एषुकृतादिकालेषुनानाप्रकारावर्णाभिधाकारायस्यसः नानैवविधिनाविविधे नैवमार्गेण २० तदेववर्णादिचतुष्टयमाह कृतइत्यादिनाकृष्णाजिनादीन्विभ्रदितिब्रह्मचारिवेषोदर्शितः २१ तपसा

श्रीधरी राम २२

धर्मएवैकंफलंयस्यतत्कृतं यतः यस्माद्धर्माधर्मात्सविज्ञानं अपरोक्षज्ञानसहितं दृढंपरोक्षज्ञानंभवति कथंभूतंअ
नुप्रशांति अनु अनंतरमेवप्रकृष्टाशांतिः निर्वाणलक्षणायस्मात्तत् एवंभूतंधनंगृहेषुदेहाद्यर्थंयुंजंति १२ किंच ॥
व्यवस्थयाऽपिव्यवायाद्यभ्यनुज्ञानंनयथेष्टं अपित्वन्यथैवेत्याह यदितियत् यस्मात्सुरायाः घ्राणभक्षः अ
वघ्राणंसएवविहितः नपानंतथापशोरप्यालभनमेवविहितंनतुहिंसा अयमर्थः देवतोद्देशेनयत्पशुहन
नंतदालभनं वायव्यंश्वेतमालभेतेत्यादिश्रुतेः नतुहिंसायावेदविहिताहिंसासानहिंसेतिकीर्त्यतइतिवचनात् ॥

गृहेषुयुंजंतिकलेवरस्यमृत्युंनपश्यंतिदुरंतवीर्यं १२ यत्घ्राणभक्षोविहितःसुरायाः
स्तथापशोरालभनंनहिंसाएवंव्यवायःप्रजयानरत्यैइमंविशुद्धंनविदुःस्वधर्मं १३ ये
त्वनेवंविदोऽसंतःस्तब्धाःसदभिमानिनः पशून्द्रुह्यंतिविस्रब्धाःप्रेत्यखादंतितेचतान् १४
द्विषंतःपरकायेषुस्वात्मानंहरिमीश्वरं मृतकेसानुबंधेऽस्मिन्बद्धस्नेहाःपतंत्यधः १५

भक्षणोद्देशेनतुक्रियमाणंहननंलौकिकवद्धिंसैव अतः आलभनमेवविहितंनतुहिंसा अतोनयथेष्टंभक्षणाभ्य
नुज्ञेत्यर्थः व्यवायोऽपिप्रजयानिमित्तभूतयानतुरत्यै अतोमनोरथवादिनइमंविशुद्धंस्वधर्मंनविदुरिति १३ एवंभ
गवत्पराङ्मुखानांबहुदोषतांप्रपंच्यतन्निष्ठांप्रपंचयतिपंचभिः येत्वितियेत्वऽनेवंविदोऽसंतइति अनेवंविदःनए
वंधर्मंविदंतियेतेविस्रब्धाःनिःशंकाः अनेनमनोरथोभविष्यतीतिविश्वस्ताःवातदानींतनपोषणेनवातैःपशुभि
र्विश्वस्ताः तेचपशवःप्रेत्यअमुत्रतान्खादंतिमांसभक्षयिताऽमुत्रयस्यमांसमिहाद्म्यहंएतन्मांसस्यमांसत्वंप्रवदंति

मनीषिणइतिवचनात् १४ अभिचारादिना द्विषं-
तः मृतके देहे सानुबंधे पुत्रादिसहिते ॥ १५ ॥ ॥

मिषसेवा सौत्रामण्यांसुराग्रहान्गृह्णातीतिश्रुते स्तत्रैवमद्यसेवेतिनियमः क्रियते ननुचनियमप
क्षेप्यावश्यकत्वान्ननिंदायुक्ता अतआह आसुनिवृत्तिरिष्टेति अयंभावः नायंनियमविधिरपिनित्यप्राप्तत्वात्
अतोनिवृत्तिः परिसंख्यैव अासुव्यवायामिषमद्यसेवासुनिवृत्तिरिष्टा कथंतर्हिव्यवस्थितिरित्युक्तं उच्यते नतावत्
परिसंख्याविधिनाश्रुत्यानिवृत्तिरुच्यते तथासतिस्वार्थत्यागः परार्थकल्पनाप्राप्तबाधश्चेतिदोषत्रयंस्या
त् अतः क्वचित्प्राप्ततोप्यर्थस्यप्रापणमनर्थकमित्यपूर्वविधिद्वारा अन्यनिवृत्तिः फलतोभवति तद्य
था इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यत्ररशनालिंगतोगर्दभाश्वाभिधानीग्रहणाद्वयेप्रा
प्ततोमंत्रस्या ऽपूर्वविधिद्वारापरिसंख्योच्यते यथोक्तंतंत्रवार्त्तिके अप्राप्तविधिरेवायमतोमंत्रस्यनि

व्यवस्थितिस्तेषुविवाहयज्ञसुराग्रहैरासुनिवृत्तिरिष्टा ११ धनंचधर्मैकफलंयतोवैज्ञा
नंसविज्ञानमनुप्रशांति॥ १२ त्तितः परिसंख्याफलेनोक्ता नविशेषः पुनःश्रुतेरिति क्वचित्तुरागतोनित्य
प्राप्तस्या ऽप्राप्तांशपूरणलक्षणस्यनियमफलस्याप्यभावान्नियमविधिद्वाराफलतः परिसंख्या भवति यथा पंच
पंचनखाभक्ष्या इति तथारागतोनित्यवत्प्राप्तस्यव्यवायादेर्विवाहादिनियमेनाभ्यनुज्ञाद्वारापरिसंख्यैवेति
ननुयद्यभ्यनुज्ञामात्रमेतद्भवेत् तर्हिऋतुस्नातांतुयोभार्यांसन्निधौनोपगच्छति घोरायांभ्रूणहत्यायांपच्य
तेनात्रसंशय इत्यादिदोषश्रवणंनस्यात् नैषदोषः मनसिकामेसत्यपितस्यामहृच्याद्वेषादिनावांतामनुपग
च्छतोदोषश्रवणोपपत्तेरितिसर्वमनवद्यं ११ तदेवंव्यवायादिमनोरथाकुलितत्वादभीष्टमात्मानंनशृण्वंती
त्युक्तं इदानींधनस्यापिधर्मद्वारापरमात्मप्रापकस्यदृष्टोपभोगार्थविनियोगान्नात्मज्ञानगंधोऽपीत्याह धनंचेति

भविष्यतिपुनर्धनमित्याकाराः दांभिकतांप्रपंचयतियजंतीति असृष्टान्नविधानदक्षिणंनसृष्टः नसंपादितान्न विधानदक्षिणायथातथायजंति तदाचवृत्त्यैजीविकार्थपरं केवलंपशून् घ्नंति अतद्विदः हिंसादोषानभिज्ञाः ८ मानि तांप्रपंचयति श्रियेति श्रियाधनादिसंपदाविभूत्याऐश्वर्येणश्रियादिनाजातोयःस्मयोगर्वस्तेन अंधाधीर्येषांतेईश्वरस हितान्सतः अवमन्यंते ९ किंच एवंवर्तमानास्तेवेदतत्वार्थस्फुटमपिनजानंतीत्याह सर्वेष्विति केनरूपेणावस्थि तंतत्राह आत्मानंईश्वरं आत्मतयाईश्वरतयाचावस्थितंएवमप्यसंगतमाह यथास्वंपुरुषार्थतामाह अभीष्टं स्फुटत्वमाह

॥यजंत्यसृष्टान्नविधानदक्षिणंवृत्त्यैपरंघ्नंतिपशूनतद्विदः ८ श्रियाविभूत्याभिजनेनविद्ययात्यागेनरूपेणबलेनकर्मणा जातस्मयेनांधधियः सहेश्वरान्सतोऽवमन्यंति हरिप्रियान्खलाः ९ सर्वेषुशश्वत्तनुभृत्स्ववस्थितंयथाखमात्मानमभीष्टमीश्वरं वेदोपगीतंचनशृण्वतेऽबुधामनोरथानांप्रवदंतिवार्तया १० लोकेव्यवायामिषमद्यसेवानित्यास्तुजंतोर्नहितत्रचोदना॥ ११ वेदोपगीतंचेतितत्कुतः यतोमनोरथानांव्यवायामिषमद्यसेवाविषयाणां वार्तयाप्रवदंति निवृत्तिपरंसंतंवेदंप्रवृत्तिपरंवर्णयंतीत्यर्थः १० ननुव्यवायादीनामपिऋतौभार्यामुपेयात्हुत शेषंभक्षयेदित्यादिनाविहितत्वात्किमेवंनिंद्यते अतआह लोकइति व्यवायःस्त्रीसंगः नित्याःरागतएवनित्यंप्राप्ताः जंतोःप्राणिमात्रस्य अतस्तत्रतासुचोदनाविधिर्नास्तिननुऋतावुपेयादित्यादिविधिर्दर्शितःसत्यं नत्वयमपूर्वविधिः रागतःप्राप्तत्वात् किंतुनियमविधिरूपेणरागिणामभ्यनुज्ञामात्रंक्रियतेतदाहव्यवस्थितिरितितेषुव्यवायादिषुकैःवि

भा॰ए॰

२४

ज्ञानलवदुर्विदग्धास्त्वचिकित्स्यत्वादुपेक्ष्या इत्याशयेनाह विप्र इति॰ श्रौतेन उपनयनाख्येन उपलक्षणमेतत् अध्ययनादिनापि हरेः पदांतिकं तद्भजनोत्तमाधिकारं प्राप्ता अपि मुह्यंति कर्म्मफलेषु सज्जंते कुतः आम्नायेषु ये वादा अर्थवादाः ते मोहकतया विद्यंते येषां ते तदुक्तं गीतासु यामिमां पुष्पितां वाचं प्रवदंत्यविपश्चितः वेदवादरताः पार्थ नान्यदस्तीति वादिन इत्यादिना ५ भक्तिमार्गदार्ढ्याय तेषां मोहं प्रपंचयन्निंदति कर्मणीत्यादिना अकोविदाः यथा वंधकं न भवति तथा कर्तुमज्ञाः न चाभिज्ञान्पृच्छंतीत्यत स्तब्धा अनम्राः स्तब्धत्वे हेतुः यतो मूर्खा अपि पंडिता वयमिति मा

विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदांतिकं श्रौतेन जन्मनाऽथापि मुह्यंत्याम्नायवादिनः ५

कर्मण्यकोविदाः स्तब्धा मूर्खाः पंडितमानिनः वदंति चाटुकान्मूढा यया माध्व्या गिरोत्सुकाः ६

रजसा घोरसंकल्पाः कामुका अहिमन्यवः दांभिका मानिनः पापा विहसंत्यच्युतप्रियान्

वदंति तेऽन्योन्यमुपासितस्त्रियो गृहेषु मैथुन्यसुखेषु चाशिषः ॥ नवं तः अतः अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति यत्र नोष्णं च शीतं स्यान्न ग्लानिर्नाप्यरातय इत्यादिकया यया माध्व्या गिरोत्सुकाः संतो मूढास्तया चाटुकान् अप्सरोभिः सह विचरिष्याम इत्यादिप्रियान् क्षुद्रान् वदंति ६

किंच तेषां कर्म्माभिनिवेशात्कामक्रोधदंभादयो वर्द्धंत इत्याह त्रयेण रजसेति घोरः अभिचारादिः संकल्पो येषां ते अहिवन्मन्युर्येषां ते कामुकत्वं प्रपंचयति वदंतीति उपासिताः स्त्रियो यैः न तु वृद्धाः ते मैथुन्यं मिथुनसुखमेव परं नत्वातिथ्यादि येषु गृहेषु तेषु आशिषो वदंति इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथं इदमस्तीदमपि मे

भा॰

२०

इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांचतुर्थोध्यायः ४ ॥ पंचमेभक्तिहीनानांकानिष्ठाको
युगेयुगे पूजाविधिरितिप्रश्नद्वयस्योत्तरमुच्यते १ त्वांसेवतांसुरकृतावहवोऽतरायाइत्यनेनश्रीहरिभक्ता
विघ्नमूर्ध्निपदंदत्वापरांगतिंयांति अभक्तानांतुविघ्नाभवंतीत्युक्तेनर्हितेषांकागतिर्भवतीतिपृच्छति भगवंत
मितिहे आत्मवित्तमाः अविजितात्मनां अतएवाशांतकामानांकानिष्ठा किंप्राप्यमित्यर्थः १ स्वजनकस
गुरोर्भगवतोऽनादराद्गुरुद्रोहेणदुर्गतिंयांतीतिवक्तुंभगवतः सकाशाद्वर्णाश्रमाणामुत्पत्तिमाह मुखेति॥

॥इतिश्रीभागवतेमहापुराणेएकादशस्कंधेचतुर्थोध्यायः ४ राजोवाच भगवंतं
हरिंप्रायोनभजंत्यात्मवित्तमाः तेषामशांतकामानांकानिष्ठाऽविजितात्मनां १ ॥
श्रीचमसउवाच मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह चत्वारोजज्ञिरेवर्णागुणैर्विप्रा
दयःपृथक् २ यएषांपुरुषंसाक्षादात्मप्रभवमीश्वरं नभजंत्यवजानंतिस्थानाद्भ्रष्टाःपतंत्य
धः ३ दूरेहरिकथाःकेचिद्दूरेचाच्युतकीर्तनाः स्त्रियःशूद्रादयश्चैवतेऽनुकंप्याभवादृशां ४

गुणैः सत्वेनविप्रः सत्वरजोभ्यांक्षत्रियः रजस्तमोभ्यांवैश्यः तमसाशूद्रइति २ एषांमध्येयेऽज्ञात्वातं।
नभजंति येचज्ञात्वाऽप्यवजानंति आत्मनःप्रभवोजन्मयस्मात्तं तदभजनेकृतघ्नतामप्याह ईश्वरमि
ति स्थानाद्वर्णाश्रमाद्भ्रष्टाः ३ तत्रयेऽज्ञास्तेभवद्विधानामनुग्राह्याइत्याह दूरइति दूरेहरिकथाश्र
वणंयेषांते अतएवदूरेचअच्युतकीर्तनंयेषांतेदूरेअच्युतकीर्तनाभक्ताश्चेतिवा ४ ॥ ४ ॥ ४ ॥

४
भा०स्क०
१८

संस्तुन्वतः स्तुतिंकुर्वाणान् ऋषीनवालखिल्यान्कश्यपार्थेसमिदाहरणेगोष्पदे निमग्नानिंद्रेणोपहसितानु
द्धृत्यापदोऽमोचयत् तमसिब्रह्महत्यायांप्रविष्टंमोचयामास असुरगृहे पिहि पिहितानिरुद्धायादेवस्त्रियस्ताअ
मुंचत् अनेकावतारैः १८ अंतरेषुसर्वमन्वंतरेषुकलाभिर्मूर्त्तिभिर्भुवनानिअधात्अपालयत् इमांक्ष्मासमदा

संस्तुन्वतोऽब्धिपतितांश्रमणानृषींश्चशक्रंचवृत्रवधतस्तमसिप्रविष्टं देवस्त्रियोऽसु
रगृहेपिहिताअनाथाजघ्नेसुरेंद्रमभयायसतांनृसिंहे १९ देवासुरेयुधिचदैत्यपतीन्सु
रार्थेहत्वांतरेषुभुवनान्यऽदधात्कलाभिः भूत्वाथवामनइमामहरद्बलेः क्ष्मांयाच्ञाच्छले
नसमदाददितेःसुतेभ्यः २० निःक्षत्रियामकृतगांचत्रिःसप्तकृत्वोरामस्तुहैहयकुलाप्यय
भार्गवाग्निः सोऽब्धिंवबंधदशवक्त्रमहन्सलंकंसीतापतिर्जयतिलोकमलघ्नकीर्त्तिः २१ भू
मेर्भरावतरणाययदुष्वजन्माजातःकरिष्यतिसुरैरपिदुष्कराणिवादैर्विमोहयतियज्ञकृते
ऽतदर्हान्शूद्रान्कलौक्षितिभुजोन्यहनिष्यदंते २२ एवंविधानिकर्म्माणिजन्मानिचजगत्पतेः
भूरीणिभूरियशसोवर्णितानिमहाभुज २३॥ ददौ २० हैहयानांकुलस्याप्ययाय भार्गवरूपोऽग्निःसरा
मोदाशरथिःसनसलंकंलंकायांस्थितंसचजयतिवर्त्तमानकालीनोऽवतारइत्यर्थः २१ भाविनंरामकृष्णावता
रमाह भूमेरिति बुद्धावतारमाहवादैरिति अतदर्हानयज्ञानर्हान्दैत्यान्विमोहयिष्यति कल्क्यवतारमाह शू
द्रानितिन्यहनिष्यत् — निहनिष्यति २२ २३॥

राम
१८

रूपिणीमूर्त्तिमतीश्रीरिवताःस्त्रीर्दृष्ट्वातासांतुरूपस्यौदार्येणमहत्वेनहताश्रीःकांतिर्येषांते १३ हंद्ध्वंवृणीध्वंक्ववयं
वराकाः क्वचेमा इतिचेत्तत्राह सवर्णासमानरूपांनैकाऽप्यस्मदनुरूपेति चेत् माभवतु तथापिस्वर्गस्यभूषणरूपां
१४ सुरवंदिनः देवभृत्याः १५ इंद्रायइंद्रंप्रति नारायणवलमूचुः शक्रः तत्रासत्रासंप्राप्तः विस्मितश्चतत्रवि
स्मित आसेतिवा १६ अन्यानप्यवतारांस्तत्वरितानिचाह हंसस्वरूपीतिदत्तः दत्तात्रेयःकुमारःसनकादिःनःपि.

तेदेवानुचरादृष्ट्वास्त्रियःश्रीरिवरूपिणी गंधेनमुमुहुस्तासांरूपौदार्यहतश्रियः १३ ताना
हदेवदेवेशःप्रणतान्प्रहसन्निव आसामेकतमांवृंग्ध्वंसवर्णांस्वर्गभूषणां १४ ओमित्यादेश
मादायनत्वातंसुरवंदिनः उर्वशीमप्सरःश्रेष्ठांपुरस्कृत्यदिवंययुः १५ इंद्रायानम्यसदसि
शृण्वतांत्रिदिवौकसां ऊचुर्नारायणवलंशक्रस्तत्रासविस्मितः १६ हंसस्वरूप्यऽवदद्च्युत
आत्मयोगंदत्तःकुमारऋषभोभगवान्पिताऽनः विष्णुःशिवायजगतांकलयाऽवतीर्णस्तेनाऽ
हृतामधुभिदाश्रुतयोहयास्ये १७ गुप्तोऽप्ययेमनुरिलौषधयश्चमात्स्येक्रौडेहतोदितिजउद्ध
रतोऽभसःक्ष्मां कौर्मेधृतोऽद्रिरमृतोन्मथनेस्वपृष्ठेग्राहात्प्रपन्नमिभराजममुंचदार्त्तं १८ ॥

ताऋषभश्चविष्णुरेवकलयाऽवतीर्णःसन्नात्मयोगमवदत् तेनविष्णुनाहयास्येहयग्रीवावतारेमधुभिदासता
ततःपातालतःसनातनाःश्रुतयःआहृताः १७ इलापृथ्वी ओषधयश्चगुप्ताःक्रौडेचवाराहावतारेग्राहात्
गजेंद्रममुंचत् मोचयामासएवमादौयत्रावतारनामनास्तितत्रविष्णुःशिवायजगतांकलयाऽवतीर्णइत्यनुवर्त्त

वमानानांसुरैरिंद्रादिभिः कृताअंतराया विघ्ना भवंति कस्मादित्यतआहुः स्वौकइति स्वस्थानंस्वर्गमतिक्रम्यपर
मंतवस्थानंव्रजतो नान्यस्यत्वामसेवमानस्यकुतः वर्हिषियज्ञेस्वभागान्पुरोडाशादीन्वलीन्करान् कृषिकद्
वराज्ञेइंद्रादिभ्योददतः प्रयच्छतः तर्हिकिंमद्भक्तोविघ्नैर्भ्रश्यतिनेत्याहुः धत्तइति यदीतिनिश्चये यतस्त्वंसर्व
सुराधीश्वरोऽविताररक्षकः अतोऽसौविघ्नानांमूर्ध्निपदमंघ्रिंधत्ते कुतः पुनस्त्वयिविघ्नशंकेऽतिभावः॥१०॥
त्वद्भक्तानां तु केवलंतपश्चरतांद्वयीगतिः अस्माकंवावशंयांतिक्रोधस्यवा तत्रास्मद्वशाःकामोपभोगमपि

नाऽन्यस्यवर्हिषिवलीन्ददतः स्वभागान् धत्ते पदंत्वमविताय दिविघ्नमूर्ध्नि १० क्षु
त्तृट्त्रिकालगुणमारुतजैह्व्यशैश्न्यानस्मानपारजलधीनतितीर्यकेचित् क्रोधः
स्ययांतिविफलस्यवशंपदेगोर्मज्जंतिदुश्चरतपश्चवृथोत्सृजंति ११ इति।
प्रगृणतांतेषांस्त्रियोत्यद्भुतदर्शनाः दर्शयामासशुश्रूषांस्वर्चिताःकुर्वतीर्विभुः १२॥

तावदनुभवंति क्रोधस्यवशाः पुनरतिमंदाइत्याहुः क्षुत्तृडिति क्षुच्चतृट्च त्रिकालगुणाश्च वशीतोष्णवर्षाणि चमा
रुतश्च प्राणोवाह्योवा जैह्व्याः जिह्वाभोगाश्चशैश्न्याः गुह्योपभोगाश्च एतानस्मान् अपारजलधिरूपानतितीर्य
विलक्ष्यगोष्पदेमज्जंति कुतः यतः क्रोधस्यविफलस्यवशंयांतिगच्छंति किंच जलेमज्जंतोयथाविव
शाः संतोमस्तकारोपितंभारमुत्सृजंति तथा वृथैवनमोक्षायनचभोगाय शापादिना दुश्चरंतपउत्सृजंति ११॥
स्त्रियः योगनिर्मिताः स्त्रीः शुश्रूषांकुर्वतीः स्वर्चिताः सुष्ठुअलंकृताः तेषांस्वलावण्यादिदर्पोपशमायदर्शयामास

भगवदवतारत्वद्योतकं परमोपशमं दर्शयितुमितिहासमाह इंद्र इति दशभिः धाम स्थानं तपसा ग्रहीतुमिच्छतीति विशंक्य तपोनाशाय कामं सपरिवारं प्रेषयामास सः कामः वदरीमिउपाख्यायते यः तं तस्याश्रमं अप्सरोगणादिभिः सह गत्वा स्त्रीणां प्रेक्षणान्येव इषवो वाणास्तैः न तस्य महिमहिमानं जानातीति अतन्महिज्ञः ७ अक्रमं अपराधं अहो अहं धीर इति विस्मयो गर्वः तद्रहितः एजमानान् शापभियाकंपमानान् भो विभो समर्थ हे देववध्वः मा भैष्ट वलिं आति।

इंद्रो विशंक्य मम धाम जिघृक्षतीति कामं न्ययुंक्त सगणं स वदर्युपाख्यं गत्वाऽप्सरोगणवसंतसुमंदवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ७ विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय एजमानान् मा भैष्ट भो मदन मारुत देववध्वो गृह्णीत नो वलिमशून्यमिमं कुरुध्वं ८ इत्थं ब्रुवत्यभयदे नरदेव देवाः सव्रीडनम्रशिरसः सघृणं तमूचुः नैतद्विभो त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे ९ त्वां सेवतां सुरकृता वहवोऽन्तरायाः स्वौको विलंघ्य परमं व्रजतां पदं ते॥

१ इत्थं तान् प्रार्थयते इममस्माकमाश्रमं आतिथ्याभावे शून्यप्रायः स्यादित्यर्थः ८ हे नरदेव अभयदे श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सव्रीडानि नम्राणि शिरांसि येषां ते लज्जाभरेणैवाऽवनतशिरस्का इत्यर्थः सघृणं यथा भवति तथा कृपां जनयंत इत्यर्थः कृपायुक्तं तमिति वा मायातः परे अतोऽविकृते स्वारामा आत्मने ऽधीराश्च तेषां निकरैरानतं पादपद्मं यस्य तस्मिन् त्वयि एतत् अस्मोभानुकंपादि न विचित्रं ९ अस्माकं चापराधाचरणं स्वभावत्वान्न चित्रमित्याहुः त्वामिति त्वा सेवतां

अस्य गुणकर्माण्याह द्वयेन यत्काय इति यस्याधिष्ठेयः काय एषः काय इति सप्तमी वा तनुभृतां समष्टिव्यष्टिजीवानां ज्ञा
नकर्मेंद्रियाणि यस्य स्वतः स्वरूपभूतात्सत्वात्तनुभृतां ज्ञानं यस्य स्वतः सिद्धं ज्ञानमिति वा यस्य श्वसनतः प्राणात् वलं दे
हशक्तिः ओजः इंद्रियशक्तिः ईहाक्रियायश्च सत्वादिभिर्विश्वस्य स्थितिलयोद्भवे आदिकर्त्ता ५ आदिकर्त्तेत्यनेन नत
त्पूर्वकं कर्त्त्रंतरमपि सूचितं तद्दर्शयितुं गुणावतारद्वारा चराचरसृष्ट्यादिकर्तृत्वमाह आदाविति यस्येत्यनुषंगः
यस्य रजसा अस्य जगतः सर्गकार्यंशात धृतिर्ब्रह्माऽभूत् स्थितौ च विष्णुः यस्य सत्वेनेति शेषः ऋतुपतिः तत्फलदाता द्वि

यत्काय एष भुवनत्रयसन्निवेशो यस्येंद्रियैस्तनुभृतामुभयेंद्रियाणि ज्ञानं स्वतः श्वसनतो
वलमोज ईहा सत्वादिभिः स्थितिलयोद्भव आदिकर्त्ता ५ आदावभूच्छतधृती रजसाऽस्य सर्गे
विष्णुः स्थितौ ऋतुपतिर्द्विजधर्म्मसेतुः रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिल
याः सततं प्रजासु ५ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर ऋषिप्रवरः प्रशांतः नै
ष्कर्म्यलक्षणमुवाच चचार कर्म योऽद्यापि चास्त ऋषिवर्यनिषेवितांघ्रिः ६ ॥ ६ ॥

जातीनां तद्धर्म्माणां च सेतुः पालक इत्यर्थः यस्य तमसा अस्याप्ययाय रुद्रोऽभूत् इति एतैर्ब्रह्मादिभिर्निमित्त
भूतैः प्रजासु उद्भवादयो यतो भवंति स आद्यः पुरुष इत्यन्वयः ५ धर्मस्य भार्यायां दक्षदुहितरि मूर्त्तिसंज्ञायां नारा
यणो नर इति मूर्त्तिद्वयेन अजनिष्ट जातः तच्चरितमाह नैष्कर्म्यं आत्मस्वरूपं लक्ष्यते येन तत्कर्म्म कर्म निरहंकार
रूपं वा उवाच नारदादिभ्यः स्वयं च चार च यो ऽद्यापि कर्म चरन्नास्ते ऋषिवर्यैर्निषेविताव अंघ्री यस्य सः ६ ॥ ६ ॥

॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांतृतीयः ॥ ३ ॥ चतुर्थेऽवतारेहाप्रश्नस्योत्तरमु
क्तवान् जयंतीनंदनोनाम्नाद्रुमिलोनवसप्तमः १ मूर्त्त्याऽभिमतयाऽऽत्मनइत्यनेनात्मनःप्रियमवतारंपू
जयेदित्युक्तेऽवतारज्ञानमपेक्षितं तथाऽस्तवैःस्तुत्वानमेद्धरिमित्युक्तेगुणकर्मज्ञानंचापेक्षितंअतःपृ
च्छति यानियानीतिकर्त्ताकरिष्यति १ त्वयापृष्टानिकालत्रयसंबंधिसकलावतारगुणकर्माणिकथ
यिष्यामीत्याह योवाइत्यादिना अनुक्रमिष्यन् गणयितुमिच्छतियःसतुवालानामिवबुद्धिर्यस्यसमंदम

॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेतृतीयोऽध्यायः ३ ॥ राजोवाच या
नियानीहकर्म्माणियैर्यैःस्वच्छंदजन्मभिः चक्रेकरोतिकर्त्तावाहरिस्तानिब्रुवंतुनः
१ श्रीद्रुमिलउवाच योवाअनंतस्यगुणाननंताननुक्रमिष्यन्सतुवालबुद्धिः रजां
सिभूमेर्गणयेत्कथंचित्कालेननैवाखिलशक्तिधाम्नः २ भूतैर्यदापंचभिरात्मसृष्टैः
पुरंविराजंविरचय्यतस्मिन् स्वांशेनविष्टःपुरुषाभिधानमवापनारायणआदिदेवः ३॥

तिःकालेनमहताकोपिमहामतिःरजांसिगणयेदपि अखिलशक्तिधाम्नःसर्वशक्त्याश्रयस्यभग
वतोगुणांस्तुनैवगणयेत् तथाचश्रुतिः विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसीत्या
दि २ तत्रादौपुरुषावतारमाह भूतैरिति यदास्वसृष्टैर्भूतैर्विराजंब्रह्मांडंपुरंनिर्मायतस्मिन्लीला
याप्रविष्टः नतुभोक्तृत्वेनप्रभूतपुण्यस्यजीवस्यतत्रभोक्तृत्वात् ३॥ ॥ ॥ ॥

मूर्त्तेः संमुखमासीनः आदिशब्देन भूतशुद्ध्यादिभिः पिंडं देहं विशोध्य संन्यासैः सद्भिर्न्यासैः कृतारक्षायेन सः ४६ आदावे वद्रव्याणि पुष्पादीनि जंत्वादिशोधनेन क्षितिं संमार्जनादिना आत्मानमव्यग्रतया लिंगं मूर्त्तिं अनुलेपक्षालनादिना निष्पाद्य योग्यानि कृत्वा ५० पाद्यादिपात्राण्युपकल्प्य संनिधाप्य हृदि संपूजितं श्रीमूर्त्तौ ध्यात्वा हृदादिभिः हृदयशिरः शिखाकवचनेत्रास्त्रमंत्रैः मूलमंत्रेण च देवे कृतन्यासो मूलमंत्रेणार्च्चयेत् ५१ अंगानि हृदयादीनि उपांगानि सुदर्श

शुचिः सन्मुखमासीनः प्राणसंयमनादिभिः पिंडं विशोध्य संन्यासकृतरक्षोऽर्चयेद्धरिं ४६ अर्चादौ हृदये वापि यथालब्धोपचारकैः द्रव्यक्षित्यात्मलिंगानि निष्पाद्य प्रोक्ष्य चासनं ५०॥ पाद्यादीनुपकल्प्याथ संनिधाप्य समाहितः हृदादिभिः कृतन्यासो मूलमंत्रेण चार्च्चयेत् ५१ सांगोपांगां सपार्षदां तां तां मूर्त्तिं स्वमंत्रतः पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ५२ गंधमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः सांगं संपूज्य विधिवत्स्तवैः स्तुत्वा नमेद्धरिं ५३ आत्मानं तन्मयं ध्यायन्मूर्त्तिं संपूजयेद्धरेः शेषामाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतं ५४ एवमग्न्यर्कतोयादावतिथौ हृदये च यः यजतीश्वरमात्मानमचिरान्मुच्यते हि सः ५५॥ ९॥ ❋ ॥

नादीनि तत्सहितां सपार्षदां सपरिवारां कैरुपचारैरर्चयेत् तदाह पाद्येति आदिशब्देन मधुपर्कमाचमनं च ५२ अक्षतास्तिलकालंकारे नतु पूजायां नाक्षतैरर्चयेद्विष्णुं न केतक्या महेश्वरं इति निषेधात् उपहारो नैवेद्यं ५३ शेषां निर्माल्यं स्वधाम्नि स्वस्थाने देवं हृदि मूर्त्तिकरंडके उद्वास्य स्थापयित्वा पूजाविधिं समापयेदिति शेषः ५४ तांत्रिकं कर्म्मयोग

ननु कर्म्म मोक्षश्चेत्पुरुषार्थस्तर्हि प्रथममेव कर्म तत्त्यजतां अत आह नाचरेदिति अजितेंद्रियत्वात् अज्ञः स्वयं यदि ना
चरेत्तर्हि विकर्म्मणा कर्म्मानाचरणलक्षणेनाधर्म्मेण मृत्योरनंतरं मृत्युमेव प्राप्नोति तथा च श्रुतिः मृत्वा पुनर्मृत्युमाप
द्यते अर्द्यमानाः स्वकर्म्मभिरिति ४५ तस्माद्वेदोक्तमेव कुर्वाणो न तु निषिद्धम् न तु कर्म्मणि क्रिय
माणे तस्मिन्नासक्तिरस्य फलं च स्यात् न तु नैष्कर्म्यरूपा सिद्धिरत आह निःसंगः अनभिनिवेशवान् ईश्वरेऽर्पितं न तु फ
लोद्देशेन ननु फलस्य श्रुतत्वात्कर्म्मणि कृते फलं भवेदेव न रोचनार्थेति कर्म्मणि रुच्युत्पादनार्थं अगदपाने खंडलड्डुका

नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेंद्रियः विकर्म्मणा ह्यधर्म्मेण मृत्योर्मृत्युमुपैति सः ४५ वेदो
क्तमेव कुर्वाणो निःसंगोऽर्पितमीश्वरे नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ४६ य आशु
हृदयग्रंथिं निर्जिहीर्षुः परात्मनः विधिनोपचरेद्देवं तंत्रोक्तेन च केशवं ४७ लब्धानुग्रह आ
चार्यात्तेन संदर्शितागमः महापुरुषमभ्यर्चेन्मूर्त्याभिमतयाऽऽत्मनः ४८ ॥ दिवत् ततश्च कर्म्माभि

रुच्या वेदार्थं सम्यग्विचारयति तदा च यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपण इत्यनात्मज्ञस्य कृपणतां तमे
तं वेदानुवचनेन ब्राह्मणा विविदिषंति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनाऽनाशकेने तियज्ञादीनां ज्ञानशेषतां चावधा
र्य निष्कामेषु कर्म्मसु प्रवर्तते ततश्च स्वर्गकामो यजेतेत्यादिभिः कामिनस्य स्वर्गादेः फलत्वेनावगमादकामितोऽसौ न भवती
ति नैष्कर्म्यसिद्धिं भवतीति भावः ४६ वैदिकं कर्मयोगमुक्त्वा तांत्रिकमाह य आश्विति परात्मनः परस्यैव सत आत्मनो जीवस्य
हृदयग्रंथिं अहंकारबंधं निर्हर्तुमिच्छुः स तंत्रोक्तेन च विधिना प्रकारेण भजेत् तंत्रमागमः चकाराद्वैदिकेन सह समुच्चयमा
ह ४७ तमेव विधिमाह लब्धानुग्रह इत्यादिना तेनाचा
र्येण संदर्शित आगमः अर्चनप्रकारो यस्य सः ४८ ॥

भक्तेः कर्मयोगाधीनत्वात्तं पृच्छति कर्मयोगमिति नैष्कर्म्यं कर्मनिवृत्तिसाध्यं ज्ञानं ४१ प्रश्नांतरमाह एवमिति प्रश्नं प्रष्टव्यमर्थं पितुः इक्ष्वाकोः ब्रह्मणः पुत्राः सनकादयः सर्वज्ञा अपि नाब्रुवन् ४२ गहनत्वद्योतनाय प्रथमं द्वितीयप्रश्नस्योत्तरमाह कर्मेति कर्म विहितं अकर्म तद्विपरीतं निषिद्धं विकर्म विगतं कर्म विहिताऽकरणं एतत्त्रयं वेदवादः वेदैकगम्यं न लौकिकं वेदस्य ईश्वरात्मत्वात् ईश्वरादुद्भूतत्वात् अपौरुषेयत्वात् इत्यर्थः पुंवाक्ये हि वक्तुरभिप्रायतोऽर्थज्ञानं शक्यं अपौरुषेये तु केवलं वाक्यपौर्वापर्येणैव तात्पर्यावधारणं तच्च दुष्करमिति तत्र कर्मादौ विद्वांसोऽपि मुह्यंति किमुतान्ये॥

श्रीराजोवाच कर्मयोगं वदत नः पुरुषो येन संस्कृतः विधूयेहाशु कर्माणि नैष्कर्म्यं विंदते परं ४१ एवं प्रश्नमृषीन्पूर्वमपृच्छं पितुरंतिके नाब्रुवन्ब्रह्मणः पुत्रास्तत्र कारणमुच्यतां ४२ श्रीआविर्होत्र उवाच कर्माकर्मविकर्मेति वेदवादो न लौकिकः वेदस्य चेश्वरात्मत्वात्तत्र मुह्यंति सूरयः ४३ परोक्षवादो वेदोऽयं बालानामनुशासनं कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ४४॥५

अतस्त्वत्तदा बालत्वान्नैवाब्रुवन्निति ४३ दुर्ज्ञेयं वेदतात्पर्यमाह परोक्षवाद इति यत्रान्यथास्थितोऽर्थः संगोपयितुमन्यथा कृत्वोच्यते स परोक्षवादः तथा च श्रुतिः तं वा एतं चतुर्हूतं संतं चतुर्होतेत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवा इति परोक्षवादत्वमेवाह कर्ममोक्षायेति ननु स्वर्गाद्यर्थं कर्माणि विधत्ते न कर्ममोक्षार्थं तत्राह बालानामनुशासनं यथा भवति तथा अत्र दृष्टांतः अगदं औषधं यथा पिता बालमगदं पाययन् खंडलड्डुकादिभिः प्रलोभयन् पाययति दद्यात् ति च तानि नैतावता अगदपानस्य तल्लाभः प्रयोजनं अपि त्वारोग्यं तथा वेदोऽप्यवांतरफलैः प्रलोभयन् कर्ममोक्षायैव

दृष्टांते विवृण्वन्निंद्रियादिलयेन निर्विकारात्मोपलब्धिं दर्शयति अंडेष्विति पेशिषु जरायुजेषु तथा तरुषु उद्भिज्जेषु अविनिश्चितेषु स्वेदजेषु उपधावति अनुवर्त्तते एवं दृष्टांते निर्विकारत्वं प्रदर्श्य दार्ष्टांतिकेऽपि दर्शयति कथं तद्देवात्मा सविकार इव प्रतीयते यद्यदा जागरे इंद्रियगणः यदा चस्व प्ने तत्संस्कारवानहंकारः यदा तु प्रसुप्तं तदा तस्मिन् प्रसुप्ते इंद्रियगणे सत्वे लीने अहमिच अहंकारे च सन्ने कूटस्थो निर्विकार एवात्मा कुतः आशयमृते लिंगशरीरमुपाधिं विना विकारहेतोरुपाधेरभावादित्यर्थः नन्वहंकारपर्यंतस्य सर्वस्य लये शून्यमेवावशिष्येत न्वथं तदा कूटस्थ आत्मा अतआह तदनुस्मृतिर्नः तस्य विशेषज्ञानशून्यस्य सुखात्मनः सुषुप्तिसाक्षिणः स्मृतिर्नोऽस्माकं भवति एतावंतं कालं सुखमहं सुप्तः न किंचिदवेदिषमिति अ

अंडेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र सन्ने यदिंद्रियगणेऽहमिच प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः ३९ यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि तस्मिन्विशुद्ध उपलभ्यत आत्मतत्वं साक्षात् यथाऽमलदृशोः सवितृप्रकाशः

तोऽननुभूतस्यास्मरणादस्त्येव सुषुप्तावात्मानुभवः विषयसंबंधाभावात्तु न स्पष्ट इति भावः तथा च श्रुतिः यद्वै तन्न पश्यति पश्यन्वै तद्द्रष्टव्यं न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति ३९ ननु यदि सुषुप्तौ कूटस्थात्मानुभवो भवेत् कथं पुनरपि संसारः स्यात् अविद्या तत्संस्काराणां विद्यमानत्वादिति चेत् कदा तर्हि तन्निवर्त्तकोऽनुभवो भवेत् अत आह यर्हीति वित्तैषणादि विहाय केवलमब्जनाभस्यैव चरणेच्छया या उरुभक्तिस्तया पुमान् चेतसो मलानि विधमेत् नाशयेत् चेत एव वा कर्तृ स्वगतानि मलानि तया भक्त्या क्षालयेत् तदा तस्मिन्विशुद्धे चेतसि सति साक्षादव्यवधानेनात्मतत्वमुपलभ्यते अमलयोर्दृशोः सतोः यथापूर्वमेव सिद्धः सवितृप्रकाश इति ४० ॥ ६ ॥

अनेकशक्तिमत् उरुर्महतीमायालक्षणाशक्तिर्यस्मतदितिवा वहुधाभानमेवदर्शयति आदौयदेकंब्रह्मत
देवसत्वंरजस्तमइतित्रिवृत्प्रधानंप्रवदंति ततःक्रियाशक्त्यासूत्रंज्ञानशक्त्यामहानितितदेवप्रवदंति ततःअ
हमितिजीवजीवोपाधिमहंकारंच तदेवप्रवदंति ततश्चज्ञानक्रियार्थफलरूपतया ज्ञानशब्देनदेवताःक्रि
याइंद्रियाणि अर्थाविषयाः फलंतत्प्रकाशःसुखादिवातद्रूपतयाब्रह्मैवभाति नहिसर्वस्वरूपेणस्वतोभासमा
नस्यब्रह्मणःस्वसिद्धौप्रमाणापेक्षेतिभावः ३७ ननुसर्वात्मकंचेत्ब्रह्मतर्हिसर्वस्यकार्यस्यजन्मादिविकारव
त्वाद्ब्रह्मणोऽपितत्प्रसंग सादतआह नात्मेति आत्माब्रह्मनजजाननजातःजन्माभावादेवतदनंतरास्तितालक्ष

ज्ञानक्रियार्थफलरूपतयोरुशक्तिब्रह्मैवभातिसदसच्चतयोःपरंयत् ३७ नात्माजजा
ननमरिष्यतिनैधतेऽसौनक्षीयतेसवनविद्व्यभिचारिणांहि सर्वत्रशश्वदनपाय्युपल
ब्धिमात्रंप्राणोयथेंद्रियवलेनविकल्पितंसत् ३८ ॥ ३ ॥ ११९ ॥ ६ ॥ ६ ॥

णोऽपिविकारोनास्तिनैधतेनवर्धते वृद्ध्यभावादेवविपरिणामोऽपिनिरस्तः कुतःहियस्मात् व्यभिचारिणांआ
गमापायिनांवालयुवादिदेहानांसवनवित् तत्तत्कालद्रष्टानह्यवस्थावतांद्रष्टातदवस्थोभवतीत्यर्थः ननुनिरा
वस्थःकोसावात्मा अतआह उपलब्धिमात्रमिति नन्वायातंतर्हिक्षणिकत्वंनेत्याह सर्वत्रेति सर्वत्रदेशेशश्वत्स
र्वदाअनपायीअनुवर्तमाने ननुनीलज्ञानंजातेपीतज्ञानेनष्टमितिप्रतीतेर्नज्ञानस्यानपायित्वं अतआह इंद्रिया
वलेनेतिसदेवज्ञानंइंद्रियवलेनविविधंकल्पितंनीलाद्याकाराहत्तयएवजायंतेनस्वंतिचनज्ञानमितिभा
वः व्यभिचारिष्वव्यभिचारेदृष्टांतःप्राणोयथेति ३८ ॥

अवेहीत्यनेन विषयत्वं प्राप्तं निषेधयति नैतदिति एतत्परं तत्त्वं मनो न विशति न विषयीकरोति वागुत वागपि च क्षुश्च आत्मा वुद्धिः अप्राणा अक्रियाशक्त्या न प्राप्नोति अन्यानि चेंद्रियाणि यथा ऽनलं स्वाः सांशभूता अर्चिषो विस्फुलिंगादयः न प्रकाशयंति न दहंति च तथा जडा सुमनआदिवृत्तिष्वभिव्यज्यमानस्यात्मप्रकाशस्य च तत्तद्वृत्तिप्रकाशकस्य न न तद्वृत्तिप्रकाशविषयत्वं प्राणस्य प्राणमुत चक्षुषः चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुरिति तथा यतो वाचो निवर्त्तंते अप्राप्य मनसा सहेत्यादिश्रुतेः ननु तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतेः शब्दगोचरत्वं प्रतीयते तत्राह शब्दोपीति शब्दोपि आत्ममूलं आत्मनि प्रमाणं सत् अर्थोक्तं अर्थादुक्तं यथा भव

नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेंद्रियाणि च यथा ऽनलमर्चिषः स्वाः शब्दो ऽपि वोधकनिषेधतया ऽत्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः ३६ सत्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदंति जीवं॥

९ति तथा आह न साक्षात् कुतः वोधकनिषेधतया स्वस्यैव वोधकस्य निषेधरूपत्वात् यतो वाचो निवर्त्तंते अप्राप्य मनसा सह यद्वाचा ऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि यन्मनो न मनुते न चक्षुषा पश्यति कश्चनैनमित्यादिश्रुतेः ननु तर्हि नैवाह श्रुतिः किमिदमुच्यते अर्थोक्तमाहेति तत्राह यदृत इति अथात आदेशो नेति नेति अस्थूलमनणु यतो वाचो निवर्त्तंते यद्वाचानभ्युदितमित्यादि निषेधस्य यत् अवधिभूतं ब्रह्म तत् ऋते विना अस्य सिद्धिर्नास्ति सर्वस्य निषेधस्य सावधित्वात् ३६॥ ननु तर्हि प्रमाणाविषयत्वान्नास्ति ब्रह्मेति प्रसज्येत अत आह सत्वमिति सत् स्थूलं कार्यं असत् सूक्ष्मं कारणं तत्सर्वं ब्रह्मैव भाति कुतः यत् यस्मात् तयोः सदसतोः परं कारणं ननु कथमेकं वहुविधस्य कारणं तत्राह उरुशक्ति

अजंहरिं अनुशीलयंतितच्चीलां अभिनयंति एवंपरमेत्यप्राप्यनिर्वृत्ताः संतस्तूष्णींभवंति ३२ उपसंहरतिइ
तीति भागवतधर्मांस्तन्नयाभक्त्या ३३ नारायणपरोमायांतरतीत्युक्ते पृच्छति नारायणाभिधानस्येति निष्ठां
स्वरूपं अयंभावः ब्रह्मैवतावन्नारायणइति भगवानितिपरमात्मेतिचोच्यतेतदुक्तं वदंति तत्तत्वविदस्तत्वंयज्ज्
ज्ञानमद्वयं ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यतइति तथानारायणेभगवतितत्पदिदं विश्वमाहितं गृहीतमा
यारुगुणः सर्गादावगुणःस्वतइत्यादिषु तत्रकिमेभिः शब्दैर्निर्विशेषंतदेववस्तूच्यते अस्तिवाकोऽपिविशेषां

॥ क्वचिद्रुदंत्यच्युतचिंतयाक्वचिद्धसंतिनंदंतिवदंत्यलौकिकाः नृत्यंतिगायंत्यऽनुशील
यंत्यजंभवंतितूष्णींपरमेत्यनिर्वृताः ३२ इतिभागवतान्धर्मान्शिक्षन्भक्त्यातदुत्थया
नारायणपरोमायामंजस्तरतिदुस्तरां ३३ राजोवाच नारायणाभिधानस्यब्रह्मणःपर॥
मात्मनः निष्ठामर्हथनोवक्तुंयूयंहिब्रह्मवित्तमाः ३४ स्थित्युद्भवप्रलयहेतुरहेतुरस्ययत्स्वप्न
जागरसुषुप्तिषुसद्बहिश्च देहेंद्रियासुहृदयानिचरंतियेनसंजीवितानितदवेहिपरंनरेंद्र

॥ पिप्पलायन उवाच ॥

३५ इति ३४ अत्रोत्तरंस्थित्युद्भवेति अयमर्थः अस्यविश्वस्यस्थित्युद्भवप्रलयानांहेतुःस्वयंचअहेतुर्हेतुरहितःस
नारायणइतिपरमेवतत्त्वमवेहि स्वप्नजागरसुषुप्तिषुसत्अनुवर्त्तमानंयत् वक्ष्यतिचतुरीयंत्रिषुसंततमिति वहि
श्चसमाध्यादौयत्सत् तद्ब्रह्मेतिपरमेवतत्वमवेहि देहेंद्रियप्राणमनांसियेनसंजीवितानिसंतिचरंतिस्वस्वकार्येषुप्रव
र्त्तंतेतत्परमात्मेतिपरमेवतत्वमवेहि एवंलक्षणभेदैर्नारायणादिनामभिरुच्यमानमपिपरमेकमेवतत्वंजानीहि ३५॥

णोऽनीहयादंडं सत्यंयथार्थभाषणं शमदमौ अंतःकरणबाह्येंद्रियनिग्रहौ २६ हरेर्जन्मकर्मगुणानांश्रव
णादितदर्थेहर्युद्देशेनसर्वंकर्मविशेषतश्चयजनादियत्ततत्तदर्थे शिक्षेत् २७ इष्टंदत्तमित्यादयोभावेनिष्ठाः वृत्तं
सदाचारः आत्मनःप्रियंगंधपुष्पादिदारादीनप्यालक्ष्यपरस्मैपरमेश्वरायनिवेदनंतत्स्वेवकर्तयासमर्पणंयत् तच्छि
क्षेत् २८ कृत्स्नएवात्मानाथश्चयेषां कृत्स्नआत्मनोजीवस्सनाथोयेषामितिवातेषुउभयत्रस्थावरेजंगमेचयाय

मनोवाक्कर्मदंडंचसत्यंसमदमावपि २६ श्रवणंकीर्त्तनंध्यानंहरेरद्भुतकर्मणः जन्मक
र्मगुणानांचतदर्थेऽखिलचेष्टितं २७ इष्टंदत्तंतपोजप्तं वृत्तंयच्चात्मनःप्रियं दारान्सुता
न्गृहान्प्राणान्यत्परस्मैनिवेदनं २८ एवंकृष्णात्मनाथेषुमनुष्येषुचसौहृदं परिचर्यां
चोभयत्रमहत्सुनृषुसाधुषु २९ परस्परानुकथनंपावनंभगवद्यशः मिथोरतिर्मिथ
स्तुष्टिर्निवृत्तिर्मिथआत्मनः ३० स्मरंतःस्मारयंतश्चमिथोऽघौघहरंहरिं भक्त्यासंजात
याभक्त्याबिभ्रत्युत्पुलकांतनुं ३१ ॥

परिचर्यांतां विशेषतोनृषुतत्रापिसाधुषुस्वधर्मशीलेषुततोपि
महत्सुश्रीभागवतेषु २९ तैश्चसहसंगमप्ययत्पावनंभगवद्यशः तत्परस्परानुकथनंशिक्षेत् यद्वायशःप्र
तितत्रसंसर्गादिपरित्यागेनमिथोयारतिःरमणंयाचतुष्टिःसुखं याचनिवृत्तिःसमस्तदुःखनिवृत्तिःतांच
शिक्षेत् ३० एवंवर्त्तमानानांपरमानंदप्राप्तिमाह स्मरंतइतिद्वयेन भक्त्यासाधनभक्त्यासंजातयाप्रेम
लक्षणयाभक्त्या ३१ ॥ ॥

३

भा०ए०
१२

उत्तमंश्रेयोज्ञातुमिच्छुः शाब्दे ब्रह्मणि वेदाख्ये न्यायतो निष्णातं तत्वज्ञं अन्यथा संशयनिरासकत्वायोगात् परे च ब्रह्मण्यपरोक्षानुभवेन निष्णातं अन्यथा संबोधसंचारायोगात् परब्रह्मनिष्णातत्वद्योतकमाह उपशमाश्रयमिति २१ किंच गुरुरेवात्मदैवतं च यस्य सः अनुवृत्त्यासेवया यैः धर्मैर्वस्तुत आत्मा आत्मप्रदश्चोपासकानां यथा बलिप्रभृतीनां २२ यथोचितमिति हीनेषु दयां समेषु मैत्रीं उत्तमेषु प्रश्रयं च शिक्षेदित्यर्थः २३ शौचं बाह्यं मृज्जलादिभिः आभ्यंतरं चादंभमानादि शिक्षेत् तपः स्वधर्माचरणं तितिक्षां क्षमां मौनं वृथा वाचामनुच्चारणं स्वाध्यायं अधिकारानुरूपं वेदपाठादिकं आर्जवं स्वच्छतां ब्रह्मचर्यं य

तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमं शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् २१ तत्र भागवतान् धर्मान् शिक्षेद्गुर्वात्मदैवतः अमायया ऽनुवृत्त्या यैस्तुष्येदात्मा ऽत्मदो हरिः २२ सर्वतो मनसो ऽसंगमादौ संगं च साधुषु दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् २३ शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवं ब्रह्मचर्यमहिंसां च समत्वं द्वंद्वसंज्ञयोः २४ सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेततां विविक्तचीरवसनं संतोषं येन केनचित् २५ श्रद्धां भागवते शास्त्रे ऽनिंदामन्यत्र चापि

स्यादृगुचितं ऋतुकाले स्वदारनियमादि अहिंसां भूतेष्वद्रोहं द्वंद्वसंज्ञयोः शीतोष्णसुखदुःखादिरूपयोः हि हर्षविषादराहित्यं २४ आत्मेश्वरान्वीक्षां सच्चिद्रूपेणात्मेक्षां नियंतृरूपेणेश्वरान्वीक्षां च कैवल्यमेकांतशीलत्वं अनिकेततां गृहाद्यभिमानराहित्यं विविक्तचीरवसनं विजनपतितानां वस्त्रखंडानां शुद्धानां वा वल्कलानां वा परिधानं २५ भागवते भगवत्प्रतिपादके अन्यत्र शास्त्रादौ या अनिंदा तां मनसः प्राणायामैः वाचो मौनेन कर्म

राम
१२

त्रिवर्णा त्रिगुणा माया श्रवणभीतं राजानं तन्निवृत्त्युपायश्रवणेच्छुं लक्षयति किम्भूय इति १६ एवमनुकंपितस्तन्निवृत्त्युपायमेव पृच्छति यथैतामिति यद्यपि तन्मायया ऽतो बुध आभजेत्तमिति भक्तिस्तत्तारकत्वेनोक्तैव तथापि किं भक्तिरेव अन्योपि वा तत्रोपायोस्तीति [illegible] पुनः प्रश्नः अकृतात्मभिः अवशीकृतांतःकरणैः स्थूलधियः स्थूले शरीरे अहंधीर्येषां ते १७ भक्तिव्यतिरेकेण [illegible] न्य उपाय इति अभिप्रेत्य भक्तिमेव ससाधनां निरूपयति तत्र प्रथमं वैराग्यद्वारा गुरूपसत्तिमाह चतुर्भिः कर्माणीति दुःखहत्यै दुःखप्रतीकाराय पाकविपर्यासं फलवैपरीत्यं मिथुनीचारिणां मिथुनीभूय प्रवर्त्तमानानां १८

एषा माया भगवतः सर्गस्थित्यंतकारिणी। त्रिवर्णा वर्णितास्माऽभिः किं भूयः श्रोतुमिच्छसि १६॥

राजोवाच यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः तरंत्यंजः स्थूलधियो महर्ष इदमुच्यतां १७

प्रबुद्ध उवाच कर्माण्यारभमाणानां दुःखहत्यै सुखाय च पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणां १८ नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः १९ एवं लोकं परं विद्यान्नश्वरं कर्म्मनिर्मितं सतुल्यातिशयध्वंसं यथा मंडलवर्त्तिनां २०॥ ॥

कर्मभिः साधिता अपि वित्तादयो न सुखहेतव इति च पश्येदित्याह नित्यार्तिदेनेति आत्मनः स्वस्य मृत्युरूपेण चलैः अनित्यैः अपायिभिश्च १९ एवं लोकं परमिति कर्मनिर्मितत्वान्नश्वरं तथा च श्रुतिः तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति किंच वर्तमानसमयेपि दुःखयुक्तं पश्येदित्याह सतुल्यातिशयध्वंसं सह तुल्येन आतिशयेन ध्वंसेन च वर्तमानं अतः तुल्ये स्पर्द्धा अतिशये असूया ध्वंसालोचने भयादिकं चापरिहार्यमित्यर्थः यथा खंडमंडलप

ततउपाधिलयाद्वैराजःपुरुषोऽव्यक्तंकारणंप्रविशति ननुब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरेपरस्यान्तेकृतात्मानःप्रविशंतिप
रंपदमितिस्मृतेर्यावदधिकारमवस्थितिरधिकारिणामितिन्यायाच्चवैराजशब्दाभिधेयस्यचब्रह्मणःपरमभागवतत्वान्मोक्षएव
संगच्छतेनान्येषामिवकारणमात्रप्रवेशःसत्यं अश्वमेधादिनासत्यलोकंगतानामावृत्तिश्रवणादभक्तत्वेचब्रह्मणोऽविप्र
कृतोलयःपुनरुत्पत्तिश्चेतिमोक्षादौदार्घ्येभ्यःसूचनायैवमुक्तमितिनविरोधःयद्वाकेनापिप्रमाणेननव्युत्पतेरव्यक्तंब्रह्मैवतत्प्र
वेशेनचमोक्षएवोक्तइतिद्रष्टव्यं १२ एवंविराजोलयमुक्तातत्कारणानांमहदादिपृथिव्यंतानांप्रातिलोम्येनलयमाहद्वा

ततोविराजमुत्सृज्यवैराजःपुरुषोनृप अव्यक्तं विशतेसूक्ष्मंनिरिंधनइवानलः १२ वायुनाहृ
तगंधाभूःसलिलत्वायकल्पते सलिलंतद्धृतरसंज्योतिष्ट्वायोपकल्पते १३ हृतरूपंतुतमः
सावायौज्योतिःप्रलीयते हृतस्पर्शोवकाशेनवायुर्नभसिलीयते १४ कालात्मनाहृतगुणंन
भआत्मनिलीयते इंद्रियाणिमनोबुद्धिःसहवैकारिकैर्नृपप्रविशंतिह्यहंकारंस्वगुणैरहमा॥

सुनेतिवायोर्हिगंधसहारित्वंप्रसिद्धं संवर्तकेनवायुनाहृतगंधाअतएवगंधस्यव्यावर्तकस्यगतत्वात्सलि ॥त्मनि१५
लत्वायकल्पतेसलिलेलीयतइत्यर्थःतद्धृतरसंतेनवायुनैवहृतोरसोयस्यतत् १३ तमसश्चरूपतिरस्कारित्वंप्रसिद्धंसं
वर्तकेनतमसाअवकाशेनआकाशेनस्वकारणेन १४ कालात्मनाशब्दस्यहिकालतएवनाशःप्रसिद्धः तद्रूपेणात्मनाइ
श्वरेणआत्मनितामसाहंकारेइंद्रियाणिबुद्धिश्चराजसाहंकारंमनोवैकारिकैर्देवैः सहसात्विकाहंकारंएवंत्रिविधैःस्व
गुणैः स्वकार्यैःसहितः अहं अहंकारः आत्मनि महति सचप्रकृताविति द्रष्टव्यं १५॥ ॥ ॥

ननुभुंजानः कथंसज्जतेभुंजानोभोगसमाप्तौमुच्यतेइतिचेत्तत्राह कर्म्माणीतिकर्मभिः कर्मेंद्रियैश्चस्तनिमित्तानिस्
वासनानिकर्माणिकुर्वन् तत्तत्पूर्वकर्मफलंचगृह्णन् अयंदेहभृत् भ्रमतीहसंसारेनतुमुच्यते कथंभूतंकर्मफलं
सुखेतरंसुखदुःखात्मकं ६ कियंतंकालंभ्रमतीत्याह इत्थमिति मोक्षाभिव्याप्यवहूनिअभद्राणिवहंतीतितत्‌।
थाताः सर्गप्रलयौउत्पत्तिमरणे ७ एवंमायामयींसृष्टिमुक्त्वामायामयंप्रलयंदर्शयितुमारभते धातूपप्लवेत्यादि

कर्माणिकर्मभिःकुर्वन्स्तनिमित्तानिदेहभृत् तत्तत्कर्मफलंगृह्णन्भ्रमतीहसुखेतरं ६
इत्थंकर्मगतीर्गच्छन्वह्वभद्रवहाःपुमान् आभूतसंप्लवात्सर्गप्रलयावश्नुतेऽवशः
७ धातूपप्लवआसन्नेव्यक्तंद्रव्यगुणात्मकं अनादिनिधनःकालोह्यव्यक्तायापकर्ष
ति ८ शतवर्षाह्यनावृष्टिर्भविष्यत्युल्वणाभुवि तत्कालोपचितोष्णार्कोलोकांस्त्रीनप्रतपि
ष्यति ९ पातालतलमारभ्यसंकर्षणमुखानलः दहन्नूर्द्ध्वशिखोविष्वग्वर्द्धतेवायुनेरि
तः १० संवर्त्तकोमेघगणोवर्षतिस्मशतंसमाः धाराभिर्हस्तिहस्ताभिर्लीयतेसलिलेविराट् ११

धातूनांमहाभूतानामुपप्लवेनाशहेतावासन्नेव्यक्तंकार्यं द्रव्यंस्थूलंगुणः सूक्ष्मंतदात्मकंअव्यक्ताय।
अव्यक्तंप्रतिनेतुमाकर्षति ८ नाशहेतूनाह शतवर्षेति तस्मिन् कालेउपचितश्चासौउष्णश्चासावर्
कश्चयद्वातेनकालेनोपचितमुष्णत्वंयस्यसः ९ ऊर्द्ध्वाशिखः ऊर्द्ध्वज्वालः विष्वक्सर्वतः १० सांवर्त्त
कः प्रलयकर्त्ताधाराभिः नतुविंदुभिः हस्तिहस्ताभिस्तत्प्रमाणाभिः ११ ॥ ११ ॥ ११ ॥ ११ ॥

ननूक्तलक्षणै र्भागवतो भूत्वा कृतार्थः स्याः किं बहु प्रश्नैः अतआह नानुतृप्यइति संसारतापैर्नितरां तप्तो हं तस्य तापस्य भेषजं हरिकथाऽमृतरूपं युष्मद्वचो जुषमाणो नानुतृप्यामि २ मायायाः स्वरूपतो निरूपणासंभवा त्सृष्ट्यादि कार्य्य द्वारेण निरूपयितुमाह एभिरिति आद्यः पुरुषः ययाशक्त्या भूतानामात्माकारणभूतः एभिः स्वसृष्टैर्महाभूतैरुच्चावचानि भूतानि ससर्ज्जे एषामाया भगवतइति चरमश्लोकपादस्य प्रतिश्लोकमनुषंगः किमर्थं ससर्जे स्वमात्रात्मप्रसिद्धये स्वं मिमीते प्रमिमीते उपास्ते यः सः स्वमाता तस्यात्मनो जीवस्य प्रकृष्टायै सिद्धये यद्वा स्वां

नानुतृप्ये जुषन्युष्मद्वचो हरिकथाऽमृतं संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजं २ अंतरिक्ष उवाच एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ससर्ज्जोच्चावचान्याऽद्यः स्वमात्रात्मप्रसिद्धये ३ एवं सृष्टानि भूतानि प्रविष्टः पंचधातुभिः एकधा दशधात्मानं विभजन्जुषते गुणान् ४ गुणैर्गुणान्स भुंजान आत्मप्रद्योतितैः प्रभुः मन्यमान इदं सृष्टमात्मानमि-

त्रा भूतानां जीवानां मात्राप्रसिद्धये विषयभोगाय आत्मप्रसिद्धये मोक्षाय चेत्यर्थः तदुक्तं वेदस्तुतौ वुद्धींद्रियमनः प्राणान् जनानामसृजत्प्रभुः मात्रार्थं च भवार्थं च आत्मने कल्पनाय चेति ३ एवं जीवोपकरणार्थं पंचधातुभिर्महाभूतैः सृष्टानि भूतान्यंतर्यामिरूपेण प्रविष्टः एकधा मनसा दशधा वाह्येंद्रियरूपेण आत्मानं विभजन् गुणान् तत्र द्विषयान् जुषते जोषयतीत्यर्थः यद्वा तमात्मानं प्रति गुणान् विभजन् जुषते प्रीयत इत्यर्थः ४ सच जीवआत्मनोऽतर्यामिणा प्रद्योतितैर्गुणैरिंद्रियैर्गुणान्विषयान्भुंजान इदं सृष्टं शरीरमात्मानं अहमेवमन्यमान इह श्री

अजिते हरावेव आत्मायेषांतथाभूतैःसुरादिभिरपिदुर्लभात् किंतुकेवलं विमृग्यात् तदपेक्षयासर्वसत्तुच्छत्वंस्मरन्सो
नचलतीत्यर्थः ५३ अपिच विषयाभिसंधिनाचलनंकामेनातिसंतापेसतिभवेत् सतुभगवत्सेवानिष्ठेनोनसंभवतीत्या
ह भगवतइति उरुविक्रमौचतौअंघ्रीचतयोः शाखाअंगुलयः तासुनखान्येवमणयः तेषांचंद्रिकाशीतलादीप्तिस्तयानि
रस्तःकामादितापोयस्मिन् तस्मिन् उपसीदतांभजतांहृदिकथंपुनःसंतापःप्रभवति चंद्रेउदितेसतिअर्कसंतापइवनय

नचलतिभगवत्पदारविंदाल्लवनिमिषार्द्धमपियःसवैष्णवाग्र्यः ५३ भगवतउरुविक्रमां
घ्रिशाखानखमणिचंद्रिकयानिरस्ततापे हृदिकथमुपसीदतांपुनःसप्रभवतिचंद्रइवोदि
तेऽर्कतापः ५४ विसृजतिहृदयंनयस्यसाक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः प्रणयरश
नयाधृतांघ्रिपद्मःसभवतिभागवतप्रधानउक्तः ५५ ॥इतिश्रीभागवतेमहापुराणेएकादश
स्कंधेनारदवसुदेवसंवादेद्वितीयोध्यायः २ राजोवाच परस्यविष्णोरीशस्यमायिनामपिमो
हिनीं मायांवेदितुमिच्छामोभगवंतोब्रुवंतुनः १॥

एवंपरस्यपरइत्यादिनाश्लोकत्रयेणयाद्दशइत्यस्योत्तर
मुक्तंवेदितव्यं यद्वातेइत्यस्यचहरिनामानीतिज्ञातव्यं ५४ उक्तसमस्तलक्षणसारमाह विसृजतीति हरिरेवस्वयंसाक्षाद्य
स्यहृदयंनविसृजतिनमुंचति कथंभूतः अवशेनाप्यभिहितमात्रोपिअघौघंनाशयतियःसः तत्किंनविसृजति यतःप्रण
यरशनयाधृतंहृदयेनिबद्धमंघ्रिपद्मंयस्यसः भागवतप्रधानउक्तोभवति ५५ इतिश्रीभागवतेएकादशेटीकायांद्वितीयो
ध्यायः २ मायातत्तरणंब्रह्मकर्मप्रश्नचतुष्टये तृतीयेतूत्तरंदत्तमार्षभैर्मुनिभिःपृथक् १ विष्णोर्मायामिदंपश्यन्नित्युक्तमतो

२

भा०ए० ६

किंच देहादीनां संसारधर्मैर्जन्माप्ययादिभिर्यो हरेः स्मृत्याऽविमुह्यमानः सभागवतप्रधानः तत्रदेहस्यजन्माप्ययौ प्रा
णस्यक्षुत्पिपासे मनसोभयं बुद्धेस्तर्षः तृष्णा इंद्रियाणांकृच्छ्रंश्रमः तैः ४९ कामश्चकर्माणिचबीजानिचवासनाः
तेषांवासुदेवएवएकोनिलयआश्रयोयस्यसः एतेनगृहीत्वापीत्यादिश्लोकत्रयेणद्वेषहर्षमोहकामादिरहितआचरतो।
तियथाचरतोत्येनस्योत्तमत्वमुक्तं ५० यैर्लिंगैर्भगवत्प्रियइत्यसोत्तरमाह नयस्येतिजन्मसत्कुले कर्मतपआदिजातयः
आनुलोमप्रतिलोमजाः मूर्द्धाभिषिक्तादयः अस्मिन् देहेअहंकाररहितैः सत्कुलेकर्मादिलिंगैर्हरेःप्रियोभवतीत्यर्थः

देहेंद्रियप्राणमनोधियां योजन्माप्ययक्षुद्भयतर्षकृच्छ्रैः संसारधर्मैरविमुह्यमानः स्मृत्याहरे।
र्भागवतप्रधानः ४९ नकामकर्मबीजानां यस्यचेतसिसंभवः वासुदेवैकनिलयः सवैभागवतोत्त
मः ५० नयस्यजन्मकर्मभ्यां नवर्णाश्रमजातिभिः सज्जतेस्मिन्नहंभावोदेहेवैसहरेःप्रियः ५१
नयस्यस्वःपरइतिवित्तेष्वात्मनिवाभिदा सर्वभूतसमःशांतः सवैभागवतोत्तमः ५२ त्रिभुवन
विभवहेतवेऽप्यकुंठस्मृतिरजितात्मसुरादिभिर्विमृग्यात्॥ ❀ ॥ ❀ ॥ ० ॥ ० ॥

५१ वित्तेषुस्वीयंपरकीयमिति आत्मनिस्वः परइति ५२ किंच त्रिभुवनविभवहेतवेऽपित्रैलोक्यराज्यार्थमपि
लवार्द्धमपिनिमिषार्द्धमपिभगवत्पदारविंदभजनाद्योनचलतिसवैष्णवाग्र्यः ननुलवार्द्धमात्रभजनोपरमेचेत्ता।
वांल्लाभोभवेत् तत्कुतोनचलेत्तत्राह अकुंठस्मृतिः भगवत्पदतोऽन्यत्सारंनास्तीत्येवंरूपाऽकुंठाअना।
पगतास्मृतिर्यस्यसः भगवत्पदारविंदादन्यत्सारंनास्तीतिकुतः अतआह॥ ० ॥ ❀ ॥ ० ॥ ० ॥

राम:

६

भागवतस्य भवंतीत्युक्तेः तस्य लक्षणं पृच्छति अथेति यद्धर्मः यस्मिन् धर्मे परिनिष्ठित यादृशः यत्स्वभावः यथाचरति वर्त्तते ब्रूते वा यैश्च लिंगैर्भगवतः प्रियो भवति ४४ यद्धर्मेद्दत्तस्योत्तरमाह त्रयेण सर्वभूतेष्विति आत्मनः स्वस्य सर्व्वभूतेषु ब्रह्मभावेन समन्वयं यः पश्येत् तथा ब्रह्मस्वरूपे आत्मन्यधिष्ठाने भूतानि च यः पश्येत् यद्वा आततत्वात् प्रमातृत्वाद् आत्मा हि परमो हरिरिति तंत्रोक्तेः आत्मनो हरेः सर्वभूतेषु मशकादिष्वपि नियंतृत्वेन वर्त्तमानस्य भगवद्भावं निरतिशयैश्वर्यमेव यः पश्येत् न तु तस्य तारतम्यं तथा आत्मनि हरावेव भूतानि च पश्येत् कथंभूते भगवति अप्रच्युतैश्वर्यादिरूपेण पुनर्ज्जडमलिनभूतास्य

श्रीराजोवाच अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणां यथाचरति यद्ब्रूते यैर्लिंगैर्भगवत्प्रियः ४४ हरिरुवाच सर्वभूतेषु यः पश्येत् भगवद्भावमात्मनः भूतानि भगवत्यात्मन्येष भागवतोत्तमः ४५ ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥ ४६ अर्चायामेव हरये पूजां यः श्रद्धयेहते न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ४७ गृहीत्वापींद्रियैरर्थान्यो न द्वेष्टि न हृष्यति विष्णोर्मायामिदं पश्यन्स वै भागवतोत्तमः ४८ ॥ एयत्वेन जाड्यादि

प्रसक्तमैश्वर्यातिप्रच्युतिं पश्येत् स सर्वत्र परिपूर्णं भगवन्तं त्वं यश्यन् भागवतोत्तम इत्यर्थः ४५ प्रेम च मैत्री च कृपा च उपेक्षा च ताः ईश्वरादिषु चतुर्षु यः करोति स मध्यमो भागवतः एवंभूतस्य भेदस्य दर्शनात् ४६ अर्चायां प्रतिमायां पूजामीहते करोति न तद्भक्तेषु अन्येषु च स उत्तरां न करोति सः प्राकृतः प्रकृतिः प्रारंभः अधुनैव प्रारब्धभक्तिः शनैरुत्तमो भविष्यतीत्यर्थः ४७ पुनरष्टभिः श्लोकैरस्य हि तत्त्वादुत्तमभागवतस्यैव लक्षणान्याह गृहीत्वापीति श्रीवासुदेवाविष्टचित्तो न गृह्णाति तावदिंद्रिये

श्रीधरीटीकायामेकादशस्कंधे ४८ ॥

भगवंतमाकलय्योच्चैर्हसति एतावंतंकालमुपेक्षितोऽस्मीतिरोदिति अत्यौत्सुक्याद्रौतिक्रोशति अतिहर्षेणगा
यतिजितंजितमितिनृत्यति किंदांभिकवत्परान्प्रतिप्रकाशयितुंन उन्मादवत् ग्रहगृहीनवत् लोकवाह्यःविवशः
॥ ४० ॥ किंच खमिति सत्वानिभूतानिआकाशादीनियत्किंचिद्भूतमात्रंहरेः शरीरमितिमत्वाप्रणमेत् संभा
वनायांलिङ् ४१ नन्वियमारूढयोगानामपिवहुजन्मभिर्दुर्लभागतिःकथंनामकीर्तनमात्रेणैकस्मिन्नेव
जन्मनिभवेदित्याशंक्यसदृष्टांतमाह भक्तिरिति प्रपद्यमानस्यहरिंभजतःपुंसःभक्तिःप्रेमलक्षणापरेशानुभवः

हसत्यथोरोदितिरौतिगायत्युन्मादवन्नृत्यतिलोकवाह्यः ४० खंवायुमग्निंसलिलंमहींच।
ज्योतींषिसत्वानिदिशोद्रुमादीन् सरित्समुद्रांश्चहरेःशरीरंयत्किंचभूतंप्रणमेदनन्यः ४१
भक्तिःपरेशानुभवोविरक्तिरन्यत्रचैषत्रिकएककालः प्रपद्यमानस्ययथाऽश्नतःस्युस्तुष्टिः
पुष्टिःक्षुदपायोऽनुघासं ४२ इत्यच्युतांघ्रिंभजतोऽनुवृत्त्याभक्तिर्विरक्तिर्भगवत्प्रवोधः
भवंतिवैभागवतस्यराजंस्ततः परांशांतिमुपैतिसाक्षात् ४३ ॥ ६ ❋ ६ ॥

प्रेमास्पदभगवद्रूपस्फूर्तिःतयानिर्वृतस्यततोऽन्यत्रगृहादिषुविरक्तिरित्येषत्रिकः एककालःभजनसमकाला
एवस्यात् यथाऽश्नतोभुंजानस्यतुष्टिःसुखंपुष्टिःउदरभरणंक्षुन्निवृत्तिश्चप्रतिग्रासंस्युः उपलक्षणमेतत् प्रतिसि
क्थमपियथास्युस्तद्वत् एवमेकैकस्मिन्भजनेकिंचित्किंचित्प्रेमादित्रिकेजायमानेऽनुवृत्त्याभजतःपरमप्रेमा
दिजायतेवहुग्रासभोजिनइवपरमतुष्ट्यादि ४२ ततश्चभगवत्प्रसादेनकृतार्थोभवतीत्याहइत्यच्युतांघ्रिमिति ४३

स्वरूपास्फूर्तिस्ततो विपर्ययो देहोऽस्मीति ततो द्वितीयाभिनिवेशाद्भयं भवति एवं हि प्रसिद्धं लौकिकीष्वपि मायासु उक्तं
च भगवता दैवी ह्येषा गुणमयी मम माया दुरत्यया मामेव ये प्रपद्यंते मायामेतां तरंति ते इति एकयाऽव्यभिचारिण्या भक्त्याऽभ
जेत् किंच गुरुदेवतात्मा गुरुरेव देवतेश्वरः आत्मा प्रेष्ठश्च यस्य तथा दृष्टिः सन्नित्यर्थः ३७ ननु विषयविक्षिप्तचित्त
स्य कुतोऽव्यभिचारिणी भक्तिः संभवति कुतस्तरामभयं तत्र न तावद्विषयो नाम वास्तवोऽस्ति किंतु मनोविलासमात्रं अ
तो मनो नियमनेन भजनादभयं स्यादित्याह अविद्यमानोऽपीति द्वयः द्वैतप्रपंचः ध्यातुः पुंसः धिया मनसा स्वप्न अमनो

तन्मायया ऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ३७ अविद्यमानोऽप्यवभाति हि द्व
यो ध्यातुर्धिया स्वप्नमनोरथौ यथा तत्कर्मसंकल्पविकल्पकं मनो बुधो निरुंध्यादभयं ततः स्या
त् ३८ शृण्वन्सुभद्राणि रथांगपाणेर्जन्मानि कर्माणि च यानि लोके गीतानि नामानि तदर्थ
कानि गायन्विलज्जो विचरेदसंगः ३९ एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः॥

रथश्च यथेत्यर्थः तत्तस्मात्कर्माणि संकल्पयति विकल्पयति च यन्मनस्तन्निरुंध्यात् नियच्छेत् ततश्चैकया भक्त्या भजना
दभयं स्यादित्यर्थः ३८ एतदत्यंताशक्यमित्याशंक्य सुगमं मार्गमाह शृण्वन्निति तदर्थकानि तान्येव जन्मानि कर्माणि च
अर्थो येषां तानि एतान्यपि साकल्येन ज्ञातुमशक्यानीत्याशंक्याह यानि लोके प्रसिद्धानि गीतानि तानि शृण्वन् गायंश्च विचरे
त् असंगो निस्पृहः ३९ एवं च भजतः संप्राप्तप्रेमलक्षणभक्तियोगस्य संसारधर्मातीतां गतिमाह एवमिति एवं व्रतं दृ
ढं यस्य सः स्वप्रियस्य हरेर्नामकीर्त्या जातोऽनुरागः प्रेमयस्य सः अतएव द्रुतचित्तः श्लथत्हृदयः कदाचिद्भक्तपराजितं

न्नंजः पदेनोक्तं सुकरत्वं विघ्नणोनियानिति यानास्थाय आश्रित्य योगादिष्विवनप्रमाद्येत विघ्नैर्नविहन्येत किंच निमी
ल्यनेत्रेधावन्नपिइह एषुभागवतधर्मेषु नस्खलेत् निमीलनं नामाज्ञानं यथाहुः श्रुतिस्मृतीउभेनेत्रे विप्राणां परिकी।
र्त्तिते एकेनविकलः काणोद्वाभ्यामंधः प्रकीर्त्तितइति अज्ञात्वापीत्यर्थः यथा पदन्यासस्थानमतिक्रम्यशीघ्रंपरतः
पदन्यासेनगविर्द्धावनं तद्वदत्रापिकिंचितकिंचदति क्रम्या तिक्रम्यातिशीघ्रमनुष्ठानं धावनं तथाऽनुतिष्ठन्नपिनभ
स्खलेत् नप्रत्यवायीस्यात् तथानपतेत् फलान्नभ्रश्येत् ब्राह्मणादीनामुक्तानपिधर्मान्कश्चिदकुर्वाणोभागवतान्ध
र्मान्श्रवणकीर्त्तनादीनकुर्वाणस्तत्फलंप्राप्नुयादित्यर्थः ३५ ननुकेतेभावताधर्माः ईश्वरार्पितानिसर्वकर्माण्यपी।
त्याह कायेनेति आत्मनाचित्तेनाहंकारेणवा अनुसृतोयः स्वभावस्तस्मात् अयमर्थः नकेवलं विधितः कृतमेवेति नि।

यानास्थायनरोराजन्नप्रमाद्येतकर्हिचित् धावन्निमील्यवानेत्रेनस्खलेन्नपतेदिह ३५
कायेनवाचामनसेंद्रियैर्वाबुद्ध्यात्मनावाऽनुसृतस्वभावात् करोतियद्यत्सकलंपरस्मैना
रायणायेतिसमर्प्पयेत्तत् ३६ भयंद्वितीयाभिनिवेशतः स्यादीशादपेतस्यविपर्ययोऽस्मृतिः॥

यमः स्वभावानुसारिलौकिकमपीति तथाचभगवद्गीतासु यत्करोषियदश्नासियज्जुहोषिददासियत् यत्तपस्यसि
कौंतेयतत्कुरुष्वमदर्प्पणमिति यद्वाननुकायादीनामेवकर्म्मनात्मनइत्याशंक्याह अध्यासेनानुसृतात् ब्राह्मणत्वा।
दिस्वभावात् यद्यत्करोतीत्यर्थः तत्सकलं परस्मैपरमेश्वरायनारायणायेतिसमर्प्पयेत् तथासतिसकलमपिकर्मभागव
तोधर्मोभवतीतिभावः ३६ ननुकिमेवंपरमेश्वरभजनेनअज्ञानकल्पितभयस्यज्ञानैकनिवर्त्यत्वादित्याशंक्याह भयमिति।
यतः भयंतन्मायया भवेत्अतोबुधोबुद्धिमानतमेवाभजेत् ननुभयंदेहाद्यभिनिवेशतोभवतिसचदेहअहंकारतः सनु

हे अनघाः निरवद्याः भवतः युष्मान् आत्यंतिकं क्षेमं पृच्छामः यतः क्षणार्द्धकालभवोऽपि सत्संगः शेवधिर्निधिः निखिलाभेय यानंदो भवति तथाऽत्र परमानंद इत्यर्थः ३० तदर्थं च भागवतान् धर्मान् ब्रूत यदि नोऽस्माकं श्रुतये श्रवणाय क्षमं योग्यं भवति कथंभूतान् यैर्द्धर्मैः प्रपन्नाय भक्ताय अजो हरिः आत्मानमपि दास्यति तान् ३१ सह सदस्यैर्ऋत्विग्भिश्च वर्त्तमानं तेऽपि भगवद्धर्मश्रवणपरा बभूवुरित्यर्थः भगवद्धर्मतद्भक्तमायातत्तरणानि च ब्रह्म कर्मावतारेहाभक्तप्राप्यं युगक्रमान् ॥

अत आत्यंतिकं क्षेमं पृच्छामो भवतोऽनघाः संसारेऽस्मिन् क्षणार्द्धोऽपि संत्संगः शेवधिर्नृणां ३० धर्मान् भागवतान् ब्रूत यदि नः श्रुतये क्षमं यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ३१ नारद उवाच एवं ते निमिना पृष्टा वसुदेव महत्तमाः प्रतिपूज्याऽब्रुवन् प्रीत्या ससदस्यर्त्विजं नृपं ३२ कविरुवाच मन्येऽकुतश्चिद्भयमच्युतस्य पादांबुजोपासनमत्र नित्यं उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्त्तते भीः ३३ ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये अंजः पुंसामविदुषां विद्धि भागवतान् हि तान् ३४ ॥ एतं क्रमेण कृतवान् नव प्रश्नान् निमिर्नव एकैकस्योत्तरं प्रोचुः कविमुख्या मुनीश्वराः ३२ प्रथमम् आत्यंतिकं क्षेमं कथयति मन्य इति न कुतश्चिद्भयं यस्मात्तदकुतश्चिद्भयं अत्र संसारे असदात्मभावात् असति देहादावात्मभावात्ततः नित्यं सर्वदा उद्विग्नबुद्धेः विश्वात्मना सर्वथा निःशेषं यत्र पादांबुजोपासने भीर्निवर्त्तते तत् ३३ भागवतधर्मलक्षणमाह ये वै इति मन्वादिमुखेन वर्णाश्रमादिधर्मानुक्त्वाऽतिरहस्यत्वात् स्वमुखेनैव भगवताऽविदुषामपि पुंसां अंजः सुखेनैवात्मलब्धये ये वै उपायाः प्रोक्ताः तान् भगवतान् धर्मान् विद्धि ३४ ॥ ॥ ॥

२
भा॰ ए॰
६

अव्याहता अप्रतिहता इष्टा अभिप्रेता गतिर्येषां ते मुक्ता अनासक्ताः २३ महात्मनो निमेः वितायमानं अनुष्ठीयमानं अजनाभे भारतवर्षे २४ यजमानो निमिः अग्नयः आहवनीयादयः विप्रा ऋत्विगादयः २५ अभिप्रेत्य ज्ञात्वा २६ स्वरुचैव रोचमानान् नत्वाभरणादिप्रकाशैः ब्रह्मपुत्रोपमान् सनत्कुमारादिसदृशान् २७ परमप्रीत्या तद्दर्शनमभिनंदति द्वाभ्यां मन्य

अव्याहतेष्टगतयः सुरसिद्धसाध्यगंधर्वयक्षनरकिन्नरनागलोकान् मुक्ताश्चरंति मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि कामं २३ तएकदा निमेः सत्रमुपजग्मुर्यदृच्छया॥ वितायमानमृषिभिरजनाभे महात्मनः २४ तान् दृष्ट्वा सूर्यसंकाशान्महाभागवतान्नृप॥ यजमानोग्नयो विप्राः सर्व्व एवोपतस्थिरे २५ विदेहस्तानभिप्रेत्य नारायणपरायणान् प्रीतः संपूजयांचक्रे आसनस्थान्यथार्हतः २६ तान्रोचमानान्स्वरुचा ब्रह्मपुत्रोपमान्नव पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः २७ विदेह उवाच मन्ये भगवतः साक्षात् पार्षदान्वो मधुद्विषः विष्णोर्भूतानि लोकानां पावनाय चरंति हि २८ दुर्लभो मानुषो देहो देहिनां क्षणभंगुरः तत्रापि दुर्लभं मन्ये वैकुंठप्रियदर्शनं २९॥ ९

ननु भगवतः पार्षदानां कथमत्रोपलब्धिः तत्राह विष्णोरिति विष्णुभक्ता लोकपावनार्थं सर्वत्र पर्यटंतीत्यर्थः २८ मया दुर्लभं लब्धं अहो भाग्यमित्याह दुर्लभं इति बहवो देहा भवंति येषां ते देहिनो जीवास्तेषां क्षणभंगुरोऽपि मानुषो देहो दुर्लभः परमपुरुषार्थसाधनत्वात् वैकुंठः प्रियो येषां वैकुंठस्य वा प्रियास्तेषां

राम
६

मोक्षधर्म्मविवक्षयामोक्षधर्म्माणांप्रवर्त्तनेच्छया अवतीर्णंवासुदेवांशमाहुः तस्यचवेदपारगंसुतशतमासीत् १६ तेषां
ऋषभसुतानांमध्येनवयोगीश्वराणांचरितंवक्तुमितरेषांचरितंततोविविच्याह तेषामिति एतत् अजनाभंनामवर्षंयस्य
नाम्नाभारतमित्यद्भुतंविख्यातमासीत् एतेनतस्यधर्मातिरेकोनिरूपितः १७ इमांपृथ्वींगृहान्निर्गतः हरिमुपासीनःसेव
मानःसन् १८ नवसुतानवद्वीपपतयः नवानांब्रह्मावर्त्तादिभूखंडानांपतयः अस्यभारतवर्षस्य एकाशीतिःसुताःकर्म्ममा

तमाहुर्वासुदेवांशंमोक्षधर्म्मविवक्षया अवतीर्णंसुतशतंतस्यासीद्ब्रह्मपारगं १६ तेषांतु
भरतोज्येष्ठोनारायणपरायणः विख्यातंवर्षमेतद्यन्नाम्नाभारतमद्भुतम् १७ सभुक्तभो
गांत्यक्त्वेमांनिर्गतस्तपसाहरिं उपासीनस्तत्पदवींलेभेवैजन्मभिस्त्रिभिः १८ तेषांनवन
वद्वीपपतयोऽस्यसमंततः कर्म्मतंत्रप्रणेतारएकाशीतिर्द्विजातयः १९ नवाभवन्महाभा
गामुनयोह्यर्थशंसिनः श्रमणावातरशनाआत्मविद्याविशारदाः २० कविर्हरिरंतरिक्षः
प्रबुद्धःपिप्पलायनः आविर्होत्रोथद्रुमिलश्चमसःकरभाजनः २१ एतेवैभगवद्रूपंविश्वंस
दसदात्मकं आत्मनोऽव्यतिरेकेणपश्यंतोव्यचरन्महीम् २२ ॥ ॥ ॥ ॥

र्गप्रवर्तकाः ब्राह्मणाअभवन् १९ अर्थशंसिनः परमार्थनिरूपकाः श्रमणाः श्रमवंतः आत्माभ्यासेकृतश्रमा
इत्यर्थः वातरशनाः दिगंबराः आत्मविद्यायांविशारदाः निष्णाताः २० २१ तेषांपारमहंस्यचरितमाहद्वाभ्यां एत
तदिति भगवद्रूपंविश्वंपश्यंतः सदसदात्मकंस्थूलसूक्ष्मरूपं तच्चस्वाव्यतिरेकेणपश्यंतः २२ ॥ ॥ ॥

अतोयथामुच्येमहितथानोस्मान् शाधिशिक्षयविचित्राणिव्यसनानियस्मिन्संसारेतस्मात्संसारात् यथाविश्वतःस
र्वतोभयंयस्मिन् तस्मात् भवद्भिर्हेतुभूतैः अंजसाअनायासेनअद्धासाक्षात् ८ हरेर्गुणैर्वर्णनीयत्वेनप्रस्तुतैर्हरिःसंस्मारित
इत्यर्थः १० प्रीतिमाविष्करोतिसम्यगितित्रिभिः पृच्छसेपृच्छसि विश्वभावनान् सर्वशोधकान् ११ आदृतः आस्तिकेनगृ

यथाविचित्रव्यसनात्भवद्भिर्विश्वतोभयात् मुच्येमह्यंजसैवाऽद्धातथानःशाधिसुव्रत ८
श्रीशुकउवाच राजन्नेवंकृतंप्रश्नोवसुदेवेनधीमता प्रीतस्तमाहदेवर्षिर्हरेःसंस्मारितोगुणैः १०
नारदउवाच सम्यगेतद्व्यवसितंभवतासात्वतर्षभ यत्पृच्छसेभागवतान् धर्म्मांस्त्वंविश्वभा
वनान् ११ श्रुतोनुपठितोध्यातआदृतोवानुमोदितः सद्यःपुनातिसद्धर्मोदेवविश्वद्रुहोऽ
पिहि १२ त्वयापरमकल्याणःपुण्यश्रवणकीर्त्तनः स्मारितोभगवानद्यदेवोनारायणोमम
१३ अत्राप्युदाहरंतीममितिहासंपुरातनं आर्षभाणांचसंवादंविदेहस्यमहात्मनः १४ प्रि
यव्रतोनामसुतोमनोःस्वायंभुवस्ययः तस्याग्नीध्रस्ततोनाभिर्ऋषभस्तत्सुतःस्मृतः १५

हीतः अनुमोदितः परैः क्रियमाणः संस्तुतः सद्धर्मोभागवतोधर्मः देवहेवसुदेवेत्यर्थः यद्वादेवेभ्योविश्वस्मैच
द्रुह्यंतियेतानपिहि १२ किंच त्वयामहानुपकारः कृतइत्याहत्वयेति पुण्यश्रवणकीर्त्तनेयस्यसः १३ अत्रापिभ
गवद्धर्मनिर्णयेपि विदेहस्यजनकस्य १४ आर्षभाणामुत्पत्तिंसान्वयांविविच्यकथयतिसप्तभिःप्रियव्रतइति ॥ १५ ॥

३ यथापित्रोर्यात्रा आगमनं अपत्यानां स्वस्त्ययेमंगलाय यथाचउत्तमश्लोकस्यवर्त्मभूतानां महतांयात्राकृपणानांस्वस्त्यये तथाभगवद्रूपस्यभवतोयात्रासर्वदेहिनांस्वस्त्य इति ४ देवैरपिमहतासुपमानमनुचितमित्याह भूतानामिति देवानांचरितमतिवृष्ट्यादिनाभूतानांदुःखायापिभवतीत्याह शांत्वयासदृशानां अच्युतआत्मायेषांतेषां ५ किंच सुखंकुर्वंतोपिदेवाभजनानुसारेणकुर्वंतिनतथासाधवइत्याहभजंतीति छायेव यथापुरुषोयावत्करोति

तमेकदातुदेवर्षिंवसुदेवोगृहागतम् अर्चितंसुखमासीनमभिवाद्येदमब्रवीत् ३ वसुदेवउवाच भगवन्भवतोयात्रास्वस्तयेसर्वदेहिनां कृपणानांयथापित्रोरुत्तमश्लोकवर्त्मनाम् ४ भूतानांदेवचरितंदुःखायचसुखायच सुखायैवहिसाधूनांत्वादृशामच्युतात्मनां ५ भजंतियेयथादेवान् देवाअपितथैवतान् छायेवकर्मसचिवाःसाधवोदीनवत्सलाः ६ ब्रह्मंस्तथापिपृच्छामोधर्मान्भागवतांस्तव यान्श्रुत्वाश्रद्धयामर्त्योमुच्यतेविश्वतोभयात् ७ अहंकिलपुराऽनंतंप्रजार्थोभुविमुक्तिदं अपूजयंनमोक्षायमोहितोदेवमायया ८॥

एतावदेवतस्यच्छायाऽपितयाकर्मसचिवाःकर्मसहायाः ६ तदेवंयद्यपिभवतआगमनमात्रेणैववयंकृतार्थास्तथापिपृच्छामः तवेति तवयैर्धर्मैः प्रसन्नोभगवान्तानित्यर्थः ७ ननुत्वन्नोपिकिमन्योभगवत्प्रसादपात्रमस्ति तत्राह अहंकिलेति भुविप्रजार्थोऽपूजयंपुत्रलाभेप्रयोजनःसन्पूजितवान् किलेतिस्त्रीगृहेभगवदुक्तमनुस्मरति ८

असमुशलस्यचूर्णीक्रियमाणस्यावशेषितंलोहंचप्रास्यत् २१ तरलैः तरंगैः २२ अन्यैर्मत्स्यैःसहशल्येशराग्रे २३ ज्ञा
ताःसर्वेर्थायेनसः ईश्वरोपिसमर्थोपिसन्ननन्यथाकर्तुंनैच्छत् किंत्वन्वमोदतयतःकालरूपी २४॥इतिश्रीभागवतेमहा
पुराणेएकादशस्कंधेटीकायांप्रथमोऽध्यायः १ द्वितीयेनिमिजायंतसंवादेनाहनारदः धर्म्मान्भागवतान् भक्त्या
वसुदेवायपृच्छते १ अभीक्ष्णंप्रस्थापितोपिपुनःपुनरवात्सीदित्यर्थः ननुनारदस्यदक्षादिशापान्नैकत्रवास

समुद्रसलिलेप्रास्यद्लोहंचास्यावशेषितम् २१ कश्चिन्मत्स्योऽग्रसीद्लोहंचूर्णानितर
लैस्ततः उह्यमानानिवेलायांलग्नान्यासन्किलैरकाः २२ मत्स्योगृहीतोमत्स्यघ्नैर्जालेना
न्यैःसहार्णवे तस्योदरगतंलोहंसशल्येलुब्धकोऽकरोत् २३ भगवान्ज्ञातसर्वार्थईश्व
रोपितदन्यथा कर्तुंनैच्छद्विप्रशापंकालरूप्यऽन्वमोदत २४ ॥इतिश्रीभागवतेमहापु
राणेएकादसस्कंधेविप्रशापोनामप्रथमोऽध्यायः॥१॥श्रीशुकउवाच गोविंदभुजगु
प्तायांद्वारवत्यांकुरूद्वह अवात्सीन्नारदोभीक्ष्णंकृष्णोपासनलालसः १ कोनुराज
न्निंद्रियवान्मुकुंदचरणाम्बुजम् नभजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः २ ॥ ६

संभवतिइत्याशंक्याह गोविंदभुजगुप्तायामिति नतस्यांशापादेःप्रभावइत्यर्थः कृष्णोपासनेलालसाऔत्सुक्यं
यस्यसः १ यद्भजनेमुक्तानामपीदृशमौत्सुक्यंतंकोनुनामनभजेदित्याह कोन्विति इंद्रियवानिति॥
इंद्रियवत्त्वमात्रमेवयत्राधिकारिविशेषणमित्यर्थः सर्वतः सर्वेष्वपिलोकेषुमृत्युर्यस्यसः २॥ ६ ॥

उपसंगृह्यपादग्रहणंकृत्वा १३ प्रश्नप्रकारमाहद्वयेनतेवेषयित्वेति हेअमोघदर्शनाः विप्राःएषाअंतर्वत्नीगर्भिणी
१४ वोयुष्मान्साक्षात्प्रष्टुंविलज्जतीलज्जमानाअस्मन्मुखेनपृच्छति प्रसोष्यंतीआसन्नप्रसवाकिंस्वित्संजनयिष्यति

क्रीडंतस्तानुपव्रज्यकुमारायदुनंदनाः उपसंगृह्यपप्रछुरविनीताविनीतवत् १३ तेवेष
यित्वास्त्रीवेषैःसांबंजांबवतीसुतं एषापृच्छतिवोविप्राअंतर्वत्न्यसितेक्षणा १४ प्रष्टुंवि
लज्जतीसाक्षात्प्रब्रूतामोघदर्शनाः प्रसोष्यंतीपुत्रकामाकिंस्वित्संजनयिष्यति १५ एवंप्रल
ब्धामुनयस्तानूचुःकुपितानृप जनयिष्यतिवोमंदामुशलंकुलनाशनं १६ तच्छ्रु
त्वातेतिसंत्रस्ताविमुच्यसहसोदरं सांबस्यददृशुस्तस्मिन्मुसलंखल्वयस्मयं १७ ॥
किंकृतंमंदभाग्यैर्नःकिंवदिष्यंतिनोजनाः इतिविह्वलितागेहानादायमुसलंययुः ॥
१८ तच्चोपनीयसदसिपरिम्लानमुखश्रियः राज्ञआवेदयांचक्रुःसर्वयादवसंनिधौ
१९ श्रुत्वाऽमोघंविप्रशापंदृष्ट्वाचमुसलंनृप विस्मिताभयसंत्रस्ताबभूवुर्द्वारकौक
सः २० तच्चूर्णयित्वामुशलंयदुराजःसआहुकः ॥ १९ कन्यांवापुत्रंवातत्प्रब्रूत १५ प्रलब्धाःवंचिताः
१६ तस्मिन्नुदरेअयस्मयंलोहमयं १६ मंदभाग्यैरस्माभिःकिमेतत्कृतंनःअस्मान्किंवदिष्यंतीतिविह्वलेताःसंतोमुश
लमादायगेहान्ययुः १८ राज्ञेउग्रसेनायनतुश्रीकृष्णाय १९ २० आहुकःउग्रसेनःसोपिकृष्णमपृष्ट्वैवप्रासतप्रक्षिप्त

भा
द

ईश्वरेच्छैवात्र निमित्तमिति परिहारः इति विभ्रदिति सकलानां सुंदरवस्तूनां सन्निवेशो विन्यासविशेषो यस्मिन् तत् वपुर्विभ्र
त् तर्हि किमिति सौंदर्य्यादिविषयपरः न सुमंगलं कर्म्माचरन् तत्किं कयापि कामनया न आप्तकामः तर्हि किमिति कर्म्माचरति
धाम द्वारवत्याख्यं गृहमास्थाय रममाणः गृहे रममाणान्कर्म्म ग्राहयितुमित्यर्थः ननु किमाप्तकामस्य गृहरत्या कर्म्मभि
र्वा तत्राह उदारकीर्त्ति बहुफलप्रदा कीर्त्तिर्यस्य सः कीर्त्तिवितानार्थमित्यर्थः एवं परमैश्वर्येण वर्त्तमान एव कुलं संहर्त्तुमै
च्छत तत्कस्माद्धेतोः स्थितः कृत्ये भूभारहरणे शेषो यस्य सः १० ईश्वरेच्छयोत्थितं ब्रह्मशापनिमित्तं वक्तुमाह कर्म्माणीति

**श्रीशुक उवाच** विभ्रद्वपुः सकलसुंदरसन्निवेशं कर्म्माचरन्भुवि सुमंगलमाप्तकामः आस्था
य धाम रममाण उदारकीर्त्तिः संहर्तुमैच्छत कुलं स्थितकृत्यशेषः १० कर्म्माणि पुण्यनिवहा
नि सुमंगलानि गायज्जगत्कलिमलापहराणि कृत्वा कालात्मना निवसता यदुदेवगेहे पिंडा
रकं समगमन्मुनयो विसृष्टाः ११ विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरंगिराः कश्यपो वाम
देवोऽत्रिर्वसिष्ठो नारदादयः १२॥ कर्म्मार्थमाहूताः कर्म्माणि कृत्वा विसृष्टा मुनयः पिंडारकं समगमन्नित्यन्वयः
विसृष्टाः प्रस्थापिताः पूर्वोक्तामुदारकीर्त्तितां विवृण्वन्कर्म्माणि विशिनष्टि पुण्यनिवहानीत्यादिभिः पदैः कानिचिदश्वमे
धादिकर्म्माणि पुण्यमेव जनयंति पुत्रोपलालनादीनि तु तत्काले सुखमेव कुर्वन्ति प्रायश्चित्तादीनि तु पापमेव हरंति एतानि
तु सर्वतो मुख्यानीत्याह पुण्यनिवहानि कीर्त्तनादिना पुण्यानि निवहन्ति प्रापयंतीति तथा सुमंगलानि अतिसुखात्मकानि गा
यतो जगतः कलिमलापहराणि कृत्वा मुनिप्रस्थापने हेतुः कालात्मना संहारकरूपेण यदुदेवगेहे वसुदेवगेहे निवसतास्व

तदेवमवतारप्रयोजनं सर्वं संपाद्य स्वं लोकं जगामेत्याह श्लोकद्वयेन स्वमूर्त्येति लोकानां लावण्यस्य निर्मुक्ति
स्त्यागो यया यामपेक्ष्य लोकेषु लावण्यं नास्तीत्यर्थः यद्वा लोकेभ्यो लावण्यस्य निर्मुक्तिर्दानं यतः यत्संपर्केन लोका
लावण्यवंतो भवंतीत्यर्थः तया स्वमूर्त्या नृणां लोचनमाच्छिद्य आकृष्य ततोऽन्यस्यावलोकने लोचनस्याप्रवृ
त्तेः तया स्वगीर्भिस्ताः गिरः स्मरतां चित्तं चाच्छिद्य तथा पदैस्तत्र तत्रांकितैः तानि पदानीक्षतामीक्षमाणानां अन्यतो
गमनादिकाः क्रियाश्चाच्छिद्य तदानीतनानां सर्वेषां चक्षुरादिप्रवृत्तीः स्वैकनिष्ठाः कृत्वेत्यर्थः ६ किंच इत उपरि।

स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणां गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां
क्रियाः ६ आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यंजसा नु कौ तमोऽनया तरिष्यंतीत्यगात्स्वं
पदमीश्वरः ७ श्रीराजोवाच ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनां विप्रशापः क
थमभूद्वृष्णीनां कृष्णचेतसां ८ यन्निमित्तः स वै शापो यादृशो द्विजसत्तम कथमेका
त्मनां भेद एतत्सर्वं वदस्व मे ९ ॥ ७ जनिष्यमाणानां संसारतरणाय कौ पृथिव्यां शोभनाः श्लोकाः सु

श्लोकाः कवीनां यस्यां तां स्वकीर्तिं वितत्य विस्तार्य अनया कीर्त्या अंजसा सुखेनैव नु निश्चितं तमस्तरिष्यंतीत्यभिप्रेत्य ई
श्वरः स्वं पदं स्थानमगादिति ७ अब्रह्मण्येभ्यः अदातृभ्यो वा अवृद्धसेवकेभ्यो वा विप्राः कुप्यंति इह त्वस्य तु न तथेत्या
ह ब्रह्मण्यानामित्यादिना किंच कोपे जातेपि कृष्णचेतसां कथमभूत्कथं प्रादुरभूदित्यर्थः ८ अतः स्पष्ट
स्य निमित्तस्याभावान्निमित्तांतरं पृच्छति यन्निमित्त इति एकात्मनां एकचित्तानां कथं भेदः कलहः ९ ॥ १ ॥

भा॰ए॰ १
२

अपि च भूभारेत्यादि अन्याश्च भुवो भारभूताः राजपृतनाः राज्ञां पृतनाः सेनाः राजानस्तेषां पृतनाश्चेति वा स्वबाहु
भिर्गुप्तैः परिरक्षितैर्यदुभिर्यद्विवाहादिछलेन निरस्य हत्वा बाहुभिरिति बहुवचनं वस्तुतश्चतुर्भुजाभिप्रायेण तन्वेवं
कृत्मश्चिकीर्षतीति ज्ञात्वा कथं तस्मै यादवा नद्रुह्यंतिस्म तत्राह अप्रमेयः प्रमातुमशक्यः चिंतामाह मन्य इति नन्विति वि
तर्के अवने भूमेर्भारो यद्यपि लोकप्रतीत्या गतः तथाप्यहमगतमेव मन्ये हि निश्चितं यद्यस्मात् अविषह्यं सोढुमशा
क्यं यादवं कुलमित्यनेनैव स्ववंशत्वात्स्वयं हननमनुचितमिति सूचितं ३ तर्हि इदमप्यन्यैर्घात्यतां तत्राह नैवेति॥

भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिंतयदप्रमेयः मन्येऽवनेर्ननु गतोऽप्य
गतं हि भारं यद्यादवं कुलमहो ह्यविषह्यमास्ते ३ नैवान्यतः परिभवोऽस्य भवेत्कथंचिन्म
त्संश्रयस्य विभवोन्नहनस्य नित्यं अंतः कलिं यदुकुलस्य विधाय वेणुस्तंबस्य वह्निमिव
शांतिमुपैमि धाम ४ एवं व्यवसितो राजन्सत्यसंकल्प ईश्वरः शापव्याजेन विप्रा
णां संजह्रे स्वकुलं विभुः ५॥ ए॰ अन्यतः देवादिभ्योऽपि यादवकुलस्य परिभवस्तिरस्कारो न भवेत् कु
तः मत्संश्रयस्य मां संश्रयत इति मत्संश्रयं कुलं तस्य किंच नित्यं विभवोन्नहनस्य विभवैर्गजतुरगादिभिः उच्छृं
खलस्य यद्वा तर्हि इदं किमिति संहर्त्तव्यं तत्राह विभवोन्नहनस्येति तस्मादेवं करिष्यामीत्याह।
अंतः कलिमिति शान्तिं उपशमं उपैमि वर्त्तमानसामीप्ये वर्त्तमानवद्वा उपेष्यामि तदनंतरं धाम च वैकुं
ठाख्यमुपैष्यामीत्यर्थः ४ व्यवसितः कृतनिश्चयः संजह्रे उपसंहृतवान् ५ ॥ १ ॥ ❋ ॥

यच्छृद्दयाप्तवित्तेन शुक्लेनेज्येत पूरुष इत्यादिना तेन च विशुद्धसत्वस्य श्रीकृष्णरामौ परमेश्वरत्वेन ज्ञातवतः षड्भिर्नयना ध्यायैः श्रीकृष्णेनात्मतत्वमुपदिष्टं वचोवः समवेतार्थं तातैतदुपमन्महे यन्नः पुत्रान्समुद्दिश्य तत्वया मउदाहृतमित्यादिना तच्च विषयभोगातिशयेन पुनस्तिरोहितमासीत् तदेवेदानीं नारदमुखेन प्रथमं पंचाध्याय्या निरूप्यते तत्र प्रथमेध्याये वैराग्योत्पादनाय यदुकुलस्य ब्रह्मशापापदेशनात्युन्नत विषयसुखानामप्यनित्यताप्रतिपाद्यते ततश्चतुर्भिर्निमिजायंतेय संवादेन सपरिकरं परमतत्वनिरूपणं ततः षड्भिर्भगवदुद्धवसंवादप्रस्तावः ततस्त्रयोविंशत्याउद्धवं प्रति भगवतस्तत्वनिरूपणं ततो द्वाभ्यां मौशलक्रीडेत्येवमेकत्रिंशताऽध्यायैरेकादशस्कंधस्य प्रवृत्तिः तस्य च यथामति व्याख्यानमारभ्य

॥श्रीगणेशाय नमः॥ श्रीबादरायणिरुवाच कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः भुवोऽवतारयद्भारं जविष्ठं जनयत्कलिम् १ ये कोपिताः सुबहु पांडुसुताः सपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ॥ कृत्वा निमित्तमितरेतरतः समेतान् हत्वा नृपान्निरहरत्क्षितिभारमीं

तत्र मौशलप्रसंगार्थं पूर्वस्कंधार्थमनुवदति श्लोकद्वयेन कृत्वेति अवतारयत् अवातारयदित्यडागमो द्रष्टव्यः जविष्ठं वेगवत्तरं अतिशीघ्रं हिंसापर्यवसायिनमित्यर्थः कलिं कलहम् १ एतद्विवृणोति ये कोपिता इति सपत्नैर्दुर्योधनादिभिः कोपिताः कोपं कारिताः सुबहु यथा भवति तथा बहुवारानित्यर्थः तदेवाह दुर्द्यूतहेलनकचग्रहणादिभिरिति दुर्द्यूतं कपटद्यूतं हेलनमवज्ञा कचग्रहणं दुःशासनेन द्रौपद्याः केशाकर्षणं एतनि आदिर्येषां गरदानजतुगृहदाहादीनां तैः कृत्वा ये कोपिताः तान् पांडुसुतान्निमित्तं कृत्वा इतरेतरतः उभयोः पक्षयोः समेतान्मिलितान्नृपान् हत्वा क्षितेर्भारं निरहरत् जहार यद्वा ये कोपिताः येश्च कोपिताः तानितरेतरतः परस्परं निमित्तं कृत्वेत्यन्वयः येतावत्प्रकटदैत्याः पूतनादयः तान्स्वयमेव हतवान् येतु दैत्याः वा

१
भा० ए०
१

॥श्रीगणेशायनमः॥ ॐ नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरंदायभक्तजनमानसनिवासायश्री
रामाय विजयंतेपरानंदकृष्णपादरजःस्रजः याधृतामूर्द्धिजायंतेमहेंद्रादिमहःस्रजः १ ऊनैकत्रिंशताध्यायैर्मु
क्तिरेकादशेततः जायंतेयेतिहासाद्यैः समासव्यासरूपतः २ नारदोवसुदेवायसमासेनन्यवर्णयत् भगवानुद्धवाया
थविस्तरेणोपपत्तिभिः ३ तत्रतुप्रथमेध्याये यदुवंशस्यसंक्षयः उपक्षिप्तोविरागायमौ
शलव्यपदेशतः ४ प्रवृत्तितःपरानंदकृष्ण क्रीडाऽनुवर्णिता तन्निवृत्त्यापरानंदपदारोहो
ऽनुवर्ण्यते ५ एवंतावद्दशमस्कंधेभूभारा वतारणायनिजविभूतिविभूषितयदुवंशस्ययदुवं
शावतारितसकलसुरांशस्यभगवतःश्रीकृ ष्णस्यतदुचितप्रवृत्तिविडंवनेनतच्छ्रवण।
स्मरणादिपराणांपरेषामानंदकारणंक्रीडा निरूपिता अथेदानीमपरिमितयोगमाया
वैभवस्य भक्तानामात्मतत्वोपदेशपूर्वकं। क्रीडार्थंभूतलेऽवतारितानांचाधिकारि
णांसुरांशानांमौशलापदेशेनतत्तदधिकारपदप्रापणपूर्वकंचब्रह्माद्यनुग्रहायनिजपदारोहोनिरूप्यते तत्र
कुरुक्षेत्रयात्रायामविरक्तस्यवसुदेवस्यकर्म्मणाकर्म्मनिर्हारोयथास्यात्तत्तदुच्यतामित्येवंकर्म्मयोगंपृष्टवतो
नारदादिभिः कर्म्मयोगोनिरूपितःकर्म्मणाकर्म्मनिर्हारएवसाधुनिरूपितः॥ ❋ ॥ १ ❋ १ ॥

रामः
१

॥श्रीगणेशायनमः॥ नमोभगवतेवासुदेवाय तृतीयेतुत्रयस्त्रिंशदध्यायैःसर्गवर्णनम् ईशेक्षयागुणक्षोभात्स
र्गोब्रह्मोद्भवः १ तत्रतुप्रथमेऽध्यायेबंधूनहित्वागतायुषः निर्गतस्योद्धवेनादौसंवादःक्षत्तुरुच्यते २ अथतृती
यस्कंधव्याख्या भगवद्ब्रह्मसंप्रोक्तंसंक्षिप्तंवर्णितंपुरा प्राहभागवतंशेषप्रोक्तंविस्तरतःपुनः ३ द्वेधाहिश्रीमद्भाग
वतसंप्रदायप्रवृत्तिःएकतःसंक्षेपतःश्रीनारायणब्रह्मनारदादिद्वारेण अन्यतस्तुविस्तरतःशेषसनत्कुमारसांख्यायनादि
द्वारेण तत्रद्वितीयेश्रीनारायणब्रह्मसंक्षेपतःचतुःश्लोकाश्रीभागवतंनिरूपितंतदेवब्रह्मनारदसंवादेनदशलक्षणत
याकिंचिद्विस्तरेणोक्तम् तदेवशेषोक्तमतिविस्तरतोवक्तुंतृतीयाद्यारंभः तत्रतृतीयेप्रथमंक्षत्तुर्मैत्रेयसंगमस्त्वतुर्भिरध्या

॥श्रीगणेशायनमः श्रीशुकउ॥ वाच एवमेतत्पुरापृष्टोमैत्रेयोभग
वान्किल क्षत्त्रावनंप्रविष्टेनत्यक्त्वा स्वगृहमृद्धिमत् १ यद्वाअयंमंत्र
कृद्वोभगवानखिलेश्वरः पौरवेंद्र गृहंहित्वाप्रविवेशात्मसात्कृतम् २

यैः ततोऽष्टभिःसविसर्गःसर्गप्रपंचःततोवि सर्गप्रस्तावेनसप्तभिर्वराहावतारःततएकेनवि
सर्गसमाहारः तत्प्रसंगेनचतुर्भिःकपिलावतारः ततोनवभिःकपिलाख्यानमितित्रयस्त्रिंशताध्यायैःतृतीयस्कंधप्रवृत्तिः
तत्रद्वितीयान्तेपरिमाणंचकालस्यकल्पलक्षणविग्रहम् यथापुरस्ताद्व्याख्यास्येपाद्मंकल्पमथोशृणु इतिप्रतिज्ञातमर्थंवि
स्तरेणनिरूपयितुमितिहासंप्रस्तौतिभगवान्शुकःएवमितिद्वाभ्याम् ऋद्धिमत्सर्वसंपद्भिःसंपूर्णम् १ किंचअतिश्लाघ्यंस्वागा
नर्हमित्याह यद्वेति प्रसिद्धंगृहंवःपांडवानांमंत्रकृत्दौत्यकर्तासन्अयंश्रीकृष्णःबुद्धिसन्निधानाद्यमितिनिर्देशःपौरवेंद्रोदुर्यो
धनःतस्यगृहंहित्वाअनाहूतएवप्रविवेश तत्रहेतुःआत्मसात्कृतमात्मीयत्वेनगृहीतम् २ ॥ ६ ॥ ६ ॥

कुत्रसंगमस्त्रासवभूव ३ वरीयसिश्रेष्ठेऽल्पस्यार्थस्योदयोयस्मात्तथाभूतोनभवति साधुवादेनसतामनुमोदनेन उपबृंहितः संवर्द्धितः यद्वासाधोर्मैत्रेयस्यसंवादेनोत्तरेणश्लाघितइत्यर्थः ४ ५ त्यागानर्हस्यापिगृहस्यत्यागेहे तुत्वेनकौरवापराधानाह यदेत्येकादशभिः एतेषांचनदासक्षत्ताश्रयादित्येकादशेक्रियासंबंधः यद्विदुरस्यक

राजोवाच कुत्रक्षत्तुर्भगवतामैत्रेयेणाससंगमः कदावासहसंवादएतद्वर्णयनःप्रभो ३
नह्यल्पार्थोदयस्तस्यविदुरस्यामलात्मनः तस्मिन्वरीयसिप्रश्नःसाधुवादोपबृंहितः ४
सूतउवाच सएवमृषिवर्योयंपृष्टोराज्ञापरीक्षिता प्रत्याहतंसुबहुवित्प्रीतात्माश्रूयता
मिति ५ श्रीशुकउवाच यदातुराजास्वसुतानसाधून्पुष्णन्नधर्मेणविनष्टदृष्टिः भ्रातुर्य
विष्ठस्यसुतान्विबंधून्प्रवेश्यलाक्षाभवनेददाह ६ यदासभायांकुरुदेवदेव्याः केशाभिमर्शंसुतकर्मगर्ह्यंनवारयामासनृपः स्नुषायाः स्वास्रैर्हरंत्याःकुचकुंकुमानि ७ द्यूतेत्वधर्मे
णजितस्यसाधोः सत्यावलंबस्यवनागतस्य नयाचतोऽदात्समयेनदायंतमोजुषाणोयदजा
तशत्रोः ८ यदाचपार्थप्रहितः सभायांजगद्गुरुर्यानिजगादकृष्णः ॥ ११ निष्ठस्यपांडोःविबंधून्पि
तृहीनान् ६ कुरुदेवस्ययुधिष्ठिरस्यदेव्याः द्रौपद्याः आत्मनः स्नुषायाः स्वीयैरस्रैरश्रुभिः स्वकुचकुंकुमानिरि
पुस्त्रीणांवातद्भर्तृवधेनहरंत्याः ७ सत्यावलंबस्यसत्याश्रयस्यवनात्प्रत्यागतस्यसमयेनपूर्वकृतेनदायंयाचमान
स्यपतयदानअदाततदातमोमोहजुषाणः पुत्रंसेवमानः अविवेकंवा ८ यानिवचनानिपुंसांभीष्मादीनांअ
॥मृतायनानिअमृतस्रावीणिराजाधृतराष्ट्रः ॥

भा०टी० ३ दुर्योधनोवाउरुवहुनमेनेक्षतोनष्टः पुण्यलेशोयस्यसः नसुखकीर्त्तिधर्मादिहेतुः किंतुराज्यप्राप्तिमात्रहेतुः अ० १
२ पुण्यलेशः एवासीत् तस्यापिनष्टत्वाद्नादृतवानित्यर्थः ९ इदानींविदुरस्यैवबहुतंपराभवंदर्शयतिषड्भिः
यदापूर्वजेनधृतराष्ट्रेणमंत्रायोपहूतोंतर्गृहंप्रविष्टोमंत्रंपृष्टः सन् अथअनंतरंयदाह किंमंत्रिणोद्यापियद्वै
दुरिकंविदुरवाक्यमितिप्रसिद्धंवदंति १० तदेवाह अजातशत्रोरितित्रिभिः तवआगः अपराधंसहमानस्य
दायंप्रतियच्छदेहि यत्रापराधेअनुजैः सहवर्त्तमानोवृकोदररूपोऽहिः क्रोधेनश्वसन् वर्त्ततेयस्मात्त्वमलम

नतानिपुंसाममृतायनानिराजोरुमेनेक्षतपुण्यलेशः ९ यदोपहूतोभवनंप्रविष्टोमंत्राय
पृष्टः किलपूर्वजेन अथाहतन्मंत्रदृशांवरीयान्यन्मंत्रिणोवैदुरिकंवदंति १० अजा०
तशत्रोः प्रतियच्छदायंतितिक्षतोदुर्विषहंतवागः सहानुजोयत्रवृकोदराहिः श्वसनरु
षायत्वमलंबिभेषि ११ पार्थांस्तुदेवोभगवान्मुकुंदोगृहीतवान्सक्षितिदेवदेवः आस्ते०
स्वपुर्यांयदुदेवदेवोविनिर्जिताशेषनृदेवदेवः १२ ॥ इत्यर्थंबिभेषि ११ ननुममतादृशाःबहवः
पुत्राः सन्तीतिगर्वमाशंक्याह पार्थांस्तुमुकुंदः आत्मीयत्वेनगृहीतवान्सदेवः तत्रापिभगवान् ननुप्रा
कृतः किंच सहक्षितिदेवैर्विप्रैर्देवैश्चेन्द्रादिभिर्वर्त्तमानः यतोसौतत्रैवविप्रादेवाश्चेत्यर्थः सचस्वपुर्यामेववसु राम
खमास्ते नत्वन्यत्रगतः किंच यदुदेवानांदेवः पूज्यः यतोसौतत्रैवयदुप्रवीराइत्यर्थः किंचनृदेवेषुमंडलेश्व २
रेषुदीव्यंतिप्रकाशंतइतिनृदेवदेवाराजानः विनिर्जिताअशेषानृदेवदेवायेनयतोसौतत्रैवसर्वेराजानः अतः
पार्थानांदायंदेहीति १२ ॥

दुर्योधनस्तन्नमन्यतइतिचेदतआह सएषमूर्तोदोषएवगृहानप्रविश्यआस्ते दोषत्वेहेतुः पुरुषद्विट् श्रीकृष्णद्वे
षा कोऽसौयंत्वमपत्यमत्यापुष्णासि नत्वपत्यमसौनपतत्यस्मादितिह्यपत्यंप्राहुः गताश्रीर्यस्मात्सत्वमित्या
कोशाति अतएनंअशैवंअमंगलंआशुत्यजकथंपुत्रस्त्याज्यस्तत्राह कुलस्यकौशलायत्यजेदेकंकुलस्यार्थेइ
तिहिन्यायः १३ इत्यूचिवानेवमुक्तवान् असौक्षत्ताविदुरः सतांस्पृहणीयंशीलंयस्यसः कर्णदुःशासनशकु
निसहितेनदुर्योधनेनअसत्कृतःतिरस्कृतः १४ तिरस्कारमाह कइति दासीसुतोह्यत्राह्वानानर्हः जिह्मवक्रं

सएषदोषः पुरुषद्विडास्तेगृहान्प्रविष्टोयमपत्यमत्या पुष्णासितत्कृष्णाद्विमुखोगतश्रीः
स्त्यजाश्वशैवंकुलकौशलाय १३ इत्यूचिवांस्तत्रसुयोधनेनप्रवृद्धकोपस्फुरिताधरेण अ
सत्कृतः सतस्पृहणीयशीलः क्षत्तासकर्णानुजसौबलेन १४ कएनमत्रोपजुहावजिह्मंदा
स्याः सुतंयद्बलिनैवपुष्टः तस्मिन्प्रतीपः परकृत्यआस्तेनिर्वास्यतामाशुपुराच्छ्वसानः १५
सइत्थमत्युल्बणकर्णबाणैर्भ्रातुः पुरोमर्मसुताडितोपि स्वयंधनुर्द्वारिनिधायमायांगतव्यथोऽया

टिलः जिह्मतामाह यस्यबलिनाअन्नेनपुष्टस्तस्मिन्नेवप्रतीपः प्रतिकूलः परेषांका ऽऽदुरुमानयानः १६
र्येवर्ततेअतः पुराान्निर्वास्यतांश्वसानः श्वसन् जीवनमात्रशेषइत्यर्थः पाठान्तरेश्मशानवदमंगलः १५ अत्युल्ब
णैः कर्णयोर्बाणवत्प्रविशद्भिः परुषवाक्यैर्मर्मसुताडितोपिगतव्यथः तत्रहेतुः मायांउरुबहुमानयन् अहोमा
यामाहात्म्यमितितामेवतत्रहेतुंमन्यमानः तर्हिः स्मारणात्पूर्वस्वयमेवअयात् निर्जगाम किंकृत्वा एतेनूनमरि
ष्यंतिकिंधनुषेतिनस्यद्वारिधनुर्निधाय यद्वाभीमादिभिः संगत्यास्माभिर्योत्स्यतीतिमाशंकीतिधनुर्निधानं

भा॰ह॰ ३

ततोनिर्गतस्यतीर्थाटनप्रकारमाह सद्वृत्यष्टभिः सगजाह्वयान्निर्गतः सन्तीर्थपादीयस्यतस्यहरेः पदानिक्षेत्राणि अ
पुण्यचिकीर्षया अन्वाक्रमत प्रत्यपद्यत कौरवाणांपुण्येनलब्धइतितेषांभाग्यमेवतेनरूपेणगतमितिसूचितं उ
र्व्यांसहस्रमूर्तिः ब्रह्मरुद्राद्यनेकमूर्तिः सन्तीर्थपादयानियानिअधिष्ठायस्थितः तानितानिजगामेत्यर्थः १७ पुण्या
नियानिउपवनादीनिचतेषुकुंजंलतादिगूढस्थानं अपंकानितोयानियेषांतेषुसरित्सरःसुवनतीर्थेषुआयतनेषुचक्षेत्रे
षु कीदृशेषु अनंतस्यलिंगैर्मूर्तिभिः सम्यगलंकृतेषुअनन्यःएकाकी १८ किंचगांपर्यटन्व्रतानिचेरेआचरत्

अ १

सनिर्गतः कौरवपुण्यलब्धोगजाह्वयात्तीर्थपदःपदानि अन्वाक्रमत्पुण्यचिकीर्षयोर्व्यां।
स्वधिष्ठितोयानिसहस्रमूर्तिः १७ पुरेषुपुण्योपवनाद्रिकुंजेष्वपंकतोयेषुसरित्सरःसु अनंत
लिंगैः समलंकृतेषुचचारतीर्थायतनेष्वनन्यः १८ गांपर्यटन्मेध्यविविक्तवृत्तिः सदाप्लुतो
ऽधःशयनोऽवधूतः अलक्षितःस्वैरवधूतवेषोव्रतानिचेरेहरितोषणानि १९ इत्थंव्रजन्भा
रतमेववर्षंकालेनयावद्गतवान्प्रभासं तावच्छशासक्षितिमेकचक्रामेकातपत्रामजिते
नपार्थः २० तत्राथशुश्रावसुहृद्विनष्टिंवनंयथावेणुजवह्निसंश्रयं ॥ मेध्यापवित्राविविक्ता

असंकीर्णावृत्तिर्जीविकायस्यसदाप्लुतः प्रतितीर्थेस्नातः अधःशयनंयस्यअवधूतः असंस्कृतदेहः अव
धूतवेषोवल्कलादिधारी अतएवस्वैरलक्षितः १९ एकस्यैवहिचक्रंसैन्यंयस्यां एकमेवराजचिह्नंश्वेतातप
त्रंयस्यांतां अजितेनश्रीकृष्णेनसहायेन २० तत्रप्रभासेपरस्परस्पर्द्धयानिमित्तभूतयासुहृदांकौरवाणांवि
॥नष्टिंविनाशमशृणोत् ॥

राम: ३

परस्परनाशेहर्षांतः वेणुजंवह्निं संश्रयन्नेयद्वनंतद्यथादग्धंभवति तथाप्रत्यकुउद्गमाभिमुखम् २१ त्रितादीनामेकादशतीर्थानितत्तन्नाम्नाप्रसिद्धान्यासेवितवान् २२ द्विजदेवैः ऋषिभिर्देवैश्चकृतानिश्चंगंश्रंगप्रतिवर्तनेदूतिप्रत्यंगान्यायुधानितेषुमुख्यंचक्रंतेनांकितानिमूर्द्धन्यहेमकुंभेषुचिह्नितानिमंदिराणियेषुतानिनानाविधानिविष्णोरायतनानिक्षेत्राणितीर्थानिचश्रासिषेवेयेषांचक्रांकितमंदिरवतांदर्शनात् श्रीकृष्णस्मरणंभवति २३ अ

संस्पृद्धयादग्धमयानुशोचनसरस्वतींप्रत्यगियायतूष्णीं २१ तस्यांत्रितस्योशनसोमनोश्च पृथोरथाग्नेरसितस्यवायोः तीर्थंसुदासस्यगवांगुहस्यपच्छ्राद्धदेवस्यसश्रासिषेवे २२ अन्यानिचेहद्विजदेववंद्यैः कृतानिनानायतनानिविष्णोः प्रत्यंगमुख्यांकितमंदिराणियद्दर्शनात् कृष्णमनुस्मरंति २३ ततस्त्वतिव्रज्यसुराष्ट्रमृद्धंसौवीरमत्स्यान्कुरुजांगलांश्च कालेनतावद्यमुनामुपेत्यतत्रोद्धवंभागवतंददर्श २४ सवासुदेवानुचरंप्रशांतंबृहस्पतेः प्राक्तनयंप्रतीतं आलिंग्यगाढंप्रणयेनभद्रंस्वानामपृच्छद्भगवत्प्रजानां २५ कच्चित्पुराणौपुरुषौस्वनाभ्यपाद्मानुवृत्त्येहकिलावतीर्णौ आसातउर्व्याः कुशलंविधायकृतक्षणौकुशलंशूरगेहे २६ ॥ ॥

तिव्रज्यअतिक्रम्ययावदुद्धवः प्राप्तस्तावत्स्वयमपियमुनामुपेत्य २४ सविदुरः प्राक्तनयंपूर्वशिष्यंनीतिशास्त्रेपाठान्तरे प्राग्ज्ञानयोनीतिशास्त्रंयेनतंप्रतीतंप्रख्यातंस्वानांज्ञातीनांभद्रमपृच्छत्प्रश्नेहेतुःभगवतः प्रजानांपोष्याणां २५ प्रथमंतावद्रामकृष्णयोः कुशलंपृच्छति कच्चिदितिप्रश्नेस्वनाभौभवःस्वभाम्यःपाद्मोब्रह्मातस्यानुवृत्त्याप्रार्थनयाइहावतीर्णौकुशलमासातेवर्ततेनेकृतक्षणौदत्तावसरौ सर्वेषांकृतौ त्सवावितिवा तयोर्नित्यकुशलत्वेपिउक्तविशेषणविशिष्टौ शूरी

यदूनां कुशलं पृच्छति नवभिः भामः पूज्यः शौरिर्वसुदेवः यद्वा भामो भगिनीभर्त्ता कुंतीवसुदेवस्य भगिनी अन्ये देवकी अ-
पांडोर्भगिनीति लोकव्यवहारः वरान्यर्थान् वदान्यः अत्युदारः वराणां तत्पत्नीनां तर्पणेन संतोषणेन सह २७ वरू-
थाधिपतिः सेनानीः आदिसर्गे पूर्वजन्मनि स्मरं कामं सन्तं अभिलेभे पुत्रत्वेन लब्धवती सात्वतादीनामधिपः उग्रसेनः श-
तपत्रनेत्रः श्रीकृष्णः नृपासनाशां राजाभिलाषं परिहृत्य शापभयेन दूरात्स्थितमित्यर्थः २९ हे सौम्य हरेः सुतस्ते

कच्चित्कुरूणां परमः सुहृन्नो भामः स आस्ते सुखमंग शौरिः यो वै स्वसॄणां पितृवद्ददाति वरान्व-
दान्यो वरतर्पणेन २७ कच्चिद्वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमंग वीरः यं रुक्मिणी भ-
गवतोऽभिलेभे आराध्य विप्रान्स्मरमादिसर्गे २८ कच्चित्सुखं सात्वतवृष्णिभोजदाशार्हकाणा-
मधिपः स आस्ते यमभ्यषिंचच्छतपत्रनेत्रो नृपासनाशां परिहृत्य दूरात् २९ कच्चिद्धरेः सौम्य
सुतः सदृक्ष आस्तेऽग्रणी रथिनां साधु सांबः असूत यं जांबवती व्रताढ्या देवं गुहं योंऽबिकया धृ-
तोऽग्रे ३० क्षेमं स कच्चिद्युयुधान आस्ते यः फाल्गुनाल्लब्धधनूरहस्यः ॥ लेभेंऽजसाधोक्षजसे-
वयैव गतिं तदीयां यतिभिर्दुरापाम् ३१ कच्चिद्बुधः स्वस्त्यनमीव आस्ते श्वफल्कपुत्रो भग-
वत्प्रपन्नः यः कृष्णपादांकितमार्गपांसुष्वचेष्टत प्रेमविभिन्नधैर्यः ३२ ॥ऽ॥

तसदृक्षः सदृशः सा-
धु सुखमास्ते गुहं स्वामिकार्तिकेयं अग्रे पूर्वजन्मनि यो भवान्या गर्भे धृतः तम् ३० युयुधानः सात्यकिः क्षेमं कुश-
लमास्ते फाल्गुनादर्जुनाल्लब्धं धनुषो रहस्यं येन तदीयां अधोक्षजसंबंधिनीम् ३१ श्वफल्कपुत्रोऽक्रूरः बुधो विद्वान्
अतो भगवंतं प्रपन्नः अनुसृतः अत एव अनमीवो निष्पापः भक्तौ लिंगं यो अचेष्टत व्यलुठत् प्रेम्णा विविभिन्नं विदीर्णं

देवकनामा यो भोजः तस्य पुत्र्याः देवक्याः विष्णुः प्रजा पुत्रो यस्याः तस्या देवमातुरदितेरिव कच्चित् शिवं यज्ञवि
तानरूपमर्थं त्रयीप्रयाप्रकाशकतया विभर्तीति तथा दधार ३३ सात्वतानां उपासकानां कामान् दोग्धि पूरयती।
ति कामदुघः भगवत्वे हेतुः यं शब्दस्य शास्त्रस्य योनिं कारणं आमनंति वेदाः कुतो मनोमयं मनसः प्रवर्तकं तत्कु
तः सत्वस्यान्तःकरणस्य चतुर्विधस्य तुरीयं तत्वं चतुर्थमधिदैवं चित्ताहंकारबुद्धिमनसामंतःकरणभेदानां क्रमे
ण वासुदेवसंकर्षणप्रद्युम्नानिरुद्धा ह्यधिष्ठातारः मनसश्च शब्दयोनित्वं प्रसिद्धं मनः पूर्वरूपं वागुत्तररूपमि

कच्चिच्छिवं देवकभोजपुत्र्या विष्णुप्रजाया इव देवमातुः यावै स्वगर्भेण दधार देवं त्रयीय
यायज्ञवितानमर्थम् ३३ अपिस्विदास्ते भगवान्सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः य
मामनन्ति स्म ह शब्दयोनिं मनोमयं सत्वतुरीयतत्वम् ३४ अपिस्विदन्ये च निजात्मदैवमन।
न्यवृत्त्या समनुव्रता ये हृदीकसत्यात्मजचारुदेष्णगदादयः स्वस्ति चरन्ति सौम्य ३५ अपि
स्वदोर्भ्यां विजयाच्युताभ्यां धर्मेण धर्मः परिपाति सेतुं ॥३६॥

तितया अन्यांतर आत्मा मनोमय इति प्र
श्रुतत्वात्तस्य यजुरेव शिरः ऋग्दक्षिणः पक्षः सामोत्तरः पक्ष इत्यादिश्रुतेः तथा च शिक्षायां आत्मा बुद्ध्या समेत्या
र्थान्मनो युंक्ते विवक्षया मनः कायाग्निमाहन्ति स प्रेरयति मारुतं मारुतस्तूरसि चरन् मंद्रं जनयति स्वरमित्यादि
३४ अपिस्वित् किंस्वित् अन्ये च स्वस्ति चरंति निजस्य देहादिव्यतिरिक्तस्यात्मनो दैवं श्रीकृष्णं अनन्यवृत्त्या ए
कांतभक्तिभावेन ये सम्यगनुव्रताः अनुसृताः हृदीकश्च सत्यभामायाः आत्मजाश्च चारुदेष्णश्च गदश्चादयो ये
षां तेपि ३५ इदानीं कुरून् पृच्छति षड्भिः अपि किं स्वदोर्भ्यां स्वबाहुवत् वर्तमानाभ्यां विजयाच्युताभ्यां ॥ ९॥

भा०टी०
५१

अर्जुनकृताभ्यां धर्ममार्गेण धर्मो युधिष्ठिरः सेतुं धर्ममर्यादां परिपाति यस्य सभायां विजयानुवृत्त्या जयपरंपरया अ
र्जुनस्य सेवयेतिवा एवंभूतं यस्य स्वरूपमित्यर्थः ३६ कृतनागेषु कृतापराधेषु कुरुषु स्वकर्तृकमघं दीर्घतमं बहुकाला
नुचिंतितं अहिवदत्यमर्षी भीमः किंव्यमुंचन्नोवा गदाया विचित्रं विविधं मार्गं चरतः ३७ रथयूथपानां मध्ये यशो
धाः कीर्तिधारी यद्वा स्वीयानां तेषां कीर्तिप्रदः उपरतात्रयोयस्मात् यस्य शरकूटेन वाणसमूहेन गूढः आच्छ
न्नः तुतोष ३८ उतस्विन् किंस्वित् यमौ नकुलसहदेवौ रेमाते क्रीडाते इत्यर्थः माद्र्याः सुतावपि पृथायास्तनयौ

दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या ३६ किंवा कृतागेष्वघमत्यमर्षी
भीमोऽहिवद्दीर्घतमं व्यमुंचत् यस्यांघ्रिपातं रणभूर्नसेहे मार्गं गदायाश्चरतो विचित्रं ३७ कं
चिद्यशोधा रथयूथपानां गांडीवधन्वोपरतारिरास्ते अलक्षितो यच्छरकूटगूढो मायाकिरा
तो गिरिशस्तुतोष ३८ यमावुतस्वित्तनयौ पृथायाः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव रेमात उद्दा
य मृधे स्वरिक्थं परात्सुपर्णाविव वज्रिवक्त्रात् ३९ अहो पृथापि ध्रियतेऽर्भकार्थे राजर्षिवर्ये
ण विनापि तेन यस्त्वेकवीरोऽधिरथो विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः ४० ॥

॥ पृथायाः पुत्रै
र्वृतौ सुपर्णौ विवरे माते किं कृत्वा परात् दुर्योधनात् स्वरिक्थं स्वीयं राज्यं उद्दाय आच्छिद्य वज्रिवक्त्रात् इंद्रमुखात्
स्वरिक्थममृतं गरुड इवेति यद्वा सुपर्णाविव इति यद्विद्वौ गरुडौ अमृतमानयेतां तद्वत् अक्षिणीवेति
मणिवादिगणत्वात्संधिः ३९ पृथायाः किंतु कुशलं पृच्छ्येयं यतस्तस्याः पांडुनाविनाप्राणधारणमेवाश्चर्यमि
त्याह अहो इति ध्रियते जीवति न चात्याश्चर्यं यतोऽर्भकार्थे ध्रियते न भोगार्थं तथापि त्वाश्चर्यमेवेत्याह ते न तथा
॥ मृतेन विना तदेवाह यस्त्विति धनुरेव द्वितीयं सहायो यस्य ४०

श्र
१

राम
५

पृथयाअर्भकार्थे जीवतीति पृच्छमेवेत्याह हे हे सौम्यतं धृतराष्ट्रं जीवंतं अनुशोचामि नत्विंअधःपततं तत्र हेतुः परेताय
मृताय भ्रात्रे पांडवेन तत्पुत्रद्रोहेण यो विदुद्रुहे द्रोहं कृतवान् किंच जीवतोपि भ्रातुर्मे मा पक्षतवानित्याह येन सुहृत् भ्राता
अहं च स्वपुर्याः सकाशात् निर्यापितः विवासितः ४१ अहो खलु विस्मयो जानतोपि तस्यैवं दुश्चेष्टितं यत त्वं साधुर
पितुः स्वं प्रापितो सीत्यत आह सोहं हरेः प्रसादात् तस्य पदवीं माहात्म्यं पश्यन् गतविस्मयः अत्र भूतले नान्योपलक्ष्यः
गूढः सन् सुखं विचरामि कथंभूतस्य मर्त्यविडंबनेन ऐश्वर्याच्छादकेन मानुष्यानुकरणेन नृणां दृशः चिंतये

सौम्यानुशोचेत मधःपतंतं भ्रात्रे परेताय विदुद्रुहे यः निर्यापितो येन सुहृत्स्वपुर्या अहं स्व
पुत्रान्समनुव्रतेन ४१ सोऽहं हरेर्मर्त्यविडंबनेन दृशो नृणां चालयतो विधातुः नान्योपलक्ष्यः
पदवीं प्रसादाच्चरामि पश्यन् गतविस्मयोत्र ४२ नूनं नृपाणां त्रिमदोत्पथानां महीं मुहुश्चालयतां
चमूभिः वधात्प्रपन्नार्तिजिहीर्षयेशोप्युपैक्षताघं भगवान् कुरूणां ४३ अजस्य जन्मोत्पथना
शनाय कर्माण्यकर्तुर्ग्रहणाय पुंसां ॥ चालयतः भ्रामयतः ४२ ननु हरेः किमेवं लीलया येन स्वभ
क्तानां वनवासादिक्लेशा भवन्ति स्वस्य च दौरात्म्येवं धनोद्यमादि पराभवः तद्दूरं तेषामपराधानां तरमेव हननं तेनापरा
धोपेक्षेत्यत आह नूनमिति त्रिभिर्मदैरुत्पथानां मुहुश्चालयतां वधाद्धेतोः प्रपन्नानामार्तिं जिहीर्षया ईशः अघ
समये एव हंतुं समर्थोपि कुरूणामघमुपैक्षत तदानीमेव तेषां वधे सर्वदुष्टराजवधो न स्यादित्याशयेनेत्यर्थः
विद्यामदो धनमदस्तथैवाभिजनो मदः एते मदा मदांधानां त एव हि सतां दमाः इति त्रयो मदाः ४३ सर्वदुष्टहनन
वधाद्यर्थमेव भगवतो जन्मकर्माणि नान्यथेति कैमुत्यन्यायेनाह अजस्यापि जन्म अकर्तुरपि कर्माणि पुंसां

भा॰ टी॰ ग्रहणाय कर्मसु प्रवृत्तये अन्यथा न चेदेवं तर्हि भगवतो जन्मादिकं यानावदास्तां को वान्योपि गुणानां परो गुणातीतो देह योगं कर्म विस्तारं चार्हतीति ४४ तस्मादेवंभूताचिंत्यमायाविनोदस्य कथां कथयेत्याह तस्य प्रपन्ना अखिललोकपाला येषां अन्ये च स्वीये अनुशासने स्थितानां अर्थाय प्रयोजनाय यदुषु जातस्य तीर्थं संसारतारणी कीर्तिर्यस्येति ४५

॥ ॥ इति तृतीयस्कंधे टीकायां प्रथमः १ ॥ ॥ द्वितीये कृष्णविश्लेषादनुशोचन्नथोद्धवः क्षत्त्रे बालचरित्राण्यन्वयात्कोर्हतीति देहयोगं परो गुणानामुत कर्मतंत्रम् ४४ तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे अर्थाय जातस्य यदुष्वजस्य वार्तां सखे कीर्तय तीर्थकीर्तेः ४५

॥ ॥ इति श्रीभागवते महापुराणे तृतीयस्कंधे विदुरोद्धवसंवादे प्रथमोध्यायः १ ॥ ॥ श्रीशुक उवाच इति भागवतः पृष्टः क्षत्त्रा वार्तां प्रियाश्रयां प्रतिवक्तुं न चोत्सेह औत्कंठ्यात्स्मारितेश्वरः १ यः पंचहायनो मात्रा प्रातराशाय याचितः तन्नैच्छद्रचयन्यस्य सपर्यां बाललीलया २ स कथं सेवया तस्य कालेन जरसं गतः पृष्टो वार्तां प्रतिब्रूयाद्भर्तुः पादावनुस्मरन् ३ स मुहूर्तमभूत्तूष्णीं कृष्णांघ्रिसुधया भृशं तीव्रेण भक्तियोगेन निमग्नः साधु निर्वृतः ४

निकृष्णस्यावर्णयत श्वसन् १ तदेवं प्रियवार्तां पृष्टस्योद्धवस्य श्रीकृष्णविरहोत्कंठ्यावेशेन प्रतिवचनासामर्थ्यमाह षड्भिः इतीति स्मारित ईश्वरो यस्य १ एतदेव कैमुत्यन्यायेन प्रपंचयति यः इति द्वाभ्यां यः पंचवर्षो पि बाललीलयैव तिकृष्णं कंचित्परिकल्प्य कल्पितैरेव साधनैः परिचर्यां कुर्वन् प्रातर्भोजनार्थं मात्रा प्रार्थितोपि तद्भोजनं नैच्छत् २ जरसं वृद्धत्वं गतः प्राप्तः ३ श्रीकृष्णांघ्रिसुधया साधु निर्वृतः तस्यामेव तीव्रेण विवशात्वा

पुलकैः उद्भिन्नानि उज्जृंभितानि सर्वाण्यंगानि यस्य मीलंत्या दृशा शुचः अश्रूणि मुंचन तेन विदुरेण पूर्णार्थः कृतार्थो
लक्षितः यतो भगवति यः स्नेहः तस्य प्रसरः पूरस्तस्मिन् संप्लुतो निमग्नः ५ भगवानेव लोकः तस्मान्नृलोकं देहानु
संधानं उत्स्मयन् यदुकुलसंहारादि भगवच्चातुर्यस्मरणेन विस्मयं प्राप्नुवन् ६ श्रीकृष्णविरहेण संतप्यमानः प्र
त्याह श्रीकृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचे अस्तमये सति अजगरेण कालमहासर्प्येण गीर्णेषु गिलितेषु नो
गृहेषु त्वन्नृष्ठानां बंधूनां किं नु कुशलं ब्रूयां ७ अनुशोचन्नाह दुर्भगो भाग्यहीनः ये सह वसंतोपि श्रीहरिं यमिति

पुलकोद्भिन्नसर्वांगो मुंचन् मीलद्दृशा शुचः पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसंप्लुतः ५ शनै-
नकैर्भगवल्लोकान्नृलोकं पुनरागतः विमृज्य नेत्रे विदुरं प्रत्याहोद्धव उत्स्मयन् ६ उद्धव
उवाच कृष्णद्युमणिनिम्लोचे गीर्णेष्वजगरेण ह किं नु नः कुशलं ब्रूयां गतश्रीषु गृहेष्वहं ७
दुर्भगो बत लोकोयं यदवो नितरामपि ये संवसंतो न विदुर्हरिं मीना इवोडुपं ८ इंगितज्ञाः
पुरुप्रौढाः एकारामाश्च सात्वताः सात्वतामृषभं सर्वे भूतावासममंसत ९ ॥ ११ न विदुः यथा क्षी-

रसमुद्रे जातमुडुपं तदा तत्रत्या मीनाः केवलं कमनीयः कश्चिज्जलचर इत्येवं विदुः न त्वमृतमय इति तद्वत् यद्वा
जले प्रतिबिंबितं चंद्रं यथेति यद्वा यथा मीना हरिं मत्स्यरूपिणमुडुपं संसारतारकं न विदुरिति केचित् अथवा मीना
स्तिमिंगिलादयः समुद्रमथनात्पूर्वं सह वसंतोपि उडुपं चंद्रं न विदुरिति केचित् किंभूतं चंद्रं हरिं जरारोगादिहा-
रिणं ८ भाग्यहीनत्वादेव न विदुः ननु ज्ञानसामग्र्यभावादित्याह इंगितं चित्तस्थं जानंतीति तथा पुरु अतिशयेन
प्रौढा निपुणाः एकस्मिन्नेव स्थाने आरमंतीति तथा एवंभूता अपि भूतानामावासमीश्वरं संतं सात्वतामृषभं सात्व-

श्री॰टी॰ यैयादवादेवमाययास्पृष्टाः व्याप्ताः यादवोऽयमस्मद्बंधुरितिवदंति येच शिशुपालादयोऽसदेवान्यद्वैरमाश्रिताः अ
निंदंति तेषां वाक्यैः आत्मनि हरावुप्तात्मनो निक्षिप्तचित्तस्य मादृशस्य बुद्धिर्न भ्राम्यते मोहं न प्राप्यते अन्येतु मू
ढा एवेत्यर्थः १० कोसौ हरिरित्यपेक्षायामाह प्रदर्श्येति नतप्तंतपो यैः अतोऽवितृप्ता दृशो येषां तेषां स्वबिंबं मूर्तिं
एतावंतं कालं दर्शयित्वा योंतर्हितवान् लोकस्य लोचनमादाय आच्छिद्य नादृशस्यान्यस्य विलोकनीयस्याभावा
त् ११ तदेव बिंबं वर्णयति त्रिभिः यत् मर्त्यलीलासु औपयिकं योग्यं स्वस्यापि विस्मयजनकं यतः सौभगर्द्धेः सौ

देवस्य माययास्पृष्टाः येचान्यदसदाश्रिताः भ्राम्यते धीर्नतद्वाक्यैरात्मन्युप्तात्मनोहरौ
१० प्रदर्श्यातप्ततपसामवितृप्तदृशांनृणाम् आदायांतरधाद्यस्तुस्वबिंबंलोकलोचनं ११
यन्मर्त्यलीलौपयिकंस्वयोगमायाबलंदर्शयतागृहीतं विस्मापनंस्वस्यचसौभगर्द्धेः प
रंपदंभूषणभूषणांगम् १२ यद्धर्मसूनोर्बतराजसूयेनिरीक्ष्यदृक्स्वस्त्ययनंत्रिलोकः
कार्त्स्न्येनचाद्येहगतंविधातुरर्वाक्सृतौकौशलमित्यमन्यत १३ यस्यानुरागप्लुतहासरा
सलीलावलोकप्रतिलब्धमानाः ॥ भाग्यातिशयस्य परमं पदं पराकाष्ठा भूषणानां भूषणानि अंगानि य
स्मिन् १२ दृशां स्वस्त्ययनं परमानंदकरं त्रिभुवनस्था लोकः प्राणिमात्रं अद्य इदानीं इह बिंबे अर्वाक्सृतौ अर्वाची
नसंसारनिर्माणे मनुष्यनिर्माणे वा यत्कौशलं नैपुण्यं तत्कार्त्स्न्येन गतमुपक्षीणं नातः परं तस्य कौशलमस्तीत्येवं
मेने तन्मूर्तिं विधातुः सृज्यत्वाभावेपि लोकस्य दृष्टिरियमुक्ता १३ अनुरागेण प्लुतो व्याप्तो हासः एषो विनोद
स्य लीलायावलोकश्च तैः स्वकृतहासाद्यनंतरं प्रतिलब्धो मानो याभिः ताः दृग्भिः सहानुप्रवृत्ताः गच्छंतं तमेव ।

मुग्धाधियोयासांताः कृत्येशेषोयासांताः असमापितकृत्याएवावतस्थुः १४ एवंभूतबिंबप्रदर्शनेकारणमाह स्वीया
न्येवशांतान्यशांतानिचरूपाणितत्रशान्तरूपेषुइतरैरशांतैर्दैत्यादिभिः पीड्यमानेषुअनुकंपितः कृतानुकंपः आ
त्मायस्यअजोपिजातः आविर्भूतः महाभूतरूपेणनित्यसिद्धएवाग्निर्यथाकाष्ठेष्वाविर्भवतितद्वत् अजस्यजन्म
निहेतुः महान् महत्तत्वमंशः कार्यलेशोयस्याव्यक्तस्यतन्महदंशं तद्युक्तइति १५ ननुकुतोसौपरावराणामीशः
पारतंत्र्यप्रतीतेः तत्राह द्वाभ्यांमामप्येतद्दुर्वितर्क्यंदुर्घटंचखेदयति तदेवाहवसुदेवगेहेबंधनागारेयज्जन्मतो।

व्रजस्त्रियोदृग्भिरनुप्रवृत्तधियोवतस्थुः किलकृत्यशेषाः १४ स्वशांतरूपेष्वितरैः स्वरूपै
रभ्यर्द्यमानेष्वनुकंपितात्मा परावरेशोमहदंशयुक्तोह्यजोपिजातोभगवान्यथाग्निः १५ मां
खेदयत्येतदजस्यजन्मविडंबनंयद्वसुदेवगेहे व्रजेचवासोरिभयादिवस्वयंपुराद्व्यवात्सी
द्यदनंतवीर्यः १६ दुनोतिचेतः स्मरतोममैतद्यदाहपादावभिवंद्यपित्रोः तातांबकंसादुरुशंकि
तानांप्रसीदतंनोऽकृतनिष्कृतीनाम् १७ कोवाअमुष्यांघ्रिसरोजरेणुंविस्मर्तुमीशीतपुमान्वि

विडंबनमनुकरणं ननुनृसिंहवदकस्मादाविर्भावः कंसभयादिवनिलीयव्रजेवासश्चकालय '' जिघ्रन्॥
वनादिरिपुभयादिवपुरान्मथुरायाः व्यवात्सीत् अपलायत १६ एतच्चहरेश्चरितं स्मरतोममचेतः कर्मभूतंदुनो
तिव्यथयति तदेवदर्शयति यदाहेति हेतातहेअंबयुवांप्रसीदतंप्रासादंकुरुतंनकृतानिष्कृतिः शुश्रूषणंयैस्ते
षांनोऽस्माकंइतिबहुवचनंतुरामाद्यभिप्रायम् १७ ननुतर्ह्यनीश्वरएवकिंनस्यात् नवतुश्रद्धामात्रमेतत् तत्रा
हत्रिभिः कोवाअंघ्रिसरोजयोरेणुस्तमपिविजिघ्रन्सेवमानः पुमान् विस्मर्तुमीशीतशक्नुयात् ॥ ९ ॥

भा०टी० विस्फुरन् भ्रुविटपः भ्रूलतास एव कृतांतः तेन १८ नचतस्येश्वरत्वंसाधनीयंभवद्भिरपिदृष्टत्वादित्याह दृष्टेति यांसिद्धिंसम्यग्योगेनप्राप्तुमिच्छंति १९ आहवेयुद्धे पार्थस्यास्त्रैः पूताः निष्पापाः संतः २० तदेवंपर मैश्वर्यंसत्यपियदुग्रसेनानुवर्तित्वंतत्पुनरस्मानत्यंतंव्यथयतीत्याह स्वयंतुयएवंभूतः तस्यतत्कैंकर्यंनोऽ स्मान्विग्लापयतीत्युत्तरेणान्वयः नसाम्यातिशयौयस्यपमपेक्ष्याऽन्यस्यसाम्यमतिशयश्चनास्तीत्यर्थः त्र्य

योविस्फुरद्भ्रुविटपेनभूमेर्भारंकृतांतेनतिरश्चकार १८ दृष्टाभवद्भिर्ननुराजसूयेचैद्य स्यकृष्णंद्विषतोपिसिद्धिः यांयोगिनःसंस्पृहयंतिसम्यक्योगेनकस्तद्विरहंसहेत १९ तथैवचान्येनरलोकवीरायआहवेकृष्णमुखारविंदं नेत्रैःपिबंतोनयनाभिरामंपार्थास्त्र पूताःपदमापुरस्य २० स्वयंत्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याप्तसमस्तकामः ब लिंहरद्भिश्चिरलोकपालैःकिरीटकोट्येडितपादपीठः २१ तत्तस्यकैंकर्यमलंभृतान्नोवि ग्लापयत्यंगयदुग्रसेनं तिष्ठन्निषण्णंपरमेष्ठिधिष्ण्येन्यबोधयद्देवनिधारयेति २२ अहो बकीयंस्तनकालकूटंजिघांसयाऽपाययदप्यसाध्वी ॥ ११ हेनवः त्र्यधीशः त्रयाणांपुरुषाणांलोका नांगुणानांवाईशः स्वाराज्यलक्ष्म्यापरमानंदस्वरूपसंपत्त्यैवप्राप्तसमस्तभोगः बलिंकरंअर्हणंवाहरद्भिः सम पंयद्भिश्चिरकालीनैर्लोकपालैः किरीटाग्रेणईडितंस्तुतंपादंपादपीठंयस्यप्रणमतांकिरीटसंघट्टनध्वनिरे वस्तुतित्वेनोत्प्रेक्ष्यते २१ अंगविदुर भृतानभृत्यान्नःउग्रसेनेयत्किंकरत्वंतदेवाह परमेष्ठिधिष्ण्येराजासनेनिष ण्णमासीनंस्वयंतिष्ठन् हेदेवअवधारयेतिन्यबोधयत् विज्ञापितवान् २२ एवमनुवृत्तिः कृपयैवेतिसूचयन्

रामः

पकारिस्वपितस्यकृपालुतांदर्शयन्नाह अहोआश्चर्यंदयालुतायाः हंतुमिछया पिस्तनयोः सम्यक्नंकालकूटं वि
षंयं अपाययत बकीपूतना असाध्वीदुष्टापिधात्र्यायशोदायाउचितांगतिं लेभे भक्तवेषमात्रेणयः सद्गतिंद
त्तवानित्यर्थः ततोन्यंकंवाभजेम २३ ननुभागवतानेवभगवाननुगृह्णातीतिप्रसिद्धंसत्यं असुरानप्यहंभा
गवतानेवमन्ये यतोभागवताद्रुवतेपिभगवध्यानाभिनिवेशेनभगवंतमपरोक्षंपश्यंतीत्याह संरंभः क्रो
धावेशस्तेनमार्गेणाभिनिविष्टंचित्तंयेषांतान अतएवयेसंग्रामेताक्ष्यर्यः कश्यपः तस्यपुत्रंगरुडं अंसेस्कंधे

लेभेगतिंधात्र्युचितांततोन्यंकंवादयालुंशरणंव्रजेम २३ मन्येऽसुरान्भागवतांस्त्र्यधीशे
संरंभमार्गाभिनिविष्टचित्तान् येसंयुगेऽचक्षतताक्ष्यर्पुत्रमंसेसुनाभायुधमापतंतम् २४
वसुदेवस्यदेवक्यांजातोभोजेंद्रवंधने चिकीर्षुर्भगवानस्याः शमजेनाभियाचितः २५ त
तोनंदव्रजमितः पित्राकंसाद्विबिभ्यता एकादशसमास्तत्रगूढार्चिः सबलोऽवसत् २६ प
रीतोवत्सपैर्वत्सांश्चारयन्व्याहरद्विभुः यमुनोपवनेकूजद्द्विजसंकुलितांघ्रिपे २७ कैशोरी
दर्शयंश्चेष्टांप्रेक्षणीयांव्रजौकसां ॥ सुनाभायुधस्यचक्रायुधोहरिर्यस्यतंअचक्षतअपश्यन तस्मा

तेषामप्यनुग्रहोयुक्तएवेत्यर्थः वक्ष्यतिच तस्मात्केनाप्युपायेनमनः कृष्णेनिवेशयेदिति २४ इदानींतस्यान्न
हीनप्रकारंवक्तुंआदितआरभ्यतच्चरितंसंक्षेपतः कथयति वसुदेवस्यभार्यायांजातः भोजेन्द्रः कंसः तस्यवं
धनागारे अस्याः पृथिव्याः शंसुखंस्वयंचिकीर्षुः अजेनब्रह्मणाचयाचितः सन २५ पित्राहेतुभूतेननंदव्र
जंइतःगतः समाः वत्सरान गूढार्चिःगुप्ततेजाः २६ व्याहरत् आक्रीडत कूजद्भिर्द्विजैःपक्षिभिःसंकुलिताव्या

भा॰ टी॰ यथायोगं सर्वत्राप्यन्वयः मुग्धो बालस्य वयः सिंहस्येवावलोकनं यस्य सः २८ स एवाधिकं वयः प्राप्तः सन् गोधनं चारयन् कथंभूतं गोधनं लक्ष्म्याः शोभादिसंपदो निकेतनं सिता गोवृषा यस्मिन् नानावर्णे गोसंघे रणन् शब्दं कुर्वन् वेणुर्यस्य अरीरमत् अरमयामास २९ व्यनुदत् जघान क्रीडनकान् तृणादिनिर्मितान् सिंहादीन् यथा ३० विपन्नान्मृतान् गोपान् गावः इति गाश्चोत्थाप्य तदेव तोयं प्रकृतिस्थितं निर्विषं ३१ इंद्र

रुदन्निव हसन्मुग्धबालसिंहावलोकनः २८ स एव गोधनं लक्ष्म्या निकेतं सितगोवृषं
चारयन्ननुगान्गोपान्रणद्वेणुररीरमन् २९ प्रयुक्तान्भोजराजेन मायिनः कामरूपि
णः लीलया व्यनुदत्तांस्तान्बालः क्रीडनकानिव ३० विपन्नान्विषपानेन विगृह्य भुजगा
धिपं उत्थाप्यापाययद्गावस्तत्तोयं प्रकृतिस्थितं ३१ अयाजयद्गोसवेन गोपराजं द्विजो
त्तमैः वित्तस्य चोरुभारस्य चिकीर्षन्सद्व्ययं विभुः ३२ वर्षतींद्रे व्रजः कोपाद्भग्नमानेऽति
विह्वलः गोत्रलीलातपत्रेण त्रातो भद्रानुगृह्णता ३३ शरच्छशिकरैर्मृष्टं मानयन्रजनी
मुखं गायन्कलपदं रेमे स्त्रीणां मंडलमंडनः ३४ ॥ ॥ इति श्रीभागवते महापुराणे तृ
तीयस्कंधे विदुरोद्धवसंवादे द्वितीयोध्यायः २ ॥ ॥ पूजाभंगेन कृतागवां पूजैव गोसवः
तेन गोपराजं नंदं वित्तस्य वेति चकारात् इंद्रस्य मानभंगं कुर्वन् उरुभारस्य अतिसमृद्धस्य ३२ कोपाद्वर्षति
गोत्रः पर्वत एव लीलातपत्रं तेन हे भद्र ३३ मृष्टमुज्वलं स्त्रीणां मंडलं मंडयतीति तथा ३४ ॥ ॥ इति
॥ ...टीकायां द्वितीयोध्यायः ॥ ॥

अ॰ २ ९ स्क ३ ९

॥४॥२॥३॥२८॥६॥८॥३॥

त्तीये मथुरामेत्य व्रजात्कंसवधादिकं यत्कृतं द्वारकायां च तत्समासेन तदवर्णयत् १ शमित्यव्ययं पित्रोः सुख
स्य चिकीर्षयेत्यर्थः तुंगात् राजमंचात् रिपुपूगानां नायकं कंसं व्यसोरपि विकर्षणं पित्रोः सुखार्थं १ ब्रह्मवेदं
सविस्तरं षडंगादिसहितं पंचजनोदरविदारणद्वारा पुत्रमानीयेत्यर्थः २ भीष्मककन्यया रुक्मिण्या ये रा
जानः समाहूताः रुक्मिण्या इति पाठे श्रीरुक्मिण्या इत्यर्थः केन साधनेन श्रियो लक्ष्म्याः सवर्णेन समा
नेन रूपेण यद्यपि तया केवलं श्रीकृष्ण एवाहूतः न सर्वे तथापि तस्या लावण्यं तेषामागमने हेतुरिति तैर्ये

उद्धव उवाच ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षया शं बलदेवसंयुतः निपात्य तुंगा
द्रिपुपूगनायं हतं व्यकर्षद्व्यसुमोजसोर्व्याम् १ सांदीपनेः सकृत्प्रोक्तं ब्रह्माधीत्य सविस्त
रं तस्मै प्रादाद्वरं पुत्रं मृतं पंचजनोदरात् २ समाहुता भीष्मककन्यया ये श्रियः सवर्णेन बु
भूषयैषां गांधर्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत्सुपर्णः ३ ककुद्मिनोऽविद्धनसो द
मित्वा स्वयंवरे नाग्नजितीमुवाह तद्भग्नमानानपि गृध्यतोऽज्ञान् जघ्नेऽक्षतः शस्त्रभृतः स्वश

वाहूना इत्युनेतेषां मिषतां पश्यतां मूर्ध्नि पदं दधत तया सह गांधर्ववृत्त्या परस्परसमय ऽऽतैः ४
रूप या बुभूषया भवितुमिच्छया जहार कथंभूतां स्वभागं लक्ष्म्यंशत्वात्तया स्वात्मनोर्पितत्वाच्च सुपर्णः सु
पतनः यद्वा सुपर्ण इव स्वभागं सुधामित्यर्थः यद्वा श्रियः रुक्मिण्याः समानं वर्ण इत्येवं वाचकं यस्य सः श्रियः
सवर्णो रुक्मी तेन समाहूताः शिशुपालादयः किमर्थं भीष्मककन्यया सह तेषां बुभूषया भूतिर्भवत्विति एत
दर्थं तत्र शिशुपालस्योद्वाहनं वा त्वेन बुभूषया जरासंधादीनां तद्विवाहोत्सवेन शेषं पूर्ववत् ३ ककुद्मिनो वृष
भान् अविद्धनासिकान् विद्धनासिकान् कृत्वेति वा तैर्वृषभैस्तद्दमनेन च भग्नो मानो येषां तान् तथापि तान् गृध्यतः

भा॰टी॰ यदा अदित्याः कुंडले दातुं स्वर्गं गतः तदा प्रभुः स्वतंत्रो पि ग्राम्यः स्त्रीपरतंत्र इव प्रियायाः सत्यभामायाः प्रियं श्री
१० विधातुमिच्छुः द्युतरुं पारिजातं आनीतवान् यदर्थं यन्निमित्तं तं द्रुमं वज्री स्त्रीप्रेरितो योद्धुमन्वधावत् स्वका ३
र्यसाधकेन तेन युद्धोद्यमस्तस्य युक्त एवेत्याह क्रीडामृग इति अयं वज्री ५ सनाभेन चक्रेण उन्मथितं हतं सुतं भौ
मं दृष्ट्वा तस्य मात्रा धरित्र्या भूम्या आमंत्रितः प्रार्थितः सन् तस्य तनयाय भगदत्ताय हृतशेषं राज्यं दत्त्वा ६ तत्रांतः पुरे कु

प्रियं प्रभुर्ग्राम्य इव प्रियाया विधित्सुरार्च्छद्द्युतरुं यदर्थे वज्र्याद्रवत्तं सगणो रुषांऽधः क्रीडा-
मृगो नूनमयं वधूनां ५ सुतं मृधे खं वपुषा ग्रसंतं दृष्ट्वा सुनाभोन्मथितं धरित्र्या आमंत्रितस्त
त्तनयाय शेषं दत्वा तदंतःपुरमाविवेश ६ तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्त्त
बंधुं उत्थाय सद्यो जगृहुः प्रहर्षव्रीडानुरागप्रहितावलोकैः ७ आसां मुहूर्त्त एकस्मिन्नानागा
रेषु योषितां सविधं जगृहे पाणीननुरूपः स्वमायया ८ तास्वपत्यान्यजनयदात्मतुल्यानि
सर्वतः एकैकस्यां दश दश प्रकृतेर्विबुभूषया ९ कालमागधशाल्वादीननीकै रुंधतः पुरं
अजीघनत्स्वयं दिव्यं स्वपुंसां तेज आदिशत् १०

॥ ७ कुजेन भौमेन याः आहृतास्ताः प्रहर्षश्च व्रीडा च अ
नुरागश्च तैः प्रहिताः प्रेरिताः ये अवलोकाः तैर्जगृहुः स्वीकृतवत्यः ७ आसां योषितां पाणीन् तत्तदनुरूपः स
न् सविधं विवाहोचितप्रकारसहितं यथा भवति ८ सर्वतः सर्वैर्गुणैः स्वतुल्यानि प्रकृतेर्मायाया विविधं भव
नं विस्तारः तदिच्छया यद्वा प्रकृतेर्हेतोर्विविधं भवितुमिच्छया ९ कालः कालयवनः रुंधतः आह एव नः मु
चुकुंद भीमादिभिर्निमित्तमात्रैः स्वयमेव अजीघनत् घातितवान् तेन च स्वपुंसां तेजः प्रभावं कीर्तिवादं दत्तवान्

एम
१०

शंबरं द्विविदं बल्वलानन्यानपि कांश्चित् प्रद्युम्नरामादिभिर्निमित्तमात्रैर्घातयन् अघातयत् घातयन्निति वा पाठः दंतवक्रादीन्स्वयमवधीत् ११ नृपान् अघातयदित्यनुषंगः कथंभूतान् कुरुक्षेत्रमापतन्तां गच्छतां येषां बलैः सैन्यैः भूः सर्वतोपि चचाल चकंपे १२ सः हृतश्रीः आयुश्च यस्य भग्नौ ऊरू यस्य तं उर्व्यां शयानं पश्यन्नपि न ननंद संतोषं न प्राप १३ अनभिनंदप्रकारमेवाह कियानिति द्रोणादिभिर्मूलैः कारणभूतैः

शंबरं द्विविदं बाणं मुरं बल्वलमेव च अन्यांश्च दन्तवक्रादीनवधीत्कांश्च घातयत् ११ अथ ते भ्रातृपुत्राणां पक्षयोः पतितान्नृपान् चचाल भूः कुरुक्षेत्रं येषामापततां बलैः १२ स कर्णदुःशासनसौबलानां कुमंत्रपाकेन हतश्रियायुषं सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां न ननंद पश्यन् १३ कियान्भुवोऽयं क्षपितोरुभारो यद्द्रोणभीष्मार्जुनभीममूलैः अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनां १४ मिथो यदैषां भविता विवादो मध्वामदाताम्रविलोचनानां नैषां वधोपाय इयानतोन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म १५ एवं संचिंत्य भगवान्स्वराज्ये स्थाप्य धर्मजं नंदयामास सुहृदः साधूनां वर्त्म दर्शयन् १६

यदिति यः अष्टादशाक्षौहिणीयुक्तः हृस्व मार्षे क्षपितउरुभारो भुवः अयं कियान् अल्पः अल्पइत्यर्थः यस्मान्मदंशैः प्रद्युम्नादिभिः हेतुभूतैर्दुर्विषहं बलमास्ते १४ न चात्रान्य उपायः प्रभवति किंतु मधुना यश्चामदः सर्वतो मदः तेन आताम्रविलोचनानामेषां विवादो यदा भविष्यति तदा इयानेवैषां वधोपायः अतोन्यो नास्ति एकात्मनोपि मय्युद्यते सति स्वयमेव विवादेनान्तर्दधीरन्नित्यर्थः १५ एवं श्लोकद्वयेनोक्तं क्रमेण संचिंत्य स्वराज्ये

भा॰ टी॰ धृतः रक्षितः १७ अनुजैः सह १८ सांख्यं प्रकृतिपुरुषविवेकं १९ स्निग्धोयः स्मितसहितोवलोकस्तेनपी
११ यूषकल्पयासुधातुल्ययापाठान्तरे पीयूषकुल्ययासुधाप्रवाहरूपया आत्मनादेहेन २० क्षणदयारात्र्या
दत्तः क्षणः अवसरः उत्सवोवायासांस्त्रीणांतासुक्षणं सौहृदं यस्यसः २१ गृहमेधेषुगृहधर्मेषुयोगेषुः

उत्तरायांधृतः पुरोर्वंशः साध्वभिमन्युना सवै द्रौण्यस्त्रसंछिन्नः पुनर्भगवताधृतः १७
अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः सोपिक्ष्मामनुजैरक्षन्रेमेकृष्णमनुव्रतः १८
भगवानपि विश्वात्मालोकवेदपथानुगः कामान्सिषेवेद्वार्वत्यामसक्तः सांख्यमास्थितः १९
स्निग्धस्मितावलोकेनवाचापीयूषकल्पया चरित्रेणानवद्येनश्रीनिकेतेनचात्मना २०
इमंलोकममुंचैवरमयन्सुतरांयदून् रेमेक्षणदयादत्तक्षणस्त्रीक्षणसौहृदः २१ तस्यै
वंरममाणस्यसंवत्सरगणान्बहून् गृहमेधेषुयोगेषुविरागः समजायत २२ दैवाधीने
षुकामेषुदैवाधीनः स्वयंपुमान् कोविश्रंभेतयोगेनयोगेश्वरमनुव्रतः २३ पुर्यांकदाचि
त्क्रीडद्भिर्यदुभोजकुमारकैः कोपितामुनयः शेपुर्भगवन्मतकोविदाः २४ ततः कतिप
यैर्मासैर्वृष्णिभोजांधकादयः ययुः प्रभासंसंहृष्टारथैर्देवविमोहिताः २५ ॥३॥ कामोपभोगोपा
येषुविरागः औदासीन्यंजातमित्यर्थः २२ यदास्वाधीनेष्वपिभगवतोविरागः तदादैवाधीनेषुकोविश्रंभे
नविश्वासंप्रीतिंवाकुर्यात्योगेनचेद्योगेश्वरंश्रीकृष्णमनुव्रतः २३ शेपुः शापंददुः भगवतोमतेऽभिप्रायेको

श्री ३ ॥ भा॰ टी॰ स्क॰ ३ अ॰ [illegible] ११

वयःशीलादिबहुगुणोपेताःयाःगावस्ताः २६ कन्यावृत्तिकरीं जीविकापर्याप्तां २७ भगवदर्पणंयथाभवतितथा तथागोविप्रार्थोऽसवोयेषां २८ ॥ ॥इतिश्रीभागवतेटीकायांतृतीयः ३ ॥ ॥चतुर्थेबंधुनिधनंश्रुत्वात्म

ततःस्नात्वापितॄन्देवानृषींश्चैवतदंभसा तर्पयित्वाथविप्रेभ्योगावोवहुगुणाददुः २६ हिरण्यंरजतंशय्यांवासांस्यजिनकंबलान् यानंरथानिभानकन्याधरांवृत्तिकरीमपि २७ अन्नंचोरुरसंतेभ्योदत्वाभगवदर्पणं गोविप्रार्थासवःशूराःप्रणेमुर्भुविमूर्द्धभिः २८ ॥ ॥इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविदुरोद्धवसंवादेतृतीयोध्यायः ३ ॥ ॥उद्धवउवाच अथतेतदनुज्ञाताभुक्त्वापीत्वाचवारुणीं तयाविभ्रंशितज्ञानाःदुरुक्तैर्मर्मपस्पृशुः १ तेषांमैरेयदोषेणविषमीकृतचेतसां निम्लोचतिरवावासीद्वेणूनामिवमर्दनं २ भगवान्स्वात्ममायायाःगतिंतामवलोक्यसः सरस्वतीमुपस्पृश्यवृक्षमूलमुपाविशत् ३ अहंचोक्तोभगवताप्रपन्नार्तिहरेणह वदरींत्वंप्रयाहीतिस्वकुलंसंजिहीर्षुणा ४ अथापितदभिप्रेतंजानन्नहमरिंदम पृष्टतोन्वगमंभर्तुःपादविश्लेषणाक्षमः ५ अद्राक्षमेकमासीनंविचिन्वंतदयितंपतिं श्रीनिकेतंसरस्वत्यांकृतकेतमकेतनं ६ ॥एवंज्ञानलब्धये उद्धवस्योपदेशेन

क्षत्तामैत्रेयमागमत् १ तेब्राह्मणैरनुज्ञाताःवारुणींपैष्टींमदिरां १ वारुण्येवमैरेयंतस्यदोषेणरवौनिम्लोचति अस्तंगच्छतिसतिमर्दनंकदनं २ उपस्पृश्यसरस्वत्यामाचम्य ३ अहंचोक्तःपूर्वमेवद्वारकायां ४ तदभिप्रेतं ॥कुलसंहारादिकं ५ कृतकेतंकृतावासंअकेतनंअनाश्रयम् ६ ॥

भा॰ त॰ विरजं विरजसं शुद्धसत्वमयं विदितं लक्षितं कौशं कौशेयं ७ अधिश्रित्य उपरिस्थापयित्वा अपाश्रितः पृष्ठतो ऽवष्टब्ध अर्भकः बालः कोमलो ऽश्वत्थो येन तं त्यक्तपिप्पलं विषयसुखं येन तं तथापि अहर्षं आनंदपूर्णं ८ अ॰ ४
१२ द्वैपायनः सुहृत्सखा च परमः स्वगुरुपुत्रत्वात् पराशरशिष्यो मैत्रेय इत्यर्थः ९ प्रमोदेन भावेन वाननाकंधरा यस्य पाठांतरे प्रमोदस्य भारेण अनुरागेण सहहासो यस्यां तया समीक्षया विश्रमयन् विगतश्रमं कुर्वन् १० नेमनसीप्सित

श्यामावदातं विरजं प्रशान्तारुणलोचनं दोर्भिश्चतुर्भिर्विदितं पीतकौशांबरेण च ७ वाम ऊरावधिश्रित्य दक्षिणांघ्रिसरोरुहं अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलं ८ तस्मिन्महाभागवतो द्वैपायनसुहृत्सखः लोकाननुचरन् सिद्ध आससाद यदृच्छया ९ तस्यानुरक्तस्य मुनेर्मुकुंदः प्रमोदभावानतकंधरस्य आशृण्वतो मामनुरागहाससमीक्षया विश्रमयन्नुवाच १० श्रीभगवानुवाच वेदाहमन्तर्मनसीप्सितं ते ददामि यत्तद्दुरवापमन्यैः सत्रे पुरा विश्वसृजां वसूनां मत्सिद्धिकामेन वसो त्वयेष्टः ११ स एष भावश्चरमो भवानामासादितस्ते मदनुग्रहो यत् यन्मां नृलोकान् रह उत्सृजन्तं दिष्ट्याद दृश्वान्विशदानुवृत्त्या १२ ॥महं अंतः अंत
स्थितो वेद वेद्मि दाने हेतुः विश्वसृजां वसूनां च मिलितानां सत्रे हे वसो द्रुतिपुरा पूर्वजन्मनि त्वं वसुर भूः तदा मत्प्राप्तिकामेन त्वया ऽहमिष्टः अतः तत्साधनं ददामि दास्यामि अन्यैर्मत्पराङ्मुखैर्दुष्प्रापं ११ तस्य भाग्यमभिनंदति स एष भावो जन्म नेम वानां मध्ये चरमः यद्यस्मिन् मदनुग्रहः आसादितः लब्धः यत् पुनर्मां रह एकान्ते विशदानुवृत्त्या एकान्तभक्त्या ददृश्वान् दृष्टवानसि एतद्दिष्ट्या मद्ङ्जातमित्यर्थः नृलोकान् नृशब्देन जीवास्तेषां लोकानुत्सृजंतं वैकुंठं गच्छं

ददामीतियदुक्तंतदेवनिर्दिशति पुरापूर्वस्मिन्पाद्मेकल्पेआदिसर्गेसर्गोपक्रमेमममहिमालीलाऽवभासस्तेयेन
नत १३ इत्येवमादृतस्त्वासावुक्तस्त्वाहं प्रतीक्षणंकृपावलोकएवानुग्रहस्तस्यभाजनंपात्रभूतः पाठान्तरेप्रति
क्षणमनुग्रहस्यपात्रमिति शुचः अश्रूणिमुंचन् आबभाषेउक्तवानस्मि १४ नहिस्वात्मज्ञाननिवृत्तिमात्रका
माहंकिंतुत्वन्निषेवणोत्सुकः त्वयिचाघटमानाचरणं दृष्ट्वामेमोहोभवति अतस्त्वंतत्वज्ञानंदेहीतिप्रा

पुरामयाप्रोक्तमजायनाभ्येपाद्मेनिषण्णायममादिसर्गे ज्ञानंपरंमन्महिमावभासंयत्सू
रयोभागवतंवदन्ति १३ इत्यादृतोक्तःपरमस्यपुंसः प्रतीक्षणानुग्रहभाजनोहं स्नेहो
त्थरोमास्खलिताक्षरस्तंमुंचञ्छुचः प्राञ्जलिराबभाषे १४ कोन्वीशतेपादसरोजभाजां
सुदुर्लभोर्थेषुचतुर्ष्वपीह तथापिनाहंप्रवृणोमिभूमन्भवत्पदांभोजनिषेवणोत्सुकः
१५ कर्माण्यनीहस्यभवोऽभवस्यतेदुर्गाश्रयोऽथारिभयात्पलायनं कालात्मनोयत्प्र
मदायुताश्रमः स्वात्मनरतेः खिद्यतिधीर्विदामिह १६ तंत्रेषुमांवाउपहूययत्वमकुं
ठिताखंडसदात्मबोधः ॥ऽर्थयितुमाह कोन्विति चतुर्षुधर्मादिषु तथापितानहंनप्रवृणोमिहेभूम

नभवत्पदांभोजनिषेवणोत्सुकोऽहम् १५ अघटमानाचरणंदर्शयति कर्माण्यनीहस्य निःस्पृहस्य निष्क्रियस्य
वाअभवस्याजन्मनोभवोजन्म कालात्मनस्तववारिभयात् दुर्गाश्रयः पलायनंचस्वात्मनिरतिर्यस्यतस्यबह्वीभिः
स्त्रीभिः गृहस्थाश्रमइतियत् इहअस्मिन्संसारे विदुषामपिधीः संशयेनखिद्यति १६ किंचमंत्रेषुप्रस्तुतेषु

भा॰टी॰ सत्सु मा मा हूयवेत्र होऽप्रच्छेः अकुंठितः कालादिना अखंडः संततः सदात्मासंशयादिरहितोवोधोविद्याशक्तिर्यस्य मुग्ध अ॰
११ वत् अज्ञवत् अप्रमत्तः अवहितः सन् १७ स्वात्मनस्तव रहः रहस्यंतत्वं तस्य प्रकाशकं कस्मैब्रह्मणे सर्वनासत्वमार्षे ४
नोऽस्माकं ग्रहणाय अपिक्षमं यदियोग्यं तर्हि वद भर्तः स्वामिन् यद्यतः वृजिनं संसारदुःखं अनायासेन नरिष्यामः १८
आवेदितो हार्दो हृदिस्थितो ऽभिप्रायो येन तस्मै १९ आराधितपादो भगवान् स एवतीर्थं गुरुस्तस्मात् अधीतः अ

पृच्छेः प्रभो मुग्धइवाप्रमत्तस्तन्नो मनो मोहयतीव देव १७ ज्ञानं परं स्वात्मरहः प्रकाशं प्रो
वाच कस्मै भगवान्समग्रं अपिक्षमं नो ग्रहणाय भर्तर्वदांजसा यद्वृजिनं तरेम १८ इत्या
वेदितहार्दाय महांसभगवान्परः आदिदेशारविंदाक्ष आत्मनः परमां स्थितिं १९ सए
वमाराधितपादतीर्थादधीततत्वात्मविवोधमार्गः प्रणम्य पादौ परिवृत्य देवमिहागतो
हं विरहातुरात्मा २० सोऽहं तद्दर्शनाह्लादवियोगार्तियुतः प्रभो गमिष्ये दयितं तस्य वद
र्याश्रममंडलम् २१ यत्र नारायणो देवो नरश्च भगवानृषिः मृदु तीव्रं तपो दीर्घं तेपाते लोक
भावनौ २२ श्रीशुक उवाच इत्युद्धवादुपाकर्ण्य सुहृदां दुःसहं वधं ज्ञानेनाशमयत्क्षत्ता॰

धिगतः तत्वात्मविवोधस्य परमार्थात्मज्ञानस्य मार्गो येन सोऽहं देवं परिवृत्य प्रदक्षि ऽऽशोकमुत्पनितं वुधः २३
णीकृत्य २० तस्य दर्शनेनाह्लादो वियोगेनार्तिश्च ताभ्यां युतो वदर्याश्रमस्थानं गमिष्यामि २१ मृदु परोपद्रवशू एम
न्यं तीव्रं दुस्सहं दीर्घं आकल्पान्तं तेपाते तपश्चरत इत्यर्थः लोकभावनौ लोकानुग्रहकारकौ २२ ज्ञानेन विवेकेन २३ १३

विस्रंभात् विश्वासात् २४ यद्यस्मात्स्वस्यात्मप्रयोजनसाधकाः सन्तश्चरन्ति न हि कृतार्थानामन्यत्कृत्यमस्तीत्यर्थः
२५ तत्त्वायुः संराध्य इति अयं भावः भगवतैव स्मरणमात्रेण तत्त्वापितत्वमुपदिष्टप्रायं अथ केवलमसंभावना
दिनिवृत्त्यै ये ज्ञानी कश्चिदाराध्यः स च न वाराध्यो मैत्रेयो न त्वहं ममान्तिक एव त्वदुपदेशेन तस्मादिष्टत्वादिति

स तं महाभागवतं व्रजन्तं कौरवर्षभः विस्रंभादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे २४ विदुर उवाच ज्ञानं परं स्वात्मरहःप्रकाशं यदाह योगेश्वर ईश्वरस्ते वक्तुं भवान्नोऽर्हति यद्धि विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरन्ति २५ उद्धव उवाच ननु ते तत्त्वसंराध्य ऋषिः कौषारवोऽन्तिमे साक्षाद्भगवतादिष्टो मर्त्यलोकं जिहासता २६ श्रीशुक उवाच इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधया प्लावितोरुतापः क्षणमिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात् २७ राजोवाच निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः स तु कथमवशिष्ट उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः २८ श्रीशुक उवाच ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः संहृत्य स्वकुलं नूनं त्यक्ष्यन्देहमचिंतयत् २९ ॥ ६० ॥

प्लावितः अपनीतः उरुस्तापो यस्य यमस्वसुर्यमुनायाः पुलिने तीरे तां निशां क्षणमिव समुषितः औपगविरुद्धवः ।
२७ ब्रह्मशापेन निधनं प्राप्तेषु यद्यस्मात्त्रयाणां ब्रह्मादीनामीशो हरिरपि आकृतिं मनुष्याकारं त्यक्तवान् २८ ब्रह्म
शापः अपदेशो मिषं यस्य तेन कालेन स्वशक्तिरूपेण अमोघं वाञ्छितं यस्य न ह्यत्र शापः प्रभुः किंतु भगवदिच्छैवेत्यर्थः

मयि उपरते सति ज्ञानमर्हति ज्ञानयोग्यो भवति न चान्यः ३० मत्तः सकाशात् ईषदपि न्यूनो न भवति यद्यस्माद्गुणैर्विष्यैर्न क्षोभितः मद्वयुनं मद्विषयं ज्ञानं लोकस्योपदिशन् ३१ एवमनेनाभिप्रायेण शब्दयोनिना वेदकर्त्रा ईजे पूजयामास ३२ ३३ अन्येषां पशूनां पशुतुल्यानां विक्लवात्मनां अधीरचित्तानां ३४ मनसेक्षितं चिंतितं ३५ का

अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयं अर्हत्युद्धव एवाद्धा संप्रत्यात्मवतां वरः ३०
नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु ३१
एवं त्रिलोकगुरुणा संदिष्टः शब्दयोनिना बदर्याश्रममासाद्य हरिमीजे समाधिना ३२
विदुरोप्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः क्रीडयोपात्तदेहस्य कर्म्माणि श्लाघितानि
च ३३ देहन्यासं च तस्यैवं धीराणां धैर्यवर्द्धनं अन्येषां दुष्करतरं पशूनां विक्लवात्मनां
३४ आत्मानं च कुरुश्रेष्ठ कृष्णेन मनसेक्षितं ध्यायन्गते भागवते रुरोद प्रेमविह्वलः ३५ वि
कालिंद्याः कतिभिः सिद्ध अहोभिर्भरतर्षभः प्रापद्यत स्वःसरितं यत्र मित्रासुतो मुनिः
३६ ॥ ॥ इति श्रीभागवते महापुराणे तृतीयस्कंधे चतुर्थोध्यायः ४ ॥ श्रीशुक उवाच द्वा
रि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधं ॥ लिंद्याः सकाशात् सिद्ध एव विदुरः कतिपयैः एभि
र्दिनैः स्वःसरितं गंगां प्रापद्यत प्राप्तः ३६ ॥ इति तृतीये टीकायां चतुर्थः ४ पंचमे भगवल्लीलाः क्षत्त्रा पृष्टो महामुनिः प्रो
वाच महदादीनां सर्गं ते ब्रह्मणः स्तुतिं उक्तश्चतुर्भिरध्यायैः क्षत्तुर्मैत्रेयसंगमः संवादस्तु तयोः स्कंधद्वयेनाप्यनिग
॥ द्युते २ द्युनद्याः गंगायाः ॥

द्वारि हरिद्वारे आसीनं ननु कर्मण्यग्रं तत्र हेतुः अगाधः अपरिच्छिन्नो बोधो यस्येति मैत्रेयस्य सौशील्यं आर्जवादिगु
णाश्च करुणादयस्तैरभितृप्तः पाठान्तरे क्षत्तुः सौशील्यादिभिरभितृप्तं संतुष्टं मैत्रेयम १ प्रश्नानेवाह सुखायेति पंच
दशभिः तैः कर्मभिः सुखं वा ऽन्यस्य दुःखस्योपशमं वेत्यर्थः अथवान्यद्वा न विंदेत किं तदित्यपेक्षायां तस्यैव निर्दे
शः उपारमं वेति तत एतैः कर्मभिर्भूयः पुनः पुनः दुःखमेव विंदेत अत्र एवंविधे संसारे नोस्माकं यद्युक्तं कर्तुं यो
ग्यं तत्सर्वं त्वो भगवान्वदेत निरूपयतु २ दैवात्प्राचीनात्कर्मणो निमित्तभूतात्कृष्णाद्विमुखस्य अतः अधर्मशी

क्षत्तोपसृत्याच्युतभावशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तः १ विदुर उवाच सुखाय क
र्माणि करोति लोको न तैः सुखं चान्यदुपारमं वा विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भ
गवान्वदेन्नः २ जनस्य कृष्णाद्विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य अनुग्रहाये
ह चरंति नूनं भूतानि भव्यानि जनार्दनस्य ३ तत्साधुवर्यादिश वर्त्म शं नः संराधितो भगवा
न्येन पुंसां हृदि स्थितो यच्छति भक्तिपूते ज्ञानं सतत्त्वाधिगमं पुराणं ४ करोति कर्माणि
कृतावतारो यान्यात्मतंत्रो भगवांस्त्र्यधीशः ॥५

लस्य अतः सुदुःखितस्य जनस्यानुग्रहाय भव्या
नि मंगलानि भूतानि चरंति भवंतः परोपकारस्वभावा एवेत्यर्थः ३ तत्तस्मात् हे साधुवर्य शं सुखरूपं वर्त्म नः आ
दिश कथय येन वर्त्मना संराधितो हृदि स्थितः सतत्त्वाधिगमः आत्मापरोक्ष्यं तत्सहितं पुराणं अनादि वेद
प्रमाणकं ४ करोति कर्माणीत्यादीनां वर्णयेति पंचमश्लोके क्रियासंबंधः यथा येन प्रकारेण पुरुषरूपेण
कृतावतारः सन् त्र्यधीशः त्रिगुणमायानियंता स्थितः अतः स्वतंत्र एव यानि कर्माणि करोति ॥

मा॰ टी॰ कर्माण्येव विशेषतः पृच्छति यथेत्यादिना निरीहः निष्क्रियो निःस्पृहो वा संस्थाप्य सुस्थितं कृत्वा वृत्तिं जीविकां ५ स्वीये स्वे हृदयाकाशे निवेश्य स्थापयित्वा निवृत्तावृत्तयो यस्य गुहायां योगमायायां बहुधा ब्रह्मादिरूपेण ६ मत्स्याद्यवतारभेदैः क्रीडन् यानि यथा कर्माणि विधत्ते पुनर्विशेषं पृष्टमौत्सुक्येनाविष्करोति मनइति सुश्लोकाः पुण्यकीर्तयः तेषां मौलिरिवाधिक्येनोपरि विराजमानस्तस्येत्यर्थः ७ अधिलोकनाथः लोकनाथाधिपतिः अलोकान् लोकालोकपर्वताद्बहिर्गतान्भागान् अचीक्लृपत् कल्पयामास यत्र येषु सर्वाणि यानि सत्वानि तेषां

अ॰ ५ १५

यथा ससर्जाग्र इदं निरीहः संस्थाप्य वृत्तिं जगतोभिधत्ते ५ यथा पुनः स्वे ख इदं निवेश्य शेते गुहायां स निवृत्तवृत्तिः योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथासीत् ६ क्रीडन्विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदैः मनो न तृप्यत्यपि शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि ७ यैस्तत्वभेदैरधिलोकनाथो लोकानलोकान्सह लोकपालान् अचीक्लृपद्यत्र हि सर्वसत्वनिकायभेदोऽधिकृतः प्रतीतः ८ येन प्रजानामुत आत्मकर्मरूपाभिधानां च भिदां व्यधत्त नारायणो विश्वसृगात्मयोनिरेतच्च नो वर्णय विप्रवर्य ९ परावरेषां भगवन्व्रतानि श्रुतानि मे व्यासमुखादभीक्ष्णं ॥

॥ निकायाः समूहाः तेषां भेदः अधिकृतः तत्तत्कर्माधिकारी आश्रित इति ८ उत अपि च येन प्रकारेण जीवानां आत्मा स्वभावः तत्कृतं कर्म तत्कृतं रूपं तत्कृता अभिधाः तासां भेदं कृतवान् विश्वसृष्टा स्वयं आत्मयोनिः स्वतः सिद्धः ९ ननु महाभारते त्वया सर्वं श्रुतमेव तत्राह परेति वर्णिकाः अवराः शूद्रादयः तेषां व्रतानि धर्माः मे मया अभीक्ष्णं पुनः पुनः तेषां श्रवणे

अतृप्नुमतृप्ताः स्मतेषांतुक्षुल्लसुखावहत्वात् यस्तुतत्रकृष्णकथाऽमृतौघः सूचितः तस्मादृतेनतत्रत्वलंबुद्धिर्नोस्ती
त्यर्थः १० तत्रहेतुः कइतितीर्थपदः कृष्णस्यअभिधानात् कथाऽमृतात् सत्रेषुसमाजेषुसूरिभिर्नारदादि
भिः ११ महाभारतस्यापितत्रैवतात्पर्यमित्याह मुनिः श्रीकृष्णोवेदव्यासः भगवद्गुणान्मोक्षधर्मांते नाराय
णीयाख्यानेवक्तुमिच्छुः सन् अर्थकामादिवर्णनंतुहरिकथायांमतिप्रवेशार्थमेवेत्याह यस्मिन्निति नृणां
मतिः ग्राम्यसुखानुवादैर्द्वारभूतैः नुनिश्चितंहरेःकथायांगृहीतानीता तदुक्तमितिहाससमुच्चये कामिनो

अतृप्नुमक्षुल्लसुखावहानांतेषामृतेकृष्णकथाऽमृतौघात् १० कस्तृप्नुयात्तीर्थपदो
ऽभिधानात्सत्रेषुवः सूरिभिरीड्यमानात् यः कर्णनाडींपुरुषस्ययातोभवप्रदांगेह
रतिंछिनत्ति ११ मुनिर्विवक्षुर्भगवद्गुणानांसखापितेभारतमाहकृष्णः यस्मिन्नृ
णांग्राम्यसुखानुवादैर्मतिर्गृहीतानुहरेःकथायां १२ साश्रद्दधानस्यविवर्द्धमानाविर
क्तिमन्यत्रकरोतिपुंसः हरेः पदानुस्मृतिनिर्वृतस्यसमस्तदुःखात्ययमाशुधत्ते १३ तांश्छो
च्यशोच्यानविदोनुशोचेहरेः कथायांविमुखानघेन ॥ ९ वर्णयन्कामान् लोभंलुब्धस्यवर्णयन्नत

ः किंफलमाप्नोतिकूपेंऽधमिवपातयत् लोकचित्तावतारार्थंवर्णयित्वाऽततेनतौइतिहासैः पवित्रार्थैः पुनर
त्रैवनिंदितौ अन्यथाघोरसंसारबंधहेतूजनस्यतौवर्णयेत्सकथंविद्वान्महाकारुणिकोमुनिः इति १२ हरि
कथामतिप्रवेशस्यफलमाह साकथामतिर्वाअन्यत्रग्राम्यसुखेततः किंअतआह हरेरिति १३ एवंभूता
यांकथायांयेनरमंतेतान्शोचतिशोच्यायेतेषामपिशोच्यांश्चतत्रअविदः भारततात्पर्यानभिज्ञान् ॥ १४ ॥

भा०टी० ३६

प्रोच्यान् येपितान्वाहरेः कथायांविमुखाः तानतेषामपिशोच्यानितियोऽयं योयंअनिमिषःकालोयेषांआयुःक्षिपति अन्नहेतुःवृथैववादगतिस्मृतयोवाग्देहमनोव्यापाराःयेषां १४ ततस्मात् हेकौषारवअस्यविश्वस्यशिवायकथा मुसारभूतांहरेःकथामेवोद्धृत्यनःकीर्त्तयययापुष्पेभ्योमधुमधुपउद्धरतितिनद्वद्वत्यः १५ विशेषतःश्रीकृष्ण कथाकथनीयेत्याशयेनाह सइति योविश्वसर्गाद्यर्थंपूर्वंगृहीतशक्तिःसएवपुरुषेषुकृतावतारःसन् पुरुषान्

अ० ५

क्षिणोतिदेवोऽनिमिषस्तुयेषामायुर्वृथावादगतिस्मृतीनां १४ तदस्यकौषारवशर्मदातुर्हरेः कथामेवकथ्यासुसारं उद्धृत्यपुष्पेभ्यइवार्त्तबंधोशिवायनःकीर्त्तयतीर्थकीर्त्तेः १५ सविश्वजन्मस्थितिसंयमार्थेकृतावतारःप्रगृहीतशक्तिः चकारकर्माण्यतिपूरुषाणियानीश्वरःकीर्त्तयतानिमह्यं १६ शुकउवाच सएवंभगवान्पृष्टःक्षत्त्राकौषारविर्मुनिः पुंसांनिश्रेयसार्थेनतमाहबहुमानयन् १७ मैत्रेयउवाच साधुपृष्टंत्वयासाधोलोकान्साध्वनुगृह्णता कीर्तिंवितन्वतालोकेआत्मनोऽधोक्षजात्मनः १८ नैतच्चित्रंत्वयिक्षत्तर्बादरायणवीर्यजे गृहीतोऽनन्यभावेनयत्त्वयाहरिरीश्वरः १९ मांडव्यशापाद्भगवान्प्रजासंयमनोयमः ॥ ऽऽनिक्रम्यवर्त्तमा

नानियानिचकारतानिविस्तराद्वद १६ पुंसांनिश्रेयसमेवार्थःप्रयोजनंतेनहेतुनापृष्टः १७ बहुमानमेवाह साध्विति पंचभिः अधोक्षजएवात्मामनोयस्यतस्यात्मनःस्वस्यकीर्तिंचप्रसंगाद्वितन्वता १८ हरिर्यद्गृहीतः एतच्चित्रंनभवति कुतःबादरायणवीर्यजे बादरायणवीर्यजोधृतराष्ट्रोपिभवतिपरंत्वपिविशेषइत्याह अनन्यभावेनगृहीतइति १९ ॥ ननुतर्हिकथंशूद्रत्वंकथंचलोकानुग्राहकत्वंतत्राह मांडव्यशापादिति ॥

एम ३६

भ्रातुर्विचित्रवीर्यस्य क्षेत्रे क्षेत्रत्वेन स्वीकृतायां भुजिष्यायां दास्यां यम एव त्वं जातोसि २० किंच भगवानिति कुतः
यस्य तव ज्ञानोपदेशाय मामादिष्टवानूचकारात्स्वयमपि स्मृत्यैवोपदिष्टवानिति २१ विश्वस्थित्यादयः अर्था वि
षयो यासां ताः २२ तत्र सृष्टिलीलां वर्णयितुं ततः पूर्वावस्थामाह इदं विश्वं अग्रे सृष्टेः पूर्वं परमात्मा भगवानेक ए
व आसीत् आत्मनां जीवानां आत्मा स्वस्वरूपे विभुः स्वामी च नान्यद्द्रष्टृदृश्यात्मकं किंचिदासीत् ब्रह्मरू
पेणात्मना सत्त्वेपि पृथक् प्रतीत्यभावादित्याह अनानामत्युपलक्षणः नानाद्रष्टृदृश्यादिमतिभिर्नोपलक्ष्यतः

भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवतीसुतात् २० भवान्भगवतो नित्यं संमतः सानुगस्य च य
स्य ज्ञानोपदेशाय मादिशद्भगवान्व्रजन् २१ अथ ते भगवल्लीला योगमायोपबृंहिताः विश्व
स्थित्युद्भवान्तार्था वर्णयाम्यनुपूर्वशः २२ भगवानेक आसेदमग्र आत्मात्मनां विभुः आत्मेच्छा
नुगतावात्मा ऽनानामत्युपलक्षणः २३ स वा एष तदा द्रष्टा नापश्यद्दृश्यमेकराट् मेनेऽसंतमि
वात्मानं सुप्तशक्तिरसुप्तदृक् २४ सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका ॥ ६० ॥

नितया यद्वा अकारप्रश्लेषं विनैवायमर्थः यः सृष्टौ नानामतिभिरुपलक्ष्यते स तदा एक एवासीदित्याह कुतः इ
आत्मेच्छा मायातस्यां अनुगतो लयेसतीति यद्वा आत्मनः एका किंत्वेन अवस्थानेच्छायामनुवृत्तायामित्यर्थः २३
तत्र प्रथमं मायाद्व्यवधानप्रकारमाह द्वाभ्यां सर्वं द्रष्टा सन् दृश्यं नापश्यत् यतः स एकराट् एक एव तदा प्रकाशते
नत्वा आत्मानमसंतमिव मेने दृश्याभावे द्रष्टृत्वाभावात् तदाह सुप्ताः मायाद्याः शक्तयो यस्य सः
न त्वसंतमेव मेने यतः असुप्ता दृक् चिच्छक्तिर्यस्येति २४ सा वै द्रष्टृदृश्यानुसंधानरूपा सदसदात्मिका।

भा॰टी॰ कार्यकारणरूपा यद्वा सदसद्रूपं असत् अहद्रूपं आत्मस्वरूपं च तयोरात्मायस्याः तदुभयानुसंधानरूपत्वात् २५ का
२७ लदृत्याकालशक्त्यागुणमय्यांक्षुभितगुणायां अधोक्षजः परमात्माआत्मांशभूतेनपुरुषेणप्रकृत्यधिष्ठात्रूपे
णवीर्यंचिदाभासमाधत्तवीर्यवान् चिच्छक्तियुक्तः २६ कालप्रेरितादव्यक्तात् मायातः तत्त्वपदं परित्यज्यमह
तोलक्षणं अतः पुल्लिंगनिर्देशोविज्ञानात्मेति सत्वप्रधानत्वात् स्वदेहस्थं विश्वमुच्छून्यबीजगतमंकुरादि
रूपंरक्षमिवव्यंजनव्यंजयन् प्रकाशयन् यतोसौतमोनुदतीतितमोनुदः तदुक्तंसात्वततंत्रे विष्णोस्तुत्रीणि

मायानाममहाभागययेदंनिर्ममेविभुः २५ कालदृत्यातुमायायांगुणमय्यामधोऽक्षजः
पुरुषेणात्मभूतेनवीर्यमाधत्तवीर्यवान् २६ ततोऽभवन्महत्तत्वमव्यक्तात्कालचोदितात् ।
विज्ञानात्मात्मदेहस्थंविश्वंव्यंजंस्तमोनुदः २७ सोऽप्यंशगुणकालात्माभगवद्दृष्टिगोचरः
आत्मानंव्यकरोदात्माविश्वस्यास्यसिसृक्षया २८ महत्तत्वाद्विकुर्वाणादहंतत्वंव्यजाय
त कार्यकारणकर्त्रात्माभूतेंद्रियमनोमयः वैकारिकस्तैजसश्चतामसश्चेत्यहंत्रिधा २९

रूपाणिपुरुषाख्यान्ययोविदुः प्रथमंमहतः स्रष्टृ द्वितीयंत्वंडसंस्थितं तृतीयंसर्वभूतस्थंतानिज्ञात्वावि
मुच्यतेइति २७ अहंकारोत्पत्तिमाह सार्द्धाभ्यां सोपीति अयांशश्चिदाभासोनिमित्तं गुणाउपादानंकालःक्षो
भकः तदात्मातदधीनः भगवान् सर्वाध्यक्षः तद्दृष्टिगोचरः सन्स्वयमात्मानंव्यकरोत्रूपांतरमनय
त २८ अहंकारस्यलक्षणमाह कार्यमधिभूतंकारणमध्यात्मंकर्तृ अधिदैवंतेषामात्माआश्रयः अत्रहेतुः
भूतेंद्रियमनोमयः तद्विकारवान् मनइतिदेवानामुपलक्षणं २९ ॥

अ॰ ५

एमः २७

एतदेव विभागतः प्रपंचयति वैकारिकइत्यादिना वैकारिकः सात्विकः तैजसो राजसः देवाश्च वैकारिकाः सात्विकाहं-
कारकार्यभूताइत्यर्थः यतः येभ्यः इंद्रियाधिष्ठातृभ्यः अर्थाभिव्यंजनं शब्दादिप्रकाशो भवति ३० तैजसान्येवेत्यन्व
यः ज्ञानेंद्रियाणां ज्ञानमयानां सात्विकत्वशंका माभूदित्येवकारः तामसो भूतसूक्ष्मस्य शब्दस्यादिः कारणं यतः
शब्दात् खं आकाशो भवति आत्मनो लिंगं स्वगुणशब्दरूपेण प्रकाशकम् हृदयाकाशतया वा यद्वा लिंगं शरीरं आ

अहंतत्वाद्विकुर्वाणान्मनो वैकारिकादभूत् वैकारिकाश्च ये देवा अर्थाभिव्यंजनं यतः ३० तै
जसानींद्रियाण्येव ज्ञानकर्ममयानि च तामसो भूतसूक्ष्मादिर्यतः खं लिंगमात्मनः ३१ काल
मायांशयोगेन भगवद्वीक्षितं नभः नभसोऽनुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलं ३२ अनिलोऽपि
विकुर्वाणो नभसोरुबलान्वितः ससर्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचनम् ३३ अनिलेना
ऽनुसंस्पृष्टं विकुर्वद्ब्रह्मवीक्षितं आधत्तांभो रसमयं कालमायांशयोगतः ३४ ज्योतिषांभो
ऽनुसंसृष्टं विकुर्वद्ब्रह्मवीक्षितं महीं गंधगुणामाधात् कालमायांशयोगतः ३५ भूतानां नभः
आदीनां यद्यद्भव्यावरावरं ॥ काश शरीरं ब्रह्मेति श्रुतेः ३१ नभसः खस्मात् अनुसृतं उद्भूतं स्पर्शं विकुर्वन्

रूपान्तरं नयन् अनिलं वायु एवं सर्वत्र तन्मात्रद्वारा भूतोत्पत्तिरिति ज्ञातव्यम् ३२ नभसा सहितः स्वयं चोरुबलान्वि
तः ततो ज्योतिः तेजो लोचनं प्रकाशकं ३३ ३४ ३५ हे भव्य विदुर पाठान्तरे भाव्यं कार्यं यद्यदवरमवरं कार्यं तेषां
कार्याणां परैः कारणैरनुसंसर्गात् अन्वयात् यथासंख्यं यथाक्रमम् उत्तरोत्तरं अधिकान् गुणान् विदुः तथाहि नभसः

भा॰ ३ शब्द एव गुणः अन्यान्वयाभावात् वायोस्तु स्पर्शः आकाशान्वयाच्छब्दश्च एवं तेजसस्तोय रूपं च अंभसस्तानि रस अ
१८ श्च महाः सर्वे ३६ देवा महदाद्यभिमानिनः विष्णोः कला अंशाः काललिंगं विष्णुतिर्मायालिंगं विक्षेपः अंशलिंगं ५
चेतना तानि विद्यंते येषु अतः समत्वेन नानात्वात् परस्परासंबंधात् स्वक्रियायां ब्रह्मांडरचनायां अनीशाः अ
शक्ताः सन्तो विभुं परमेश्वरं प्रोचुः ३७ मिथः स्पर्धिष्णवो देवानमिलन्तः परस्परं विश्वकर्मण्यनीशा नानिर्वि
र्णा हरिमीडिरे प्रपन्नानां तापोपशमे आतपत्रं छत्रं तत्र हेतुः यस्य पादारविंदस्य मूलं तलं केतन आश्रयो येषां ते सं

तेषां परानुसंसर्गात् यथा संख्यं गुणान् विदुः ३६ एते देवाः कला विष्णोः कालमायांशलिं
गिनः नानात्वात् स्वक्रियाऽनीशाः प्रोचुः प्रांजलयो विभुम् ३७ देवा ऊचुः नमाम ते देव पदा
रविंदं प्रपन्न तापोपशमातपत्रं यन्मूलकेता यतयोऽञ्जसोरु संसारदुःखं बहिरुत्क्षिपन्ति
३८ धातर्यदस्मिन् भव ईश जीवास्तापत्रयेणोपहता न शर्म्म आत्मँल्लभंते भगवंस्तवां
घ्रिच्छायां स विद्यामत आश्रयेम ३९ मार्गन्ति यत्ते मुखपद्मनीडैश्छंदः सुपर्णैरृषयो वि

सारदुःखं बहिर्दूरत उत्क्षिपंति परित्यजन्ति यथा पांथाः स्वगृहं प्राप्य मार्गश्रममिव ३८ ॥ विविक्ते ॥
श्रमं विनिवेदयंत आहुः हे धातः पितः यद्यस्मात् भवे संसारे आत्मन आत्मनि संबोधनं वा शर्म सुखं न लभंते यदि
निपाठे यस्मात् भजनं विना शर्म न लभंते न तु ज्ञानादज्ञान कृत तापो निवर्त्तते किं मदंघ्रिच्छायाश्रयणेन तत्राहुः स्क
स विद्यां तदाश्रयणमेव विद्याप्रापकमित्यर्थः ३९ अज्ञातस्याश्रयणायोपायं ज्ञानसाधनमाहुः मार्गन्ति १८
अन्वेषयन्ति यत् तत्तीर्थपदस्तव पदं वयं प्रपन्नाः कैर्मार्गन्ति छंदः ॥

सुपर्णैः वेदपक्षिभिस्त्वैवमुत्पत्पदं नीडं येषां यथापक्षिणो नीडादुड्डीतास्ततस्ततः परिभ्रम्य पुनस्तत्रैव विशन्ति तथा वे
दा अपि त्वत्त उद्गतास्त्वय्येव पर्यवस्यंति अतो वेदानाश्रित्य त्वत्पदं मृगयंत इति विविक्ते असंगे मनसि किंच अघ
मर्षं मघनाशकं उदं उदकं यासां सरितां तासु वरायाः गंगायाः पदं उद्गमस्थानं अतो गंगामनुसेवमाना अपि तदुद्ग
मस्थानं त्वत्पदं प्राप्नुवन्तीत्यर्थः ४० ननु विषयाकृष्टचित्तानां कुतस्तदन्वेषणं तत्राहुः यच्छ्रद्धयेति पत् हृदये अव
धाय ध्यात्वा वैराग्यं बलं यस्य तेन ज्ञानेन धीरा भवन्ति सरागे चित्ते ध्यानमेव कुतः श्रद्धया श्रवणपूर्विकया भक्त्या

यस्याघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदः प्रपन्नाः ४० यच्छ्रद्धयाश्रुतवत्या च भक्त्या
संमृज्यमाने हृदयेऽवधाय ज्ञानेन वैराग्यबलेन धीरा व्रजेम तत्तेंऽघ्रिसरोजपीठम् ४१ वि
श्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते व्रजेम सर्वे शरणं यदीश स्मृतं प्र
यच्छत्यभयं स्वपुंसाम् ४२ यत्सानुबंधेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणां पुंसां
सुदूरं वसतोपि पुर्यां भजेम तत्ते भगवन्पदाब्जम् ४३ तान्वा असद्वृत्तिभिरक्षिभिर्ये पराहृ

च संमृज्यमाने संशोध्यमाने ४१ भक्तानुग्रहं स्मरंत आहुः विश्वस्येति ४२ अन्तर्या तान्तर्मनसः परेश
मितया नित्यं संनिहिते अनर्थकं व्रजनमित्याशंक्याह यदिति सानुबंधे सोपकरणे असति तुच्छे पुर्यां स्वदे
हे एव वसतोऽपि पुर्यां सुदूरं दुष्प्रापम ४३ ननु यदि हृदिस्थस्यापि पदाब्जं केषांचित्सुदूरं तर्हि अन्येषामपि
तथैव स्यात् अविशेषादित्याशंक्याहुः तानिति असद्वृत्तिभिर्बहिर्मुखैरक्षिभिरिंद्रियैः पराहृतं दूरमपहृतं
तं अन्तस्थं मनो येषां ते अथो अतएव ते नूनं ता न्न पश्यन्ति एव प्रसिद्धं कुतः पुनस्तेषां तत्संगः स्यात् ॥ ६ ॥

भा॰ ३ कानतेनव पदन्यासो गमनं तस्य विलासो विभ्रमः तस्य लक्ष्मीः शोभा तस्याः येतल्लीलाकथादिभिः शोभमानास्तान् त्वत् अ॰
१९ दृशानित्यर्थः पदयद्गतिलक्ष्म्यानिति च पाठे त्वत्पदन्यासविलासो लक्ष्म्या येषां तान् अथः त्वन्मार्गभूतान् सतः मार्गा ५
त्वा श्रवणादीनन न पश्यंतीत्यर्थः यद्वा ये एवंभूता भागवताः तेतानुन्मत्तान् नूनं नैव पश्यन्तीत्यन्वयः सत्संगाभावेन
हरिकथाश्रवणाभावाद्धृदि स्थितमपि तेषां सुदूरमिति भावः ४४ एतदेव स्फुटयंति पानेनेति द्वाभ्यां वैराग्यं सारो ब
लं यस्य बोधस्य तं लब्ध्वा अन्वीयुः प्रापुः अकुंठधिष्ण्यं वैकुंठलोकम् ४५ आत्मनि समाधिर्मनः स्थैर्यं स एव योगस्त

थापि न पश्यंत्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः ४४ पानेन ते देवकथासुधा-
याः प्रवृद्धभक्त्या विशदाशया ये वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसाऽन्वीयुरकुंठधिष्ण्य-
म् ४५ तथाऽपरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठां त्वामेव धीराः पुरुषं वि-
शंति तेषां श्रमः स्यान्न तु सेवया ते ४६ तत्ते वयं लोकसिसृक्षयाऽद्य त्वयाऽनुसृष्टास्त्रिभि-
रात्मभिः स्म सर्वे वियुक्ताः स्वविहारतंत्रं न शक्नुमस्तत्प्रतिहर्तवे ते ४७ ॥

ऽपायस्तस्य बलेन ज्ञा-
नयोगतः श्रमेण मोक्षः सत्संगतस्त्वत्कथाश्रवणादिना त्वनायासेनैव अहंममताविष्टानां तु न कथंचिदिति भावः
४६ तदेवं स्तुत्वा प्रार्थयंते चतुर्भिः तत्तस्मात् हे आद्य ते त्वदीया वयं यस्माल्लोकानां सिसृक्षया त्वयाऽनुसृष्टाः क्रमे॰ एभ
णोत्पादिताः त्रिभिरात्मभिः सत्त्वादिस्वभावैः तत एव विरुद्धस्वभावत्वात् वियुक्ताः सन्तः यदर्थं सृष्टाः तत्स्वविहा- १९
रतंत्रं स्वक्रीडोपकरणं ब्रह्मांडं ते तुभ्यं प्रतिहर्तवे प्रतिहर्तुं समर्पयितुं न शक्नुमः अतस्त्वं नः स्वचक्षुः परिदेही-
॥ ति त्रयाणां श्लोकानां चतुर्थेनान्वयः ४७ ॥ ९ ॥

असामर्थ्यमेव प्रपंचयितुं कार्यस्यातिवैचित्र्यमाहुः भो अज कालेतत्तद्वसरे बलिं भोगं यावत् साकल्येन ते तुभ्यं हराम समर्पयाम यथा येन प्रकारेण अन्नमदाम भक्षयामेत्यनेनान्नमात्रं अस्माकं ऐश्वर्येण तु भोगस्तवैवेत्युक्तं उभयेषां तव चास्माकं च यत्र स्थित्वा इमे जीवाः अनूहाः अप्रत्यूहाः निर्विघ्नाः यद्वा अनूहाः अवितर्काः निःसंशया इत्यर्थः तथा च श्रुतिः ताएनमब्रुवन् आयतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ४८ अवश्यं च त्वया स्माकमेषां च कार्योपाधीनां जीवानां वृत्तिः परिकल्पनीया जनकत्वादित्याहुः नोऽस्माकं सान्वयानां सकार्याणां यद्वा अन्वे

यावद्बलिं तेऽज हराम कालेयथा वयं चान्नमदाम यत्र यथोभयेषां त इमे हि लोका बलिं हरंतोऽन्नमदंत्यनूहाः ४८ त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः ४९ ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन करवाम किं ते त्वं नः स्वचक्षुः परिदेहि शक्त्या देव क्रियार्थे यदनुग्रहाणाम ५० ॥ तीत्यन्वयः कारणं तत्सहितानां त्वमेवाद्यः कारणं अत्र हेतवः कूटस्थ अविक्रियः पुरुषः अधिष्ठाता पुराणः पुरातनः एतदुपपादयंति त्वमिति हे देव अज एव त्वं गुणानां सत्वादीनां कर्मणां जन्मादीनां च योनौ कारणभूतायां शक्त्यां मायायां प्रथमं रेतस्त्वादधे निहितवानसीत्यर्थः कीदृशं कविं सर्वज्ञं महत्तत्वरूपम ४९ तथा हे आत्मन देव सत्प्रमुखा महदादयो वयं यदर्थे बभूविम तत्किं ते कार्यं करवाम स्रष्टिमिति चेत्तत्राहुः तर्हि नोऽस्माकं क्रियार्थे त्वं स्वचक्षुः स्वीयं ज्ञानं शक्त्या सह परिदेहि प्रयच्छ यस्मात्त्वत एवानुग्रहो येषां ते यदनुग्रहास्तेषामस्माकं क्रियार्थं इयानेव एतावाननुग्रहो येषां मन्यकवापदं त्वदीयज्ञानक्रिया

भाव्य । इतिश्रीतृतीयेटीकायांपंचमोध्यायः ५ ॥ ॥ षष्ठेतेरीश्वराविष्टैः सृष्टिमाह विराट्तनोः अधिदैवादिभेदंचतत्रैवभगवत्कृतं १ स्वशक्तीनांमहदादीनाम् २ समेत्यअमिलित्वासतीनांस्थितानांप्रसुप्तंलोकतंत्रंविश्वरचनायासां यद्वाप्रसुप्तजीवोपकरणानांगतिंस्थितिंदृष्ट्वाआविशदित्युत्तरेणान्वयः १ कालेनसंज्ञाउद्बोधोयस्याः कलयतिक्षोभयतिस्वकार्याणीतिवा कालसंज्ञाप्रकृतिः तांशक्तिंप्रदध्यासहप्रवेशात् त्रयोविंशतितत्

॥इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेपंचमोध्यायः ५ ऋषिरुवाच इतितासां स्वशक्तीनांसतीनामसमेत्यसः प्रसुप्तलोकतंत्राणांनिशाम्यगतिमीश्वरः १ कालसंज्ञांतदादेवींबिभ्रच्छक्तिमुरुक्रमः त्रयोविंशतितत्वानांगणंयुगपदाविशत् २ सोऽनुप्रविष्टोभगवांश्चेष्टारूपेणतंगणं भिन्नंसंयोजयामाससुप्तंकर्मप्रबोधयन् ३ प्रबुद्धकर्मादैवेनत्रयोविंशतिकोगणः प्रेरितोऽजनयत्स्वाभिर्मात्राभिरधिपूरुषं ४ परेणविशतास्वस्मिन्मात्रयाविश्वसृग्गणः चुक्षोभान्योन्यमासाद्ययस्मिंल्लोकाश्चराचराः ५ हिरण्मयः सपुरुषः सहस्रपरिवत्सरान् आंडकोशउवासाप्सुसर्वसत्वोपबृंहितः ६

त्वानामित्युक्तं अन्तर्यामितयाप्राविशत् २ चेष्टारूपेणक्रियाशक्त्याकर्मतेषांक्रियांजीवानामदृष्टंवा ३ प्रबुद्धंकर्मक्रियाशक्तिर्यस्यसः त्रयोविंशतेर्गणः दैवेनेश्वरेणप्रेरितः मात्राभिरंशैः अधिपूरुषंविराट्देहं ४ जननमेवाह परेणईश्वरेणविश्वसृजांतत्वानांगणः मात्रयाचुक्षोभपरिणतः नसर्वात्मनायस्मिंल्लोकाः स्थिताः ५ सपुरुषोयोऽधिपुरुषइत्युक्तः आंडकोशेब्रह्मांडमध्येसर्वैः सत्वैरनुशायिभिर्जीवैः सहितः ६

गर्भः कार्यरूपो विराट् देवशक्तिर्ज्ञानशक्तिस्तया एकधा हृदयावच्छिन्नचैतन्यरूपेण कर्म्मशक्तिः क्रियाशक्ति स्तया दशधा प्राणरूपेण प्राणादयः पंच नागः कूर्म्मश्च कृकलो देवदत्तो धनंजयः इत्येते पंचैवं वृत्तिभेदेन द शविधः प्राणः आत्मशक्तिर्भोक्तृशक्तिस्तया अध्यात्मादिभेदेन त्रिधाऽत्मानं विभक्तं कृतवान् ७ एवं विभा गसामर्थ्यायतनस्योत्कर्षमाह एषहीति अशेषसत्वानां प्राणिनामात्मा व्यष्टीनां तदंशत्वात् अंशो जीवः स्वच तारत्वोक्तिस्तस्मिन्नारायणाविर्भावाभिप्रायेण ८ पूर्वश्लोकार्थं विवृणोति साध्यात्मः अध्यात्मानींद्रिया

सवै विश्वसृजां गर्भो देवकर्म्मात्मशक्तिमान् विबभाजात्मनात्मानमेकधा दशधा त्रि धा ७ एषह्यशेषसत्वानामात्मांऽशः परमात्मनः आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ८ साध्यात्मः साधिदैवश्च साधिभूत इति त्रिधा विराट् प्राणो दशविध एक धा हृदयेन च ९ स्मरन् विश्वसृजामीशो विज्ञापितमधोक्षजः विराजमतपत्स्वेन ते जसैषां विवृत्तये १० अथ तस्याभितप्तस्य कतिधाऽयतनानि ह निरभिद्यंत देवानां ता नि मे गदतः शृणु ११ तस्याग्निरास्यं निर्भिन्नं लोकपालो विशत्पदं ॥

तिसर्वेन ९ अध्यात्मादि भेदं प्रपंचयितुमाह स्मरन्निति विज्ञापितं यावत्कलितेऽ ...हृ शमेन्यादि स्वेन तेजसा विच्छतया अतपत् एवं करिष्यामीत्यालोचितवान् यस्य ज्ञानमयं तपइति श्रुतेः विवृत्तये विविधवृत्तिलाभाय १० मे मत्तः शृणुः ११ आयतनान्येवाह तस्याग्निरित्यादि चतुर्दशभिः आस्यं निर्भिन्नं पृथक् जातं पदं स्वस्थानं स्वांशेन स्वशक्त्या वाचासह विशत् असौ जीवः वक्तव्यं प्रतिपद्यते शब्दमुच्चारयतीत्यर्थः ॥ ९

॥ ९ ...णितत्सहितः विराडिं

भा॰ टी॰ सर्वेनयन्निर्भिन्नंतदधिष्ठानंअग्न्यादिप्रथमांतमधिदैवं वागादींद्रियंतत्तीअंतमध्यात्मंप्रतिपत्तव्यमधिभू अ
२१ तं १२ हरेः विराजः १३ १४ त्वष्टाआदित्यः १५ प्राणेनेति प्राणवद्देहव्यापित्वात् गिंद्रियेणेत्यर्थः १६ शब्द

वाचास्वांशेनवक्तव्यंययाऽसौप्रतिपद्यते १२ निर्भिन्नेतस्तुवरुणोलोकपालोऽवि
शद्धरेः जिह्वयांऽशेनचरसंययाऽसोप्रतिपद्यते १३ निर्भिन्नेअश्विनौनासेविष्
ष्णोराविशतांपदं घ्राणेनांशेनगंधस्यप्रतिपत्तिर्यतोभवेत् १४ निर्भिन्नेअक्षिणी
त्वष्टालोकपालोऽविशद्विभोः चक्षुषांशेनरूपाणांप्रतिपत्तिर्यतोभवेत् १५ निर्भि
न्नान्यस्यचर्माणिलोकपालोनिलोऽविशत् प्राणेनांशेनसंस्पर्शंयेनाऽसौप्रतिपद्यते १६
कर्णावस्यविनिर्भिन्नौधिष्ण्यंस्वंविविशुर्दिशः श्रोत्रेणांशेनशब्दस्यसिद्धिंयेनप्र
पद्यते १७ त्वचमस्यविनिर्भिन्नांविविशुर्धिष्ण्यमोषधीः अंशेनरोमभिःकंडूंयैर
सौप्रतिपद्यते १८ मेढ्रंतस्यविनिर्भिन्नंस्वधिष्ण्यंकउपाविशत् रेतसांऽशेनयेना
सावानंदंप्रतिपद्यते १९ गुदंपुंसोविनिर्भिन्नंमित्रोलोकेशआविशत् पायुनांशेन
येनासौविसर्गंप्रतिपद्यते २० हस्तावस्यविनिर्भिन्नाविंद्रः स्वःपतिराविशत् ॥ ९

स्यसिद्धिंज्ञानम् १७ त्वचंचर्मओषधीः ओषधयः त्वगिंद्रियस्यैवस्थानभेदेनविषयद्वयंकंडूःस्पर्श
श्चतत्रचायंनामभेदोदेवताभेदश्चेति द्वितीयस्कंधएवव्याख्यातं १८ कःप्रजापतिः १९ २० स्वपतिःस्व

वार्त्तां याक्रयविक्रयादिरूपां वृत्तिं जीविकां २१ २२ विक्रियां संकल्पादिरूपां २३ आत्मानं अहंकारं अभिमन्य
ते अनेनेत्यभिमानो रुद्रः कर्मणा अहं इत्थं कर्तव्यमिति क्रियां २४ सत्वमिति बुद्धिचित्तयोरभेदेन निर्देशः म
हानिति ब्रह्मा चित्तेन चेतनया २५ त्रिलोकोत्पत्तिमाह शीर्ष्णोऽस्येति वृत्तयः परिणामाः २६ एतदेव प्रपंचय
ति द्वाभ्यां आत्यंतिकेन ऊर्जितेन परा व्यवहारे पणं तेयागादिना व्यवहरंतीति पणयो मनुष्याः तानानुयेत्तदुप

वार्त्तयांऽशेन पुरुषो यया वृत्तिं प्रपद्यते २१ पादावस्य विनिर्भिन्नौ लोकेशो विष्णुराविशत्
गत्यास्वांशेन पुरुषो यया प्राप्यं प्रपद्यते २२ हृदयं चास्य निर्भिन्नं चंद्रमा धिष्ण्यमाविश
न् मनसांऽशेन येनासौ विक्रियां प्रतिपद्यते २३ आत्मानं चास्य निर्भिन्नमभिमानोऽवि
शत्पदं कर्मणांऽशेन येनासौ कर्त्तव्यं प्रतिपद्यते २४ सत्त्वं चास्य विनिर्भिन्नं महान् धिष्ण्य
उपाविशत् चित्तेनांऽशेन येनासौ विज्ञानं प्रतिपद्यते २५ शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभे
रुदपद्यत गुणानां वृत्तयो येषु प्रतीयंते सुरादयः २६ आत्यंतिकेन सत्त्वेन दिवं देवाः प्र
पेदिरे धरां रजःस्वभावेन पणयो ये च तानानुः २७ तार्त्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः
उभयोरंतरं व्योम ये रुद्रपार्षदां गणाः २८ मुखतोऽवर्त्तत ब्रह्म पुरुषस्य कुरूद्वह ॥ २९ ॥

कारणभूताः ये गवादयस्तेपि धरां प्रपेदिरे २७ तृतीयं तमः तदीयेन तामसेन उभयोर्द्यावापृथिव्योरंतरं म
ध्यं व्योम अंतरिक्षं तदेव भगवतो नाभिस्तामाश्रिताः रुद्रपार्षदा रुद्रस्य पार्षदा भूतादीनां गणाः २८ अव
र्तत प्रवृत्तं ब्रह्म वेदः पशुजन्मस्वत्वात् मुखोद्भवत्वात् वर्णानां मुख्यः मुखमेव प्रथमः गुरुर्भूत ॥ ॥

भा॰ तृ॰ मोऽपिमुखतोऽवर्त्ततेत्यनुषंगः अध्यापनादिनाब्राह्मणस्यवेदोवृत्तिः तयावृत्त्यासहब्राह्मणोमुखतोजातइत्य अ॰
२२ र्थः एवमुत्तरत्रवर्णत्रयेऽपिज्ञातव्यं २९ क्षत्रंपालनरूपावृत्तिः ततक्षत्रंअनुव्रतः अनुसृतः क्षत्रियोऽपि ६
बाहुभ्योवर्त्ततइत्यर्थः तदनुव्रतत्वमेवाह यइतियोरुषःपुरुषस्यविभोःशः कंटकाश्चौरादयस्तेभ्योयतःक्ष
तंउपद्रवस्तस्मात्त्रायतेरक्षति ३० विशः कृष्यादिव्यवसायाः लोकस्यवृत्तिकराः जीविकाहेतवः तस्यविभो
रूर्वोः प्रवृत्ताः तदुद्भवः ऊरुजः वार्त्ताजीविकांयः स्ववृत्त्यासंपादितवान् ३१ तस्यांनिमित्तभूतायांयस्यवृत्त्याह

यत्तन्मुखत्वाद्वर्णानांमुख्योऽभूद्ब्राह्मणोगुरुः २९ बाहुभ्योवर्त्ततक्षत्रंक्षत्रियस्तदनु
व्रतः योजातस्त्रायतेवर्णान्पौरुषःकंटकक्षतात् ३० विशोऽवर्त्तन्ततस्योर्वोर्लोकवृत्ति
करीर्विभोः वैश्यस्तदुद्भवोवार्त्तांनृणांयःसमवर्त्तयत् ३१ पद्भ्यांभगवतोजज्ञेशुश्रूषां
धर्मसिद्धये तस्यांजातःपुराशूद्रोयद्वृत्त्यातुष्यतेहरिः ३२ एतेवर्णाःस्वधर्मेणयजं
तिस्वगुरुंहरिं श्रद्धयात्मविशुद्ध्यर्थंयज्जाताःसहवृत्तिभिः ३३ एतत्क्षत्तर्भगवतोदै
वकर्म्मात्मरूपिणः कःश्रद्दध्यादुपाकर्त्तुंयोगमायाबलोदयम् ३४ अथापिकीर्त्तयाम्यंग

रिः स्वयमवतुष्यते ३२ यद्यस्माज्जाताः गुरुत्वाज्जनकत्वात् वृत्तिप्रदत्वाच्चहरेः ३३ यथामतियथाश्रुतम्
एधनंतेषांपरोधर्मइत्यर्थः ३३ भोक्षत्तः दैवकर्मात्मरूपिणः कालकर्मस्वभावशक्तिमतः भगवतोयोगमा एम
याबलेनोद्भिन्नमेनहिमाद्यरूपंउपाकर्त्तुंसाकल्येननिरूपयितुंकःश्रद्दध्यात् इच्छेत् इच्छाऽप्यशक्यानिरूप २२
णंतुदूरतइत्यर्थः ३४ भगविदुरः अथापिहरेःकीर्तिंकीर्त्तयामि यथाश्रुतंगुरुमुखात् तदपिनसर्वात्मना

किंतु यद्यामनिस्त्वमन्यनुसारेण अन्याभिधा हरिव्यतिरिक्तार्थाभिधानं तया सतीं मलिनां स्वीयां वाचं सत्कर्तुं प
वित्रीकर्तुं ३५ अस्नात्वाऽपि ययामतिकीर्तने श्रवणे वा आवश्यकं कैवल्यमित्याह एकांततो लाभं तु निश्चि
तमाहुः श्रुतेः आत्मस्य उपाकृतायां निरूपितायां उपसंप्रयोगं संनिधापर्णं ३६ नन्वतीवज्ञाने निर्बंधः कर्त
व्यः ब्रह्मणोऽपि दुर्ज्ञेयत्वादित्याह आत्म नो हरेर्महिमा योगविपक्वयाऽपि संवत्सरसहस्रांते पित्रादिकवि
नाब्रह्मणापि किमवसितः किं ज्ञातः इति काकूक्त्या एतावानिति न ज्ञात एवेत्युक्तं ३७ यद्यस्मात् स्वयमपि

कीर्तिर्हरेः स्वां सत्कर्तुं गिरमन्याभिधाऽसतीम् ३५ एकांतलाभं वचसो नु पुंसां सुश्लोकमौ
लेर्गुणवादमाहुः श्रुतेश्च विद्वद्भिरुपाकृतायां कथासुधायामुपसंप्रयोगं ३६ आत्मनो
ऽवसितो वत्स महिमा कविनादिना संवत्सरसहस्रांते धिया योगविपक्वया ३७ अतो
भगवतो माया मायिनामपि मोहिनी यत्स्वयं चात्मवर्त्मात्मा न वेद किमुतापरे ३८ यतोऽ
प्राप्य निवर्तंते वाचश्च मनसा सह अहं चान्य इमे देवास्तस्मै भगवते नमः ३९ ॥ ॥इति
श्रीभागवते महापुराणे तृतीयस्कंधे षष्ठोऽध्यायः ६ ॥

॥आत्मा हरिः आत्मवर्त्म स्वमायाः
गतिं एतावदिति न वेद अनंतत्वात् ३८ अतो दुर्गेयत्वात् केवलं नमस्करोति यत इति यस्य ज्ञानाय प्रवृत्ता वा
चोऽपि मनसा सह तमप्राप्यैव न्यवर्तंत दुर्ज्ञेयत्वात् न केवलं वाङ्मनसी अहं अहंकारस्याधिष्ठाता रुद्रोऽपि
इमे इंद्रियाधिष्ठातारो देवाश्चान्ये च ३९ इति श्रीभागवते भावार्थदीपिकायां श्रीधरस्वामिविरचितायां तृतीय
॥ स्कंधे टीकायां षष्ठोऽध्यायः ६ ॥

सप्तमेसंशयच्छेदिप्रतिनिंद्यमुनेर्वचः पुनः क्षत्राहृतानानाप्रश्नाः सम्यगुदीरिताः १ अथतेभगवल्लीलायोग गमायोपबृंहितादित्यादिनामायागुणैर्लीलयाभगवान् सृष्ट्यादिकरोतीत्येवंब्रुवाणं भारत्याप्रार्थनारू पयाप्रीणयन्निवेति अभिप्रायाज्ञानेनाक्षेपात् १ निर्विकारस्यक्रियानिर्गुणस्यचगुणाः कथंलीलयेत्या स्तुक्तिः प्रयोजनाभावंपरिहरतिनवस्तुविरोधंइतिभावः २ अर्भकस्यलीलाऽपिनयुज्यतेवैषम्यादित्या ह उद्यमयतिप्रवर्तयतीतिउद्यमः अर्भकस्यक्रीडायांप्रवृत्तिहेतुःकामोऽस्ति अन्यतस्तुवस्त्वंतरेणवा

॥श्रीशुकउवाच एवंब्रुवाणंमैत्रेयंद्वैपायनसुतोबुधः प्रीणयन्निवभारत्याविदुरः प्रत्यभाषत १ विदुरउवाच ब्रह्मन्कथंभगवतश्चिन्मात्रस्याविकारिणः लीलयावा॰ पियुज्येरन्निर्गुणस्यगुणाःक्रियाः २ क्रीडायामुद्यमोऽर्भस्यकामश्चिक्रीडिषाऽन्यतः स्वतस्तृप्तस्यचकथंनिवृत्तस्यसदाऽन्यतः ३ असाक्षीत्भगवान्विश्वंगुणमय्यात्ममाया यया तयासंस्थापयत्येतद्भूयः प्रत्यभिधास्यति ४ ॥

ऽऽलांतरप्रवर्त्तनेनवातस्यक्रीडेच्छा भवति ईश्वरस्यतुस्वतस्तृप्तस्यकथंकामः अन्यतःसदानिवृत्तस्यचअसंगाद्वितीयस्यकथमन्यतश्चि क्रीडिषेत्यर्थः ३ यच्चोक्तं स्मरन् विश्वसृजामीशोविज्ञापितमधोक्षजइत्यादिना अविद्योपाधेर्जीवस्यभो गार्थमीश्वरः सृष्ट्यादिकरोतीतितदप्याक्षेप्तुमनुवदति असाक्षीदिति गुणमयीआत्मनोजीवस्यकर्तृ त्वभोक्तृत्वादिमोहात्म्यादिकायामायातयासृष्टवान् तदुक्तंप्रथमे यथासंमोहितोजीवआत्मानंत्रिगुणात्म कं परोऽपिमनुतेऽनर्थंतत्कृतंचाभिपद्यतइत्यादिना अत्रचअतोभगवतोमायामायिनामपिमोहिनी ति संस्थापयतिपालयति प्रत्यभिधास्यतिप्रातिलोम्येनतिरोहितंकरिष्यति पाठांतरेप्रातिलोम्येनात्मनि

एवंचजीवस्याविद्याश्रयत्वेघटेतनतुनत्संभवतीत्याह देशतइति योऽसौदेशादिभिरविलुप्तावबोधआ
त्माजीवः ब्रह्मस्वरूपत्वात् सकथमजयाअविद्ययायुज्येततत्रदेशतोदीपप्रभायाइवलोपोनास्तिसर्वगत
त्वात् नकालतोविद्युतइवनित्यत्वात् नावस्थातःस्मृतिवत् अविक्रियत्वात्नस्वतः स्वप्नवत् सत्यत्वात् ना
न्यतः घटादिवत् अद्वितीयत्वात् एवमेतैर्यस्यबोधोनलुप्यतेसकथमजयायुज्येत अजाचात्राविद्यैवन
माया तस्यावबोधेनविरोधाभावात् ५ किंच ब्रह्मरूपत्वादेवजीवस्यसंसारोपिनविद्यतइति आक्षिपतिस

देशतःकालतोयोऽसावस्थातःस्वतोऽन्यतः अविलुप्तावबोधात्मासयुज्येताजया
कथं ५ भगवानेकएवैषःसर्वक्षेत्रेष्ववस्थितः अमुष्यदुर्भगत्वंवाक्लेशोवाकर्म्मभिः
कुतः ६ एतस्मिन्मेमनोविद्वन्खिद्यतेऽज्ञानसंकटे तन्नःपराणुदविभोकश्म
लंमानसंमहत् ७ श्रीशुकउवाच सइत्थंचोदितःक्षत्त्रातत्त्वजिज्ञासुनामुनिः प्रत्याह
भगवच्चित्तःस्मयन्निवगतस्मयः ८ मैत्रेयउवाच सेयंभगवतोमायायन्नयेनविरु
ध्यते ईश्वरस्यविमुक्तस्यकार्प्पण्यमुतबंधनं ९ ॥ सर्वक्षेत्रेष्ववस्थितोभोक्तापिवस्तुतोभगवा
नेवचिद्रूपत्वेननन्यूनातिरेकाभावात् एवंचसति अमुष्यजीवस्यदुर्भगत्वंआनंदादिभ्रंशः कर्म्मभिर्हेतुभू
तैःक्लेशोवाकुतः कर्म्मसंबंधाभावात् अन्यथाईश्वरस्यापितत्प्रसंगःस्यादितिभावः ६ अज्ञानमेवसंकटं
दुर्गंतस्मिन्ततमानसंकश्मलंमोहंपराणुदअपाकुरु ७ चोदितःआक्षिप्तः स्मयन्निवप्रौढिंआविष्कुर्वन्नि
वस्तुतःगतस्मयः ८ भगवतोऽचिंत्यशक्तेरीश्वरस्यसेयंमायायन्नयेनतर्केणविरुध्यतइतियत् तर्कविरोध
॥ मेवानुवदति विमुक्तस्यैवपुंसोऽविद्ययाबंधनंकार्प्पण्यंचेति ९ ॥

भा॰टी॰ अत्रोदाहरणमाह यद्यपीति अर्थेन शिरश्छेदादिना विना पितुपद्रष्टुः स्वप्नसाक्षिणः ममेदं शिरश्छिन्नमित्यात्मनः आ ७
२४ विपर्ययः केवलं मृषैव प्रतीयते रहतु १० तर्हीश्वरस्यापि किं न प्रतीयते न तत्राह यथा जले प्रतिबिंबितस्यैव
चंद्रमसो जलोपाधिकृतः कंपादिधर्मो दृश्यते नत्वाकाशस्थितस्य तस्य तथाऽनात्मनो देहादेर्धर्मः अस
न्नपि तदभिमानिनो द्रष्टुरात्मनो जीवस्यैव न त्वीश्वरस्येत्यर्थः ११ तन्निवृत्त्युपायमाह सवैअनात्मनो गुणः
निवृत्तिधर्मेण वासुदेवानुकंपा तया च तस्मिन्भक्तियोगः तेन तिरोधत्ते अदृश्यो भवति शनैरित्यनेन सा

पदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः १०
यथा जले चंद्रमसः कंपादिस्तत्कृतो गुणः दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः
११ सवै निवृत्तिधर्मेण वासुदेवानुकंपया भगवद्भक्तियोगेन तिरोधत्ते शनैरिह १२ य
देंद्रियोपरामोथ द्रष्ट्रात्मनि परे हरौ विलीयंते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः १३ अ
शेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः कुतः पुनस्तच्चरणारविंदपरागसेवा
रतिरात्मलब्धा १४ श्रीविदुर उवाच संछिन्नः संशयो मह्यं तव सूक्तासिना विभो ॥ ६ ॥

धनानुसारेणेत्युक्तं १२ तर्हि सर्वानर्थनिवृत्तिः कदेत्यपेक्षायामाह यदेंद्रियाणामुपरामो नैश्चल्यं कद्रष्टुरात्मनि
अंतर्यामिरूपे अथ अनंतरमेव कृत्स्नक्लेशविलयमात्रे दृष्टांतः संसुप्तस्येवेति न तु पुनरुत्थाने १३ भक्तियोगमः
गेन क्लेशनिवृत्तिं दर्शयति अशेषेति गुणानामनुवादस्य श्रवणं च आत्मनि मनसि लब्धा श्रवणकीर्तनापेक्ष २४
या सप्रेमध्यानेन किं पुनर्न्यायोक्तिः १४ उक्तमभिनंदन्नात्मनः कृतार्थतामाविष्करोति संछिन्न इति षड्भिः ॥

चिद्रूपत्वाऽविशेषेपि कथमीश्वरस्य जगत्कर्तृत्वादिकं यं वा जीवस्य संसार इति यः संशयो ममासीत् स त्वद्वक्त्र
सोपपत्तिकं वाक्यमेवासिः खड्गस्तेन संछिन्नः अतः इदानीमे मनः उभयत्रापि ईश्वरे स्वातंत्र्ये जीवे पारतं
त्र्ये च संप्रधावति सम्यक् प्रविशति एवं वा अविलुप्तावबोधरूपस्यात्मनः कथमविद्यया बंधः
कुतो वा तन्निवृत्तिरिति संशयः उभयत्रेति बंधे मोक्षे चेत्यर्थः १५ यस्मात्त्वया साधु व्याहृतं किं तत् हरेः श
क्तिर्या आत्ममाया जीवविषया तदयनं तदाश्रयमेतदुर्भगत्वादिकं भातीति यद्यस्मात् स्वशिरश्छेदादिव

उभयत्रापि भगवन्मनो मे संप्रधावति १५ साध्वेतद्व्याहृतं विद्वन् आत्ममायायनं हरेः आभात्यपार्थं निर्मूलं विश्वमूलं न यद्बहिः १६ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः तावुभौ सुखमेधेते क्लिश्यत्यंतरितो जनः १७ अर्थाभावं विनिश्चित्य प्रतीतस्यापि नात्मनः तां चापि युष्मच्चरणसेवयाहं पराणुदे १८ यत्सेवया भगवतः कूटस्थस्य मधुद्विषः रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः १९ ॥

यदपार्थमवस्तुभूतं मूलमू
न्यं च यस्मादस्य विश्वस्य मूलं स्वाज्ञानं विना वहिर्नास्ति १६ अल्पज्ञत्वेन पूर्वं मम संशयो जात इत्याह यश्चेति
मूढतमो देहाद्यासक्तः यश्च बुद्धेः प्रकृतेः परमीश्वरं प्राप्तः सो सुखं यथा भवति तथा एधेते जीवत इत्यर्थः सं
शयक्लेशाभावात् यस्तु मध्यस्थः स्वानुसंधानेन प्रपंचं जिहासति स्वानंदसंवेदनाभावात् हातुं न शक्नोति स तु
क्लिश्यतीत्यर्थः १७ इदानीं तु कृतार्थोस्मि यतस्त्वया संशयश्छिन्नः केवलं बाधितानुवृत्तिरेवावशिष्टा सापि
युष्मत्प्रसादान्निवर्तिष्यत इत्याह नात्मनः अनात्मनः प्रपंचस्य प्रतीतस्यापि अर्थः सम्यगर्थो नास्ति किंतु प्रती
तिमात्रं युष्मच्चरणसेवया निश्चित्य तां प्रतीतिमप्यहं पराणुदे अपनेष्यामीत्यर्थः १८ मधुद्विषः पादयो रतिरासः

भा॰टी॰ अहोदुर्लभंप्राप्तंमयेत्याह दुरापाइति दुर्लभावैकुंठस्यविष्णोः सलोकस्यवा वर्त्मसुमार्गभूतेषुमहत्सुयत्रयेषु महत्सुवयाहरिकथाश्रवणंतेनाहरौप्रेमतेनचदेहाद्यनुसंधानमपिनिवर्ततइतिभावः २० अ
२५ थांतरं प्रष्टुंतदुक्तमनुवदतित्रिभिः सृष्ट्वेति विकारैरिंद्रियादिभिः सहितानि उद्धृत्यतदंशैर्विराजंसृष्ट्वा
२१ प्रविष्टस्यस्वरूपमाह यमिति विराजंविशिनष्टि यत्रेति तइमेविश्वेसर्वेलोकाः सविकाशंआसं ॥
दुरापाह्यल्पतपसः सेवावैकुंठवर्त्मसु यत्रोपगीयतेनित्यंदेवदेवोजनार्दनः २० सृ
ष्ट्वाऽग्रेमहदादीनिसविकाराण्यनुक्रमात् तेभ्योविराजमुद्धृत्यतमनुप्राविशद्विभुः
२१ यमाहुराद्यंपुरुषंसहस्रांघ्र्यूरुबाहुकं यत्रविश्वइमेलोकाः सविकाशंतआसते २२
यस्मिन्दशविधः प्राणः सेंद्रियार्थेंद्रियस्त्रिवृत् त्वयेरितोयतोवर्णास्तद्विभूतीर्वदस्वनः
२३ यत्रपुत्रैश्चपौत्रैश्चनप्तृभिः सहगोत्रजैः प्रजाविचित्राकृतयआसन्याभिरिदंततं
२४ प्रजापतीनांसपतिश्चक्लृपेकान्प्रजापतीन् सर्गांश्चैवाऽनुसर्गांश्चमनून्मन्वंतराधि
कोचेन २२ प्राणादयः पंचनागाद्याः पंचेति एवंदशविधः इंद्रियाणिचअर्थाश्चइंद्रियाणिचेति ऽऽपान् २५
पुनरुक्तिस्तद्देवतालक्षणार्थातत्सहितः सर्वोपबृंहकत्वात्प्राणस्यतत्साहित्यं एवंत्रिवृत्त्रिविधः प्राणस्त्व
येरितउक्तः तस्यविभूतीर्ब्रह्माद्याः सविसर्गशब्दवाच्याः २३ यत्रयासुइदंविश्वंततंव्याप्तं २४ एवमेतत्पुराणे
शौमैत्रेयोभगवान् किलेतिपरीक्षित् प्रश्नोत्तरतयाविदुरमैत्रेयसंवादः प्रस्तावितः अतस्तानेवविदुरेणकृता
न्प्रश्नानाह यावत्समाप्ति प्रजापतीनांपतिर्ब्रह्मेत्यादीनांवर्णयेतिवक्ष्यमाणेनान्वयः चक्लृपेअकल्पयत्स

हे मित्रायाआत्मज २६ संस्थां संनिवेशं सर्गाणां संव्यूहं सं विभागं गार्भस्वेदद्विजोद्भिदां गार्भा जरायुजाः स्वेदाच्च
द्राभ्यां च जाताः स्वेदद्विजाः उद्भिदश्च तेषां २७ सर्गादीन् आश्रयांश्च सृजतः २८ रूपं लिंगं शीलमाचारः स्वभा

एतेषामपि वंशांश्च वंश्यानुचरितानि च उपर्यधश्च ये लोका भूमेर्मित्रात्मजासते २६ तेषां
संस्थां प्रमाणं च भूर्लोकस्य च वर्णय तिर्यङ्मानुषदेवानां सरीसृपपतत्रिणाँ वद नः स
गे संव्यूहं गार्भस्वेदद्विजोद्भिदां २७ गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययाश्रयं सृजतः
श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम् २८ वर्णाश्रमविभागांश्च रूपशीलस्वभावतः ऋ
षीणां जन्मकर्म्मादि वेदस्य च विकर्षणं २९ यज्ञस्य च वितानानि योगस्य च पथः प्रभो नै
ष्कर्म्यस्य च सांख्यस्य तंत्रं वा भगवत्स्मृतम् ३० पाखंडपथवैषम्यं प्रतिलोमनिवेशनं जी
वस्य गतयो याश्च यावतीर्गुणकर्म्मजाः ३१ धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः
वार्त्तायादंडनीतेश्च श्रुतस्य च विधिं पृथक् ३२ श्राद्धस्य च विधिं ब्रह्मन् पितॄणां सर्गमेव
च ग्रहनक्षत्रताराणां कालावयवसंस्थितिम् ३३ दानस्य तपसो वापि यच्चेष्टापूर्त्तयोः फ
लं प्रवासस्थस्य यो धर्मो यश्च पुंस उतापदि ३४ ॥ ऽऽवः शमादिः ततः विकर्षणं विभागान् २९ विता

नानि विस्तारान् नैष्कर्म्यस्य च ज्ञानस्य तदुपायस्य च सांख्यस्य पथः मार्गान् तंत्रं चेत्यर्थः ३० पाखंडानां पंथाः
प्रवृत्तिः तदेव वैषम्यं ३१ निमित्तान्युपायान् परस्पराविरोधेन ३२ ग्रहादीनां कालचक्रे संस्थितिं ३३ ३४ ॥

भा॰टी॰ येनमार्गेणसंतुष्येत् येषामितियावद्दुस्थानां ३५ अनापृष्टमिति अपृष्टमपियद्योग्यंवक्तव्यमितिभावः ३६ प्रतिसं
क्रमःप्रलयः तत्रप्रलयेइमंपरमेश्वरंशयानंराजानमिवचामरग्राहिणः केवाअनुशेरतेशयानमनुस्वपंति ३७
पुरुषस्यसंस्थानंजीवस्यतत्वंपरमेश्वरस्यस्वरूपंयेनांशेनतयोरैक्यंतथाज्ञानंच नैगमंमौपनिषदंयानिसूरिभिः

येनवाभगवानतुष्येद्धर्म्मयोनिर्जनार्द्दनः संप्रसीदतिवायेषामेतदाख्याहिचानघ ३५
अनुव्रतानांशिष्याणांपुत्राणांचद्विजोत्तम अनापृष्टमपिब्रूयुर्गुरवोदीनवत्सलाः ३६
तत्वानांभगवंस्तेषांकतिधाप्रतिसंक्रमः तत्रेमंकउपासीरन्कउस्विदनुशेरते ३७ पु
रुषस्यचसंस्थानंस्वरूपंवापरस्यच ज्ञानंचनैगमंयत्तद्गुरुशिष्यप्रयोजनं निमित्ता
निचतस्येहप्रोक्तान्यनघसूरिभिः ३८ स्वतोज्ञानंकुतःपुंसांभक्तिर्वैराग्यमेववा एता
न्मेपृच्छतःप्रश्नान्हरेःकर्म्मविवित्सया ३९ ब्रूहिमेऽज्ञस्यमित्रत्वादजयानष्टचक्षु
षः सर्व्वेवेदाश्चयज्ञाश्चतपोदानानिचानघ जीवाभयप्रदानस्यनकुर्वीरन्कलामपि
४० श्रीशुकउवाच सइत्थमापृष्टपुराणकल्पःकुरुप्रधानेनमुनिप्रधानः प्रवृद्धह
र्षोभगवत्कथायांसंचोदितस्तंप्रहसन्निवाह ४१ ॥ ३८ प्रोक्तानितस्यज्ञानस्यसाधनानितानिब्रू
हि ३८ गुरुंविनैतन्नभवतीत्याह स्वतइतिमेप्रश्नान्मेमित्रत्वात् स्निग्धत्वादितिअन्वयभेदान्नमेपदस्यपौ
नरुक्त्यं ३९ तत्वोपदेशेनजीवाभयप्रदानस्य ४० पुराणेकल्पतेप्रकाशतेइतिपुराणकल्पोवृमुक्तिनोर्थःआपृष्टःपु
॥ राणकल्पोऽयंमुनिप्रधानः ४१ ॥

श्र॰ ७ राम॰ २६

॥इति तृतीये टीकायां सप्तमः ७ अष्टमे सममभूद्ब्रह्मा नाभेस्तु जलशायिनः तमजानन् जले ऽविश्यन्न पश्यं ऽतोषयद्विभुं १ श्रोतारमभिनंदति सदिति सतां सेवितुं योग्यः वत अहो यद्यस्मात् इह अस्मिन् वंशे वभूविथ जातोसि कथंभूतः भगवानेव प्रधानभूतो यस्य सः अत्र हेतुः प्रतिक्षणं नूतनं यशः तस्मिन् वीनां करोषि १ अल्पसुखाय महद्दुःखं प्राप्तानां तस्य दुःखस्य विरामाय प्रवर्त्तये प्रारभे भागवतं पुराणं यदाह साक्षाद्भगवान् ऋषिभ्यः २ को॥

इति श्रीभागवते महापुराणे तृतीयस्कंधे सप्तमोध्यायः ७ मैत्रेय उवाच सत्सेवनीयो वत पूरुवंश्यो यल्लोकपालो भगवत्प्रधानः वभूविथेहाजितकीर्त्तिमालां पदे पदे नूतनयस्यभीक्ष्णं १ सो ऽहं नृणां क्षुल्लसुखाय दुःखं महद्गतानां विरमाय तस्य प्रवर्त्तये भागवतं पुराणं यदाह साक्षाद्भगवान् ऋषिभ्यः २ आसीनमुर्व्यां भगवंतमाद्यं संकर्षणं देवमकुंठसत्वं विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयो न्वपृच्छन् ३ स्वमेव धिष्ण्यं वहु मानयंतं यं वासुदेवाभिधमामनंति प्रत्यग्धृताक्षांवुजकोशमीषदुन्मीलयंतं विवुधोदयाय ४

सो भगवान् केभ्य ऋषिभ्यः प्राह कथं च तत्वया प्राप्तमित्यपेक्षायामाह आसीनमिति सप्तभिः उर्व्यां पातालतले अकुंठसत्वं अप्रतिहतज्ञानं अतः संकर्षणात् परस्य श्रीवासुदेवस्य ३ तमेव विशिनष्टि स्वमेव धिष्ण्यं स्वीयमाश्रयं वासुदेवसंज्ञं परमानंदरूपं ध्यानपथेनु भूय वहु मानयंतं सर्वोत्कर्षेण पूजयंतं प्रत्यग्धृतमंतर्मुखीकृतं नेत्रांवुजमुकुलं किंचिदुन्मीलयंतं कृपाऽवलोकेन सनत्कुमारादीनामभ्युदयार्थम् ४॥

भा॰टी॰ ३९

अ॰ ८

मुनीनां विशेषणं साहस्रेन स्वर्धुन्याः उदकेनार्द्रैः इति श्रीभागवतश्रवणार्थं सत्यलोकात् पातालं प्रत्यवनरंतो निरं
तरं गंगामध्यत एवावतीर्णा इति भावः चरणावुपधीयेते यस्मिन् पद्मे तदुपस्पृशंतो नमंतः कथंभूतं तदाह
यत्पद्मं प्रेमसहितं यथा भवत्येवं नानोपहारैः पूजयंति वरार्थाः पतिकामाः ५ स्मानि कर्माणि गृणंतः वे
नानुरागेण स्खलंति पदानि यस्मिन् तेन वचसा तानि जानंतीति तज्ज्ञाः सहस्रमेव साहस्रं किरीटानां सह

स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशंतश्चरणोपधानम् पद्मं यदर्चंत्यहिराजकन्याः
सप्रेमनानाबलिभिर्वरार्थाः ५ मुहुर्गृणंतो वचसानुरागस्खलत्पदेनास्य कृ
तानि तज्ज्ञाः किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ६ प्रोक्तं किलै
तद्भगवत्तमेन निवृत्तिधर्माभिरताय तेन सनत्कुमाराय स चाह पृष्टः सांख्यायनायां
ग धृतव्रताय ७ सांख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः जगा
द सोऽस्मद्गुरवेऽन्विताय पराशरायाथ बृहस्पतेश्च ८ प्रोवाच मह्यं स दयालुरुक्तो
मुनिः पुलस्त्येन पुराणमाद्यम् सोऽहं तवैतत्कथयामि वत्स श्रद्धालवे नित्यमनुव्रता

लिये मणिप्रवेकाः रत्नोत्तमाः तैः प्रद्योतितं उद्दामफणानां सहस्रं यस्य तं अपृच्छन्निति पूर्वेण य ९
णैवान्वयः ६ तेन संकर्षणेन सनत्कुमाराय प्रोक्तं ७ पारमहंस्ये धर्मे मुख्यः विवक्षमाण इत्यात्मनेपदं ब्रुवा
देशास्य वचेरुभयपदित्वात् अन्विताय अनुगताय ८ पुलस्त्येनोक्त इत्यत्रैवमाख्यायिका पितरं राक्षस
भक्षितं श्रुत्वा पराशरो राक्षससत्रे प्रवृत्तो वसिष्ठवचनान्निवृत्तस्ततः पुलस्त्येन स्वसंततिरक्षणात् तुष्टेन व

तदेवं संकर्षणात्संप्रदायप्रवृत्तिं भद्र सूर्यविभूतिकथनाय पद्मोद्भवं वक्तुमाह उदाप्लुतं एकार्णवोदके निमग्नं यद्य
दा आसीत्तदा अमीलितदृक् अतिरोहितचिच्छक्तिरेव श्रीनारायणो नेत्रे निमीलितवानित्यर्थः मायाविनोदं प
रित्यज्य स्वात्मरतौ स्वरूपानंद एव कृतोत्सवः अत एव निरीहः निष्क्रियः सन् १० कालशक्तेः प्रेरणं पुनः सृ
ष्ट्यवसरे प्रबोधनार्थं स्वपदे अधिष्ठाने बहिरंतर्भावे दृष्टांतः यथाऽनल इति ११ स्वया चिच्छक्त्या सहवर्त्त

उदाप्लुतं विश्वमिदं तदासीद्यन्निद्रयामीलितदृङ्न्यमीलयत् अहींद्रतल्पेऽधिशया
न एकः कृतक्षणः स्वात्मरतौ निरीहः १० सोंऽतः शरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां
शक्तिमुदीरयाणः उवास तस्मिन्सलिले पदे स्वे यथाऽनलो दारुणि रुद्धवीर्यः ११ च
तुर्युगानां च सहस्रमप्सु स्वपन् स्वयोदीरितया स्वशक्त्या कालाख्ययाऽऽसादितकर्म्मतंत्रो
लोकानपीतान्ददृशे स्वदेहे १२ तस्याऽर्थसूक्ष्माभिनिविष्टदृष्टेरंतर्गतोऽर्थो रजसा
तनीयान् गुणेन कालानुगतेन विद्धः सूष्यंस्तदाऽभिद्यत नाभिदेशात् १३ स पद्मकोशः
सहसोदतिष्ठत्कालेन कर्म्मप्रतिबोधनेन स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्क इवा

मान एव योगनिद्रया स्वपन् पूर्वमेव प्रबोधनार्थं नियुक्तया स्वकालशक्त्या आसादितं प्रापि ऽऽत्मयोनिः १४
तं कर्म्मतंत्रं क्रियाकलापो यस्य सः अपीतान् लीनान् ददर्श १२ लोकसृष्ट्यर्थं अर्थसूक्ष्मे अभिनिविष्टा दृष्टिर्य
स्य कालानुसारिणा रजोगुणेन विद्धः संक्षोभितः सन् तनीयान् अतिसूक्ष्मोऽर्थः सूष्यन् प्रसोष्यन् उद्भविष्यन् नाभि
देशादुद्भूत इत्यर्थः १३ सः तनीयानार्थः पद्मकोशः सन् उदतिष्ठत् कर्म्मणां जीवादृष्टानां प्रतिबोधयतीति यः काल

भा०टी० तल्लोकात्मकं पद्मं सर्वान् गुणान् जीवभोग्यानर्थान् अवभासयतीति तथा तत् तस्माज्जातं स एव विष्णुः उ इति अ-
तिसंबोधने प्राविविशत् प्रकर्षेणालुप्तशक्तिरेवांतर्यामितया विवेश तस्मिन् विष्णुनाऽधिष्ठिते पद्मे विधाता
ब्रह्माऽभूत् कथंभूतः स्वयमेव वेदमयः न त्वध्ययनेन प्राप्तवेदः कोसौ अत्र हृष्टः शिष्टत्वेन यं स्वयंभुवं वदंति सः
प्राक्कल्पांते नारायणेन सह निद्रयैकीभूत आसीत् तस्मिंश्च प्रबुद्धे तत एव पाद्मे कल्पे पद्मद्वारेणाभिव्यक्तिं प्राप्त
इत्यर्थः १५ स च तस्मिन् कल्पे चतुर्मुखोऽभूदित्याह तस्यामिति परिक्रमन् तत्रस्थ एव ग्रीवां चालयन् लोक-

तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम् तस्मिन् स्वयं वेदमयो विधा-
ता स्वयंभुवं यं स्म वदंति सोऽभूत् १५ तस्यां स चांभोरुहकर्णिकायामवस्थितो लोकम-
पश्यमानः परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि १६ तस्माद्युगांतश्व-
सनावघूर्णजलोर्मिचक्रात्सलिलाद्विरूढं उपाश्रितः कंजमु लोकतत्वं नात्मानमद्धाऽवि-
ददादिदेवः १७ क एष योऽसावहमब्जपृष्ठ एतत्कुतो वाब्जमनन्यदप्सु ॥ निरीक्षणार्थं विवृत्ते

विचलिते नेत्रे यस्य १६ तस्य च श्रीनारायणोपासनयैवाविर्भूतज्ञानक्रियाशक्तेर्लोककर्तृत्वं न स्वतः इति वक्तुं प्र-
थमं तस्य विमोहनमाह तस्मात्सलिलात् विरूढम् उद्गतं कंजम् अयम् आश्रितोपि स आकल्पेन तत्कंजं लोकतत्वं चात्मानं
च साक्षात् न ज्ञातवान् उ इति विस्मये कथंभूतात् युगांतश्वसनः प्रलयवायुः तेनावघूर्णं तत्र तत्र प्रकंपितं य-
ज्जलं तस्मात्सर्वतो ऊर्मिचक्रं यस्मिन् १७ अविदुषस्तस्य वितर्कमाह योऽसावहमब्जपृष्ठे एषः कः नान्यत् ए-
कमेवैतदब्जं कुतो वा जातं यत्रैतदधिष्ठितं तेन अधस्तात् सता वर्तमानेन नु निश्चितं भाव्यं सद्रूत्यमुद्वीक्ष्येत्यु

तेरेणान्वयः तथा च श्रुतिः सोऽपश्यत्पुष्करपर्णे तिष्ठन्सोऽमन्यत अस्ति वै तत्‌ यस्मिन्निदमधितिष्ठतीति ॥१८॥ तस्य च
बहिर्मुखप्रवृत्त्यामाह । नापि कालेन तदप्राप्तिमाह । स इति द्वाभ्यां तस्याब्जस्य यन्नालं तस्य नाडीभिः अंतश्छिद्रैः तस्य ख
रनालस्य पद्मस्य यन्नालं तस्य नाभिमधिष्ठानं विचिन्वन्‌ अर्वाग्गतोऽपि तत्तदा नाविंदत ॥१९॥ आत्मसर्गं स्वकारणं त्रिणेमिः कालः
अजस्य विष्णोर्हेतिः सुदर्शनरूपं शस्त्रं देहभाजां नराणां भयमुत्पादयन्निति संवत्सरशतमतिक्रांतमित्युक्तं भवति
॥२०॥ अंतर्मुखतया तु भगवंतं दृष्टवानित्याह द्वाभ्यां ततः अन्वेषणान्निवृत्तः न प्रतिलब्धः कामो मनोरथो येन ।

अस्ति ह्यधस्तादिह किंचनैतदधिष्ठितं यत्र सता नु भाव्यम्‌ ॥१८॥ स इत्थमुद्वीक्ष्य तदब्जनाल
नाडीभिरंतर्जलमाविवेश । नाऽर्वाग्गतस्तत्खरनालनालनाभिं विचिन्वंस्तदविंदताजः ॥१९॥ त
मस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत्सुमहांस्त्रिणेमिः । यो देहभाजां भयमीरयाणः प
रिक्षिणोत्यायुरजस्य हेतिः ॥२०॥ ततो निवृत्तोऽप्रतिलब्धकामः स्वधिष्ण्यमासाद्य पुनः स
देवः । शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः ॥२१॥ कालेन सोऽजः पुरु
षायुषाऽभिप्रवृत्तयोगेन विरूढबोधः । स्वयं तदंतर्हृदयेऽवभातमपश्यतापश्यत यन्न पू
र्वं ॥२२॥ मृणालगौरायतशेषभोगपर्यंक एकं पुरुषं शयानं ॥

॥ स्वधिष्ण्यं पद्मं जितेन श्वासेन निवृत्तं
संयतं चित्तं यस्य अत एव आरूढः आश्रितः समाधियोगो येन तथाभूतः सन्‌ न्यषीदत्‌ उपविवेश ॥२१॥ पुरुषा
युषा संवत्सरशतेन कालेन अभिप्रवृत्तः सुनिष्पन्नो योगस्तेन विरूढः उत्पन्नो बोधो यस्य यत्‌ पूर्वं विचिन्वन्नपि ना
पश्यत्‌ तत्स्वयमेवांतर्हृदयेऽवभातमपश्यत ॥२२॥ यदपश्यत्तद्वर्णयति मृणालेति नवभिः नवस्वप्यपश्य

दित्यस्यैवानुषंगः मृणालवद्गौरः श्वासावापृतश्चायः शेषस्तस्य भोगो देहः स एव पर्यंकः तस्मिन्नुत्रस्थिते पर्यंके अ
फणातपत्रैरयुतानाः सर्वतो युक्ता ये मूर्द्धानस्तेषां रत्नानि किरीटस्थानि तेषां द्युभिः प्रभाभिर्हतध्वांते युगांततोये २३
कथंभूतं पुरुषं हरितोपलाद्रेः मरकतशिलामयपर्वतस्य प्रेक्षां शोभां क्षिपंतं स्वलावण्यातिशयेन तिरस्कुर्व
तं संध्याभ्रं नीवि परिधानं यस्य तस्य शोभां पीतांबरेण क्षिपंतं उरुरुक्ममूर्द्धः अनेकस्वर्णशिखरस्य तस्य ।
स्वकिरीटैः रत्नानि च उदधाराश्च औषधयश्च सौमनस्यानि च पुष्पसमूहाः सुमनस एव वा तेषां वनस्रजः

फणातपत्रायुतमूर्द्धरत्नद्युभिर्हतध्वांतयुगांततोये २३ प्रेक्षां क्षिपंतं हरितोपलाद्रेः
संध्याभ्रनीवेरुरुरुक्ममूर्द्धः रत्नोदधारौषधिसौमनस्यवनस्रजो वेणुभुजांघ्रिपांघ्रेः २४
आयामतो विस्तरतः स्वमानदेहेन लोकत्रयसंग्रहेण विचित्रदिव्याभरणांशुकानां कृ
तश्रियापाश्रितवेषदेहम् २५ पुंसां स्वकामाय विविक्तमार्गैरभ्यर्च्यतां कामदुघांघ्रिप

वनमाला यस्य वेणव एव भुजा यस्य अंघ्रिपा एवांघ्रयो यस्य स चासौ स च तस्य अयमर्थः यदि तस्मिन्नद्रौ
न्मालादृवस्थिता रत्नादयो भवंति वेणवश्च भुजा इव वृक्षाश्च पादा इव नर्हि तस्य शोभां स्वीयरत्नमुक्तातुलसीपुष्प
दामभिः भुजैरंघ्रिभिश्च क्षिपंतमिति २४ किंच आयामतो दैर्घ्येण विस्तरतश्च स्वमानदेहेन मीयते अनेनेति मानसु
पमा शोभनश्चासावमानो निरूपमो देहः तेन यद्वा सुष्ठु अमानः अपरिच्छिन्नः तेन यद्वा नाभ्यां स्वानुरूपपद्ममाणे
न अत एव लोकत्रयं संगृह्यते यस्मिन् तथा विचित्राणि नानाविधानि दिव्यान्यपूर्वाणि चाभरणान्यंशुकानि च ते
षां कृता श्रीः समंतात् शोभा येन तेन देहेन विशिष्टं एवं स्वतएवातिरम्यत्वेपि अपाश्रितवेषः स्वीकृतालंकारो
देहो यस्य तमपश्यत् यद्वा केन प्रेक्षां क्षिपंतमित्यपेक्षायामेवंभूतेन देहेनेति संबंधः २५ स्वाभिलषितफलाय पवि

॥श्रीगणेशायनमः जयंतिश्रीपरानंदकृपापांगलसद्दृशः यानित्यमनुवर्त्तंतेसंपदोविगताऽदृशः १ उक्त
स्त्रयोदशाध्यायैर्द्वादशेत्वाश्रयः सतः अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरः सतः २ उक्तोलयावधि
त्वेनप्राक्तनात्यंतिकेलये अधिष्ठानतयाचोक्तोमहापुरुषवर्णने ३ तत्रादौषड्भिरध्यायैः शुकः प्राहपरी
क्षिते शेषेस्तत्राखिलान्याहसूतः एष्वोथसत्रिभिः ४ आश्रयश्रवणेकार्योनविलं वोमनीषिणाः इत्ये
तत्कालवैषम्यंचतुर्भिस्तावदुच्यते ५ तत्रतुप्रथमेभाविमागधान्वयभूमिपान् कलिप्रभावतः प्राहसंक
रादिमलीमसान् ६ एवंभूतसोमवंशे मुकुंदस्वैरक्रीडावर्णिताव्यासपुत्रैः वंशो

**श्रीगणेशायनमः परीक्षित उवाचस्वधामानुगतेकृष्णेय
दुवंशविभूषणे कस्यवंशो भवत्पृथ्व्यामेतदाचक्ष्वमेमुने १**

भावीवर्ण्यतेकृष्णभक्तिंमुक्त्वामुक्तेर्वर्त्मनास्तीति वक्तुं ७ तदेवंवैवस्वतमनुवंशेसोमवंशप्रसं
वेनश्रीकृष्णावतारचरितानिसप्रपंचमनु वर्णितानि अथेदानींभाविसोवंशःकलौ
विजातीयसंकरादिमलीमसोवैराग्यद्वारा श्रीकृष्णैकभक्तिनिगमनायानुवर्ण्यते॥
तत्रतुसोमवंशशाखासुचिरकालानुवर्तितयामागधवंशोनुक्रम्यते तत्रपूरोर्वंशेउपरिचरोवसुस्तस्यबृहद्र
थः तस्यजरासंधः तस्यसहदेवः पुत्रोभूदित्युक्तंनवमस्कंधेतत्रैवसहदेवान्मार्जारिस्ततः श्रुतश्रवाः इत्याद
॥योरिपुंजयांताविंशतिर्भाविनोराजानोनिरूपिताः ॥१॥६॥

तत्रराजाएवक्षति· इदानीतदुपरितनंवंशंसंकरादिदोषैः प्रपंचयति योंत्यइति रिपुंजयएवपुरंजयः स्वामिनंपुरंजयंहत्वा स्वपुत्रंप्रद्योतसंज्ञंराजानंकरिष्यति तस्यपालकोनामसुतोभविष्यति २ प्रद्योतनाः प्रद्योतसंज्ञाः ३ ४ ५ ६ ७ ८ नंदोना

श्रीशुकउवाच योंऽत्यः पुरंजयोनामभाव्योबार्हद्रथोनृपः तस्यामात्यस्तुशुनकोहत्वास्वामिनमात्मजं २ प्रद्योतसंज्ञंराजानंकर्त्तायत्पालकः सुतः विशाखयूपस्तत्पुत्रोभविताराजकस्ततः ३ नंदिवर्द्धनस्तत्पुत्रः पंचप्रद्योतनाइमे अष्टत्रिंशोत्तरशतंभोक्ष्यंतिपृथिवींनृपाः ४ शिशुनागस्ततोभाव्यः काकवर्णस्तुतत्सुतः क्षेमधर्मातस्यसुतः क्षेत्रज्ञः क्षेमधर्मजः ५ विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति दर्भकस्तत्सुतोभावीदर्भकस्याजयःस्मृतः ६ नंदिवर्द्धनआजेयोमहानंदिःसुतस्ततः शिशुनागादशैवैतेषष्ट्युत्तरशतत्रयम् ७ समाभोक्ष्यंतिपृथिवींकुरुश्रेष्ठकलौनृपाः महानंदिसुतोराजन्शूद्रीगर्भोद्भवोबली ८ महापद्मपतिःकश्चिन्नंदःक्षत्रविनाशकृत् ततोनृपाभविष्यंतिशूद्रप्रायास्त्वधार्मिकाः ९ सएकच्छत्रांपृथिवीमनुल्लंघितशासनः शासिष्यतिमहापद्मोद्वितीयइवभार्गवः १० ॥ऽ

मकश्चिन्महापद्मसंख्यायाः सेनायाः धनस्यवापतिर्भविष्यति अतएवमहापद्मइत्यपितस्यनाम ९ एकमेवछत्रंयस्यांतांपृथिवींशासिष्यतिपालयिष्यतिक्षत्रांतस्तादृष्टांतः भार्ग

॥१०८

भा॰ द्वा॰ १ ॥श्रीगणेशाय नमः जयंति श्रीपरानंदकृपापांगलसद्दृशः या नित्यमनुवर्त्तंते संपदो विगताऽदृशः १ उक्त
स्त्रयोदशाध्यायैर्द्वादशे त्वाश्रयः सतः अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरः सतः २ उक्तो लयावधि
त्वेन प्राकृतान्यतिके लये अधिष्ठानतया चेक्तो महापुरुषवर्णने ३ तत्रादौ षड्भिरध्यायैः शुकः प्राह परी
क्षिते शेषैस्तत्राखिलान्याह सूतः एष्ठो यस त्रिभिः ४ स्वाश्रयश्रवणे कार्यो नविलं वो मनीषिणाः इत्ये
तत्कालवैषम्यं चतुर्भिस्तावदुच्यते ५ तत्र तु प्रथमे भाविमागधान्वयभूमिपान् कलिप्रभावतः प्राह संक
रादिमलीमसान् ६ एवंभूते सोमवंशे मुकुंदस्वैरक्रीडा वर्णिता व्यासपुत्रैः वंशो

**श्रीगणेशाय नमः परीक्षित उवाच स्वधामानुगते कृष्णे य**
**दुवंशविभूषणे कस्य वंशोऽभवत्पृथ्व्यामेतदाचक्ष्व मे मुने १**

भावी वर्ण्यते कृष्णभक्तिमुक्त्वासुकैवर्त्मनास्तीति वक्तुं १ तदेवं वैवस्वतमनुवंशे सोमवंशप्रस
त्वेन श्रीकृष्णावतारचरितानि सप्रपंच मनु वर्णितानि अथेदानीं भावि सोवंशः कलौ
विजातीयसंकरादिमलीमसो वैराग्यद्वारा श्रीकृष्णैकभक्ति निगमनायानुवर्ण्यते॥
तत्र तु सोमवंशशाखासु चिरकालानुवर्त्तितया मागधवंशोनुक्रम्यते तत्र पूरोर्वंशे उपरिचरो वसुस्तस्य बृहद्र
थः तस्य जरासंधः तस्य सहदेवः पुत्रो भूदित्युक्तं नवमस्कंधे तत्रैव सहदेवान्मार्जारिस्ततः श्रुतश्रवाः इत्यादि
॥योरिपुंजया ताविंशतिर्भाविनो राजानो निरूपिताः ॥१॥६॥

राम १

तत्रराजाएच्छति· इदानींतदुपरितनंवंशंसंकरादिदोषैः प्रपंचयति योंत्यइति रिपुंजयएवपुरंजयः स्वामिनंपुरंजयंहत्वा
स्वपुत्रंप्रद्योतसंज्ञंराजानंकरिष्यति तस्यपालकोनामसुतोभविष्यति २ प्रद्योतनाः प्रद्योतसंज्ञाः ३ ४ ५ ६ ७ ८ नंदोना

श्रीशुकउवाच योऽंत्यः पुरंजयोनामभाव्योवार्हद्रथोनृपः तस्यामात्यस्तुशुनकोह
त्वास्वामिनमात्मजं २ प्रद्योतसंज्ञंराजानंकर्त्तायत्पालकः सुतः विशाखयूपस्त
त्पुत्रोभविताराजकस्ततः ३ नंदिवर्द्धनस्तत्पुत्रः पंचप्रद्योतनाइमे अष्टत्रिंशोत्तरश
तंभोक्ष्यंतिपृथिवींनृपाः ४ शिशुनागस्ततोभाव्यः काकवर्णस्तुतत्सुतः क्षेमधर्मतस्य
सुतःक्षेत्रज्ञःक्षेमधर्मजः ५ विधिसारःसुतस्तस्याजातशत्रुर्भविष्यति दर्भकस्तत्सु
तोभावीदर्भकस्याजयःस्मृतः ६ नंदिवर्द्धनआजेयोमहानंदिःसुतस्ततः शिशुनागाद
शैवैतेषष्ठ्युत्तरशतत्रयम् ७ समाभोक्ष्यंतिपृथिवींकुरुश्रेष्ठकलौनृपाः महानंदिसु
तोराजन्शूद्रीगर्भोद्भवोबली ८ महापद्मपतिःकश्चिन्नंदःक्षत्रविनाशकृत् ततोनृपा
भविष्यंतिशूद्रप्रायास्त्वधार्मिकाः ९ सएकच्छत्रांपृथिवीमनुल्लंघितशासनः शा
सिष्यतिमहापद्मोद्वितीयइवभार्गवः १० ॥ऽ

मकश्चिन्महापद्मसंख्यायाः सेनायाः धनस्यवापतिर्भवि
ष्यति अतएवमहापद्मइत्यपितस्यनाम ९ एकमेवछत्रंयस्यांतांपृथिवींशासिष्यतिपालयिष्यतिक्षत्रोत्सादनदृष्टांतःभार्गवं

भा०द्वा० २

समाः संवत्सरान् ११ नवनंदान् नंदं च तत्पुत्रांश्चान्येवं नव प्रपन्नान् शरणागतान् विश्वस्तान् विख्यातान् वा द्विजः कौटिल्यवात्स्यायनादिपर्यायश्चाणक्य उद्धरिष्यति उन्मूलयिष्यति मौर्याः मौर्यसंज्ञाः १२ कथं भोक्ष्यंति तदाह स एवेति चं

तस्य चाष्टौ भविष्यंति सुमाल्यप्रमुखाः सुताः य इमां भोक्ष्यंति महीं राजानः स्म शतं समाः ११ नवनंदान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति तेषामभावे जगतीं मौर्या भोक्ष्यंति वै कलौ १२ स एव चंद्रगुप्तं वै द्विजो राज्येभिषेक्ष्यति तत्सुतो वारिसारस्तु ततश्चाशोकवर्द्धनः १३ सुयशा भविता तस्य संगतः सुयशः सुतः शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति १४ शतधन्वा ततस्तस्य भविता तद्बृहद्रथः मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरं समा भोक्ष्यंति पृथिवीं कलौ कुरुकुलोद्वह १५ अग्निमित्रस्ततस्तस्मात् सुज्येष्ठो भविष्यति वसुमित्रो भद्रकश्च पुलिंदो भविता सुतः १६ ततो घोषः सुतस्तस्मात् वज्रमित्रो भविष्यति ततो भागवतस्तस्मात् देवभूतिरिति श्रुतः १७ शुंगा दशैते भोक्ष्यंति भूमिं वर्षशताधिकं ततः काण्वानियं भूमिर्यास्यत्यल्पगुणान् नृप १८ ऽऽ

द्रगुप्तं मौर्यप्रथमं १३ १४ तेषां प्रथमो दशरथः पराशरादिभिरुक्तोऽत्राप्यनुसंधेयस्तेन सह मौर्या दश सप्तत्रिंशच्छतोत्तरं सप्तत्रिंशदुत्तरं शतं समा १५ १६ १७ बृहद्रथस्य सेनापतिः पुष्यमित्रो नाम स्वामिनं हत्वा राज्यं करिष्यति स च शुंगानां प्रथमः ततोग्निमित्रादयोऽन्वेवं शुंगाः द

कथंकाण्वान्यास्यंति तदाह शुंगमिति परस्त्रीकामिनंदेवभूमिनामानंशुंगंहत्वातदमात्योवसुदेवनामाकण्वोराज्यंक
रिष्यति १९ काण्वानांचतुर्थः सुशर्माइमेवसुदेवादयः काण्वायनाः वर्षाणांत्रीणिशतानिपंचचत्वारिंशद्वर्षाणिचभूमिं

शुंगंहत्वादेवभूतिंकण्वोऽमात्यस्तुकामिनं स्वयंकरिष्यतेराज्यंवसुदेवोमहामतिः
१९ तस्यपुत्रस्तुभूमित्रस्तस्यनारायणः सुतः काण्वायनाइमेभूमिंचत्वारिंशच्चपंच
च शतानित्रीणिभोक्ष्यंतिवर्षाणांचकलौयुगे २० हत्वाकाण्वंसुशर्माणंतद्भृत्योवृ
षलोवली गांभोक्ष्यत्यंध्रजातीयः कंचित्कालमसत्तमः २१ कृष्णनामाथतद्भ्राता
भविताप्टथिवीपतिः श्रीशांतकर्णस्तत्पुत्रः पौर्णमासस्तुतत्सुतः २२ लंबोदरस्तुतत्पु
त्रस्तस्माच्चिविलकोनृपः मेघस्वातिश्चिविकलादटमानस्तुतस्यच २३ अनिष्टकर्म्मा
हालेयस्तलकस्तस्यचात्मजः पुरीषभीरुस्तत्पुत्रस्ततोराजासुनंदनः २४ चकोरोनव
मोपत्रशिवस्वातिररिंदम तस्यापिगोमतीपुत्रः पुरीमान्भविताततः २५ मेदशिराः
शिवस्कंदोयज्ञश्रीस्तत्सुतस्ततः विजयस्तत्सुतोभाव्यश्चंद्रविज्ञः सलोमधिः २६ ए
तेत्रिंशन्नृपतयश्चत्वार्यब्दशतानिच षट्पंचाशच्चपृथिवींभोक्ष्यंतिकुरुनंदन २७

भोक्ष्यंति २० काण्वानामंतिमंसुशर्माणंहत्वावलीनामातद्भृत्योगांभोक्ष्यति २१।२२।२३।२४ यत्रेयपुवहुसंज्ञेषुत्र्यष्टसुनवमः

भा॰ द्वा॰ १ ३ आवभृत्याः अवभृतिर्नगरी तद्राजानः २८।२९ एते आभीरादयो मौनव्यतिरिक्ताः पंचषष्टिनृपा एकोनशताधिकं वर्षस
हस्रं पृथिवीं भोक्ष्यंति ततः पूर्वोक्ता एवैकादश मौनाः ३० त्रीण्यब्दशतानि क्षितिं भोक्ष्यंति तैः संस्थिते तेषु मौनेषु मृतेषु
किलिकिलायां पुर्यां नृपतयो भविष्यंतीत्युत्तरेणान्वयः ३१ अधिकानि च षड्वर्षाणि ३२ तेषां भूतनंदादीनां यथाप्य

सप्ताभीरा आवभृत्या दशगर्द्दभिनो नृपाः कंकाः षोडशभूपाला भविष्यंति चलो
लुपाः २८ ततोष्टौ यवना भाव्याश्चतुर्द्दश च पुष्कसाः भूयो दश गुरुंडाश्च मौना एका
दशैव तु २९ एते भोक्ष्यंति पृथिवीं दशवर्षशतानि च नवाधिकां च नवतिं मौना ए
कादश क्षितिं ३० भोक्ष्यंत्यब्दशतान्यंग त्रीणि तैः संस्थिते ततः किलिकिलायां नृ
पतयो भूतनंदोथ वंगिरिः ३१ शिशुनंदिश्च तद्भ्राता यशोनंदिः प्रवीरकः इत्येते वै
वर्षशतं भविष्यंत्यधिकानि षट् ३२ तेषां त्रयोदश सुता भवितारश्च वाल्हिकाः पु
ष्यमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ३३ एककाला इमे भूपाः सप्तांध्राः सप्त
कौशलाः वैदूरपतयो भाव्या नैषधास्तत एव हि ३४

ऽऽ एवं वाल्हिकास्तन्नामानस्त्रयोदश सु
ताः भविष्यंति अथ पुष्यमित्रो नामा ऽन्यो राजन्यः अस्य च दुर्मित्रो नाम पुत्रः ३३ तथा आंध्राः कौशलाः वैदूरपतयः नि
षधाश्च एते च तत्तद्देशनामभिः प्रख्याताः तुल्यकालाः खंडमंडलेषु भूपाः ततः एतेभ्यो वाल्हिकेभ्य एव भाव्या भविष्यंति

ततश्चमागधानांतुराजाविश्वस्फूर्जिर्नामभविता सचपूर्वोक्तात्पुरंजयात्परः पुरंजयइतिप्रसिद्धः सन्वर्णान्ब्राह्मणादीन्पुलिंदयदुमद्रकसंज्ञान्म्लेच्छप्रायान्करिष्यति अपरानितिपाठेअन्यान्पुलिंदादिसंज्ञान्वर्णान्करिष्यतीत्यर्थः ३५ सचरस्वबलत्वात्अब्रह्मभूयिष्ठाः अत्रैववर्ण्यप्रचुराः सतीः प्रजाः स्थापयिष्यतिपालयिष्यति सचपद्मव

मागधानांतुभविताविश्वस्फूर्जिः पुरंजयः करिष्यत्यपरोवर्णान्पुलिंदयदुमद्रकान् ३५ प्रजाश्चाब्रह्मभूयिष्ठाःस्थापयिष्यतिदुर्मतिः वीर्यवान्क्षत्रमुत्साद्यपद्मवत्यांसवैपुरि अनुगंगामाप्रयागंगुप्तांभोक्ष्यतिमेदिनी ३६ सौराष्ट्रावंत्याभीराश्चशूद्राअर्बुदमालवाः व्रात्याद्विजाभविष्यंतिशूद्रप्रायाजनाधिपाः ३७ सिंधोस्तटंचंद्रभागांकौंतीकाश्मीरमंडलं भोक्ष्यंतिशूद्राव्रात्याद्याम्लेच्छाश्चाऽब्रह्मवर्चसः ३८ तुल्यकालाइमेराजन्म्लेच्छप्रायाश्चभूभृतः एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ३९ स्त्रीबालगोद्विजघ्नाश्चपरदारधनादृताः उदितास्तमितप्रायाः अल्पसत्वाल्पकायुषः ४०

त्यांपुरि अनुगंगांगंगाद्वारमारभ्यप्रयागपर्यंतंगुप्तांपालितांमेदिनींभोक्ष्यति ३६ तदनंतरंचसौराष्ट्रादिदेशवर्तिनोद्विजाः व्रात्याउपनयनरहिताभविष्यंति ३७ अब्रह्मवर्चसःवेदाचारशून्याः ३८ इमेचम्लेच्छप्रायाभूभृतः तुल्यकालाभविष्यंति किंच एतेसर्वेअधर्मानृतपराः अधर्मेअनृतेचपरिनिष्ठिताः फल्गुदाः अल्पदातारः ३९ उदितास्तमि

भा॰ द्वा॰
४

असंस्कृताः गर्भाधानादिसंस्काररहिताः प्रजाः भक्षयिष्यंति धनाद्यपहारादिना पीडयिष्यंति ४१ किंच तन्नाथाः तेनाथायेषांते जनपदाः देशवर्तिनो मनुष्याः तच्छीलाचारवादिनः तेषामिव शीलमाचारोवादश्चतद्वंतः ४२ ॥इ
ति श्रीभागवते महापुराणे द्वादशस्कंधे टीकायां प्रथमोध्यायः १ द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः अधर्मिष्ठ
जनेनष्टे पुनः कृतयुगागमः १ कलिधर्मान्प्रपंचयति ततश्चेत्यादिना १ धर्मन्याययोर्व्यवस्थायां बलमेव २ दांप

असंस्कृताः क्रियाहीना रजसा तमसावृताः प्रजास्ते भक्षयिष्यंति म्लेच्छा राजन्यरूपिणः
४१ तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः अन्योन्यतो राजतश्च क्षयं यास्यंति पी
डिताः ४२ इति श्रीभागवते महापुराणे द्वादशस्कंधे प्रथमोध्यायः १ श्रीशुक उवाच त
तश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया कालेन बलिना राजन्नंक्ष्यत्यायुर्बलं स्मृतिः १ वि
त्तमेव कलौ नॄणां जन्माचारगुणोदयः धर्मन्यायव्यवस्थायां कारणं बलमेव हि २ दां
पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ३ लिं
गमेवाश्रमख्यातावन्योन्यापत्तिकारणं अवृत्त्या न्यायदौर्बल्यं पांडित्ये चापलं वचः ॥४॥

त्ये भार्यापतिभावे अभिरुचिरेव हेतुः न कुलगोत्रादिः व्यावहारिके क्रयविक्रयादौ स्त्रीत्वे पुंस्त्वे च तयोः श्रेष्ठे रतिकौशल
मेव हेतुर्न कुलमाचारो वा ३ आश्रमाणां ख्यातौ ज्ञाने लिंगमेव दंडाजिनादिकं हेतुर्न त्वाचारविशेषः अन्योन्यापत्तिकारणं च
आश्रमादाश्रमांतरप्राप्तौ च कारणं यद्वा वहूदकहंसादीनामन्योन्यापत्तौ नमस्कारादिव्यवहारे कारणं अवृत्त्या सुवर्णार्पणादि

असाधुत्वेचौर्याद्यभियोगेप्रसाधनंअलंकारः ५ दूरेवर्त्तमानंवार्ययनंजलाशयस्तीर्थमतुगुर्वादिस्वार्थः पुरुषार्थः ६
१८ आच्छिन्नाअपहृतदाराद्रविणानिचयासांताः अस्थिवीजं ९ १० ११ क्षीयमाणेष्वित्यादीनांइत्थंकलौगतप्रायइ

अनाढ्यतैवाऽसाधुत्वेसाधुत्वेदंभएवतु स्वीकारएवचोद्वाहेस्नानमेवप्रसाधनं ५ दूरे
वार्ययनंतीर्थंलावण्येकेशधारणं उदरंभरतास्वार्थः सत्यत्वेधार्ष्ट्यमेवहि ६ दाक्ष्यंकु
टुंवभरणंयशोर्थेधर्मसेवनं एवंप्रजाभिर्दुष्टाभिराकीर्णेक्षितिमंडले ७ ब्रह्मविट्
क्षत्रशूद्राणांयोवलीभवितानृपः प्रजाहिलुब्धैराजन्यैर्निर्घृणैर्दस्युधर्मभिः ८ आ
च्छिन्नदारद्रविणायास्यंतिगिरिकाननं शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः ९
अनावृष्ट्याविनंक्ष्यंतिदुर्भिक्षकरपीडिताः शीतवातातपप्रावृड्हिमैरन्योऽन्यतः प्रजाः १०
क्षुत्तृड्भ्यांव्याधिभिश्चैवसंतापेनचचिंतया त्रिंशद्विंशतिवर्षाणिपरमायुः कलौनृणां ११
क्षीयमाणेषुदेहेषुदेहिनांकलिदोषतः वर्णाश्रमवतांधर्मेनष्टेवेदपथेनृणां १२ पाखं
डप्रचुरेधर्मेदस्युप्रायेषुराजसु चौर्यानृतवृथाहिंसानानावृत्तिषुवैनृषु १३ शूद्रप्रा
येषुवर्णेषुछागप्रायासुधेनुषु गृहप्रायेष्वाश्रमेषुयौनप्रायेषुवंधुषु १४ इतिपंचमेनान्वयः क्षी
यमाणेषुअल्पप्रायेषु १२ दस्युप्रायेषुचौर्यतुल्येषुचौर्यानृतवृथाहिंसाद्यानानावृत्तयोयेषांतेषु १३ छागप्रायासुप्रमाणाः

॥४८

२
भा०द्वा० स्थास्नुषुवृक्षेषु विद्युत्प्रायेषुतडिद्बहुलेषु शून्यप्रायेषुधर्मादिरहितेषुसद्मसुगृहेषु १५ जनेषुखरधर्मिणिदुः
५ सहचेष्टितेकलौगतप्रायेसमाप्तप्राये १६ एतत्प्रपंचयतिचतुर्भिः चराचरगुरोः ईश्वरस्यैवधर्मत्राणेहेतुः गुरुत्वे
श्वरत्वयोरुपपादनंअखिलस्यविश्वस्यात्मनः कारणस्येति एवंभूतस्यविष्णोर्जन्मसाधूनांधर्मत्राणायधर्मत्राणप्र
योजनमाह कर्मापनुत्तयेमोक्षाय १७ शंभलग्राममुख्यस्यप्रधानस्यनाम्नाविष्णुयशसोब्राह्मणस्यभवनेगृहे १८

अणुप्रायास्वोषधीषुशमीप्रायेषुस्थास्नुषु विद्युत्प्रायेषुमेघेषुशून्यप्रायेषुसद्मसु १५
इत्थंकलौगतप्रायेजनेषुखरधर्मिणि धर्मत्राणायसत्त्वेनभगवानवतरिष्यति १६ च
राचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः धर्मत्राणायसाधूनांजन्मकर्मापनुत्तये १७ शं
भलग्राममुख्यस्यब्राह्मणस्यमहात्मनः भवनेविष्णुयशसः कल्किः प्रादुर्भविष्यति
१८ अश्वमाशुगमारुह्यदेवदत्तंजगत्पतिः असिनाऽसाधुदमनंअष्टैश्वर्यगुणान्वि
तः १९ विचरन्नाशुनाक्षोण्यांहयेनाप्रतिमद्युतिः नृपलिंगच्छदोदस्यून्कोटिशोनिह

धर्मत्राणप्रकारमाह अश्वमिति असाधवोदम्यंतेयेनतमश्वमारुह्यासिनादस्यून्कोटिशोनिहनिष्यति २०
निष्यतीत्युत्तरेणान्वयः असाधुदमन इति पाठे कल्किविशेषणं १९ तत्प्रपंचः आशुनाशीघ्रगामिनातेनहयेन
अश्वेनक्षोण्यांपृथिव्यांविचरन् अणिमाद्यष्टैश्वर्याणिगुणाश्चसत्यसंकल्पादयः तैरन्वितः नृपलिंगच्छदः राजवेषा

ततश्च पुनः कृतयुगप्रवृत्तिं वक्तुमाह अथेति सार्द्धाभ्यां तेषां पौरजानपदानां मनांसि विशदानि भविष्यंति तत्र हेतुः वासुदेवस्यांग
रागेण चंदनादिना ऽतिपुण्यगंधो ऽनिलस्तं स्पृशंतीति तथा तेषां २१ स्थविष्ठः स्थूलः २२ कृतयुगप्रवृत्तिमाह यदाऽवतीर्ण इति प्र
जानां सूतिः प्रसूतिः २३ तदवतारकालोपलक्षणमाह यदा चंद्रश्चेति तिष्यः पुष्यः अयमर्थः चंद्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रे
योगः तदा तत्कृतयुगं भविष्यतीति यद्यपि च प्रतिद्वादशाब्दं कर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्य

अथ तेषां भविष्यंति मनांसि विशदानि वै वासुदेवांगरागातिपुण्यगंधानिलस्पृशां पौरजान
पदानां वै हतेष्वऽखिलदस्युषु २१ तेषां प्रजाविसर्गश्च स्थविष्ठः संभविष्यति वासुदेवे भगवति
सत्वमूर्तौ हृदि स्थिते २२ यदावतीर्णो भगवान्कल्किर्धर्मपतिर्हरिः कृतं भविष्यति तदा प्रजासू
तिश्च सात्विकी २३ यदा चंद्रश्च सूर्यश्च तथा तिष्यबृहस्पती एकराशौ समेष्यंति तदा भवति तत्कृ
तं २४ ये ऽतीता वर्तमाना ये भविष्यंति च पार्थिवाः ते त उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः २५
आरभ्य भवतो जन्म यावन्नंदाभिषेचनं एतद्वर्षसहस्रं तु शतं पंचदशोत्तरं २६

ऽऽ योगः संभवति तथाऽपि
तेषां सह प्रवेशोऽत्र विवक्षितः समेष्यंतीति वचनात् अतो नातिप्रसंगः २४ एवं नवमस्कंधमारभ्यानुक्रांतं वैवस्वतमनोर्वंशद्वयं निग
मयति ये ऽतीता इति उद्देशतः संक्षेपतः २५ कलियुगावांतरविशेषं वक्तुमाह आरभ्येत्यादिना वर्षसहस्रं पंचदशोत्तरं शतं चेति
कयापि विवक्षया ऽवांतरसंख्येयं वस्तुतः परीक्षिन्नंदयोरंतरं द्वाभ्यां न्यूनं वर्षाणां सार्द्धसहस्रं भवति यतः परीक्षित्समकालं मागधं
मार्जारिमारभ्य रिपुंजयांता विंशतिराजानः सहस्रसंवत्सरं भोक्ष्यंतीत्युक्तं नवमस्कंधे ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरमिति

भा०द्वा०
९६

कलेः प्रवृत्तिं वृद्धिं च निरूपयितुं कालज्ञानोपलक्षणमाह सप्तर्षीणां त्विति त्रयं मर्थः प्रागग्रशकटाकारं तारासेत्तं (?) सप्तर्षिमंडलं तत्र किंचिदुन्नतं तेषां स्थानीयो मरीचिः ततः पश्चादानम्रयुगकंधराकारो वसिष्ठः सभार्यः ततः पश्चादीषदुन्नतं तयामूलस्थानीयोंगिराः ततः पश्चाच्चतुरस्रतारा चतुष्के ईशाने त्रिः ततो दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहस्तत उत्तरतः क्रतुः एवं स्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसंज्ञौ तयोस्तु मध्येन यो स्तु पूर्वयोस्तु मध्ये यत्समं दक्षिणतः समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते २७ तेन तथैव युक्ता नृणामब्दशतं तिष्ठं

सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि २७ तेनैव ऋषयो युक्तास्तिष्ठंत्यब्दशतं नृणां ते त्वदीये द्विजाः काल अधुना चाश्रिता मघाः २८ विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः तदाविशत्कलिर्लोकं पापे यद्रमते जनः २९ यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः तावत्कलिर्वै पृथिवीं पराक्रांतुं न चाशकत् ३० यदा देवर्षयः सप्त मघासु विचरंति हि तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ३१॥

ति च द्विजास्त्वदीये कालेऽधुना मघा आश्रिता वर्तंते २८ यदा विष्णोर्भानुः भातीति भानुः शुद्धसत्वात्मको देहः क्षितेर्वैकुंठंगतः तदा कलियुगमविशत् यत्र यस्मिन्युगे जनः पापे रमत इति कलियुगस्य लक्षणं २९ ननु श्रीकृष्णे पृथिव्यां वर्तमानेऽपि संध्यारूपेण कलिः प्रविष्ट एवासीत् सत्यं तथापि तावत्तस्य पराक्रमो नाभवदित्याह यावदिति पराक्रांतुं अभिभवितुं ३० अतोऽयं सएव कलिप्रवेशकाल इत्याह यदा देवर्षय इति द्वादशाब्दशतात्मक इति दिव्येन मानेन संध्यांशाभ्यां सह योद्वाद॥

कलेः प्रवेशकालमुक्त्वा तस्य वृद्धिकालमाह यदेति तदा प्रद्योतनात्प्रभृति वृद्धिं गच्छन्नंदात्प्रभृत्यपि वृद्धिं गमिष्य तीत्यर्थः ननु यदा कलेर्लिंगमुपलब्धं तदैव प्रविष्ट इति युक्तं ततः पूर्वमेव प्रवेशः ततः परं वृद्धिरित्यत्र किं प्रमाणं तत्राह यस्मिन्निति प्रतिपन्नं प्रविष्टमिति ज्ञात पुराविदः पूर्वज्ञातारः ३३ कलेरनंतरं कृतयुगप्रवेशमाह दिव्याब्दानामिति च तुर्थे कलौ प्रवेशनाब्दपरिमितेनांशेनापि सहातीते सतीत्यर्थः कृतयुगप्रवेशचिह्नमाह यदा नृणा

यदा मघाभ्यो यास्यंति पूर्वाषाढां महर्षयः तदा नंदात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ३२ यस्मिन्कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ३३ दिव्याब्दानां सहस्रांते चतुर्थे तु पुनः कृते भविष्यति यदा नृणां मन आत्मप्रकाशकं ३४ इत्ये ष मानवो वंशो यथा संख्यायते भुवि तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगे युगे ३५ एतेषां नामलिंगानां पुरुषाणां महात्मनां कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ३६ देवा पिः शंतनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः कलापग्राम आसाते महायोगबलान्वितौ ३७ ॥

मन आत्मप्रकाशकं भविष्यति तदेति ३४ राजवंशोक्तां स्थितिं ब्राह्मणादिवंशेष्वप्यतिदिशति इत्येष इति यथा याभिरुच्च नीचावस्थाभिः तास्ता अवस्थाः वंशा इति वा पाठः ३५ एतत्कीर्तनस्य वैराग्योपयोगितामाह एतेषामिति नामैव लिंगं ज्ञा पकं येषां तेषां कथामात्रेणैवावशिष्टानां कीर्तिरेव स्थिता न तु राज्यपुत्रादयो वा ३६ कलावुत्सन्नानां राजवंशानां पुनः प्रव र्तकारमाह देवापिः सोमवंशजः मरुस्तु सूर्यवंशजः कलापग्रामो नाम योगिनामावासः प्रसिद्धः ॥ ३७ ॥ ६ ॥

३८ इममेवप्रकारंप्रतिचतुर्युगंदर्शयति कृतमिति॥ ३९ एतेषांनामलिंगानामित्यादियदुक्तंतत्रपंचयतिराजन्निति पंचभिः
४० ममत्वंकृत्वेत्यनेनसूचितांभूतद्रोहप्रवृत्तिंनिंदतिकृमीति राजनाम्नः संज्ञितिनामयस्यतस्यापिदेहस्यांतेकृमिर्वेति
शभस्मेतिवासंज्ञाभविष्यतितत् कृतेतस्यार्थेयोभूतध्रुक् भूतेभ्योद्रुह्यतिसकिंस्वार्थंवेदकुतइत्यपेक्षायांहेतुत्वेनभूतद्रोहंविशिनष्टि य

ताविहेत्यकलेरंतेवासुदेवानुशिक्षितौ वर्णाश्रमयुतंधर्मंपूर्ववत्प्रथयिष्यतः ३८ कृतंत्रे
ताद्वापरंचकलिश्चेतिचतुर्युगे अनेनक्रमयोगेनभुविप्राणिषुवर्त्तते ३९ राजन्नेतेमया
प्रोक्तानरदेवास्तथाऽपरे भूमौममत्वंकृत्वांतेहित्वेमांनिधनंगताः ४० कृमिविड्भस्मसं
ज्ञांतेराजनाम्नोऽपियस्यच भूतध्रुक्तत्कृतेस्वार्थंकिंवेदनिरयोयतः ४१ कथंसेयमखं
डाभूःपूर्वैर्मेपुरुषैर्धृता मत्पुत्रस्यचपौत्रस्यमत्पूर्वावंशजस्यच ४२ तेजोऽबन्नमयंकायं
गृहीत्वात्मतयाऽबुधाः महीममतयाचोभौहित्वांतेदर्शनंगताः ४३ येयेभूपतयोराजन्
भुंजंतिवसुमोजसा कालेनतेकृताःसर्वेकथामात्राःकथासुच ४४ इतिश्रीभागवतेम
हापुराणेद्वादशेवंशानुकीर्तनंनामद्वितीयोध्यायः २ श्रीशुकउवाच तोभूतद्रोहान्निरयोभवति ४१
ममत्वप्रकारंप्रपंचयति कथमितिसेयमखंडाभूर्मेपूर्वजैःपुरुषैर्धृतासतीइदानींमत्पूर्वाचसतीमत्पुत्रादेः कथंस्यादि
त्येवं ४२ उभौमहिंकायंच अदर्शनंमृत्युं ४३ उपसंहरति येयेइतितेसर्वेचकथासुक्रियमाणासुकथामात्राःकाले
नकृताः ४४ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांद्वितीयोऽध्यायः ॥२॥ ६॥ ॥ ६ ॥

तृतीये भूमिगीतैश्च राज्यदोषादि वर्ण्यते कलौ च दोषभूयिष्ठे दोषहंत्री हरेर्नुतिः १ देहे हंतां भूमौ च ममतां कुर्वंत्यतो ऽबुधा इत्युक्तं तदेव भूमिगीतैः प्रपंचयति दृष्ट्वेत्यादिना आत्मनि पृथिव्यां जये व्यग्रान् उद्युक्तान् हासप्रकारमेवाह अहो इति १ येन कामेन फेनोपमे पिंडे देहे विश्रंभिताः विश्वासं नीता येन तेषां नरेंद्राणां स एष कामो मोघ एव स्यात् २ काममेव दर्शयति द्वाभ्यां पूर्वमिति इंद्रियार्थलंपटस्य न राज्यप्राप्तिः स्यादिति प्रथममिंद्रियषड्वर्गं निर्जित्य राजमंत्रिणो जेष्यामः वशी

दृष्ट्वात्मनि जये व्यग्रान्नृपान्हसति भूरियं अहो मां विजिगीषंति मृत्योः क्रीडनका नृपाः १ काम एष नरेंद्राणां मोघः स्याद्विदुषामपि येन फेनोपमे पिंडे ये ऽतिविश्रंभिता नृपाः २ पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमंत्रिणः ततः सचिवपौराप्तकरींद्रानस्य कंटकान् ३ एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलां इत्याशाबद्धहृदया न पश्यंत्यंतिके ऽंतकं ४ समुद्रावरणां जित्वा मां विशंत्यब्धिमोजसा कियदात्मजयस्यैतन्मुक्तिरात्मजये फलं ५ यां विसृज्यैवमनवस्तत्सुताश्च कुरूद्वह गता यथागतं युद्धे तां मां जेष्यंत्यबुद्धयः ६ ॥ ६ ॥ ६ ॥

करिष्यामः सचिवाश्च अमात्याः करींद्रा हस्तिपाः तांश्च जेष्यामः कंटकान् प्रतिपक्षान् अस्य अपास्य अथ कंटकानिति वा पाठः ३ इति एवं केचिदाशाबद्धहृदयाः ४ एवं केचित्पुनर्मां जित्वाप्यतितृष्णया अब्धिं विशंति तदेवाह इंद्रियजयेन यद्राज्यं साधयितुमिच्छंति तितः निमंदा इत्याह कियदिति ५ अतः अंतकं न पश्यंतीत्युक्तं तदेवाह यामिति कुरूद्वहेति भूमिगीतं कथयन् शुकः संबोधयति कुलोद्वह इति तु पाठः सुगमः ६ ॥

भा॰टी॰ अबुद्धयस्तु तन्नत्प्रपंचयति मत्कृतइति ७ ८ रामोनामकश्चिद्राजायद्वालोकदृष्टादाशरथिरेवनिर्दिष्टः ९।१०। लोकंरावयतिरोदयतीतिलोकरावणः ११।१२॥ मयिउच्चैर्ममतां कृत्वायेऽवर्त्तंततेकालेनकथाऽवशेषाः कृताःवि

मत्कृते पितृपुत्राणांभ्रातॄणांचापिविग्रहः जायतेह्यसतांराज्येममताबद्धचेतसां ७ ममैवेयंमहीकृत्स्नानतेमूढेतिवादिनः स्पर्द्धमानामिथोघ्नंतिम्रियंतेमत्कृतेनृपाः ८॥ पृथुः पुरूरवागाधिर्नहुषोभरतोऽर्जुनः मांधातासगरोरामः खट्वांगोधुंधुहारघुः ९ तृणविंदुर्ययातिश्चशर्यातिः शंतनुर्गयः भगीरथः कुवलयाश्वः ककुत्स्थोनैषधोनृगः १० हिरण्यकशिपुर्वृत्रोरावणोलोकरावणः नमुचिः शंवरोभौमोहिरण्याक्षोऽथतारकः ११ अन्येचबहवोदैत्याराजानोयेमहेश्वराः सर्वेसर्वविदः शूराः सर्वेसर्वजितोऽजिताः १२ ममतांमय्यवर्त्तंतकृत्वोच्चैर्मर्त्यधर्मिणः कथावशेषाः कालेनह्यकृतार्थाः कृताविभो १३ कथाइमास्तेकथितामहीयसांवितायलोकेषुयशः परेयुषां विज्ञानवैराग्यविवक्षयाविभोवचोविभूतीर्नतुपारमार्थ्यं १४ यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममंगलघ्नः तमेवनित्यंशृणुयादभीक्ष्णंकृष्णेऽमलांभक्तिमभीप्समानः १५॥ऽऽ

भोइतिसंबोधनंकुरूद्वहेतिवत १३ राजवंशानुकथनस्यतात्पर्यमाह कथाइमाइति विज्ञानंविषयासारताज्ञानंततोवैराग्यंतयोर्विवक्षया परेयुषांमृतानां वचोविभूतीः वाग्विलासमात्ररूपाः नतुपारमार्थ्यंपरमार्थयुक्तंकथनंनभवतीत्यर्थः १५ कस्तर्हिपुरुषाणामुपादेयः परमार्थः त

कलिदोषोपचये सति भक्तेरसंभवं मन्यमानः पृच्छति केनोपायेनेति विधमिष्यंति नाशयिष्यंति यथा यथावत् १६ कलियुगकः परो धर्म इति वुभुत्सया पृच्छति युगानीति ब्रूहीत्यनुषंगः आत्यंतिकजिज्ञासया पुनः पृच्छति प्रलयकल्पयोः संहारस्थितिकालयोः नचायं वहिर्मुखः प्रश्न इत्याह कालस्येति १७ तत्र युगधर्मांस्तावदाह कृतइति तज्जैस्तत्कालीनैर्जनैः दानं अरागद्वेषतया अभयदानं तदेव प्रथमस्कंधे शौचशब्देनोक्तं विभोः संपूर्णस्य धर्मस्य १८ तदानींतनजनानाह सं

राजोवाच केनोपायेन भगवन्कलेर्दोषान्कलौ जनाः विधमिष्यंत्युपचितांस्तन्मे ब्रूहि यथा मुने १६ युगानि युगधर्मांश्च मानं प्रलयकल्पयोः कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः १७ शुक उवाच कृते प्रवर्तते धर्मश्चतुष्पात्तज्जनैर्धृतः सत्यं दया तपो दानमिति पादा विभोर्नृप १८ संतुष्टाः करुणा मैत्राः शांता दांतास्तितिक्षवः आत्मारामाः समदृशः प्रायशः श्रमणा जनाः १९ त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैः २० तदा क्रियातपोनिष्ठा नातिहिंस्रा न लंपटाः त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप २१ तपः सत्यदयादानेष्वर्द्धं ह्रसति द्वापरे ॥ ६ ॥

तुष्टा इति मैत्राः भूतमैत्रीयुक्ताः श्रमणाः आत्माभ्यासवंतः १९ ब्रह्मोत्तराः ब्राह्मणाधिकाः २१ ॥ अनृतेन सत्यं हिंसया दया असंतोषेण तपः विग्रहेण दानमिति यथासंख्यं योज्यं हिंसाऽतुष्ट्यनृतद्वेषैरित्ययं क्रमो न विवक्षितः धर्मस्यार्द्धं ह्रसति क्षीयते अधर्मस्य लक्षणैः ॥ ६ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

चिह्नैः पादैरित्यर्थः २२ यशस्विनः कीर्तिप्रियाः क्षत्रद्विजोत्तमाः क्षत्रियब्राह्मणप्रधानाः २३ कलौ धर्मपादानां तुर्यांशः शश्वत्तुर्यांशोऽवशिष्यते २४ शूद्रदासोत्तराः शूद्रकैवर्त्तादिप्रधानाः २५ युगानामेवंभूतवैषम्यकारणमाह सत्वमिति

हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याऽधर्मलक्षणैः २२ यशस्विनो महाशीलाः स्वाध्यायाध्ययने रताः आढ्याः कुटुंबिनो हृष्टा वर्णाः क्षत्रद्विजोत्तमाः २३ कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः एधमानैः क्षीयमाणो ह्यंते सोऽपि विनंक्ष्यति २४ तस्मिन्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः २५ सत्वं रजस्तम इति दृश्यंते पुरुषे गुणाः कालसंचोदितास्ते वै परिवर्त्तंत आत्मनि २६ प्रभवंति यदा सत्वे मनो बुद्धींद्रियाणि च तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः २७ यदा कर्मसु काम्येषु भक्तिर्यशसि देहिनां तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन् २८ यदा लोभस्त्वसंतोषो मानो दंभोऽथ मत्सरः कर्म्मणां चाऽपि काम्यानां द्वापरं तद्रजस्तमः २९ यदा मायाऽनृतं तंद्रा निद्रा हिंसा विषादनं शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ३० ॥

पंचभिः २६ मनश्च बुद्धिश्चेंद्रियाणि च सत्वे यदा प्रभवंति अतिशयेन वर्त्तंते २७ यदा कर्मादिषु भक्तिः प्रीतिस्तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि २८ काम्यानां कर्म्मणां विषये यदा प्रीतिस्तदा रजस्तमः प्रधानं द्वापरं जानीहि २९

कलिदोषान्प्रपंचयति यस्मादित्यादिना यस्मात्कलेर्हेतोः क्षुद्रदृशः मंदमतयः क्षुद्रभाग्याः अल्पभाग्याः महाशनाः
बह्वाहाराः वित्तहीना अपि कामिनश्च स्वैरिण्यः पुंश्चल्यः असतीः असत्यः ३१ दस्यवः उत्कृष्टाः प्रचुरा येषु ते ३२ अव्रता वि
हिताचारशून्याः अशौचाः शौचशून्याश्च वटवो ब्रह्मचारिणो भविष्यंति कुटुंबिनश्च गृहस्थाः स्वयं भिक्षाटनपरा भविष्यंति न तु
भिक्षां दास्यंति तपस्विनो वनस्थाः वनं हित्वा ग्रामवासा भविष्यंति न्यासिनो यतयः अतिधनादिलोलुपा भविष्यति ३३ पुनरपि।

यस्मात क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियो
ऽसतीः ३१ दस्यूत्कृष्टा जनपदा वेदाः पाखंडदूषिताः राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्वि
जाः ३२ अव्रता वटवोऽशौचा भिक्षवश्च कुटुंबिनः तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलु
पाः ३३ ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाह
साः ३४ पणयिष्यंति वै क्षुद्राः किरीटाः कूटकारिणः अनापद्यपि मंस्यंते वार्त्तां साधु जुगुप्सि
ताम् ३५ पतिं त्यक्ष्यंति निर्द्रव्यं भृत्या अप्यखिलोत्तमं भृत्यं विपन्नं पतयः कौलं गाश्चापयस्वि

स्त्रीणां स्वभावमाह ह्रस्वकाया इति कटुकभाषिण्यः अप्रियवादिन्यः चौर्यं च माया कपटं उरु च साहसं ऽऽ नीः ३६
यासां ताः ३४ किंच किरीटाः वणिजः पणयिष्यंति क्रयविक्रयादिव्यवहारं प्रवर्त्तयिष्यंति किंच सर्वे जनाः अनापद्य
पि जुगुप्सितां निंदितां वार्त्तां वृत्तिं साधु मंस्यंते ३५ सर्वोत्तममपि पतिं द्रव्यहीनं भृत्यास्त्यक्ष्यंति पतयश्च विपन्नं रोगादिभिर्व्या
पारासमं कौलं कुलपरंपरायातं त्यक्ष्यंति अपयस्विनीर्दुग्धदोहाः ३६ ॥ १ ॥ १ ॥

३
भा०द्वा०
१०

सौरतंसुरतनिमित्तंसौहृदंयेषांते अतएवननंदारोत्रभार्याभगिन्यःश्यालाःभार्याभ्रातरःतैःसंवादोमंत्रालोचनंयेषांतेन
नदुरितिवापाठः ३७ ३८ ३९ पिशाचसंदर्शाःपिशाचसदृशाः ४० काकिणिकेविंशतिवराटकमात्रेऽप्यर्थेविषयभूतेवि

पितृभ्रातृसुहृज्ज्ञातीन्हित्वासौरतसौहृदाः ननंदृश्यालसंवादादीनाःस्त्रैणाःकलौनराः
३७ शूद्राःप्रतिग्रहीष्यंतितपोवेषोपजीविनः धर्म्मंवक्ष्यंत्यधर्म्मज्ञाअधिरुह्योत्तमासनं
३८ नित्यमुद्विग्नमनसोदुर्भिक्षकरपीडिताः निरन्नेभूतलेराजन्ननावृष्टिभयातुराः ३९
वासोन्नपानशयनव्यवायस्नानभूषणैः हीनाःपिशाचसंदर्शाभविष्यंतिकलौप्रजाः ४०
कलौकाकिणिकेप्यर्थेविगृह्यत्यक्तसौहृदाः त्यक्ष्यंतिहिप्रियान्प्राणान्हनिष्यंतिस्व
कानपि ४१ नरक्षिष्यंतिमनुजाःस्थविरौपितरावपि पुत्रान्सर्वार्थकुशलान्क्षुद्राःशिश्नो
दरंभराः ४२ कलौनराजन्जगतांपरंगुरुंत्रैलोक्यनाथानतपादपंकजं प्रायेणमर्त्याभ
गवंतमच्युतंयक्ष्यंतिपाखंडविभिन्नचेतसः ४३ यन्नामधेयंम्रियमाणआतुरःपतन्स्ख
लन्वाविवशोगृणन्पुमान् विमुक्तकर्मार्गलउत्तमांगतिंप्राप्नोतियक्ष्यंतिनतंकलौजनाः ४४

गृह्यवैरंकृत्वा ४१ ४२ महांतमनर्थमाह द्वाभ्यां कलाविति त्रिलोकनाथैरवनतंनमस्कृतंपादपद्मंयस्यतंयक्ष्यंति
नयाजयिष्यंति पाखंडैर्विभिन्नमन्यथाकृतंचेतोयेषां ४३ विवशोगृणन्सन्विमुक्ताःकर्म्मरूपाःअर्गलाःप्रतिबंधाःयस्य

४४

तदेवं कलिदोषान्प्रपंच्यप्रसक्तानंतन्निस्तारोपायमाह पुंसामितिषड्भिः द्रव्यदेशात्मभिः संभवोयेषांतान् चित्तस्थः चित्ते
स्फुरितः ४५ ४६ अयमेवोपायोनान्यइतिसदृष्टांतमाह यथेति धातुजंताम्रादिसंश्लेषजातंहेम्नो दुर्वर्णमालिन्यंतत्र

पुंसांकलिकृतान्दोषान् द्रव्यदेशात्मसंभवान् सर्वान्हरतिचित्तस्थोभगवान्पुरुषोत्तमः ४५
श्रुतः संकीर्तितोध्यातः पूजितश्चादृतोपिवा नृणांधुनोतिभगवान्हृत्स्थोजन्मायुताशुभम्
४६ यथाहेम्निस्थितोवह्निर्दुर्वर्णंहंतिधातुजं एवमात्मगतोविष्णुर्योगिनामशुभाशयं ४७ वि
द्यातपः प्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः नात्यंतशुद्धिंलभतेंतरात्मायथात्हृदिस्थे
भगवत्यनंते ४८ तस्मात्सर्वात्मनाराजन्हृदिस्थंकुरुकेशवं म्रियमाणोह्यवहितस्ततोयाया
तिपरांगतिं ४९ म्रियमाणै रभिध्येयोभगवान्परमेश्वरः आत्मभावंनयत्यंगसर्वात्मा
सर्वसंश्रयः ५० कलेर्दोषनिधेराजन् अस्तिह्येकोमहान्गुणाः कीर्तनादेवकृष्णस्यमुक्तबं
धः परंव्रजेत् ५१ कृतेयद्ध्यायतोविष्णुंत्रेतायांयजतोमखैः द्वापरेपरिचर्यायांकलौतद्धरिकी
र्तनात् ५२ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेतृतीयोध्यायः ॥ ३ ॥

स्थितोवह्निरेवहरतिनतुलो
यादिएवंयोगिनामपिविष्णुरेवनतुयोगादिकमित्यर्थः ४७ एतदेवविवृणोति विद्येति विद्यादेवतोपासना ४८ ४९
आत्मभावंस्वस्वरूपं ५० इदानींकलिं स्तौतिद्वाभ्यांकलेर्दोषनिधेराजन्निति तत्सर्वंहरिकीर्तनादेवकलौभवति ५१ ५२ इति

इतिश्रीभागवतेद्वादशस्कंधेटीकायांतृतीयोध्यायः ३ ॥

४
भा॰ द्वा॰
११

चतुर्थेतुचतुर्द्धोक्ताल्लयानैमित्तिकादयः यत्रसंसारनिस्तारोहरिकीर्त्यैववर्ण्यते १ कलिदोषनिवर्त्तकंहरिनामसंकीर्त्तना
दिकं सस्वचक लोपरमोधर्मइतिप्रश्नद्वयस्योत्तरमुक्तं यच्चान्यत्पृष्टंप्रलयकल्पयोर्मानंब्रूहीतितदिदानींत्वनीयस्कंधोक्त
कालानुवादपूर्वकंनिरूपयति कालइति सकालःपरमाणुर्वैयोभुंक्तेपरमाणुतामित्यादिनाकालःकथितः चत्वारित्रीणि
द्वेचैकंकृतादिषुयथाक्रमंसंख्यातानिसहस्राणिद्विगुणानिशतानिचेतियुगमानंचकथितं १तत्रकल्पमानमाह चतुर्युगे
ति यत्रचतुर्दशमनवः क्रमेणभवंति २ प्रलयस्तुचतुर्विधः नैमित्तिकःप्राकृतिकआत्यंतिकोनित्यश्चेति तत्रनैमित्तिकंप्र

श्रीशुकउवाच कालस्तेपरमाण्वादिर्द्विपरार्धावधिर्नृप कथितोयुगमानंचशृणुकल्पल
यावपि १ चतुर्युगसहस्रंचब्रह्मणोदिनमुच्यते सकल्पोयत्रमनवश्चतुर्दशविशांपते २ त
दंतेप्रलयस्तावान्ब्राह्मीरात्रिरुदाहृता त्रयोलोकाइमेतत्रकल्पंतेप्रलयायहि ३ एषनै
मित्तिकःप्रोक्तःप्रलयोयत्रविश्वसृक् शेतेऽनंतासनोविश्वमात्मसात्कृत्यचात्मभूः ४ द्वि
परार्द्धेत्वतिक्रांतेब्रह्मणःपरमेष्ठिनः तदाप्रकृतयःसप्तकल्पंतेप्रलयायवै ५ ॥ ६ ॥ ६ ॥

लयमानसहितमाह तदंतइतिद्वाभ्यां तावान्चतुर्युगसहस्रप्रमाणः सैवब्राह्मीरात्रिः ३ नैमित्तिकत्वंदर्शयति यत्र
यदाविश्वसृक्श्रीनारायणः विश्वमात्मसात्कृत्यस्वस्मिन्उपसंहृत्यशेतेआत्मभूःब्रह्माचतस्मिन्शेते तयोरभेदविव
क्षयावाब्रह्मणस्वापं तामसत्वमुक्तंब्रह्मणोनिद्रांनिमित्तीकृत्यप्रवर्त्तमानोलोकत्रयप्रलयोनैमित्तिकइत्यर्थः ४ प्राकृतिकंप्र
लयमाहद्वाभ्यां द्विपरार्द्धेतुब्रह्मणआयुषिसप्तप्रकृतयः महदहंकारपंचतन्मात्राणि ५ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

संघातः महदादिकार्यभूतः प्रकृतीनांतत्कार्यब्रह्मांडस्यचप्रलयात्प्राकृतिकइत्यर्थः विघातेविघातकारणेउपसा
दितेसति ६ तदेवाह पर्जन्यइत्यादिनावृद्धीद्रियार्थरूपेणान्यतःप्राकृतेनेनग्रंथेन ७ सामुद्रादिकंसर्वरविः पिबतेऽप्याक
र्षति ८ अनिलवेगोत्यः वायुवेगाद्भूतः अनिलवेगोवाइतिपाठेअनिलेनवेगोयस्यसःवाःरविणारश्मिभिः पीतमुद

एषःप्राकृतिकोराजन्प्रलयोयत्रलीयते अंडकोशस्तुसंघातोविघातउपसादिते ६
पर्जन्यःशतवर्षाणिभूमौराजन्नवर्षति तदानिरन्नेह्यन्योऽन्यंभक्षमाणाःक्षुधार्दिताः
क्षयंयास्यंतिशनकैःकालेनोपद्रुताःप्रजाः ७ सामुद्रंदैहिकंभौमंरसंसांवर्त्तकोरविः र
श्मिभिःपिबतेघोरैःसर्वंनैवविमुंचति ८ ततःसंवर्त्तकोवह्निःसंकर्षणमुखोत्थितः द
हत्यनिलवेगोत्यःशून्यान्भुविवरानथ ९ उपर्यधःसमंताच्चशिखाभिर्वह्निसूर्ययोः
दह्यमानंविभात्यंडंदग्धगोमयपिंडवत् १० ततःप्रचंडपवनोवर्षाणामधिकंशतं परः
संवर्त्तकोवातिधूम्रंखंरजसावृतं ११ ततोमेघकुलान्यंगचित्रवर्णान्यनेकशः शतंव
र्षाणिवर्षतिनदंतिरभसस्वनैः ततएकोदकंविश्वंब्रह्मांडविवरांतरम् १२ ॥

कंचदहतीत्यर्थः अनिलवेगोवैइतितुपाठःसुगमः भूविवरान्पातालादीन्शून्यान्रविणादैहिकरसाकर्षणात्
प्राणिरहितान् ९ शिखाभिर्ज्वालाभिः १० किंचिदधिकंवर्षाणांशतंसंवर्त्तकःप्रलयहेतुः परोवायुर्वातितदारजसा
वृतंखंधूम्रंभवति ११ रभसस्वनैःतीव्रगर्जितैः ब्रह्मांडविवरांतरंब्रह्मांडविवरमध्यगतंविश्वंएकोदकंएकार्णवोद

भा॰ द्वा॰ उदप्लवेउदकेनाप्लाविते सति प्रलयत्वाय अभावाय १३ १४ १५ भूतादिः तामसोऽहंकारः गुणैर्वृत्तिभिः सह १६ अव्या
१२ कृतं प्रधानं १७ तस्य तुलयो नास्तीत्याह न तस्येति कालावयवैः अहोरात्रादिभिः गुणाः भावविकाराः परिणामः विपरि
णामः अव्यक्तं अस्तित्वविकारशून्यं नित्यं सर्वदैकरूपं ह्रासवृद्धिरहितमित्यर्थः

तदा भूमेर्गंधगुणं ग्रसन्त्याप उदप्लवे ग्रस्तगंधा तु पृथिवी प्रलयत्वाय कल्पते १३ अपां र
समथो तेजस्ता लीयंते ऽथ नीरसाः ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा १४ लीयते चानिले
तेजो वायोः खं ग्रसते गुणं स वै विशति खं राजंस्ततश्च नभसो गुणं १५ शब्दं ग्रसति भूतादि
र्नभस्तमनु लीयते तैजसश्चेंद्रियाण्यंग देवान्वैकारिको गुणैः १६ महान्ग्रसत्यहंकारं
गुणाः सत्वादयश्च तं ग्रसते ऽव्याकृतं राजन्गुणान्कालेन नोदितं १७ न तस्य कालावय
वैः परिणामादयो गुणाः अनाद्यनंतमव्यक्तं नित्यं कारणमव्ययं १८ न यत्र वाचो न म
नो न सत्वं तमो रजो वा महदादयो ऽमी न प्राणबुद्धींद्रियदेवता वा न सन्निवेशः खलु लोक
कल्पः १९ न स्वप्नजाग्रन्न च न त्सुषुप्तं न खं जलं भूरनिलो ऽग्निरर्कः संसुप्तवच्छून्यव
दप्रतर्क्यं तन्मूलभूतं पदमामनंति २० ॥ अव्ययं अपक्षयशून्यं स सर्वत्र हेतुः कारणमिति १८ किं
च वागादिगोचरस्य सविशेषस्य विकारा भवंति इदं तु न तथेत्याह न यत्रेति द्वाभ्यां लोककल्पः लोकरूपः संनिवे
शो रचनाविशेषः १९ नास्ति स्वप्नजाग्रत् स्वप्नजागरावस्था युक्तं सुषुप्तवत् इंद्रियाभावात् शून्यसादृश्ये हेतुः अप्रतर्क्यं

उपसंहरति लयइति शक्तयः सत्वादयः २१ आत्यंतिकंप्रलयमाह बुद्धींद्रियेतिद्वाभ्याम्। आत्यंतिकलयो मोक्षः सचब्रह्मज्ञानेनसर्वप्रपंचलयात्मकः नचप्रपंचस्यात्मवत्सत्यत्वेलयः संभवतीतिज्ञानरूपात्ब्रह्मणः पृथगभूतस्यतस्यासत्वमुपपादयति बुद्धिश्चइंद्रियाणिचअर्थाश्चेत्येवंग्राहककरणग्राह्यरूपेणतेषामाश्रयंज्ञानमेवभाति नपृथक् तत्रहेतुमाह दृश्यत्वाव्यतिरेकाभ्यामिति अतोयदाद्यंतवत्तदवस्तु अत्रैवंप्रयोगः विमतंसन्नभवति दृश्यत्वात्कारणाव्यतिरेकात् आद्यंतवत्वाच्चरज्जुसर्पादिवदिति २२ तत्राव्यतिरेकंदृष्टांतेनप्रपंचयति दीपइति दीपचक्षुरूपाणांतेजोविशेषाणांयथातेजसोनव्यतिरेकः तथाधीःकर्त्रीखानिकरणानिइंद्रियाणीतिमात्राः विष

लयःप्राकृतिकोह्येषपुरुषाव्यक्तयोर्यदा शक्तयःसंप्रलीयंतेविवशाःकालविद्रुताः २१ बुद्धींद्रियार्थरूपेणज्ञानंभातितदाश्रयं दृश्यत्वाव्यतिरेकाभ्यामाद्यंतवदवस्तुयत् २२ दीपश्चक्षुश्चरूपंचज्योतिषोनपृथग्भवेत् एवंधीःखानिमात्राश्चनस्युरन्यतमादृतात् २३ बुद्धेर्जागरणंस्वप्नः सुषुप्तिरितिचोच्यते मायामात्रमिदंराजन्नानात्वंप्रत्यगात्मनि २४ ॥

याः ऋतात्ब्रह्मणः पृथक्नस्युर्ब्रह्मकार्यत्वात् नन्वेवंकार्यकारणयोरभेदेकार्यासत्वेकारणस्याप्यसत्वंप्रसज्येततत्राह अन्यतमादितिकार्यादृत्यंतव्यतिरेकाद्ब्रह्मणः प्रपंचाद्ब्रह्मणोऽस्तिव्यतिरेकः प्रपंचस्यतुततोनास्तिव्यतिरेकः इत्यर्थः २३ यदातुबुद्धेरसत्वंतदातद्वस्थानांसुतरामसत्वमित्याशयेनाहबुद्धेरिति ननुविश्वतैजसप्राज्ञानांएतावस्थानबुद्धेरित्याशंक्याह मायामात्रमिति इदंविश्वतैजसप्राज्ञरूपं २४ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥

आद्यंतवत्वादित्यस्य हेतोरसिद्धिमाशंक्य सावयवत्वेन साधयति यथेति अवयवीति यत्सावयवं तदाद्यंतवत् घटादि वदित्यर्थः अत उदयाप्ययादाद्यंतवत्वाद्विश्वं सन्न भवतीत्यर्थः यद्वा पृथगेवागमापायित्वाद्विश्वं मिथ्या ब्रह्म तु त दवधित्वात्सत्यमित्यनेन साध्यते दृष्टांतस्तु पूर्वोक्त एव रज्जुसर्पवदिति यथा जलधरा व्योम्नीति दृष्टांतस्त्वागमापायि तदवधित्वमात्रे न तु मिथ्यात्वे २५ अन्यतमाहृतादिप्रतिज्ञातकारणस्य सत्यत्वमुपपादयति सत्यमिति अवयवः का रणं प्रोक्तः वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुतिभिः अत्र युक्तिमपि दर्शयति विनेति अंग हे रा न् हि यस्मात् अर्थेनावयविना विना पृथगेवावयवाः प्रतीयेरन् यथा पटस्यावयवाः तंतवः पटात्पृथक्प्रतीयंते तेतद्व

यथा जलधरा व्योम्नि भवंति न भवंति च ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् २५ स त्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह विनार्थेन प्रतीयेरन् पटस्येवांग तंतवः २६ यत्सामा न्यविशेषाभ्यामुपलभ्येत सभ्रमः अन्योन्यापाश्रयात्सर्वमाद्यंतवदवस्तु यत् २७ ॥ विकारः ख्यायमानोऽपि प्रत्यगात्मानमंतरा ॥ ६ ॥ ६ ॥ ६ ॥ ॐ दिति २८ ननु कार्याभावे का

रणत्वं ब्रह्मणः कुतो घटेत सत्यं तदपि नातीव सत्यमित्याह यदिति सामान्यं कारणं विशेषः कार्यं ततद्रूपेणान्यो ऽन्यापाश्रयात् परस्परापेक्षत्वेन निरूपणासहत्वादित्यर्थः अतः कारणत्वमवधित्वं व्यापकत्वमित्यादिकमपि यत्स रोक्षत्वादाद्यंतवत्तत्सर्वमवस्तु इत्यर्थः यद्वा तत्रैव हेत्वंतरमेतत् यदुपलभ्येत सभ्रमः सामान्यविशेषरूपत्वात्स्वप्नवत् अन्योऽन्यापाश्रयादितीदमपि हेत्वंतरं गुणगुणीति विशेषणविशेष्यव्याप्यव्यापकत्वादिरूपेण परस्पराधीनसिद्धत्वा त्तथाभूतस्वप्नवदिति निगमनम् अतो यदाद्यंतवत्तत्सर्वमवस्त्वित्यर्थः २७ तदेवमनेकैर्हेतुभिः प्रपंचस्यासत्त्वं प्रसाधितम्

तत्रशंका ननुप्रपंचस्यापिप्रकाशमानत्वादात्मवत्सत्वंकिंनस्यादितितत्राह विकारइति ख्यायमानःप्रकाशमानोऽपिविकारःप्र
पंचः प्रत्यगात्मप्रकाशंविनाअणुमात्रोऽपिननिरूप्योऽस्ति तंविनानिरूप्यःस्याच्चेत्तर्हिसोऽपिचित्समःस्यात् चिद्रूपेणात्मनासमः
स्वप्रकाशोभवेत् तथाचसतिसोप्यात्मवत्स्यात् एकरूपःस्यादित्यर्थः २८ कुतइत्यतआह नहीति ननुसत्यस्याप्यात्मनोजीवब्रह्म
रूपनानात्वमस्त्येवतत्राह यद्येवंनानात्वंमन्यतेतर्हिअविद्वान् कथंतर्हितयोर्भेदव्यवहारः उपाधिकृतइत्याह नानात्वमिति
तत्रछिद्रयोर्घटाकाशमहाकाशयोरिवेतिपरिच्छेदापरिच्छेदेदृष्टांताः ज्योतिषोराकाशजलस्थयोः सूर्ययोरिवेतिउपाधिकृतवि
कारसदसद्भावेवातयोर्बाह्यशरीरस्थयोर्वायोरिवेतिक्रियाभेदे २९ ब्रह्मणएवप्रपंचव्यवहारालंबनत्वंदृष्टांतेनस्पष्टयति यथे

ननिरूप्योऽस्त्यणुरपिस्याच्चेच्चित्समआत्मवत् २८ नहिसत्यस्यनानात्वमविद्वान्यदिम
न्यते नानात्वंछिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव २९ यथाहिरण्यंबहुधासमीयतेनृ
भिः क्रियाभिर्व्यवहारवर्त्मसु एवंवचोभिर्भगवानधोक्षजोव्याख्यायतेलौकिकवैदिकैर्ज
नैः ३० यथाघनोऽर्कप्रभवोर्कदर्शितोह्यर्कांशभूतस्यचचक्षुषस्तमः ॥ति क्रियाभिस्तत्तद्रचना

भेदैर्बहुधाकटककुंडलादिरूपेणलौकिकवैदिकैर्वचोभिर्जनैरहंकारोपहितैः ३० नन्वहंकारस्यकथंब्रह्मस्वरूपावरणेन
भेदव्यवहारहेतुत्वं तस्यस्वकारणभूतब्रह्मावरकत्वासंभवादावरणेवास्वस्यापिप्रकाशासंभवादित्याशंक्यसदृष्टांतमाह य
थेति अर्करश्मयएवमेघरूपेणपरिणतावर्षंति अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेर
न्नंततःप्रजाइत्यादिवचनात्तस्मादर्कप्रभवः अर्केणैवदर्शितःप्रकाशितश्च तमः स्वरूपभूतार्कदर्शनप्रतिबंधकोभवति
अहमहंकारः ब्रह्मगुणः ब्रह्मकार्यभूतः तदीक्षितत्वेनैवप्रकाशितश्च ॥ छ॥ छ॥ छ॥ छ॥ छ॥ छ॥छ॥

आत्मनो जीवस्य आत्मवंधनः ब्रह्मस्वरूपदर्शनप्रतिवंधको भवति ३१ अत एवाहंकारनाशे स्वरूपदर्शनं भवतीतितैनैव दृष्टांतेनाह घन इति आत्मन उपाधिः जिज्ञासया विचारेण तर्हि तदा अनुस्मरेत ब्रह्माहमिति पश्यतीत्यर्थः ३२ सोयमात्यंतिकः प्रलय इत्युपसंहरति यदैवमिति विवेकहेतिनाज्ञानशस्त्रेण अहंकारमेवात्मवंधनं अच्युतं परिपूर्णमात्मानमनुभवतीत्यर्थः ३३ नित्यप्रलयमाह नित्यदेति ३४ कुत इत्यत आह कालेति परिणामिनां नदी

एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मवंधनः ३१ घनो यदार्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा यदाह्यहंकार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत ३२ यदैवमेतेन विवेकहेतिना मायामयाहंकरणात्मवंधनं छित्वाच्युतात्मानुभवोवतिष्ठते तमाहुरात्यंतिकमंग संप्लवम् ३३ नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ३४ कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ३५ अनाद्यंतवतानेन कालेनेश्वरमूर्त्तिना

प्रवाहप्रदीपज्वालादीनां या उच्चनीचावस्थास्ताः कालरूपस्रोतसो वेगेनाशु ह्रियमाणस्य देहादेर्दृश्यमानाः तद्वदेव नित्यदा जन्मप्रलयहेतवो भवंति ३५ देहः प्रतिक्षणं प्रध्वंसी प्रतिक्षणं अवस्थाभेदस्य विद्यमानत्वात् प्रदीपादिवदित्यनुमानं यदि प्रतिक्षणं अवस्था भवंति तर्हि किं न दृश्यंते अतो हेतुरसिद्ध इत्याशंक्याह अनाद्यंतवता कालेन जायमाना अवस्था नैव लक्ष्यंते आकाशे गच्छतां ज्योतिषां चंद्रादीनां गमनावस्थाविशेषाः यथा

गत्यवस्थाः कल्प्यंतेतद्वदत्रापिवाल्यतारुण्यादिदर्शनेनमध्यवर्त्तिन्योऽवस्थाः कल्प्यंतइतिनहेतुरसिद्धइत्यर्थः ३६ उपसंहरति नित्यइति ३७ पुराणार्थमुपसंहरति एताइति लीलाविषयाःकथाः अजोब्रह्मापिकार्त्स्न्येनाभिधातुंने शः ३८ ननुयदिसाकल्येनाभिधातुंनशक्यंतेतर्हि किंतदभिधानेनतत्राह संसारेति विविधंदुःखमेवदवोदावानलस्त

अवस्थानैवदृश्यंतेवियतिज्योतिषामिव ३६ नित्योनैमित्तिकश्चैवतथाप्राकृतिकोल यःआत्यंतिकश्चकथितःकालस्यगतिरीदृशी ३७ एताःकुरुश्रेष्ठजगद्विधातुर्नारायणस्या खिलसत्वधाम्नः लीलाकथास्तेकथिताःसमासतःकार्त्स्न्येननाजोऽप्यभिधातुमीशः ३८ संसारसिंधुमतिदुस्तरमुत्तितीर्षोर्नान्यःप्लवोभगवतःपुरुषोत्तमस्य लीलाकाथारसनिषे वणमंतरेण पुंसोभवेद्विविधदुःखदवार्द्दितस्य ३९ पुराणसंहितामेतामृषिर्नारायणोऽ व्ययः नारदायपुराप्राहकृष्णद्वैपायनायसः ४० सवैमह्यंमहाराजभगवान्बादरायणः इमांभागवतींप्रीतःसंहितांवेदसंमितां ४१ एतांवक्ष्यत्यसौसूतऋषिभ्योनैमिषालये ॥

र्द्दितस्यपीडितस्यअतउत्तितीर्षोःपुंसःभगवतोयालीलास्तासांकथाः तासांरसस्तन्निषेवणमंतरेणान्यःप्ल वस्तरणसाधनंनभवेत् उपायांतरासंभवात्तत्कथाश्रवणमेवयथाशक्तिनिषेव्यमित्यर्थः ३९ श्रोतुरादरसिद्धयेसंप्र दायप्रवृत्तिमाह पुराणसंहितामितित्रिभिः ४० सवैबादरायणःप्रीतःसन्मह्यमिमांसंहितांप्राहेतिपूर्वेणान्वयः ४१

स्याह नैमिषालयेनिमिषारण्यस्थाने ४२ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांचतुर्थोऽध्यायः ४
पंचमेतुसमासेनपरब्रह्मोपदेशतः राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणं १ एतत्पुराणेशृण्वन्नभयंप्राप्नोती
त्यभिप्रेत्यपुराणार्थमनुस्मारयति अत्रेति अयंभावः जगतःकर्ताब्रह्मापियस्यप्रसादजःप्रसादोत्रर्जोवृत्ति
र्हर्षः ततोजातत्वा त्परतंत्रः सर्वसंहर्तारुद्रश्चयस्यक्रोधसंभवोनतुस्वतंत्रः सविश्वस्यात्मानियंताभगवान
त्रानुवर्ण्यते अतस्त्वंभूतंभगवंतंशृण्वतःकुतोन्यस्माद्भयशंकेति १ त्वंपुनःकृतार्थएवेत्यनुस्मारयति त्वंत्वि

दीर्घसत्रेकुरुश्रेष्ठसंपृष्टःशौनकादिभिः ४२ इतिश्रीभागवतेमहापुराणेद्वाद
शस्कंधेचतुर्थोऽध्यायः ४ श्रीशुकउवाच अत्रानुवर्ण्यतेभीक्ष्णंविश्वात्माभग
वान्हरिः यस्यप्रसादजोब्रह्मारुद्रःक्रोधसमुद्भवः १ त्वंतुराजन्मरिष्येतिपशु
बुद्धिमिमांजहि नजातःप्रागभूतोऽद्यदेहवत्त्वंननंक्ष्यसि २ नभविष्यसिभूत्वा
त्वंपुत्रपौत्रादिरूपवान् बीजांकुरवद्देहादेर्व्यतिरिक्तोयथाऽनलः ३ ॥ ३ ॥ ५ ॥

तिपशुबुद्धिं अविवेकं यस्मान्ननंक्ष्यसि कुतइत्यतआह नजातइति यथादेहःप्रागभूतएवाद्यजातोनंक्ष्यतिच
नचैवंत्वंपूर्वंनाभूः नचाद्यजातोस्मि अतोननंक्ष्यसि २ ननुबीजांकुरवत्स्वस्मात्पुत्ररूपेणस्वयमेवभवतिय
थाहश्रुतिः अंगादंगात्संभवसिहृदयादभिजायसे आत्मावैपुत्रनामासिसजीवशरदःशतमिति ततःपुनरंकु
राद्बीजमिवपौत्रादिरूपेणापिस्वयमेवभवति पितापुत्रेणपितृमान्योनियोनावितिश्रुतेः अतस्तेपुनश्चपत्युःकथं
ननंक्ष्यामीतिचेत्तत्राह नभविष्यसीतीति भूत्वापुत्रपौत्रादिरूपवान्बीजांकुरवन्नभविष्यसि यस्माद्देहादेर्व्यतिरि

जन्मादीनां देहधर्मत्वं दृष्टांतेन प्रपंचयति स्वप्ने यथाऽऽत्मनः शिरश्छेदं स्वयं पश्यति एवं जागरणेऽपि यथा यस्माद्देहस्य पंचत्वादिकं पश्यति ततस्तद्वदेवात्मन इदं भ्रममात्रम् वस्तुतस्त्वात्माऽजोऽमरश्चेत्यर्थः तदुक्तम् आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ न भवाप्ययवस्तूनामभिज्ञोऽद्वयलक्षण इत्यादि ४ यस्माद्देहोपाधिकोऽयमात्मनो जन्मादिसंसारभ्रमः तस्मादुपाधिनिवृत्तौ मुच्यत इति सदृष्टांतमाह घट इति यथा पुरा घटोपाधेः पूर्वमिव पुनर्घटे भिन्ने तदंतर्वर्त्यवकाशः आकाश एव स्याद्यथा एवं देहे मृते तत्त्वज्ञानेन लीने सति ५ ज्ञानेन लयं भा

स्वप्ने यथा शिरश्छेदं पंचत्वाद्यात्मनः स्वयम् यस्मात्पश्यति देहस्य तत आत्मा ह्यजोऽमरः ४ घटे भिन्ने यथाऽऽकाश आकाशः स्याद्यथा पुरा एवं देहे मृते जीवो ब्रह्म संपद्यते पुनः ५ मनः सृजति वै देहान्गुणान्कर्माणि चात्मनः तन्मनः सृजते माया ततो जीवस्य संसृतिः ६ स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते ततो दीपस्य दीपत्वमेवं देहकृतो भवः रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति ७ ॥ तदपि तु मायाकृतमात्मनो देहाद्युपाधिसंबंधप्रकारमाह मन इति मन आत्मनो देहादीन्सृजति तच्च मनो माया सृजति ततो मायाद्युपाधिसमुदायाज्जीवस्य संसृतिर्न वस्तुतः ६ एतदेव सदृष्टांतमाह सार्धेन स्नेहेति दीपस्य ज्योतिषः दीपत्वं ज्वालारूपः परिणामः तत्र तैलस्थानीयं कर्म तदधिष्ठानीयं मनः वर्तिस्थानीयो देहः अग्निसंयोगस्थानीयश्चैतन्याध्यासः दीपस्थानीयः संसार इति योज्यम् देहकृतः देहनिबंधनः यद्वा देहकृतो मनसः न चात्मनः ७ ॥

अतोदीपवत्संसारएवनश्यति नत्वात्माजोतिर्वदित्याह नेति ननुतत्रप्रतीयमानःआत्माकुतइत्यतआह य इति व्यक्ताव्यक्तयोः स्थूलसूक्ष्मदेहयोः परः अतः स्वयंज्योतिः परत्वंप्रपंचयति आकाशइवेति आधारोदेहादेःप्र पंचस्य ध्रुवोनिर्विकारः नास्त्यंतउपमाचयस्यसोऽनंतोपमः ततोविभुः ८ अतस्त्वमेवंचिंतयेत्याह एवमिति आत्म स्वंदेहाद्युपाधिस्थितम् आमृशविचारय अनुमानगर्भिण्याद्दृष्टदृश्यान्वयव्यतिरेकयुक्तया ९ एवंचसतित्वांतक्ष

नतत्रात्मास्वयंज्योतिर्योव्यक्ताव्यक्तयोः परः आकाशइवचाधारोध्रुवोऽनंतोपमस्त तः ८ एवमात्मानमात्मस्थमात्मनैवामृशप्रभो बुद्ध्याऽनुमानगर्भिण्यावासुदेवानुचिंत या ९ चोदितोविप्रवाक्येननत्वांधक्ष्यतितक्षकः मृत्यवोनोपधक्ष्यंतिमृत्यूनांमृत्यु मीश्वरम् १० अहंब्रह्मपरंधामब्रह्माहंपरमंपदम् एवंसमीक्षन्नात्मानमात्मन्या धायनिष्कले ११ दशंतंतक्षकंपादेलेलिहानंविषाननैः नद्रक्ष्यसिशरीरंचविश्वं चपृथगात्मनः १२ एतत्तेकथितंतातयथात्मापृष्टवान्नृप हरेर्विश्वात्मनश्चेष्टांकिंभू

कोनदहेदित्याह चोदितइति तत्रहेतवः मृतवइति मृत्युहेतवः १० ॥ऽऽ यःश्रोतुमिच्छसि १३ ॥ विमर्शप्रकारंदर्शयन्तक्षकादर्शनंदर्शयतिद्वाभ्याम् योऽहंसब्रह्मैव यद्ब्रह्मतदहमेवेतिसमीक्षम् तत्राहंब्रह्मेति भावनयाजीवस्यशोकादिनिवृत्तिः ब्रह्माहमितिभावनयाचब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीतिव्यतिहारोदर्शितः नि ष्कलेनिरुपाधौ आत्मनिब्रह्मणि ११ विषयुक्तैराननैर्दशंतंग्रसंतंतक्षकं लेलिहानंसर्पम् यद्वालेलिहानंजिह्वाभिरोष्ठप्रांते

॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांपञ्चमोऽध्यायः षष्ठेपरीक्षितोमोक्षः सर्पहोमादिततसुता
त वेदशास्त्रविभागोक्तोत्रिवेदिव्यासवर्णनं १ एतत्पुराणंनिशम्यनिखिलात्माहरिस्तंपश्यति निखिलंचात्मनिप
श्यतीतितथातेन अतः समेननतेन अवनतेनमूर्द्धातत्पादतलमुपसृत्यतस्यपादौशिरसिनिधायेत्यर्थः १ सिद्धःहं

इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेप्रमाणलक्षणंनामपंचमोध्यायः ५ सूतउ
वाच एतन्निशम्यमुनिनाभिहितंपरीक्षिद्व्यासात्मजेननिखिलात्मदृशासमेन तत्पाद
पद्ममुपसृत्यनतेनमूर्द्ध्नाबद्धांजलिस्तमिदमाहसविष्णुरातः १ राजोवाच सिद्धोस्म्यनु
गृहीतोस्मिभवताकरुणात्मना श्रावितोयच्चमेसाक्षादनादिनिधनोहरिः २ नात्यद्भुतम
हंमन्येमहतामच्युतात्मनां अज्ञेषुतापतप्तेषुभूतेषुयदनुग्रहः ३ पुराणसंहितामेतामश्रौ
ष्मभवतोवयं यस्यांखलूत्तमश्लोकोभगवाननुवर्ण्यते ४ भगवंस्तक्षकादिभ्योमृत्युभ्योन
बिभेम्यहं प्रविष्टोब्रह्मनिर्वाणमभयंदर्शितंत्वया ५ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

तार्थोऽस्मियतः अनुगृहीतोस्मि अनुग्रहमेवाह यतयस्मात्श्रावितः चशब्दात्प्राप्तिसाधनंच २ करुणात्म
तामभिनंदति द्वाभ्यांनात्यद्भुतमिति ३ अश्रौष्मश्रुतवंतः भवतः सकाशात् ४ सिद्धोस्मीत्युक्तंतदेवाविष्करो
तिभगवन्नितियतः त्वायादर्शितं ब्रह्मप्रविष्टः कथंभूतंअभयंयतोनिर्वाणंकैवल्यरूपं ५ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

किंभूयः श्रोतुमिच्छसीति यदुक्तं तत्र सिद्धोहं न किंचिच्छ्रोतुमिच्छामि केवलमनुज्ञां देहीत्याह अनुजानीहीति वाचमित्युपलक्षणं सर्वेंद्रियाणां वाचं नियम्य किं करिष्यसि तदाह मुक्ताः कामाशया यस्त द्वासनायेन तच्चेतः अधोक्षजे प्रविश्य असून् विसृजामि ६ ननु किं प्राणत्यागेन किंचित्कालं ज्ञाननिष्ठो भवेति चेत् तत्राह अज्ञानं चेति चकारात्तत्संस्कारश्च तच्च त्वत्तत्कृपयैवेत्याह भवतेति ७ ८ आत्मना बुद्ध्या आत्मानं मनः आत्मनि प्रत्यक्प्रकाशे समा

अनुजानीहि मां ब्रह्मन्वाचं यच्छाम्यधोक्षजे मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ६ अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया भवता दर्शितं क्षेमं परं भगवतः पदं ७ श्रीसूत उवाच इत्युक्तस्तमनुज्ञाप्य भगवान्बादरायणिः जगाम भिक्षुभिः साकं नरदेवेन पूजितः ८ परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना समाधाय परं दध्यावस्पंदासुर्यथा तरुः ९ प्राक्कूले बर्हिष्यासीनो गंगाकूल उदङ्मुखः ब्रह्मभूतो महायोगी निःसंगश्छिन्नसंशयः १० तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना हंतुकामो नृपं गच्छन्ददर्श पथि कश्यपं ११ तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणं द्विजरूपप्रतिच्छन्नः कामरूपोदशन्नृपं

धाय परमात्मानं दध्यौ अस्पंदासुः लीनप्राणः यथा तरुः स्थाणुः ९ तमेव विशिनष्टि प्राक्कूले प्रागग्रे बर्हिषि विदर्भे १० तदेवं ब्रह्मभूते तस्मिन् तक्षकागमनादिकं पिष्टपेषणमिवाभवदिति दर्शयति तक्षक इति त्रिभिः हे विप्राः तं विषचिकित्सया परीक्षिद्रक्षणेन द्रव्यार्जनाय आगच्छंतं ११ तत्रस्थालीढवटवृक्षस्य भस्मीभूतस्य पुनरंकुरादिक्रमेणोत्थापनै द्विषहारिणं तदपेक्षितद्रविणैः संतर्प्य ततो निवर्त्य द्विजरूपेण तिरोहितः सन्नदशत १२॥

तच्चपुत्रकृत्यमिवजातमित्याहब्रह्मभूतस्येति १३ तत्रक्षणंसर्वेषांदुःखंचततःपरमुत्सवंचाहद्वाभ्यांहाहाकारइति १४ १५
प्रासंगिकमाह जनमेजयइत्यादिसर्पाभिचारसत्रेद्विजैः सहवर्तमानः यथावदाजुहावजुहावेतिवा. सर्वसर्पावाहनेकारणमा

ब्रह्मभूतस्यराजर्षेर्देहोऽहिगरलाग्निना बभूवभस्मसात्सद्यः पश्यतांसर्वदेहिनां १३ हाहाकारोमहानासीत् भुविस्वेदिक्षुसर्वतः विस्मिताह्यभवन्सर्वेदेवासुरनरादयः १४ देवदुंदुभयोनेदुर्गंधर्वाप्सरसोजगुः ववृषुःपुष्पवर्षाणिविबुधाःसाधुवादिनः १५ जनमेजयःस्वपितरंश्रुत्वातक्षकभक्षितं यथाजुहावसंक्रुद्धोनागानसत्रेसहद्विजैः १६ सर्पसत्रेसमिद्धाग्नौदह्यमानान्महोरगान् दृष्ट्वेंद्रंभयसंविग्नस्तक्षकः शरणंययौ १७ अपश्यंस्तक्षकंतत्रराजापारीक्षितोद्विजान् उवाचतक्षकः कस्मान्नदह्येतोरगाधमः १८ तंगोपायतिराजेंद्रशक्रः शरणमागतं तेनसंस्तंभितः सर्पस्तस्मान्नाग्नौपतत्यसौ १९ पारीक्षितइतिश्रुत्वाप्राहत्विजउदारधीः सहेंद्रस्तक्षकोविप्रानाग्नौकिमितिपात्यते २० तच्छ्रुत्वाजुहुवुर्विप्राःसहेंद्रंतक्षकंमखे तक्षकाशुपतस्वेहसहेंद्रेणमरुत्वता २१ ॥ह संक्रुद्धइति १६ १७ १८ कस्मा

त्तक्षकोनदह्येतेत्युक्ताः संतोद्विजाः ऊचुः तमितितेनइंद्रेण असौसर्पः १९ ऋत्विजः प्रत्याह सहेंद्रः इंद्रसहितः किमितिनपात्यते २० तद्राज्ञोवचः श्रुत्वा आजुहुवुः साक्षेपमाह्वानंदर्शयति तक्षकेति इहाग्नावाशुपतमरुत्वताम

भा० आदि० टी० ५६ ॥ ४८ ॥

भा॰ द्वा॰ ६ १०

ब्राह्मणैरुक्तैराक्षेपैः परुषवाक्यैः सतक्षकः तक्षकेनसह २२ अंगिरसः पुत्रोबृहस्पतिः प्राह २३ २४ भवतुनामाजरामरःत
यापिपितृमारकंधक्ष्यामीतिचेत्तत्राह जीवितमितिगतिः परलोकः अतोदुर्म्मरणनिमित्तापितुर्दुर्गतिरनेनकृतेत्यपिन
शोकनीयमित्यर्थः २५ कथमन्यः सुखदुःखप्रदातानास्ति सर्पादीनामुपलभ्यमानत्वादितिचेत्तत्राह सर्पादिनाजंतुःपंच

इतिब्रह्मोदिताक्षेपैः स्थानादिंद्रः प्रचालितः बभूवसंभ्रांतमतिःसविमानःसतक्षकः २२
तंपतंतंविमानेनसहतक्षकमंबरात् विलोक्यांगिरसः प्राहराजानंतंबृहस्पतिः २३ नैषत्व
यामनुष्येंद्रवधमर्हतिसर्पराट् अनेनपीतममृतंअथवाअजरामरः २४ जीवितंमरणंजं
तोर्गतिः स्वेनैवकर्म्मणा राजंस्ततोन्योनान्यस्यप्रदातासुखदुःखयोः २५ सर्प्पचौराग्निवि
द्युद्भ्यःक्षुत्तृड्व्याध्यादिभिर्नृप पंचत्वमृच्छतेजंतुर्भुंक्तआरब्धकर्म्मतत् २६ तस्मात्सत्रमिदं
राजन्संस्थीयेताभिचारकं सर्पाअनागसोदग्धाजनैर्दिष्टंहिभुज्यते २७ इत्युक्तःसतथेत्याह
महर्षेर्म्मानयन्वचः सर्पसत्रादुपरतःपूजयामासवाक्पतिं २८ सैषाविष्णोर्म्महामायाबाध्य

त्वंमृत्युंऋच्छतिप्राप्नोतीतियततदारब्धंकर्म्मैवभुंक्तेस्वकर्मप्रयुक्ताएवसर्पादयोनस्वतंत्राइतिभा॰२६ यालक्षणाय
वः २६ संस्थीयेतसमाप्यतां अभिचारकंहिंसाफलं दिष्टंप्राचीनंकर्म अतःसर्पादिष्टप्रयुक्तास्यतवाप्ययंनापराधइतिभावः
२७ वाक्पतिंबृहस्पतिं २८ ननुकथंविदुषामप्येवंसंमोहःयेताब्रह्मकोपात्परीक्षितोमृत्युःजनमेजयकोपात्सर्प्पाणामित्या

सैषेति तस्यामहत्त्वं दर्शयति अलक्षणा न लक्ष्यत इत्यलक्षणा अप्रत्यक्षेत्यर्थः कासावित्यत आह यया स्वविसोस्वआत्मभूताः आत्मांश

भूताः प्राणिनः गुणवृत्तिभिः क्रोधादिभिः सह भूतेषु देहेषु मुह्यंति बाध्यबाधकतां व्रजंतीत्यर्थः ननु श्रवणादिना बाधितया तया कुतो मोहः स्यात्त

त्राह अबाध्यया बाधितुमशक्यया २९ कथं तर्हि मायातत्कार्यनिवृत्तिरित्याशंक्य श्रीविष्णुस्वरूपनिरूपणपूर्वकं तद्भजनात् सर्वानर्थनिवृत्तिरिति शा

स्त्रार्थमुपसंहरति नयत्रेति पंचभिः दंभीति या माया कपटवानयं पुमानित्येवं भूता यां बुद्धावसकृदुल्लिख्यमानाया सेत्यर्थः सा आत्मवादे क्रिय

माणे आत्मवादिभिर्यत्र अभया न विराजिता न प्रकाशिता किंतु भीतेव स्वकार्यमोहादिकमकुर्वती कथंचिन्निवर्तत इति प्रतिपादिसेत्यर्थः तदुक्तं

तस्मै नमो भगवते वासुदेवाय धीमहि यन्मायया दुर्जयया मां ब्रुवंति जगद्गुरुं विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया

मुह्यंत्यस्यैवात्मभूता भूतेषु गुणवृत्तिभिः २९ नयत्र दंभीत्यभया विराजिता मायात्मवादे सकृ

दात्मवादिभिः नयद्विवादो विविधस्तदाश्रयो मनश्च संकल्पविकल्पवृत्तियत् ३० नयत्र सृज्यं

सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितस्त्वहं तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मी

न विरमेत्स्वयं मुनिः ३१ परं पदं वैष्णवमामनंति तत् यन्नेति नेतीत्यतदुत्सिसृक्षवः ॥१॥

या विमोहिता विकत्थंते मम अहमिति दुर्धिय इति किंच यद्यस्मिन् तदाश्रयो मायाश्रयो विविधो वादोऽपि नास्ति विशेषवि

यत्वाद्विवादानां तस्य विशेषातीतत्वादिति भावः संकल्पावृत्तयो यस्य तन्मनोऽपि यत्र नास्ति संकल्पविकल्पानामपि विशेष

विषयत्वात् ३० किंच सृज्यं कर्म सृजता कारकवर्गेण सह उभयोः सृज्यस्रष्ट्रोः परं साध्यं श्रेयः फलमपि अतस्त्रिभिः सृज्यस्र

ष्टृफलैरन्वितो जीवश्च अहंकारात्मको यत्र नास्ति अत एव उत्सादितो निरस्तो बाध्यबाधकौ यस्मिन् तदेतत् स्वयं आत्मस्व

रूपमित्यर्थः तं तस्मिन् ऊर्मीन् अहंकारादीन् निषिध्य विरमेत विशेषणक्रीडेदित्यर्थः ३१ यतस्तदेव स्वं पदमामनंतीत्याह परं

यदेतत्तद्देवपरं वैष्णवं पदं स्वरूपमामनंति के अतत्त आत्मव्यतिरिक्तं उत्सिसृक्षवः त्यक्तुमिच्छवः यतः अनन्यसौहृदाः
नास्ति अन्यस्मिन् सौहृदं येषां ते कुतः दौरात्म्यं देहाद्यहंभावं विसृज्य देहे अहंकाराभावादन्यत्र सौहृदं नास्ति अतस्त्यक्तुमि
च्छवइत्यर्थः कथं नेति नेतीत्येवं अतद्विद्वदनुभवमपि प्रमाणयति हृदोपगुह्य ध्यानादिना ततः समाहितैरवसितं निश्चि
तं यद्वा अवसितं अवबद्धं आग्रतया गृहीतमित्यर्थः ३२ एवं प्राप्तावधिकारिणो दर्शयति तएतदिति देहजमहमिति

विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः ३२ तएतदधिगच्छंति वि
ष्णोर्यत्परमं पदं अहंममेति दौर्जन्यं न येषां देहगेहजम् ३३ अतिवादांस्तितिक्षेत नावम
न्येत कंचन नचेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ३४ नमो भगवते तस्मै कृष्णायाकुंठमे
धसे यत्पादांबुरुहध्यानात्संहितामध्यगामिमां ३५ शौनक उवाच पैलादिभिर्व्यास
शिष्यैर्वेदाचार्यैर्महात्मभिः वेदाश्च कतिधा व्यस्ता एतत्सौम्याभिधेहि नः ३६ सूत उवा
च समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते

देहजं ममेति ३३ तत्प्राप्त्युपायमाह अतिवादानिति ३४ शास्त्रसमाप्तौ गुरुं प्रणमति नम इति कृष्णाय व्यासाय अध्य
गां अधिगतवानस्मि ३५ इमां संहितामध्यगामित्युक्तं तत्र पुराणसंहिताविभागविशेषं बुभुत्सुर्वेदविभागमपि प्रसं
गात्पृच्छति पैलादिभिरिति हे सौम्य ३६ तत्र प्रथमं वेदाविर्भावप्रकारमाह समाहितात्मन इत्यष्टभिः ब्रह्मणो
हृदय आकाशात्तस्मान्नादोऽभूत् यः कर्णपुटपिधाने श्रोत्रवृत्तिनिरोधादस्मदादिष्वपि विभाव्यते वितर्क्यते ३७ ॥६॥

प्रसंगान्नादोपासकानां मोक्षफलमाह यस्य नादस्योपासनया आत्मनो मलं धूत्वा अपोह्य कथंभूतं मलं तमाह द्रव्यम
धिभूतं क्रिया अध्यात्मं कारकमधिदैवं एवं त्रिधाभूता आख्यायस्येति तथा तं ३८ त्रिवृत् त्रिमात्रः कंठोष्ठादिभिः उच्चार्य
माणस्योंकारस्याक्षरसमाम्नायांतर्भावात् सूक्ष्मतया तं विशिनष्टि अव्यक्तः प्रभवो यस्य सः तदेवाह स्वराट् स्वत एव हृदि
प्रकाशमानः तमेव कार्येण लक्षयति यत्तदिति नपुंसकत्वं लिंगशब्दविशेषणत्वात् लिङ्गं गमकम् ३९ कोऽसौ परमात्मा त
माह शृणोतीति इमं स्फोटं अव्यक्तमोंकारं ननु जीव एवैतं शृणोतु नेत्याह सुप्तश्रोत्रे कर्णपिधानादिना अवृत्तिकेऽपि श्रो
त्रे सति जीवस्तु करणाधीनज्ञानत्वात् न तदा श्रोता तदुपलब्धिस्तु तस्य परमात्मद्वारिकैवेति भावः ईश्वरस्तु नैवं यतः शून्यदृ

यदुपासनया ब्रह्मन् योगिनो मलमात्मनः द्रव्यक्रियाकारकाख्यं धूत्वा यांत्यपुनर्भवं ३८
ततोऽभूत् त्रिवृदोंकारोऽयोव्यक्तप्रभवः स्वराट् यत्तल्लिंगं भगवतो ब्रह्मणः परमात्मनः ३९
शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् येन वाक् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ४०
स्वधाम्नो ब्रह्मणः साक्षात् वाचकः परमात्मनः स सर्वमंत्रोपनिषद्वेदबीजं सनातनं ४१ ॥

क्व शून्येऽपीन्द्रियवर्गे दृक् ज्ञानं यस्य स यथा हि सुप्तो यदा शब्दं श्रुत्वा प्रबुध्यते न तदा जीवः श्रोता लीनेन्द्रियत्वात् अतो य
स्तदा शब्दं श्रुत्वा जीवं प्रबोधयति स यथा परमात्मैवं तद्वत् कोऽसावोंकारः तं विशिनष्टि सार्द्धेन येन नष्टि वाक् दृह
ती व्यज्येन यस्य च स्वस्याकाशे आत्मनः सकाशाद्व्यक्तिः अभिव्यक्तिः ४० किंच स्वधाम्नः स्वस्याश्रयः कारणं यत् ब्र
ह्मतस्य किंच परमात्मांशभूत समस्तदेवतावाचकोऽपीत्याशयेनाह स इति सर्वे मंत्राणामुपनिषद्रहस्यं सूक्ष्मरूप
मित्यर्थः तत्र हेतुः वेदानां बीजं कारणं बीजत्वेऽप्यविकारितामाह सनातनं सदैकरूपं तस्य ब्रह्मरूपत्वात् ४१ ॥६॥

इदानींततः सर्वप्रपंचोत्पत्तिप्रकारमाह तस्यहीति त्रयस्त्रिसंख्यायुक्ताः भावाः यैरकारमकारैर्धार्यं तेतत्कारणत्वात् तानेवाह गुणाः सत्वादयः नामानिऋग्यजुःसामानि अर्थाभूर्भुवःस्वर्लोकाः वृत्तयोजाग्रदाद्याः ४२ ततस्तेभ्योवर्णेभ्यः अक्षराणांसमाम्नायंसमाहारंतमेवाह अंतस्थाः यरलवाः ऊष्माणः शषसहाः स्वराः अकाराद्याः स्पर्शाःकादयः ह्रस्वदीर्घाश्च आदिशब्दाज्जिह्वामूलीयादयः तएवलक्षणंस्वरूपंयस्यतं ४३ विभुः चतुर्मुखस्वरूपोभगवान्।

तस्यह्यासंस्त्रयोवर्णाअकाराद्याभृगूद्वह धार्यंतेयैस्त्रयोभावागुणानामार्थवृत्तयः ४२ ततोक्षरसमाम्नायमसृजद्भगवानजः अंतस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणं ४३ तेनासौचतुरोवेदांश्चतुर्भिर्वदनैर्विभुः सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ४४ पुत्रानध्यापयत्तांस्तुब्रह्मर्षीन्ब्रह्मकोविदान् तेतुधर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ४५ तेपरंपरयाप्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः चतुर्युगेष्वथव्यस्ताद्वापरादौमहर्षिभिः ४६ क्षीणायुषः क्षीणसत्वान्दुर्मेधान्वीक्ष्यकालतः वेदान्ब्रह्मर्षयोव्यस्यन्हृदिस्थाच्युतनोदिताः ४७

असृजदितिपूर्वस्यैवानुषंगः चातुर्होत्रविवक्षयाचत्वारोहोत्रोपलक्षिताऋत्विजश्चतुर्होतारः तैरनुष्ठेयंहोत्राध्वर्य्वादिकंकर्म्मचातुर्होत्रंतद्विवक्षया ४४ पुत्रान्मरीच्यादीन्तान्वेदान् ब्रह्मकोविदान्वेदोच्चारणादिनिपुणान् ४५ एवंचतुर्युगेषुप्राप्ताः द्वापरादौद्वापरमादिर्यस्यतदंत्यांशलक्षणस्यकालस्यतस्मिन् द्वापरांतेवेदविभागप्रसिद्धेः शंतनुसमकालव्यासावतारप्रसिद्धेश्च व्यस्ताविभक्ताः ४६ तत्रहेतुः क्षीणायुषोजनान् तर्हिपुरुषबुद्धिप्रभवत्वादनादरणीयं

एवंसामान्यतोवेदविभागमुक्त्वावैवस्वतमन्वंतरेविशेषतोनिरूपयितुमाह अस्मिन्नपीति ४८ अंशोमायातस्यांशः सत्वंतस्यकलयाअंशेनअवतीर्णःसन् ४९ चातुर्विध्यमेवाह ऋगिति ऋगादिमंत्राणांराशीन्वर्गशः तत्तत्प्रकरणभेदैरुद्धृत्य यथाऽनेकविधमणिराशेःमणिगणाःपद्मरागादयोविविच्योद्ध्रियंते तद्वदुद्धृत्यतैर्मंत्रैश्चतस्रःऋगादिसंहितायश्चक्रे ५० तासांसंहितानांमध्येएकैकाम् ॥ ॥ ५१ ॥ ॥ऋक्समुदायरूपत्वात्बह्वृचाख्याम् नि

अस्मिन्नप्यंतरेब्रह्मन्भगवाँल्लोकभावनः ब्रह्मेशाद्यैर्लोकपालैर्याचितोधर्मगुप्तये ४८
पराशरात्सत्यवत्यामंशांशकलयाविभुः अवतीर्णोमहाभागवेदंचक्रेचतुर्विधम् ४९
ऋगथर्वयजुःसाम्नांराशीनुद्धृत्यवर्गशः चतस्रःसंहिताश्चक्रेमंत्रैर्मणिगणाइव ५०
तासांसचतुरःशिष्यानुपाहूयमहामतिः एकैकांसंहितांब्रह्मन्नेकैकस्मैददौविभुः ५१
पैलायसंहितामाद्यांबह्वृचाख्यामुवाचह वैशंपायनसंज्ञायनिगदाख्यंयजुर्गणम् ५२
साम्नांजैमिनयेप्राहतथाछंदोगसंहिताम् अथर्वांगिरसींनामस्वशिष्यायसुमंतवे ५३
पैलःस्वांसंहितामूचइंद्रप्रमितयेमुनिः बाष्कलायचसोप्याहशिष्येभ्यःसंहितांस्वकाम् ५४

गदांप्रश्लेषेणगद्यमानत्वात्निगदाख्यम् ५२ छंदःसुगीयमानत्वात्छंदोगाख्यांसंहि॥ ताम् ॥ ५३ ॥ तत्रऋग्वेदशाखाविभागमाह पैलइति स्वसंहितांद्विधाविभज्य इंद्रप्रमितयेबाष्कलायच

भा० द्वा० २१

तद्वाष्कलोपिस्वसंहितांचतुर्धाव्यस्य बोध्यादिभ्यः शिष्येभ्यआह हेभार्गव ५५ इंद्रप्रमितिरपिस्वांसंहितांस्वसुतंमांडूकेयमध्यापयामास तस्यमांडूकेयस्यशिष्योदेवमित्रः ५६ तत्सुतःमांडूकेयसुतः शाकल्योवात्स्यादिषुपंचस्वधात् तानध्यापयामासेत्यर्थः ५७ तच्छिष्यःशाकल्यशिष्यः स्वसंहितांत्रेधाविभज्यचतुर्थवैदिकपदार्थव्याख्यानरूपंनिरुक्तं

चतुर्धाव्यस्यबोध्याययाज्ञवल्क्यायभार्गव पराशरायाग्निमित्रेइंद्रप्रमितिरात्मवान् ५५
अध्यापयत्संहितांस्वां मांडूकेयमृषिंकविम् तस्यशिष्योदेवमित्रःसौभर्यादिभ्यऊचिवान् ५६ शाकल्यस्तत्सुतस्तांतुपंचधाव्यस्यसंहिताम् वात्समुद्गलशालीयगोखल्यशिशिरेष्वधात् ५७ जातूकर्ण्यश्चतच्छिष्यःसनिरुक्तांस्वसंहिताम् बलाकपैजवैतालविरजेभ्योददौमुनिः
बाष्कलिःप्रतिशाखाभ्योवालखिल्याख्यसंहिताम् चक्रेवालायनिर्भज्यकासारश्चैवतांदधुः ५९ बह्वृचाःसंहिताह्येताएभिर्ब्रह्मर्षिभिर्धृताः श्रुत्वैतच्छंदसांव्यासंसर्वपापैःप्रमुच्यते ६० वैशंपायनशिष्यावैचरकाध्वर्यवोऽभवन् यच्चेरुर्ब्रह्महत्यांऽहःक्षपणंस्वगुरोर्व्रतम् ६१॥

चकार बलाकादिभ्यश्चतुर्भ्योददौ ५८ बाष्कलिः पूर्वोक्तस्यबाष्कलस्यपुत्रः प्रतिशाखाभ्यः उक्तसर्वशाखाभ्यः बालखिल्याख्यसंहितामादधुः अधीतवंतः ५९ ऋक्शाखोपसंहारपूर्वकंतच्छ्रवणफलमाहबह्वृचाइति एतच्छंदसामेतेषांछंदसाम् ६० यजुर्वेदतैत्तिरीयशाखोत्पत्तिप्रस्तावमाह वैशंपायनशिष्याइत्यादिना चरकनामनिरुक्तमाह यच्चेरुरिति यद्यस्मात्

तच्छिष्यः वैशंपायनशिष्यः अल्पसाराणामेतेषांचरितेनकियत् सुदुश्चरमहंचरिष्यामीति ६२ विप्राणामवमंत्राअव
ज्ञाकर्त्तामत्तोधीतमाशुत्यजेति ६३ देवरातसुतोयाज्ञवल्क्यः ६४ छर्दितस्यादानंविप्ररूपेणानुचितमितितित्तिराः पक्षि
विशेषाःभूत्वाआददुः ततस्तेतैत्तिरीयाइतिप्रसिद्धाः सुपेशलाः अतिरम्याःवहुवचनमवांतरभेदविवक्षया ६५ कारावमा

याज्ञवल्क्यश्चतच्छिष्यआहाहोभगवन्कियत् चरितेनाल्पसाराणांचरिष्येहंसुदुश्चरं ६२
इत्युक्तोगुरुरप्याहकुपितोयाह्यलंत्वया विप्रावमंत्राशिष्येणमदधीतंत्यजाश्विति ६३ देव
रातसुतःसोपिछर्दित्वायजुषांगणं ततोगतोथमुनयोददृशुस्तान्यजुर्गणान् ६४ यजूंषि
तित्तिराभूत्वातल्लोलुपतयाददुः तैत्तिरीयाइतियजुःशाखाआसन्सुपेशलाः ६५ याज्ञव
ल्क्यस्ततोब्रह्मन्छंदांस्यधिगवेषयन् गुरोरविद्यमानानिसूपतस्थेर्कमीश्वरं ६६ याज्ञव
ल्क्यउवाच ॐनमोभगवतेआदित्यायाखिलजगतामात्मरूपेणकालस्वरूपेणचचतुर्वि
धभूतनिकायानांब्रह्मादिस्तंवपर्यंतानामंतर्हृदयेषुवहिरपिचा ऽऽ ध्यंदिनादिशाखाप्रसंगमाह

याज्ञवल्क्यइत्यादिना गुरोर्वैशंपायनस्यव्यासेनविभज्यानुक्तत्वादविद्यमानानि अधिकानिगवेषयत् सूपतस्थे
सम्यक्तुष्टावईश्वरमृगादिवेदानां तथाचश्रुतिः ऋग्भिः पूर्वाह्णेदिविदेवईयते यजुर्वेदेनुतिष्ठतिमध्येअहः
सामवेदेनास्तमयेमहीयते वेदैरशून्यस्त्रिभिरेतिसूर्यइति ६६ नमोभगवतेतुभ्यंआदित्याययोभवानेकएवमोलोक

६
भा०टी०
२२

तरेवदर्शयति अखिलजगतामात्मस्वरूपेणांतर्हृदयेषुकालस्वरूपेणचवहिरपिवर्त्तमानइति अखिलजगतामि
त्यस्यप्रपंचः चतुर्विधेति हृदयांतर्वर्त्तित्वेपिजीववर्त्तनोपाधि[illegible]ऽव्यवधीयमानः अनाच्छाद्यमानः कालस्वरूपेणचेम
त्यस्यप्रपंचः क्षणेति क्षणलवादयोयेऽवयवास्तैरुपचिताः संवत्सरास्तेषांगणेनप्रत्यब्दमपामादानंशोषणंविसर्गोवृष्टि
स्ताभ्यां अनेनगायत्रीप्रथमपादोक्तवरेण्यतानुवर्णिता ६७ द्वितीयपादार्थानुवर्णनेनस्तौति यदुहेति हेविवुधर्षभ हेसवि
तः यदप्यदोभगवतस्तवमंडलंतपतितत्समभिधीमहिसम्यगाभिमुख्येनध्यायेमपुनस्तस्यैवसंबोधनं प्रत्यहं त्रिषवणंवै

कालरूपोपाधिनाव्यवधीयमानोभगवानेकएवक्षणलवनिमेषावयवोपचितसंवत्सरगणे
नापामादानविसर्गाभ्यामिमांलोकयात्रामनुवहति ६७ यदुहवावविवुधर्षभसवितरदस्त
पत्यऽनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनवीजावभर्जनभगव
तः समभिधीमहितपनमंडलं ६८ यइहवावस्थिरचरनिकराणांनिज[illegible]निकेतनानांमनइं
द्रियासुगणाननात्मनः स्वयमात्मांतर्यामीप्रचोदयति ६९ यएवमेनंलोकमतिकरालवदनां
धकारसंज्ञाजगरग्रहगिलितंमृतकमिवविचेतनमवलोक्याऽऽदिककर्म्ममार्गेणस्तुवतांभक्तानांयान्य

खिलानिदुरितानितत्फलानिचवृजिनानिदुःखानितेषांवीजमज्ञानंचतेषामवभर्ज्जनविनाशकहेतपनेति ६८ तृतीय
पादेनस्तौतियइहेतियोभगवान् स्थावरजंगमसमूहानांस्वाश्रयाणांजीवानांमनइंद्रियप्राणगणान् अनात्मनोजडान्स्वयमा
त्मैवांतर्यामीसन्प्रचोदयतिप्रवर्त्तयति ६९ तृतीयपादमेवमंडलस्यपरतयाव्याचक्षाणःस्तौति यएवेति यएकएवभगवा

अतिकरालवदनो योंधकारसंज्ञोऽजगरग्रहस्तेन गिलितं अत एव मृतकमिव विचेतनं स्वधर्माख्यं यदात्मावस्था-
नं प्रत्यक्प्रवणत्वं तदेव श्रेयस्तस्मिन्प्रवर्त्तयति किंच यो भवानवनिपंतिरिवाटति गच्छति ७० आशापालैरिंद्रा-
दिभिः कमलकोशयुक्तैस्तत्तुल्यैर्वांऽजलिभिः उपहृतार्हणः दत्तार्घः ७१ यत एवंभूतस्त्वं अथ अतः हस्फुटं अयात

ऽनुकंपया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मा
वस्थाने प्रवर्त्तयत्यऽवनिपतिरिवासाधूनां भयमुदीरयन्नटति ७० परितआशापालै
स्तत्रतत्र कमलकोशांजलिभिरुपहृतार्हणः ७१ अथह भगवंस्तव चरणनलिनयुग
लं त्रिभुवनगुरुभिर्वंदितमहमयातयामयजूःकाम उपसरामीति ७२ सूत उवाच एवं
स्तुतः स भगवान्वाजिरूपधरो हरिः यजूंष्ययातयामानि मुनयेदात्प्रसादितः ७३
यजुर्भिरकरोच्छाखा दश पंच शतैर्विभुः जगृहुर्वाजसन्यस्ताः काण्वमाध्यंदिनादयः ७४
जैमिनेः सामगस्यासीत्सुमंतुस्तनयो मुनिः सुत्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम्

यामानि अन्यैर्यथावदविज्ञातानि यजूंषि तत्कामोऽहं उपसरामि भजामि ७२ एवं स्तुतः प्रसादितश्च ॥ ७३ पंचदश
शाखाः याः शतैरपरिमितैर्यजुर्भिरकरोत् सतैरिति पाठे स एष याज्ञवल्क्यः तैर्यजुर्भिरकरोदिति जगृहुः अधीतवतः रविणा
अश्वरूपेण वाजेभ्यः केसरेभ्यः वाजेनच्छाखा दश पंच शतैर्विभुः वेगेन वा सन्यस्ताः त्यक्ताः शाखाः वाजसनी संज्ञास्ताः शाखा इति वा ७४ सामश

शाखिनः सुमंतुः सुमंतुः तत्सुतः सुत्वा जैमिनिरिति सामगाः
पुत्रपौत्राभ्यामेकैकां प्राह ७५ ॥

तच्छिष्यः जैमिनेः शिष्यः महान् अतिमेधावी सहस्रं संहितारूपं भेदं चक्रे साम्नां तं संहिताभेदं ततस्तदनंतरं ७६ सुकर्मणः शिष्यो एकः कौशल्यो हिरण्यनाभः पौष्यंजिर्नामैकस्तौ जगृहतुः आवंत्यश्चान्यः तस्यैव शिष्यः सोऽपि जग्राह ७७ पौष्यंज्यावंत्ययोरपि चकारात् हिरण्यनाभस्यापि पंचशतानि शिष्या आसन् तेतावतीः शाखा यथाय पंजगृहुः तानुदीच्यान्सतः कालतः कांश्चित् प्राच्यांश्च प्रचक्षत इत्यर्थः यथोवोक्तं वै सर्वे उदीच्याः सामगाः शि

सुकर्मी वापि तच्छिष्यः सामवेदतरोर्महान् सहस्रसंहिताभेदं चक्रे साम्नां ततो द्विजः ७६ हिरण्यनाभः कौशल्यः पौष्यंजिश्च सुकर्मणः शिष्यो जगृहतुश्चान्य आवंत्यो ब्रह्मवित्तमः ७७ उदीच्याः सामगाः शिष्या आसन्पंचशतानि वै पौष्यंज्यावंत्ययो श्चापि तांश्च प्राच्यान्प्रचक्षते ७८ लौगाक्षिर्मांगलिः कुल्यः कुशीदः कुक्षिरेव च पौ ष्यंजिशिष्या जगृहुः संहितास्ते शतं शतं ७९ कृतो हिरण्यनाभस्य चतुर्विंशति संहिताः शिष्य ऊचे स्वशिष्येभ्यः शेषा आवंत्य आत्मवान् ८० ॥ इति श्रीभागवते महापुराणे द्वादशस्कंधे वेदशाखाप्रणयनं नाम षष्ठोऽध्यायः ६ ॥ ष्यास्तस्य पंचशतं स्मृताः हिरण्यनाभा त्तावत्यः संहिता ये द्विजोत्तमैः गृहीतास्ते ऽपि चोच्यंते पंडितैः प्राच्यसामगा इति ७८ पुनरप्येतेषां त्रयाणां सुकर्म्म णः शिष्याणां शिष्यांतरैः शाखा बाहुल्यं दर्शयति लौगाक्षिरिति द्वाभ्यां ७९ कृतो नाम हिरण्यनाभस्य शिष्यः स्वशि ष्येभ्यः ऊचे शेषाः अन्या आपि याः प्रसिद्धाः शाखाः ता आवंत्यः स्वशिष्येभ्यः ऊच इति ८० इति श्रीभागवते महापु

राणे द्वादशस्कंधे टीकायां षष्ठोऽध्यायः ६

सप्तमेऽथर्ववेदविस्तारः पुराणव्यसनं ततः पुराणलक्षणादीनि फलं भागवतश्रुतेः १ क्रमप्राप्तमथर्ववेदविभागमाह शिष्यं
कबंधनामानं स्वकां स्वकीयां संहितां सोपि शिष्यो पितां द्विधा विभज्य तदुक्तं वैसवेथ्यथर्ववेदं समुनिः सुमंतुरमितद्युतिः
शिष्यमध्यापयामास कबंधं सोऽपि तं द्विधा कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवानिति १ तत्र वेददर्शः स्वसंहितां चतुर्द्धा विभ
ज्य चतुरः शिष्यानध्यापयामास पथ्यश्च त्रिधा विभज्य त्रीनिति सार्द्धेनाह शौल्कायनिरिति २ आंगिरसः शुनकस्य

सूत उवाच अथर्ववित्सुमंतुश्च शिष्यमध्यापयत्स्वकां संहितां सोपि पथ्याय वेददर्शाय
चोक्तवान् १ शौल्कायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः वेददर्शस्य शिष्यास्ते पथ्यशि
ष्यानथो शृणु कुमुदः शुनको ब्रह्मन् जाजलिश्चाप्यथर्ववित् २ बभ्रुः शिष्योऽथांगिरसः
सैंधवायन एव च अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथापरे ३ नक्षत्रकल्पः शांतिश्च कश्य
पांगिरसादयः एते आथर्वणाचार्याः शृणु पौराणिकान्मुने ४ त्रय्यारुणिः कश्यपश्च
सावर्णिरकृतव्रणः वैशंपायनहारीतौ षड्वै पौराणिका इमे ५ अधीयंत व्यासशिष्यात् सं

शिष्यो बभ्रुः सैंधवायनश्च तदुक्तं शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे द्वितीयां सं हितां मत्पितुर्मुखात् ॥
संहितां प्रादात् सैंधवायनसंज्ञिन इति सावर्ण्याद्याः सैंधवायनादीनां शिष्याः ३ नक्षत्रकल्पः शांतिकल्पश्चेति द्वौ तदुक्तं
नक्षत्रकल्पो वेदानां संहितानां तथैव च चतुर्थः स्यादांगिरसः शांतिकल्पश्च पंचम इति नक्षत्रकल्पादीनां कर्तारस्तन्नामभि
रुच्यंते ४ । ५ मत्पितुर्मुखादिति प्रथमं व्यासः षट् संहिताः कृत्वा मत्पित्रे रोमहर्षणाय प्रादात् ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

भा॰द्वा॰ ७५ १२

तस्य च सुखादेते त्रय्यारुण्यादयः एकैकां संहितामधीयंत एतेषां षण्णां शिष्यो ऽहं ताः सर्वाः समधीतवान् ६ रामशिष्यो ऽकृतव्रणः एवं चत्वारो वयं मूलसंहिता इत्यनेन ततः संहिताबाहुल्यं सूचितं ७ शुकपरीक्षित्संवादे निरूपितमपि पुराणलक्षणं तद्भेदकथनाय दर्शयति पुराणेति ८ अस्य विश्वस्य अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः मन्वंतरेशानुकथा निरोधो मुक्तिराश्रय इत्यत्रोक्तैः स्थानपोषणे वृत्तिरक्षाशब्दाभ्यामुच्येते अंतराणि मन्वंतराणि वंशो वंश्यानुचरितमि

एकैकामहमेतेषां शिष्यः सर्वाः समध्यगां ६ कश्यपो ऽहं च सावर्णी रामशिष्यो ऽकृतव्रणः अधीमहि व्यासशिष्याच्चत्वारो मूलसंहिताः ७ पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितं शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ८ सर्गो ऽस्याथ विसर्गश्च वृत्तिरक्षांतराणि च वंशो वंश्यानुचरितं संस्था हेतुरपाश्रयः ९ दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः केचित्पंचविधं ब्रह्मन् महदल्पव्यवस्थया ॥ १० अव्याकृतगुणक्षोभान्महतस्त्रिवृतो ऽहमः ॥ ७७ ॥ २ ॥ २ ॥ २ ॥ २ ॥ २ ॥ २ ॥

इति च ईशानुकथाः संस्था निरोधः अनेनैवात्यंतिकलयरूपा मुक्तिरप्युक्ता हेतुशब्देन जीवाश्रयवासनाशब्दवाच्याउ तयोर्गृहीता ९ दशभिरेतैर्लक्षणैरर्थैर्युक्तं महापुराणं विदुः केचित्पंचविधं सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च वंशानुचरितं चेति पुराणं पंचलक्षणमिति महापुराणं अल्पं चेति व्यवस्थया यत्र दशापि लक्षणानि पृथक् निरूप्यंते तन्महापुराणं यत्र त्वन्येषां पंचस्वेवांतर्भावस्य विवक्षा तदल्पमिति व्यवस्थयेत्यर्थः १० सर्गादिलक्षणानि व्याचष्टे अव्याकृतेत्यादिना प्रधानस्य गुणानां क्षोभात् यो महान् तस्मा

॥ श्रीभागवत ॥ १२ ॥ टी॰ ॥ अ॰

भूतमात्राणां सूक्ष्माणां इंद्रियाणां च तदर्थानां च स्थूलानां देवतानां च संभवः सर्गः कारणसृष्टिः सर्ग इत्यर्थः उच्यत
इति यथापेक्षमुत्तरत्राप्यनुषंगः ११ विसर्गं व्याचष्टे पुरुषेणेश्वरेणानुगृहीतानां एतेषां महदादीनां पूर्वकर्मवासनाप्र
धानोऽयं समाहारः कार्यभूतश्चराचरप्राणिरूपो वीजमिव प्रवाहापन्नो विसर्ग उच्यत इत्यर्थः १२ चराणां भूतानां सा
मान्यतोऽचराणि च काराच्चराणि च कामाद्वृत्तिः तत्र तु नृणां स्वेन स्वभावेन कामाच्चोदनया पिवा यानियता चराणां भूत

भूतसूक्ष्मेंद्रियार्थानां संभवः सर्ग उच्यते ११ पुरुषानुगृहीतानामेतेषां वासनामयः
विसर्गोयं समाहारो वीजाद्वीजं चराचरं १२ वृत्तिर्भूतानि भूतानां चराणामचराणि च
कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा १३ रक्षाऽच्युतावतारेहा विश्वस्यानु युगे युगे
तिर्यङ्मर्त्यर्षिदेवेषु हन्यंते यैस्त्रयीद्विषः १४ मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वरः ऋ
षयोंशावतारश्च हरेः षड्विधमुच्यते १५ राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोन्वयः वंश्या
नुचरितं तेषां वृत्तं वंशधराश्च ये १६ ॥ नां सामान्यतो वृत्तिर्जीविका कृता सा वृत्तिरुच्यत इत्यर्थः

१३ तिर्यङ्मर्त्यर्षिदेवेषु येऽच्युतावताराः तेषामीहा लीलाः सा विश्वस्य रक्षोच्यत इत्यर्थः यैरवतारैरिति समा
सान्निष्कृष्य कथंचित्संबंधः त्रयीद्विषो दैत्याः १४ षड्विधं मन्वंतरमुच्यते षड्विधत्वमेवाह मनुरिति मन्वाद
यः षडेते वर्गाः स्वस्वाधिकारेण यदा प्रवर्तंते तन्मन्वंतरमित्यर्थः १५ वंशमाह राज्ञामिति ब्रह्मणः सकाशात्प्रसू
तीर्येषां शुद्धानामित्यर्थः तेषामन्वयो वंशः तत्र भवा वंश्याः तेषां वृत्तं ये च तत्तद्वंशधरास्तेषां च वृत्तं वंश्यानुचरि

भा० द्वा
२५

स्य विश्वस्य स्वभावतो मायातो निष्पन्नस्य यद्वा मायातश्चतुर्विधो लय इति १७ अस्य जगतः सर्गादेर्हेतुर्नि
मित्तं जीवः सोऽत्र हेतुरुच्यत इत्यर्थः तस्य निमित्ततामाह अविद्ययाकर्म्मकारकः कर्मकर्त्ता जीवा दृष्टप्रयुक्तत्वा
च्चैतन्य द्विश्वसर्गादेः स तु तत्र हेतुरित्यर्थः नन्वनुशयी निमित्तमिति केचित् अव्याकृतमित्यपरे तत्राह यमीति चैतन्य
प्राधान्येनानुशयिनं उपाधिप्राधान्यविवक्षया अव्याकृतं १८ अपाश्रयमाह व्यतिरेकेति जाग्रदादिष्ववस्था
सु जीवतया वर्त्तत इति जीवस्तत्तयो विश्वतैजसप्राज्ञास्तेषु मायामयेषु साक्षितयाऽन्वयः समाध्यादौ च व्यतिरेको य

नैमित्तिकः प्राकृतिको नित्य आत्यंतिको लयः संस्थेति कविभिः प्रोक्ता चतुर्द्धास्य स्व
भावतः १७ हेतुर्जीवोस्य सर्गादेरविद्याकर्म्मकारकः यं वानुशयिनं प्राहुरव्याकृत
मुतापरे १८ व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु मायामयेषु तद्ब्रह्म जीववृत्ति
ष्वपाश्रयः १९ पदार्थेषु यथा द्रव्यं सन्मात्रं रूपनामसु वीजादिपंचतांतासु ह्यवस्था
सु युतायुतं २० विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयं ॥ ऽऽस्य तद्ब्रह्म संसारप्रतीतिबाधयोर
धिष्ठानावधिभूतमपाश्रय उच्यत इत्यर्थः १९ तदेव सदृष्टांतं प्रपंचयति पदार्थेषु घटादिषु द्रव्यं मृदादि यथा
युतं अन्वितं अयुतं च वहिरप्यवस्थानात् रूपनामसु च सन्मात्रं सत्तामात्रं यथा एवं वीजं गर्भाधानमादिर्यासां प
चता अंतो यासां तासु देहावस्थासु नवस्वपि अधिष्ठानत्वेन साक्षित्वेन युतं च यत् तदपाश्रय इति २० एवं दशापि ल
क्षणानि व्याख्याय वर्णयंति महात्मान इति यदुक्तं तदाह विरमेतेति यदा सर्गादीनां मायामयत्वानुसंधानेन वामदेवा

इहैवानुष्ठितेनयोगेनवादेवहूत्यादिवततदाविक्षेपाभावादात्मनंवेदतदाचाविद्यानिवृत्तेर्देहायाः संसाररूपायाः
निवर्त्ततइत्यर्थः २१ पुराणविभागप्रस्तावेनतल्लक्षणादिप्रासंगिकमुक्त्वाप्रस्तुतमाह एवंविधैर्लक्षणैर्लक्ष्याणि
२२ २३ त्रिषट्कमष्टादश २४ उपसंहरति ब्रह्मन्निति मुनेर्व्यासस्यशिष्यादीनांच ब्रह्मतेजोब्रह्मवर्चसंतद्विवर्द्धनम्
योगेनवातदात्मानंवेदेहायानिवर्त्तते २१ एवंलक्षणलक्ष्याणिपुराणानिपुराविदः
मुनयोष्टादशप्राहुः क्षुल्लकानिमहांतिच २२ ब्राह्मंपाद्मंवैष्णवंचशैवंलैंगंसगारुडं
नारदीयंभागवतमाग्नेयंस्कांदसंज्ञितं २३ भविष्यंब्रह्मवैवर्त्तमार्कंडेयंसवामनं वारा
हंमात्स्यंकौर्म्मंचब्रह्मांडाख्यमितित्रिषट् २४ ब्रह्मन्निदंसमाख्यातंशाखाप्रणयनंमुनेः
शिष्यशिष्यप्रशिष्याणांब्रह्मतेजोविवर्द्धनं २५ ॥ इतिश्रीभागवतेमहापुराणेद्वादशे
सप्तमोध्यायः ७ ॥ शौनकउवाच सूतजीवचिरंसाधोवदनोवदतांवर तमस्यपारेरस्त्र
मतांनृणांत्वंपारदर्शनः १ आहुश्चिरायुषमृषिंमृकंडुतनयंजनाः ॥ ऽऽ तूर्णामितिशेषः २५
इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांसप्तमोध्यायः ७ अष्टमेतुतपश्चर्यामार्कंडेयस्यमोहकैः कामा
दिभिरसंमोहोनरनारायणस्तुतिः १ पुराणविभागप्रसंगेनपुराणकर्तुर्मार्कंडेयस्यचरितंप्रस्तुतमाह सूतेतित्वमेववक्
तुंयोग्यइत्याह तमसिसंसारेमतांपारदर्शनस्तन्निवर्त्तकः १ वक्तव्यमाह आहुरितिउर्वरितः अवशिष्टः ॥ ६ ॥ ६ ॥

येनकल्पांतेनएतत्कथंघटतइत्येकः प्रश्नः २ प्रलयाभावादप्येतन्नघटतइत्याह सवाइति यतोभार्गवर्षभःकोपि प्राकृतिकोनैमित्तिकोवा ३ अन्यदप्यघटितमेवेत्याह एकएवेति तोकंवालकं ४ कौतूहलं औत्सुक्यं तंसंशयंन केवलंत्वंमहायोगीकिंतुपुराणेष्वपिज्ञातृत्वेनसंमतः ५ प्रश्नमभिनंदति हेमहर्षे अयंप्रश्नः तत्रहेतुः नारायणेतिय

यःकल्पांतेउर्व्वरितोयेनग्रस्तमिदंजगत् २ सवाअस्मत्कुलोत्पन्नःकल्पेस्मिन्भार्गवर्षभः नैवाधुनापिभूतानांसंप्लवःकोपिजायते ३ एकएवार्णवेभ्राम्यन्ददर्शपुरुषंकिल वटपत्रपुटेतोकंशयानंत्वेकमद्भुतं ४ एषनःसंशयोभूयान्सूतकौतूहलंयतःतंनश्छिंधिमहायोगिन्पुराणेष्वपिसंमतः ५ सूतउवाच प्रश्नस्त्वयामहार्षयंकृतोलोकभ्रमापहः नारायणकथायत्रगीताकलिमलापहा ६ प्राप्तद्विजातिसंस्कारोमार्कंडेयःपितुःक्रमात् छंदांस्यधीत्यधर्मेणतपःस्वाध्यायसंयुतः ७ वृहद्व्रतधरःशांतोजटिलोवल्कलांवरः विभ्रत्कमंडलुंदंडमुपवीतंसमेखलं ८ कृष्णाजिनसाक्षसूत्रंकुशांश्चनियमर्द्धये अग्न्यर्कगुरुविप्रात्मस्वर्चयन्संध्ययोर्हरिं ९ ॥ अत्रप्रश्नविषये ६ तत्रमार्कंडेयस्तपसा भगवंतमाराध्यमायाप्रदर्शनंवव्रे ततश्चतेनैवभगवन्माययासप्तकल्पादृष्टाः नान्यैरित्युक्तंखकुमादित आरभ्यतस्य चरितमहा प्राप्तेत्यादिनामार्कंडेयोमृत्युंजिग्यइतिपंचमश्लोकेनान्वयः मध्यमग्रंथेनतस्यधर्मःकथ्यतेप्राप्तेतिद्विजातिसंस्कारः उपनयनाख्योयेनसः पितुःसकाशात्गर्भाधानादिक्रमात्छंदांसिवेदान् ७ वृहद्व्रतधरःनैष्ठिकःब्रह्मचारीसन्

भैक्ष्यंगुर्वर्थमाहृत्यतेनानुज्ञातश्चेत्तर्हिबुभुजेनोचेत्सकृत्कदाचिदुपोषितोभवति १० ११ तेनमृत्युंजयेन १२ ध्वस्ताः
क्लेशारागादयोयस्यतेन अंतरात्मनाप्रत्याहृतेनमनसा १३।१४ तस्यतपोनिष्ठामितिहासेनवर्णयति एतदित्यादिना

सायंप्रातःसगुरवेभैक्ष्यमाहृत्यवाग्यतः बुभुजेगुर्वनुज्ञातःसकृन्नोचेदुपोषितः १० एवं
तपःस्वाध्यायपरोवर्षाणामयुतायुतं आराधयन्हृषीकेशंजिग्येमृत्युंसुदुर्जयं ११
ब्रह्माभृगुर्भवोदक्षोब्रह्मपुत्राश्चयेऽपरे नृदेवपितृभूतानितेनासन्नतिविस्मिताः १२ इ
त्थंबृहद्व्रतधरस्तपःस्वाध्यायसंयमैः दध्यावधोक्षजंयोगीध्वस्तक्लेशांतरात्मना १३
तस्यैवंयुंजतश्चित्तंमहायोगेनयोगिनः व्यतीयायमहान्कालोमन्वंतरषडात्मकः १४
एतत्पुरंदरोज्ञात्वासप्तमेस्मिन्किलांतरे तपोविशंकितोब्रह्मन्नारेभेतद्विघातनं १५ गं
धर्वाप्सरसःकामंवसंतमलयानिलौ मुनयेप्रेषयामासरजस्तोकमदौतदा १६ तेवै
तदाश्रमंजग्मुर्हिमाद्रेःपार्श्वउत्तरे पुष्पभद्रानदीयत्रचित्राख्याचशिलाविभो १७ तदा
श्रमपदंपुण्यंपुण्यद्रुमलताचितं पुण्यद्विजकुलाकीर्णंपुण्यामलजलाशयं १८ ॥६

अस्मिन्सप्तमेमन्वंतरेतपसामत्पदंग्रहीष्यतीतिविशंकितः १५ मुनयेमुनिंभ्रंशयितुंरजसस्तोकं अतिंयमपत्यंलोभःमदश्च
तौ १६ १७ तदाश्रमपदंप्रविष्टोवायुर्ववावितितृतीयेनान्वयः पुण्यैर्द्रुमैर्लताभिश्चांचितंपूजितं पुण्यद्विजानामृषीणांकुले

मत्तभ्रमराणां संगीतं यस्मिन् मत्तकोकिलानां कूजितं यस्मिन् मत्तबर्हिण एव नटास्तेषामाटोपः संभ्रमो यस्मिन् मत्तद्विजानां पक्षिणां कुलैराकुलं व्याप्तं १९ एवंभूतं तदाश्रमपदं प्रविष्टः सन् वायुर्मलयानिलो ववौ प्रससार उत्तंभयन् उद्दीपयन् तत्र वृक्षेषु प्रवेशान् मांद्यं हिमनिर्झरशीकराणामादानात् शैत्यं पुष्पापरिष्वंगात् सौगंध्यं चोक्तं २० किंच उद्यच्चं

मत्तभ्रमरसंगीतं मत्तकोकिलकूजितं मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलं १९ वायुः प्रविष्ट आदाय हिमनिर्झरशीकरान् सुमनोभिः परिष्वक्तो ववावुत्तंभयन् स्मरं २० उद्यच्चंद्रनिशावक्त्रः प्रवालस्तवकालिभिः गोपद्रुमलताजालैस्तत्रासीत्कुसुमाकरः २१ अन्वीयमानो गंधर्वैर्गीतवादित्रयूथकैः अदृश्यतात्तचापेषुः स्वः स्त्रीयूथपतिः स्मरः २२ हुत्वाग्निं समुपासीनं ददृशुः शक्रकिंकराः मीलिताक्षं दुराधर्षं मूर्त्तिमंतमिवानलं २३ ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः मृदंगवीणापणवैर्वाद्यं चक्रुर्मनोरमं २४ संदधेऽस्त्रं स्वधनुषि कामः पंचमुखं तदा मधुर्मनो रजस्तोक इंद्रभृत्या व्यकंपयन् २५

द्रं यस्मिन् तन्निशावक्त्रं रजनीमुखं यस्मिन् सः प्रवालस्तवकानामालयः श्रेणयो येषु तैः गुप्यंति विटपैः संश्लिष्यंतीति गोपाद्रुमाः लताश्च तेषां जालैः समूहैः आविर्बभूव २१ किंच तदा गीतवादित्रयूथकैः गायकादिसमुदायिभिः गंधर्वैरन्वीयमानः तथा स्वः स्त्रियोऽप्सरसस्तासां यूथस्य पतिः आत्तं चापमिषुश्च येन स स्मरश्च तत्रादृश्यत २२ दुराधर्षं अभिभवितुमशक्यं २३।२४ शोषणदीपनसंमोहनतापोन्मादनाख्यानि पंचमुखानि यस्य तदस्त्रं संदधे तदैव मधुर्वसंतः रजस्तोकश्च पुत्वमार्षं अन्ये चेंद्रभृत्यास्तस्य मनोव्यकं

॥२६ किंचवायुर्मलयानिलः पुंजिकस्थल्यास्तत्सूक्ष्मंवासोजहार २७ सर्वेतेषांकर्म्मतत्रतस्मिन्मोघंव्यर्थंअनीशस्यनि दैवस्य २८ मुनेरपकुर्वतः प्रतिकूलमाचरतः हेमुने २९ अहमः अहंकारस्यभावंविकारं ३० निस्तेजसंम्लानवदनं स्वरा डिंद्रः ३१ नरनारायणरूपोहरिः ३२ तावनुवर्णयतिद्वाभ्यांताविति गौरवंवल्कलमाजिनंवल्कलंचांवरंययोस्तौपवित्रपाणी

क्रीडंत्याः पुंजिकस्थल्याः कंदुकैः स्तनगौरवात् भृशमुद्विग्नमध्यायाः केशविस्रं। सितस्रजः २६ इतस्ततोभ्रमद्दृष्टेश्चलंत्या अनुकंदुकं वायुर्जहारतद्वासः सूक्ष्मंत्रु टितमेखलं २७ विससर्जतदावाणंमत्वातंस्वजितंस्मरः सर्वंतत्राभवन्मोघमनीश स्ययथोद्यमः २८ तइत्थमपकुर्वंतोमुनेस्तत्तेजसामुने दह्यमानानिववृतुः प्रबोध्या हिमिवार्भकाः २९ इतींद्रानुचरैर्ब्रह्मन्धर्षितोपिमहामुनिः यन्नागादहमोभावंनतत् चित्रंमहत्सुहि ३० दृष्ट्वानिस्तेजसंकामंसगणंभगवान्स्वराट् श्रुत्वानुभावंब्रह्म र्षेर्विस्मयंसमगात्परं ३१ तस्यैवंयुंजतश्चित्तंतपःस्वाध्यायसंयमैः अनुग्रहाया विरासीन्नरनारायणोहरिः ३२ तौशुक्लकृष्णौनवकंजलोचनौचतुर्भुजौरौरववल्क लांवरौ पवित्रपाणीउपवीतकंत्रिवृत्कमंडलुंदंडमृजुंचवैणवं ३३ ॥ ययोस्तौत्रिवृतंत्रिगुणं नवतंतुकमितिवा त्रिवृद्बहिः पवमानमित्यादौनवकेप्रयोगात्इतिनवतंत्वादिमयं ३३॥ ६॥ ६॥ ६॥ ६॥

भा०द्वा० २८

वेदंचदर्भमुष्टिंकिंच साक्षात्तपएवतौतत्रहेतुः तपत्तडिद्वर्णंदीप्यमानविद्युत्संकाशंयतपिशंगंरोचिस्तेनरूपिणौ मूर्तिमंतौताहृक्तेजोयुक्तमूर्तिभ्यांतपोमयत्वेनप्रकाशमानावित्यर्थः प्रांशूउन्नतौ ३४ उच्चैर्म्महताआदरेण ३५ तयोः संदर्शनेनयआनंदस्तेननिर्वृत्ताउपशांताआत्मेंद्रियाशयादेहेंद्रियमनांसियस्यसः नसेहेनाशक्नोत ३६ आश्लि

पद्माक्षमालामुतजंतुमार्ज्जनंवेदंचसाक्षात्तपएवरूपिणौ तपत्तडिद्वर्णपिशंगरो चिषाप्रांशूदधानौविबुधर्षभार्चितौ ३४ तेवैभगवतोरूपेनरनारायणावृषी दृष्ट्वो त्थायादरेणोच्चैर्न्ननामांगेनदंडवत ३५ सतत्संदर्शनानंदनिर्वृत्तात्मेंद्रियाशयः हृ ष्टरोमाश्रुपूर्णाक्षोनसेहेतावुदीक्षितुं ३६ उत्थायप्रांजलिःप्रह्वऔत्सुक्यादाश्लि षन्निव नमोनमइतीशानौवभाषेगद्गदाक्षरः ३७ तयोरासनमादायपादयोरव निज्यच अर्हणेनानुलेपनधूपमाल्यैरपूजयत ३८ सुखमासनआसीनौप्रसा दाभिमुखौमुनिः पुनरानम्यपादाभ्यांगरिष्ठाविदमब्रवीत ३९ मार्कंडेयउवाच किं वर्णयेतवविभोयदुदीरितोसुः संस्पंदतेतमनुवाङ्मनइंद्रियाणि

३७ षन्आश्लिष्यन् ॥ आलिंगयन्निव ३८ पादयोरवनिज्य पादौप्रक्षाल्य अर्हणेनअर्घ्येण ३८ पादाभ्यांपादावानम्यगरिष्ठौपू ज्यतमौतौप्रति ३९ अंतर्यामिणस्तस्यैवप्रवर्त्तकत्वादात्मनस्तत्स्तुतावस्वातंत्र्यंपश्यन्नाहकिंमिति ॥ ६ ॥ ६ ॥

हे विभो त्वत्वं किं अहं वर्णये कथं स्तौमि यत् येन त्वयैव उदीरितः प्रेरितोऽसुः प्राणः संस्यंदते प्रवर्त्तते तमनु च वागादयः स्यंदंति
अत्र हेतुः वै अन्वयव्यतिरेकाभ्यां श्रोत्रस्य श्रोत्रमित्यादिश्रुतिभिश्च तत्प्रसिद्धमित्यर्थः न केवलं प्राकृतानां तनुभृतां किंतु अजश
र्वयोश्च अतः स्वस्य ममापि तथैव एवं यद्यपि न कस्यापि स्वातंत्र्यं अथापि दारुयंत्रवत् त्वत्प्रवर्त्तितैरपि वागादिभिर्भज
तां पुंसां भाववंधुः आत्मवंधुरसि न तु पित्रादिवद्देहमात्रवंधुः अहो कृपालुता तवेत्यर्थः ४० ननु कथं तावां प्राणादिप्रवर्त्तकौ
धर्म्मपुत्रत्वादावयोरिति चेत्तत्राह मूर्त्ती इति हे भगवन् भगवतस्तव इमे मूर्त्ती त्रिलोक्याः क्षेमाय पालनाय तापविरमाय च दुःख

स्यंदति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भाववंधुः ४० मूर्त्ती इमे
भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै नानाविभर्ष्यवितुमन्य
त[illegible]नूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ४१ तस्यावितुः स्थिरचरेशितुरं
घ्रिमूलं यत्स्थं न कर्म्मगुणकालरजः स्पृशंति यद्वै स्तुवंति निनमंति यजंत्यभीक्ष्णं ध्यायंति
वेदहृदया मुनयस्तदाप्त्यै ४२ ॥ ६ ॥ ६ ॥ निवृत्त्यै मृत्युजित्यै मोक्षाय न तु त्वं कस्यापि पुत्र इत्यर्थः अत्र

दृष्टांतः यथेदं विश्वमवितुं अन्यास्तनूर्मत्स्यकूर्म्मादिलक्षणाः नाना अनेकप्रकारा विभर्षि तद्वत् न केवलं पालनादिमात्रं तवकर्म्म
किंतु सर्वं विलयावधीत्याह सृष्ट्वेति तत्राप्यन्यनिरपेक्षत्वे दृष्टांतः ऊर्णनाभिरिवेति ४१ यस्मादेवंभूतस्त्वं तस्मात्तवांघ्रिमूलं भजा
मीत्याह तस्येति तस्यावितुः पालकस्य स्थावरजंगमानामीश्वरस्य अंघ्रिमूलं भजामीति तृतीयश्लोकस्यानुषंगः कथंभूतमंघ्रिमूलं
यत्स्थं यत्रस्थितं कर्म्मगुणकालानां रजो मलं अन्ये च पूर्वोक्तास्तापा रयो न स्पृशंति रुज इति वा पाठः यतो वेदो हृदये येषां ते वेदहृ

दयाः यद्वैस्तुवंतीत्यादि ... ४२ ॥

भा० द्वा०
२९

यत अन्यः पुरुषार्थो नाऽस्तीत्याह नान्यमिति अंघ्र्युपनयात् श्रीमच्चरणप्राप्तेः अन्यं क्षेमं न विद्मः परितः सर्व्वेष्वपि लोकेषु भीर्य्येस्यतस्य जनस्य तदेवाह द्विपरार्द्धं धिष्ण्यं स्थानं यस्य सः ब्रह्मापि ते कालस्य त्वद्भ्रूविजृंभरूपात् कालादलं बिभेति अतः किमुत वक्तव्यं तेन ब्रह्मणा कृतानां भौतिकानां प्राणिनां भयमिति ४३ यस्मादेवं तत्तस्मात्तव पादमूलं भजामि कथंभूतस्य ऋतं भियः सत्यज्ञानस्वरूपस्य यद्वा सत्या धीर्यस्य तस्मिन्वा तस्य आत्मगुरोर्जीवस्य नियंतुः अतः कारणात् परस्य किं कृत्वा आत्मच्छदि स्वात्मावरकं अपार्थं च निष्फलं असच्च तुच्छं अंत्यं च नश्वरं इदं देहादि हित्वा देहादिभजनं त्यक्त्वा असच्चेत् कथं प्रतीयते तत्रा

नान्यं तवांघ्र्युपनयादपवर्गमूर्त्तेः क्षेमं जनस्य परितो भिय ईश विद्मः ब्रह्मा बिभेत्यलमतो द्विपरार्द्धधिष्ण्यः कालस्य ते किमुत तत्कृतभौतिकानां ४३ तद्वै भजाम्यृतधियस्तव पादमूलं हित्वेदमात्मच्छदि चात्मगुरोः परस्य देहाद्यपार्थमसदंत्यमभिज्ञमात्रं विंदेत ते तर्हि सर्वमनीषितार्थं ४४ सत्वं रजस्तम इतीश तवात्मबंधो मायामयाः स्थितिलयोदयहेतवोऽस्य लीलाधृता यदपि सत्वमयी प्रशांत्यै नाऽन्ये नृणां व्यसनमोहभियश्च या

ह अभिज्ञमात्रं न ह्यत्यंतमसत् किं त्वात्ममात्रं न ततः पृथगस्तीत्यर्थः नन्वपवर्गाय भवतु मद्भजनं फ ऽऽ भ्यां ४५ लांतरार्थं त्वन्यभजनं कार्यमेव तत्राह तर्हीति यदि त्वां भजति पुरुषः तर्हि त्वत्त एव सर्व्वं मनीषितमर्थं विंदेतेति ४४ ननु ब्रह्मरुद्रावपि ममैव मूर्त्ती अतो मामेव किमत्यंतमाद्रियसे तत्राह सत्वमिति यदपि यद्यपि तवैव मायया कृता एता लीलास्त्वे यैव धृताः तथापि या सत्वमयी सैव प्रशांत्यै मोक्षाय न केवलं असत्प्रशांत्यभावमात्रमन्यभजने किं त्वनिष्टं च किंचिदन्यया त्वे

तदेवसदाचारेणद्रढयतितस्मादिति हेभगवन्तवशुक्लांतांतनुंश्रीनारायणाख्यांअथतावकानांचशुक्लां तनुंनराख्यां यद्य
स्मात् सात्वताः सत्वमेवपुरुषस्येश्वरस्यरूपमुशंति मन्यंतेनत्वन्यतरजस्तमश्चेति अत्रहेतुः यतः सत्वात् लोकोवैकुंठाख्यः
लोकत्वेसत्यप्यभयंच भोगेसत्यप्यात्मसुखंच ४६ अतस्तंप्रणमति तस्मैनमइतिहंसायशुद्धायसंयतगिरेनियतवाचे अ
यचनिगमेश्वरायवेदमार्गप्रवर्त्तकाय ४७ वेदार्थसंप्रदायवर्त्तनेहेतुत्वंवदन्स्तौति यमिति कपटेंद्रियमार्गैर्भ्रमद्धीः विक्षि

तस्मात्तवेहभगवन्नथतावकानांशुक्लांतनुंस्वदयितांकुशलाभजंति यत्सात्वताःपुरु
षरूपमुशंतिसत्वंलोकोयतोभयमुतात्मसुखंचनान्यत् ४६ तस्मैनमोभगवतेपुरुषाय
भूम्नेविश्वायविश्वगुरवेपरदेवतायै नारायणायऋषयेचनरोत्तमायहंसायसंयत
गिरेनिगमेश्वराय ४७ यंवैनवेदवितथाक्षपथैर्भ्रमद्धीः संतंस्वखेष्वसुषुतद्ध्युपिद्ध
कर्त्येषु तन्माययावृतमतिः सउएवसाक्षादाद्यश्वतेऽखिलगुरोरुपसाद्यवेदं ४८ य
द्दर्शनंनिगमआत्मरहःप्रकाशंमुह्यंतियत्रकवयोऽजपरायतंतः ॥१॥

यादिषुनियंत्रत्वेनसंतमपियंत्वांनवेद इकार्थेषुविषयेषुबुद्धिविक्षेपेहेतुः तन्माययातस्यतैवमाययाआवृताआत्म ॥ प्रवुद्धिः पुमान्स्वेंद्रि
निष्ठामतिर्यस्यसउसोपिआद्यएवपूर्वमज्ञातेवअखिलगुरोस्तवत्वत्प्रवर्त्तितंवेदमुपसाद्यप्राप्यतंत्वांसाक्षाद्वेद ४८ वेदे
निवततत्त्वानमित्युपपादयन्प्रणमति तस्यतवदर्शनंनिगमेभवतिकथंभूतंआत्मनजवरहः रहस्यप्रकाशकंअन्यथादुर्ज्ञे
यतामाह अजपराब्रह्ममुख्याः कवयोपिसांख्ययोगादिभिर्यतमानाः यत्रत्वयिमुह्यंतिकुतइत्यतआह ॥१॥१॥१॥१॥

९
भा॰ द्वा॰
१०

सर्वेषांसांख्यादिवादानांविषयाभेदादयस्तेषांप्रतिरूपंतत्तदनुसारिशीलंस्वभावोयस्यतंकुतः आत्मनादेहादिसंघातेननिगू
ढोबोधोयस्यतंएवंभूतंमहापुरुषंत्वांवंदे ४९ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायां अष्टमोऽध्यायः ८ नवमेभगव
न्मायादिदृक्षोर्दर्शनंमुहुः मायाशिशोर्हन्नयाब्धौचमुनेर्निर्वेशनिर्गमैः १ भगवतः परितोषपूर्वकंतदपेक्षितवरदानंकथयितु

तंसर्ववादविषयप्रतिरूपशीलंवंदेमहापुरुषमात्मनिगूढबोधं ४९ इतिश्रीभागवतेम
हापुराणेद्वादशस्कंधेअष्टमोऽध्यायः ८ सूतउवाच संस्तुतोभगवानित्थंमार्कंडेयेनधी
मतानारायणोनरसखः प्रीतआहभृगूद्वहम् १ भगवानुवाच भोभोब्रह्मर्षिवर्यासिसि
द्धआत्मसमाधिना मयिभक्त्यानपायिन्यातपः स्वाध्यायसंयमैः २ वयंतेपरितुष्टाःस्म
त्वद्बृहद्व्रतचर्यया वरंप्रतीच्छभद्रंतेवरदेशादभीप्सितं ३ ऋषिरुवाच जितंतेदेवदेवे
शप्रपन्नार्तिहराच्युत वरेणतावताऽलंनोयद्भवान्समदृश्यत ४ गृहीत्वाऽजादयोयस्य
श्रीमत्पादाब्जदर्शनंमनसायोगपक्वेनसभवान्मेऽक्षगोचरः ५ अथाऽप्यंबुजपत्राक्षपुण्य
श्लोकशिखामणे द्रक्ष्येमायांययालोकःसपालोवेदसद्भिदां ६ ॥ माह संस्तुतइत्यादिना १ आ

त्मसमाधिनाचित्तैकाग्र्येण २ वयंतेपरितुष्टाःस्मेतिबहुवचनंसर्वदेवाभिप्रायेण वरदेशादित्येकवचनंद्वयोरैक्याभिप्रा
येणप्रतीच्छगृहाण ३ वरेणत्वंदृश्यतात्वयाजितंउत्कर्षोदर्शितः ममतुवराकांक्षानास्तीत्याह वरेणेति ४ यस्यतवश्रीमत्पादा
ब्जदर्शनंमनसाऽपिगृहीत्वाप्राप्यकृतार्थाअजादयोभवंतिसभवान्मेऽक्षगोचरोजातोऽस्तिकिमतःपरंवरेणेत्यर्थः ५ द्रक्ष्येद्रष्टु

तथेतिद्रक्ष्यसीतिसईश्वरः स्मयन्प्रागात् पाठांतरे क्रियाविशेषणं ७ तमेवार्थमायादर्शनरूपं अग्न्यादिमूर्त्तिषु ८ भावद्र
व्यैर्मनोमयैर्द्रव्यैः क्वचित्कदाचित्प्रेमप्रसरसंप्लुतः प्रेमोद्रेकं प्राप्तः ९ मायादर्शनमाह तस्येत्यादिना १० तं वायुमनुवलाहका
मेघा अभवन् आविर्बभूवुः ते च तडिद्भिः सहिता उच्चैः स्वनंतो गर्जंतः अक्षोरथांगं तद्वत्स्थविष्ठाः अभितो वर्षधाराः मुमुचुः ११

सूत उवाच इतीडितोर्चितः काममृषिणा भगवान्मुने तथेति स स्मयन्प्रागाद्बदर्याश्रममीश्वरः ७ तमेव चिंतयन्नर्थमृषिः स्वाश्रम एव सः वसन्नग्न्यर्कसोमांबुभूवायुवियदात्मसु ८ ध्यायन्सर्वत्र च हरिं भावद्रव्यैरपूजयत् क्वचित्पूजां विसस्मार प्रेमप्रसरसंप्लुतः ९ तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुने उपासीनस्य संध्यायां ब्रह्मन्वायुरभून्महान् १० तं चंडशब्दं समुदीरयंतं वलाहका अन्वभवन्कराला: अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनंत उच्चैरभिवर्षधाराः ११ ततो व्यदृश्यंत चतुः समुद्राः समंततः क्ष्मातलमाग्रसंतः समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्त्तगभीरघोषाः १२ अंतर्बहिश्चाद्भिरतिद्युभिः खरैः शतह्रदाभीरुपतापितं जगत् चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् १३ ॥

चतुर्दिक्षु वर्त्तमानाः समुद्राः समीरवेगेन ऊर्मयस्तैर्भूतलं ग्रसंतः उग्रा नक्रा येषु महाभयाः आवर्त्ता येषु गंभीरो घोषो येषु ते च ते च
१२ आत्मना सह जरायुजादि चतुर्विधं जगदंतर्बहिश्चोपतापितं वीक्ष्य क्ष्मां च जलाप्लुतां वीक्ष्य मुनिः समत्रसत् त्रासं प्रापकेनोपतापि
तं अद्भिः कथंभूताभिः अतिद्युभिः अतिक्रांता द्यौर्याभिः खरैश्च सूर्यरश्मिभिः वायुभिर्वेतिशेषः शतह्रदाभिश्च विद्युद्भिः दीर्घत्वमा

भा॰ द्वा॰ प्रभंजनेनाघूर्णितं प्रकंपितं वाः उदकं यस्मिन् सः अप्यधात् छादयामास समं सह २४ सक्ष्मांऽतरिक्षं भूम्यंतरिक्षस्थप्राणिसहि
२१ तं सदिवं स्वर्गस्थदेवसहितं भागणाज्ज्योतिर्गणाः तैः सहितं जटाः विक्षिप्य विकीर्य २५ परिश्रमेणइषितः गतः व्याप्त इत्यर्थः इत्यु

तस्यैवमुद्वीक्षतऊर्म्मिभीषणः प्रभंजनाघूर्णितवार्महार्णवः आपूर्यमाणोवरषद्भिरंबु
दैः क्ष्मामप्यधात्द्वीपवर्षाद्रिभिः समम् २४ सक्ष्मांऽतरिक्षंसदिवंसभागणंत्रैलोक्यमासी
त्सहदिग्भिराप्लुतं सएकएवोर्वरितोमहामुनिर्बभ्रामविक्षिप्यजटाजडांधवत् २५ क्षुत्तृ
परीतोमकरैस्तिमिंगिलैरुपद्रुतोवीचिनभस्वताहतः तमस्यपारेपतितोभ्रमन्दिशोन
वेदखंगांचपरिश्रमेषितः २६ क्वचिन्नतोमहावर्त्तैतरलैस्ताडितःक्वचित् यादोभिर्भक्ष्यते
क्वापिस्वयमन्योऽन्यघातिभिः २७ क्वचिच्छोकंक्वचिन्मोहंक्वचित्दुःखंसुखंभयं क्वचि
न्मृत्युमवाप्नोतिव्याध्यादिभिरुतार्दितः २८ अयुतायुतवर्षाणांसहस्राणिशतानिचव्य
तीयुर्भ्रमतस्तस्मिन्विष्णुमायावृतात्मनः २९ सकदाचित्भ्रमंस्तस्मिन्पृथिव्याःक
कुदिद्विजः न्यग्रोधपोतंददृशेफलपल्लवशोभितं ३० ॥६॥ऽऽ सर्पणइत्यस्मात् २६ अन्यो
ऽन्यघातिभिः तद्भक्षणायपरस्परंयुध्यद्भिः २७ २८ विष्णुमायावृतात्मनइतिसतथाद्दृष्टवानित्यर्थः २९ ककु
दिउन्नतप्रदेशेन्यग्रोधपोतंकोमलंवटं ३० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तस्यईशानदिक्शाखायांशिशुमपि २१ श्रीमत्रम्यंवदनपंकजंयस्यतंकंबुवत्त्रिरेखावृताग्रीवायस्यतंमहोरस्कंविशाल
वक्षसंसुनासंशोभननासायस्यतं सुंदरेभ्रुवौयस्यतं २२ श्वासैरेजंतःकंपायमानाअलकास्तैराभातंशोभितंकंबुवत् अंतर्वल
यिनश्रीर्ययोःतौकंबुश्रियौःकर्णयोर्दाडिमेपुष्पेयस्यतं विद्रुमतुल्याधरभासाईषत्शोणायितंसुधातुल्यंस्मितंयस्यतं २३ पद्मग
र्भवत् आईषतआरुणावपांगौनेत्रप्रांतौयस्यतंहृद्योहासोय स्मिन्तदवलोकनंयस्यतंश्वासैरेजंतश्चलंत्योवलयस्तिर्यक्निम्नो

प्रागुत्तरस्यांशाखायांतस्यापिददृशेशिशुं शयानंपर्णपुटकेग्रसंतंप्रभयातमः २१ महा
मरकतश्यामंश्रीमद्वदनपंकजं कंबुग्रीवंमहोरस्कंसुनासंसुंदरभ्रुवम् २२ श्वासैजदलका
भातंकंबुश्रीकर्णदाडिमं विद्रुमाधरभासेषच्छोणायितसुधास्मितं २३ पद्मगर्भारुणापांगं
हृद्यहासावलोकनं श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरं २४ चार्वंगुलिभ्यांपाणिभ्यां
मुन्नीयचरणांबुजंमुखेनिधायविप्रेंद्रोधयंतंवीक्ष्यविस्मितः २५ तद्दर्शनाद्वीतपरिश्रमोमु
दाप्रोत्फुल्लहृत्पद्मविलोचनांबुजः प्रहृष्टरोमाद्भुतभावशंकितः प्रष्टुंपुरस्तंप्रससारबालकं
२६ तावच्छिशोर्वैश्वसितेनभार्गवः सोंतःशरीरंमशकोयथाऽविशत् ॥ ॥ ॥

स्ताभिः संविग्नाचंचलानिम्नागंभीरानाभिर्यस्मिन्तत् दलवदश्वत्थपत्रसंकाशमुदरंयस्यतं ॥ २४ ॥ चारवः अंगुलयो
ययोस्ताभ्यांउन्नीयआकृष्यधयंतंपिबंतं २५ हृत्पद्मंचविलोचनांबुजेचप्रोत्फुल्लानिविकसितानियस्यसः अद्भुतभावंमत्वाआश्चर्यरू
पेणशंकितःसन्नपिप्रष्टुंपुरःप्रससारसमीपंगतः २६ अदः इदंजगत् यथापुराप्रलयात्पूर्वंन्यस्तंविन्यस्तंददर्शच ॥६॥

अतीवविस्मितः सन् अमुह्यत् २७ कृत्स्नशो दर्शनं प्रपंचयति खमित्यादिना ककुभो दिशः पुराणि आकरांश्च खेटान् कर्षकग्रामान् व्रजान् गोकुलानि आश्रमांश्च वर्णाश्च तेषां वृत्तीश्चेत्यर्थः २८ नानायुगानि कल्पांश्च कल्प्यति तैर्वा कल्प्यन्त इति तथा तं कालं च सदिव परमार्थ इवेत्यवभासितं तेनैवेति २९।३० ॥ वटं च तोकं च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मित

तत्राप्यदोन्यस्तमचष्ट कृत्स्नशो यथा पुरामुह्यदतीवविस्मितः २७ खंरोदसी भगणान्द्रिसागरान्द्वीपान्सवर्षान्ककुभः सुरासुरान् वनानि देशान्सरितः पुराकरान्खेटान्व्रजानाश्रमवर्णवृत्तयः २८ महान्ति भूतान्यथ भौतिकान्यसौ कालं च नानायुगकल्पकल्पनं यत्किंचिदन्यद्व्यवहारकारणं ददर्श विश्वं सदिवावभासितं २९ हिमालयं पुष्पवहां च तां नदीं निजाश्रमं यत्र ऋषीनपश्यत् विश्वं विपश्यन्श्वसितान्शिशोर्वै वहिर्निरस्तो न्यपतल्लयाब्धौ ३० तस्मिन्पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शयानं तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपांगनिरीक्षणेन ३१ अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजं ॥ ३२ ॥ ६ ॥ ६ ॥

युक्तेनापांगनिरीक्षणेन निरीक्षितः सन् ३१ अथ तं बालकमधोक्षजं परिष्वक्तुमभ्ययादिति द्वयोरन्वयः ॥ कथंभूतं नेत्राभ्यां हृदि धिष्ठितं ३२ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

तावत्परिष्वंगलाभात्पूर्वमेवऋषेस्तस्यांतर्हितोबभूवतद्दृष्टमवैफल्येदृष्टांतः अनीशोनिर्द्धनः तेननिर्मिताईहाक्री॰
डायथेति ३३ तंचांतर्हितंभगवंतमनुवटः सलिलंलोकसंप्लवश्चतिरोधायिचांतर्हितः सचस्वाश्रमएवयथापूर्वंस्थित
इति ३४ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांनवमोध्यायः ९ दशमेशिवआगत्यमुनेस्तुष्टोवरानदात् ते

तावत्सभगवान्साक्षात्योगाधीशोगुहाशयः अंतर्दधऋषेः सद्योयथेहानीशनि
र्मिता ३३ तमन्वथवटोब्रह्मन्सलिलंलोकसंप्लवः तिरोधायिक्षणादस्यस्वाश्रमेपू
र्ववत्स्थितः ३४ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेमायादर्शनंनामनवमोध्यायः
९ सूतउवाच सएवमनुभूयेदंनारायणविनिर्मितं वैभवंयोगमायायास्तमेवशरणंय
यौ १ मार्कंडेयउवाच प्रपन्नोस्म्यंघ्रिमूलंतेप्रपन्नाभयदंहरे यन्माययापिविबुधा
मुह्यंतिज्ञानकाशया २ सूतउवाच तमेवंनिभृतात्मानंवृषेणदिविपर्यटन् रुद्रा
ण्याभगवान्रुद्रोददर्शस्वगणैर्वृतः ३ अथोमातमृषिंवीक्ष्यगिरिशंसमभाषत ॥ ४॥

नसाकमतिप्रीत्यासमाभाष्यसभाजयत् ११ ॥ ज्ञानकाशयाज्ञानवत्प्रकाशमानयामायया त्वद्भजनंविनाविद्वांसो॰
पियस्यतवमाययाज्ञानिनोवयमित्यहंकारेणमुह्यंतीत्यर्थः २ श्रीनारायणएवस्वमायादर्शनश्रांतंश्रीशिवरूपेणसांत्व
यामास तदाह तमेवमित्यादिनानिभृतात्मानंसमाहितचित्तंरुद्राण्याभवान्या ३ निभृतानिश्चलाच्चांग्रुद्रियाशय्या

देहेंद्रियमनांसियस्यतं ४ निभृतंनिश्चलमुदकंऋषव्रातश्चयस्मिन्सः संसिद्धिंफलंसाक्षात्कुरुप्रकटीकुरु त्वंभवान्सि
द्धिदः ५ यतः आशिषः अभ्युदयलक्षणाः अतस्वितस्त्रत्रहेतुःभक्तिमिति ६ संवदिष्यामः संवादंकरिष्यामः ७ सात्वतांस

पश्येमंभगवन्विप्रंनिभृतात्मेंद्रियाशयं ४ निभृतोदऋषव्रातोवानापायेयथार्णवः कु
र्वस्यतपसः साक्षात्संसिद्धिंसिद्धिदोभवान् ५ श्रीभगवानुवाच नैवेच्छत्याशिषः क्वापि
ब्रह्मर्षिर्मोक्षमप्युत भक्तिंपरांभगवतिलब्धवान्पुरुषेऽव्यये ६ अथापिसंवदिष्यामो
भवान्येतेनसाधुना अयंहिपरमोलाभोनृणांसाधुसमागमः ७ सूतउवाच इत्युक्त्वातमुपे
यायभगवान्सात्वतांगतिः ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनां ८ तयोरागमनंसा
क्षादीशयोर्जगदात्मनोः नवेदरुद्धधीवृत्तिरात्मानंविश्वमेवच ९ भगवांस्तदभिज्ञाय
गिरिशोयोगमायया आविशत्तद्गुहाकाशंवायुश्छिद्रमिवेश्वरः १० आत्मन्यपिशिवं
प्राप्तंतडित्पिंगजटाधरं त्र्यक्षंदशभुजंप्रांशुमुद्यंतमिवभास्करं ११ व्याघ्रचर्म्मांबरंशूलधनु
रिष्वसिचर्मभिः अक्षमालाडमरुकंकपालपरशुंसह बिभ्राणंसहसाभातेविचक्ष्यहृदिविस्मितः

सात्वतांगतित्वेहेतुः ईशानइति ८ रुद्धाधियोंतःकरणस्यवृत्तयोयेनसः ९ १० नकेवलंबहिरेव आत्मन्यपिप्राप्तंशिवंविचक्ष्यवि
स्मितः कथंप्राप्तंसहसा अकस्मादेवहृदिभातं कथंभूतंतडिद्वत्पिशंगाजटाधारयतीतितथातंत्रीण्यक्षीणियस्यतं ११ शूलादिभिः

विस्मयपूर्वकं वहिर्दर्शनमाह किमिदमिति सोमयाउमयासहागतंरुद्रंददृशे १३ ततोननाम १४ पूर्णकामत्वंव्यना
क्ति येनत्वयाजगन्निर्वृतंभवतीति १५ निर्गुणत्वेनत्रिगुणत्वेनचनमस्करोति नमःशिवायनिर्गुणायसत्वायसत्वाधि
ष्ठात्रेअतएवप्रमृडयतीतितथात्मै १६ १७ नोस्मतःत्रयः ब्रह्मविष्णुमहेश्वराः यतयेभ्यः तेवयं १८ वरदानादि

किमिदंकुतएवेतिसमाधेर्विरतोमुनिः नेत्रेउन्मील्यददृशेसगणंसोमयागतं १३ रु
द्रंत्रिलोकैकगुरुंननामशिरसामुनिः तस्मैसपर्यांव्यदधात्सगणायसहोमया स्वागता
सनपाद्यार्घ्यगंधस्रक्धूपदीपकैः १४ आहत्वात्मानुभावेनपूर्णकामस्यतेविभो करवाम
किमीशानयेनेदंनिर्वृतंजगत् १५ नमःशिवायशांतायसत्वायप्रमृडायच रजोजुषेथ्यघो
रायनमस्तामस्यंतमोजुषे १६ सूतउवाच एवंस्तुतःसभगवानादिदेवःसतांगतिः परितुष्टःप्र
सन्नात्माप्रहसंस्तमभाषत १७ श्रीभगवानुवाच वरंवृणीष्वनःकामंवरदेशावयंत्रयः अ
मोघंदर्शनंयेषांमर्त्योयद्विंदतेमृतं १८ ब्राह्मणाःसाधवःशांतानिःसंगाभूतवत्सलाः ए
कांतभक्ताअस्मासुनिर्वैराःसमदर्शिनः १९ सलोकालोकपालास्तान्वंदंत्यर्चंत्युपासते ॥

नाभवत्सेवैवास्माभिःक्रियतेनत्वनुग्रहः जगद्वंद्यत्वाद्भवतामितिब्राह्मणान्स्तौतिब्राह्मणाइत्यादिनायेसाधवः
सदाचाराः शांताः मत्सरादिरहिताः निःसंगाः निष्कामाः १९ नकेवलंतएवकिंतु ॥ ६ ॥ १ ॥ ६ ॥ ६ ॥ ६ ॥ १ ॥ १ ॥

१०॥ भा॰ द्वा॰ ३४

अहं चेत्यादि २० पूज्यतमत्वेहेतुंतरमाह नेति अणवमपि अणुमात्रमपिनचक्षते नपश्यंतितत्तस्मात् एवंभूतानयुष्मा
नईमहि भजेम २१ २२ ब्रह्मणेभ्यः ब्राह्मणोन् आत्मसमाधानं चित्तैकाग्र्यंतप आलोचनंस्वाध्यायः अध्ययनंसंयमःवा
गादिनियमःतैः २३ किंचश्रवणादित्यादि २४ चंद्रोललामोभूषणंयस्यतस्यधर्मरहस्ययुक्तं अमृतास्पदंवचः कर्णाभ्यांपि

अहंचभगवान्ब्रह्मास्वयंचहरिरीश्वरः २० नतेमय्यच्युतेऽजेचभिदामण्वपिचक्षते
नात्मनश्चजनस्यापितद्युष्मान्वयमीमहि २१ नह्यम्मयानितीर्थानिनदेवाश्चेतनो
ज्झिताः तेपुनंत्युरुकालेनयूयंदर्शनमात्रतः २२ ब्राह्मणेभ्योनमस्यामोयेस्मद्रूपंत्रयीम
यं बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः २३ श्रवणाद्दर्शनाद्वापिमहापातकिनो
ऽपिवः शुद्ध्येरन्नंत्यजाश्चापिकिमुसंभाषणादिभिः २४ सूतउवाच इतिचंद्रललामस्य
धर्म्मगुह्योपबृंहितं वचोमृतायनमृषिर्नातृप्यत्कर्णयोःपिबन् २५ सचिरंमाययाऽवि
ष्णोर्भ्रामितःकर्शितोभृशं शिववागमृतध्वस्तक्लेशपुंजस्तमब्रवीत् २६ ऋषिरुवाच अ
होईश्वरचर्य्येयंदुर्विभाव्याशरीरिणां यन्नमंतीशितव्यानिस्तावतिजगदीश्वराः २७॥

वन्नातृप्यत् अलमितिनामन्यत् कर्णयोरमृतायनं इतिचान्वयः २५ शिवस्यवागेवामृतंतेनध्वस्तः क्लेशपुंजोयस्यसः
२६ इयंलीलादुर्विभाव्या अवितर्क्या यद्यया ईशितव्यानिस्वनियम्यानियानिभूतानिजगदीश्वराःस्वयंनमंतिस्तुवंतिचेति

राम ३४

अथवालोकसंग्रहमात्रमेतदित्याह धर्म्ममिति प्रवक्तारोपियत्स्वयंदेहिनांधर्मंग्राहयितुमाचरंति २८ नन्वेतत्त्वप्रभावतिर-
स्कारकंकथंमयाक्रियते नत्वाह नैतेति एतावतालोकसंग्रहमात्रेणतैर्नमनादिभिः कथंभूतैः स्वमायामयीवृत्तिर्येषुतैः भग-
वतोमायिनस्तवानुभावोनदुष्येत यतः प्रसिद्धस्यमायिनःकुहकंकपटंयथातथैतानिनमनादीनि अतस्तस्ययथाकुहकेो
ऽत्मानुभावोनदुष्यतइतितद्वत् नदुष्येतानुभावइतिपाठेनकारस्यदृष्टांतेऽनुषंगः २९ मायाचेष्टितंप्रपंचयतिसृष्ट्वेतिस्वम

धर्म्मंग्राहयितुंप्रायःप्रवक्तारश्चदेहिनां आचरंत्यनुमोदंतेक्रियमाणंस्तुवंतिच २८
नैतावताभगवतःस्वमायामयवृत्तिभिः नदुष्येतानुभावस्तैर्मायिनःकुहकंयथा २९
सृष्ट्वेदंमनसाविश्वमात्मनानुप्रविश्ययः गुणैःकुर्वद्भिराभातिकर्त्तेवस्वप्नदृक्यथा ३०
तस्मैनमोभगवतेत्रिगुणायगुणात्मने केवलायाद्वितीयायगुरवेब्रह्ममूर्त्तये ३१ किंव-
र्णेनुपरंभूमनवरंत्वद्वरदर्शनात् यद्दर्शनात्पूर्णकामःसत्यकामःपुमानभवेत् ३२ व-
रमेकंवृणेथापिपूर्णात्कामाभिवर्षणात् भगवत्यच्युतांभक्तिंतत्परेषुतथात्वयि ३३
सूतउवाच इत्यर्चितोभिष्टुतश्चमुनिनासूक्तयागिरा तमाहभगवान्शर्वःशर्व्वयाचाभि

दृक्यथेत्यविद्याचेष्टितेदृष्टांतः ३० त्रिगुणत्वेपिनजीववत्तदभिभूताय किंतुगुणानामात्मनेनियंत्रे ३१ नंदितः ३४
३२ वरंवृणीष्वेतियदुक्तंतत्राह किमिति वरंदर्शनंयस्यतस्मात्त्वत्तःपरंकंतुवरंवृणे यस्यतवदर्शनादवलोकनात्पूर्णकामः
सर्वानंदसंदोहरूपः सत्यकामः यथेच्छंप्राप्तसर्वानंदःपुमानभवेत् ३२ ३३ वरदानायस्वयमेवप्रवृत्तः शर्वः उमयाचाभिनं-

कामोयंसर्व्वोपिअन्यच्चपुण्यंयशइत्यादिब्रह्मवर्चस्विनस्तेभूयादित्युत्तरेणान्वयः यतस्त्वमधोक्षजेभक्तिमान् ३५
३६ तस्यकर्म्मतपआदिमुनेः पुराऽनुभूतंचभगवन्मायावैभवंतच्चकथयन् ३७ अवाप्तोमहायोगमहिमायेनसः ३८
एतन्मार्कंडेयस्यचरितंतेनानुभूतंचभगवन्मायावैभवंतेऽनुवर्णितं ३९ नन्वेवमप्यस्मत्कुलोत्पन्नस्यास्यसप्तकल्पायु
ष्यवर्द्धैरुच्यमानेविरुद्धमेव तत्राह एतन्मार्कंडेयेनानुभूतंभगवन्मायावैभवंनानाकल्परूपंकदाचित्कंईश्वरेच्छया

कामस्तेऽयंमहर्षेस्तुभक्तिमांस्त्वमधोऽक्षजे आकल्पांताद्यशः पुण्यमजरामरतात
था ३५ ज्ञानंत्रैकालिकंब्रह्मन्विज्ञानंचविरक्तिमत् ब्रह्मवर्चस्विनोभूयात्पुराणाचा
र्यतास्तुते ३६ सूतउवाच एवंवरान्समुनयेदत्वाऽगात्त्र्यक्षईश्वरः देव्यैतत्कर्म्मकथ
यन्ननुभूतंपुरामुनेः ३७ सोप्यवाप्तमहायोगमहिमाभार्गवोत्तमः विचरत्यधुनाऽप्य
द्धाहरावेकांततांगतः ३८ अनुवर्णितमेतत्तेमार्कंडेयस्यधीमतः अनुभूतंभगवतोमा
यावैभवमद्भुतं ३९ एतत्केचिदविद्वांसोमायासंसृतिमात्मनः अनाद्यावर्त्तितंनृणां
कदाचित्कंप्रचक्षते ४० यएवमेतद्भृगुवर्यवर्णितंरथांगपाणेरनुभावभावितं ॥ ९ ॥

तस्यैवाकस्मिकंनतुसर्वसाधारणं एतत्केचित्अनादिबहुकालंआवर्त्तितंदेवयुगसहस्रद्वयमानेनपुनःपुनःपरिव
र्त्तितंप्रचक्षते केतेनृणांसंसृतिसर्गप्रलयादिलक्षणां आत्मनोभगवतोमायेत्येवमविद्वांसः विद्वांसस्तुमायाशिशोःश्वासो
च्छासाभ्यांसप्तकल्पत्वस्तदुदरप्रवेशनिर्गमतः सप्तकल्पत्वंतत्क्षणमात्रेणेतिवदंतिअतोनविरोधइत्यर्थः ४० संशृणुयात् ३

योतावुभौतयोः कर्म्मवासनाकृतासंसृतिर्नभवेदिति ४१ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांदशमो ऽध्यायः १० एकादशेतुपूजार्थंमहापुरुषवर्णनंरवेर्व्यूहस्यचाख्यानंप्रतिमासंपृथक्पृथक् १ येनाऽमर्त्यत्वमापन्नो मर्त्त्योसौभार्गवोत्तमः तंपृच्छतिक्रियायोगंसांगोपांगादिकल्पितं २ अथेतिहेभगवन्हेभागवतयतोभवान्समस्ततंत्रराद्धांतेनत्ववित् १ प्रष्टव्यमाह तांत्रिकाइति परिचर्यायांउपासनायांविषयेकेवलस्यचैतन्यघनस्यअंगानिपादादीनि

संश्रावयेत्संशृणुयाद्वुतावुभौतयोर्नकर्म्माशयसंसृतिर्भवेत् ४१ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेदशमोध्यायः १० शौनकउवाच अथेममर्थंपृच्छामोभवंतंबहुवित्तमं समस्ततंत्रराद्धांतेभवान्भागवततत्ववित् १ तांत्रिकाःपरिचर्यायांकेवलस्यश्रियःपतेः अंगोपांगायुधाकल्पंकल्पयंतियथैवयैः २ तन्नोवर्णयभद्रंतेक्रियायोगंबुभुत्सतां येनक्रियानैपुणेनमर्त्योयायादमर्त्यतां ३ सूतउवाच नमस्कृत्वागुरून्वक्ष्येविभूतीर्वैष्णवीरपि याःप्रोक्तावेदतंत्राभ्यामाचार्यैःपद्मजादिभिः ४ मायाद्यैर्नवभिस्तत्वैः

उपांगानिगरुडादीनि आयुधानिसुदर्शनादीनिआकल्पःकौस्तुभादयः तेषांऽऽसविकारमयोविराट्॥ द्वंद्वैकवंतद्यथाकल्पयंतियैश्चतत्वैःकल्पयंति २ तन्नोवर्णयेति ३ गुरूपदेशगम्यत्वादस्यार्थस्यतन्नमस्कारपूर्वकमाह नमस्कृत्वेति विभूतीःविराड्विग्रहाद्याः ४ अंगादिकल्पनांभूरादिभिर्दर्शयितुंप्रथमंतावद्यथाकल्पयंतीतिप्रश्नस्यवैराजरूपेणोत्तरंवक्तुंविराड्विग्रहमाह मायाद्यैः प्रकृतिसूत्रमहदहंकारपंचतन्मात्रैर्नवभिस्तत्वैः॥ ६ ॥ ६ ॥

१२
भा॰टी॰
३६

विकारा एकादशेंद्रियाणि पंचमहाभूतानीति षोडश तन्मयो विराट् स प्रसिद्धो निर्मितः यत्र विराजि स चित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते अनेनांगादिकल्पनासौलभ्यं दर्शितं ५ एतद्वै पौरुषं रूपं पुरुषस्य वैराजस्य रूपमेवेश्वरेणाधिष्ठितत्वात्तदभेदविवक्षया तत्स्वरूपमुच्यते अंगकल्पनामाह भूः पादावित्यादित्रिभिः भूराद्यनुवादेन भगवत्पादादि

निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ५ एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः ६ प्रजापतिः प्रजननमपानो मृत्युरीशितुः तद्बाहवो लोकपाला मनश्चंद्रो भ्रुवौ यमः ७ लज्जोत्तरोऽधरो लोभो दंता ज्योत्स्ना स्मयो भ्रमः रोमाणि भूरुहा भूम्नो मेघाः पूरुषमूर्द्धजाः ८ यावानयं वै पुरुषो यावत्या संस्थया मितः तावानसावपि महापुरुषो लोकसंस्थया ९ कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः तत्प्रभा व्यापिनी साक्षात् श्रीवत्समुरसा विभुः १० स्वमायां वनमालाख्यां नानागुणमयीं दधत् वासश्छंदोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरं ११ बिभर्ति सांख्यं योगं च देवो मकरकुंडले मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयंकरं १२ ॥ भावना विधीयते ६ प्रजननं मेढ्रं अपानः पायुः ॥

७।८ अनुक्तमन्यदप्येवमूह्यमित्याह यावानयं व्यष्टिपुरुषः स्वमानतः सप्तवितस्तिसंख्यया अवयवसंनिवेशेन ॥ मितः ९ भूषणादीन्याह कौस्तुभेत्यादिना स्वात्मज्योतिः शुद्धजीवचैतन्यं या तस्य कौस्तुभस्य प्रभा तामेव श्रीवत्सं बिभर्त्ति १० त्रिवृत्स्वरं त्रिमात्रं प्रणवं ११ पारमेष्ठ्यं पदं ब्रह्मलोकं १२ ॥

अव्याकृतंप्रधानंयत्अधिष्ठितः अधिष्ठायस्थितः तदासनभूतंपद्मंसत्वंसत्वगुणः १३ मुख्यतत्वंप्राणतत्वं प्राणोवैब
ल्यइतिश्रुतेः दरवरंशंखं १४ १५ आकूतीःक्रियाशक्तियुक्तंमनः अस्यरथस्याभिव्यक्तिंवहिरभिव्यक्तंरूपं मुद्रयाधृतयाअ
र्थक्रियात्मतां वरदाभयदादिरूपत्वंविभर्तितन्मुद्रयातथातथाभावयेदित्यर्थः १६ मंडलंदेवयजनंदेवपूजाभूमिंसूर्यमंडल
त्वेनभावयेदित्यर्थः अंतर्वह्निमंडलंवा दीक्षासंस्कारआत्मनः गुरुकृतांमंत्रदीक्षामेव आत्मनस्तत्पूजायोग्यतांभावयेदित्य

अव्याकृतमनंताख्यमासनंयदधिष्ठितः धर्मज्ञानादिभिर्युक्तंसत्वंपद्ममिहोच्यते १३।
ओजःसहोबलयुतंमुख्यतत्वंगदांदधत् अपांतत्वंदरवरंतेजस्तत्वंसुदर्शनम् १४ नभोनि
भंनभस्तत्वमसिंचर्मतमोमयं कालरूपंधनुःशार्ङ्गंतथाकर्ममयेषुधिम् १५ इंद्रियाणि
शरानाहुराकूतीरस्यस्यंदनं तन्मात्राण्यस्याभिव्यक्तिंमुद्रयार्थक्रियात्मताम् १६ मंडलंदे
वयजनंदीक्षासंस्कारआत्मनः परिचर्याभगवतआत्मनोदुरितक्षयः १७ भगवान्भगश
ब्दार्थंलीलाकमलमुद्वहन् धर्मंयशश्चभगवांश्चामरव्यजनेऽभजत् १८ आतपत्रंतुवै

र्थः परिचर्येति भगवतस्तांपरिचर्यांस्वस्यसकलपापक्षयायएवंरूपांभाव ॥ कुंठंद्विजाधामाकुतोऽभयं ॥
येदित्यर्थः १७ पूर्वमासनपद्ममुक्तंइदानींकरस्थंपद्ममाह भगवानिति भगवच्छब्दार्थंऐश्वर्यादिषाड्गुण्यं १८ हेद्विजाः
एकवचनांतोवापाठः अकुतोभयंकैवल्यंधाममहंसमभजत् यद्वावैकुंठस्यविशेषणंअकुतोभयंयद्धामेति त्रिवृत्ऋग्य
जुःसामरूपोवेदःसुपर्णोसिगरुत्मांस्त्रिवृत्तेशिरइत्यादिमंत्रलिंगात् ॥६॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

भा॰ द्वा॰
३२

यज्ञंयज्ञरूपं पुरुषंयज्ञोवैविष्णुरितिश्रुतेः १९ अनपायिनीहरेःशक्तिः तत्रहेतुः साक्षादात्मनः स्वस्वरूपस्यचिद्रूपत्वात्तस्याल
द भेदादित्यर्थः तंत्रमूर्तिः पंचरात्राद्यागमरूपः येऽणिमादयोऽष्टौगुणाः तेहरेर्द्वारपालानंदादयः २० तस्यैवचतुर्व्यूहोपासना
माहवासुदेवादिशब्दैः पुरुषः श्रीनारायणएवस्वयंमूर्तिभेदैरुपास्य इत्यभिधीयते २१ तस्यैवाध्यात्मनिचतुर्द्धोपासनमाह स
एवभगवान्विश्वादिशब्दैर्वृत्तिभिर्जाग्रदाद्यवस्थाभिः पुरुषः श्रीनारायणएवस्वयंभूः परिभाव्यतेतदुत्त्युपाधीनाह अर्थाःवा

त्रिवृद्वेदःसुपर्णाख्योयज्ञंवहतिपूरुषम् १९ अनपायिनीभगवतीश्रीःसाक्षादात्मनोहरेः
विष्वक्सेनस्तंत्रमूर्त्तिर्विदितःपार्षदाधिपः नंदादयोष्टौद्वाःस्थाश्चतेऽणिमाद्याहरेर्गुणाः २०
वासुदेवःसंकर्षणःप्रद्युम्नःपुरुषःस्वयं अनिरुद्धइतिब्रह्मन्मूर्त्तिव्यूहोऽभिधीयते २१ स
विश्वस्तैजसःप्राज्ञस्तुरीयइतिवृत्तिभिः अर्थेंद्रियाशयज्ञानैर्भगवान्परिभाव्यते २२ अं
गोपांगायुधाकल्पैर्भगवांस्तच्चतुष्टयं बिभर्त्तिस्मचतुर्मूर्त्तिर्भगवान्हरिरीश्वरः २३ ॥६॥
द्विजऋषभसएषब्रह्मयोनिःस्वयंदृक्स्वमहिमपरिपूर्णोमाययाचस्वयैतत् ॥ऽऽ ह्याःइंद्रियंमनःस्था

रायस्तदुभयसंस्कारयुक्तमज्ञानंत्रितयसाक्षितैः २२ उक्तचतुर्व्यूहद्वयोपासनेऽपिपूर्वोक्तमंगाद्युपासनमाह अंगेति अंगादि
भिरुपलक्षितोभगवान्हरिर्वासुदेवादिचतुर्मूर्त्तिःसन्विश्वादिचतुष्टयंविभर्त्तिस्मविश्वादिभावेपितन्नियंतुस्तस्यनजीवत्व
मित्याह विश्वादिचतुष्टयंविभ्रदपिभगवानीश्वरएवेति २३ तस्यब्रह्मादित्रिमूर्त्तितामाह द्विजऋषभेति सएषएवभग
वान्ब्रह्मयोनिर्वेदस्यकारणमित्यादिहेतुत्रयं वस्तुनोभेदाभावेऽपिस्वगतमाययासृजतिहरतिपातीतिकृत्वाआख्ययाब्रह्म

अनाच्छन्नज्ञानोपि विवृत इव भिन्न इव निरुक्तः शास्त्रेषु न तु भिन्नः अत्र विद्वदनुभवं प्रमाणयति यस्तत्परैरात्मत्वेनैव ल-
भ्यत इति २४ यस्येदमुपासनमुक्तं तं श्रीकृष्णं प्रार्थयते कृष्णसख अर्जुनस्य सखे वृष्णिश्रेष्ठ अवनिद्रुहो ये राजन्याः ते-
षां वंशस्य दहन अनपवर्ग अक्षीणं वीर्यं यस्य गोपवनितानां व्रजाः समूहाः भृत्या नारदादयः तैर्गीतं तीर्थभूतं श्रवः कीर्ति-
र्यस्य श्रवणमेव मंगलं यस्य २५ एतज्जपमात्रस्यापि ब्रह्मज्ञानफलमित्याह य इति कल्ये उषःकाले य(स्त)च्चित्तः प्रयतः शु-

सृजति हरति पातीत्याख्ययाऽनावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलभ्यः २४ श्रीकृष्ण
कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनाऽनपवर्गवीर्य गोविंद गोपवनिताव्रजभृत्य-
गीततीर्थश्रवः श्रवणमंगल पाहि भृत्यान् २५ य इदं कल्य उत्थाय महापुरुषलक्षणं त-
च्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयं २६ शौनक उवाच शुको यदाह भगवान् विष्णुराता-
य शृण्वते सौरो गणो मासि मासि नाना वसति सप्तकः २७ तेषां नामानि कर्माणि संयुक्ता-
नामधीश्वरैः ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः २८ ॥ चिः शुचिः सन् जप्त्वा गुहाशयं हृ-
दिस्थं ब्रह्म पश्यति २६ मंडलं देवयजनमित्युक्त्वा वृद्धिमागतः मूर्तिव्यूहप्रसंगेन रविव्यूहोऽत्र पृच्छ्यते शु-
क इति पंचभिः यदाह तथान्ये च ऋषयो गंधर्वा अप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः
सप्त इत्यादिना सौरः सूर्यसंबंधी सप्तानां गणः २७ तेषां सप्तानां अधीश्वरैः तत्तत्प्रतिभिः तत्तन्मासा-
॥ धिकृतसूर्यैर्वा व्यूहं विभागं २८ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

११ भा॰ द्वा॰ ३८

तत्रतावत्व्यूहं निरूपयितुंप्रथमंसूर्य्यस्वरूपमाह अनाद्यविद्ययामाययाअयंसूर्यः लोकतंत्रः लोकयात्राप्रवर्त्तकः २९ अतस्तस्यक्रियाभेदोपाधिकमेवनानात्वंनस्वतइत्याह एकएवेति सएष आत्माजगतस्तस्थुषश्चेतिश्रुतेः जगदात्मा आदिकृत्तत्सृष्टिकर्त्ताहरिरेवसूर्य्यः सचसर्व्वासांवेदोक्तक्रियाणांमूलंसत्तेनोपाधिनाबहुधोक्तः ३० कालरूपधारिणोहरेर्द्वादशादित्यस्वरूपभेदंक्रियोपाधिकंदर्शयितुं प्रथमंसर्व्वकामप्रवृत्तयेमायाकृतंनवधाभेदमा

सूतउवाच अनाद्यविद्ययाविष्णोरात्मनःसर्व्वदेहिनां निर्मितोलोकतंत्रोयंलोकेषुपरिवर्त्तते २९ एकएवहिलोकानांसूर्यआत्मादिकृद्धरिः सर्व्ववेदक्रियामूलंऋषिभिर्बहुधोदितः ३० कालोदेशःक्रियाकर्त्ताकरणंकार्यमागमः द्रव्यंफलमितिब्रह्मन्नवधोक्तोऽजयाहरिः ३१ मध्वादिषुद्वादशसुभगवान् कालरूपधृक् लोकतंत्रायचरतिपृथक्द्वादशभिर्गणैः ३२ धाताकृतस्थलीहेतिर्वासुकीरथकृन्मुने पुलस्त्यस्तुंवरुरितिमधुमासंनयन्त्यमी ३३ [illegible] ॥ ६ ॥ ६ ॥ ६ ॥

ह कालइति कालः प्रातरादिः देशःसमादि क्रियाअनुष्ठानं कर्त्ताब्राह्मणादिः करणं स्रुगादिः कार्यंयागादिः आगमः मंत्रादिः द्रव्यंव्रीह्यादिः फलंस्वर्गादिः ३१ तत्रचकालस्वरूपधारीभगवानपृथक्चरतिमध्वादिषुचैत्रादिषुलोकतंत्रायलोकयात्रानिर्वाहाय ३२ तानेवगणानाह धातेतिद्वादशभिः धातासूर्यः कृतस्थलीअप्सराः हेतिःराक्षसः वासुकिर्नागः रथकृत्यक्षः पुलस्त्यऋषिः तुंवरुर्गंधर्व्वः नयंतिअनुवर्त्तयंति ३३ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

॥ ७१ ॥

अयो नायक्षः प्रहेतीराक्षसः नारदोगंधर्वः कच्छनीरोनागः माधवंवैशाखं ३४ मित्रः सूर्यः पोरुषेयोराक्षसः र
थस्वनोयक्षः शुक्रमासंज्येष्ठं ३५ वरुणः सूर्यः सहजन्योयक्षः शुक्रोनागः चित्रस्वनोराक्षसः शुचिमासंआषा
ढं ३६ इंद्रः सूर्यः विश्वावसुर्गंधर्वः श्रोतायक्षः एलापत्रोनागः वर्योराक्षसइतिस्वयमेवव्याख्या[illegible]नभोमासंश्राव

अर्यमापुलहोऽथौजाः प्रहेतिः पुंजिकस्थली नारदः कच्छनीरश्चनयंत्येतेस्म माधवम्
३४ मित्रोऽत्रिः पौरुषेयोऽथतक्षकोमेनकाहाहाः रथस्वनइतिह्येतेशुक्रमासंनयंत्यमी
३५ वसिष्ठोवरुणोरंभासहजन्यस्तथाहूहूः शुक्रश्चित्रस्वनश्चैवशुचिमासंनयंत्यमी ३६
इंद्रोविश्वावसुःश्रोताएलापत्रस्तथांगिराः प्रम्लोचाराक्षसोवर्योनभोमासंनयंत्यमी ३७
विवस्वानुग्रसेनश्चव्याघ्रआसारणोभृगुः अनुम्लोचाशंखपालोनभस्याख्यंनयंत्यमी ३८
पूषाधनंजयोवातःसुषेणःसुरुचिस्तथा घृताचीगौतमश्चेतितपोमासंनयंत्यमी ३९ ऋ
तुर्वर्चाभरद्वाजः पर्जन्यःसेनजित्तथा विश्वऐरावतश्चैवतपस्याख्यंनयंत्यमी ४० ॥१॥

णं ३७ विवस्वानसूर्यः उग्रसेनोगंधर्वः व्याघ्रोराक्षसः आसारणोयक्षः शंखपालोनागः नभस्याख्यंभाद्रपदं
३८ धनंजयोनागः वातोराक्षसः सुषेणोगंधर्वः सुरुचिर्यक्षः तपोमासंमाघंमासक्रमातिलंघनंकौर्मोक्तास्त्विक
मानुसारेणवेदमवेतुमासक्रमेणोक्तिः क्वचिन्नामव्यत्ययस्तुकल्पभेदेनेतिज्ञेयं ३९ ऋतुर्यक्षः वर्चाराक्षसः पर्जन्यःसूर्यः

अंशुः सूर्यः अंशाऽनिवापाच्छ्रतार्क्ष्यः यक्षः ऋतसेनोगंधर्वः विद्युच्छत्रुः राक्षसः महाशंखोनागः सहोमासं मार्गशीर्षं ४१ भगः सूर्यः स्फूर्जोराक्षसः अरिष्ठनेमिर्गंधर्वः ऊर्णोयक्षः आयुऋषिः कर्कोटकोनागः ४२ ऋचीकतनयोजमदग्निः कंबलोनागः ब्रह्मापेतोराक्षसः शतजित्यक्षः धृतराष्ट्रोगंधर्वः इषंभराः आश्विनपालकाः ४३ विष्णुरादित्यः अश्वतरोनागः सूर्यवर्चागंधर्वः सत्यजित्यक्षः मखापेतोराक्षसः ऊर्ज्जमासं कार्त्तिकं ४४ एतेचादित्यादयः कौर्मेविभज्योक्ताः धाताऽर्यमाचमित्रश्चवरुणश्चेंद्रएवच विवस्वानथपूषाचपर्जन्यश्चांशुरेवच भगस्त्वष्टाचविष्णुश्च आदित्या द्वादशस्मृ

अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी विद्युच्छत्रुर्महाशंखः सहोमासं नयंत्यमी ४१ भगः स्फूर्जोऽरिष्ठनेमिरूर्ण आयुश्च पंचमः कर्कोटकः पूर्वचित्तिः पुष्यमासं नयंत्यमी ४२ त्वष्टा ऋचीकतनयः कंबलश्च तिलोत्तमा ब्रह्मापेतोऽथ शतजित् धृतराष्ट्र इषंभराः ४३ विष्णुरश्वतरो रंभा सूर्यवर्चाश्च सत्यजित् विश्वामित्रो मखापेत ऊर्ज्जमासं नयंत्यमी ४४ एता भगवतो विष्णोरादित्यस्य विभूतयः

ताः १ पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोथांगिराः भृगुः गौतमोऽथ भरद्वाजः कश्यपः क्रतुरेवच जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः २ रथकृच्चोऽरिष्ठनेमिर्ग्रामणीश्च रथस्वनः रथचित्रस्वनः श्रोता अरुणः सेनजित्तथा तार्क्ष्यश्चारिष्ठनेमिश्च ऋतजित्सत्यजित्तथा एते यक्षाः ३ अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा वर्यो व्याघ्रस्तथायुश्च वायुर्विद्युद्दिवाकरः ब्रह्मापेतश्च विप्रेंद्र यज्ञापेतश्च राक्षसाः ४ वासुकिः कच्छनीरश्च तक्षकः सर्पपुंगवः एलापत्रः शंखपालस्तथैरावतसंज्ञितः धनंजयो महापद्मस्तथा कर्कोटको द्विजाः कंबलोऽश्वतर

यश्चैववहंत्येवंयथाक्रमं ५ तुंबरुर्नारदोहाहाहूहूर्विश्वावसुस्तथा उग्रसेनोवसुरुचिर्विश्वावसुरथापरः चित्रसेनस्तथोर्णा
युर्द्धृतराष्ट्रोद्विजोत्तमाः ६ सूर्यवर्चाद्वादशेतिगंधर्वागायतांवराः कृतस्थल्यप्सरोवर्यातथान्यापुंजिकस्थली मेनकासहज
न्याचप्रम्लोचाचद्विजोत्तमाः अनुम्लोचाघृताचीचविश्वाचीचोर्वशीतथा अन्याचपूर्वचित्तिः स्यादन्याचैवतिलोत्तमारंभा
चेतिद्विजश्रेष्ठास्तथैवाप्सरसः स्मृता इति ४५ एतेषांपृथक्कर्माणिनिरूपयतिद्वादशस्वपीतित्रिभिः ऋषयोदेवाः सूर्यःमन्त्रि

स्मरतांसंध्ययोर्नृणांहरंत्यंहोदिनेदिने ४५ द्वादशस्वपिमासेषुदेवोऽसौषड्भिरस्यवै चरन्सम
तांतानमुत्रेहचसन्मतिं ४६ सामर्ग्यजुर्भिस्तल्लिंगैर्ऋषयः संस्तुवंत्यमुं गंधर्वास्तंप्रगायं
तिनृत्यंत्यप्सरसोऽग्रतः ४७ उन्नह्यंतिरथंनागाग्रामण्योरथयोजकाः नोदयंतिरथंपृष्ठेनै
र्ऋतावलशालिनः ४८ वालखिल्याः सहस्राणिषष्टिर्ब्रह्मर्षयोमलाः पुरतोभिमुखंयांति
स्तुवंतिस्तुतिभिर्विभुं ४९ एवंह्यनादिनिधनोभगवान्हरिरीश्वरः कल्पेकल्पेस्वमात्मा
नंव्यूह्यलोकानवत्यजः ५० इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेएकादशोध्यायः ११।

गंधर्वादिभिः अस्यजनस्यसमंताच्च रन्नमुंमामतिंतनुतेगायत्र्यर्थोऽनेनसूचितः ४६ तल्लिंगैः सूर्यप्रकाशकैः ४७ उ
न्नह्यंतिदृढंवध्नंतियामण्योयक्षाः नैर्ऋताः राक्षसाः ४८ किंचवालखिल्याइति एवंप्रतिमासंतएवस्तुवंतिविभुंसूर्यं ४९
व्यूह्यविभज्य ५० इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांएकादशोध्यायः ११ ॥ ॥राम

॥८॥

द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः प्रथमस्कंधमारभ्य प्राधान्येन समासतः १ तदेवमस्मिन्पुराणोक्तानर्थान्संक्षे
पतो वर्णयिष्यन्धर्म्मादीन्प्रणमति नम इति महते हरिभक्तिलक्षणाय ब्राह्मणेभ्यः ब्राह्मणान्सनातनान्धर्म्मान्नित्युपल
क्षणं पुराणोक्तार्थानां १ पुरुषत्वे उचितं श्रवणादियोग्यं २ एतत्प्रपंचयति अत्रेति भगवान्ऐश्वर्यादिषड्गुणः साक्षात्सं
कीर्तित इति देवताकांडार्थः ३ ब्रह्मकांडार्थमाह अत्र ब्रह्मेति गुह्यं निर्गुणं प्रभवाप्ययं प्रभवंत्यस्मादिति प्रभवं अप्येत्यस्मि

सूत उवाच नमो धर्माय महते नमः कृष्णाय वेधसे ब्राह्मणेभ्यो नमस्कृत्य धर्म्मान्वक्ष्ये सना
तनान् १ एतद्वः कथितं विप्रा विष्णोश्चरितमद्भुतं भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितं २
अत्र संकीर्तितः साक्षात्सर्वपापहरो हरिः नारायणो हृषीकेशो भगवान्सात्वतांपतिः ३ अ
त्र ब्रह्म परं गुह्यं जगतः प्रभवाप्ययं ज्ञानं च तदुपाख्यानं प्रोक्तं विज्ञानसंयुतं ४ भक्तियोगः स
माख्यातो वैराग्यं च तदाश्रयं पारीक्षितमुपाख्यानं नारदाख्यानमेव च ५ प्रायोपवेशो राज
र्षेर्विप्रशापात्परीक्षितः शुकस्य चैव ब्रह्मर्षेः संवादश्च परीक्षितः ६ योगधारणयोत्क्रांतिः
संवादो नारदाजयोः अवतारानुगीतं च सर्गः प्राधानिकोऽग्रतः ७ ॥ न्नित्यप्पर्यंत च तेषु अनेनाश्र
यशब्दार्थो दर्शितः विज्ञानसंयुतं अपरोक्षज्ञानपर्यंतं ज्ञानं तदुपाख्यानं तत् ज्ञानमुपाख्यायते प्रकाश्यते येन तत् ज्ञानसाध
नमित्यर्थः ४ कर्म्मकांडार्थमाह भक्तियोगश्च साध्यसाधनरूपः तदाश्रयं भक्तियोगेन निष्पादितं एवं सामान्यतो निरूप्येदानीं द्वाद
शस्कंधप्रकरणार्थाननुक्रामति पारीक्षितमुपाख्यानं परीक्षिज्जन्मादि तत्प्रस्तावाय नारदाख्यानं च ५ ब्रह्मर्षेर्ब्राह्मणोत्तमस्य इति प्र

महापुरुषस्यसंस्थितिः प्रलयेतूष्णीमवस्थानं ८ प्राकृतिकः प्रकृतिभवोगुणक्षोभरूपः वैकृतिकामहदादयः चकाराद्वि कारश्चयेतयोस्तेषांचसर्गः ९ गतिः स्वरूपंउद्धरणेउद्धारणे १० अर्द्धाभ्यांनारीचनरश्चतस्य ११ संतानोधर्मपत्नीनामिति ॥

विदुरोद्धवसंवादःक्षत्तृमैत्रेययोस्ततः पुराणसंहिताप्रश्नोमहापुरुषसंस्थितिः ८ ततः प्राकृतिकःसर्गःसप्तवैकृतिकाश्चये ततोब्रह्मांडसंभूतिर्वैराजःपुरुषोयतः ९ कालस्यस्थूल सूक्ष्मस्यगतिःपद्मसमुद्भवः भुवउद्धरणेऽम्भोधौहिरण्याक्षवधोयथा १० ऊर्द्धतिर्यगवाक्स र्गोरुद्रसर्गस्तथैवच अर्द्धनारीनरस्याथयतः स्वायंभुवोमनुः ११ शतरूपाचयास्त्रीणामा द्याप्रकृतिरुत्तमा संतानोधर्म्मपत्नीनांकर्द्दमस्यप्रजापतेः १२ अवतारोहिदेवस्यकपि लस्यमहात्मनः देवहूत्याश्चसंवादःकपिलेनचधीमता १३ नवब्रह्मसमुत्पत्तिर्दक्षयज्ञ विनाशनं ध्रुवस्यचरितंपश्चात्पृथोःप्राचीनवर्हिषः १४ नारदस्यचसंवादस्ततःप्रैयव्र तंद्विजाः नाभेस्ततोऽनुचरितमृषभस्यभरतस्यच १५ ततोद्वीपसमुद्राद्रिवर्षनद्युपवर्णनं ज्योतिश्चक्रस्यसंस्थानंपातालनरकस्थितिः १६ दक्षजन्मप्रचेतोभ्यस्तत्पुत्रीणांचसंततिः

नवब्रह्मसमुत्पत्तिरित्यस्यानंतरंद्रष्टव्यम् १२।१३ चतुर्थस्कंधार्थमाह नवब्रह्मणांमरीच्यादीनांसमुत्पत्तिःसंतानः १४ पंचमस्कंधा र्थमाह ततः प्रैयव्रतंप्रियव्रतस्यचरितम् १५ द्वीपाद्युपवर्णनंप्रथमंसंक्षेपतः ततोद्वीपादीनांयेगिरयोनद्यश्चतेषामुपवर्णनम् पाताल दीनांचसंस्थितिः अनंतैनरकानिवर्तकमनामिति ॥ चि

स्थानंतद्वहीतंततः प्राचीनम् १६ षष्ठार्थमाह ॥ दक्षजन्मेति ॥

भा॰ द्वा॰ सप्तमार्थमाह पुत्रयोश्चेति १८ अष्टमार्थमाह मन्वंतरानुचरितमिति क्वचित्कस्यचिदनुक्तिः व्युत्क्रमोक्तिश्च भक्तिरसानुकूलत्वेनेति

यतोदेवासुरनरास्तिर्यङ्नगखगादयः १७ त्वाष्ट्रस्यजन्मनिधनंपुत्रयोश्चदितेर्द्विजाः दैत्ये
श्वरस्यचरितंप्रह्लादस्यमहात्मनः १८ मन्वंतरानुचरितंगजेंद्रस्वविमोक्षणं मन्वंतरावता
राश्चविष्णोर्हयशिरादयः १९ कौर्म्मंमात्स्यंनारसिंहंवामनंचजगत्पतेः क्षीरोदमथनंतद्व
दमृतार्थेदिवौकसां २० देवासुरंमहायुद्धंराजवंशानुकीर्तनं इक्ष्वाकुजन्मतद्वंशः सुद्यु
म्नस्यमहात्मनः २१ इलोपाख्यानमत्रोक्तंतारोपाख्यानमेवच सूर्यवंशानुकथनंशशा
दाद्यान्नृपादयः २२ सौकन्यंचाथशर्यातेःककुत्स्थस्यचधीमतः खट्वांगस्यचमांधातुः सौ
भरेःसगरस्यच २३ रामस्यकोशलेंद्रस्यचरितंकिल्बिषापहं निमेरंगपरित्यागोजनका
नांचसंभवः २४ रामस्यभार्गवेंद्रस्यनिःक्षत्रीकरणंभुवः ऐलस्यसोमवंशस्ययथातेर्न्न
हुषस्यच २५ दौष्यंतेर्भरतस्यापिशंतनोस्तत्सुतस्यच ययातेर्ज्येष्ठपुत्रस्ययदोर्वंशोनुकीर्ति
तः २६ यत्रावतीर्णोभगवान्कृष्णाख्योजगदीश्वरः वसुदेवगृहेजन्मततोवृद्धिश्चगोकुले २७
तस्यकर्माण्यपाराणिकीर्तितान्यसुरद्विषः ऽऽ द्रष्टव्यं १९।२० नवमार्थमाह राजवंशेति २१।२२।२३।२४
सोमवंशादिभूतस्यैलस्यचरितम् २५ तत्सुतस्यभीष्मस्य २६।२७ दशमार्थमाह तस्यकर्माणीति पूतनाया ॥

राम ४१

असुसहितस्यस्तन्यपयसः पानं २८ सहभ्रातुः ससखस्य २९ ३० ३१ यज्ञाभिषेकं यज्ञः पूजा अभिषेकश्च तयोर्द्वंद्वैक्यं

पूतनाऽसुपयः पानंशकटोत्पाटनंशिशोः २८ तृणावर्त्तस्यनिष्पेषस्तथैववकवत्सयोः धेनुकस्यसहभ्रातुः प्रलंवस्यचसंक्षयः २९ गोपानांचपरित्राणंदावाग्नेः परिसर्पतः दमनंकालियस्याहेर्महाऽहेर्नंदमोक्षणं ३० व्रतचर्यानुकन्यानांयत्रतुष्टोऽच्युतोव्रतैः प्रसादोयज्ञपत्नीभ्योविप्राणांचानुतापनं ३१ गोवर्द्धनोद्धारणंचशक्रस्यसुरभेरथ यज्ञाभिषेकंकृष्णस्यस्त्रीभिः क्रीडाचरात्रिषु ३२ शंखचूडस्यदुर्बुद्धेर्वधोऽरिष्टस्यकेशिनः अक्रूरागमनंपश्चात्प्रस्थानंरामकृष्णयोः ३३ व्रजस्त्रीणांविलापश्चमथुरालोकनंततः गजमुष्टिकचाणूरकंसादीनांचयोवधः मृतस्यानयनंसूनोः पुनः सांदीपनेर्गुरोः ३४ मथुरायांनिवसतायदुचक्रस्ययत्प्रियं कृतमुद्धवरामाभ्यांयुतेनहरिणाद्विजाः ३५ जरासंधसमानीतसैन्यस्यवहुशोवधः घातनंयवनेंद्रस्यकुशस्थल्यांनिवेशनं ३६ आदानंपारिजातस्यसुधर्म्मायाः सुरालयात् रुक्मिण्याहरणंयुद्धेप्रमथ्यद्विषतोहरेः ३७ हरस्यजृंभणंयुद्धेवाणस्यभुजकृंतनं प्राग्ज्योतिषपतिंहत्वाकन्यानांहरणंचयत् ३८ चैद्यपौंड्रकशाल्वानांदंतवक्रस्यदुर्मतेः ॥

३२ । ३३ । ३४ । ३५ । ३६ द्विषतः शत्रून्प्रमथ्य ३७ ॥ ३८ ॥ येचशंवरा ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

॥

१२
भा॰ द्वा॰
४२

दयस्तेषां ३९ माहात्म्यंप्रभावः ४० एकादशार्थमाह विप्रशापेति धर्म्मविनिर्णयः वर्णाश्रमधर्म्मनिश्चयः ४१ मर्त्य
परित्यागः मनुष्यत्वस्यांतर्द्धानं ४२ द्वादशार्थमाह युगेति युगलक्षणंतदनुरूपावृत्तिश्चेत्यर्थः त्रिविधाप्राकृतिकीनैमित्ति
कीनित्याचेति ४३ ऋषेर्व्यासस्यसूर्यस्यचविन्यासइत्यर्थः ४४ इतिचोक्तमितिचकारादन्यदपिवःयुष्माभिरिहयत्पृष्टोऽ

शंवरोद्विविदःपीठोमुरःपंचजनादयः ३९ माहात्म्यंचवधस्तेषांवाराणस्याश्चदाहनं भा
रावतरणंभूमेर्निमितीकृत्यपांडवान् ४० विप्रशापापदेशेनसंहारःस्वकुलस्यच उद्धवस्य
चसंवादोवासुदेवस्यचाद्भुतः ४१ यत्रात्मविद्याह्यखिलाप्रोक्ताधर्म्मविनिर्णयः ततोमर्त्य
परित्यागश्चात्मयोगानुभावतः ४२ युगलक्षणवृत्तिश्चकलौनृणामुपप्लवः चतुर्विधश्च
प्रलयउत्पत्तिस्त्रिविधातथा ४३ देहत्यागश्चराजर्षेर्विष्णुरातस्यधीमतः शाखाप्रणयनमृ
षेर्मार्कंडेयस्यसत्कथा महापुरुषविन्यासःसूर्यस्यजगदात्मनः ४४ इतिचोक्तंद्विजश्रे
ष्ठायत्पृष्टोहमिहास्मिवः लीलावतारकर्म्माणिकीर्त्तितानीहसर्वशः ४५ पतितःस्ख
लितश्चार्त्तःक्षुत्वावाविवशोऽब्रुवन् हरयेनमइत्युच्चैर्मुच्यतेसर्वपातकात् ४६ ॥ १ ॥

स्मितदुक्तमिति किमेवंनानार्थकथनेनतत्राह लीलेति सर्वशः तत्तदर्थकीर्त्तनद्वारेणेत्यर्थः ४५ तत्कीर्त्तनेनापिकिमित्य
पेक्षायांतत्फलमाह द्वाभ्यां पतितः कूपादिषुस्खलितः सोपानादिषुआर्त्तः दुःखितः क्षुत्वाक्षुतंकृत्वाविवशोपि ४६ ॥ १ ॥

संकीर्त्यमानः यद्वाश्रुतोऽनुभावोयस्यसः पुंसांचित्तंप्रविश्यनिःशेषंदुःखंविधुनोतीति हीति सतामनुभवंप्रमाणय
तिअर्कोगिरिगुहादिध्वांतंननिवर्त्तयतीत्यपरितोषाद्दृष्टांतांतरमाह अतिवातोऽभ्रमिवेति ४७ हरिसंकीर्त्तनमेव
महाफलंनह्यत्तिरिक्तंसर्वंमिथ्यालापमात्रमितिप्रपंचयति मृषागिरइतिचतुर्भिः मृषागिरःमिथ्यावाचः असतीःअस
त्यः असतांकथाः यास्ताः यत्तयासुउत्तमश्लोकस्ययशोऽनुगीयतइतियत् तदेवसत्यंतदेवहिमंगलंहइतिहर्षेभगव

संकीर्त्यमानोभगवाननंतः श्रुतानुभावोव्यसनंहिपुंसां प्रविश्यचित्तंविधुनोत्यशेषंयथा
तमोर्कोऽभ्रमिवातिवातः ४७ मृषागिरस्ताह्यसतीरसत्कथानकथ्यतेयद्भगवानधोक्षजः
तदेवसत्यंतदुहैवमंगलंतदेवपुण्यंभगवद्गुणोदयं ४८ तदेवरम्यंरुचिरंनवंनवंतदेवश
श्वन्मनसोमहोत्सवं तदेवशोकार्णवशोषणंनृणांयदुत्तमश्लोकयशोऽनुगीयते ४९ न
यद्वचश्चित्रपदंहरेर्यशोजगत्पवित्रंप्रगृणीतकर्हिचित् तद्ध्वांक्षतीर्थंनतुहंससेवितं
यत्राऽच्युतस्तत्रहिसाधवोऽमलाः ५० सवाग्विसर्गोजनताघसंप्लवोयस्मिन्प्रतिश्लो
कमबद्धवत्यपि नामान्यनंतस्ययशोंकितानियत् शृण्वंतिगायंतिगृणंतिसाधवः ५१

द्गुणानामभ्युदयोयस्मात्तत् ४८ नवंनवंयथाभवतितथारुचिरंरुचिप्रदंमहानुत्सवोयस्मात् ४९ चित्राणिपा
दानियस्मिन्तदपिजगत्पवित्रयतीतथा तद्धरेर्यशोनप्रगृणीतनवर्णयेत् तद्वचःध्वांक्षतीर्थंकाकतुल्यनराणांरति।
स्थानंननुहंसैर्ज्ञानिभिःसेवितंतत्रहेतुःयत्रेति ५० सवाग्विसर्गःसएववाचःप्रयोगःजनताघसंप्लवःजनसमूहाघनाशकःय

श्री० द्वा०
४३

इदानीं ज्ञानकर्म्मादपि भगवत्कीर्त्तनादिष्वेवादरः कर्त्तव्य इत्याह नैष्कर्म्यं ब्रह्म तत्प्रकाशकं यत् ज्ञानं यतो निरंजनं उपाधिनि
वर्त्तकं तदप्यच्युतभक्तिवर्ज्जितं चेत् न शोभते नापरोक्षपर्यंतं भवतीत्यर्थः ईश्वरे न चेदर्पितं तर्हि यदनुत्तमं सर्वोत्तममपि
कर्म्म तदपि पुनः कुतः शोभते यतः शश्वत् साधनकाले फलकाले च अभद्रं दुःखात्मकं ५२ किंच वर्णाश्रमाचारादि
षु यः परो महान् परिश्रमः स यशोयुक्तायां श्रियामेव कीर्त्तिः संपत्तिश्च केवलं परः पुरुषार्थ इत्यर्थः गुणानुवादादिभिस्तु भ
श्रीधरपादपद्मयोरविस्मृतिर्भवति ५३ ततः किमत आह अविस्मृतिरिति क्षिणोति नाशयति ५४ अथेदानीं श्री।

नैष्कर्म्यमप्यच्युतभाववर्ज्जितं न शोभते ज्ञानमलं निरंजनं कुतः पुनः शश्वदभद्रमीश्वरे
न ह्यर्पितं कर्म्म यदप्यनुत्तमं ५२ यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुता
दिषु अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ५३ अविस्मृतिः कृ
ष्णपदारविंदयोः क्षिणोत्यभद्राणि शमं तनोति च सत्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञा
न विरागयुक्तं ५४ यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतं नाराय
णं देवमदेवमीशमजस्रभावा भजताविवेश्य ५५ अहं च संस्मारित आत्मतत्वं श्रुतं पु
रा मे परमर्षिवक्त्रात् ॥ एवमात्मानं चाभिनंदन्नाह यूयमिति द्वाभ्यां हे द्विजाग्र्याः यद्यस्मात् आत्मन्यंतःक
रणे श्रीनारायणं आविवेश्य शश्वद्भजत संभावनायां लोट् अतो भूरिभागाः बहुपुण्याः कथंभूतं अखिलात्मभू
तं सर्वांतर्यामिणं अत एव देवं सर्वोपास्यं अदेवं न देवोऽन्यो यस्य तं कुतः ईशं यद्वा यस्मात् यूयं भूरिभागाः
तप आदि संपन्नाः ततो नारायणं भजतेति विधिः ५५ मे मया ॥ ९ ॥ ९ ॥ ९ ९ ९ ॥ ❋ ९ ❋ ॥

राम
४३

श्रुतं ५६ एतत्पुराणकीर्त्तनादिफलं प्रपंचयितुमाह एतद्व इत्यष्टभिः ५७ यामंक्षणंचेत्यर्थः आत्मानमेवस्ता।
स्तांपुनाति ननुस्नानादिवद्देहमात्रं ५८ ५९ ६० ६१ ऋगाद्यधीत्यद्विजोमधुकुल्यादियदनुविंदतेतत्फलं।

प्रायोपवेशेनृपतेः परीक्षितः सदस्यृषीणांमहतांचशृण्वतां ५६ एतद्वः कथितंविप्राः कथनीयोरुकर्मणः माहात्म्यंवासुदेवस्यसर्वाशुभविनाशनं ५७ यएवंश्रावयेन्नित्यं यामंक्षणमनन्यधीः श्रद्धावान्योनुशृणुयात् पुनात्यात्मानमेवसः ५८ द्वादश्यामेकादश्यांवाशृण्वन्नायुष्मवान्भवेत् पठत्यनश्नन्प्रयतस्ततोभवत्यपातकी ५९ पुष्करेमथुरायांचद्वारवत्यांयतात्मवान् उपोष्यसंहितामेतांपठित्वामुच्यतेभयात् ६० देवतामुनयः सिद्धाः पितरोमनवोनृपाः यच्छंतिकामान्गृणतः शृण्वतोयत्रकीर्त्तनात् ६१ ऋचोयजूंषिसामानिद्विजोऽधीत्यानुविंदते मधुकुल्याघृतकुल्याः पयःकुल्याश्चतत्फलं ६२ पुराणसंहितामेतामधीत्यप्रयतोद्विजः प्रोक्तंभगवतायत्तुतत्पदंपरमंव्रजेत् ६३ विप्रोधीत्याप्नुयात्प्रज्ञांराजन्योदधिमेखलां वैश्योनिधिपतित्वंचशूद्रः शुद्ध्येतपातकात् ६४ कलिमलसंहतिकालनोऽखिलेशोहरिरितरत्रनगीयतेह्यभीक्ष्णं॥

एमेतांपठित्वा अ।नुविंदतइति ६२ किंचप्रोक्तमिति ६३ राजन्यउदधिमेखलांपृथ्वींसंधिरापेः ६४ अस्यपुराणस्यैवंप्रभावातिरेककारण।

कलिमलानां संहतिं समूहं कालयति विनाशयतीति तथा इतरत्र शास्त्रांतरे ६५ शास्त्रप्रतिपादितं भगवंतं
नमस्करोति तमिति द्वाभ्यां जगदुदयस्थितिसंयमात्मनोऽज आदयः शक्रयोयस्तं द्युपतिभिर्ईडैर्वैरपिदुरवसितः अ
ज्ञातः स्तवः स्तोत्रं यस्य तं ६६ उपचिताभिः उद्रिक्ताभिर्नवशक्तिभिः प्रकृतिपुरुषमहदहंकारतन्मात्ररूपाभिः स्वा॰

इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपादं कथाप्रसंगैः ६५ तमहमजमनं
तमात्मतत्वं जगदुदयस्थितिसंयमात्मशक्तिं द्युपतिभिरजशक्रशंकराद्यैर्दुरवसितः
स्तवमच्युतं नतोस्मि ६६ उपचितनवशक्तिभिः स्व आत्मन्युपरचितस्थिरजंगमालया
य भगवत उपलब्धिमात्रधाम्ने सुरऋषभाय नमः सनातनाय ६७ स्वसुखनिभृतचे
तास्तद्व्युदस्तान्यभावोप्यजितरुचिरलीलाकृष्टसारस्तदीयं व्यतनुत कृपया यस्तत्वदी
पं पुराणं तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ६८ इति श्रीभागवते महापुराणे द्वाद
शस्कंधे द्वादशोऽध्यायः १२॥ सूत उवाच॥ ११ आत्मन्येवोपरचितं स्थिरं जंगमं चालयो यस्तस्मै भगव

ते ६७ श्रीगुरुं नमस्करोति स्वसुखेनैव निभृतं पूर्णं चेतो यस्य सः तेनैव व्युदस्तोऽन्यस्मिन्भावो यस्स तथाभूतोपि अजि
तस्य रुचिराभिर्लीलाभिः आकृष्टः सारः स्वसुखं गतं स्थैर्यं यस्य सः तत्वदीपं परमार्थप्रकाशकं श्रीभागवतं यो व्यत
नुत तं नतोऽस्मीति ६८ ॥ ॥ इति श्रीभागवते महापुराणे द्वादशस्कंधे टीकायां द्वादशोऽध्यायः ॥ १२॥ सूत उवाच॥

सर्वपुराणसंख्यादीनुपवर्णयिष्यन तत्प्रतिपाद्यं देवं प्रणमति स्तवैर्वेदैश्च स्तुन्वंति स्तुवंति उपनिषच्छंदसा कासंतत्वंकंदानुरोधेन ध्यानेनावस्थितेन निश्चलेन तद्गतेन मनसा तेन यस्यांतं न विदुः सुरासुरगणाः १ क्षीरोदमथनादौ दुर्ज्ञेयत्वमेव प्रदर्शयितुं कूर्म्मावतारमनुस्मारमयन्नाशिषः प्रार्थयते पृष्ठेभ्राम्यत अमंदो मंदरगिरिः गरिष्ठो मंदराचलस्तस्य ग्रावाण

यं ब्रह्मा वरुणेंद्ररुद्रमरुतः स्तुन्वंति दिव्यैः स्तवैर्वेदैः सांगपदक्रमोपनिषदैर्गायंति यं सामगाः ध्यानावस्थिततद्गतेन मनसा पश्यंति यं योगिनो यस्यांतं न विदुः सुरासुरगणा देवाय तस्मै नमः १ पृष्ठे भ्राम्यदमंदमंदरगिरिग्रावाग्रकंडूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पांतु वः यत्संस्कारकलानुवर्त्तनवशाद्वेलानिभेनांभसां याताया तमतंद्रितं जलनिधेर्नाद्यापि विश्राम्यति २ पुराणसंख्यासंभूतिमस्य वाच्यप्रयोजने दानं दानस्य माहात्म्यं पाठादेश्च निबोधत ३ ब्राह्मं दश सहस्राणि पाद्मं पंचोनषष्टि च श्रीवैष्णवं त्रयोविंशत चतुर्विंसति शैवकं ४ दशाष्टौ श्रीभागवतं नारदं पंचविंशतिः

स्तेषामग्राणितैः कंडूयनात् तेन सुखेन निद्रालोः निद्राशीलस्य येषां श्वासानिलानां संस्कारास्तेषां कलाश्च लेशाः तदनुवर्त्तनवशात् जलनिधेरंभसां यातायातं न विश्राम्यति ननु समुद्रक्षोभादेव तन्न संस्कारवशात् तत्राह वेलाक्षोभस्तस्य निभेन मिषेण २ पुराणसंख्यास्तासां संभूतिं समाहारं च अस्य तु श्रीभागवतस्य वाच्यं विषयः प्रयोजनं च दानं च तस्य पा

भा॰ द्वि॰ दशपंचसहस्राणिचत्वारिशतानि ५ ६ स्कांदंशताधिकैकाशीतिसहस्रं ७ सौपर्णंगरुडपुराणंएकोनविंशतएकोनविं
८५ शतिः ८ महाभारतंत्वितिहासःरामायणंचऋषिप्रोक्तंकाव्यं अतःपुराणानांसंदोहः समूहश्चतुर्लक्षसंख्याकएव उदा

मार्कंडेयंनववाह्नंतुदशपंचचतुःशतं ५ चतुर्दशभविष्यंस्यात्तथापंचशतानिच दश
शैव्रह्मवैवर्तंलिंगमेकादशैवतु ६ चतुर्विंशतिवाराहमेकाशीतिसहस्रकं स्कांदंशतंतथा
चैकंवामनंदशकीर्तितं ७ कौर्म्मंसप्तदशाख्यातंमात्स्यंततुचतुर्द्दश एकोनविंशत्सौपर्णं
ब्रह्मांडंद्वादशैवतु ८ एवंपुराणसंदोहश्चतुर्लक्षउदाहृतः तत्राऽष्टादशसाहस्रंश्रीभाग
वतमिष्यते ९ इदंभगवताऽपूर्वंब्रह्मणेनाभिपंकजे स्थितायभवभीतायकारुण्यात्सं
प्रकाशितं १० आदिमध्यावसानेषुवैराग्याख्यानसंयुतंहरिलीलाकथाव्रातामृतानंदि
तसत्सुरं ११ सर्ववेदांतसारंयत्ब्रह्मात्मैकत्वलक्षणं वस्त्वद्वितीयंतन्निष्ठंकैवल्यैकप्रयो
जनं १२ प्रौष्टपद्यांपौर्णमास्यांहेमसिंहसमन्वितं ददातियोभागवतंसयातिपरमांगतिं
१३ राजंतेतावदन्यानिपुराणानिसतांगणे यावद्भागवतंनैवश्रूयतेऽमृत[सागरमन्यानि]
सागरम् १४ ॥ श्रीभा[ग]गवतमिष्यते तद्रसामृततृप्तस्यनाऽन्यत्रस्याद्रतिःक्वचित् १५

नीमस्यवाच्यप्रयोजनादीन्दर्शयितुमाह तत्रेत्यादिना ९ १० हरिलीलाकथानांव्रातः समूहः सएवामृतंतेनानंदिताः
संतःसुराश्चयेनतत् ११ तन्निष्ठंतद्विषयं १२ प्रौष्ठपद्यांभाद्रपद्यांहेमसिंहसमन्वितंसुवर्णसिंहासनारूढं १३ १४ तद्रसए

सर्ववेदांतसारंहि

गा२

॥ १६ १७ पारमहंस्यंपरमहंसैः प्राप्यंनैष्कर्म्यंसर्वकर्म्मोपरमः भक्त्यातच्छ्रवणादिपरोविमुच्येत् १८ ॥
श्रीभागवतसंप्रदायप्रवर्त्तकरूपेणभगवद्ध्यानलक्षणंमंगलमाचरतिकस्मैब्रह्मणे अतुलः असमः अयं

निम्नगानांयथागंगादेवानामच्युतोयथा वैष्णवानांयथाशंभुःपुराणानामिदंतथा १६ क्षेत्राणांचैवसर्वेषांयथाकाशीह्यनुत्तमा तथापुराणव्रातानांश्रीमद्भागवतंद्विजाः १७ श्रीमद्भागवतंपुराणममलंयद्वैष्णवानांप्रियंयस्मिन्पारमहंस्यमेकममलंज्ञानंपरंगीयते तत्रज्ञानविरागभक्तिसहितंनैष्कर्म्यमाविष्कृतंतच्छृण्वन्विपठन्विचारणपरोभक्त्याविमुच्येन्नरः १८ कस्मैयेनविभासितोऽयमतुलोज्ञानप्रदीपःपुरातद्रूपेणचनारदायमुनयेकृष्णायतद्रूपिणा ॥ ६ ॥ ६ ॥

श्रीभागवतरूपः पुराकल्यादौतद्रूपेणब्रह्मरूपेणनारदायतद्रूपिणानारदरूपिणाकृष्णायव्यासायतद्रूपिणा।

योगींद्राय शुकाय तदात्मना शुकरूपेण तत्परं सत्यं श्रीनारायणाख्यं तत्त्वं धीमहीति १९ ॥ इति गाय
त्रैव यथोपक्रममुपसंहरन् गायत्र्याख्य ब्रह्मविद्येयमिति दर्शयति तमेव देवतारूपेण गुरुरूपेण च

योगींद्राय तदात्मनाऽथ भगवद्रातायकारुण्यतस्तच्छुद्धं विम
लं विशोकममृतं सत्यं परं धीमहि १९ नमस्तस्मै भगवते वासुदेवा
य साक्षिणे य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे २० योगींद्राय
नमस्तस्मै शुकाय ब्रह्मरूपिणे संसारसर्पदष्टं यो विष्णुरातममू
मुचत ॥ २१ ॥ ६ ॥ ६ ॥ ६ ॥

प्रणमति नमइति द्वाभ्याम् व्याचचक्षे व्याख्यातवान् २० ॥ २१ ॥ श्रीरामचंद्राय नमः ॥ ६ ॥ ६ ॥

२२ २३ भावार्थदीपिकामेतांभगवद्भक्तिवत्सलां परमानंदपादाब्जभृंगः श्रीश्रीधरोऽकरोत् १ स्वबालचपलालापैः स्वलीलापरिनर्तितैः प्रीयतांपरमानंदन्नृहरिः सद्गुरुः स्वयम् २ श्रीपरानंदसंप्रीत्यैगुह्यंभागवतंमया

भवेभवेयथाभक्तिः पादयोस्तवजायते तथाकुरुष्वयोगेश नाथस्त्वंनोयतः प्रभो २२ नामसंकीर्तनंयस्यसर्वपापप्रणाशनम् प्रणामोदुःखशमनस्तंनमामिहरिंपरम् २३ इतिश्रीभागवतेमहापुराणेऽष्टादशसाहस्र्यांसंहितायांवैयासिक्यां। द्वादशस्कंधेत्रयोदशोऽध्यायः ॥१३॥ शुभम् संपूर्णम् ॥ ६ ॥

तन्मतेनेदमाख्यातंनतुमन्मतिवैभवात् ३ इतिश्रीभागवतेमहापुराणेश्रीभागवतभावार्थदीपिकायांश्रीधरस्वामिविरचितायांद्वादशस्कंधेटीकायामत्रयोदशोऽध्यायः १३ श्रीरस्तु ॥ ६ ॥

मुद्दैर्वेदान्तैर्मार्गैरभ्यर्चितां पुंसां कामदुघमंघ्रिपद्मं प्रदर्शयंतं किंचिदुन्नमय्य समर्पयंतं नखा एव इंदवस्तेषां मयूखैः
रश्मयस्तैर्भिन्नाः संभिन्ना अंगुलय एव चारूणि पत्राणि यस्य तत् २६ लोकार्त्तिहरं स्मितं यस्मिन् तेन परिस्फुरद्भ्यां
कुंडलाभ्यां मंडितेन अधरबिंबदीप्त्या शोणवर्णाचरितेन शोभननासायुक्तेन सुभ्र्वा शोभनया भ्रुवा च प्रत्यर्हयंतं
तं पूजकान् प्रतिपूजयंतं संमानयंतं २७ कदंबकिंजल्कवत्पिसंगं यद्वासस्तेन मेखलया च नितंबे स्वलंकृतं तं हे वत्सः
श्रीवत्सयुक्तं यद्वक्षःस्थलं तं मस्य वक्षस्थलेन वक्षस्यानर्घ्येण हारेण स्वलंकृतमित्यर्थः २८ महाचंदनवृक्षरूपकेणनि

प्रदर्शयंतं कृपया नखेंदुमयूखभिन्नांगुलिचारुपत्रं २६ मुखेन लोकार्त्तिहरस्मितेन परि
स्फुरत्कुंडलमंडितेन शोणायितेनाधरबिंबभासा प्रत्यर्हयंतं सुनसेन सुभ्र्वा २७ कदंबकिं
जल्कपिसंगवाससा स्वलंकृतं मेखलया नितंबे हारेण चानंतधनेन वत्स श्रीवत्सवक्षः
स्थलवल्लभेन २८ परार्ध्यकेयूरमणिप्रवेकपर्यस्तदोर्दंडसहस्रशाखं अव्यक्तमूलं भुव
नांघ्रिपंद्र महींद्रभोगैरधिवीतवल्शम २९ चराचरौको भगवन्महीध्रमहींद्रबंधुं सलिलोपगू

रूपयितुं तं विशिनष्टि परार्ध्यानि श्रेष्ठानि केयूराणि अंगदानि मणिप्रवेकाः मण्युत्तमास्तैः पर्यस्ता व्याप्ता २९
दोर्दंडा एव सहस्रं अनंताः शाखा यस्य चंदनवृक्षोपि केयूरादितुल्यैः फलपुष्पादिभिर्व्याप्तशाखो भवति अव्यक्तं प्रधा
नं मूलमधोभागो यस्य यद्वा अव्यक्तं ब्रह्म मूलं यस्य ब्रह्माभिव्यक्तिरूपत्वात् वृक्षस्यापि मूलं न व्यक्तं भुवनात्मकमं
घ्रिपंद्र अहींद्रस्यानंतस्य भोगैः फणैर्देहावयवैर्वा अधिवीताः संवेष्टिताः स्पृष्टा वल्शाः स्कंधा यस्य वनस्पतेः शतव
ल्शो विरोह इति श्रुतेः सोपि सर्पैर्वेष्टितो भवति २९ प्रेक्षां क्षिपंतमित्यत्रैव पर्वतरूपेण निरूपितमपि विशेषणांतरैः

भा॰ टी॰ पुनर्निरूपयति भगवानेव महीध्रस्तं चराचराणामोकः स्थानं सोपि तथा अहींद्रस्य वंधुं सोपि अहींद्राणां वंधुः सलि
लेनोपगूढमावृतं पर्वतोपि मेनाकादिस्तथा किरीटसाहस्रमेव हिरण्यशृंगाणि यस्य सोपि मेर्वादिस्तथा यथा पर्व
तस्य गर्भे कचिद्रत्नमाविर्भवति तथा आविर्भवत् स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मूर्तिमध्ये यस्य तं ३० किंच
वनमालया निवीतं कंठलंबिन्याव्याप्तं आम्नाया वेदा एव मधुव्रतास्तैः श्रीर्यस्यास्तया हरिमिति पर्वतादिरूपं
पश्यन् हरिरसाविति ज्ञातवानित्यर्थः सूर्यादिभिरगमं अगम्यं स्वव्यापारे एकलयितुमशक्यमित्यर्थः किं

किरीटसाहस्रहिरण्यशृंगमाविर्भवत्कौस्तुभरत्नगर्भम् ३० निवीतमाम्नायमधुव्रतश्रि
यास्वकीर्तिमय्यावनमालया हरिं सूर्येंदुवाय्वग्न्यगमं त्रिधामभिः परिक्रमत्प्राधनिकै
र्दुरासदम् ३१ तर्ह्येव तन्नाभिसरः सरोजमात्मानमंभः श्वसनं वियच्च ददर्श देवो जगतो
विधाता नातः परं लोकविसर्गदृष्टिः ३२ सकर्म्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्निय
देव दृष्ट्वा अस्तौत् विसर्गाभिमुखस्तमीड्यमव्यक्तवर्त्मन्यभिवेशितात्मा ३३ ॥ ९ ॥

च त्रिष्वपि लोकेषु धामसु स्फूर्तिर्येषां तैः रक्षणार्थं परिक्रामद्भिः परितो धावद्भिः प्राधनिकैः प्रधनं संग्रामस्तत्र
योजनैः सुदर्शनादिभिर्हेतुभूतैर्दुरासदं दुःप्रापम् ३१ यदैव हरिमपश्यत् तर्ह्येव तदैव लोकविसर्गदृष्टिः स
न तस्य नाभिसरसि सरोजं श्वसनं प्रलयवायुं वियत् आकाशं च ददर्श ३२ कर्मबीजं लोकसृष्टेः कारणं उपर एवं
क्तः रजोगुणयुक्तः अतः प्रजाः स्रष्टुमिच्छन्नियदेव नाभिसरोजादिपंचकमेव विसर्गेपि अभिमुखः दत्त ३०
॥ चित्तः अव्यक्तवर्त्मनि भगवति निवेशितचित्तः ३३ ॥

इति श्रीभागवते महापुराणे तृतीयस्कंधे टीकायामष्टमोऽध्यायः ८ नवमे तपसा तुष्टं दृष्ट्वा नारायणं त्वजः अस्तौ
देकार्णवे सीदन् लोकसर्गविकीर्षया १ भगवज्ज्ञानेनात्मनः कृतार्थतामाविः कुर्वन् तांश्च शोचन्नाह ज्ञातोऽ
सीति सुचिरादद्य कालोपासनेन अद्य मे मया ज्ञातोऽसि ननु अहो देहभाजामेतदेव महद्दोषः किं न त यद्भ
गवतस्तव गतिः तत्त्वं न ज्ञायत इति यतस्त्वमेव ज्ञातुं योग्यः सत्यत्वात् नान्यत् असत्त्वादित्याह त्वत्तोऽ
न्यन्नास्ति यदस्त्यन्यन्नास्ति यदप्यस्तीति प्रतिभाति तदपि शुद्धं सत्त्वं न भवति कथमसतः प्रतीतिस्तत्राह य

इति श्रीभागवते महापुराणे तृतीयस्कंधेऽष्टमोऽध्यायः ८ ॥ ॥श्रीब्रह्मोवाच ज्ञातोऽसि
मेऽद्य सुचिरान्ननु देहभाजां न ज्ञायते भगवतो गतिरित्यवद्यं नान्यत्त्वदस्ति भगवन्नपि तन्न
शुद्धं मायागुणव्यतिकराद्यदुरुर्विभासि १ रूपं यदेतदवबोधरसोदयेन शश्वन्निवृत्ततम
सः सदनुग्रहाय आदौ गृहीतमवतारशतैकबीजं यन्नाभिपद्मभवनादहमाविरासं २
नातः परं परम यद्भवतः स्वरूपमानंदमात्रमविकल्पमविद्धवर्चः ॥ ३ ॥ यतः मायागुणक्षोभात्त्व
मेवउरुः बहुरूपो विभासि १ ननु त्वमपि सम्यग्न जानासि यत्त्वया दृष्टं रूपमेतदपि गुणात्मकमेव नि
निर्गुणं चेत्तत्सत्यं तत्राह रूपमिति द्वाभ्यां अवबोधरसोदयेन चिच्छक्त्याविर्भावेन शश्वत् सदा निवृ
त्तं तमो यस्मात् तस्य तव यदेतद्रूपं तत् स्वेच्छया स्वातंत्र्येण सतामुपासकानामनुग्रहाय गृहीतमाविष्कृतं अवतार
शतस्य शुद्धसत्त्वात्मकस्य यदेकं बीजं मूलं तत्प्रदर्शनार्थं गुणावतारबीजत्वं दर्शयति यन्नाभीति २ हे पर
म अविद्धवर्चः अनावृतप्रकाशं अतः अविकल्पं निर्भेदं अत एवानंदमात्रं एवंभूतं यद्भवतः स्वरूपं न तत

भा॰टी॰ अतो रूपात्परं भिन्नं न पश्यामि किंतु इदमेव नत अतः कारणात् तेन त्वमदः इदं रूपमुपमुपाश्रितोस्मि योग्यत्वादपीत्याश्र

अ॰ ह एकं उपासेषु मुख्यं यतः विश्वसृजं अत एव च अविश्वं विश्वस्मादन्यत् किंच भूतेंद्रियात्मकं भूतानामिंद्रियाणां ९

चात्मानं कारणमित्यर्थः ३ नन्वेवमपि सोपाधिकमेतदर्वाचीनमेवेत्याशंक्याह तदिदं तदेवेदं हे भुवनमंगल यतः ते

त्वया नोऽस्माकमुपासकानां मंगलाय ध्याने दर्शितं तद्यव्यक्तवर्त्माभिनिवेशितचित्तानामस्माकं त्वया सोपाधिकदर्श

नं युक्तमिति भावः अतस्तुभ्यं नमः अनुविधेम अनुवृत्त्या करवाम तर्हि किमिति केचिन्मां नाद्रियंते तत्राह योनादृत

पश्यामि विश्वसृजमेकमविश्वमात्मन् भूतेंद्रियात्मकमदस्त उपाश्रितोस्मि ३ तद्वा इदं

भुवनमंगल मंगलाय ध्याने स्म नो दर्शितं त उपासकानाम् तस्मै नमो भगवतेऽनुविधेम

तुभ्यं यो नादृतो नरकभाग्भिरसत्प्रसंगैः ४ ये तु त्वदीयचरणांबुजकोशगंधं जिघ्रंति

कर्णविवरैः श्रुतिवातनीतं भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयांबुरुहा

त्स्वपुंसां ५ तावद्भयं द्रविणगेहसुहृन्निमित्तं शोकः स्पृहा परिभवो विपुलश्च लोभः ॥

इति असत्प्रसंगैः निरीश्वरकुतर्कनिष्ठैः ४ आदरेण तु त्वां भजतः कृतार्था इत्याह ये त्विति श्रुतिर्वेदः स एव वातः तेन

नीतं प्रापितं नापैषि नापयासि येत्वत्कथाश्रवणमत्यादरेण कुर्वंति तेषां हृदि नित्यं प्रकाशस इत्यर्थः ५ ततः किमत आ

हः तावदिति द्रविणादौ विद्यमाने भयं गते शोकः पुनश्च स्पृहा ततः परिभवः तथापि विपुलो लोभः

तस्मात्पुनः कथंचित्प्राप्ते ममेत्यसदाग्रहः आर्तिमूलं भयशोकादेः कारणं न प्रवृत्तितनाश्रयेत त्वत्पादाश्रय

णमात्रेण भयादिनिवृत्तिः ॥

किंपुनस्त्वत्प्रकारोऽसतीतिभावः ६ येनिष्कामाअपिसंतस्त्वांनाद्रियंतेतेनरकभाजइत्युक्तं येतुत्वत्कथाश्रवणा
दिविमुखाः संतः काम्यकर्म्मपरास्तेऽतिमंदाइत्याह दैवेनतेहतधियोनष्टमतयः प्रसंगात् श्रवणकीर्त्तनादिरूपा
त् सर्वदुःखनिवर्त्तकात् विमुखानींद्रियाणियेषां अकुशलानिअक्षेमकराणि ७ अकुशलत्वमेवदर्शयति
क्षुत्तृट्चत्रिधातवश्चवातपित्तश्लेष्माणस्तैः इमाः प्रजाः सुदुर्भरेणसुदुःसहेनकामाग्निनाअच्युतयारुषाअवि
च्छिन्नक्रोधेनचपीड्यमानाः संपश्यतोमेमनः सीदति ८ नन्वेवंभूतायाः संसृतेरपरमार्थत्वात्किमर्थंविषादःक्रि

तावन्ममेत्यसदवग्रहआर्तिमूलंयावन्नतेंघ्रिमभयंप्रवृणीतलोकः ६ दैवेनतेहतधि
योभवतः प्रसंगात्सर्वाशुभोपशमनाद्विमुखेंद्रियाये कुर्वंतिकामसुखलेशलवायदीना
लोभाभिभूतमनसोऽकुशलानिशश्वत् ७ क्षुत्तृट्त्रिधातुभिरिमामुहुरर्द्यमानाः शीतो
ष्णवातवर्षैरितरेतराच्च कामाग्निनाऽच्युतरुषाचसुदुर्भरेणसंपश्यतोमनउरुक्रमसीद
तेमे ८ यावत्पृथक्त्वमिदमात्मनइंद्रियार्थमायाबलंभगवतोजनईशपश्येत् तावन्न
संसृतिरसौप्रतिसंक्रमेतव्यर्थापिदुःखनिवहंवहतीक्रियार्था ९ अह्न्यापृतार्तकरणानि
शिनिःशयानानानामनोरथधियाक्षणभग्ननिद्राः ॥ १० ॥ यतेनत्वाह यावदिति आत्मनइदंपृथक्त्वंदेह
दिभावं भगवतस्तवइंद्रियार्थरूपायामायायाबलमाधिक्यंयस्यतत् नप्रतिसंक्रमेतनोपरमेत् दुःखसमूहंप्रापयं
तीति क्रियाणामर्थः फलंयस्यां तदिदमितिपाठेत्वदितित्वत्तः पृथक्पश्येत्यावत् तावदसौव्यर्थापिनोपरमेत्
९ ननुभवत्त्वेवमविवेकिनांविवेकिनस्तुमुक्ताएवेतिकिंतेषामत्याहत्यमतआह अह्नीआपृतानिव्यापृतानिच

भा०टी०
३२

तान्यार्त्तानि क्लिष्टानि करणानींद्रियाणि येषां रात्रौ विषयसुखलवोऽपि नास्ति यतो निशि निःशयानाः स्वप्नदर्शनेन च क्षणे क्षणे भग्ननिद्राः दैवेनाहताः सर्वतः प्रतिहताः अर्थरचनाः अर्थार्थोद्यमा येषाम् १० तदेवमभक्तानां संसारं निरूप्य भक्तानां तन्निवृत्तिमाह त्वमिति भक्तियोगेन शोधिते हृत्सरोजे आस्से तिष्ठसि श्रुतेन श्रवणेन ईक्षितः पंथा यस्य किंच श्रवणं विनाऽपि त्वद्भक्ता मनसा यद्यत्तव वपू रूपं स्वेच्छया ध्यायंति तत्तत्प्रणयसे प्रकटयसि सतां भक्तानामनुग्र ९

दैवाहतार्थरचना ऋषयोऽपि देव युष्मत्प्रसंगविमुखा इह संसरंति १० त्वं भावयोगपरिभावितहृत्सरोज आस्से श्रुतेक्षितपथो ननु नाथ पुंसां यद्यद्धिया त उरुगाय विभावयंति तत्तद्वपुः प्रणयसे सदनुग्रहाय ११ नातिप्रसीदति तथोपचितोपचारैराराधितः सुरगणैर्हृदिबद्धकामैः यत्सर्वभूतदययाऽसदलभ्ययैको नानाजनेष्ववहितः सुहृदंतरात्मा १२ पुंसामतो विविधकर्मभिरध्वराद्यैर्दानेन चोग्रतपसा व्रतचर्यया च आराधनं भगवतस्तव सत्क्रियार्थो धर्मोऽर्पितः कर्हिचिद्ध्रियते न यत्र १३ शश्वत्स्वरूपमहसैव निपीतभेदमोहाय बोधधिषणाय नमः

हाय ११ भक्तानां च निष्कामाणां त्वमतिसुलभो नेतरेषामित्याह नेति उपचितैः ऊर्जितैः उपचारैः परस्मै पुष्पोपहारादिभिः यत् यया असतामभक्तानामलभ्यया दयया प्रियत्वे हेतुः एक इत्यादि १२ यतः सकामानां भवान्नातिप्रसीदति अतः कामप्राप्तिः क्रियाणामुत्तमं फलं न भवति किंतु त्वत्प्रीणनमेव कामसंयोगस्त्ववांतरफलेन प्ररोचनार्थमित्याह पुंसामिति भगवतस्तवाराधनमेव सं‍स्थासौ क्रियार्थश्च श्रेष्ठं क्रियाफलं श्रेष्ठत्वे हेतुः यत्र त्वय्यर्पितो धर्मो न कदाचिन्न ध्रियते न नश्यति कामार्थस्तु धर्मः कामं दत्वा नश्यतीत्यर्थः १३ अतस्त्वामेव वयं नना

= स्क०
३
३३

शश्वत् सर्वदा स्वरूपचैतन्येनैव निरस्तभेदभ्रमाय पुनश्च बोध एव धिषणा विद्याशक्तिर्यस्य यद्वा धिषणमाश्रयः अ
तएव परस्मै ईश्वरत्वे हेतुः विश्वोद्भवादिनिमित्तं या माया तस्या लीलाविलासः तया रासः क्रीडा यस्य तेन तुभ्यं इदं नमः न
मनं चक्र मरुत्तवंनो वयं १४ नामग्रहणमात्रतः कैवल्यप्रदत्वेनैश्वर्यं व्यंजयन्नमस्करोति यस्येति अवतारादी
नां विडंबनमनुकरणं यानि येषु तत्रावतारविडंबनानि देवकीनंदन इत्यादीनि गुणविडंबनानि सर्वज्ञो भक्तवत्
सल इत्यादीनि कर्मविडंबनानि गोवर्द्धनोद्धरणः कंसारिरित्यादीनि असुविगमे ऽपि विवशा अपि गृणंति उच्चार
विश्वोद्भवस्थितिलयेषु निमित्तलीलारासाय ते नम इदं चकृमेश्वराय १४ यस्यावतारगुणकर्म
विडंबनानि नामानि येऽसुविगमे विवशा गृणंति ते नैकजन्मशमलं सहसैव हित्वा संयांत्यपावृ
तमृतं तमजं प्रपद्ये १५ यो वा अहं च गिरिशश्च विभुः स्वयं च स्थित्युद्भवप्रलयहेतव आत्ममू
लं भित्वा त्रिपाद्ववृध एक उरुप्ररोहस्तस्मै नमो भगवते भुवनद्रुमाय १६ लोको विकर्मनिरतः
कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ॥ ॥ यं निकेवलं शमलं पापं अपावृतं निरस्तावरणं ऋत
तं ब्रह्म प्राप्नुवंति १५ तत्र गुणावतारकर्माणि दर्शयन् प्रणमति यो वै एकः त्रिपात् त्रयः ब्रह्मादयः पादाः स्कं
धा यस्य प्रत्येकं च उरवः प्ररोहाः शाखोपशाखा मरीच्यादिमन्वादिरूपा यस्य तथाभूतः सन् ववृधे तस्मै भुवना
कारायद्रुमाय नमः किं कृत्वा ववृधे आत्मा स्वयमेव मूलमधिष्ठानं यस्य तत् प्रधानं भित्वा गुणत्रयरूपेण विभ
ज्य त्रिपात्त्वमेवाह अहं ब्रह्मा गिरिशश्च स्वयं विभुर्विष्णुश्चेति स्थित्युद्भवप्रलयहेतवो यस्य स एवं त्रिपाद्भूत्वा
यो ववृध इत्यर्थः १६ एवं गुणावतारकर्मविडंबनमुक्त्वा तस्यैव कालात्म्यं रूपं तत्कर्म च दर्शयन् प्रणमति ॥

भा॰ त॰ २२

लोकइति द्वाभ्यां विकर्मनिरतः विरुद्धकर्म्मनिष्ठः कुशले हिते स्वे आत्मीये त्वदुदिते त्वय्येव साक्षाद्दत्ते भवदर्चन
रूपे कर्म्मणि उक्तं हि गीतासु यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् यत्तपस्यसि कौन्तेय तत्कुरु
ष्व मदर्प्पणमिति तस्मिन्प्रमत्तः अदत्तचित्तो यावद्वर्त्तते तावदस्य लोकस्य अनिमिषाय कालाय १७ आस्तां
तावल्लोकस्य कथा यस्मात्कालात्स्यात्त्वत्तः यद्द्विपरार्द्धावस्थायि धिष्ण्यं स्थानं तदारूढोपि बिभेमि भीतश्च सं
न्त्वामे वावरुरुत्समानः त्वां प्राप्तुमिच्छन् तपस्तप्तवान् कथंभूतः बहुसवः बहवः सवाः यागाः संव सरा वा

अ॰ ९

यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै १७ यस्मा
द्बिभेम्यहमपि द्विपरार्द्धधिष्ण्यमध्यासितः सकललोकनमस्कृतं यत् तेपे तपो बहुसवो
ऽवरुरुत्समानस्तस्मै नमो भगवतेऽधिमखाय तुभ्यम् १८ तिर्यङ्मनुष्यविबुधादिषु जी
वयोनिष्वात्मेच्छयात्मकृतसेतुपरीप्सया यः रेमे निरस्तरतिरप्यवरुद्धदेहस्तस्मै न
मो भगवते पुरुषोत्तमाय १९ योऽविद्ययानुपहतोऽपि दशार्द्धवृत्त्या निद्रामुवाह जठरी

यस्य बहून् यागान् कृत्वाऽपि बहून् संवत्सरान् वा तपस्तप्तवानित्यर्थः अधिमखाय मखाधि ऽऽकृतलोकयात्रः
पतये १८ इदानीं तत्तत्कालभाविलीलावतारकर्म्माणि दर्शयन्नाह तिर्यगादिषु जीवयोनिषु स्वेच्छया स्वीकृतमू
र्त्तिः सन् स्वकृतसेतोः धर्ममर्यादापालने च्छया रेमे वस्तुतः स्वानंदानुभवेनैव निरस्तविषयसुखोपि यः अत
एव पुरुषोत्तमः तत्तदुपाधिधर्म्मासंस्पर्शात् तदुक्तं गीतासु यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः अतोऽ
स्मिँल्लोके वेदे च प्रथितः पुरुषोत्तम इति १९ इदानीं दृश्यमानामेव मूर्त्तिं प्रणमति योऽविद्ययेति द्वाभ्यां दशार्द्ध॰

राम॰ २२

पंचहत्तयोयस्याः तयात्र्प्रविद्यया निद्राहेतुभूतयात्र्प्रनभिभूतोऽपियोनिद्रामुवाहतस्मैतेनमद्दत्युत्तरेणान्वयः जठरीकृ
तानुदरेप्रविलापितालोकयात्रालोकस्थितिर्येन अहिरेवकशिपुः शय्यातस्याः स्पर्शोनुकूलोयस्यास्तांनिद्रांभीमानां
मूर्मीणामालाविद्यंतेयस्मिन् अंतर्जलेनिद्राणस्याविवेकिनोजनस्यनिद्रासुखमीदृगितिविवृण्वन् प्रदर्शयनुड
पहसन्नित्यर्थः अतएवांतर्जलादिविशेषणानि यद्वा पूर्वकल्पेश्रांतस्यजनस्यविश्रामसुखंविद्रावन्स्फारयन्
तदातुपरोपकारायस्वयंदुःसहमपिदुःखंसोढव्यमितिद्योतनार्थविशेषणानि २० किंच यस्यनाभिपद्मभवभव

अंतर्जलेहिकशिपुस्पर्शानुकूलांभीमोर्मिमालिनिजनस्यसुखंविवृण्वन् २० यन्ना
भिपद्मभवनादहमासमीड्यलोकत्रयोपकरणोयदनुग्रहेण तस्मैनमस्तउदरस्थभ
वाययोगनिद्रावसानविकसन्नलिनेक्षणाय २१ सोऽयंसमस्तजगतांसुहृदेकआत्मासं
त्वेनयन्मृडयतेभगवानभगेन तेनैवमेदृशमनुस्पृशताद्यथाऽहंस्रक्ष्यामिपूर्ववदिदंप्र
णतप्रियोऽसौ २२ एषप्रपन्नवरदोरमयात्मशक्त्यायद्यत्करिष्यतिगृहीतगुणावतारः

तंतस्मात् लोकत्रयमुपकरणंयस्य यद्वा लोकत्रयस्यसृष्ट्यादिद्वारेणोपकरोतीतितथाततःदृशोऽहंयदनुग्रहेणासंउ
दरेस्थितः भवः संभवः संसारप्रपंचोयस्ययोगनिद्राऽवसानेकिंचित्विकसन्नलिनवदीक्षणंयस्य २१ एवंस्तु
त्वाप्रार्थयते सोऽयमितिचतुर्भिः यत्येनसत्वेनज्ञानेनभगेनैश्वर्य्येणचमृडयतेसुखयतिविश्वं दृशंप्रज्ञांअनुस्पृश
तात् योजयतु यथाऽहंसस्रक्ष्यमोभविष्यामियतः प्रणतप्रियोऽसौअहंचप्रणतः नचान्यःप्रार्थनीयोस्ति यतः भग
वानसएवसमस्तजगतांसुहृत् यतोऽसौएकोऽनुस्यूतआत्माअंतर्यामी २२ आत्मशक्त्यारमयासहयद्यत्कर्मकरिष्यति

भा०टी० स्वविक्रमंविष्णोरेवविक्रमः प्रभावोयस्मिनन्तदिदं विश्वंतदाज्ञयासृजतोपिमेचेतः सएवयुंजीतप्रवर्त्तयतु॰ कर्मासक्तिंत श्र
३४ त्कृतंशमलंचवैषम्यादिपापंयथाविजह्यांत्यक्ष्यामि २३ अंभसिसतोयस्यनाभिहृदादिहासंविज्ञानेशक्तिर्यस्यमहत ९
त्त्वात्मकस्यचित्तस्यतदभिमानी अस्यरूपमिदंविश्वंविस्तारयतोमेनिगमस्यावयवभूतानांगिरांविसर्गउच्चारणंमारी
रिषीष्ट हलांतंब्रह्मवर्चसमितिन्यायेनमालुप्यतामित्यर्थः २४ विवृद्धंप्रेम्णास्मितेनविजृंभयन्विश्वस्यविजयाय॥

तस्मिन्स्वविक्रममिदंसृजतोऽपिचेतोयुंजीतकर्म्मशमलंचयथाविजह्यां २३ नाभिहृ॰
दादिहसतोंऽभसियस्यपुंसोविज्ञानशक्तिरहमासमनंतशक्तेः रूपंविचित्रमिदमस्यवि
वृण्वतोमेमारीरिषीष्टनिगमस्यगिरांविसर्गः २४ सोऽसावदभ्रकरुणोभगवान्विवृद्धप्रे
मस्मितेननयनांबुरुहंविजृंभन् उत्थायविश्वविजयायचनोविषादंमाध्व्यागिराऽपनया॰
त्पुरुषः पुराणः २५ मैत्रेयउवाच स्वसंभवंनिशाम्यैवंतपोविद्यासमाधिभिः यावन्म॰
नोवचस्तुत्वाविररामसखिन्नवत् २६ अथाऽभिप्रेतमन्वीक्ष्यब्रह्मणोमधुसूदनः विषण्ण॰
चेतसंतेनकल्पव्यतिकरांभसा २७ लोकसंस्थानविज्ञानआत्मनःपरिखिद्यतः ॥तमाहा
गाधयावाचाकश्मलंशमयन्निव २८ ॥ १उद्भवायचकारादस्मदनुग्रहायचोत्थाय २५ स्वस्यसंभवोय॰
स्मात्तंतपः शारीरंविद्याउपासनासमाधिरैकाग्र्यंतैर्निशाम्यदृष्ट्वायथाशक्तिस्तुत्वाश्रांतवद्विरराम २६ आत्मनोलो
कसंस्थानविज्ञानेपरिखिद्यतोब्रह्मणोऽभिप्रेतमालक्ष्यतमाह तिहृयोरन्वयः तेनप्रलयोदकेनविषण्णचेतसं २७ का

दृष्टेति समस्तमोहशमनं दर्शयति २८ हे वेदगर्भ तंद्रीं विषादकृतं मालस्यं मा गाः तेनैव मे दर्शनमनुस्मरता दित्यादि यत्प्रा र्थयते तत् अग्रे पूर्वमेव संपादितं २९ तर्हि कथमहं न जानामीत्यत आह भूय इति ३० भक्तियुक्तः समाहितश्च सन् । आत्मनि स्वस्मिन् लोके च मां ततं व्याप्य स्थितं द्रष्टासि द्रक्ष्यसि आत्मनो जीवांश्च ३१ सर्वत्र प्रदर्शने मोहो निवर्त्तत इत्याह यदा त्विति प्रतिचक्षीत पश्येत् ३२ तदा च मिथ्याज्ञाननिवृत्तौ मुच्यत इत्याह यदेति भूतादिभिर्विरहितं

[illegible] ८ श्रीभगवानुवाच मा वेदगर्भ गास्तंद्रीं स र्ग उद्यममावह तन्मयापादितं ह्यग्रे यन्मां प्रार्थयते भवान् २९ भूयस्त्वं तप आतिष्ठ वि द्यां चैव मदाश्रयां ताभ्यामंतर्हृदि ब्रह्मन् लोकान्द्रक्ष्यस्यपावृतान् ३० तत आत्मनि लो के च भक्तियुक्तः समाहितः द्रष्टासि मां ततं ब्रह्मन्मयि लोकांस्त्वमात्मनः ३१ यदा तु सर्व भूतेषु दारुष्वग्निमिव स्थितं प्रतिचक्षीत मां लोको जह्यात्तर्ह्येव कश्मलम् ३२ यदा र हितमात्मानं भूतेंद्रियगुणाशयैः स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति ३३ नाना कर्म्मवितानेन प्रजा वह्वीः सिसृक्षतः नात्मावसीदत्यस्मिंस्ते वर्षीयान्मदनुग्रहः ३४ ऋ षिमाद्यं न वध्नाति पापीयांस्त्वां रजोगुणः यन्मनो मयि निर्बद्धं प्रजाः संसृजतोपि ते ३५ ॥

आत्मानं जीवं शुद्धत्वंपदार्थं स्वरूपेण तस्यात्मभूतेन मया तत्पदार्थेन उपेतमेकीभूतं पश्यन् भवति तदा स्वाराज्यं मोक्षं प्राप्नोति ३३ यतः वर्षीयान् वृद्धतरः अत्यधिकोऽस्तीत्यर्थः ३४ अनुग्रहमेवाह ऋषिमिति चतुर्भिः यद्य ॥ तस्ते त्वया मनो मयि निर्बद्धं ३५ ॥

भा॰टी॰ यद्यस्मात् भूतैरिंद्रियैर्गुणैः सत्वादिभिरात्मनाहंकारेण चायुक्तं मन्यसे ३६ तुभ्यं तव नालेन मार्गेण पुष्करस्य मूल अ॰
मधिष्ठानं सलिले विचिन्वतो मयि विचिकित्सायां भवितव्यमस्याश्रयेण न च दृश्यते अतोस्तिना स्तीति संदेहे सति ९
३५ आत्मा स्वरूपं मे मया अवहिरन्तर्हृदि दर्शितः ३७ अंग हे ब्रह्मन् चकर्थ कृतवानसि मत्कथैवाभ्युदयः तेनांकि
तं स एवंविधा भावः मयि मनोनिर्बंधः मज्ज्ञानं मद्रूपस्य हृदि दर्शनं मत्स्तुतिः तपोनिष्ठा चेति यत् स एव सर्वो

ज्ञातोहं भवता त्वद्य दुर्विज्ञेयोपि देहिनां यन्मां त्वं मन्यसेऽयुक्तं भूतेंद्रियगुणात्मभिः ३६ तु
भ्यं मद्विचिकित्सायामात्मा मे दर्शितोऽवहिः नालेन सलिले मूलं पुष्करस्य विचिन्वतः ३७
यच्चकर्थाऽग मत्स्तोत्रं मत्कथाभ्युदयांकितं यद्वा तपसि ते निष्ठा स एष मदनुग्रहः ३८ प्री
तोऽहमस्तु भद्रं ते लोकानां विजयेच्छया यदस्तौषीर्गुणमयं निर्गुणं माऽनुवर्णयन् ३९ य
एतेन पुमान्नित्यं स्तुत्वा स्तोत्रेण मां भजेत् तस्याशु संप्रसीदेयं सर्वकामवरेश्वरः ४० पूर्तेन
तपसा यज्ञैर्दानैर्योगसमाधिना राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्वविन्मतम् ४१ अहमा
त्मात्मनां धातः प्रेष्ठः सन्प्रेयसामपि अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः ४२ ॥

ऽपि मदनुग्रहः ३८ गुणमयत्वेन प्रतीयमानमपि निर्गुणमेवानुवर्णयन् ३९ न व प्रीत इति किं वक्तव्यमित्याह स्कं॰
यइति ४० न च मत्प्रीतेरप्याधिकं किंचिदस्तीत्याह पूर्तादिभिः राद्धं सिद्धं यन्निःश्रेयसफलं तन्मत्प्रीतिरेवे ३५
ति तत्वविदां मतम् ४१ अत्र हेतुमाह अहमिति आत्मनां अहंकारोपाधीनां जीवानामात्मा अतः प्रेयसां अति
॥ प्रियाणामपि मध्ये प्रेष्ठः प्रियतमः सन् निरवद्यः यत्कृते पदर्थं ४२ ॥

अनस्त्वंकृतार्थएवतथापिमत्प्रियार्थंसृष्टिंकुर्वित्याहसर्ववेति· आत्मात्वंइदंत्रैलोक्यंयामय्यनुशेरतेताः प्रजाश्चसृज केनआत्मनैवान्यनिरपेक्षेणतत्रज्ञापकापेक्षाऽभावमाह सर्ववेदमयेनेति आत्माअहंयोनिःकारणंयस्येति· ज्ञान क्रियाशक्त्यतिशयंसूचयति यथापूर्वमिति तवात्राभ्यासोप्यस्तीत्युक्तं मय्यनुशेरतइतिस्थितानामभिव्यक्तिमात्रमे

सर्ववेदमयेनेदमात्मनात्मात्मयोनिना प्रजाःसृजयथापूर्वंयाश्चमय्यनुशेरते ४३ ॥ मैत्रेयउवाच तस्माएवंजगत्स्रष्ट्रेप्रधानपुरुषेश्वरः व्यज्येदंस्वेनरूपेणकंजनाभस्तिरोद धे ४४॥ ॥इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेपद्मोद्भवेविदुरमैत्रेयसंवादेनवमो ऽध्यायः ९ ॥ ॥विदुरउवाच अंतर्हितेभगवतिब्रह्मालोकपितामहः प्रजाःससर्जक तिधादैहिकीर्मानसीर्विभुः १ येचमेभगवन्पृष्टास्त्वय्यर्थावहुवित्तम तान्वदस्वानुपू र्व्येणछिंधिनःसर्वसंशयान् २ सूतउवाच एवंसंचोदितस्तेनक्षत्त्राकौषारवोमुनिः प्रीतः प्रत्याहतान्प्रश्नान्हृदिस्थानथभार्गव ३ श्रीमैत्रेयउवाच विरिंच्योपितथाचक्रेदि व्यंवर्षशतंतपः आत्मन्यात्मानमावेश्ययदाहभगवानजः ४ ॥ एवकर्तव्यमित्यनायासत्वमुक्तं

४३ इदंसृज्यंव्यज्यप्रकाश्यपद्मनाभःश्रीनारायणरूपेणतिरोदधेऽदृश्योऽभवत् ४४ ॥ ॥इतिश्रीतृतीयेटीकायां नवमः ९ दशमेकालसंप्रश्नप्रतिवक्तुंतदुद्भवः प्राकृतादिविभागेनसर्गस्तुदशधोच्यते१ १मेमयावदस्ववदभासयस्ते तिवा २ संचोदितःप्रार्थितः हृदिस्थानेवाहनतुतेप्रश्नाः तेनविस्मृताइत्यर्थः ३ आत्मनिश्रीनारायणेआत्मानंमनः

भा॰ तृ॰

अब्जसंभूतो ब्रह्मा यदधिष्ठाय स्थितः कर्त्तरि क्तः तत्पद्ममंभस्थं विलोक्य· कथंभूतं पद्ममंभस्थं तेन प्रलयकालेन कृ-
तवीर्येण यस्य तेन वायुना कंपितं न्यपादित्युत्तरेणान्वयः ५ विवृद्धं विज्ञानं बलं च यस्य स न्यपात् सर्वं पीतवान् ६ पुष्क-
रपद्मं प्राक्लीनान् त्रीन् लोकान् कल्पिताऽस्मि स्रक्ष्यामि ७ भगवता स्वयं करणीये कर्म्मणि चोदितो नियुक्तः स-
न् तदा पद्मकोशं प्रविश्य तमेकमेव त्रिधा लोकत्रयरूपेण व्यभांक्षीत् विबभाज एकेन कमलमुकुलितेन कथं
लोकत्रयसृष्टिरित्यसंभावनां वारयितुं तस्य विशालतामाह द्विसप्तधा चतुर्द्दशलोकरूपेण उरुधा ततोऽपि व-

तद्विलोक्याब्जसंभूतो वायुना यदधिष्ठितः पद्ममंभश्च तत्कालकृतवीर्येण कंपितं ५
तपसा ह्येधमानेन विद्यया चात्मसंस्थया विवृद्धविज्ञानबलो न्यपाद्वायुं सहांभसा ६
तद्विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितं अनेन लोकान् प्राग्लीनान् कल्पितास्मीत्यचि-
न्तयत् ७ पद्मकोशं तदाविश्य भगवत्कर्म्मचोदितः एकं व्यभांक्षीदुरुधा त्रिधा भाव्यं द्वि-
सप्तधा ८ एतावान् जीवलोकस्य संस्थाभेदः समाहृतः धर्म्मस्य ह्यनिमित्तस्य विपाकः

द्धप्रकारेण भाव्यं भावयितुं योग्यं अतो न तेन त्रिलोकीकरणं चित्रमित्यर्थः ८ त्रिलो परमेष्ठ्यसौ ९॥
कीरूपेणैव विभागे हेतुमाह एतावान् त्रिलोकीरूपः जीवलोकस्य जीवानां भोगस्थानस्य प्रत्यहं सृज्यस्य संस्था
भेदो रचनाविशेष उक्तः ननु परमेष्ठिनोपि जीवत्वाविशेषाद्ब्रह्मलोकस्यापि लोकत्वात् किमिति प्रत्यहं सृष्टिर्न
भवतीत्यत्राह हि यस्मात् अनिमित्तस्य निष्कामस्य धर्म्मस्य विपाकः फलरूपोऽसौ उपलक्षणमेतत् सत्यलोक-
स्य महः प्रभृतिलोकानां तद्वासिनां च त्रैलोक्यस्य काम्यकर्मफलत्वात् प्रतिकल्पमुत्पत्तिविनाशौ भवतः महःप्रभृ-
तीनां उपासनासमुच्चितनिष्कामधर्म्मफलत्वात् द्विपरार्द्धपर्यंतं न नाशः तत्रस्थानां च ततः प्रायेण मुक्तिरिति

अ॰ १०

राम ३६

कालभेदेनलोकसृष्टिभेदंश्रुत्वातमेवकालंजिज्ञासुःपृच्छति यत्कालाख्यंलक्षणंस्वरूपंआत्थअब्रवीःकथं
कालःकल्यतेकिंवानास्यसूक्ष्मंस्थूलंचरूपमितियावद्वर्णयेत्यर्थः १० तत्रसामान्यतःकालस्यस्वरूपमत्रोच्यते
उत्तराध्यायेतुविशेषतः गुणानांव्यतिकरोमहदादिपरिणामः तेनैवाक्रियतेयः सःकालइतिशेषः वक्ष्यतेचै
कादशे गुणव्यतिकरःकालःस्वभावःसूत्रमेवचेति स्वतस्तुनिर्विशेषः अप्रतिष्ठितःकाप्यपर्यवसितः आद्य
न्तशून्यइत्यर्थः एतदेवदर्शयितुमीश्वरःसृष्ट्यादितेन निमित्तभूतेनकरोतीत्याह पुरुषइति उपादीयतेनेनि
मित्ततयास्वीक्रियतइत्युपादानं सकालउपादानंनिमित्तंयस्मिनतंआत्मानमेवविश्वरूपेणासृजत् स्वव्य

विदुरउवाच यदात्थबहुरूपस्यहरेरद्भुतकर्म्मणः कालाख्यंलक्षणंब्रह्मन् यथावर्ण
यनःप्रभो १० मैत्रेयउवाच गुणव्यतिकराकारोनिर्विशेषोऽप्रतिष्ठितः पुरुषस्तदुपा
दानमात्मानंलीलयाऽसृजत् ११ विश्वंवैब्रह्मतन्मात्रंसंस्थितंविष्णुमायया ईश्वरेण
परिच्छिन्नंकालेनाव्यक्तमूर्त्तिना १२ यथेदानींतथाग्रेचपश्चादप्येतदीदृशं सर्गोनवा
विधस्तस्यप्राकृतोवैकृतस्तुयः १३ ॥

तिरेकेणसृज्यस्याभावात् एतच्चवस्तुकथनमात्रंकालेन।
निमित्तेनचाऽसृजदित्येतावदेवविवक्षितम् ११ स्वव्यतिरिक्तस्यसृज्याभावंदर्शयन्कालस्य सृष्टिनिमि
त्ततांदर्शयति विश्वमिति विष्णुमाययासंस्थितंसंहृतंब्रह्मतन्मात्रंसद्विश्वंईश्वरेणकर्त्राकालेननिमित्तेन
परिच्छिन्नंपृथक्प्रकाशितं अव्यक्तामूर्तिःस्वरूपंयस्येति स्वतोनिर्विशेषत्वादर्शिता १२ अप्रतिष्ठितत्वं
दर्शयितुंतत्कार्यविश्वप्रवाहस्याप्रतिष्ठामाह यथेदानीमस्तितथाऽग्रेपूर्वमप्यासीत् पश्चादपिभविष्य
ति एवंसामान्यतःकालंनिरूप्यविशेषतःनिरूपयिष्यन्तन्निमित्तस्यसर्गस्यपूर्वोक्तानेवभेदाननुवदति

तिर

भा॰ त॰ तन्निमित्तमेव त्रिविधं प्रलयमाह कालेनैव केवलेन नित्यः प्रलयः द्रव्येण संकर्षणाग्न्यादिना नैमित्तिकः गुणैः स-
सत्त्वकार्यप्रसङ्गैः प्राकृतिकः तानेव सर्गान्प्रपंचयत्राद्यस्त्वित्यादिना यावदध्यायसमाप्ति महतो लक्षणं आ-
त्मनो हरेः सकाशाद्गुणानां वैषम्यमिति १४ अहमः अहंकारस्य तस्य लक्षणं यत्रेति द्रव्यादयो वक्ष्यमाणा-
स्त्रयः सर्गाः तन्मात्रो भूतसर्गः भूतसूक्ष्मसर्ग इत्यर्थः द्रव्यशक्तिमान् महाभूतोत्पादकः १५ ज्ञानकर्मेंद्रियात्म-
कश्चतुर्थः पंचमः वैकारिकः इंद्रियाधिष्ठातारो देवा मनश्च १६ षष्ठस्तु तमसः पंचपर्वाविद्यायाः अबुद्धि-

कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः १४
द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् १५
चतुर्थ ऐंद्रियः सर्गो यस्तु ज्ञानक्रियात्मकः वैकारिको देवसर्गः पंचमो यन्मयं मनः १६
षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभो षडिमे प्राकृताः सर्गाः वैकृतानपि मे शृणु १७
रजोभाजो भगवतो लीलेयं हरिमेधसः सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः १८ व-
नस्पत्योषधिलतात्वक्सारा वीरुधो द्रुमाः ॥ जीवानामावरणं विक्षेपश्च तां करोतीत्यबुद्धिकृतस्य

मे मत्तः शृणु १७ अनुद्वेगेन श्रोतव्यतामाह यद्विषया मेधा संसारं हरति तस्य हरेर्लीला यद्वा इयमिति तमः
आदिसर्गरूपा रजोभाज इति ब्रह्मरूपस्येत्यर्थः अस्मिन्पक्षे अबुद्धिकृत इति प्रथमांतं अनवधानकृत इत्य-
र्थः मुख्यमिव प्रथमं कृतो मुख्यः सर्गः तस्थुषां स्थावराणां १८ षड्विधत्वमेवाह ये पुष्पं विना फलंति ते वन-
स्पतयः ओषधयः फलपाकांताः लताः आरोहणापेक्षाः त्वक्सारा वेण्वादयः लता एव काठिन्येनारोहणा-

नपेक्षावीरुधः येषुपुष्पैःफलंतिनेद्रुमाः तेषांसाधारणंलक्षणमाह ऊर्द्ध्वस्रोतसआहारसंचारोयेषां तमःप्रायाअव्यक्तचैतन्याः अंतःस्पर्शाःस्पर्शमेवजानंतिनान्यत् तदप्यन्तरेवनवहिः विशेषिणः अव्यवस्थितपरिणामाद्यनेकभेदवंतः १९ तिर्यक्स्रोतसांसर्गमाह तिरश्चामिति सचाष्टविंशतिभेदः तिरश्चांलक्षणं अविदः श्वस्तनादिज्ञानशून्याः भूरितमसः आहारादिमात्रनिष्ठाः घ्राणेनैववस्तुमर्थंजानंति हृदिअवेदिनः दीर्घानुसंधानशून्याः तथाचश्रुतिः अथेतरेषांपशूनामशनापिपासेएवाभिविज्ञानंनविज्ञातंवदंतिनविज्ञातंपश्यंतिनविदुः

उत्स्रोतसस्तमःप्रायाअंतःस्पर्शाविशेषिणः १९ तिरश्चामष्टमःसर्गःसोऽष्टाविंशतिधोमतः अविदोभूरितमसोघ्राणज्ञाहृद्यवेदिनः २० गौरजोमहिषःकृष्णःसूकरोगवयोरुरुः द्विशफाःपशवश्चेमेअविरुष्ट्रश्चसत्तम २१ खरोऽश्वोऽश्वतरोगौरःशरभश्चमरीतथा एतेचैकशफाःक्षत्तःशृणुपंचनखान्पशून् २२ श्वासृगालोवृकोव्याघ्रोमार्जारःशशशल्लकौ सिंहःकपिर्गजःकूर्मोगोधाचमकरादयः २३ कंकगृध्रवकश्येनभासभल्लुकबर्हिणः हंससारसचक्राह्वकाकोलूकादयःखगाः २४ ॥

ऽऽ श्वस्तनंनलोकालोकाविति २० अष्टाविंशतिभेदानेवाह गवादयःउष्ट्रांताः द्विशफाद्विखुरानव २१ खरादयएकशफाःषट् २२ श्वादयोगोधांताःपंचनखाद्वादश एवमेतेभूचराःसप्तविंशतिः मकरादयोजलचराः २३ कंकादयश्च खगाः अभूचरत्वेनैकीकृत्यगृहीतास्तदेवमष्टाविंशतिभेदाभवंतितेषुछागरुरुगौरामृगविशेषाःअन्येषामपितिर्यक्प्राणिनांयथायथमेतेष्वेवांतर्भावः २४ ॥

अर्वाक् अधः आहारसंचारो यस्य सो ऽर्वाक्स्रोताः हृत्स्वमार्षेन नृणां सर्गः नृणां लक्षणं रजस्त्वं अधिकं येषु ते २५ एते त्रयो वैकृता एवं तु कौमारस्तु उभयात्मकः देवसर्गश्च वैकृत इत्यनुषंगः वैकारिकस्तु देवसर्गः प्राकृतेषु पूर्वमेव प्रोक्तः अयं तु ततो न्यूनत्वाद्वैकृतः देवसर्गत्वात्तदंतर्भूतश्च सनत्कुमारादीनां सर्गस्तु प्राकृतो वैकृतश्च देवत्वेन मनुष्यत्वेन च सत्त्वप्रवृत्त्यर्थः २६ वैकृतश्च देवसर्गो ऽष्टविधः तत्र विबुधादयस्तस्य भेदाः गंधर्वाप्सरस एकः यक्षरक्षां



अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणां रजोधिकाः कर्मपरा दुःखे च सुखमानिनः २५ वैकृतास्त्रय एवैते देवसर्गश्च सत्तम वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः २६ देवसर्गश्चाष्टविधो विबुधाः पितरो ऽसुराः गंधर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः २७ भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः दशैते विदुराख्याताः सर्गास्ते विश्वसृट्कृताः २८ अतः परं प्रवक्ष्यामि वंशान्मन्वंतराणि च एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः सृजत्यमोघसंकल्प आत्मैवात्मानमात्मना २९ ॥ इति श्रीभागवते महापुराणे तृतीयस्कंधे दशमोध्यायः १० ॥ ॥ मैत्रेय उवाच चरमः सद्विशेषाणामनेको ऽसंयुतः सदा ॥ १ ॥

स्येकः २७ भूतप्रेतपिशाचा एकः सिद्धचारणविद्याधरा एकः किंनरादय एकः आदिशब्दात्किंपुरुषाश्वमुखादयः एतच्च विशेषो ऽध्याये स्पष्टं भविष्यति २८ २९ ॥ ॥ इति श्रीतृतीये स्कंधे टीकायां दशमः १० ॥ ततएकादशे कालपरमाण्वादिलक्षणैः युगमन्वंतरादिभ्यः कल्पमानादि वर्ण्यते १ तदेवं सामान्यतः कालस्योपल

क्षणभूतं गुणव्यतिकरं दशविधं निरूप्येदानीं तस्यैव विशेषं निरूपयितुं तत्परिच्छेद्यं वस्तु लक्षयति द्वाभ्यां स
तः कार्यस्य विशेषाणामंशानां यश्चरमः अंत्यः यस्यांशो नास्ति अनेकः कार्यावस्थामप्राप्तः अ
संयुतः समुदायावस्थां चाप्राप्तः अतएव सदा कार्यसमुदायावस्थयोरपगमेऽप्यस्ति स परमाणुर्विज्ञेयः किं
तत्र प्रमाणमत आह यतः येभ्यः समुदितेभ्यः नृणां व्यवहर्तॄणामैक्यभ्रमः अवयविबुद्धिः तथा च पंचमे अ
वयविनिराकरणे वक्ष्यति येषां समूहेन कृतो विशेष इति कार्यानुपपत्त्या कल्प्य तदिति भावः १ सूक्ष्ममुक्त्वा
स्थूलमाह सत एवेति यस्य चरमोऽशः परमाणुस्तस्यैव सतः कार्यमात्रस्य स्वरूपावस्थितस्य परिणामां

परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः १ सत एव पदार्थस्य स्वरूपावस्थितस्य यत् कै
वल्यं परममहानविशेषो निरंतरः २ एवं कालोऽप्यनुमितः सौक्ष्मे स्थौल्ये च सत्तम
संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः ३ स कालः परमाणुर्वै यो भुंक्ते परमा

रमप्राप्तस्य यत्कैवल्यं ऐक्यं स परममहान् पुंस्त्वं तु परमाणुप्रतियोगित्वात् ननु नानाविशेषवान् ऽणुतो
परस्परं भिन्नश्च सर्वः पदार्थः कथमैक्यं तस्य तत्राह अविशेषः विशेषविवक्षारहितः निरंतरः भेदविवक्षा
रहितश्च सर्वोऽपि प्रपंचः परममहानित्यर्थः २ यथा सूक्ष्मः स्थूलश्चायं पदार्थः एवं कालोऽप्यनुमितः चक्रा
द्यन्मध्यमाऽवस्थाः परह्यते संस्थानं परमाण्वाद्यवस्था तस्य भुक्तिः व्याप्तिः तया भगवान् निहरेः शक्तिः स्वतो
ऽव्यक्तः व्यक्तं भुंक्ते व्याप्नोतिपरिच्छिनत्तीति तथा विभुः उत्पत्त्यादिषु दक्षः ३ एतदेव प्रपंचयति सइत्यादि
ना सतः प्रपंचस्य परमाणुतां परमाण्ववस्थां यो भुंक्ते स कालः परमाणुः तस्यैवं अविशेषं साकल्यं यो भुंक्ते स पर

भा॰ टी॰ ३१

अपमर्थः ग्रहर्क्षताराचक्रस्थइत्यादिनायत्सूर्यपर्यटनंवक्ष्यतेतत्रसूर्योयावतापरमाणुदेशमतिक्रामतितावान् अ॰
कालः परमाणुः यावताचद्वादशराश्यात्मकंसर्वंभुवनकोशंअतिक्रामतिसपरमंमहान् संवत्सरात्मकः कालः त ११
स्यैवाहतत्रयुगमन्वंतरादिक्रमेणद्विपरार्द्धांतत्वमितिः तथाचपंचमेसूर्यगत्यैवकालादिविभागंवक्ष्यति ४ इदा
नींद्व्यणुकादिलक्षणपूर्वकंमध्यमकालावस्थांकथयति द्वौपरमाणूअणुःस्यात् त्रयोऽणवस्त्रसरेणुःसतुप्रत्य
क्षइत्याह जालार्केतिगवाक्षप्रविष्टस्यार्करश्मिष्ववगतः कोऽसौयोऽतिलघुत्वेनखमेवानुपतन्नगात्गतः पाठांत

सतोविशेषभुग्यस्तुसकालःपरमोमहान् ४ अणुर्द्वौपरमाणूस्यात्त्रसरेणुस्त्रयःस्मृतः जाऽ
लार्करश्म्यवगतःखमेवानुपतन्नगात् ५ त्रसरेणुत्रिकंभुंक्तेयःकालःसत्रुटिस्मृतः शतभाऽ
गस्तुवेधःस्यात्तैस्त्रिभिस्तुलवःस्मृतः ६ निमेषस्त्रिलवोज्ञेयःआम्नातस्तेत्रयःक्षणः क्षणा
नपंचविदुःकाष्ठांलघुतादशपंचच ७ लघूनिवैसमाम्नातादशपंचचनाडिका तेद्वेमुहूर्तःप्र
हरःषड्यामःसप्तवानृणां ८ द्वादशार्द्धपलोन्मानंचतुर्भिश्चतुरंगुलैः ॥ ऽऽरेखमेवानुपतन्नवग

तः नतुयांपृथिवीम् ५ शतंभागाःत्रुटिरूपाःयस्मिन्सवेधस्तैर्वेधैः ६ तेनिमेषास्त्रयःक्षणइत्याम्नाताःकाष्ठा
पंचदशएकंलघु ७ नाडिकाःषट्सप्तवाप्रहरःसएवयामोदिनस्यरात्रेश्चतुर्थोभागः ह्रासेषट्वृद्धौसप्तसंध्यां
शमुहूर्तद्वयंविनेतिज्ञातव्यंतत्राप्यनियमार्थोवाशब्दः प्रत्यहंतद्भेदानांगणयितुमशक्यत्वात् ८ नाडिकायाउन्मा राम
नमाहउन्मीयतेऽनेनेतिउन्मानंपात्रंषट्पलताम्रविरचितं पंचगुंजामाषःतैश्चतुर्भिश्चतुरंगुलायामशलाकारूपेण ३१
विरचितैःकृतमूलच्छिद्रंतेनच्छिद्रेणयावत् प्रस्थपरिमितंजलंप्रविशतितेनचप्लुतंनिमग्नंभवतितावान्का

लोनाडिका अत्र पलछिद्रयोराधिक्ये शीघ्रं निमज्जेत् अल्पत्वे च विलंबेनेति पलशलाकयोर्नियमः ९ अहनी अहोरात्रं १० षण्मासा अयनं दिवीत्यस्योत्तरेणान्वयः ११ देवानामहोरात्रे प्राहुर्द्वादश मासाः १२ अनेन क्रमेणासौ सूर्यो नित्यमायुः क्षपयतीत्याह ग्रहाश्चंद्रादयः ऋक्षाण्यश्विन्यादीनि ताराः अन्यानि नक्षत्राणि तदुपलक्षितं यत्कालचक्रं तत्र स्थितः अनिमिषः कालात्मा विभुरीश्वरः सूर्यः जगत् द्वादशराश्यात्मकं भुवनकोशं पर्येति पर्यटति १३ संवत्सरादि भेदश्च सौर वार्हस्पत्य सावन चांद्र नाक्षत्र मास भेदेन द्रष्टव्यः केचित्तु नरेवमाहुः यदा शुक्लपक्ष

स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम् ९ यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे पक्षः पंचदशाहानि शुक्लः कृष्णश्च मानद १० तयोः समुच्चयो मासः पितॄणां तदहर्निशं द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि ११ अयने चाहनी प्राहुर्वत्सरो द्वादश स्मृतः संवत्सरशतं नॄणां परमायुर्निरूपितम् १२ ग्रहर्क्षताराचक्रस्थः परमाणवादिना जगत् संवत्सरावसानेन पर्येत्यनिमिषो विभुः १३ संवत्सरः परिवत्सर इडावत्सर एव च अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते १४ यः सृज्यशक्तिमुरुधोच्छ्वसयन्स्वशक्त्या पुंसोऽभ्रमाय दिवि धावति भूतभेदः

प्रतिपदि संक्रांतिर्भवति तदा सौरचांद्रमासयोर्युगपदुपक्रमो भवति स संवत्सरः ततः सौरमाने नववर्षे षड् दिनानि वर्द्धते चांद्रमाने ... षड् दिनानि ह्रसंतीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति एवं व्यवधानतारतम्येन पंचवर्षाणि गच्छंति तन्मध्ये द्वौ मलमासौ भवतः ततः पुनः षष्ठः संवत्सरो भवतीति १४ एवंभूतः कालात्मा नित्यमप्रमत्तैः पूजनीय इत्याह य इति सृज्यं कार्यमंकुरादि तद्विषयां बीजादीनां शक्तिं कालरूपया स्वश-

श्रीभा० यद्दधाम उच्छूसयन् कार्याभिमुखीं कुर्वन् दिविअंतरिक्षे धावति कोसौ भूतभेदः महाभूतविशेषस्तेजोमंडलरूपीसू श्री
४० र्यः किमर्थं धावति पुंसः पुरुषस्य भ्रमाय भ्रमो मोहः तन्निवृत्तये आयुरादिव्ययेन विषयासक्तिं निवर्त्तयन्नि ११
त्यर्थः सकामानां गुणमयं स्वर्गादिफलं क्रतुभिर्विस्तारयन् तस्मै संवत्सरपंचकप्रवर्त्तकाय पूजां कुरुत १५ इ
दं स्वस्वमानेन वर्षशतगणितं आयुर्मानं प्रत्यहं कल्पनेसृज्यत इति कल्पस्ते लोकास्तस्माद्बाह्यः विदो ज्ञानिनः
योगराद्धेन योगसिद्धेन १७ द्वादशभिर्वर्षसहस्रैरित्युत्तरश्लोकसामर्थ्यात्तज्ज्ञातव्यं अवधीयत इत्यवधानं संध्या च संध्यांशश्च तत्सहितं १८

कालाख्यया गुणमयं क्रतुभिर्वितन्वंस्तस्मै बलिं हरत वत्सरपंचकाय १५ विदुर उवाच पि
तृदेवमनुष्याणामायुः परमिदं स्मृतं परेषां गतिमाचक्ष्व ये स्युः कल्पाद्बहिर्विदः १६ भगवा
न्वेद कालस्य गतिं भगवतो ननु विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा १७ श्रीमैत्रेय उवाच
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगं दिव्यैर्द्वादशभिर्वर्षैः सावधानं निरूपितम् १८ चत्वारि
त्रीणि द्वे चैकं कृतादिषु यथाक्रमं संख्यातानि सहस्राणि द्विगुणानि शतानि च १९ संध्यांश
योरंतरेण यः कालः शतसंख्ययोः तमेवाहुर्युगं तज्ज्ञाः यत्र धर्म्मो विधीयते २०
धर्म्मश्चतुष्पान्मनुजान्कृते समनुवर्त्तते ॥ १८ कृतयुगे चत्वारि सहस्राणि संध्या संध्यांशयोश्चत्वारि
चत्वारि शतानि च एवं त्रेतादिष्वपि योज्यं १९ युगस्यादौ संध्या अंते संध्यांशः उक्तानि शतानि संख्यायायोः तयो
रंतरेण मध्ये युगं तस्य विशेषमाह यत्रेति गवालंभादिधर्म्मविशेषो यत्र विधीयत इत्यर्थः साधारणधर्म्मस्तु सं राम:
ध्यांशयोरप्यस्त्येव २० चतुःपात्संपूर्णः त्रेतादिषु पादेन पादेन व्येति ह्रसति पादेन पादेन वर्द्धमानेनाधर्म्मेण हेतुना ४०

एतच्चस्वरूपकथनमात्रंवैराग्यार्थंनतुधर्मसंकोचार्थं २१ त्रिलोक्यावहिर्महर्लोकप्रभृतिब्रह्मलोकमभि॰
व्याप्यचतुर्युगसहस्रमेकंदिनं यत्रयस्यांविश्वसृक्ब्रह्मानिमीलतिस्वपिति २२ तत्रदिनस्थितिमाह निशा
वसानइतिसार्द्धंस्त्रिभिः चतुर्दशमनून्भुंजनपालयनव्याप्नुवन्नित्यर्थः २३ किंचिदधिकांयुगानामेकस

सएवान्येस्वधर्मेणव्येतिपादेनवर्द्धता २१ त्रिलोक्यायुगसाहस्रंवहिराब्रह्मणोदि
नं तावत्येवनिशातातयन्निमीलतिविश्वसृक् २२ निशावसानआरब्धोलोककल्पोः
नुवर्तते यावद्दिनंभगवतोमनून्भुंजंश्चतुर्दश २३ स्वंस्वंकालंमनुर्भुंक्तेसाधिकांह्येकस
प्ततिम मन्वंतरेषुमनवस्तद्वंशाऋषयःसुराः भवंतिचैवयुगपत्सुरेशाश्चानुयेचतान्
२४ एषदैनंदिनःसर्गोब्राह्मस्त्रैलोक्यवर्तनः तिर्यङ्नृपितृदेवानांसंभवोयत्रकर्मभिः
२५ मन्वंतरेषुभगवानबिभ्रत्सत्वंस्वमूर्तिभिः मन्वादिभिरिदंविश्वमवत्युदितपौरुषः
२६ तमोमात्रामुपादायप्रतिसंरुद्धविक्रमः कालेनानुगताशेषआस्तेतूष्णींदिनात्यये
२७ तमेवान्वपिधीयंतेलोकाभूरादयस्त्रयः ॥ ऽप्ततिंमनुवंशाःपृथ्वीपालकाःक्रमेणभवंति सप्तर्षि
प्रभृतयस्तुयुगपत्समंकालमेवभवंतिसुरेशाः इंद्राःताननुवर्तंतेयेगंधर्वादयस्तेपि २४ त्रैलोक्यंवर्तयतीतित्रै
या २५ स्वमूर्तिभिर्मन्वंतरावतारैर्मन्वादिभिर्द्वारभूतैराविष्कृतपुरुषाकारःसनविश्वंरक्षति २६ रात्रिगतांस्थि
तिमाहपंचभिः तमसोमात्रांलेशं प्रतिसंरुद्धःप्रत्याहृतोविक्रमोयेन अनुगतमनुप्रविष्टमशेषंयस्मिन २७ तदै

भा॰ टी॰ अपिधीयंत इति कर्मकर्तरि प्रयोगः तिरोहिता भवंतीत्यर्थः कथं निर्मुक्तः रहितः शशी भास्करश्च यथा भवति तथा २८ भगवच्छक्तिरूपो यः संकर्षणमुखाग्निस्तेन ऊष्मणा अर्दिताः संतः जनलोकं यांति २९ कल्पांतेन एधिताः सिंधवः समुद्राः उत्कट आटोपः क्षोभो येषां तेन वते चंडवातेरिता ऊर्मयश्च ३० जनलोक आलयो येषां

अ॰ ११

निशायामनुवृत्तायां निर्मुक्तशशिभास्करम् २८ त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणाग्निना यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः २९ तावत्त्रिभुवनं सद्यः कल्पान्तैधितसिन्धवः प्लावयन्त्युत्कटाटोपचण्डवातेरितोर्मयः ३० अन्तः स तस्मिन्सलिल आस्तेऽनन्तासनो हरिः योगनिद्रानिमीलाक्षः स्तूयमानो जनालयैः ३१ एवंविधैरहोरात्रैः कालगत्योपलक्षितैः अपक्षितमिवास्यापि परमायुर्वयः शतम् ३२ यदर्द्धमायुषस्तस्य परार्द्धमभिधीयते पूर्वः परार्द्धोऽपक्रान्तो ह्यपरोऽद्य प्रवर्त्तते ३३ पूर्वस्यादौ परार्द्धस्य ब्राह्मो नाम महानभूत् कल्पो यत्राभवद्ब्रह्मा शब्दब्रह्मेति यं विदुः ३४ तस्यैव चान्ते कल्पोऽभूद्यं पाद्ममभिचक्षते यद्धरेर्नाभिसरस आसील्लोकसरोरुहम् ३५ अयं तु कथितः कल्पो द्वितीयस्यापि भारत वाराह इति विख्यातो यत्रासीत्सूकरो हरिः ३६ ॥ ९० ॥

महर्लोकगतानामन्येषां च तैः ३१ वैराग्यार्थमाह एवंविधैरहोरात्रैर्वर्षशतं सर्वेषां प्राणिनामायुषः परमधिकं अस्य ब्रह्मणो यदायुस्तदप्यपक्षितं अपक्षीणं इवेति लोकोक्तिः गतप्रायमित्यर्थः ३२ तदेवाह यदिति ३३ पूर्वस्य परार्द्धस्यादावितित्रिभिर्वस्तुकथनमात्रं ३४ पाद्मत्वे हेतुः यदिति ३५ अयं तु द्वितीयस्यादौ कथि-

तदेवं कालेन निमितेन सृज्यानामायुःपरिमाणमुक्त्वा कालपरिच्छेदरहितं तत्वमाह कालोऽयमिति पंचभिः उप
चर्य्यते केवलं न तत्वेनेनापि क्रमेणायुर्गणनं तस्येत्याह अव्याकृतस्य कार्योपाधिशून्यस्य अतएवानंतस्य अनादे
श्च जगदात्मनो जगत्कारणस्य ३७ तत्परिच्छेदकालस्यासामर्थ्यादित्याह कालोऽयमीश्वरः सर्वसमर्थोपि भू
म्नः परिपूर्णस्येशितुं नैव प्रभुः न समर्थः यतो धाममानिनां देहगेहाभिमानिनामेवेश्वरः ३८ भूम्न इत्युक्तं त
त्प्रपंचयन्नाह विकारैः षोडशभिर्युक्तैः अष्टप्रकृतिसंयुक्तैः सहितस्तदारब्ध इत्यर्थः अयमांडकोशः य

कालोऽयं द्विपरार्द्धाख्यो निमेष उपचर्य्यते अव्याकृतस्यानंतस्य अनादेर्जगदात्मनः
३७ कालोऽयं परमाण्वादिर्द्विपरार्द्धांत ईश्वरः नैवेशितुं प्रभुर्भूम्न ईश्वरो धाममानिनां
३८ विकारैः सहितो युक्तैर्विशेषादिभिरावृतः आंडकोशो बहिरयं पंचाशत्कोटिविस्तृतः
३९ दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् लक्ष्यतेऽतर्गताश्चान्ये कोटिशो ह्यंडराशयः
४० तदाहुरक्षरं ब्रह्म सर्वकारणकारणं विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः।
४१ ॥ ॥इति श्रीभागवते महापुराणे तृतीयस्कंधे एकादशोध्यायः ११ ॥ मैत्रेय उवाच
इति ते वर्णितः क्षत्तः कालाख्यः परमात्मनः महिमा वेदगर्भोथ यथाऽस्राक्षीन्निबोध मे १

यत्र प्रविष्टः परमाणुवल्लक्ष्यत इत्युत्तरेणान्वयः कीदृशः अंतः पंचाशत्कोटियोजनविस्तृतः बहिश्च विशेषादिभिः पृ
थिव्यादिभिः सप्तभिरावृतः ३९ कीदृशैः आंडकोशप्रमाणाद्दशगुणमुत्तरोत्तरमधिकोयेषु तैः न केवलमयमे
क एव अपि तु अन्ये पि लक्ष्यंते ४० सर्वेषां कारणानां कारणं धाम स्वरूपं ४१ ॥ ॥इति तृतीये टीकायां ए
कादशः ११ ॥ ॥द्वादशे तु कुमारादिमनःसर्गाऽसमेधनात् कायद्वैधेन यौनं स्तुमनुसर्गोनुवर्ण्यते १ ॥ १॥

भा॰ टी॰
४२

अग्र इति ब्रह्मा स्वसृष्टेः प्रथममविद्यावृत्तीः ससर्ज तत्र तमो नाम स्वरूपाप्रकाशः मोहो देहाद्यहंबुद्धिः महामोहो भोगेच्छा तामिस्रं तत्प्रतिघाते क्रोधः अंधतामिस्रं तन्नाशेऽहमेव मृतोऽस्मीति बुद्धिः तदेवोक्तं वैष्णवे तमो विवेको मोहः स्यादंतःकरणविभ्रमः महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा मरणं ह्यंधतामिस्रं तामिस्रः क्रोध उच्यते अविद्या पंचपर्वैषा प्रादुर्भूता महात्मन इति पातंजलेऽप्येत एवोक्ताः अविद्यास्मितारागद्वेषाभिनिवेशाः पंचक्लेशा इ ४२

ससर्जाग्रेऽंधतामिस्रमथ तामिस्रमादिकृत् महामोहं च मोहं च तमश्चाज्ञानवृत्तयः २ दृष्ट्वा पापीयसीं सृष्टिं नात्मानं बह्वमन्यत भगवद्ध्यानपूतेन मनसाऽन्यां ततोऽसृजत् ३ सनकं च सनंदं च सनातनमथात्मभूः सनत्कुमारं च मुनीन्निष्क्रियानूर्द्ध्वरेतसः ४ तान्बभाषे स्वभूः पुत्रान्प्रजाः सृजत पुत्रकाः तन्नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः ५ सोऽवध्यातः सुतैरेवं प्रत्याख्यातानुशासनैः क्रोधं दुर्विषहं जातं नियंतुमुपचक्रमे ६ धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात्प्रजापतेः सद्योऽजायत तन्मन्युः कुमारो नीललोहितः ७ स वै रुरोद देवानां पूर्वजो भगवान्भवः नामानि कुरु मे धातः स्थानानि च जगद्गु

ति श्रीविष्णुस्वामिप्रोक्ता वा अज्ञानविपर्यासभेदभयशोकाः तदुक्तं स्याद्द्वयुत्थविपर्यासेत्यादि ॥१॥ ० २ नवह्वमन्यत नाभ्यनंदत् ३ यद्यपि प्रतिकल्पं सनकादिसृष्टिर्नास्ति तथापि ब्राह्मसर्गत्वादिहोच्यते वस्तु तस्तु मुख्यसर्गादय एव प्रतिकल्पं भवंति सनकादयस्तु ब्राह्मकल्पसृष्टा एवानुवर्तंते ४ स्वभूर्ब्रह्मा ५ अव॰ दाम ॥ ध्यातः अवज्ञातः प्रत्याख्यातमनंगीकृतमनुशासनं यैः ६ स चासौ मन्युश्च तन्मन्युः ७ ॥ ८ ॥ ४२

१ बालकइव १० अथेपूर्वमेवमयाकृतानि ११ १२ १३ सयोषणः सस्त्रीकः एभिःस्थानैनामभिश्चयुक्तःप्रजाः

इतितस्यवचःपाद्मोभगवान्परिपालयन् अभ्यधाद्भद्रयावाचामारोदीस्तत्करोमिते ९
यदरोदीःसुरश्रेष्ठसोद्वेगइवबालकः ततस्त्वामभिधास्यंतिनाम्नारुद्रइतिप्रजाः १० हृदि
द्रियाण्यसुर्व्योमवायुरग्निर्जलंमही सूर्यश्चंद्रस्तपश्चैवस्थानान्यग्रेकृतानिते ११
मन्युर्मनुर्महिनसोमहांश्छिवःऋतुध्वजः उग्ररेताभवःकालोवामदेवोधृतव्रतः १२
धीर्वृत्तिरुशनोमाचनियुत्सर्पिरिलांऽबिका इरावतीसुधादीक्षारुद्राण्योरुद्रतेस्त्रियः
१३ गृहाणैतानिनामानिस्थानानिचसयोषणः एभिःसृजप्रजाबह्वीःप्रजानामसि
यत्पतिः १४ इत्यादिष्टःसगुरुणाभगवान्नीललोहितः सत्वाऽकृतिस्वभावेनसस
र्जात्मसमाःप्रजाः १५ रुद्राणांरुद्रसृष्टानांसमंतात्ग्रसतांजगत् निशाम्यासंख्यशोयू
थान्प्रजापतिरशंकत १६ अलंप्रजाभिःसृष्टाभिरीदृशीभिःसुरोत्तम मयासहद
हंतीभिर्दिशश्चक्षुर्भिरुल्बणैः १७ तपआतिष्ठभद्रंतेसर्वभूतसुखावहं तपसैवयथापू
र्वंस्रष्टाविश्वमिदंभवान् १८ तपसैवपरंज्योतिर्भगवंतमधोऽक्षजं सर्वभूतगुहावास
मंजसाविंदतेपुमान् १९ श्रीमैत्रेयउवाच एवमात्मभुवादिष्टःपरिक्रम्यगिरांपतिं बाढ
मित्यमुमामंत्र्यविवेशतपसेवनं २०॥ ९सृज १४ सत्वंबलंआकृतिर्नीललोहितता स्वभावस्तीव्र

भा॰

मी॰ टी॰ २१ २२ २३ २४ २५ अधरदच्छदात अधरोष्ठात २६ २७ देहांतरेण कृतं सर्गं वक्तुं तद्देहत्यागे कारणमाह अ

थाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे भगवच्छक्तियुक्तस्य लोकसंतानहेतवः

२१ मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः

२२ उत्संगान्नारदो जज्ञे दक्षोंऽगुष्ठात्स्वयंभुवः प्राणाद्वसिष्ठः संजातो भृगुस्त्वचि करा

क्रतुः २३ पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोरृषिः अंगिरा मुखतोऽक्ष्णोऽत्रिर्मरी

चिर्मनसोऽभवत २४ धर्म्मस्तनाद्दक्षिणतो यत्र नारायणः स्वयं अधर्म्मः पृष्ठतो य

स्मान्मृत्युर्लोकभयंकरः २५ हृदि कामो भ्रुवः क्रोधो लोभश्चाधरदच्छदात आस्या

द्वाक्सिंधवो मेढ्रान्निरृतिः पायोरघाश्रयः २६ छायायाः कर्द्दमो जज्ञे देवहूत्याः प

तिः प्रभुः मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत २७ वाचं दुहितरं तन्वीं स्वयंभूर्हर

तीं मनः अकामां चकमे क्षत्तः सकाम इति नः श्रुतम २८ तमधर्म्मे कृतमतिं विलोक्य

पितरं सुताः मरीचिमुख्या मुनयो विश्रंभात्प्रत्यबोधयन २९ नैतत्पूर्वैः कृतं त्वद्ये न

करिष्यंति चापरे यत्त्वं दुहितरं गच्छेरनिगृह्यांगजं प्रभुः ३० तेजीयसामपि ह्येतन्न

सुश्लोक्यं जगद्गुरो यद्वृत्तमनुतिष्ठन्वै लोकः क्षेमाय कल्पते ३१ ॥ ऽवाचमित्यादिना २८ २९ न

न त्वत्तोऽपि पूर्वैर्ब्रह्मादयोऽन्ये वा नैरेतन्न कृतं अंगजं कामम ३० तेजीयसां अतितेजस्विनामपि सुश्लोक्यं सत्कीर्ति

१२

३२ ननु कथं स्रक्ष्यामीत्यभिध्यायतः स्रष्टुर्ब्रह्मणः चतुःसंख्यायुक्तान मुखात् समवेतान सुसंगतानन्य
यापुरा प्राक्कल्पे ३४ चातुर्होत्रं होत्रादीनां चतुर्णां कर्म तंत्रं यज्ञविस्तारः उपवेदैर्न्यायैश्च सह आश्रमाः न

तस्मै नमो भगवते य इदं स्वेन रोचिषा आत्मस्थं व्यंजयामास स धर्मं पातुमर्हति ३३ स
इत्थं गृणतः पुत्रान पुरो दृष्ट्वा प्रजापतीन् प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा तां दि
शो जगृहुर्घोरां नीहारं यद्विदुस्तमः ३३ कदाचिद्ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् क
थं स्रक्ष्याम्यहं लोकान् समवेतान्यथापुरा ३४ चातुर्होत्रं कर्मतंत्रमुपवेदनयैः सह धर्म
स्य पादाश्चत्वारस्तथैवाश्रमवृत्तयः ३५ विदुर उवाच स वै विश्वसृजामीशो वेदादीन्मुख
तोऽसृजत् यद्यद्येनासृजद्देवस्तन्मे ब्रूहि तपोधन ३६ मैत्रेय उवाच ऋग्यजुःसामाथ
र्वाख्यान वेदान्पूर्वादिभिर्मुखैः शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात् ३७ आ
युर्वेदं धनुर्वेदं गांधर्वं वेदमात्मनः स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः
३८ इतिहासपुराणानि पंचमं वेदमीश्वरः सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ३९

हृत्तयश्च आसन ३५ मुखतः मुखेभ्यः ३६ चातुर्होत्रसृष्टिक्रममाह शस्त्रं अप्रगीतमंत्रस्तोत्रं होतुः कर्म इ
ज्याऽध्वर्योः कर्म स्तुतिस्तोमः स्तुतिः संगीतं स्तोमं नदर्यमृक्समुदायं त्रिवृत् स्तोमो भवतीत्यादिविहितसु
द्गात्प्रयोज्यं प्रायश्चित्तं ब्रह्मा ३७ उपवेदक्रममाह आयुर्वेदमिति आत्मनो मुखैः स्थापत्यं विश्वकर्मशा

भा॰ त्रकर्मतंत्रक्रममाह षोडश्युक्थाविति पुरीषीचयनं अग्निष्टुत् अग्निष्टोमः ४० विद्येति शौचं क्षेत्रज्ञस्येश्वरा अ॰
धनादिशुद्धिः परमामनेतिस्मृतेः दानमितिदया भूताभयप्रदानस्य कलां नार्हन्ति षोडशीमिति वचनात् एवं १२
४४ चतपः शौचं दया सत्यमिति पादाः कृते कृतादि इति प्रथमस्कंधस्योक्तेरविरोधः ४१ सावित्रं ब्रह्मचर्यं उपन
यनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं प्राजापत्यं व्रतान्याचरतः संवत्सरान्तं ब्राह्मं वेदग्रहणान्तं बृहन्नै
ष्ठिकं वार्ता अनिषिद्धकृष्यादिवृत्तिः संचयो याजनादिवृत्तिः शालीनं अयाचितवृत्तिः शिलोञ्छं पतितकणि

षोडश्युक्थौ पूर्ववक्त्रात्पुरीष्यग्निष्टुतावथ आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवं ४०
विद्या दानं तपः सत्यं धर्मस्येति पदानि च आश्रमांश्च यथासंख्यमसृजत्सह वृत्तिभिः
४१ सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत्तथा वार्तासंचयशालीनशिलोंछ इति वै गृहे।
४२ वैखानसा वालखिल्यौदुंबराः फेनपा वने न्यासे कुटीचकः पूर्वं बह्वोदो हंसनिष्क्रियौ
४३ आन्वीक्षिकी त्रयी वार्ता दंडनीतिस्तथैव च ॥ शकणवृत्तिः एकवचनमार्षं इत्येताः गृहे वृत्त

यइति यद्वा शिलोंछ इति द्वंद्वैक्ये सप्तमी एवं वृत्तिभेदे सति गृहे स्थिता भवंतीत्यर्थः ४२ वने स्थिताश्चत्वारः
तत्र वैखानसाः अकृष्टपच्यवृत्तयः वालखिल्याः नवेऽन्ने लब्धे पूर्वसंचितान्नत्यागिनः औदुंबराः प्रातरु
त्थाय यां दिशं प्रथमं पश्यंति तत आहृतैः फलादिभिर्जीवंतः फेनपाः स्वयं पतितैः फलादिभिर्जीवंतः कुटी एम
चकः स्वाश्रमकर्मप्रधानः बह्वोदः कर्मोपसर्जनीकृत्य ज्ञानप्रधानः हंसो ज्ञानाभ्यासनिष्ठः निष्क्रियः प्रा ४४
प्ततत्त्वः एते च सर्वे यथोत्तरं श्रेष्ठा भवंतीत्यर्थः ४३ न्यायादीनां पूर्वादिक्रमेणोत्पत्तिमाह आन्वीक्षिकीति

आन्वीक्षिक्याद्या मोक्षधर्मकामार्थविद्याः भूर्भुवः स्वरिति व्यस्तास्तिस्रः समस्ताश्चतुर्थी यथाहाश्वलायनः एवं व्याहृतयः प्रोक्ता व्यस्ताः समस्ताइति यद्वा महइति चतुर्थी तथा च श्रुतिः भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः तासामु ह स्मैतां चतुर्थीमाह चमस्यप्रवेदयते महइती ति हृत्खतः हृदयाकाशात् ४४ स्नुतः स्नायुतः अनुष्टुप् स्नावानीति श्रुतेः ४५ महाकल्पे ब्रह्मा शब्दब्रह्मरूपोभवदित्युक्तं तदेव दर्शयन् वर्णानामुत्पत्तिमाह स्पर्श इति सार्द्धेन स्पर्शः कादिवर्गपंचकं स्वरः अकारादिः ४६ उष्माणं शषसह चतुष्कं

एवं व्याहृतयश्चासन् प्रणवो ह्यस्य हृत्खतः ४४ तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः त्रिष्टुप् मांसात् स्नुतोऽनुष्टुप् जगत्यस्थ्नः प्रजापतेः ४५ मज्जायाः पंक्तिरुत्पन्ना बृहती प्राणतोऽभवत् स्पर्शस्तस्याभवज्जीवः स्वरो देह उदाहृतः ४६ ऊष्माणमिंद्रियाण्याहुरंतस्था बलमात्मनः स्वराः सप्त विहारेण भवंति स्म प्रजापतेः ४७ शब्दब्रह्मात्मनस्तस्य व्यक्ताव्यक्तात्मनः परः ब्रह्मावभाति विततो नानाशक्त्युपबृंहितः ततोऽपरामुपादाय स सर्गाय मनो दधे ४८ ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतं ॥ ९ ॥

अंतस्था यरलवाः सप्त स्वराः षड्जादयः विहारेण क्रीडया ४७ अतएव शब्दतत्त्वात् ब्रह्मणः परमेश्वरो नित्यप्रकाश इत्याह व्यक्तो वैखरी अव्यक्तः प्रणवः तदात्मनस्तस्य ब्रह्मणः परः परमेश्वरः आभाति कीदृशः ब्रह्म परिपूर्णः तत्राव्यक्तात्मनो ब्रह्मरूपो विततो वभाति व्यक्तात्मनो नानाशक्त्युपबृंहितइंद्रादिरूपेणावभाति यापूर्वं विस्तराऽसती निहारं तमोऽभवत् ततोऽपरां अनिषिद्धकामासक्तां तनुं शब्दब्रह्मतनुस्तु ॥ सदाऽस्त्येव ४८ तत्वं तत्प्रहणेकारणमाह ॥

मानं ऋषीणामित्यादिना ४९ ५० युक्तकृतः यथोचितं कुर्वतः अत एव कस्य ब्रह्मण इदं द्विधाभूतमित्याश्चर्यो त्कायम अ॰

४५ द्याप्यभिचक्षते ५१ ५२ या स्त्री सा ऽस्य महिष्यासीत् एधांबभूविरे वृद्धिं प्राप्ताः ५३ तदेवाह स चापीति ५४ यतः ५५ १२

शोत्वान हृदये भूपश्चिंतयामास कौरव ४९ अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा नह्येधंते प्रजा नूनं दैवमत्र विघातकं ५० एवं युक्तकृतस्तस्य दैवं चावेक्षतस्तदा कस्य रूपमभूत् द्वेधा यत्कायमभिचक्षते ५१ ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत यस्तु तत्र पुमान्सोऽभूत् मनुः स्वायंभुवः स्वराट् ५२ स्त्री यासीच्छतरूपाख्या महिष्यस्य महात्मनः तदा मिथुनधर्मेण प्रजा ह्येधांबभूविरे ५३ स चापि शतरूपायां पंचापत्यान्यजीजनत् प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ५४ आकूतिर्देवहूतिश्च प्रसूतिरिति भारत आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमां दक्षायादात्प्रसूतिं च यतः आपूरितं जगत् ५५ ॥ ॥इति श्रीभागवते महापुराणे तृतीयस्कंधे द्वादशोऽध्यायः १२ ॥ ॥श्रीशुक उवाच निशम्य वाचं वदतो मुनेः पुण्यतमां नृप भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः १ विदुर उवाच स वै स्वायंभुवः सम्राट् प्रियः पुत्रः स्वयंभुवः प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने २ ॥॰॰ यासां संततिभिः ५५ ॥ ॥इति श्रीभागवते म॰

हापुराणे तृतीयस्कंधे टीकायां द्वादशोऽध्यायः १२ त्रयोदशे सिसृक्षायां मनोः कस्मिकाद्भुतां धरामुद्धर्तुमुद्भूता ४५

त् क्रोडादैत्यानुसूदनं १ । १ स्वयंभुवः पुत्रः तद्देहांशत्वात्सः २ ॥

विष्वक्सेनो हरिरेवाश्रयो यस्य सः ३ अतस्तस्य चरितं श्रोतव्यमित्याह सुचिरं श्रमो यस्मिन् तस्य पुंसां श्रुतस्य श्रं
जसा मुख्यत्वेन श्रयमेवार्थ ईडितस्तुतः ननु मुकुंदपादारविंदं येषां हृदयेषु स्थितिनेषां भागवतानां गुणानुश्रवणं ४ सह
स्रशीर्षा श्रीकृष्णस्तस्य चरणावुपधीयेते यस्मिन् श्रीकृष्णः प्रीत्याय स्योत्संगे चरणौ प्रसारयतीत्यर्थः तमभ्यच

चरितं तस्य राजर्षेरादिराजस्य सत्तम ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ ३ श्रुत
तस्य पुंसां सुचिरश्रमस्य नन्वंजसा सूरिभिरीडितोऽर्थः तत्तद्गुणानुश्रवणं मुकुंदपादारविं
दं हृदयेषु येषां ४ श्रीशुक उवाच इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानं प्र
हृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट ५ श्रीमैत्रेय उवाच यदा स्वभार्यया साकं
जातः स्वायंभुवो मनुः प्रांजलिः प्रणतश्चेदं वेदगर्भमभाषत ६ त्वमेकः सर्वभूतानां जन्मकृद्
वृत्तिदः पिता अथापि नः प्रजानां ते शुश्रूषा केन वा भवेत् ७ तद्विधेहि नमस्तुभ्यं कर्मस्वीड्यात्म
शक्तिषु यत्कृत्वेह यशो विष्वगमुत्र च भवेद्गतिः ८ श्रीब्रह्मोवाच प्रीतस्तुभ्यमहं तात स्वस्ति स्ता
द्वां क्षितीश्वर यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनार्पितम् ९ ॥ ऽस्त्रश्चाभ्यभाषत प्रणीयमानस्तेन प्रव

र्त्यमानः ५ ६ त्वमेवैकः पिता सर्वेषां यतो जन्मकृत् वृत्तिदः पोषकश्च त्वमेव अतस्त्वयद्यप्यन्यापेक्षा ना
स्ति अथाप्यस्माकं ते शुश्रूषा केन कर्मणा भवेत् तद्विधेहीत्युत्तरेणान्वयः ७ हे ईड्य आत्मशक्तिषु अस्मत् शक्य
षु कर्मसु मध्ये केन कर्मणा भवेत् तद्विधेहि इदं कर्तव्यमिति कथय यत्कृत्वा यस्मिन्कृत्वा यस्मिन्कृते सति विष्वक्स
र्वतः ८ वायुवाभ्यां स्वस्ति भद्रं स्तात् यद्यतः मामां शाधि अनुशिक्षयेति आत्मना स्वयमेवार्पितं निवेदितं अतः ९

३९
हे

भा॰ त॰ अपचितिः पूजा गृह्येत आत्तेति शेषः सनकादयो न कुर्वंति वयं किमिति करिष्याम इति एवंभूतो गतो मत्सरो येभ्यः ॥ अं
४६ १० गांशास सशाधि पालयेत्यर्थः पुरुषं हरिं ११ प्रजापालकस्य तेन तुष्टो भविष्यति १२ यज्ञलिंगः यज्ञमूर्त्तिः अपग १२
तो यो यस्मात् केवलं श्रमायैवेत्यर्थः येषां यस्मात् आत्मैव स्वयं नादृतः तस्मिन्ननुष्टे स्वार्थस्यैवासिद्धेः सर्वात्मत्वाच्च

एतावत्यात्मजैर्वीर कार्या ह्यपचितिर्गुरौ शक्त्याऽप्रमत्तैर्गृह्येत सादरं गतमत्सरैः १० स त्व
मस्यामपत्यानि सदृशान्यात्मनो गुणैः उत्पाद्य शास धर्मेण गां यज्ञैः पुरुषं यज ११ परं शुश्रू
षणं मह्यं स्यात्प्रजारक्षया नृप भगवांस्ते प्रजाभर्तुर्हृषीकेशोऽनुतुष्यति १२ येषां न तुष्टो भग
वान् यज्ञलिंगो जनार्दनः तेषां श्रमो ह्यपार्थाय यदात्मा नादृतः स्वयं १३ मनुरुवाच आदेशे
हं भगवतो वर्त्तेयामीवसूदन स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो १४ यदोकः सर्व
सत्वानां मही मग्ना महांभसि अस्या उद्धरणे यत्नो देव देव्या विधीयतां १५ मैत्रेय उवाच प
रमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गां कथमेनां समुन्नेष्य इति दध्यौ धिया चिरं १६ सृज
तो मे क्षितिर्वार्भिः प्लाव्यमाना रसां गता अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः १७ ॥

४

तस्य १३ वर्त्तेय वर्त्तिष्ये अमीवसूदन पापनाशन अनुजानीहि अत्र स्थातव्यमिति अनुज्ञां देहि १४ महीनिचे
त अतआह यदोकः स्थानं सा मही हे देव अस्याः देव्याः १५ पूर्वं यानेकृते ऽपि पुनरकांड एवोद्भूतानामपां मध्ये स
न्नां अवसन्नां निमग्नां समुन्नेष्ये उद्धरिष्यामि १६ चिंतामेवाह सृजतः सतः वार्भिः अद्भिः रसां रसातलं ईश्वरेण स

मे॰ नुष्ठेयं स एव विदधातु संपादयतु वराहतोकः सूक्ष्मो वराहः १८ खस्थः आकाशे स्थितः सन् १९ चित्रधा अनेकधा २० २१ पूर्वमंगुष्ठाग्रप्रमाणो दृष्टः गंडशिला स्थूलपाषाणः तत्समः यज्ञो विष्णुः निजरूपतिरोधानेन मे मनः खेदयन् २२ इति मीमांसमानस्य सतः जगर्ज अगर्जत् गिरींद्रतुल्यः २३ गर्जनप्रयोजनमाह ब्रह्माणमिति २४

पस्याहं हृदयादासं सद्दृशो विदधातु मे इत्यभिध्यायतो नासाविवरात्सहसाऽनघ वराहतोको निरगादंगुष्ठपरिमाणकः १८ तस्याभिपश्यतः खस्थः क्षणेन किल भारत गजमात्रः प्रववृधे तदद्भुतमभून्महत् १९ मरीचिप्रमुखैर्विप्रैः कुमारैर्मनुना सह दृष्ट्वा तत्सौकरं रूपं तर्कयामास चित्रधा २० किमेतत्सौकरव्याजं सत्त्वं दिव्यमवस्थितं अहो बताश्चर्यमिदं नासाया मे विनिःसृतं २१ दृष्टोंऽगुष्ठशिरोमात्रः क्षणाद्गंडशिलासमः अपि स्विद्भगवानेष यज्ञो मे खेदयन्मनः २२ इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः भगवान्यज्ञपुरुषो जगर्जागेंद्रसन्निभः २३ ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान् स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः २४ निशम्य ते घुर्घुरितं स्वखेदक्षयिष्णु मायामयसूकरस्य जनस्तपःसत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन्स्म २५ तेषां सतां वेदवितानमूर्तिर्ब्रह्मावधार्यात्मगुणानुवादं विनद्य भूयो विबुधोदयाय गजेंद्रलीलो जलमाविवेश २६ ॥

॰ घुर्घुरितं तज्जात्यनुकरणध्वनिं अनिश्चयेन यः स्वखेदस्तस्य क्षयिष्णु क्षपयिष्णु नाशकं ते इति पुनरुक्तिः प्रसिद्धिख्यापनार्था त्रिभिः पवित्रैः ऋग्यजुःसाममंत्रैः अगृणन् अस्तुवन् २५ वेदैर्वितन्यते स्तूयते मूर्तिर्यस्य सः अत एव आत्मनो गुणाननुवदंतीति यावत् तेषां ब्रह्मउच्चारितं वेदमवधार्य ज्ञात्वा २६ ॥

भा॰त॰ कथंभूतः सन्नाविवेशेत्यपेक्षायामाह द्वाभ्यां उच्चैः क्षिप्तोवालः पुच्छंयेन खचरः आकाशचारीकठोरः कठिनः सटाः अं
४३ संधवालान् खराणितीव्राणिरोमाणियस्याः सात्वक्यस्यखुरैराहतानिअभ्राणियेनसितदंष्ट्रः अतिशुक्लदंष्ट्रः ई १३
क्षानिरीक्षणमेवज्योतिः आलोकोयस्यतदाप्रकाशांतराभावात् अभासे शोभत महीध्रः पृथिव्याः उद्धर्ता २७ क्रो
डापदेशः वराहच्छद्मास्वयमध्वरांगोपिपशुरिवघ्राणेनविजिघ्रन् गृणतः स्तोतॄन् विप्रान् उद्वीक्ष्य ऊर्द्ध्वंवीक्ष्य
कंजलमाविशत् २८ तदानींतनंसमुद्रध्वनिमुत्प्रेक्षते सउदन्वान्समुद्रः आर्तइवस्तनयन्शब्दंकुर्वन् भोयज्ञेश्व

उत्क्षिप्तवालःखचरः कठोरःसटाविधुन्वन्खररोमशत्वक् खुराहताभ्रःसितदंष्ट्रईक्षाज्योति
र्वभासेभगवान्महीध्रः २७ घ्राणेनपृथ्व्याःपदवींविजिघ्रन्क्रोडापदेशःस्वयमध्वरांगः कराल
दंष्ट्रोप्यकरालदृग्भ्यामुद्वीक्ष्यविप्रान्गृणतोविशत्कम् २८ सवज्रकूटांगनिपातवेगविशीर्ण
कुक्षिःस्तनयन्नुदन्वान् ॥ उत्सृष्टदीर्घोर्मिभुजैरिवार्त्तश्चुक्रोशयज्ञेश्वरपाहिमेति २९ खुरैः
क्षुरप्रैर्दरयंस्तदापउत्पारपारंत्रिपरूरसायाम् । ददर्शगांतत्रसुषुप्सुरग्रेयांजीवधानींस्वयमभ्य

रमामांपाहिमामवेत्येवंचुक्रोश आर्त्तसादृश्यमाह उत्सृष्टाः प्रसारितादीर्घाऊर्मयएवभुजास्तैर्विशि ॥ धत्त ३०
ष्टः आर्त्तत्वेहेतुः वज्रकूटोवज्रमयः पर्वतः तद्वदंगंयद्भगवतः तस्यनिपातवेगेनविशीर्णाकुक्षिर्यस्य २९ तदारसायांर
सातलेगांपृथ्वींददर्शकः त्रिपरूः त्रीणिपरूंषिसवनात्मकानिपर्वाणियस्ययज्ञमूर्तिरित्यर्थः किंकुर्वन् क्षुरप्राग्राय
ताग्राः क्षुरास्तत्सदृशैः खुरैः अपोदरयन्कथंउत्पारपारंउत्पाराणां पारशून्यानामप्यपांपारं अवसानंयथाभव
तितथाविदारयन्कथंभूतः अग्रेप्रलयसमयेतत्रतास्वप्सुसुषुप्सुः शिशयिषुः सन्जीवाधीयंतेयस्यांसर्वजीवाधा
रभूतांयांस्वयंअभ्यधत्त आभिमुख्येनदधारजठरेधृतवानित्यर्थः अनेनतदुद्धरणेअनायासंद्योतयति ३० ॥

रसायाः सकाशादुत्थितः संरुरुचे सम्यगशोभत तत्रापि अंभसि गदामुद्यम्यागच्छंतं रुंधानं प्रतिघ्नंतं न सह्यः सहनानर्हो विक्रमो यस्य तं दैत्यं सुनाभं चक्रं तद्वत्संदीपितस्तीव्रो मन्युर्यस्य यद्वा मयि विद्यमाने किमिति परिभवं सहस इति सुनाभेन संदीपितस्तीव्रमन्युः स भगवान् सिंहो गजमिव लीलया जघान ३१ गजेंद्रो जगतीं क्रीडया विदारयन् गैरिकया यथारुणगंडतुंडो भवति तथा तस्य रक्तमेव पंकं तेनांकितौ गंडौ तुंडं च यस्य सः जघानेति पूर्वेणैवान्वयः ३२ मग्ना

स दंष्ट्रयोद्धृत्य महीं निमग्नां स उत्थितः संरुरुचे रसायाः तत्रापि दैत्यं गदयापतंतं सुनाभसंदीपिततीव्रमन्युः ३१ जघान रुंधानमसह्यविक्रमं स लीलयेभं मृगराडिवांभसि तद्रक्तपंकांकितगंडतुंडो यथा गजेंद्रो जगतीं विभिंदन् ३२ तमालनीलं सितदंतकोट्या क्ष्मामुत्क्षिपंतं गजलीलयांग प्रज्ञाय बद्धांजलयोऽनुवाकैर्विरिंच्यमुख्या उपतस्थुरीशं ३३ ऋषय ऊचुः जितं जितं तेऽजित यज्ञभावन त्रयीं तनूं स्वां परिधुन्वते नमः यद्रोमगर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते ३४ रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकं छंदांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वंघ्रिषु चातुर्होत्रं ३५ ॥ऽऽयश्चालक्ष्यस्यानुवाको वैदिकं सूक्तं तत्सदृशैः वाक्यैः स्तुष्टुवुः ३३ भो अजित तेत्वया जितं जितमिति संभ्रमे वीप्सा यज्ञैर्भाव्यते आप्यायते इति तथा त्रयीं वेदमयीं निलिल्युः लीनाः प्रापाः कारणं पृथ्व्युद्धरणं तेन सूकराय ३४ यज्ञात्मतां प्रपंचयंतः स्तुवंति रूपमित्यादिचतुर्भिः छंदांसि गायत्र्यादीनि यज्ञांगभूतच्छंदस्याद्यनुवादेन भगवदवयवता विधीयते बर्हिः शब्दे दीर्घाभाव आर्षः दृशि चक्षुषि चातुर्होत्रादि कर्म चतुष्टयं ३५ ॥ ६ ॥ ॥

भा॰टी॰ स्रुक्जुहूः तुंडे मुखाग्रे स्रुवो नासिकयोः इडा भक्षणपात्रं चमसा ग्रहाश्च सोमपात्राणि प्राशित्रं ब्रह्मभागपात्रं ग्र- श्र॰

४८ स्यते अनेनेति ग्रसनं मुखांतर्वर्तिच्छिद्रं चर्वणं भक्षणं ३६ दीक्षा दीक्षणीयेष्टिः अनुजन्म वारंवारमभिव्यक्तिः ९३

उपसदस्तिस्र इष्टयः शिरोधरं ग्रीवा प्रायणीया दीक्षानंतरेष्टिः उदयनीया समाप्तेष्टिः त एव दंष्ट्रे यस्य प्रवर्ग्यो

महावीरः प्रत्युपसदः पूर्वं क्रियते सभ्यो होमरहितोऽग्निः आवसथ्यं औपासनाग्निः तयोर्द्वंद्वे कर्णे यन्न तत्र वक्रतुरू-

पस्य शीर्षं शिरः चितय इष्टिकाचयनानि पंच असवः प्राणाः ३७ प्रातःसवनादीनि त्रिषवस्थितिः आसनं वा-

स्रुक्तुंड आसीत स्रुवद्दृशनाशयोरिडोदरे चमसाः कर्णरंध्रे प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्व-

णं ते भगवन्नग्निहोत्रम् ३६ दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः जिह्वा प्रवर्ग्य-

स्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ३७ सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदा-

स्तव देव धातवः सत्राणि सर्वाणि शरीरसंधिस्त्वं सर्वयज्ञक्रतुरिष्टिबंधनः ३८ नमो नमस्तेऽखिल-

मंत्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने वैराग्यभक्त्यात्मजयानुभावितज्ञानाय विद्यागुरवे नमो न-

स्याद्यवस्था वा अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त संस्थाविभेदाः ऽऽमः ३९

त्वङ्मांसादि सप्त धातवः सत्राणि द्वादशाहादीनि बहुयागसंघातरूपाणि असोमा यज्ञाः ससोमाः क्रतवस्त-

द्रूपस्त्वं इष्टिर्यजनमनुष्ठानं तदेव बंधनं यस्य सः ३८ पूर्वोक्तमेव सपरिकरं कीर्तयंतः प्रणमंति नमो नम इति अखिल- राम:

मंत्रादिरूपाय क्रियाय क्रियात्मने सामान्यव्यापाररूपाय किंच वैराग्ययुक्तकर्मसाध्या सत्त्वशुद्धिः ततो भक्तिः ततश्चा- ४८

त्मजयः चित्तस्थैर्यं तेन च अनुभावितं साक्षात्कृतं यत् ज्ञानं तस्मै एवंभूतज्ञानप्रदाय गुरवे च ३९ ॥ ९ ॥ ॥

हे भूधर सभूधराः सपर्वता वनाद् उदका निर्गच्छतो गजेंद्रस्य दंतादंतेन ४० त्वयाधृता भूर्विराजत इत्युक्तं इदानीं भूमंडलेन त्व
द्रूपं विराजत इत्याहुः त्रयीति अर्थेत्यर्थांतरे तेदृदरूपं दंतेन धृतं यद्भूमंडलं तेन च कांतिशोभते शृंगेण ऊढो धृतो यो
घनस्तेन भूयसात्यतिमहता विभ्रमो विलासः ४१ लोकाय वासस्थानार्थं तेय त्वीं जगतां मातरं यतस्त्वं पेताऽसि एवं सति
तत्र स्थिताः संतः त्वया पित्रा सह अस्यै मात्रे नमसा विधेम नमनं करिष्यामः नमस्कारेण परिचरैमेति वा स्वतेजः धार

दं यत्राः प्रकोऽस्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा यथा वनान्निः सरतो दता धृता मतंग
जेंद्रस्य सपत्रपद्मिनी ४० त्रयीमयं रूपमिदं च सौकरं भूमंडलेनाथ दता धृतेन ते चकास्ति शृंगोढ
घनेन भूयसा कुलाचलेंद्रस्य यथैव विभ्रमः ४१ संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मात
रं पिता विधेम चास्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निमिवारणावधाः ४२ कः श्रद्दधीतान्यत
मस्तव प्रभो रसां गताया भुव उद्विबर्हणं न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्म
यं ४३ विधुन्वता वेदमयं निजं वपुर्जनस्तपः सत्यनिवासिनो वयं सटाशिखोद्धूतशिवांबुबिंदुभि
र्विमृज्यमाना भृशमीशपाविताः ४४ स वै बत भ्रष्टमतिस्तवैष ते यः कर्मणां पारमपारकर्मणः

जानाति यात्रिकाः मंत्रतोऽग्निमरणाविवत्र्यधाः निहितवानसि ४२ इदं च त्वया अतिदुष्करं कृतमित्याहुः क इति हे
प्रभो तव त्वया कृतं भुव उद्विबर्हणं उद्धरणं त्वदन्यः कः श्रद्दधीत स्पृहयेत् अध्यवस्येदित्यर्थः त्वयि पुनरसौ विस्म
यो न भवति यतो विश्वं सर्वं विस्मयाय यस्मिन् कुतः यो भवान् अतिविस्मयं अत्यद्भुतं इदं विश्वं क्रियाविशेषणं वा ससृ
जे सृष्टवान् ४३ विस्मयं दर्शयन्तः प्रार्थयंते विधुन्वतेति द्वाभ्यां सटानां शिखाभिरग्रैः उद्धूता उच्छलिताः शिवाः
अंबुबिंदवः तैः सिच्यमाना वयं पवित्रीकृताः ४४ न व कर्मणां पारं य एषते अवलोकयति ज्ञातुमिच्छतीत्यर्थः

भोः तृ पश्यतव योगमायया गुणैः महयोगस्तेन मोहितं अतो विश्वस्य शंमंगलं विधेहि यथात्वामचिंत्यानंतशक्तिंज्ञात्वाभ
जेत तथाऽनुगृहाणेत्यर्थः ४५ उपस्थीयमानैः स्तूयमानैः स्वखुराक्रांतइतिजलेपिधारणशक्त्याधानंदर्शयतिअ
४९ वितारक्षकः ४६ ४७ कथनीयानियानिमायीनिमायावंतिचरित्राणियस्यश्रवयेत श्रावयेत हृस्वमार्षंउशतींकम
यां हृदि प्रसीदतिस्वमनसिसंतुष्यतीत्यर्थः ४८ यद्यपिसुलभास्तथापिनप्रार्थनीयाइत्याह नाभिराशीर्भिरलंल

यद्योगमायागुणयोगमोहितं विश्वंसमस्तंभगवन्विधेहिशं ४५ मैत्रेयउवाच इत्युपस्थीयमान
स्तैर्मुनिभिर्ब्रह्मवादिभिः सलिलेस्वखुराक्रांतउपाधत्ताऽवितावनिम् ४६ सइत्थंभगवानुर्वींविष्व
क्सेनःप्रजापतिः रसायालीलयोन्नीतामप्सुन्यस्यययौहरिः ४७ यएवमेतांहरिमेधसोहरेः
कथांसुभद्रांकथनीयमायिनः शृण्वीतभक्त्याश्रवयेतवोशतींजनार्द्दनोऽस्याशुहृदिप्रसीदति
४८ तस्मिन्प्रसन्नेसकलाशिषांप्रभौकिंदुर्लभंताभिरलंलवात्मभिः अनन्यदृष्ट्याभजतांगु
हाशयःस्वयंविधत्तेस्वगतिंपरःपरां ४९ कोनाममलोकेपुरुषार्थसारवित्पुराकथानांभगव
त्कथासुधां आपीयकर्णांजलिभिर्भवापहामहोविरज्येतविनानरेतरं ५० ॥ ॥इतिश्री
भगवतेमहापुराणेतृतीयस्कंधेसूकररूपानुवर्णनेत्रयोदशोध्यायः १३ ॥ ६ ॥

वात्मभिः तुच्छाभिः नचतदाभजनस्यवैफल्यंशंकनीयमित्याह भगवद्भजनव्यतिरेकेणफलांतरदृष्टिंविना
भजतांस्वपदप्राप्तिंस्वयमेवविधत्तेगुहाशयत्वादहैतुकींभक्तिंजानन् ४९ अतःकोनामपुराकथानांपूर्ववृत्तानां
मध्येकथंचिदापीयविरज्येतविरमेतनरेतरंपशूंविना ५० ॥=॥इतिश्रीभागवतेतृतीयस्कंधेटीकायांत्रयोदशो

भा॰ ३
१३

चतुर्दशे निदानं तु तद्वधे वक्तुमुच्यते संध्यायां कश्यपाद्गर्भसंभवः कामतो दितेः १ ॥ १ ॥ तेनैव येन भूमिरुद्धृता अनुशु
श्रुम त्वन्मुखात् २ मृधा युद्धं ३ साधुत्वे हेतुः यद्यस्मात्त्वं हरेरवतारकथां पृच्छसीति मृत्योः पाशं विनाशयति मोचय
तीति तया ४ तदेव दर्शयति यया कथया उत्तानपदः पुत्रो ध्रुवः मुनिना नारदेन अर्भक एव यदा ध्रुवाय सुनंदादिभि
र्विमानमानीतं तदाऽस्य देहत्यागोऽपेक्षितः स्यादिति मत्वा मृत्यावासन्नेऽपि देहं न तत्याज किंतु सोपानइव तस्य मूर्ध्नि

श्रीशुक उवाच निशम्य कौषारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः पुनः स पप्रच्छ
तमुद्यतांजलिर्न चातितृप्तो विदुरो धृतव्रतः १ विदुर उवाच तेनैव तु मुनिश्रेष्ठ हरिणा यज्ञमू
र्तिना आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम २ तस्य चोद्धरतः क्षौणीं स्वदंष्ट्राग्रेण लीलया दैत्य
राजस्य च ब्रह्मन्कस्माद्धेतोरभून्मृधः ३ श्रीमैत्रेय उवाच साधु वीर त्वया पृष्टमवतारकथां हरेः
यत्त्वं पृच्छसि मर्त्यानां मृत्युपाशविनाशिनीं ४ ययोत्तानपदः पुत्रो मुनिना गीतयाऽर्भकः मृत्योः कृ
त्वैव मूर्ध्न्यंघ्रिमारुरोह हरेः पदं ५ अथात्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा ब्रह्मणा देवदेवे
न देवानामनुपृच्छतां ६ दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिं अपत्यकामा चकमे संध्यायां

पदं दत्त्वा विमानमारुह्य विष्णुपदं आरूढः वक्ष्यति हि परीत्याभ्यर्च्य धिष्ण्याग्र्यं क्षत्र स्वस्त्यय ॥ इत्यादिना ७
नो द्विजैः इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयमिति ५ तयोः संग्रामे हेतुं वक्तुमितिहासं प्रस्तौति अथेति अनुपृच्छतां
देवानां ब्रह्मणा वर्णित इतिहासो मया श्रुतः ६ तदेव प्रश्नप्रस्तावाय प्रथमं हिरण्याक्षहिरण्यकशिपूत्पत्तिप्रसंगमाह दि
तिरित्यादिना आकद्ध्यायसमाप्ति मरीचेः पुत्रं कश्यपं हृच्छयः कामस्तेनार्दिता अतः संध्यायामेव कामितवती ७ ॥ ९ ॥

भा°च°
५५

तदप्यग्निहोत्रशालायांतत्रापिसमाहितं अग्निर्जिह्वायस्ययजुषांयज्ञानांपतिंपुरुषंश्रीविष्णुम् ८ कृपणांबहुभाषि अ
णीमितिवक्ष्यतितत्र एषमामितिद्वाभ्यांकार्पण्यंभर्त्तरीतिचतुर्भिश्चबहुभाषणंवर्ण्यतेदुनोतिपीडयतिविक्रम्यशौर्य
माविर्भाव्यरंभांकदलीं ९ आयुंक्तांसर्वतोयुनक्तुसम्यक्करोतु १० भर्त्तरिप्राप्तबहुमानानांस्त्रीणांयशः लोकान्



इष्ट्वाग्निजिह्वंपयसापुरुषंयजुषांपतिं निम्लोचत्यर्कआसीनमग्न्यागारेसमाहितम् ८ दि
तिरुवाच एषमांत्वत्कृतेविद्वन्कामआत्तशरासनः दुनोतिदीनांविक्रम्यरंभामिवमतंग
जः ९ तद्भवान्दह्यमानायांसपत्नीनांसमृद्धिभिः प्रजावतीनांभद्रंतेमय्यायुंक्तामनुग्रहं
१० भर्त्तर्याप्तोरुमानानांलोकानाविशतेयशः पतिर्भवद्विधोयासांप्रजयाननुजायते ११
पुरापितानोभगवान्दक्षोदुहितृवत्सलः कंवृणीतवरंवत्साइत्यपृच्छतनःपृथक् १२ स
विदित्वात्मजानांनोभावंसंतानभावनः त्रयोदशाददत्तासांयास्तेशीलमनुव्रताः १३ अथ
मेकुरुकल्याणकामंकंजविलोचन आर्त्तोपसर्पणंभूमन्नमोघंहिमहीयसि १४ इतितांवी
रमारीचः कृपणांबहुभाषिणीं प्रत्याहानुनयन्वाचाप्रवृद्धानंगकश्मलाम् १५ एषतेऽहंविधा
स्यामिप्रियंभीरुयदिच्छसि तस्याःकामंनकःकुर्यात्सिद्धिस्त्रैवर्गिकीयतः १६ ॥ आविशतेव्याप्नो
तिप्रजयापुत्ररूपेणतज्जायाजायाभवति यदस्यांजायतेपुनरितिश्रुतेः ११ नोऽस्माकंपितानोऽस्मान्पृथक्कृत्वापृच्छ
त् अयंभावः त्रयोदशानामप्यस्माकंत्वयिभावसाम्येवैषम्याचरणंतवानुचितमिति १२ १३ मोघंनभवतिहिमहीय
सित्वादृशेमहत्तमे १४ प्रवृद्धानंगेनकश्मलंमोहोयस्याःतां १५ संध्याकालवंचनायभार्याप्रशंसा एषइतिपंचभिःयः

सर्वाश्रमानुपादायेतितानप्यन्नादिदानेनरक्षन्तस्तारयन्स्वयंतरतीत्यर्थः १७ आत्मनोदेहस्यार्द्धंकर्मसुहृद्योःसहाधिकारात् यच्छब्दानांतांत्वामितितृतीयश्लोकेनसंबंधः स्वधुरंदृष्टादृष्टकर्मभारंविज्वरःनिश्चिंतः १८ हेलाभिर्लीलाभिःजयेमेति सभार्यस्येंद्रियाणिप्रायेणतस्ततोनसर्पंतीतिभावः १९ नाम्नेकोपकारकर्त्रींत्वांकार्त्स्न्येनप्रत्युकर्तुंप्रत्युपकारे त्वत्सदृशीभवितुंनप्रभवः नसमर्थाः येचान्येगुणगृध्नवः गुणप्रियाः तेपिनसमर्थाः संपूर्णे

सर्वाश्रमानुपादायस्वाश्रमेणकलत्रवान् व्यसनार्णवमत्येतिजलयानैर्यथार्णवं १७ यामाहुरात्मनोह्यर्द्धंश्रेयस्कामस्यमानिनि यस्यांस्वधुरमध्यस्यपुमांश्चरतिविज्वरः १८ यामाश्रित्येंद्रियारातीनदुर्जयानितराश्रमैः वयंजयेमहेलाभिर्दस्यूनदुर्गपतिर्यथा १९ नवयंप्रभवस्तांत्वामनुकर्तुंगृहेश्वरि अप्यायुषावाकार्त्स्न्येनयेचान्येगुणगृध्नवः २० अथापिकाममेतन्तेप्रजात्यैकरवाण्यलम् यथामांनातिवोचंतिमुहूर्तंप्रतिपालय २१ एषाघोरतमावेलाघोराणांघोरदर्शना चरंतियस्यांभूतानिभूतेशानुचराणिह २२ एतस्यांसाध्विसंध्यायांभगवान् भूतभावनः परीतोभूतपर्षद्भिर्वृषेणाटतिभूतराट् २३ ॥ ६ ॥ ६ ॥

अप्यायुषा वाशब्दाज्जन्मांतरैरपिनप्रभवइत्युक्तं २० यद्यपित्वदनुकरणमशक्यं प्रजात्यैपुत्रोत्पत्त्यै नातिवोचंतिनर्निदंति प्रतिपालयप्रतीक्षस्व २१ स्वनिंदामगणयंतींभीषयन्श्रीरुद्रमनुवर्णयतिएषेतिसप्तभिः घोराणामेषावेलास्वयंचघोरदर्शना २२ भूतपर्षद्भिः भूतगणैः २३ ॥ ६ ॥

भा॰टी॰ नर्हितस्तन्मसुखत्वमात्रं वर्जनीयमितिचेत् तत्राह श्मशानेयश्चक्रानिलः वातमंडलीतस्मिन्यासाधूलिः तयाधूम्रः वि श्री॰

कीर्णो विक्षिप्तः विद्योतोद्युतिमान् जटाकलापोयस्य भस्मनावगुंठः प्रावृतः अमलः रुक्मवद्देहोयस्य सदेवस्त्रिभिः २४

५१ सोमार्काग्निनेत्रैः पश्यतीत्यस्योत्तरश्लोकत्रयेष्वनुषंगः एकस्यजामातरः परस्परंभ्रातरोव्यवह्रियंते अतोममः

भ्रातास्त्रसौनवदेवरद्दूतिलज्जाथमुक्तं २४ ननुदेवरत्वेनतस्माद्बिभेमीत्याशंक्याह नयस्येतिननुतथाऽपिमह

त्वेनादरणीयस्यस्वजनस्यचतवसत्सर्वक्षमेनैवतत्राह यस्यस्वजनादिर्नास्ति समत्वादीश्वरस्य ऐश्वर्यमेवाहये

श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः भस्मावगुंठामलरुक्मदेहोदेव
स्त्रिभिः पश्यतिदेवरस्ते २४ नयस्यलोकेस्वजनः परोवानात्यादृतोनोनतकश्चिदिहगर्ह्यः व
यंत्रतैर्यच्चरणापविद्धामाशास्महेऽजांवतभुक्तभोगाम् २५ यस्यानवद्याचरितंमनीषिणो
गृणंत्यविद्यापटलंविभित्सवः निरस्तसाम्यातिशयोऽपियत्स्वयंपिशाचचर्यामचरद्गतिः स
ताम् २६ हसंतियस्याचरितंहिदुर्भगाः स्वात्मन्रतस्याविदुषः समीहितं यैर्वस्त्रमाल्याभ
रणानुलेपनैः श्वभोजनंस्वात्मतयोपलालितम् २७ ॥

नचरणेनाघविद्धांनिर्माल्यवद्दूरंनस्त्यक्तांतेन भुक्तभोगामजांमायांतन्मयींविभूतिंमहाप्रसादइत्याशास्महे व्रतैस्तमाराध्य २५ अनिषिद्धसुखत्यागादसोपि

शाचइत्युपहासोनकार्यइत्याहद्वाभ्यां यस्येत्यनवद्यंविषयासक्तिशून्यंआचरितंविभित्सवः भेत्तुमिच्छवः २६ एम

समीहितं अभिप्रेतंलोकशिक्षारूपंअविदुषः अविद्वांसः यद्वा नविद्वान्यस्मादितितस्यसर्वज्ञस्येत्यर्थः दु ५१

र्भगानेवाहयैरिति श्वभोजनंशुनांभोज्यंशरीरंस्वात्मतयाऽयमेवात्मेतिबुध्या २७॥

अहो अतर्क्यं नस्याचरणमित्याह ब्रह्मादयो येन कृतान् सेतून् स्वस्वाधिकारान् पालयंति यः कारणं यस्य नेन कृतमिदं विश्वं मायाच यस्याज्ञाकारी विभूम्नः परमेश्वरस्य विडंबनं अतर्क्यमित्यर्थः २८ भर्त्रा निरूपकेण एवं संविदिते ज्ञापितेऽपि सा निवृत्ता विवेसेव २९ विकर्म्मणि निषिद्धे दिष्टादैवं रूपायेश्वरायय उपविवेशेति मैथुनं लक्ष्यते ३० उपस्पृश्य स्नात्वा भर्गशब्दवाच्यं विरजं ज्योतिर्ध्यायन् सनातनं ब्रह्म गायत्रीं प्रणवं वा जजाप ३१ कर्मावद्येन कर्मदो

ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च माया। आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडंबनं २८ मैत्रेय उवाच सैवं संविदिते भर्त्रा मन्मथोन्मथितेंद्रिया। जग्राह वासो ब्रह्मर्षेर्वृषलीव गतत्रपा २९ स विदित्वाऽथ भार्यायास्तं निर्बंधं विकर्म्मणि। नत्वा दिष्टाय रहसि तयाऽथोपविवेश ह ३० अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः ध्यायन् जजाप विरजं ब्रह्म ज्योतिः सनातनम् ३१ दितिस्तु व्रीडिता तेन कर्मावद्येन भारत उपसंगम्य विप्रर्षिमधोमुख्यभ्यभाषत ३२ दितिरुवाच न मे गर्भमिमं ब्रह्मन् भूतानां ऋषभोऽवधीत् रुद्रः पतिर्हि भूतानां यस्याकरवमंहसम् ३३ नमो रुद्राय महते देवायोग्राय मीढुषे शिवाय न्यस्तदंडाय धृतदंडाय मन्यवे ३४ ॥ ऋषेण ३३ मा अवधीत् मा हंतु इत्यर्थः वधशंकाबीजमाह रुद्र इति अंहसं अंहः अपराधं अकरवं कृतवत्यस्मि ३३ रुद्रदुःखं तत् द्रावयतीति रुद्रः तस्मै उग्राय अनभिलंघ्याय मीढुषे सकामेषु फलसेचनकर्त्रे निष्कामेषु शिवाय वस्तुतो न्यस्तदंडाय दुष्टेषु धृतदंडाय संहारे मन्यवे ३४ ॥

भ्रातृभामोभगिन्याः भर्त्तोरुद्रस्तुग्रहोपस्यव्याधस्यनिर्दयस्यापि सतीपतिरित्यनेनस्त्रीणांस्वभावंस्वयमेववेत्तीतिसूचय
ति ३५ स्वसर्गस्यस्वसंतानस्यआशिषंशुभंलोकाप्त्यंलोकद्वयार्हं संध्यायांयोनियमः सनिवृत्तोयस्य ३६ ॥
३७ ३६ तेआत्मनश्चित्तस्यापायत्यादशुचित्वात् मौहूर्तिकात् संध्यारूपात् उतअपिममनिदेशस्यआज्ञाया

मनः प्रसीदतांभामोभगवानुरुर्वनुग्रहः व्याधस्याप्यनुकंप्यानांस्त्रीणांदेवः सतीपतिः ३५ श्रीमैत्रेयउवाच स्वसर्गस्याशिषंलोक्यामाशासानांप्रवेपतीम् निवृत्तसंध्यानियमोभार्यामाह प्रजापतिः ३६ श्रीकश्यपउवाच अप्रायत्यादात्मनस्तेदोषान्मौहूर्तिकादुत मन्निदेशातिचारेणदेवानांचातिहेलनात् ३७ भविष्यतस्तवाभद्रावभद्रेजाठराधमौ लोकान्सपालांस्त्रींश्चंडिमुहुराक्रंदयिष्यतः ३८ प्राणिनांहन्यमानानांदीनानामकृतागसां स्त्रीणांनिगृह्यमाणानांकोपितेषुमहात्मसु ३९ तदाविश्वेश्वरः क्रुद्धोभगवान्लोकभावनः हनिष्यत्यवतीर्यासौयथाद्रीन्शतपर्वधृक् ४० श्रीदितिरुवाच वधंभगवतासाक्षात्सुनाभोदारबाहुना आशासेपुत्रयोर्मह्यंमाक्रुद्धाद्ब्राह्मणात्प्रभो ४१ नब्रह्मदंडदग्धस्यनभूतभयदस्यच नारकाश्चानुगृह्णंतियांयांयोनिमसौगतः ४२ ॥

॥ अतिचारेणअतिक्रमेणदेवानांरुद्रानुचराणाम् ३७ एतैश्चतुर्भिर्हेतुभिः जाठराधमौपुत्रावपसदौहेचंडिकोपने ३८ हन्यमानानांसतां ३९ शतपर्वधृक्वज्रधरइंद्रः ४० सुनाभेनोदारोबाहुर्यस्य मह्यंममकोपितश्चित्युक्तत्वात् शंकितचित्तासतीप्रार्थयतेब्राह्मणान्माभूदिति ४१ नारकाअपिनयायांयांयोनिमसौगतोभवजिनत्रस्याश्वनानुगृह्णंतिकृपांनकुर्वंति ४२

भा
१४
रामः
५२

कृतेनोयो ऽपराधस्तेन शोकस्ततो ऽनुतापस्तेन प्रत्यवमर्शनात् युक्तायुक्तविचारात् भगवति हरौ भवे श्रीरुद्रे एतैः पंचभिः कारणैः ४२ पुत्रस्य हिरण्यकशिपोः पुत्राणां मध्ये एकः सतां मतो भविष्यति तमेव वर्णयति गास्यंतीति साद्धैः पंचभिः समं सह सदृशं वा ४४ हीनवर्णं हेम यथा योगैर्दाहादिभिरुपायैः शोध्यते तत् यायस्य शीलं स्वभावं अनवर्तितं अनुगंतुं प्राप्तुं निर्वैरादिभिर्योगैरात्मानं भावयिष्यंति शोधयिष्यंति ४५ विश्वप्रसादे हेतुः यदात्मकं स्वदृक् आत्मसाक्षी यस्य

श्रीकश्यप उवाच कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात् भगवत्युरुमानाच्च भवे मय्यपि चादरात् ४३ पुत्रस्यैव तु पुत्राणां भवितैकः सतां मतः गास्यंति यद्यशः शुद्धं भगवद्यशसा समम् ४४ योगैर्हेमेव दुर्वर्णं भावयिष्यंति साधवः निर्वैरादिभिरात्मानं यच्छील मनुवर्तितुं ४५ यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकः सस्वदृक् भगवान् यस्य तोष्यते ऽनन्यया दृशा ४६ स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः प्रवृद्धभक्त्या ह्यनुभाविताशये निवेश्य वैकुंठमिमं विहास्यति ४७ अलंपटः शीलधरो गुणाकरो हृष्टः परर्द्ध्या व्यथितो दुःखितेषु अभूतशत्रुर्जगतः शोकहर्ता नैदाघिकं तापमिवोडुरा

नन्यया भगवानेव सत्यदृष्ट्या एवंभूतया दृशा तोष्यते तेनोषं प्राप्स्यते ४६ तत्र हेतुः स वा इति महात्मा अप १९ जः ४८ रिच्छिन्नदृष्टिः महानुभावः महाप्रभावः महतामपि मध्ये महिष्ठः अतिशयेन महान् प्रवृद्धया भक्त्या अनुभाविते शोधिते चित्ते वैकुंठं हरिं निवेश्य देहाद्यभिमानं त्यक्ष्यति ४७ महाभागवतत्वमाह अलंपट इति शीलधरः सु स्वभावः गुणानां धैर्यादीनामाकरो जन्मभूमिः परेषां समृध्या हृष्टः परेषु दुःखितेषु सत्सु न भूतो जातः शत्रुर्यस्य नि

भा० टी० ३

अपरिच्छिन्नरश्मित्वमाह अंतरिति स्वपुरुषाणामिच्छया पुनः पुनर्गृहीतानि रूपाणि येन श्रीरेव ललना सुंदरी च अ०
तस्याः ललामं मंडनं द्रष्टा द्रक्ष्यति ४९ महामनाः सोत्साहचित्ता हरिणा सह युद्धेन मरणे पुत्रयोः कीर्त्तिः संद्भनिष्य १५
भवेदिति ५० ॥ ॥इति श्रीतृतीये टीकायां चतुर्दशोऽध्यायः १४ हतप्रभैः सुरैः पृष्टः प्राह पंचदशे विधिः तद्बी-
जं विप्रशापाद्वैकुंठे विष्णुभृत्ययोः १ तदेवं देवानां ब्रह्मणश्च संवादप्रस्तावमुक्त्वेदानीं तं संवादं वक्तुमाह प्रा०

अंतर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपम् पौत्रस्तव श्रीललनालला-
मं द्रष्टा स्फुरत्कुंडलमंडिताननम् ४९ श्रीमैत्रेय उवाच श्रुत्वा भागवतं पौत्रममोदत दिति-
र्भृशं पुत्रयोश्च वधं कृष्णात् विदित्वासीन्महामनाः ५० ॥ ॥इति श्रीभागवते महापु-
राणे तृतीयस्कंधे दितिकश्यपसंवादे चतुर्दशोऽध्यायः १४ ॥ ॥श्रीमैत्रेय उवाच प्राजा-
पत्यं तु तत्तेजः परतेजोहनं दितिः दधार वर्षाणि शतं शंकमाना सुरार्दनात् १ लोके ते-
न हतालोके लोकपाला हतौजसः न्यवेदयन् विश्वसृजे ध्वांतव्यतिकरं दिशां २ देवा ऊ-
चुः तम एतद्विभो वेत्थ संविग्ना यद्वयं भृशं न ह्यव्यक्तं भगवतः कालेनास्पृष्टवर्त्मनः ३

जापत्यं काश्यपं तेजो वीर्यं परेषां तेजो हंतीति तथा आर्षः स्वपुत्राभ्यां करिष्यते यत्सुराणां अर्दनं पीडनं तस्मात् शंकमा-
नाना तेन गर्भतेजसा हतालोके निरस्तसूर्यादिप्रकाशे हतौजसः हतप्रभावाः ध्वांतेन व्यतिकरं संकरं २ वेत्थ जानासि स्कं०
किं विचारयसि यद्यतो वयं संविग्ना भीताः अव्यक्तं अज्ञातं न स्पृष्टं वर्त्म ज्ञानप्रचारो यस्य ३ ॥ ६ ॥ ॥ १५

ब्रह्माणंपरमेश्वरत्वेनस्तुवंतःप्रार्थयंतेदेवदेवेतिसप्तभिःलोकनाथानांशिखामणेभाववित्अभिप्रायज्ञोसिकेनाभिप्रायेणदितेर्गर्भोवर्द्धतइतिजानामीत्यर्थः ४ विज्ञानंवीर्यंबलंयस्यइमंब्रह्मदेहमुपेयुषेप्राप्तवते गृहीतोगुणभेदःरजोगुणोयेनअव्यक्तस्यप्रपंचस्ययोनयेकारणायनअव्यक्ताकेनापिप्रमाणेनविज्ञातायोनिर्यस्येतिवा ५ सकामतया प्रतिक्षणदुःखमनुभवंतोनिष्कामभक्तानस्तुवंतआहद्वाभ्यांयेत्वात्वांअनन्येननिष्कामेणभावेनभक्त्याध्यायंति

देवदेवजगद्धातर्लोकनाथशिखामणे परेषामपरेषांत्वंभूतानामसिभाववित् ४
नमोविज्ञानवीर्यायमाययेदमुपेयुषे गृहीतगुणभेदायनमस्तेऽव्यक्तयोनये ५ येत्वाऽनन्येनभावेनभावयंत्यात्मभावनं आत्मनिप्रोतभुवनंपरंसदसदात्मकं ६ तेषांसुपक्वयोगानांजितश्वासेंद्रियात्मनां लब्धयुष्मत्प्रसादानांनकुतश्चित्पराभवः ७ यस्यवाचाप्रजाःसर्वागावस्तंत्येवयंत्रिताः हरंतिवलिमायत्तास्तस्मैमुख्यायतेनमः ८ सत्वंविधत्स्वशंभूमंस्तमसालुप्तकर्म्मणां॥ ९ आत्मनोजीवानुभावयतीतितथात्वस्मिन्प्रोतानिग्रथितानिभुवनानि येनचेतनाचेतनप्रपंचकारणमित्यर्थःतत्रहेतुःसदसदात्मकंकार्य्यकारणरूपंवस्तुतस्तुताभ्यांपरम् ६ जितःश्वासइंद्रियाणिआत्मामनश्चयैःअतःसुपक्वयोगाःअतएवप्राप्तोयुष्मत्प्रसादोयैस्तेषां ७ अन्येतुनित्यंकर्म्मलोकेशिनइत्याहयस्येतितंत्यादामन्या आयत्ताअधीनाःमुख्यायनियंत्रेप्राणरूपायेतिवातथाचश्रुतिःतस्यवाकुंतंतिनीसी

मानिकर्मोणियेषां आपन्नान् आपद्गतान् स्मान् ८ आपत्कारणमाहुः एषगर्भस्तस्य विशेषणं अर्पितं निक्षिप्तं काश्य
पमोजोवीर्यं दिशस्तिमिरयन्तमोव्याप्ताः कुर्वन् १० दितेः कुचेष्टितं ज्ञात्वा प्रहस्याह देवानां येशब्दा विज्ञप्तिवाक्यानि तेषां
गोचरो विषयभूतः प्रत्यभाषत ११ युष्मत्तःकाशात्पूर्वेजाताः १२ वैकुंठाख्यलोकंययुः १३ तं वर्णयति वसंतीत्यादिद्वाद

अदस्त्वदयया दृष्टा आपन्नानर्हसीक्षितुं ८ एषदेवदितेर्गर्भ ओजः काश्यपमर्पितम्
दिशस्तिमिरयन्सर्वावर्द्धतेऽग्निरिवैधसि १० श्रीमैत्रेय उवाच सप्रहस्यमहावाहो भग
वानशब्दगोचरः प्रत्याचष्टात्मभूर्देवान्प्रीणन्रुचिरयागिरा ११ श्रीब्रह्मोवाच मान
सामेसुतायुष्मत्पूर्वजाः सनकादयः चेरुर्विहायसा लोकांल्लोकेषुविगतस्पृहाः १२ त
एकदाभगवतोवैकुंठस्यामलात्मनः ययुर्वैकुंठनिलयं सर्वलोकनमस्कृतम् १३ वसंति
यत्रपुरुषाः सर्वेवैकुंठमूर्तयः येऽनिमित्तनिमित्तेन धर्मेणाराधयन्हरिम् १४ यत्रत्वा
द्यः पुमानास्ते भगवान्शब्दगोचरः सत्त्वंविष्टभ्यविरजंस्वानांनोमृडयन्वृषः १५ यत्रने
श्रेयसंनामवनंकामदुघैर्द्रुमैः सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिवमूर्तिमत् १६ ॥ एशभिः वैकुंठस्यहरेरि

वमूर्तिर्येषांते निमित्तंफलंननिमित्तं प्रवर्त्तकं यस्मिन् निष्कामेनधर्मेणेत्यर्थः आराधयन् आराधितवंतः १४ यत्रेतिशब्द
गोचरो वेदांतैकवेद्यः विरजंसत्वमूर्त्तिंविष्टभ्यधृत्वा वृषो धर्ममूर्तिः स्वानांस्वान् १५ तत्रत्यंवनंविशिनष्टि यत्रेतिचतुर्भिः सर्वर्त्तु

भा० टी० ५४

रम ५४

चरितानि चरित्राणि भर्तुः प्रभोः अनुविकसंत्यो मधुमकरंदः तद्युक्ता माधव्यो वासंत्यो लताः यद्वा अनुविकसन्मधवः अस
न्मकरंदाः माधव्यः मधुकालीनाः सुमनसः तासां गंधेन खंडिता विघ्निता धीर्येषां तेपि तद्गंधप्रापकमनिलं क्षिपंतः तिरस्कु
र्वन्तो गायंति अनेन भगवत्पार्षदानां निरतिशयविषयसुखेपि भगवद्भजनानंदासक्तिर्दर्शिता १७ अन्यभृताः कोकिलाः
दात्यूहः स्नातकः अचिरमात्रं क्षणमात्रं विरमति अनेन तत्रत्यपक्षिणामपि हरिकथाश्रवणादिपरमानंदो दर्शितः १८ ॥

वैमानिकाः सललनाश्चरितानि यत्र गायंति लोकशमलक्षपणानि भर्तुः अंतर्जलेऽ-
नुविकसन्मधुमाधवीनां गंधेन खंडितधियोप्यनिलं क्षिपंतः १७ पारावतान्यभृत
सारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणां यः कोलाहलो विरमतेऽचिरमात्र
मुच्चैर्भृंगाधिपे हरिकथामिव गायमाने १८ मंदारकुंदकुरबोत्पलचंपकार्णपुन्नागना
गबकुलांबुजपारिजाताः गंधेऽर्चिते तुलसिकाभरणेन तस्या यस्मिंस्तपः सुमनसो बहु
मानयंति १९ तत्संकुलं हरिपदानतिमात्रदृष्टैर्वैडूर्यमारकतहेममयैर्विमानैः ॥ २

मंदारपारिजातौ सुरतरू विशेषौ कुरबस्तिलकवृक्षः उत्पलं रात्रिविकाशि अंबुजं दिनविकाशि पुन्नागो नागकेस
रः एताः सुमनसः पुष्पजातयः सुगंधा अपि तुलसिकाभरणेन श्रीहरिणा तुलस्या गंधेऽर्चिते सति यस्मिन्वने तस्यास्त
पो बहुमानयंति अनेन तत्रत्या गुणग्राहिण एव न मत्सरिण इत्युक्तं एवंभूतं वनं यत्र तद्वैकुंठं व्ययुरिति पूर्वेणान्वयः १९
पुनर्वैकुंठमेव विशिनष्टि तत्संकुलं व्याप्तं भवति केषां हरिपदयोरानतिः प्रणामः तावन्मात्रेण दृष्टैर्भक्तानां विमानैः न कर्मादि

१५ भा.तृ. ५५

प्राप्यैर्वैदूर्य्यमारकतैर्हैममयैश्च विमानैः वृहंतिकटितटानि यासांस्मितशोभीनि मुखानि यासां ताः अपि कृष्णे आत्मा येषां रजः कामं उत्स्मयाद्यैः परिहासादिभिः न आदधुः न जनयामासुः २० श्रीर्लक्ष्मीः रूपिणी मनोहरमूर्त्तिधारिणी ती श्रीहरेः सद्मनि सम्मार्जनं कुर्वतीव यस्मिन् लोके संलक्ष्यते चरणारविंदं क्वणयती नूपुरेण शब्दयंती विमुक्तो दोषश्चांचल्यं यया यद्वा मुक्तेन दोषा प्रसाधितेन बाहुना कीदृशे सद्मनि स्फटिकमयानि कुड्यानि यस्मिन् मध्ये मध्ये च शोभार्थं उपेतं संयुक्तं हेम यस्मिन् यस्या अनुग्रहणे श्रीरनुग्रहं करोतु तदर्थमन्येषां ब्रह्मादीनां यत्नः सा अयं भावः यद्यपि तत्र रजो

येषां वृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः २० श्री रूपिणी क्वणयती चरणारविंदं लीलांऽबुजेन हरिसद्मनि मुक्तदोषा संलक्ष्यते स्फटिककुड्यउपेतहेम्नि संमार्जतीव यदनुग्रहणेऽन्ययत्नः २१ वापीषु विद्रुमतटास्वऽमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशं अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमतांऽग यच्छ्रीः २२ ॥

एतन्नास्त्येव तथापि स्वर्णपट्टिकावच्छिन्नभित्तिभागेषु बहुधा प्रतिविंबिता सती लीलांऽबुजं भ्रामयंती विनयभक्तिभ्यां तथा लक्ष्यत इति २१ अंग हे देवाः यच्छ्रीः यस्मिन् लोके श्रीरेवं अमत अमंस्त मेने किं कुर्वती विद्रुममयानि तटानि यासां अमला अमृततुल्या आपो यासां तासु वापीषु निजवने लक्ष्मीवने परिचारिकाभिरन्विता तुलसीभिः श्रीविष्णुं पूजयंती तदा उदके प्रतिविंवितं शोभमानाऽलकयुक्तं उत्कृष्टनासिकायुक्तं च स्ववक्त्रं वीक्ष्य भगवता उच्छेषितं चुंवितमित्यमन्यत अनेन लक्ष्म्या अपि सौभाग्यसुखं भगवदनुग्रहेणैवेति द्योतितं २२ ॥ ॥ ॥ ॥

रामः ५५

पुनः कथंभूतंतत यद्वैकुंठंनव्रजंतिकेयेकुकथाःशृण्वंतिकास्ताः अघंभिनत्तीत्यघभित्तत्स्यहरेःरचनासृष्ट्यादिलीलातत्स्याअनुवादादन्यविषयाःअर्थकामादिवार्त्ताःमतिभ्रंशिकाते पामव्रजनेहेतुःयास्तुहतभाग्यैर्नरैःश्रुताःसत्यःतांस्तानश्रोतॄन्अशरणेषुनिराश्रयेषुतमःसुनरकेषुक्षिपंति हंतखेदे कथंभूताः आत्तःसारःश्रोतॄणांपुण्यंयाभिस्ताः २३ प्रसंगात्तानशोचंतिनोऽस्माभिःब्रह्मादिभिरप्यभ्यर्थितांनृगतिंमनुष्यजातिंप्रपन्नाःप्राप्ताःसंतोपिहरेराराधनंनकुर्वंति॥ कीदृशींनृगतिं यत्रयस्यांधर्म्मसहितंतत्वज्ञानंभवतितदुभयसाधकत्वात् तस्याःतेऽमुष्यभगवतोविसृतयामाययाननुसं

यन्नव्रजंत्यघभिदोरचनाऽनुवादात्शृण्वंतियेऽन्यविषयाःकुकथामतिघ्नीः यास्तुश्रुताहतभगैर्नृभिरात्तसारास्तांस्तान्क्षिपंत्यशरणेषुतमःसुहंत २३ येऽभ्यर्थितामपिचनोनृगतिंप्रपन्नाज्ञानंचतत्वविषयंसहधर्म्मयत्र नाराधनंभगवतोवितरंत्यमुष्यसंमोहितावितत्तयावतमाययाते २४ यच्चव्रजंत्यनिमिषामृषभानुवृत्त्यादूरेयमाह्युपरिनःस्पृहणीयशीलाः भर्त्तुर्मिथःसुयशसःकथनानुरागवैक्लव्यबाष्पकलयापुलकीकृतांगाः २५॥

मोहिताःवर्ततेतिखेदे यद्विचैवंसंबंधः केवलंतएवनव्रजंतिकिंतुयेभगवदाराधनंनकुर्वंतितेपिनेषांमायामोहितत्वादिति २४ पुनःकथंभूतं यच्चनःउपरिस्थितंव्रजंति केअनिमिषादेवानांऋषभःश्रेष्ठोहरिस्तस्यानुवृत्त्यादूरेयमोयेषांयद्वा दूरीकृतयमनियमाःपाठांतरेदूरीकृताहंकाराइत्यर्थःस्पृहणीयंकरुणादिशीलंयेषांनेकिंचभर्त्तुःहरेर्यत्सुयशःतस्यमिथःकथनेयोऽनुरागस्तेनैववैक्लव्यंवैवश्यंतेनवाष्पकलातयासहपुलकीकृतमंगंयेषांयद्वानःउपरीतिव्रजंतांवि

१५
भा०तृ०
५६

तत्र दाः पूर्वं विकुंठं अथो अनंतरमुपेत्य मुनयः परामुत्कृष्टां मुदमापुः अपूर्वत्वे हेतवः विश्वगुरुणा हरिणा अधिकृतं अधिष्ठितं भुवनानामेकमेववंद्यं दिव्यमलौकिकं विचित्राणि विबुधाग्र्याणां विमानानि तेषां शोचिर्दीप्तिर्यस्मिन् योगमायाबलेनेति अष्टांगयोगप्रभावेनोपेत्य परमेश्वरे तु योगमायेति चिच्छक्तिविलास इति द्रष्टव्यं २६ तस्मिन् वैकुंठे षट् कक्षाः प्राकारद्वाराणि असज्जमानाः भगवद्दर्शनोत्कंठया तत्र तद्‍द्भुतदर्शने आसक्तिमकुर्वाणाः द्वारपालौ देवावपश्यन्

तद्विश्वगुर्वधिकृतं भुवनैकवंद्यं दिव्यं विचित्रविबुधाग्र्य[वि]मानशोचिः आपुः परां मुदमपूर्वमुपेत्य योगमायाबलेन मुनयस्तदथो विकुंठम् २६ तस्मिन्नतीत्य मुनयः षडसज्जमानाः कक्षाः समानवयसावथ सप्तमायाम् देवावचक्षत गृहीतगदौ परार्द्ध्यकेयूरकुंडलकिरीटविटंकवेषौ २७ मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तयाऽसितचतुष्टयबाहुमध्ये वक्त्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां रक्तेक्षणेन च मनाग्रभसं दधानौ २८ द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथा पुरटवज्रकपाटिकायाः॥ ६॥

समानं वयो ययोः गृहीते गदे याभ्यां परार्द्ध्यैः केयूरादिभिः विटंकः सुंदरो वेषो ययोः २७ तावेव वर्णयति मत्तद्विरेफायस्या तया वनमालया निवीतौ कंठलंबिन्या अलंकृतौ असिताः नीलाः चतुष्टयं चतुःसंख्याकाः बाहवस्तेषां मध्ये विन्यस्तया वक्त्रं च मनाग्रभसं किंचित्क्षुब्धं दधानौ स्फुटौ उत्फुल्लौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्यां २८ एतयोर्मिषतोः पश्यतोः तावनादृत्यापृष्ट्वैव याः पूर्वाः षट् कक्षाः द्वाराणि पुरटालंकृतवज्रमय्यः कपाटिका यासु ताः यथा विविशुः तथा स

राम
५६

सर्वत्रये अविहता अनिवारिताः संचरंतिनिःशंकत्वेहेतुः अविषमयाचस्वदृष्ट्येति २९ वातरशनानूनग्नान् वृद्धानपिपंचवर्ष
वालकवत्प्रतीयमानान् चकारादाज्ञयाच अस्खलयतोनिवारितवंतौ न तत्स्खलनमर्हंतीतितथातान् अहो अत्रापि
धार्ष्ट्यमित्येवंतेषांतेजोविहस्यभगवतोब्रह्मण्यदेवस्यप्रतिकूलंशीलंययोः ३० हरेर्द्वारपालपतिभ्यांदेवेषुपश्यत्सुवा
र्यमाणास्तेमुनयः कोवांइत्यादिश्लोकत्रयीमूचुः सुहृत्तमः श्रीहरिः तस्यदिदृक्षितंदर्शनेच्छातस्यभंगेसतिकामस्यानुजः

सर्वत्रतेऽविषमयामुनयःस्वदृष्ट्याविश्वंचरंतःविहताविगताभिशंकाः २९ तान्वीक्ष्यवात
रशनांश्चतुरःकुमारान्वृद्धान्दशार्द्धवयसोविदितात्मतत्वान् वेत्रेणचास्खलयतामतद
र्हणांस्तौतेजोविहस्यभगवत्प्रतिकूलशीलौ ३० ताभ्यांमिषत्स्वनिमिषेषुनिषिध्यमानाःस्वर्ह
त्तमाह्यपिहरेःप्रतिहारपाभ्यां ऊचुःसुहृत्तमदिदृक्षितभंगईषत् कामानुजेनसहसात
उपप्लुताक्षाः ३१ मुनयऊचुःकोवामिहैत्यभगवत्परिचर्ययोच्चैस्तद्धर्मिणांनिवसतांविष
मःस्वभावःतस्मिन्प्रशांतपुरुषेगतविग्रहेवांकोवात्मवत्कुहकयोःपरिशंकनीयः ३२ ॥ ॥

क्रोधेनसहसाऽकस्मादेवउपप्लुतानिक्षुभितान्यक्षीणियेषांते सुष्ठुपूज्यतमाअपीतिनिषेधानर्हत्वे क्रोधानर्हत्वेवाहेतुः ३१
उच्चैर्महत्याभगवत्परिचर्ययाएत्यप्राप्यइहवैकुंठेनिवसतांतद्धर्म्मिणाभवद्धर्म्मिणांसमदर्शिनांमध्येवांयुवयोरेवकोयंविषमःस्व
भावःकैश्चित्सेवेष्टव्यंकैश्चिन्नेत्येवंभूतः ननुस्वामिनोरक्षार्थंद्वारपालयोरेषःस्वभावोगुणएवेतिचेदतआहुः तस्मिन्निति कुह
कयोःकपटयोःआत्मवत्स्वदृष्टांतेनयथाआवांकपटौतथाऽन्योपिकश्चित्कपटःप्रवेक्ष्यतीतिअयंभावःनह्यत्रभगवद्भक्ते

भयशंकाबीजं च भेदः स च कस्याप्यस्मिन्नास्तीत्याहुः नहीति समस्तं विश्वं कुक्षौ यस्य यत्र यदा इह भगवति धीरा विद्वांसः आ
त्मनोंतरं भेदं न पश्यंति किं त्वस्मिन् परमात्मन्यात्मानमंतर्भूतं पश्यंति महाकाशे घटाकाशमिव तदा यथाऽन्यस्य राजादेः उ
दरभेदि उदरभेदयुक्तं भयं भवति तथाऽस्य श्रीहरेस्तादृग्भयं यतः येन कारणेन सुरवेषधारिणो युवयोर्विशेषेणोत्पादितं तन्नि
न किंचिदित्यर्थः ३३ तत्तस्मादमुष्य वैकुंठनाथस्य भृत्याभ्यां युवाभ्यां प्रकृष्टं भद्रमेव कर्तुं इहास्मिन्न पराधेयत् युक्तं तद्धीमहि

नह्यंतरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभसीव धीराः पश्यंति यत्र युव
योः सुरलिंगिनोः किं व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ३३ तद्वाममुष्य परमस्य विकुंठ
भर्तुः कर्तुं प्रकृष्टमिह धीमहि मंदधीभ्यां लोकानितो व्रजतमंतरभावदृष्ट्या पापीय
सस्त्रय इमे रिपवोऽस्य यत्र ३४ तेषामितीरितमुभाववधार्य घोरं तं ब्रह्मदंडमनिवार
णमस्त्रपूगैः सद्यो हरेरनुचरावुरु बिभ्यतस्तत्पादग्रहावपततामतिकातरेण ३५ भूयाद
घोनि भगवद्भिरकारि दंडो यो नौ हरेत सुरहेलनमप्यशेषं ॥ (( मिति यमतदेवाहुः अंतरस्य भेदस्य भावः
सत्ता तद्दर्शनेन इतः वैकुंठलोकात् व्रजतं यत्र येषु लोकेषु अस्य पापीयसोंऽतरद्रष्टुः इमे कामः क्रोधस्तथा लोभ इति त्रयो
ता कामाद्यो रिपवो भवंति इतो वैकुंठात् पापीयसः लोकानिति वा ३४ इति तेषामीरितं भाषणं घोरमवधार्य तं च ब्रह्मदंडं ब्र
ह्मशापमवधार्य तं चास्त्रसमूहैरप्यनिवार्यमवधार्य हरेरनुचरौ अतिकातरेण अतिकातर्येण भयेन तत्पादग्रहणं कुर्वंतो
संतो दंडवत् पतनतां कथंभूतस्य हरेः एवंभूतेभ्यो मुनिभ्यः ताभ्यामपि उरु अधिकं बिभ्यतः भयं भावयतः ३५ अहो अपराद्धम

अघोनि अद्यवर्तिय उचितो दंडः सएव भगवद्भिरकारि नात्र भवतामपराधः कश्चित् अतोसौ नौ आवयोः भूयात् यः अशे षमपि सुरहेलनं ईश्वराज्ञातिक्रमरूपं पापं हरेत् किंतु युष्माकं यः कृपानिमित्तोऽनुतापः तस्य लेशेन नौ अधोऽधो मृ यो नीर्व्रजतोरपि भगवत्स्मृतिप्रतिघातको मोहो न भवेत् किंतु मोहोपि स्मृतिमेव प्रवहतादिति प्रार्थना ३६ एवं स्वानां महत्सु अतिक्रममपराधं तत् क्षणमेव विबुध्य तस्मिन् यत्र ते रुद्धास्तं देशं ययौ आर्याणां हृद्यः मनोज्ञः चरणौ चलयन् त्रिति अयंभावः मच्चरणदर्शनप्रतिघातजं क्रोधं नोदर्शयन् शमयिष्यामीति तत्सखीव्याजेन पद्भ्यामेव ययौ श्रीसाहित्यं च

मावोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽधः ३६ एवं तदेव भगवानरविंदनाभः स्वानां विबुध्य सदतिक्रममार्यहृद्यः तस्मिन्ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सहश्रीः ३७ तं त्वागतं प्रतिहृतौपयिकं स्वपुंभिस्तेऽचक्षताक्षविषयं स्वसमाधिभाग्यं हंसश्रियोर्व्यजनयोः शिववायुलोलत्शुभ्रातपत्रशशिकेसरशीकरांबुम् ३८ ॥ ८८ निष्कामानामपि विभूतिभिः पूरयित्वा क्षमापयितुं ३७

तत्र तैर्दृष्टं देवमनुवर्णयति पंचभिः तं तु आगतं ते अचक्षत अपश्यन् आ पंचमादिदमेव क्रियापदं स्वपुंभिः श्रीप्रमुखैः प्रति हृतं आनीतं औपयिकं गमनोचितं छत्रपादुकादियस्य कथंभूतं स्वसमाधिना भाग्यं भजनीयं फलं यद्ब्रह्म तदेवा क्षविषयं हंसवत् श्रीर्ययोस्तयोरुभयतश्चलतोर्व्यजनयोर्यः शिवोऽनुकूलो वायुस्तेन लोलंत श्चलंतः शुभ्रातपत्रं शशिकेसराः शुभ्रं यदातपत्रं तदेव शशिसादृश्याच्छशी तस्य केसराः मुक्ताहारविलंबाः तेभ्यो गलंति शीकरांबूनि यस्मि

भा॰ त॰
५८

कृत्स्नस्य द्वारपालमुनिवृंदस्य प्रसादे सुमुखं स्पृहणीयानां गुणानां धामस्थानं स्नेहावलोककलया सप्रेमकटाक्षेण हृ
दि संस्पृशंतं सुखयंतं त्रैलोक्यविवक्षापक्षे सत्यलोकपर्यंतः स्वर्गस्तस्य चूडामणिवत् स्थितं स्वधिष्ण्यं वैकुंठं सुभगयंतं शो
भयंतं ३९ पृथुर्नितंबः आश्रयत्वेन विद्यते यस्य तस्मिन् पीतांशुके अलिभिर्नादित यावनमालया च युक्तं सुभगयंतं
मिति पूर्वेणैव वा संबंधः वल्गुषु प्रकोष्ठेषु वलयानि यस्य गरुडस्य स्कंधे विन्यस्त एको हस्तो येन इतरेणान्येन अब्जं ली

कृत्स्नप्रसादसुमुखं स्पृहणीयधाम स्नेहावलोककलया हृदि संस्पृशंतं श्यामे पृथावुर
सि शोभितया श्रिया स्वश्चूडामणिं सुभगयंतमिवात्मधिष्ण्यम् ३९ पीतांशुके पृथुनितं
बिनि विस्फुरंत्या कांच्यालिभिर्विरुतया वनमालया च वल्गुप्रकोष्ठवलयं विनतासु
तांसे विन्यस्तहस्तमितरेण धुनानमब्जम् ४० विद्युत्क्षिपन्मकरकुंडलमंडनार्हगंडस्था
लोन्नसमुखं मणिमत्किरीटं दोर्दंडखंडविवरे हरता परार्ध्यहारेण कंधरगतेन च कौस्तु
भेन ४१ अत्रोपसृष्टमिति चोत्स्मितमिंदिरायाः स्वानां धिया विरचितं बहुसौष्टवाढ्यं ॥

लाकमलं धुनानं भ्रामयंतं विन्यस्येति पाठे च वल्गु इत्यादि हस्तस्य विशेषणं ४० स्वकांत्या विद्युतः क्षिपंती ये मकरा
कारे कुंडले तयोर्मंडनस्य अर्हे गंडस्थले यस्मिन् तच्च तदुन्नसं च मुखं यस्य मणियुक्तं किरीटं यस्य दोर्दंडानां खंडं समू
हः तस्य विवरे मध्ये स्थितेन हरता मनोहरेण विहरतेति वा परार्ध्य उत्कृष्टः तेन हारेण कंधरायां स्थितेन ४१ किं बहु
ना इंदिरायाः उत्स्मितं अहमेव सर्वसौंदर्यनिधिरित्यहंकरणं अत्र भगवत्सौंदर्ये उपसृष्टं अस्तंगतमिति स्वानां भ॰

एमः
५८

त्मनां धिया विरचितं भूत्यैः स्वमनस्येवं वितर्कितमित्यर्थः कुतः वहुसौष्टवेन सौंदर्येण आढ्यं युक्तं किंच मह्यं मम भवस्ये
श्वरस्य भवतां च हितं अंगं भजंतं मूर्तिं प्रकटयंतं अचक्षत निरीक्ष्य चकैः शिरोभिर्मुदा नेमुः नेमश्च कुः न विशेषेण तृप्ता दृशो
नेत्राणि येषां ते ४२ स्वरूपानंदादपि तेषां भजनानंदाधिक्यमाह तस्य पादारविंद किंजल्कैः केसरैः मिश्राया तुलसी त
स्या मकरंदेन युक्तो वायुः स्वविवरेण नासाविवरेण अक्षरजुषां ब्रह्मानंदसेविनामपि संक्षोभं चित्ते तिहर्षेत नौ रोमांचं

महां भवस्य भवतां च भजंतमंगं नेमुर्निरीक्ष्य न वितृप्त दृशो मुदा कैः ४२ तस्यारविंदनयन
स्य पदारविंद किंजल्क मिश्र तुलसी मकरंद वायुः अंतर्गतः स्वविवरेण चकार तेषां संक्षो
भमक्षरजुषामपि चित्ततन्वोः ४३ ते वा अमुष्य वदनासितपद्मकोशमुद्वीक्ष्य सुंदरतराध
रकुंदहासम् लब्धाशिषः पुनरवेक्ष्य तदीयमंघ्रिद्वंद्वं नखारुणमणिश्रयणं निदध्युः ४४
पुंसां गतिं मृगयतामिह योगमार्गैर्ध्यानास्पदं बहुमतं नयनाभिरामं पौंस्नं वपुर्दर्शयानम
नन्यसिद्धैरौत्पत्तिकैः समगृणन्युतमष्टभोगैः ४५ ॥ ९९ ४३ हर्षं कारितं संभ्रममाह द्वाभ्यां ते वै किल अमुष्य
वदनमेवासितपद्मस्य कोशोऽन्तर्भागस्तं असितपद्मकोशमित्यभूतोपमा सुंदरतरे अरुणे अधरोष्ठे कुंदवद्धासो यस्मिन् त
म् उत ऊर्ध्वं वीक्ष्य लब्धमनोरथाः संतः नखा एव अरुणमणयस्तेषां श्रयणं आश्रयभूतमंघ्रिद्वंद्वं पुनरवेक्ष्य अधोदृष्ट्या दृष्ट्वा
पुनःपुनरेवं निरीक्ष्य युगपत्सर्वांगलावण्यग्रहणाशक्तेः पश्चान्निदध्युर्ध्यातवंतः ४४ योगमार्गैर्गतिं मृगयतां पुंसां ध्यानस्य वि
षयभूतं बहुमतं अत्यादरास्पदं बहूनां तत्वदृशां संमतमिति वा पौंस्नं पौरुषं वपुर्दर्शयंतं अनन्यैर्वासिद्धैरसाधारणैः औत्पत्तिकैर्नि

१५
भा०टी०
४६

नित्यं ब्रह्मरूपेण प्रकाशेन न तच्चित्रं इदानीं तु परममंगलविशुद्धसत्वश्रीमूर्त्त्या प्रत्यक्षोऽसि अहो भाग्यमस्माकमित्याहुः हे अनंत न
यस्त्वं हृद्गतोपि दुरात्मनामंतर्हितो न स्फुरसि स नोऽस्माकं अंतर्हितो न भवसि नयनमूलं त्वं येव राद्धः प्राप्तोसि अंतर्ह्रो नाभावे हे
तु भवतः सकाशाद् उद्भवो यस्य तेनास्मत्पित्रा यद्यपि हृदये एव अनुवर्णितरहा उपदिष्टरहस्यः तदैव नः कर्णमार्गेण गुहां बुद्धिं गतः
प्राप्तोऽसीति ४६ ननु पित्रोपदिष्टं भवतामन्यादृशमदृश्यमात्मतत्त्वं अहं त्वन्य एव दृश्यत्वात् नैवं अस्मत्प्रत्यभिज्ञ

श्रीकुमारा ऊचुः योऽन्तर्हितो हृदि गतोपि दुरात्मनां त्वं सोऽद्यैव नो नयनमूलमनंत राद्धः यर्ह्येव कर्णविवरेण गुहां गतो नः पित्राऽनुवर्णितरहा भवदुद्भवेन ४६ तं त्वां विदाम भगवन्परमात्मतत्त्वं सत्त्वेन संप्रति रतिं रचयंतमेषां यत्तेऽनुतापविदितैर्दृढभक्तियोगैरुद्ग्रंथयो हृदि विदुर्मुनयो विरागाः ४७ नात्यंतिकं विगणयंत्यपि ते प्रसादं किं त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते येऽंग त्वदंघ्रिशरणा भवतः कथायाः कीर्त्तन्यतीर्थयशसः कुशला रसज्ञाः ४८ ॥ ९ यामेद निरासादि

त्याहुः तमिति हे भगवन् आत्मतत्त्वमेव परं तं त्वां विदाम विद्मः प्रत्यभिजानीमः ननु निरुपाधेरात्मतत्त्वस्य कथमीदृशा
मैश्वर्यं स्यात् अत आहुः सत्वेन विशुद्धसत्वमूर्त्या एषां भक्तानां सम्यक् प्रतिक्षणं संप्रति रतिः प्रीतिः तां रचयंतं आत्मतत्त्वमेवाहुः
तेऽनुतापः कृपा तेन विदितैः ज्ञातैः दृढैर्भक्तियोगैः श्रवणादिभिर्मुनयो हृदि यद्विदुः कीदृशा उद्ग्रंथयो निरहंमानाः अत एव
विगतरागाः ४७ स्वयमपि भक्तिं प्रार्थयितुं भक्तानां सुखातिशयमाहुः आत्यंतिकं मोक्षाख्यमपि तव प्रसादं ते न गणयंति +
नाद्रियंते किंतु किमुत अन्यत् इंद्रादिपदं ते भ्रुव उन्नयैः उत्जृंभैः अर्पितं निहितं भयं यस्मिन् तत् तत्ते के अंग हे भगवन् ये भवतः

इदानीं स्वीयापराधं द्योतयंतो भक्तिं प्रार्थयंते काममिति हे भगवन्नितः पूर्वमस्माकं वृजिनेन नाभवत् इदानीं सर्वाण्यपि जातानि यतस्त्वद्भक्तौ शप्तौ अतस्तैः स्ववृजिनैर्निरयेषु कामं नोऽस्माकं भवो जन्मास्तात् तु वितर्के यदि तु नश्चेतस्ते पदयो रमतां अलिर्यथा कंटकैरा विध्यमानोपि पुष्पेषु रमते तद्वत् विघ्नान विगणय्य यदि रमेत अङ्घ्र्योः शोभायासौ यथा च तुलसी स्वगुणनिरपेक्ष्येण त्वदंघ्रिसंबंधेनैव शोभते तथा यदि नो वाचः शोभेरन् यदि च ते गुणगणैरापूर्यंत कर्णरंध्रं इत्यल्पस्य पूरणमेव याचकरीत्या प्रार्थयंते अयं तु गूढोभिप्रायः कर्णरंध्रस्याकाशत्वात् गुणगणानां चामूर्तत्वात् न कदाचित्पूरणमतो

कामं भवः स्ववृजिनैर्निरयेषु नः स्ताच्चेतोऽलिवद्यदि नु ते पदयो रमेत वाचश्च नस्तुलसिवद्यदि तेंघ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरंध्रः ४९ प्रादुश्चकर्थ यदिदं पुरुहूत रूपं तेनेश निर्वृतिमवापुरलं दृशो नः तस्मा इदं भगवते नम इद्विधेम योनात्मनां दुरुदयो भगवान्प्रतीतः ५० इति श्रीभागवते महापुराणे तृतीयस्कंधे पंचदशोध्यायः १५ श्रीब्रह्मोवाच इति तद्गृणतां तेषां मुनीनां योगधर्मिणां प्रतिनंद्य जगादेदं विकुंठनिलयो विभुः १ ॥ नित्यमेव श्रवणं फलिष्यतीति ४९ अद्य वयं कृतार्थाः स्म इत्याहुः हे पुरुहूत विमलकीर्ते यदिदं प्रादुश्चकर्थ प्रकटितवानसि दृशो नेत्राणि अनात्मनां अजितेंद्रियाणां दुरुदयः अप्रकटितोपि इत्थं यः प्रतीतोसि तस्मै तुभ्यमिदं नमो विधेम ५० ॥ इति श्रीभागवते महापुराणे तृतीयस्कंधे टीकायां पंचदशोध्यायः १५ हरिणा सांत्वितैर्विप्रैरनुतप्तैः सुषोडशे तयोरसुरभावे पित्रातोऽनुग्रह ईर्यते १ इति तद्गृणतां तेषां तद्वाक्यं प्रतिनंद्येदं जगाद एतावित्येकादशभिः १॥

२६

भा॰ तृ॰ ६०

यद्यस्मात् मां कदर्थीकृत्य तुच्छीकृत्य वहु यथा भवति तथा अतिक्रमं वः कृतवंतौ २ तस्मात्स एव दंडो ऽगीकृतः ३ हि यस्मात् ब्रह्म ब्राह्मणा एव मे परमं दैवतं तत्तस्मात् अद्य वः प्रसादयामि तव को ऽपराध इति चेत्तत्राहं तद्धीति मदीयैः पुंभिरसत्कृताः तिरस्कृता इति यत् तदात्मकृतमेव मन्ये ४ किं च ममैवैताभ्यां अनिष्टं कृतमित्याह यस्य स्वामिनो नामानि तस्य कीर्त्तिं आमयो ऽत्र श्वेतकुष्ठं ५ यस्य मे अमृतरूपे अमले यशसि श्रवणेनावगाहः प्रवेशः श्वपचमभिव्याप्य जगत्स

श्रीभगवानुवाच एतौ तौ पार्षदौ मह्यं जयो विजय एव च कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमं २ यस्त्वेतयोर्धृतो दंडो भवद्भिर्मामनुव्रतैः स एवानुमतो ऽस्माभिर्मुनयो देवहेलनात् ३ तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे तद्धीत्यात्मकृतं मन्ये यत्स्वपुंभिरसत्कृताः ४ यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि सो ऽसाधुवादस्तत्कीर्त्तिं हंति त्वचमिवामयः ५ यस्यामृतामलयशःश्रवणावगाहः सद्यः पुनाति जगदाश्वपचाद्विकुंठः सो ऽहं भवद्भ्य उपलब्धसुतीर्थकीर्त्तिश्छिंद्यां स्ववाहुमपि वः प्रतिकूलवृत्तिं ६ यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलं ॥

६ यस्तत्क्षणमेव पुनाति सो ऽहं विकुंठः भवद्भ्यो हेतुभूतेभ्यः उपलब्धा प्राप्ता सुशोभना तीर्थभूता कीर्त्तिर्येन सः स्ववाहुमप्यानीयं लोके ऽश्वरमपि हन्यां को ऽन्यस्य कथेत्यर्थः स्वगुणानुवर्णनं तु ब्राह्मणोत्कर्षार्थमेव ६ चरणपद्मयोः स्थितः पवित्रो रेणुर्यस्य अत एव क्षतो निरस्तः अखिलस्य लोकस्य मलो येन यद्वा चरणपद्मात् लब्धः पवित्रो रेणुर्यस्मिन्निति क्षतो ऽखिलो मलो यस्येति च विग्रहः प्रतिलब्धं प्राप्तं शीलं येन यथा सेवया

राम: ६०

तेगुणा मम अतएव श्रीर्मां न विजहाति प्रेक्षालवार्थं अवलोकनलेशार्थं इतरे ब्रह्मादयः तेषां वः प्रतिकूलवृत्तिं छिंद्यामि।
तिपूर्वेणैव संबंधः ७ किंच ब्राह्मणो ममैव श्रेष्ठं मुखं अतो युष्मदवज्ञया मम मुखतिरस्कार एव कृत इत्याह नाहमिति।
वितानेयज्ञेयजमानस्य हविश्चरुपुरोडाशादि हुतभुगग्निस्तेन मुखेन अदन् अश्नन्नपि तथा नाद्मि नाश्नामि यद्यथाश्नो
तनाक्षरता घृतेन प्लुतं विलोडितं पायसादि प्रतिग्रासं रसास्वादपूर्वकं चरतो भुंजानस्याज्ञानिनो ब्राह्मणस्य मुखतोऽ।
अश्नामि मयि समर्प्य तैः कर्म्मफलैः तुष्टस्य निष्कामस्येत्यर्थः ८ किंच येषां अमलमङ्घ्रिरजः अहं किरीटैर्बिभर्मि तान्

नश्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थ इतरे नियमान्वहंति ७ नाहं तथा।
द्मि यजमानहविर्विताने श्च्योतद्घृतप्लुतमदन् हुतभुङ्मुखेन यद्ब्राह्मणस्य मुखतश्चरतो
ऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्म्मपाकैः ८ येषां बिभर्म्यहमखंडविकुंठयोगमाया
विभूतिरमलाङ्घ्रिरजः किरीटैः विप्रांस्तु को न विषहेत यदर्हणांभः सद्यः पुनाति सह चं
द्रललामलोकान् ९ ये मे तनूर्द्विजवरान् दुहतीर्मदीया भूतान्यलब्धशरणानि च भे
दबुद्ध्या॥

विप्रान् अपकुर्वतोपि कोऽन्यो न विषहेत कथंभूतोहं अखंडा अनवच्छिन्ना विकुंठा अप्रतिहता
च योगमायाविलासभूता विभूतिर्यस्य सः तथा यस्य मम अर्हणांभः पादोदकं चंद्रललामेन ईश्वरेण सहितान् लोकान्
सद्यः पुनाति एवं परमेश्वरः परमपावनोपि सन्नहं बिभर्मीति ९ किंच मे तनूः अधिष्ठानानि कास्ताः द्विजवरान् दुह
तीर्दीग्ध्रीर्गा इत्यर्थः दुहित्रॄरिति पाठे गाव एव विसुरूपात सूर्यादुत्पन्नत्वात सूर्यसुता अगाव इति वचनात अलब्ध

शरणानिरक्षकहीनानिभेदवुद्यामदधिष्ठानंनभवंतीति एथगृहस्थायेद्रक्ष्यंति अघेनक्षतानष्टादृष्टिर्येषांतान्मदी योधिकृतोदंडनेतायोयमः तस्यगृध्राकारायेदूताः अहिवन्मन्युर्येषांतेरुषाक्रोधेनकुर्वंतिचंचुभिर्श्छिंदंति १० एवं भूतास्तुमांवशीकुर्वंतीत्याह येक्षिपतः परुषंभाषमाणानपिविप्रान्ब्राह्मणान्संबोधयंति मयियाधीस्तयावासुदेवदृष्ट्या अर्चयंतः संतः तुष्यद्धृदःप्रीयमाणचित्ताः स्मितमेवसुधातयाउक्षितंपद्मतुल्यंवक्त्रंयेषां अनुरागकलयाप्रेमशोभ।

द्रक्ष्यंत्यघक्षतदृशोह्यहिमन्यवस्तान्गृध्राःरुषाममकुर्वंत्यधिदंडनेतुः १० येब्रा ह्मणान्मयिधियाक्षिपतोऽर्चयंतस्तुष्यद्धृदःस्मितसुधोक्षितपद्मवक्त्राः वाण्याऽनुरा गकलयात्मजवद्गृणंतः संबोधयंत्यहमिवाहमुपाहृतस्तैः ११ तन्मेस्वभर्तुरवसायम लक्षमाणौयुष्मद्व्यतिक्रमगतिंप्रतिपद्यसद्यः भूयोममांतिकमितांतदनुग्रहोमेय त्कल्पतामचिरतोभृतयोर्विवासः १२ ब्रह्मोवाच अथतस्योशतींदेवीमृषिकुल्यांस रस्वतीं॥ ११ यावाचागृणंतः स्तुवंतः यथाकुपितमात्मजंस्निग्धःपितासत्पुत्रोवापितरं अहमिवभृगुंयुष्मान्वातै रहमुपाहृतोवशीकृतः १२ तन्नस्मात्मेवसायमभिप्रायंअलक्षमाणौअजानंतौयुष्मदपराधोचितांगतिंसद्यः प्राप्य मत्समीपंरतांप्राप्नुवतांतदितिसःमेऽनुग्रहः तमेवाहयतभृतयोर्विवासः अचिरतःशीघ्रंकल्पतांसंपद्यतांसमाप्यतां मिति १३ उशतींकमनीयांप्रियांदेवींद्योतमानां ऋषिकुल्यां ऋषयोमंत्राःतद्रूपांतत्प्रवाहरूपां ऋषिकुलयोग्यामि तिवासरस्वतींवाचं आस्वाद्यतन्मांधुर्यमनुभूयसर्पप्रायेणमन्युनादष्टानामपिक्रोधविषव्याप्तानांहिमनोरसानुभ

वाभावात् प्रियभाषणमपि न सहते तेषां तु आत्मा मनः नातृप्यत् अलमिति नामन्यत १३ सतीं श्रेष्ठां व्यादाय प्रसार्य कर्णं दत्त्वेत्यर्थः लघ्वीं मिताक्षरां गुरुभिरर्थैर्गह्वरां दुष्प्रवेशां अगाधां अभिप्रायतः गंभीरामर्थतः विगाह्य विचार्यापि किमस्मान् अभिनंदति निंदति वा अस्मत्कृतं दंडं वा संकोचयतीति न विदुः १४ ततश्चाभिनंदतीति ज्ञात्वा ते प्रहृष्टाः संतः प्राचुः क्षुभिता रोमांचिता त्वग्येषां कूपिनेति पाठे संजातरोमकूपोक्त्या रोमांचितत्वमेवोक्तं आरब्धः आविष्कृतः पारमेष्ठ्य

नास्वाद्य मन्युदष्टानां तेषामात्माऽप्यतृप्यत १३ सतीं व्यादाय शृण्वंतो लघ्वीं गुर्वर्थगह्वराम् विगाह्यागाधगंभीरां न विदुस्तच्चिकीर्षितम् १४ ते योगमाययारब्धपारमेष्ठ्यमहोदयं प्रोचुः प्रांजलयो विप्राः प्रहृष्टाः क्षुभितत्वचः १५ ऋषय ऊचुः न वयं भगवन्विद्मस्तव देव चिकीर्षितं कृतो मेनुग्रहश्चेति यदध्यक्षः प्रभाषसे १६ ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो विप्राणां देवदेवानां भगवानात्मदैवतं १७ त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव॥

॥ स्य परमैश्वर्यस्य महोदयः परमोत्कर्षो येन तं अधिराजत्वमाविष्कृत्य राजशिक्षार्थं ब्राह्मणान्मानयतीति ज्ञात्वेत्यर्थः १५ अध्यक्षः सर्वेश्वरः सन् तद्धीन्यात्मकृतं मम्य इति ऽत्रामया ऽपराधः कृत इति तथा त्वदनुग्रहो मे इत्यादिवचनेन ममानुग्रहश्चेति यत्प्रभाषसे तेन यच्चिकीर्षितं तन्न विद्मः १६ किलेति लोकशिक्षार्थं सूचितं परमार्थमाहुः विप्राणामिति देवदेवानां देववत् पूज्यानामपि भवान् त्वं आत्मा च दैवतं च १७ लोकशिक्षार्थं तां प्रपंच त्वत्त इत्यष्टभिः धर्मस्त्वत्त एव भवति रक्ष्यते च त्वदवतारैः परमः फलरूपः अत एव गुह्यः गोप्यः न च स्वर्गा

भा॰ तृ॰
२२

दिफलवद्विकारी किंतु निर्विकारो मतः अत एवंभूतस्य तवेदं लोकशिक्षामात्रमिति भावः १८ विपरीतं चेदमित्याहुः
तरंतीति यस्यानुग्रहाद्देवनिवृत्ताः विरक्ताः योगिनश्च संतो मृत्युं तरंति स भवान् परैरनुगृह्यते इति किंस्वित् न किंचि
दित्यर्थः १९ यच्चोक्तं यत्ते त्वया चरणपद्मपवित्ररेणुसद्यः क्षताखिलमलं प्रतिलब्धशीलमित्यादि तदत्यंतमसंभावि
तमित्याहुः द्वाभ्यां यं वै विभूतिर्लक्ष्मीः अनुवेलं अवसरे उपयाति सेवते धृतः पादरेणुर्यस्याः धन्यैः सुकृतिभिरर्पित
मंघ्रौ यत्तुलस्या नवं दाम माला तद्धाम स्थानं यस्य तस्य मधुव्रतपतेः भ्रमरमुख्यस्य लोकं स्थानं मंघ्रिं कामयमानेव २०

धर्मस्य परमो गुह्यो निर्विकल्पो भवान्मतः १८ तरंति ह्यंजसा मृत्युं निवृत्ता यदनुग्रहा
त् योगिनः स भवान् किंस्विदनुगृह्येत यत्परैः १९ यं वै विभूतिरुपयात्यनुवेलमा
न्यैरर्थार्थिभिः स्वशिरसा धृतपादरेणुः धन्यार्पितांघ्रितुलसीनवदामधाम्नो लोकं म
धुव्रतपतेरिव कामयाना २० यस्तां विविक्तचरितैरनुवर्तमानां नात्याद्रियत्परमभा

विविक्तचरितैः विशुद्धैः परिचरणैः अनुवर्तमानां सेवमानामपि यो नात्याद्रियत् नातीवाद्रितवान् भागवतप्रसंगः
न स एवंभूतः त्वं अयं भावः इत्थं नाम अतिलंपटतया लक्ष्मीस्त्वां सेवते कथं एवं हि सा मेने अयं हि सारग्राही मधुव्रतः चं
चलश्च स चाङ्घ्रिगतायां तुलस्यां सपरिवारो निश्चलः सन् रमते अतोंघ्रिलावण्यमत्यधिकं स्यात् ततोऽहं वक्षसि स्थिता
पि योगिजनादिबहुसेवकसंघर्षमंगीकृत्यापि तुलस्या सह सापत्न्येनापि चरणौ सेविष्यामीति तदेवमत्यौत्सुक्येनानुव
र्तमानां अपि तां त्वं नातीवाद्रियसे यतः परमभागवतेष्वेव प्रकृष्टसंगवान् स एवं परमसौभाग्यनिधिस्त्वं अतो ब्राह्मणा

भागवतप्रसंगः

॥२०॥ [illegible]

प्रसादात् मां श्रीर्न विजहातीत्यलभ्यलाभत्वेन निर्देशो न समंजस इति किंच त्वत एव त्वं भगभाजनः भजनीयानां गुणानामाश्र
यः परमशुद्धस्य तत्त्वो द्विजानामनुपथं पथिपथि लग्नं यत्पुण्यं रजः तथा श्रीवत्सलक्ष्म च किं पुनीतः पवित्रीकृतः किं किम
र्थं चैतद्भेऽगाः प्राप्तः भूषणत्वेन स्वीकृतवानसि अतो यत्सेवया चरणपद्मपवित्ररेणुमित्यादिवचनं श्लोकसंग्रहमात्रमि
त्यर्थः २१ धर्ममूर्तेस्तव तवेदमुचितमेवेत्याहुः धर्मस्येति त्रिभिः त्रिष्वेव युगेष्वाविर्भवतीति त्रियुगः यद्वा त्रीणि युगला॥
नि त्रियुगाः षड्गुणाः भगवच्छब्दवाच्याः। उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिं वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति

मत्वं द्विजानुपथपुण्यरजःपुनीतः श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वम् २१ धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः पद्भिश्चराचरमिदं द्विजदेवतार्थे नूनं भृतं तदभिघाति रजस्तमश्च सत्त्वेन नो वरदया तनुवा निरस्य २२ न त्वं द्विजोत्तमकुलं यदि हात्मगोपं गोप्ता वृषः स्वर्हणेन ससूनृतेन तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणं २३

सत्यस्येति त्रियुगः हे त्रियुग धर्मरूपस्य तव त्रिभिः पद्भिः स्वैरसाधारणैः तपःशौचदयादिभिः सत्यस्य धर्मे विप्लवेऽपि कलावनुवर्त्त
मानत्वात् त्रिभिरित्युक्तं भृतं पालितं किं कृत्वा नोऽस्माकं वरदया सत्त्वेन तनुवा तन्वा सत्त्वमूर्त्या तदभिघाति तेषां पादानामभिघा
तकं रजश्च तमश्च निरस्य निराकृत्य द्विजानां देवतानां च प्रयोजनाय नूनं भृतं यद्वा हि लोपे रूपं निरस्येति अस्माकं तन्निवर्त्तये
त्यर्थः २२ आत्मगोपं त्वयैव रक्षणीयं द्विजोत्तमानां कुलं यदि ह स्म [illegible] गोप्ता न रक्षिता तत् न प्रत्ययान्तत्वात् न षष्ठीप्रयोगः वृ
षः श्रेष्ठः हे देव पन्था वेदमार्गो नंक्ष्यति नाशं यास्यति ऋषभस्य श्रेष्ठस्य हि यस्मात् तत् अनर्हणं असूनृतं च अग्रहीष्यत् तदुक्तं

नश्यत्विति चेत्तत्राहुः तत् वेदमार्गनाशनं इवेति लोकोक्तिः सत्वनिधित्वात् जनाय क्षेमं शं त्वं विधातुमिच्छोः अत एव निज
शक्तिभिः राजादिभिरुत्पाटितधर्मप्रतिपक्षस्य अतस्तव ब्रह्मकुले ऽवनतिर्युक्तैव ननु महतो ऽन्येष्ववनतिस्तेजो हा
निकरी तत्राहुः एतावता तु धर्मत्राणप्रयोजनेन अवनतस्य नम्रस्य भवतस्तव तेजःप्रभावः नष्टं तं न क्षीणं यतः सः
नमनादिस्ते विनोदः २४ पापाग्रहं परित्यज्य विज्ञापयंति यं ऽन्यं दंडं विधास्यति भवान् हत्तिं नु अधिकजीविकां

तत्ते ऽनभीष्टमिव सत्वनिधेर्विधित्सोः क्षेमं जनाय निजशक्तिभिरुद्धृतारेः नैतावता त्र्य
धिपतेर्वत विश्वभर्तुस्तेजः क्षतं त्ववनतस्य सते विनोदः २४ यं वा ऽनयोर्दममधीश भवा
न्विधत्ते वृत्तिं नु वा तदनुमन्महि निर्व्यलीकं अस्मासु वा य उचितो ध्रियतां स दंडो ये ऽ
नागसौ वयमयुंक्ष्महि किल्बिषेण २५ श्रीभगवानुवाच एतौ सुरेतरगतिं प्रतिपद्य सद्यः
संरंभसंभृतसमाध्यनुबद्धयोगौ भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव निमि
तस्तदवेत विप्राः २६ ब्रह्मोवाच अथ ते मुनयो दृष्ट्वा नयनानंदभाजनं॥ ॥

वा तत्सर्वमनुमन्यामहे ये वयं निरपराधावेतौ किल्बिषेन शापेन युक्ष्महि योजितवंतः २५ मत्कारितत्वाच्छापा
स्य युष्माकं नापराध इत्याश्वासयन्नाह एतौ सद्य एवासुरयोनिं प्राप्य भूयो ऽप्याशु मत्समीपमागमिष्यतः संरंभेण क्रो
धावेशेन संभृतः संवृद्धो यः समाधिः एकाग्रता तेनानुबद्धो दृढीकृतो योगो ययोः हे विप्राः यो वः शापः युष्मत्कृतः शापः
तदिति समयैव निमित्तः निर्मित इत्यवेत जानीत २६ नेत्रोत्सवजनकं विकुंठं हरिं तन्निवासं च वैकुंठं लोकं स्वयंप्र

भं प्रकाशं प्रकाशां नरान पेक्षं सत्वपरिणामत्वात् २७ अनुमान्य अनुज्ञाप्य २८ ममैव तु मतं संमतं इदमत्र तत्वं यद्य
पि सनकादीनां क्रोधो न संभवति न च भगवत्पार्षदयोर्ब्राह्मणप्रातिकूल्यं न च भगवतः स्वभक्तोपेक्षा न च वैकुंठगतानां
पुनर्जन्म तथापि भगवतः सिसृक्षादिवत् कदाचित् युयुत्सा समजनि तदाऽन्येषामल्पबलत्वात् स्वपार्षदानां तुल्यबल
त्वेऽपि प्रातिपक्ष्यानुपपत्तेरेतावेव ब्राह्मणनिवारणे प्रवर्त्यं तेषु च क्रोधमुद्दीप्य तच्छापव्याजेन प्रतिपक्षौ विधाय युद्ध

वैकुंठं तदधिष्ठानं विकुंठं च स्वयंप्रभं २७ भगवंतं परिक्रम्य प्रणिपत्यानुमान्य च प्रति॥
जग्मुः प्रमुदिताः शंसंतो वैष्णवीं श्रियं २८ भगवाननुगावाह यातं माभैष्टमस्तु शं ब्रह्मते
जः समर्थोपि हंतुं नेच्छे मतं तु मे २९ मयि संरंभयोगेन निस्तीर्य ब्रह्महेलनम् प्रत्येष्यतं
निकाशं मे कालेनाल्पीयसा पुनः ३० द्वाःस्थावादिश्य भगवान् विमानश्रेणिभूषणं स
र्वातिशयया लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत् ३१ तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलो
कतः हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ ३२ तदा विकुंठधिषणात्तयोर्निपतमा

कौतुकं संपादनीयमिति भगवतैव व्यवसितं अतः सर्वसंग[illegible] तेनादिदमुक्तं शापो मय्येव निमित्त॥ नयोः॥
इति माभैष्टमिति अस्तु शमिति हंतुं नेच्छे मतं तु मइत्यादि [illegible] प्रत्येष्यतं प्रत्येष्यथः निकाशं समीपं ३० ३१
॥ दुस्तरात् ब्रह्मशापात् हरिलोकतः पततावितिशेषः हरिलोकत एव हतश्रियावभूतामिति वा विगतस्मयौ न
ष्टगर्वौ च ३२ विकुंठस्य धिषणात् ॥ ❀ ॥

१६

भा॰तृ॰ स्थानात् पुत्रकाः हे देवाः ३३ काश्यपं तेजो वीर्यं प्राप्तो सहैव गर्भं प्रविष्टौ यमौ ३४ तयोस्तेजसा वस्तेजः आक्षिप्तं तिरस्कृ-

६४ तं न चात्र प्रतिविधिः शक्यः यत एतर्हि इदानीं भगवानेव तदेवं विधातुमिच्छति ३५ तथापि कोप्युपायो विचार्यतामिति

चेत् तत्राह विश्वस्येति त्रयाणां गुणानामीशः स एव सत्वोत्कर्षशालिनः क्षेमं विधास्यति विमृशेन विमर्शेन ३६ इति श्री

हाहाकारो महानासीद्विमानाग्र्येषु पुत्रकाः ३३ तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः

दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणं ३४ तयोरसुरयोरद्य तेजसा यमयोर्हि वः आक्षि

प्तं तेज एतर्हि भगवांस्तद्विधित्सति ३५ विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो योगेश्वरैर

पि दुरत्यययोगमायः क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्तत्रास्मदीयविमृशेन कि

यानिहार्थः ३६ ॥ इति श्रीभागवते महापुराणे तृतीयस्कंधे षोडशोध्यायः १६ श्रीमैत्रे

य उवाच निशम्यात्मभुवा गीतं कारणं शंकयोज्झिताः ततः सर्वे न्यवर्त्तंत त्रिदिवाय दि

वौकसः १ दितिस्तु भर्त्तुरादेशादपत्यपरिशंकिनी पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे

भागवते महापुराणे तृतीयस्कंधे टीकायां षोडशोध्यायः १६ ततः सप्तदशे जन्म तयोर्लोकभ यमौ २॥

यंकरं हिरण्याक्षप्रभावश्च वर्ण्यते दिग्जयेऽद्भुतः १ क्षेमं विधास्यतीति ब्रह्मवचनानंतरं शंकया त्यक्ताः ॥

१ भर्त्तुरादेशात् लोकान्सपालांस्त्रीन् चंडि मुहुराक्रंदयिष्यत इति वाक्यात् स्वापत्याभ्यां परिशंकिनी देवोपद्रवं शंकमा

रामः

६४

तत्र तदा निपेतुः उद्भूतुः उरुभयं त्रासमंतात् वहंति ३ अचलैः सहिताः भुवः प्रदेशाः केनवश्चउदयं चक्रुरिति शेषः ४ फूत्का रानिति तीव्रवायुशब्दानुकरणे नगपतीन् महावृक्षान् वात्या एव अनीकं यस्य स एव ध्वजो यस्य ५ उच्चैर्हर्षं संत्पद्रवत डिंतो ये पुनः तेषां मंबुदानां घट्टया समूहेन नष्टो भागणः सूर्यादि प्रभा समूहो यस्मिन् पदं स्थानं नव्या दृश्यते सर्वं ईषदपि नाद ।

उत्पातावहवस्तत्र निपेतुर्जायमानयोः दिवि भुव्यन्तरिक्षे च लोकस्योरुभयावहाः ३

सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः सोल्काश्चाशनयः पेतुः केतवश्चार्तिहेतवः ४

ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन्मुहुः उन्मूलयन्नगपतीन्वात्यानीको रजोध्वजः

५ उद्धसत्तडिदम्भोदघट्टया नष्टभागणे व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदं ६ ॥

चुक्रोश विमना वार्धिरुदूर्मिः क्षुभितोदरः सोदपानाश्च सरितश्चुक्षुभुः शुष्कपंकजाः

७ मुहुः परिधयोऽभूवन् सराह्वोः शशिसूर्ययोः निर्घाता रथनिर्ह्रादा विवरेभ्यः प्रजज्ञि

रे ८ अंतर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणं शृगालोलूकटंकारैः प्रणेदुरशिवं शिवाः ९

श्यत ६ वार्द्धिः समुद्रः विमना इव उद्गत ऊर्मियो यस्मात् क्षुभितः उदरस्था मकरादयो यस्मिन् उदपानैर्वापीकूपा दिभिः सहिताः शुष्काणि पंकजानि यासु ७ परिधयः परिवेषाः सराह्वोः राहुग्रस्तयोः निर्घाताः निरभ्रगर्जि तानि रथनिर्ह्राद तुल्याः ध्वनयः विवरेभ्यः गिरिगुहाभ्यः ८ शृगालानामुलूकानां च टंकारैः ध्वनिभिः सह ९ ॥ ॥

ग्रामसिंहाः श्वानः १० कर्कशैस्तीक्ष्णैर्हेक्षतः खाकारोगर्दभजातिशब्दः तस्मिन् रभसः संभ्रमोयेषांवरूथशः संघ
शः ११ रासभशब्दात्त्रस्ताः रुदंतः सर्वतः २ क्रोशंतः १२ गावोऽत्रसन् त्रस्ताः अस्रग्दोहाश्चवभूवुः देवलिंगानिव्यरुदन् प्रतिमानां
अश्रुस्रावआसीदित्यर्थः १३ पुण्यतमान् गुरुबुधादीन् भ[...]न् बहूनि नक्षत्राणि च अन्ये क्रूरग्रहाः मंगलाद

संगीतवद्रोदनवदुन्नमय्यशिरोधरां व्यमुंचन्विविधावाचोग्रामसिंहास्ततस्ततः १० खराश्चकर्कशैःक्षत्तःखुरैर्घ्नंतोधरातलं खार्काररभसोन्मत्ताःपर्यधावन्वरूथशः ११ रुदंतोरासभत्रस्तानीडादुदपतन्खगाः गोष्ठेऽरण्येचपशवःशकृन्मूत्रमकुर्वत १२ गावोऽत्रसन्नसृग्दोहास्तोयदाःपूयवर्षिणः व्यरुदन्देवलिंगानिद्रुमाःपेतुर्विनाऽनिलं १३ ग्रहान्पुण्यतमानन्येभगणांश्चापिदीपिताः अतिचेरुर्वक्रगत्यायुयुधुश्चपरस्परं १४ दृष्ट्वाऽन्यांश्चमहोत्पातानतत्तत्त्वविदःप्रजाः ब्रह्मपुत्रानृतेभीतामेनिरेविश्वसंप्लवम् १५ तावादिदैत्यौसहसाव्यज्यमानात्मपौरुषौ ववृधातेऽश्मसारेणकायेनाद्रिपतीइव १६ दिविस्पृशौहेमकिरीटकोटिभिर्निरुद्धकाष्ठौस्फुरदंगदाभुजौ गांकंपयंतौचरणैःपदेपदेकट्यासुकांच्याऽर्कमतीत्यतस्थतुः १७

यः अतिचेरुः अतिक्रम्यजग्मुः वक्रगत्याप्रत्यावृत्यायुयुधुश्च १४ ब्रह्मपुत्रानृतेविनातेषांस्वशापादिज्ञानात् १५ व्यज्यमाने आत्मपौरुषेपूर्वंसिद्धस्वपौरुषंययोः १६ निरुद्धाव्याप्ताःकाष्ठादिशोयाभ्यांस्फुरंतंगदानियेषुतेभुजाययोःअंगदेतिटावंतत्वमार्षंशोभनाकांचीयस्यांतयाकट्या १७॥

राम
दृ० ५

यमयोर्मध्येयः स्वदेहात्प्रथममजायततंयथाहिरण्यकशिपुंविदुः सादितिः प्रथमं यं असूत तं हिरण्याक्षं यथाविदुः तथा नामकृतवानित्यर्थः अयंभावः यदाहिगर्भाधानसमये योनिपुष्पविशद्धौ वीर्यं द्विधानिभक्तं आदिपश्चाद्भावेनप्रविश तितदायमौ भवतः तयोश्चपितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिर्यदाविशेत् द्विधाभूतंबीजंपुष्पंपरिक्षरत् द्वौ तदाभवतोगर्भौसूतिर्वेशविपर्ययादितिपिंडसिद्धिस्मरणात् अतः स्वदेहात्पूर्वंयोजातस्तस्याहिरण्यकशिपुरि

प्रजापतिर्नामतयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत तंवैहिरण्यकशिपुंवि दुः प्रजायंतंहिरण्याक्षमसूतसाग्रतः १८ चक्रेहिरण्यकशिपुर्दोर्भ्यांब्रह्मवरेणच वशेसपालांल्लोकांस्त्रीन कुतोमृत्युरुद्धतः १९ हिरण्याक्षोऽनुजस्तस्यप्रियः प्रीतिकृदन्व हं गदापाणिर्दिवंयातोयुयुत्सुर्मृगयन्रणम् २० तंवीक्ष्यदुःसहजवंरणत्कांचननूपुरं वैजयंत्यास्रजाजुष्टमंसन्यस्तमहागदम् २१ मनोवीर्यवरोत्सिक्तमसृण्यमकुतोभयं भीतानिलिल्यिरेदेवातार्क्ष्यत्रस्ताइवाहयः २२ सवैतिरोहितान्दृष्ट्वामहसास्वेनदैत्यरा ट् सेंद्रान्देवगणान्क्षीबानपश्यन्व्यनदद्भृशम् २३॥ सुतिदितिः प्रथमंयमसूततस्यहिरण्या क्ष इतिनामकृतवानिति १८ दोर्भ्यामुद्धतः ब्रह्मवरेणाकुतोमृत्युः १९ रणंयुद्धं २० दुःसहोजवोवेगोयस्य रणं नौकांचनमयोनूपुरोयस्य अंसेन्यस्तामहतीगदायेन २१ मनसाशौर्येणवीर्येणबलेनवरेणचउत्सिक्तंगर्वितं असृण्यं निरंकुशंनिलिल्यिरेलीनावभूवुः २२ स्वेनमहसातेजसातिरोहितान्सदृष्ट्वाज्ञात्वाक्षीबान्मत्तान्अपश्यन्सन्क्षीबानितिपा

२४ सन्नाश्चवसन्नाधीर्येषांवर्चसातेजसाप्रधर्षिताअभिभूताःसंतः २५ महोर्मीन्अभिजघ्नेमौर्व्यामारयन्नीतिमौर्वेवेको
र्मायसेतन्मय्या यद्वा मूर्वानामतृणविशेषःतन्मयरज्वादृढनिवद्धसेत्यर्थः विभावरीसंज्ञांआसेदिवान्प्राप्तः २६ असु

ततोनिवृत्तःक्रीडिष्यन्गंभीरंभीमनिःस्वनं विजगाहेमहासत्वोवार्द्धिंमत्तइवद्विपः
२४ तस्मिन्प्रविष्टेवरुणस्यसैनिकायादोगणाःसन्नधियःससाध्वसाः अहन्यमानाअपित
स्यवर्चसाप्रधर्षितादूरतरंप्रदुद्रुवुः २५ सवर्षपूगानुदधौमहावलश्चरन्महोर्मीन्श्वस
नेरितान्मुहुः मौर्व्याऽभिजघ्नेगदयाविभावरीमासेदिवांस्तातपुरींप्रचेतसः २६ ता
त्रोपलभ्यासुरलोकपालकंयादोगणानामृषभंप्रचेतसं स्मयन्प्रलब्धुंप्रणिपत्यनी
चवत्जगादमेदेह्यधिराजसंयुगाम २७ त्वंलोकपालोऽधिपतिर्बृहच्छ्रवावीर्यापहोदु
र्मदवीरमानिनां विजित्यलोकेऽखिलदैत्यदानवान्यद्राजसूयेनपुराऽयजत्प्रभो २८
सएवमुत्सिक्तमदेनविद्विषादृढंप्रलब्धोभगवानपांपतिः रोषंसमुत्थंशमयन्स्वयाधि
याव्यवोचदंगोपशमंगतावयं २९ पश्यामिनान्यंपुरुषात्पुरातनाद्यःसंयुगेत्वांरणमा
र्गकोविदं आराधयिष्यत्यसुरर्षभेहितंमनस्विनोयंगृणतेभवादृशाः ३०॥ ९ राणांलोकःआता

लं तत्पालकंप्रलब्धुमुपहसितुंप्रणिपत्य २७ यद्यस्माद्राजसूयेनभवानयजत् २८ उपशमंयुद्धादिकौतुकादुपरमं २९

आरातशीघ्रं विस्मयः नष्टगर्वैः वीरशयेरणांगणे रूपाणि वराहाद्यवतारान् ३१ इति श्रीभागवते महापुराणे तृतीयस्कंधे टीकायां हिरण्याक्षदिग्विजयो नाम सप्तदशोध्यायः १७ अष्टादशे हिरण्याक्षघरोद्धर्तृवराहयोः निर्विशेषंमहायुद्धं देवसाभिनिरूप्यते १ प्रतियोद्धारं श्रुत्वा महामनाः शयिष्यस इति यदुक्तं तत् विगणय्य अगणित्वा यतो दुर्मदः १ अभितो जयतीत्यभिजित् तं श्रीहरिं प्रकर्षेणोर्द्ध्वं नीयमाना ऽवनिर्येन अग्रदंष्ट्रया दंष्ट्राग्रेण स्वरुचः हिरण्याक्षतेजां

तं वीरमारादभिपद्य विस्मयः शयिष्यसे वीरशये श्वभिर्वृतः यस्त्वद्विधानामसतां प्रशांतये रूपाणि धत्ते सदनुग्रहेच्छया ३१ ॥ इति श्रीभागवते महापुराणे तृतीयस्कंधे हिरण्याक्षदिग्विजयो नाम सप्तदशोध्यायः १७ श्रीमैत्रेय उवाच तदेवमाकर्ण्य जलेशभाषितं महामनास्तद्विगणय्य दुर्मदः हरेर्विदित्वा गतिमंग नारदाद्रसातलं निर्विविशे त्वरान्वितः १ ददर्श तत्राभिजितं धराधरं प्रोन्नीयमानावनिमग्रदंष्ट्रया मुष्णंतमक्ष्णा स्वरुचो ऽरुणश्रिया जहास चाहो वनगोचरो मृगः २ आहैनमेह्यज्ञ महीं विमुंच नो रसौकसां विश्वसृजेयमर्पिता ॥ ...सि अरुणश्रिया युक्तं यत् तेनाऽक्ष्णा नेत्रेण मुष्णंतं तिरस्कुर्वंतं अहो चित्रं वनगोचरो मृगः वारिचरो वराहः २ एहि आगच्छ रसौकसां पातालवासिनां नोऽस्माकं समर्पिता अन्यथा पातालावतरणमस्यानघटत इति भावः हिरण्याक्षेणाधिक्षेपार्थं प्रयुक्तापि भारती वस्तुतो भगवंतं स्तौति तथा हि वनगोचरो जले शयानः श्रीनारायणः मृग्यते दुष्टान् वा हंतुं मृगयत इति मृगः अज्ञो नास्ति ज्ञो यस्मात्सर्वज्ञ इत्यर्थः सुराः ॥

अधमायस्मात् हे सुरोत्तम मम मे क्षमाणस्यापि सतः मामनादृत्यापि त्वमनया सह वर्त्तमानो नः अस्मदीयं स्वस्ति समस्तं मंगलं राज्यं
यास्यसि प्राप्स्यसि नात्र संदेहः तथाप्यस्मत्कृपया विमुंचेत्यर्थः आसादिता लीलया स्वीकृता सूकराकृतिर्येन ३ अभवायना।
शाय भूतः पुष्टः वस्तुतस्तु मोक्षाय भूतो धृतः आश्रित इत्यर्थः यो भवान् परोक्षेण चौर्येण जयतीति तथा वस्तुतस्तु दूरत एव स्थि
त्वा जयतीति संस्थाप्य हत्वा वस्तुतस्तु योगमायारूपमचिंत्यं बलं यस्य अल्पपौरुषं बलं यस्मात् तं त्वां सम्पृक्तस्यापि पयित्वा भ।
त्वा हृदि स्थिरीकृत्येत्यर्थः हे मूढ प्रमूढा न प्राति आप्यायतीति तथा प्राप्रूतौ विति धातुः सुहृदां शुचः संसारदुःखानि मृजे

नस्वस्ति यास्यस्यऽनया ममेक्षतः सुराधमासादितसूकराकृते ३ त्वं नः सपत्नैरभवाय किं
भृतो यो मायया हंत्यसुरान्परोक्षजित् त्वायोगमायाबलमल्पपौरुषं संस्थाप्य मूढ प्रमृजे सुहृ
च्छुचः ४ त्वयि संस्थिते गदया शीर्णशीर्षण्यस्मद्भुजच्युतया ये च तुभ्यं बलिं हरंत्यृषयो ये।
च देवाः स्वयं सर्वे न भविष्यन्त्यमूलाः ५ स तुद्यमानोऽरिदुरुक्तितोमरैर्दंष्ट्राग्रगां गामुपलक्ष्य
भीतां तोदं मृषन्निरगादंबुमध्याद्ग्राहाहतः सकरेणुर्यथेभः ६॥ ५ नाशयामि यत् त्वं स्मर्त्तुं वीधवा।

नपि नो चयसीति भावः ४ अस्मद्भुजच्युतयापि गदया अशीर्णे शीर्षे यस्य तथाभूते त्वयि सुखं स्थिते सति ये तुभ्यं मधुना बलिं हरं
ति नवो नाम ऋषये च पूर्वं भक्ता ऋषयो देवाश्च ते सर्वे स्वयमेव उद्यमं विनैव अमूला न भविष्यंति किंतु दृढमूलाश्च भविष्यंतीत्यर्थः
५ महर्षिः अरेर्दुरुक्तान्येव तोमराः शस्त्रविशेषाः तैस्तुद्यमानो व्यथ्यमानः दंष्ट्राग्रगतां पृथ्वीं भीतामालक्ष्य तोदं दुरुक्तव्यथां मृ
षन् सहमान एव निर्गतः करेणुर्हस्तिनीव सुतस्तु अरिदुरुक्तितः अमरैर्निमित्तभूतैस्तुद्यमानः यथाश्रुतार्थग्राहिणां ब्रह्मा

सलिलान्निर्गच्छंतमनुगतः सन् हिरण्यवत्कपिशाः केशाः यस्य दैत्यस्य रूक्षोभकरः करालादंष्ट्रा यस्य अशनिवन्निःस्वनो यस्य निर्लज्जानामसतां किं विगर्हितमस्ति निंदाभयाभावात् पलायनं नायुक्तमित्यर्थः वस्तुतस्तु गतह्रियः प्राप्तह्रियः न संत्येये भ्यः तेषां कृपालूनां किं विगर्हितं न किंचित् अतः कृपालुत्वाद्दंष्ट्राश्रितभूरक्षार्थं किंचित्पलायनमपि निंदितमित्यर्थः यद्वा लोकोपकाराय भुवमुद्धरतोऽनुद्रवणमनुचितं मन्वानो दैत्य आत्मानमेवाधिक्षिपति गतह्रियां स्वार्थैकपराणां असतामस्माकं किं विगर्हितं गणनास्ति अपि तु नास्त्येवेति गस्मानित्यब्रवीत इत्यर्थः ॥ ७ ॥ स भगवान् विश्वसृजाऽभिष्टुतो विवृ

तं निःसरं तं सलिलादनुद्रुतो हिरण्यकेशो द्विरदं यथा झषः करालदंष्ट्रोऽशनिनिःस्वनो ब्रवीद्गतह्रियां किं त्वसतां विगर्हितम् ॥ ७ ॥ स गामुदस्तात्सलिलस्य गोचरे विन्यस्य तस्यामदधात्स्वसत्त्वम् अभिष्टुतो विश्वसृजा प्रसूनैरापूर्यमाणो विबुधैः पश्यतोऽरेः ॥ ८ ॥ परानुषक्तं तपनीयोपकल्पं महागदं कांचनचित्रदंशम् मर्माण्यभीक्ष्णं प्रतुदंतं दुरुक्तैः प्रचंडमन्युः प्रहसंस्तं बभाषे ॥ ९ ॥ श्रीभगवानुवाच सत्यं वयं भो वनगोचरा मृगा युष्मद्विधान्मृगये ग्रामसिंहान् ॥

धैश्च प्रसूनैरापूर्यमाणः पाठांतरे विश्वसृजा प्रसूनैर्विबुधैरभिष्टुत इति सलिलस्योदस्तात् उपरि व्यवहारगोचरे देशे गां विन्यस्य स्वसत्त्वमाधारशक्तिं निहितवान् अरेस्तस्य पश्यत एव ॥ ८ ॥ परानुषक्तं तोऽनुषक्तं लग्नं तपनीयोपकल्पं सुवर्णाभरणं कांचनमयं चित्रं दंशः कवचं यस्य तं दैत्यं प्रचंडमन्युत्वं अधिक्षेपादिकं चानुकरणमात्रं दैत्यवाक्यभीतानां देवानामभयनिवृत्तये वस्तुतस्तेन तथा स्वनुक्तत्वेन कोपादिहेत्वाभावात् ॥ ९ ॥ ग्रामसिंहान् शुनः प्रति मुक्तस्य

वद्धस्य विक्रमस्य नं श्लाघाम् १० न्यासहराः निक्षेपहराः द्राविताः पलायनं कारिताः अथापि असमर्था अपि तिष्ठा
मः तत्किं यतः स्थेयं स्थातव्यमेवास्माभिः तत्किमित्याह क्व यामः गंतव्यदेशाभावात् ११ पद्व्यानां पदातीनां ये यूथपा
स्तेषामधिपः मुख्य इत्यर्थः अस्वस्तये पराभवार्थं आशु घटस्व यतस्त्वं अनूहो निर्वितर्कः यो नातिपिपर्त्ति न पूरय

न मृत्युपाशैः प्रतिमुक्तस्य धीरा विकत्थनं तव गृह्णंत्यभद्र १० एते वयं न्यासहरा रसौक
सां गतह्रियो गदया द्राविताः स्ते तिष्ठामहेऽथापि कथंचिदाजौ स्थेयं क्व यामो बलिनोत्पा
द्य वैरम् ११ त्वं पद्व्यानां किल यूथपाधिपो घटस्व नो स्वस्तय आश्वनूहः संस्थाप्य चास्मा
न्प्रमृजाश्रु स्वकानां यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः १२ श्रीमैत्रेय उवाच सोऽधिक्षि
प्तो भगवता प्रलब्धश्च रुषा भृशम् आजहारोल्बणं क्रोधं क्रीड्यमानोहिराडिव १२
सृजन्नमर्षितः श्वासान्मन्युप्रचलितेंद्रियः आसाद्य तरसा दैत्यो गदयाऽभ्यहनद्धरि
म् १४ भगवांस्तु गदावेगं विसृष्टं रिपुणोरसि अवंचयत्तिरश्चीनो योगारूढ इवांतकम् १५
पुनर्गदां स्वामादाय भ्रामयंतमभीक्ष्णशः अभ्यधावद्धरिः क्रुद्धः संरंभाद्दष्टदच्छदम् १६

ति पालयति वा असावसभ्यः सभायामनर्हः १२ सोऽधिक्षिप्तः स त्वं वयमिति श्लोकेन रुषा प्रलब्धः उपहसितश्च।
एते वयमिति द्वाभ्यां क्रीडां कार्यमाणोऽहिराट् महासर्प इव १३ मन्युना प्रचलितानि क्षुभितानि इंद्रियाणि यस्य १४

सौम्य विदुर तां गदाम प्राप्तामेवाहनत् १७ हर्यक्षो हिरण्याक्षः १८ स्पृधोः स्पर्द्धमानयोः तिग्माभ्यां गदाभ्यां आहता
ङ्गानि ययोः स्रुता दास्रवती तिक्षता स्रवंरुधिरं तस्य घ्राणमवघ्राणं तेन विवृद्धो मन्युर्ययोः विचित्रान्मार्गान्नृ गद
युद्धभ्रमणभेदान् इलागौः तस्यां निमित्तभूतायां शुष्मिणो मत्तयोः वृषभयोः प्रस्तुतेपि इला पृथ्वी तदर्थं वृषभौ हि
खलु बहूनि दिनानि संग्रथितो तुंगसंग संघर्षविदीर्णाग गलद्रुधिरौ परस्परोपमर्दव्यग्रौ ग्रसंरंभौ चमत्कारित गजयूथ

ततश्च गदयाऽरातिं दक्षिणस्यां भुवि प्रभुः आजघ्ने स तु तां सौम्य गदया कोविदोऽहनत्
१७ एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च जिगीषया सुसंरब्धावन्योन्यमभिजघ्नतुः १८
तयोः स्पृधोस्तिग्मगदाहताङ्गयोः क्षतास्रवघ्राणविवृद्धमन्व्योः विचित्रमार्गांश्चरतोर्जि
गीषया व्यभादिलायामिव शुष्मिणोर्मृधः १९ दैत्यस्य यज्ञावयवस्य माययागृहीत
वाराहतनोर्महात्मनः कौरव्य मह्यां द्विषतो विमर्दनं दिदृक्षुरागादृषिभिर्वृतः स्वराट् २०
आसन्न शौंडीरमपेतसाध्वसं कृतप्रतीकारमहार्यविक्रमं विलक्ष्य दैत्यं भगवान्स
हस्रणीर्जगाद नारायणमादि शूकरम् २१ ॥ युध्यमानौ तिष्ठत इति प्रसिद्धम् १९ यज्ञ
वाव यवावयस्य तस्य च मह्यां मही निमित्तं द्विषतो २० आगत्य च नारायणमाह किं कृत्वा दैत्यं विलक्ष्य कथंभू
तं आसन्नं प्राप्तं शौंडीरं शौर्यमदो वा येन अपेतं साध्वसं यस्मात् कृतः प्रतीकारो येन अहार्यः अप्रतीकार्यो वि
क्रमो यस्य सहस्रणीः सहस्राणां ऋषिसहस्राणां नेता २१

हे देव तेंऽघ्रिमूलं प्राप्तानां देवादीनां एषोऽसुरः २२ आगस्कृत् वृथैवापराधारोपकः तत्परिहाराय प्रवृत्तो भयकृत् भीतं ज्ञात्वा दुष्कृत् अर्थप्राणादिहर्त्ता अस्मत्तो राद्धो लब्धो वरो येन अन्वेषन् प्रतिरथम् अवलोकयन् अप्रतिरथः प्रतिपक्षशून्यः २३ यद्यस्मात् एवं भूतोऽयं तस्मात् एनं माक्रीड माक्रीडय हे देव यथा उत्थितं क्षुभितम् आशीविषं सर्पं बालः पुच्छाकर्षणादिना क्रीडयति तद्वत् २४ स्वा आसुरी हे देव सा माया अघं पापरूपं २५ वेलामेवाह एषेति लोकानां

श्रीब्रह्मोवाच एष ते देव देवानामंघ्रिमूलमुपेयुषाम् विप्राणां सौरभेयीणां भूतानामप्यनागसाम् २२ आगस्कृद्भयकृद्दुष्कृदस्मद्राद्धवरोऽसुरः अन्वेषन्नप्रतिरथो लोकानटति कंटकः २३ मैनं मायाविनं दृप्तं निरंकुशमसत्तमम् आक्रीड बालवद्देव यथाशीविषमुत्थितम् २४ न यावदेष वर्द्धेत स्वां वेलां प्राप्य दारुणः स्वां देव मायामास्थाय तावज्जह्यघमच्युत २५ एषा घोरतमा संध्या लोकच्छंवट्करी प्रभो उपसर्पति सर्वात्मन् सुराणां जयमावह २६ अधुनैषोऽभिजिन्नाम योगो मौहूर्तिको ह्यगात् शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् २७ दिष्ट्या त्वा विहितं मृत्युमयमासादितः स्वयम् विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्मणि २८ ॥

लोकच्छंवट्करी विनाशकरी छंवडित्यव्ययं विनाशे वर्त्तते २६ अभिजित् मध्याह्नः स एव मौहूर्तिको योगः सन्मुहूर्तः शुभदः कालः अगात् गतप्रायः अतो यावन्मुहूर्त्तशेषोऽस्ति तावद्देव सुदुस्तरम् एनं निस्तर जहि २७ त्वां मृत्युं त्वय्येव शापानुग्रहकाले विहितं निर्मितं आसादितः प्राप्तः शर्मणि सुखे आधेहि स्थापय २८ ॥

॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेटीकायांमऽष्टादशोध्यायः १८ ऊनविंशेविरंच्यादिप्रार्थितेनमहामृधेवा
राहेणहिरण्याक्षवधः श्लाघ्यानुवर्ण्यते १ निर्व्यलीकंचतदमृतंच पाठान्तरेनिष्कपटाभिप्रायंचतत् अतंतच्चका
लात्मनोऽपिममसुहूर्त्तंवलमुपदिशतीतिप्रहस्य अपांगालोकनेनस्वीकृतवान् १ मुखतः अभिमुखेहनौक
पोलस्याधोभागे असृजः ब्रह्मणोघ्राणेंद्रियादाविर्भूतः २ सास्वगदयातेनहततोविहताविच्युतासतीविघू।

इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेहिरण्याक्षवधेऽष्टादशोध्यायः १८ श्रीमै
त्रेयउवाच अवधार्यविरिंचस्यनिर्व्यलीकामृतंवचः प्रहस्यप्रेमगर्भेणतदपांगे
नसोग्रहीत् १ ततः सपत्नंमुखतश्चरंतमकुतोभयम् जघानोत्पत्यगदयाहना
वसुरमसृजः २ साहतातेनगदयाविहताभगवत्करात् विघूर्णितापतद्रेजेतदद्भु
तमिवाभवत् ३ सतदालब्धतीर्थोपिनववाधेनिरायुधम् मानयन्सम्मृधेधर्म्मंविष्वक्से
नंप्रकोपयन् ४ गदायामपविद्धायांहाहाकारेविनिर्गते मानयामासतद्धर्म्मंसुनाभंचा
स्मरन्विभुः ५ तंव्यग्रचक्रंदितिपुत्राधमेनस्वपार्षदमुख्येनविषज्जमानम् ॥ ६ ॥

र्णिताभूत्वाऽपततरेजेचततभगवत्करात्पतनं यद्वा तत्पदस्यावृत्त्यारेजेइत्यनेनापिसंवंधः ततदैत्यपौरुषम
परेजेइति ३ लब्धतीर्थोलब्धावसरः सचनववाधेनप्राहरत् समानयन्बभूवेतिवाक्यभेदात्सइत्यस्यापौनरुक्त्यं
॥४॥५॥ व्यग्रंससंभ्रमंचक्रंयस्यविषज्जमानंविशेषेणसंगंप्राप्नुवंतंप्रति॥

९६ भा॰ टी॰ ७०

अतद्विदां तत्प्रभावमजानतां आसमंतादासनं ६ स दैत्यस्तमात्तचक्रं निशाम्य दृष्ट्वा अग्रतो व्यवस्थितं च विलोक्य अमर्षेण क्रोधेन परिप्लुतानि क्षुभितानींद्रियाणि यस्य सः आदशत् दष्टवान् ७ चक्षुर्भ्यां दहन्निव सं

चित्रावाचोऽतद्विदां खेचराणां तत्रास्मासन्स्वस्ति तेऽमुं जहीति ६ स तं निशम्यात्तर थांगमग्रतो व्यवस्थितं पद्मपलाशलोचनम् विलोक्य चामर्षपरिप्लुतेंद्रियो रुषा स्व दंतच्छदमादशच्छ्वसन् ७ करालदंष्ट्रश्चक्षुर्भ्यां संचक्षाणो दहन्निव अभिप्लुत्य स्व गदयाहतो ऽसीत्याहनद्धरिम् ८ पदा सव्येन तां साधो भगवान्यज्ञसूकरः लीलया मिषतः शत्रोः प्राहरद्वातरंहसम् ९ आहचायुधमादत्स्व घटस्व त्वं जिगीषसि इत्यु क्तः स तदा भूयस्ताडयन्व्यनदद्भृशं १० तां स आपततीं वीक्ष्य भगवान्समवस्थितः जग्रा ह लीलया प्राप्तां गरुत्मानिव पन्नगीं ११ स्वपौरुषे प्रतिहते हतमानो महासुरः नैच्छ द्गदां दीयमानां हरिणा विगतप्रभः १२ जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलु पं यज्ञाय धृतरूपाय विप्रायाभिचरन्यथा १३॥ संचक्षाणः पश्यन् इव इति वस्तुतः क्रोधाभावमाह अभि हतो ऽसि ज्ञो ऽसीति वा स्तवो ऽर्थः ८ वातरंहसं वायुवेगां ९ घटस्व उद्यमं कुरु यत स्त्वं जेतुमिच्छसि १० ११ हतो मानो गर्वो यस्य सः १२ ज्वलन् यो ज्वलनस्तद्वल्लोलुपं ग्रसनव्यग्रं यज्ञाय विष्णुमालक्ष्य अकार्यकरत्वे दृष्टांतः विप्रमुद्दिश्याभिचा

राम ७० ॥ ३॥ ८ ॥ श्रीधरी

अंतःखे आकाशमध्ये चकाशत् प्रकाशमानं उदीर्णा उत्कटा दीधितिर्दीप्तिर्यस्य निशातनेमिना निशितधारेण हा
रिरिंद्रो यथा तार्क्ष्यस्य पतत्रमुज्झितं चिच्छेद देवान् विनिर्जित्य अमृतकलशं नयता गरुडेनेंद्रप्रेरितवज्रस्यामोघ
त्वसमानदानुपिच्छमेकं त्यक्तं तद्यथा इंद्रश्चिच्छेद छिन्नं च तत् यथा खे प्रकाशत् तद्वत् प्रकाशमानमित्यभिसंधिः

तदोजसा दैत्यमहाभटार्पितं चकाशदंतःख उदीर्णदीधिति चक्रेण चिच्छेद निशातनेमि
नाहरिर्यथा तार्क्ष्यपतत्रमुज्झितं १४ वृक्णे स्वशूले बहुधारिणा हरेः प्रत्येत्य विस्तीर्णमु
रो विभूतिमत् प्रवृद्धरोषः स कठोरमुष्टिना नदन्प्रहृत्यांतरधीयतासुरः १५ तेनेत्थमाह
तः क्षत्तर्भगवानादिसूकरः नाकंपत मनाक् क्वापि स्रजा हत इव द्विपः १६ अथोरुधा
ऽसृजन्मायां योगमायेश्वरे हरौ यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् १७ प्र
ववुर्वायवश्चंडास्तमः पांसवमैरयन् दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव १८
द्यौर्नष्टभगणाऽभ्रौघैः सविद्युत्स्तनयित्नुभिः वर्षद्भिः पूयकेशासृक्विण्मूत्रास्थीनि
चासकृत् १९ ॥ ९, १४ अराः संत्यस्येति अरि चक्रं तेन बहुधा वृक्णे छिन्ने सति प्रत्येत्य अभिमुखमाग
त्य हरेरुरः वक्षः प्रहृत्य १५ मनाक् ईषदपि क्वापि अंशे १६ अस्य जगतः उपसंयमं प्रलयं १७ पांसुकृतं तमः अश्मप्रे
रितवंतः क्षेपणैर्यंत्रैः १८ नष्टो भगणो नक्षत्रसमूहो यस्यां अनेन दैत्यबलातिरेकात् ब्रह्मदत्तमुहूर्तोऽतिक्रमो गम्यते अ

१९
भा॰ त॰
७१

नानायुधानि मुंचंतीति तथा यातुधान्यः प्रत्यदृश्यंत २० हिंस्राः छिंधि भिंधीत्येवंभूताः अतिवैशसा अत्युग्रा वाचं
उत्सृष्टा इत्यत्रैव वाक्यसमाप्तिः २१ प्रादुष्कृतानामिति प्रकटिताः मायाः विनाशयत् विनाशनमिति पाठे यथाश्रुतं

गिरयः प्रत्यदृश्यंत नानायुधमुचोऽनघ दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्द्धजाः
२० बहुभिर्यक्षरक्षोभिः पत्यश्वरथकुंजरैः आततायिभिरुत्सृष्टा हिंस्रा वाचोऽतिवैशसाः
२१ प्रादुष्कृतानां मायानामासुरीणां विनाशनं सुदर्शनास्त्रं भगवान्प्रायुंक्त दयितं त्रिपा
त् २२ तदा दितेः समभवत्सहसा हृदि वेपथुः स्मरंत्या भर्तुरादेशं स्तनाच्चासृक्प्रसुस्रु
वे २३ विनष्टासु स्वमायासु भूयश्चाव्रज्य केशवम् रुषोपगूहमानोऽमुं ददृशेऽवस्थि
तं बहिः २४ तं मुष्टिभिर्विनिघ्नंतं वज्रसारैरधोक्षजः करेण कर्णमूलेहन्यथा त्वा
ष्ट्रं मरुत्पतिः २५ स आहतो विश्वजिता ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः विशी
र्णबाह्वंघ्रिशिरोरुहोऽपतद्यथा नगेंद्रो लुलितो नभस्वता २६ ॥ एवं षष्ठी त्रीणि सवनानि पा

दायस्य यज्ञमूर्तिरित्यर्थः त्रयो अस्य पादा इति श्रुतेः २२ भर्तुरादेशं त्वत्पुत्रौ भगवान् हनिष्यतीत्येवंभूतं २३ उपगूहमा
नः बाह्वोरंतरे निधाय संघट्टयन् २४ अहन् जघान त्वाष्ट्रं वृत्रं मरुत्पतिरिंद्रः २५ परितो भ्रमत् गात्रं शरीरं यस्य उद
स्तं बहिर्निर्गतं लोचनं यस्य विशीर्णा बाह्वादयो यस्य नगेंद्रो महाद्रुमः लुलितः उन्मूलितः नभस्वता वायुना २६ ॥

रामः
७१

३

संस्थितिंमृत्युं २७ असतः आरोपितात् लिंगशरीरात् मोक्षमिच्छया वराहस्यपूर्वपादयोरेवकरत्वात्करेणाहन्निति पदाहत इति चाविरुद्धं २८ २९ अखिलयज्ञानांतंतवे विस्तारायकारणायेतिवा अरुंतुदः मर्मभेत्ता ३० सादयित्वाहत्वेत्यर्थः

क्षितौशयानंतमकुंठवर्चसंकरालदंष्ट्रंपरिदष्टदच्छदम् अजादयोवीक्ष्यशशंसुरागता
अहोइमंकोऽनुलभेतसंस्थितिं २७ यंयोगिनोयोगसमाधिनारहोध्यायंतिलिंगादस
तोमुमुक्षया तस्यैषदैत्यापसदः पदाहतोमुखंप्रपश्यंस्तनुमुत्ससर्जह २८ एतौतौपार्षदा
वस्यशापाद्यातावसद्गतिं पुनःकतिपयैःस्थानंप्रपत्स्येतेहजन्मभिः २९ श्रीदेवाऊ
चुः नमोनमस्तेऽखिलयज्ञतंतवेस्थितौगृहीतामलसत्वमूर्तये दिष्ट्याहतोयंजगता
मरुंतुदस्त्वत्पादभक्त्यावयमीशनिर्वृताः ३० श्रीमैत्रेयउवाच एवंहिरण्याक्षमसह्यवि
क्रमंससादयित्वाहरिरादिसूकरः जगामलोकंस्वमखंडितोत्सवंसमीडितःपुष्करविष्टरा
दिभिः ३१ मयायथाऽनूक्तमवादितेहरेःकृतावतारस्यसुमित्रचेष्टितंयथाहिरण्याक्षउदा
रविक्रमोमहामृधेक्रीडनवन्निराकृतः ३२ श्रीसूतउवाच इतिकौषारवाख्यातामाश्रुत्यभगव
त्कथां क्षत्तानंदंपरंलेभेमहाभागवतोद्विज ३३ अन्येषांपुण्यश्लोकानामुद्दामयशसांसतां

पुष्करविष्टरादिभिः ब्रह्मादिभिः संस्तुतः ३१ यथाऽनूक्तं गुरुक्रममनतिक्रम्य मया अवादित कथितं हे सुमित्र यथा येन प्रकारेण

पश्रुत्य ३४ भक्तिमात्रेणपशूनामपिसुलभः अन्यथादेवानामपिदुर्लभइतितत्कथाश्रवणेकस्यानंदोनस्यादित्याहयद्
तिद्वाभ्यां झषोग्राहः क्रोशंतीनांसतीनामितिकृपालत्वमुक्तं संकटादमोचयत् ३५ ३६ कारणेनपृथ्व्युद्धरणादिनासू
कररूपस्य ३७ एततद्धरेर्विक्रीडितंशृण्वतामंतेश्रीनारायणोगतिर्भवति महापुण्यंस्वर्गादिप्रदं अलंपवित्रंअतिश
यनशोधकंधन्यंधनावहं यशस्यंकीर्तिकरं आयुषआशिषांचपदंस्थानंपरित्राणंवा प्राणानामिंद्रियाणांचपदंअंग।

उपश्रुत्यभवेन्मोदःश्रीवत्सांकस्यकिंपुनः ३४ योगजेंद्रंझषग्रस्तंध्यायंतेचरणांबुजं
क्रोशंतीनांकरेणूनांकृच्छ्रतोमोचयद्द्रुतं ३५ तंसुखाराध्यमृजुभिरनन्यशरणैर्नृभिः।
कृतज्ञः कोनसेवेतदुराराध्यमसाधुभिः ३६ योवैहिरण्याक्षवधंमहाद्भुतंविक्रीडितंकार
णसूकरात्मनः शृणोतिगायत्यनुमोदतेंऽजसाविमुच्यतेब्रह्मवधादपिद्विजाः ३७ एत।
न्महापुण्यमलंपवित्रंधन्यंयशस्यंपदमायुराशिषाम् प्राणेंद्रियाणांयुधिशौर्यवर्द्धनं
नारायणोंतेगतिरंगशृण्वतां ३८ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेएकोनविं
शोध्यायः १९ श्रीशौनकउवाच महींप्रतिष्ठामध्यस्यसौतेस्वायंभुवोमनुः॥ ॥

शौनक ३८ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेटीकायांएकोनविंशोध्यायः १९ विंशेवराहजन्मादिव्य
वधानादथादितः सर्गोनुस्मार्यतेवक्तुमन्वयंप्रस्तुतंमनोः १ प्रतिष्ठांस्थानं अध्यस्यप्राप्यसौतेसूतस्यरोमहर्षणस्य
पुत्र अवरं अर्वाचीनंजन्मयेषांतेषां ॥

ईश्वरलीलानांमार्गायनिर्गमायकानिद्वाराणिकृतवान्अर्वाचीनान्प्राणिनःकैरुपायैःसृष्टवानित्यर्थः १ विदुरमै
त्रेययवादेनैवैतत्तु ज्ञास्यतइतितमेवसंवादंप्रष्टुमाह क्षत्तेतिपंचभिः श्रीकृष्णसुहृत्त्वेहेतुः यइतिदुर्योधनादिभिरपत्यैः
सहितमग्रजं धृतराष्ट्रं अघवान्कृतापराधइतिहेतोः श्रीकृष्णोक्तमंत्रानादरात् यःतत्याज २ अनवरः अन्यूनः महि

कान्यन्वतिष्ठत्द्वाराणिमार्गायावरजन्मनां १ क्षत्तामहाभागवतःकृष्णस्यैकांतिकः
सुहृत् यस्तत्याजाग्रजंकृष्णेसापत्यमघवानिति २ द्वैपायनादनवरोमहित्वेतस्यदेहजः
सर्वात्मनाश्रितःकृष्णंतत्परांश्चाप्यनुव्रतः ३ किमन्वपृच्छन्मैत्रेयंविरजास्तीर्थसेवया
उपगम्यकुशावर्त्तआसीनंतत्त्ववित्तमं ४ तयोःसंवदतोःसूतप्रवृत्ताह्यमलाःकथाः॥
आपोगांगाइवाघघ्नीर्हरेःपादांबुजाश्रयाः ५ तानःकीर्त्तयभद्रंतेकीर्त्तन्योदारकर्म्मणः
रसज्ञःकोनुतृप्येतहरिलीलामृतंपिबन् ६ एवमुग्रश्रवाःपृष्टऋषिभिर्नैमिषायनैः
भगवत्यर्पिताध्यात्मस्तानाहश्रूयतामिति ७ सूतउवाच हरेर्धृतक्रोडतनोःस्वमायया
निशम्यगोरुद्धरणंरसातलात्॥ एतेमहिम्नि ३ कुशावर्त्तेगंगाद्वारे ४ यत्किमपिपृच्छत्तुकिंतवेतिचेत्तत्राहतयो

रिति अघघ्नीः अघघ्नः नूनंकथाः प्रवृत्ताः ५ कीर्त्तन्यानिकीर्त्तनार्हाणिउदाराणिकर्माणियस्यहरेः ६ एवमितिव्या
सवाक्यंउग्रश्रवाः रोमहर्षणपुत्रः नैमिषमयनमाश्रयोयेषां अर्पितमध्यात्मंमनोयेन ७ गोरुद्धरणंलीलांहिरण्या

स्तंचावक्तयाहतंनिशम्यभारतोविदुरः ८ यस्मात्त्वमव्यक्तमार्गवित् ब्रह्मणोवाविशेषणं ९ एतत्जगत् अभावयन्
उत्पादयामासुः १० सद्वितीयाःसभार्याःस्वतंत्राभार्यानपेक्षाः कर्मसुप्रजासर्गादिषुसंहताःपरस्परापेक्षाः इदंजग
त् ११ ब्रह्मा किमारभतेतिप्रश्नस्यदक्षादीन्सृष्टवानित्युत्तरं वक्तुंपूर्वोक्तांसृष्टिमनुस्मारयति दैवेनेतिसप्तभिःमन्वा
दिप्रश्नानांतूत्तराध्यायमारभ्योत्तरंभविष्यति दुर्वितर्क्येणदैवेनजीवादृष्टेनपरेणप्रकृत्यधिष्ठात्रामहापुरुषेण अ

लीलांहिरण्याक्षमवक्तयाह तंसंजातहर्षोमुनिमाहभारतः ८ श्रीविदुरउवाच प्रजाप
तिपतिःसृष्ट्वाप्रजासर्गेप्रजापतीन् किमारभतमेब्रह्मन् प्रब्रूह्यव्यक्तमार्गवित् ९ येमरीच्या
दयोविप्रायस्तुस्वायंभुवोमनुः तेवैब्रह्मणआदेशात्कथमेतदभावयन् १० सद्वि
तीयाःकिमसृजन्स्वतंत्राउतकर्मसु आहोस्वित्संहताःसर्वइदंस्मसमकल्पयन् ११ श्री
मैत्रेयउवाच दैवेनदुर्वितर्क्येणपरेणानिमिषेणच जातक्षोभाद्भगवतोमहानासीद्गुणत्रया
यात् १२ रजःप्रधानान्महतस्त्रिलिंगोदैवचोदितात् जातःससर्जभूतादिर्वियदादीनिपं

निमिषेणकालेनचहेतुना भगवतोनिर्विकारात् जातक्षोभंयद्गुणत्रयंप्रधानंतस्मान्महानासीत् तदु (चशः १३
क्तंतंत्रेविष्णोस्तुत्रीणिरूपाणिपुरुषाख्यान्यथोविदुः प्रथमंमहतःस्रष्टृद्वितीयंत्वंडसंस्थितं तृतीयंसर्वभूतस्थंतानिज्ञा
त्वाविमुच्यतेइति १२ महतोजातोभूतादिरहंकारस्त्रिलिंगःत्रिगुणःरजःप्रधानादितिस्वतःसत्वप्रधानस्यापिमहतोऽहं
कारोत्पत्तिकालेकार्यानुरूपंरजःप्रधानत्वंभवतीतिभावः पंचशःतन्मात्राणिमहाभूतानिज्ञानेंद्रियाणिकर्मेंद्रियाणितत्र

भौतिकं हैममंडमेकैकशः प्रत्येकं स्रष्टुमसमर्थानि संति संहत्य ससृजुः १४ अन्ववात्सीत् अधिष्ठितवान् १५ सहस्राकोर्णामिवोरु दीधितिर्यस्य तत् सर्वजीवनिकायानामोकः स्थानं पद्मं स्वराट् ब्रह्मा १६ यः सलिलाशये गर्भोदके संततः शेते तेन भगवतानुविष्टोऽधिष्ठितः सन् सः स्वराट् स्वया संस्थया नामरूपादिक्रमेण १७ छायाप्रभाप्रतियोगिनी तया अबु-

तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकं संहत्य दैवयोगेन हैममंडमवासृजन् १४ सोऽशयिष्टाब्धिसलिले आंडकोशो निरात्मकः साग्रं वै वर्षसाहस्रमन्ववात्सीत्तमीश्वरः १५ तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति सर्वजीवनिकायौको यत्र स्वयमभूत्स्वराट् १६ सोनुविष्टो भगवता यः शेते सलिलाशये लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया १७ ससर्ज च्छायया विद्यां पंचपर्वाणमग्रतः तामिस्रमंधतामिस्रं तमो मोहो महातमः १८ विससर्जात्मनः कायं नाभिनंदंस्तमोमयं जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम् १९ क्षुत्तृड्भ्यामुपसृष्टांस्ते तं जग्धुमभिदुद्रुवुः ॥ (ध्येत्यर्थः यस्त्वबुद्धिस्ततः प्रमोऽरित्युक्तत्वात् महातमइति महामोहः स्वरूपनिर्देशमात्रविवक्षया मोह इति प्रथमाप्रयोगः १८ तदेवं प्रथमोक्तामसाधारणां सृष्टिमनूद्य केन चित्तविशेषेणासाधारणां सृष्टिमाह विससर्जेत्यादिना यावत्समाप्ति तद्विसृष्टं कायं रात्रिरूपं तत एव जातानि यक्षरक्षांसि जगृहुः ॥ क्षुत्तृषोः समुद्भवो यस्यां तां अत्र च याऽस्य सा तनूरासीत् तामपाहत सा तमिस्राऽभवदित्यादिश्रुतिरनुसंधेया १९ उपसृष्ट

अतएनंपिनेतिरूपयामारक्षतेत्येके अन्येतुजक्षध्वंभक्षयतेतिब्रुवंतः जक्षभक्षहसनयोरितिधातुः २० देवोब्रह्मामंवि
ग्नोभीतःसन्मांमाजक्षतमाभक्षयतकिंतुरक्षत अहोहेयक्षरक्षांसियूयंमेप्रजाःसुतावभूविथजातास्थएवमुग्रस्वभावाः
यक्षराक्षसाजाताइत्यर्थःतत्रयेयक्षध्वमित्यूचुःतेयक्षाःयेतुमारक्षतेतितेराक्षसाइतिज्ञेयाएतंतत्त्वतिर्यगादितामसस्सर्ग
स्याप्युपलक्षणं २१ प्रभयादीव्यन्द्योतमानाःयायादेवताद्युतिमत्यःसात्विकाःतास्ताःप्रमुखतःप्राधान्येनासृजत्तेनेदं

मारक्षतैनंजक्षध्वमित्यूचुःक्षुत्तृडर्दिताः २० देवस्तानाहसंविग्नोमामांजक्षतरक्षत अहो
मेयक्षरक्षांसिप्रजायूयंवभूविथ २१ देवताःप्रभयायायादीव्यन्प्रमुखतोऽसृजत् तेअहा
र्षुर्देवयंतोविसृष्टांतांप्रभामहः २२ देवोऽदेवान्जघनतःसृजतिस्मातिलोलुपान् तएनं
लोलुपतयामैथुनायाभिपेदिरे २३ ततोहसन्सभगवानसुरैर्निरपत्रपैः अन्वीयमानस्तर
साक्रुद्धोभीतःपराऽपतत् २४ सउपव्रज्यवरदंप्रपन्नार्तिहरंहरिम् अनुग्रहायभक्तानां
मनुरूपात्मदर्शनं २५ पाहिमांपरमात्मंस्तेप्रेषणेनासृजंप्रजाःताइमायभितुंपापाउपा
क्रामंतिमांप्रभो २६॥ एताःदेवताइतिस्त्रीत्वेननिर्दिष्टानामप्यर्थमात्रविवक्षयातइतिपुंस्त्वेनप्रतिनिर्देशः
एवंयक्षरक्षांसीत्यत्रापिज्ञेयंतेनविसृष्टांत्यक्तांप्रभांअहःदिवसरूपांसतींदेवयंतःक्रीडयंतःअहार्षुःजगृहुः २२ अदे
वानितिच्छेदःसजघनादसुरानसृजतेतिश्रुतेःअतिलोलुपान्स्त्रीलंपटान्अभिपेदिरेप्राप्ताः २३ पराऽपततअपला
॥ ॥ यत २४ भक्तेच्छानुरूपमात्मानंदर्शयतीतितथातंउपव्रज्य २५ पाहीतिद्वाभ्यांप्रार्थितवान्यभितुंमैथुनेनधर्षि

लोकानां जनानां तव अनासन्नौ अनाश्रितौ पादौ यैस्तेषां २७ विविक्तं असंदिग्धं अध्यात्मदर्शनं परचित्तज्ञानं यस्य
हरेः घोरां कामकश्मलां स्वतनुं विमुंचेति उक्तवानिति शेषः इत्युक्तः स्वब्रह्मा तां तनुं विमुमोच सर्वत्र तनुत्यागो नाम तन्ममनोभाव
त्यागो विवक्षितः ग्रहणं च तत्तद्भावापत्तिरिति द्रष्टव्यम् २८ साऽहोरात्रयोः संधिरभवदिति श्रुतेः सा तेन विसृष्टा तनुः सायं
तनी संध्याबभूव सा च कामोद्रेकवेला असुरास्त्वराजसत्वात्स्त्रीलंपटाः अतस्तां संध्यामेव स्त्रियं कल्पयित्वा तेसंमोहं प्राप्ता

त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः त्वमेकः क्लेशदस्तेषामनासन्नपदां तव ॥
२७ सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः विमुंचात्मतनुं घोरामित्युक्तो विमुमो
चह २८ तां क्वणच्चरणांभोजां मदविह्वललोचनां कांचीकलापविलसद्दुकूलाच्छन्नरो
धसं २९ अन्योन्याश्लेषयोत्तुंगनिरंतरपयोधरां सुनासां सुद्विजां स्निग्धहासलीलावलो
कनाम् ३० गूहंतीं व्रीडयात्मानं नीलालकवरूथिनीं उपलभ्यासुरा धर्म सर्वे संमुमुहुः स्त्रि
यम् ३१ अहो रूपमहो धैर्यमहो अस्या नवं वयः मध्ये कामयमानानामकामेव विस
र्पति ३२॥ तदुत्याह तामिति त्रिभिः नूपुराभ्यां क्वणंती चरणांभोजे यस्याः मदेन विह्वले लोचने यस्याः कांची
कलापेन विलसद्दुकूलं तेनाच्छन्नं रोधः कटितटं यस्याः तां २९ अन्योन्यमाश्लेषया उपमर्द्दनेन हेतुना उत्तुंगौ निरंतरौ पयोध
रौ यस्याः सुद्विजा सुदंतीं स्निग्धो हासो लीलाऽवलोकनं यस्याः ३० गूहंतीं वस्त्रांचलेनावृण्वानां नीलानामलकानां वरूथ
यः स्तोमो विद्यते यस्याः हे धर्म्म विदुर तां स्त्रियमुपलभ्य मत्वा ३१ संमूढानां विभावनाक्रममाह अहो इति ३२ ॥ ❋ ॥

२० भा० तं त्वमिसंभाव्यसन्तोत्यविश्रंभात्तप्रणयात् कुतूहलयस्तेनापप्रच्छुः ३३ का ऽ सीतित्रिभिः का ऽ सि जातत्याकस्यवाकथ
न्या हे भामिनि कोपने रूपमेवद्रविणं अनर्घ्यं वस्तुतदेवपण्यं क्रयार्हं तेनतदसमर्पणेनत्वविवाधसे ३४ किंजाति
कुलादिप्रश्नेन यावाकाचिद्भवदित्साद्दंतावद्भद्रंजातंयत्तवदर्शनं किंतुकेवलंनोमनः उत्सुनोषिविमथ्नासि ३५
क्षुभितचित्तानांवाक्यंहे शालिनि श्लाघ्ये एकत्रनजयतिनास्थिरीभवति यद्वानैकत्रअनेकगतिविलासेषुजयति

वितर्कयंतोवहुधातांसंध्यांप्रमदाकृतिं अभिसंभाव्यविश्रंभात्पर्यपृच्छतकुमेध
सः ३३ का ऽ सिकस्यासिरंभोरु कोवार्थस्ते ऽ त्र भामिनि. रूपद्रविणपण्येनदुर्भा-
गान्नोविवाधसे ३४ यावाकाचित्त्वमवले दिष्ट्यासंदर्शनंतव उत्सुनोषीक्षमाणानांकं
दुकक्रीडयामनः ३५ नैकत्रतेजयतिशालिनिपादपद्मं घ्नंत्यामुहुःकरतलेनपतत्पतंगं
मध्यंविषीदतिवृहत्स्तनभारभीतंशांतेवदृष्टिरमलासुशिखासमूहः ३६ इतिसायंतनींसं
ध्यामसुराःप्रमदायतीं प्रलोभयंतींजगृहुर्मत्वामूढधियःस्त्रियम् ३७ ॥ ❋ ❋ ॥

सर्वोत्कर्षेणवर्त्तते पतत्पतंगं उच्चलंतंकंदुकं वृहतोःस्तनयोर्भाराद्भीतंतवक्लृशंमध्यंविषीदतिश्राम्यति शांतामं
यरेवप्रसरति सुशिखासमूहःशोभनःकेशकलापस्ते पाठांतरेसुशिखाः शोभमानान्केशानवकीर्यमानान्समू
हवधानेति अत्रच अस्तंगच्छन्सूर्य एवपतत्पतंगःमेघविच्छेदोमध्यविषादः तारकारूपादृष्टिःतमएवकेशाद्
त्याघूहंद्य ३६ प्रमदेवाचरंतींश्रियंमत्वाजगृहुः ३७ ॥

राम ७५

प्रहस्यात्मानमात्मना जिघ्रंत्या कांत्या सौंदर्येण प्रहसनमात्माव घ्राणं च सौंदर्यानुभाव चातुर्यं विकारः ३९ ज्योत्स्ना चंद्रि
कारूपा त एव गंधर्वादि —— गणाः विश्वावसुः पुरोगमो मुख्यो येषु ३८ आत्मनस्तंद्रिणा आलस्येन तांश्च मुक्तकेशान्
वीक्ष्य नेत्रे निमीलितवान् ४० इंद्रियाणां विक्लेदः स्रावो यया तां निद्रां प्रचक्षते येनेंद्रियविक्लेदनहेतुना उच्छिष्टांश्च सं

प्रहस्य भावगंभीरं जिघ्रंत्यात्मानमात्मना कांत्या ससर्ज भगवान् गंधर्वाप्सरसां गणान्
३८ विससर्ज तनुं तां वै ज्योत्स्नां कांतिमतीं प्रियां तएव चाददुः प्रीत्या विश्वावसुपुरोगमाः
३९ सृष्ट्वा भूतपिशाचांश्च भगवानात्मतंद्रिणा दिग्वाससो मुक्तकेशान् वीक्ष्य चामीलयद्दृशौ
४० जगृहुस्तद्विसृष्टां तां जृंभणाख्यां तनुं प्रभोः निद्रामिंद्रियविक्लेदो यया भूतेषु दृश्य
ते येनोच्छिष्टान्धर्षयंति तमुन्मादं प्रचक्षते ४१ ऊर्जस्वंतं मन्यमानः आत्मानं भग
वानजः साध्यान्गणान्पितृगणान्परोक्षेणासृजत्प्रभुः ४२ तं आत्मसर्गं तत्कायं पित
रः प्रतिपेदिरे साध्येभ्यश्च पितृभ्यश्च कवयो यद्वितन्वते ४३ सिद्धान्विद्याधरांश्चैव ति
रोधानेन सोऽसृजत॥ एतः धर्षयंति भ्रांतान् कुर्वंति ते भूतादिगणा उन्मादं प्रचक्षते तंद्रा जृंभिका निद्रोन्मादहेतुत्वे
न भूतादीनां तनूनां च चातुर्विध्यमुक्तं ४१ ऊर्जस्वंतं बलवंतं परोक्षेण अदृश्यरूपेण ४२ आत्मनः सर्गो यस्मात् तं य
तयेन कायेन संप्रदानत्वनिमित्तेन कवयः कर्मकोविदाः साध्येभ्यः पितृभ्यश्च स्वपितृरूपेभ्यः वितन्वते श्राद्धादिना
हव्यं कव्यं च ददति ४३ तिरोधानेन अदृश्य।

तेभ्यस्तद्रूप्यं तदर्धानशक्त्या ४४ प्रत्यात्म्येन प्रतिबिंबेन आत्माभासं प्रतिबिंबं आत्मना आत्मनो मनः प्रतीबिंबदर्शिनः सुंदरस्य शिरःकंपादि चेष्टा अत एव तत्स्रष्टानां मिथः संमानेन नित्यं मिथुनीभावः ४५ ततः तत्प्रतिबिंबरूपं कर्मभिस्तत्पराक्रमानुवर्णनैः ४६ भोगः आभोगो विस्तारः पादादिप्रसरणं तद्वता देहेन अनुपचिते वृद्धिमप्राप्ते तद्भोगक्रोधादिवक्रमम् ४७ अमुतः अमुष्मात् देहात् ये केशा अहीयंत प्रच्युताः ते अहयो जाताः प्रसर्पतः पादाद्याकुंचनैः प्रच॥

तेभ्योऽददात्तमात्मानमंतर्द्धानाख्यमद्भुतं ४४ स किंनरान् किंपुरुषान् प्रत्यात्म्येनासृजत्प्रभुः मानयन्नात्मनात्मानमात्माभासं विलोकयन् ४५ ते तु तज्जगृहू रूपं त्यक्तं यत्परमेष्ठिना मिथुनीभूय गायंतस्तमेवोषसि कर्मभिः ४६ देहेन वै भोगवता शयानो बहुचिंतया सर्गेऽनुपचिते क्रोधादुत्ससर्ज ह तद्वपुः ४७ येऽहीयंतामुतः केशा अहयस्तेऽङ्ग जज्ञिरे सर्पाः प्रसर्पतः क्रूरा नागा भोगोरुकंधराः ४८ स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः तदा मनून्ससर्जांते मनसा लोकभावनान् ४९ तेभ्यः सोऽत्यसृजत्स्वीयं पुरं पुरुषमात्मवान् तान् दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिं ५०॥ एतेऽमुष्मात्सर्पाः अत एव अगा न भवंतीति नागाः अतिवेगवंत इत्यर्थः भोगवतो जातत्वात् भोगेन फणेन उरु विस्तीर्णा कंधरा येषां सर्वे चैनेतत् क्रोधयोगात् क्रूराः तेषां अवांतरजातिभेदः सर्पसिद्धांते प्रसिद्धः ४८ यदा मन्यमानोऽभूत्तदा मनून् ससर्ज ४९ तेभ्यः स्वीयं पुरुषं पुरुषाकारं पुरं देहं अत्यसृजत् ददौ तान् मनून् ५०॥

तेनत्वयात्कृतंसुकृतंनत्वमाहुः यस्मिन्ननुसर्गक्रिया अग्निहोत्राद्याः अतोस्मिन्सर्वैर्वयंसाकंसहअन्नंहविर्भागादिअद
मभक्षयामहेवेब्रह्मन् ५१ कायस्तृष्टिमुक्का ऋषीणांसृष्टिमाह तपसेति विद्याउपासनायोगोऽत्रासनादिः सुसमाधिः
वैराग्यैश्वर्यादियुक्तः समाधिः तेनचयुक्तः हृषीकेशः स्ववशेंद्रियः सन् ऋषिः ब्रह्माऋषीनप्रजाः ससर्ज ५२ किंत

अहोएतज्जगत्स्रष्टः सुकृतंवततेकृतं प्रतिष्ठिताक्रियायस्मिन्साकमन्नमदामहे ५१
तपसाविद्ययायुक्तोयोगेनसुसमाधिना ऋषीनृषिर्हृषीकेशः ससर्जाभिमताःप्रजाः
५२ तेभ्यश्चैकैकशः स्वस्यदेहस्यांशमदादजः यत्तत्समाधियोगर्द्धितपोविद्याविर
क्तिमत् ५३ ॥इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविंशतितमोध्यायः २० श्रीवि
दुरउवाच स्वायंभुवस्यचमनोर्वंशः परमसंमतः कथ्यतांभगवन्यत्रमैथुनेनैधिरे
प्रजाः १ प्रियव्रतोत्तानपादौसुतौस्वायंभुवस्यवै यथाधर्मंजुगुपतुःसप्तद्वीपवतीं
महीं २ तस्यवैदुहिताब्रह्मन्देवहूतीतिविश्रुता पत्नीप्रजापतेरुक्ताकर्दमस्यत्व
याऽनघ ३॥ एतद्देहंयस्यांशमदादित्यत आह यदिति समाधिश्चयोगश्चतत्रर्द्धिश्चऐश्वर्यंतपश्चविद्याचा
विरक्तिश्चविद्यंतेयस्मिनततत ५३॥इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेटीकायांविंशतितमोध्यायः २० एकविं
शतपाविद्यामोषितेननतुविष्णुनाकर्दमस्यमनोःपुत्र्याविवाहघटनोच्यते १ए धिरेएधांचक्रिरे १ धर्मंमहीचयथाज

२१
श्री·भा·
७०

योगलक्षणेर्यमादिभिः युक्तायां कतिधावीर्य्यसमर्ज्जकतिपुत्रानुत्पादयामासेत्यर्थः ४ मनोःकन्यां आकूतिंचप्र
सूतिंचभार्यांलब्ध्वायथाभूतानिससर्ज्जतत्त्ववदेतिचकारस्यार्थः ५ सहस्राणांसमादशदशसहस्राणिसंवत्सरानित्यर्थः
६ ततस्तस्मिंस्तपसिक्रियायोगेनपूजाप्रकारेणसंप्रपेदेसिषेवेप्रपन्नेभ्योभक्तेभ्योवरदातारं ७ शब्दैकवेद्यंयद्ब्रह्मतन्म

तस्यांसवैमहायोगीयुक्तायांयोगलक्षणैः ससर्जकतिधावीर्यंतन्मेशुश्रूषवेवद ४
रुचिर्योभगवान्ब्रह्मन्दक्षोवाब्रह्मणःसुतः यथाससर्जभूतानिलब्ध्वाभार्यांचमानवीं।
५ श्रीमैत्रेयउवाच॥ प्रजाःसृजेतिभगवान् कर्द्दमोब्रह्मणोदितः सरस्वत्यांतपस्तेपेस
हस्राणांसमादश ६ ततःसमाधियुक्तेनक्रियायोगेनकर्दमः संप्रपेदेहरिंभक्त्याप्रप
न्नवरदाशुषम् ७ तावत्प्रसन्नोभगवान्पुष्कराक्षःकृतेयुगे दर्शयामासतंक्षत्तः शा
ब्दंब्रह्मदधद्वपुः ८ सतंविरजमर्काभंसितपद्मोत्पलस्रजं स्निग्धनीलालकव्रातव
क्त्राब्जंविरजोंवरं ९ किरीटिनंकुंडलिनंशंखचक्रगदाधरम् श्वेतोत्पलक्रीडनकंमनःस्प
र्शस्मितेक्षणम् १०॥ यंवपुर्द्दधत्तंप्रत्यात्मानंदर्शयामास ८ सकर्द्दमस्तंखेऽवस्थितंदृष्ट्वामूर्द्ध्नाक्षितावप
तत्गीर्भिश्चाभ्यगृणात् इतिचतुर्णामन्वयः पद्मोत्पलेदिनरात्रिविकासेसितानांपद्मानांउत्पलानांचस्रग्यस्यतंस्नि।
ग्धानीलाश्चयेअलकास्तेषांव्रातोयस्मिन्वक्त्राब्जेयस्य ९ श्वेतोत्पलंक्रीडनकंयस्यमनःस्पर्शमनस्यानंदजनकंस्मितमीक्ष

राम
११

वक्षसि श्रीर्यस्य तं कौस्तुभः कंधरायां यस्य ११ प्रीतिरेव स्वभावः स्वतः सिद्धो धर्मो यस्य तथाविधः आत्मा मनो यस्य १२
त्वामृते परमानंदं धिगन्यवरकामुकं अथापि कृपणं माऽनुगृहाण वरदानतः वतेति हर्षे हे ईड्य नोऽस्माभिः समग्रा
सत्त्वनिधेस्तव दर्शनात् अद्याक्ष्णोः सांसिध्यं साफल्यं जुष्टं सेवितं त्वद्दर्शनमेव महाफलमित्युपपादयति यस्य तव दर्शने
नेसद्भिरुत्तरोत्तरमापादितप्रकर्षैर्जन्मभिः रूढो विरूढो योगो यैस्तेपि १३ सकाममभक्तान् विगर्हयन्नाह यइति हे ईश ये निरये।

विन्यस्तचरणांभोजमंसदेशे गरुत्मतः दृष्ट्वा खेऽवस्थितं वक्षःश्रियं कौस्तुभकंधरम् ११
जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः गीर्भिस्त्वभ्यगृणात्प्रीतिस्वभावात्मा कृतांजलिः
१२ श्रीऋषिरुवाच जुष्टं बताद्याखिलसत्त्वराशेः सांसिध्यमक्ष्णोस्तव दर्शनान्नः यद्दर्शनं
जन्मभिरीड्य सद्भिराशासते योगिनो रूढयोगाः १३ ये माययाते हतमेधसस्त्वत्पादारविंदं
भवसिंधुपोतं उपासते कामलवाय तेषां रासीश कामान्निरयेपि ये स्युः १४ तथा स चाहं प
रिवोढुकामः समानशीलां गृहमेधधेनुम् उपेयिवान्मूलमशेषमूलं दुराशयः कामदुघांघ्रि पस्य

पिस्युः तेषां कामानां लवाय ये त्वन्मायया नष्टबुद्धयस्त एवोपासते त्वं तु तेषां तान् कामानपि रासि ददासि १५
१४ यः सकामान्विदामि सोहमपि तादृश एवेत्याह तथेति गृहमेधो गृहाश्रमः तत्र धेनुं त्रिवर्गदोग्ध्रीं भार्यां परिवोढु
कामः परिणेतुमिच्छन् कामदुघांघ्रिपस्य कल्पद्रुमस्य तव पादमूलमंघ्रिं उपेयिवान् उपगतोस्मि ननु कामाद्यर्थमन्य
त् किमप्युपासतां नयतः अशेषस्य पुरुषार्थस्य मूलमेतदेव १५॥

नतु तर्हि मुक्त्यर्थमेव किं न भजसि अनधिकारादित्याह हे ऽधीश यस्त्वं प्रजापतिस्तस्य तव वचसा तंत्या अयं कामहतो लोकः पशुवद्बद्धः हे शुक्ल धर्ममूर्ते अहं च किल लोकानुगतः अतस्तुभ्यं बलिं वहामि कर्ममयीं त्वदाज्ञामनुवर्त्ते अनिमिषाय कालात्मने तदर्थं भार्यां चेच्छामीति चकारस्यार्थः न केवलं लोकानुगतो बलिं वहामि किंतु ऋणत्रयाऽपाकरणार्थमिति किले त्युक्तम् १६ अनिमिषायेति अनेन कालात्मकात्त्वत्तो भीतः कर्म करोमीत्युक्तं एतन्नु भयं त्वद्भक्तानां नास्तीत्याह द्वाभ्यां लोकान्कामाभिभूतान् तान् अनुसृतान् पशूंश्च विवेके सत्यपि पुनः कर्मजडान्मादृशान् हित्वा अनादृत्य ये तव चरणरूपं आतपत्रं आश्रिताः तानेवाह त्वद्गुणानां वादः कथा स एव सीधु मदिरा संसारविस्मारकत्वात् पीयूषं रुचिकरत्वात् तेन निर्यापिता विलापिता

प्रजापतेस्ते वचसाऽधीश तंत्या लोकः किलायं कामहतोनुबद्धः अहं च लोकानुगतो वहामि बलिं च शुक्लानिमिषाय तुभ्यम् १६ लोकांश्च लोकानुगतान्पशूंश्च हित्वा श्रितास्ते चरणातपत्रम् परस्परं त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्माः १७ न ते ऽजराक्षभ्रमिरायुरेषां त्र-योदशारं त्रिशतं षष्टिपर्व षण्नेम्यनंतच्छदि यत्त्रिणाभि करालस्रोतो जगदाच्छिद्य धावत्

देहधर्माः क्षुत्पिपासादयो यैः एषामित्युत्तरेणान्वयः १७ तव यत् त्रिणाभि कालचक्रं तत् जगत् आच्छिद्य आकृष्य धावदपि एषां तद्भक्तानामायुराच्छिद्य धावन्न भवति कथंभूतं अजरं ब्रह्म तस्मिन् अक्षरूपेण भ्रमिर्भ्रमणं भ्रमदिति वक्तव्ये अतिभ्रमणशीलत्वात् उपचारेण भ्रमिरित्यभेदनिर्देशः अधिकमासेन सह त्रयोदश मासा आरा यस्य त्रिशतषष्टिश्चाहोरात्राः पर्वाणि यस्य शतशब्दे विभक्तेरलुगार्षः षड् ऋतवो नेमयो यस्य अनंताः क्षणलवादयः छदाः पत्राणि पत्राकाराः धाराः संति यस्य त्रीणि चातुर्मास्यानि नाभय आधारभूतानि वलयानि यस्य करालस्रोतः तीव्रवेगं एतैर्विशेषणैः संवत्सरात्मकं चक्रं उक्तं

ननुनिरूपाधिमुदासीनंमांकिंत्वंयाचसेतथापिमाययाविश्वसृष्ट्यादिकर्तृत्वात्त्वमेवयाच्यइत्याहस्वयमेकएवसन्नपिश्री
मन्यधिकृतयायोगमाययाहेतुनायाःस्वीकृताःशक्तयःसत्वाद्यास्ताभिःअदोविश्वंस्वव्यतिरिक्तसाधनानपेक्षत्वेदृष्टांतःयथे
ति १८ यद्यपिमायिकत्वादुक्तेभ्योविषयसुखंदातुंनेच्छसितथाप्यस्मदभिप्रायानुसारेणतत्संपादयेत्याहनैतदिति हे
अधीशनोऽस्माकंभजतांभूतसूक्ष्मरूपंपदंशब्दादिविषयसुखंमाययातनुषेविस्तारयसीतियत्एतत्तवयद्यपीप्सितंन

एकःस्वयंसन्नुजगतःसिसृक्षयाद्वितीययात्मन्नधियोगमायया सृजस्यदःपासिपुनर्ग्रसि
ष्यसेयथोर्णनाभिर्भगवान्स्वशक्तिभिः १९ नैतद्वताधीशपदंतवेप्सितंयन्माययानस्तनुषे
भूतसूक्ष्मम् अनुग्रहायाऽस्त्वपियर्हिमाययालसत्तुलस्यातनुवाविलक्षितः २० तंत्वानुभू
त्योपरतक्रियार्थंस्वमाययावर्तितलोकतंत्रं नमाम्यभीक्ष्णंनमनीयपादसरोजमल्पीयसि
कामवर्षं २१ ऋषिरुवाच इत्यर्चलीकंप्रणुतोऽब्जनाभस्तमावभाषेवचसाऽमृतेनःसुपर्ण
पक्षोपरिरोचमानःप्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः २२ ॥ भवतितथाप्यस्मदनुग्रहायास्तुअत्र॥
यापाकरणानंतरमेवापवर्गायभवत्वित्यर्थःयर्हियतःमाययापरिच्छिन्नस्वलसत्यातुलस्यायुक्तस्त्वंविलक्षितोसि ए
वंभूतस्यतवदर्शनंनयतोभुक्तिमुक्तिप्रदमित्यर्थः २० तंत्वात्वाभुक्तिमुक्तिप्रदंनमामिमुक्तिदत्वेहेतुःअनुभूत्याज्ञानेनउपर
तःक्रियार्थःकर्मफलभोगोयस्मिन्भोगदत्वेहेतुःस्वमाययाआवर्तितंलोकतंत्रंविश्वोपकरणंयेनअतस्तस्सकामैर्निष्का
मैश्चनमनीयंपादसरोजयुगंयस्यतंतत्रअल्पीयसिसकामेपुंसिभजनेवाकामानुवर्षतीतितथातं २१ अमृतेनसुखकं

२१
भा॰ तृ॰
७८

चित्तंमहार्हंभावं मेमयासमयोजिसंघटितं यदर्थमेवाहंसमर्चितःतत् २३ मयिसंग्रभितःसंरक्षीतःएकाग्रीकृतःआत्माचि
त्तंयैस्तेषांयत्मदर्हणंत्वादृशेषुअतितरांसर्वथामृषानिष्फलंनस्यात् २४ विख्यातंमंगलंअभ्युदयःसदाचारादिलक्षणं

श्रीभगवानुवाच विदित्वातवचैत्यंमेपुरैवसमयोजितत् यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः २३ नवैजातुमृषैवस्यात्प्रजाध्यक्षमदर्हणं भवद्विधेष्वतितरांमयिसंग्रभिता त्मनाम् २४ प्रजापतिसुतःसम्राट्मनुर्विख्यातमंगलः ब्रह्मावर्त्तंयोधिवसन्शास्तिस प्तार्णवांमहीम् २५ सचेहविप्रराजर्षिर्महिष्याशतरूपया आयास्यतिदिदृक्षुस्त्वांपर श्वोधर्मकोविदः २६ आत्मजामसितापांगींवयःशीलगुणान्वितां मृगयंतींपतिंदास्य त्यनुरूपायतेप्रभो २७ समाहितंतेहृदयंयत्रेमान्परिवत्सरान् सात्वांब्रह्मन्नृपवधूःका मम्माशुभजिष्यति २८ यातआत्मभृतंवीर्यंनवधाप्रसविष्यति वीर्येत्वदीयेऋषयआ धास्यंत्यंजसात्मनः २९ त्वंचसम्यगनुष्ठायनिदेशंमेउशत्तमः मयितीर्थीकृताशेषक्रियार्थो मांप्रपत्स्यसे ३० ॥९॥ यस्य २५ हेविप्रमहिष्यासह २६ २७ यत्रयस्यांभार्यायांसमाहितंअभिसंधानेनस्थितं नृपवधूराजकन्या २८ तेवीर्यंआत्मनिभृतंधृतंयाप्रसविष्यतिसाभजिष्यतिवीर्येवीर्यप्रसूतासुकन्यासुअंजसाआत्म नःपुत्रानाधास्यंति २९ निदेशमाज्ञांमुशत्तमःशुद्धसत्त्वःतीर्थपात्रंतेनदानेनलक्ष्यतेमयिसमर्पितसर्वकर्मफलइत्यर्थः ३०

राम
७८

गार्हस्थ्येन दयां कृत्वा संन्यासेनाभयं दत्त्वा मयि आत्मानं जगच्च सह एकीभूतं द्रक्ष्यसि ३१ त्वद्वीर्येण सह देवहूत्यां अ-
वतीर्येति शेषः ३२ प्रत्यग्भूतेष्वक्षेषु जायते आविर्भवतीति प्रत्यगक्षजः सरस्वत्या नद्या परिश्रितात् परिवेष्टितात् ३३
अशेषैस्तपोमंत्रादिसिद्धेश्वरैः अभिष्टुतः सिद्धमार्गः वैकुंठमार्गो यस्य यद्वा अशेषसिद्धेश्वराभिष्टुतश्चासौ सिद्धैर्मृग्यत
इति सिद्धमार्गश्च स ययौ पत्ररथेंद्रो गरुडस्तस्य पक्षैरुदीर्णमभिव्यक्तसामाकर्णयन् बृहद्रथंतरे पक्षाविति श्रुतेः उ-

कृत्वा दयां च जीवेषु दत्त्वा चाभयमात्मवान् मय्यात्मानं सह जगत् द्रक्ष्यस्यात्मनि चापि
माम् ३१ सहाहं स्वांशकलया त्वद्वीर्येण महामुने तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहितां
३२ मैत्रेय उवाच एवं तमनुभाष्याथ भगवान् प्रत्यगक्षजः जगाम विंदुसरसः सरस्वत्या परि-
श्रितात् ३३ निरीक्षतस्तस्य ययावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः आकर्णयन् पत्रर-
थेंद्रपक्षैरुच्चारितं स्तोममुदीर्णसाम ३४ अथ संप्रस्थिते शुक्ले कर्दमो भगवान् ऋषिः आ-
स्ते स्म विंदुसरसि तं कालं प्रतिपालयन् ३५ मनुः स्यंदनमास्थाय शातकौंभपरिच्छदम्॥
आरोप्य स्वां दुहितरं सभार्यः पर्यटन्महीं ३६ तस्मिन्सुधन्वन्नहनि भगवान्यत्समादि-
शत्॥

च्चारितं स्तोमं च सामाधारभूतानामृचां समुदायं शृण्वन् स्तोमश्चात्मेति श्रुतेः समासपाठे उच्चारितः स्तोमः
स्तोत्रीय ऋक्समुदायो यस्य साम्न इति ३४ तं कालं परश्व इत्युक्तं प्रतीक्षमाणः ३५ शातकौंभाः सौवर्णाः परिकरा यस्मिन्
तं रथमास्थाय दुहितरं चारोप्य वरान्वेषणार्थं पर्यटन् ३६ हे सुधन्वन्॥

विदूरयत् श्रमः ३७ तत्प्रवेशमात्रेणपरमानंदंप्राप्नइतिदर्शयितुंआश्रमंवर्णयति यस्मिन्नित्यादिभिः सप्तभिः श्लोकैः प्रपन्नेकर्द्दमे ३८ शिवमारोग्यममृतवत्स्वादुजलंयस्मिन् ३९ कूजंतः पुण्यामृगाः द्विजायेषुतैः पुण्यद्रुमलतानांजालैः समूहैर्युक्तम् ४० घुष्टंनादितम् मत्तभ्रमराणांविभ्रमः विनोदोयस्मिन् मत्ताबर्हिणएवनटास्तेषामाटोपोनृत्यसं

उपायादाश्रमपदंमुनेः शांतव्रतस्यतत ३७ यस्मिन्भगवतोनेत्रान्न्यपतन्नश्रुबिंदवः कृपयासंपरीतस्यप्रपन्नेऽर्पितयाभृशम् ३८ तद्वैबिंदुसरोनामसरस्वत्यापरिप्लुतम् पुण्यंशिवामृतजलंमहर्षिगणसेवितम् ३९ पुण्यद्रुमलताजालैःकूजत्पुण्यमृगद्विजैः सर्वर्तुफलपुष्पाढ्यंवनराजिश्रियाऽन्वितम् ४० मत्तद्विजगणैर्घुष्टंमत्तभ्रमरविभ्रमम् मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम् ४१ कदंबचंपकाशोककरंजबकुलासनैः कुंदमंदारकुटजैश्चूतपोतैरलंकृतम् ४२ कारंडवैः प्लवैर्हंसैः कुररैर्जलकुक्कुटैः सारसैश्चक्रवाकैश्चचकोरैर्वल्गुकूजितम् ४३ तथैवहरिणैःक्रोडैःश्वाविद्गवयकुंजरैःगोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ४४ प्रविश्यतत्तीर्थवरमादिराजः सहात्मजः ददर्शमुनिमासीनंतस्मिन्हुतहुताशन

भ्रमोयस्मिन् आह्वयंतः मिथोमत्ताः कोकिलायस्मिन् ४१ कदंबादिभिर्वृक्षैरलंकृतम् ४२ कारंडवादिभिः पक्षिभिः वल्गुयथातथाकूजितम् ४३ हरिणादिभिर्वृतम् तत्रक्रोडः सूकरः श्वावित् शल्लकः मर्कोमर्कटः तद्विशेषागोपुच्छाः हरिर्वानरः

उग्रायुक् योगोयस्यतेनवपुषाविद्योतमानम् ४६ तस्यभगवतोव्याहृतंभाषणमेवअमृतकला अमृतमयस्यचंद्रस्यकला तन्म
यंपीयूषतस्यश्रवणेनचनातिक्षामंतपसाकृशंसंतमप्यकृशम् प्रांशुमुन्नतम् उपसंसृत्यसमीपंगत्वामलिनंददर्शेतिपूर्वे
वक्रिया अर्ह्यते अनेनेति अर्हणं महार्हत्वंतत् असंस्कृतमनिर्णिक्तंयथामलिनंदृश्यतेतद्वत् ४७ उटजंपर्णशालांप्राप्तम्
पुरःपादसमीपेप्रणतम् आशीर्भिरभिनंद्यसपर्ययापूज यापत्यगृह्णात्सत्कृतवान् ४८ ४९ तेचंक्रमणंपर्यटनंहियस्मा

विद्योतमानंवपुषातपसुग्रयुजाचिरम् नातिक्षामंभगवतःस्निग्धापांगावलोकनात् ४६
तद्व्याहृतामृतकलापीयूषश्रवणेनच प्रांशुंपद्मपलाशाक्षंजटिलंचीरवाससम् उपसंसृ
त्यमलिनंयथाऽर्हणमसंस्कृतम् ४७ अथोटजमुपायातंनृदेवंप्रणतंपुरः सपर्ययापर्य
गृह्णात्प्रतिनंद्यानुरूपया ४८ गृहीतार्हणमासीनंसंयतंप्रीणयन्मुनिः स्मरन्भगवदा
देशमित्याहश्लक्ष्णयागिरा ४९ नूनंचंक्रमणंदेवसतांसंरक्षणायते वधायचासतांयत्त्वंह
रेःशक्तिर्हिपालिनी ५० योऽर्केंद्वग्नींद्रवायूनांयमधर्मप्रचेतसाम् रूपाणिस्थानआधत्सेत
स्मैशुक्लायतेनमः ५१ नयदारथमास्थायजैत्रंमणिगणार्पितम् विस्फूर्जच्चंडकोदंडोरथेनत्रास
ते ५० मनुस्थंविष्णुंप्रणमतियइति स्थानेतत्तत्कार्यावसरे शुक्लायविष्णवे ५१ नयदेतिपंचानामयमर्थः यन्नघान् ५२
र्थे यद्यपिधर्मरक्षार्थंम सर्वतः पर्यटतस्तवप्रसंगादस्यागमनंसंभवति तथाऽपिविशेषकार्यंचेदस्तितत्कथ्यतामितिजै
त्रंजयशरस्म मणिगणाअर्पितायस्मिन्तंरथमारुह्यत्वंयदाभुवोमंडलंनपर्यटसितदासतवोमिघोरन्नितित्रयाणामन्वयः

स्वसैन्यस्य चरणैः क्षुण्णं संघट्टितं ५३ वर्णाश्रमाणां निबंधनं यैः वत अहो ५४ निरंकुशैर्नृभिर्निमित्तभूतैः शयाने निश्चिंते ५५ निर्व्यलीकेन संहर्षेण प्रतिपद्यामहे स्वीकुर्म्महे ५६ इति तृतीयस्कंधे टीकायामेकविंशः २१ द्वाविंशे कर्दमाय आराद्वया आदिष्टं हि विस्नुना मनुर्दुहितरं देवहूतिमित्युपनर्ण्यते १ एवमाविष्कृतः अभिष्टुतः अशेषाणां गुणानां कर्म्मणां

स्वसैन्यचरणक्षुण्णं वेपयन्मंडलं भुवः विकर्षन्बृहतीं सेनां पर्यटस्यंशुमानिव ५३
तदैव सेतवः सर्व्वे वर्णाश्रमनिबंधनाः भगवद्रचिता राजन्भिद्येरन्बत दस्युभिः ५४
अधर्म्मश्च समेधेत लोलुपैर्व्यंकुशैर्नृभिः शयाने त्वयि लोकोयं दस्युग्रस्तो विनंक्ष्यति
५५ अथापि पृच्छे त्वां वीर यदर्थं त्वमिहागतः तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ५६
॥ इति श्रीभागवते महापुराणे तृतीयस्कंधे एकविंशतितमोध्यायः २१ मैत्रेय उवाच ॥
एवमाविष्कृताशेषगुणकर्म्मोदयो मुनिं सव्रीड इव तं सम्राडुपारतमुवाच ह १ मनुरु
वाच ब्रह्मासृजत्स्वमुखतो युष्मानात्मपरीप्सया छंदोमयस्तपोविद्यायोगयुक्तानलंप

टान् २



च उदयः उत्कर्षो यस्य स तं सम्राट् मनुः सव्रीड इव स्वकीर्त्तिश्रवणात् प्रत्याख्यानशंकया वा तं मुनिमु
वाच उपारतं इति निरतं १ मदीया कन्या त्वया परिणेयेति विज्ञापयिष्यन् युष्मदस्मत्संबंधस्तावदीश्वरेण पूर्वमेव
घटित इत्याह ब्रह्मेति साद्धैभ्यां आत्मनः परीप्सया पर्याप्तुमिच्छया छंदोमयस्यात्मनः पर्याप्तिः पालनं वेदप्रवर्त्तनं

तत्त्राणाय ब्राह्मणपालनाय ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः ३ एवं स देव एव रक्षति स्म को सौ अयः सदसदात्मकः सर्वात्मकः तथाप्यव्ययो निर्विकारः ४ नं विज्ञापयितुमेव तद्दर्शनादिकमभिनंदति तवेति त्रिभिः ५ ६ अनुग्रहो ऽनुशासनादिरूप एव उशतीः उशत्यः ७ विज्ञापयति स भवानिति सप्तभिः दुहितुः स्नेहेन परिक्लिष्ट आत्मा यस्य

तत्त्राणाय सृजच्चास्मान् दोःसहस्रात् सहस्रपात् हृदयं तस्य हि ब्रह्म क्षत्रमंगं प्रचक्षते ३
अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः रक्षति स्माव्ययो देवः स यः सदसदात्मकः ४ ॥
तव संदर्शनादेव च्छिन्ना मे सर्व संशयाः यत्स्वयं भगवान्प्रीत्या धर्ममाह रिरक्षिषोः ५ दि
ष्ट्या मे भगवान्दृष्टो दुर्दर्शो यो ऽकृतात्मनां दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा मे भवतः शिवम्
६ दिष्ट्या त्वयानुशिष्टोऽहं कृतश्चानुग्रहो महान् अपावृतैः कर्णरंध्रैर्जुष्टा दिष्ट्योशतीर्गिरः
७ स भवान्दुहितृस्नेहपरिक्लिष्टात्मनो मम श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ८
प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम अन्विच्छति पतिं युक्तं वयःशीलगुणादिभिः ९
यदा तु भवतः शीलश्रुतरूपवयोगुणान् अशृणोन्नारदादेषा त्वय्यासीत्कृतनिश्चया १०
तत्प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपहृतां मया सर्वात्मनाऽनुरूपां ते गृहमेधेषु कर्मसु ११ ॥
श्रावितं विज्ञापनं ८ प्रियव्रतोत्तानपदोः स्वसेति पुत्रिकाकरणशंकानिरासाम मसुतेति क्षत्रकन्यात्व योग्यतिदर्शितं ९ १०

अ॰
भा॰टी॰
८२

उद्यतस्य स्वतः प्राप्तस्य विषयस्य प्रतिवादः प्रत्याख्यानं १२ कीनाशं कृपणं अवज्ञया पराप मानेन १३ यस्य सावधि
ब्रह्मचर्य्यस्य उपकुर्वाणः प्रत्तां मया दत्तां १४ अप्रत्ता चेति मय्येव कृतनिश्चयत्वात् कस्मैचित् प्रतिश्रुता च न भवती।
त्यर्थः आद्यः प्रथमः ततः पूर्वविवाहाभावात् मुख्य इति वा १५ भूयात् भवेत् प्रतीतः गृह्णामि ते सो भगत्वाय हस्त।

उद्यतस्य हि कामस्य प्रतिवादो न शस्यते अपि निर्मुक्तसंगस्य कामरक्तस्य किं पुनः १२
य उद्यतमनादृत्य कीनाशमभियाचते क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः १३ अ
हं त्वाऽशृणवं विद्वन् विवाहार्थं समुद्यतम् अतस्त्वमुपकुर्वाणः प्रत्तां प्रतिगृहाण मे १४
ऋषिरुवाच बाढमुद्वोढुकामोऽहमप्रत्ता च तवात्मजा आवयोरनुरूपोऽसावाद्यो वैवा
हिको विधिः १५ कामः संभूयान्नरदेव तस्याः पुत्र्याः समाम्नाय विधौ प्रतीतः कण्वते
तनयां नाद्रियेत स्वयैव कान्त्याक्षिपतीमिव श्रियं १६ यां हर्म्यपृष्ठे क्वणदंघ्रिशोभां वि
क्रीडतीं कंदुकविह्वलाक्षीं विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्य संमोहविमूढचेताः
१७ तां प्रार्थयंतीं ललनाललामामसेवितश्रीचरणैरदृष्टां॥१८ त्वं मया पत्ये त्यादि मंत्रप्रसिद्धः स्व
याऽंगकांत्यैव श्रियं विभूषणादि शोभां १६ यां विलोक्य न्यपतत् संमोहेन विमूढं व्याकुलं चेतो यस्य क्वणद्ध्वानं घ्रि
भ्यां शोभा यस्यास्तां १७ तां ललनानां ललामं भूषणभूतां असेवितो श्रियश्चरणौ यैस्तैरदृष्टां द्रष्टुमप्ययोग्यां॥

राम
८२

उच्चपदः उत्तानपादस्य अभियातां स्वयंप्राप्तां १८ भजिष्ये स्वीकरिष्ये यावदपत्योत्पत्तिस्तावद्गार्हस्थ्यं ततः परं सन्या
सइतिभावावंधः समयः तमेवाह यावत् आत्मनो मम च तेजो गर्भे विभृयात् यद्वा ममात्मनो देहात् च्युतं तेजो वीर्यं विभृ॥
यादिति अतः परं पारमहंसं ज्ञानं तस्मिन् मुख्यान् शुक्लेन विष्णुना साक्षात्मकर्षेणोक्तान् अविहिंस्रान् हिंसारहितान्
न् शमादीन् बहु यथा भवति एवमनुष्ठेयान् मन्ये १९ ननु तव पितुः प्रजापतेराज्ञा सृष्टावेव न संन्यासे तत्राह यत इति॥

वत्सां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभियातां १८ अतो भजिष्ये समयेन सा
ध्वीं यावत्तेजो विभृयादात्मनो मे अतो धर्म्मान्पारमहंसमुख्यान्शुक्लप्रोक्तान्बहु मन्येऽ
विहिंस्रान् १९ यतोऽभवद्विश्वमिदं विचित्रं संस्थास्यते यत्र च वावतिष्ठते प्रजापतीनां प
तिरेष मह्यं परं प्रमाणं भगवाननंतः २० मैत्रेय उवाच स उग्रधन्वन्नियदेवाबभाषे आसी
त्तूष्णीमरविंदनाभं धियोपगृह्णन्स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः २१ सो
नुज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटं तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः २२ श
तरूपा महाराज्ञी पारिवर्हान्महाधनान् दंपत्योः पर्यदात्प्रीत्या भूषावासः परिच्छदान् २३

संस्थास्यते च लयं यास्यति वा वेति एवार्थे ऋणत्रयापाकरणानंतरं संन्यास एवमादृशान्नो भगवतोक्त इत्यर्थः २० हे उग्रधन्व
न् लुलुभे मुनेर्मुखेन प्रलोभ्य तेस्म यद्वा मुखेन प्रलोभितवान् २१ सः मनुः अनु अनंतरं महिष्याश्च व्यवसितं निश्चयं ज्ञात्वा २२ पा
रिवर्हान् विवाहकाले प्रदेयान् भूषाः भूषणानि च वासांसि च परिच्छदान् गृहोपकरणानि च २३॥

२२
भा·तृ·
८३

प्रत्तांप्रदत्तांसदृक्षायसदृशायगताव्यथाचिंतायस्य औत्कंठ्येनोन्मथितः क्षुभितआशयोयस्य २४ तस्याविरहंसोढुंहे अंव
हेवत्सेइतिब्रुवन् संधिरार्षः शिखाः केशानासिंचन् २५ ऋषिकुलहितायाः उभयोः सुरोधसोः शोभननतटयोः २७ अ
भिप्रेत्यज्ञात्वाब्रह्मावर्तदेशात्प्रजाः प्रजापतिंप्रत्युज्जग्मुः २८ कोसौब्रह्मावर्तइत्यपेक्षायामाहयत्रवर्हिष्मतीनामपुरी

प्रत्तांदुहितरंसम्राट्सदृक्षायगतव्यथः उपागुह्यचवाहुभ्यांऔत्कंठ्योन्मथिताशयः २४
अशक्नुवंस्तद्विरहंमुंचन्वाष्पकलांमुहुः आसिंचदंववत्सेतिनेत्रोदैर्दुहितुःशिखाः २५
आमंत्र्यतंमुनिवरमनुज्ञातः सहानुगः प्रतस्थेरथमारुह्यसभार्यःस्वपुरंनृपः २६ उभयो
ऋषिकुल्यायाःसरस्वत्याः सुरोधसोः ऋषीणामुपशांतानांपश्यन्नाश्रमसंपदः २७
तमायांतमभिप्रेत्यब्रह्मावर्तात्प्रजापतिं गीतसंस्तुतिवादित्रैःप्रत्युदीयुः प्रहर्षिताः २८
वर्हिष्मतीनामपुरीसर्वसंपत्समन्विता न्यपतन्यत्ररोमाणियज्ञस्यांगंविधुन्वतः २९
कुशाःकाशास्तएवासन्शश्वद्धरितवर्चसः ऋषयोयैःपराभाव्ययज्ञघ्नान्यज्ञमीजिरे ३०
कुशकाशमयंवर्हिरास्तीर्यभगवान्मनुः ॥ तिसापिकुत्रयत्रयज्ञस्ययज्ञवराहस्यरोमाणिन्यपतन्निपतितानियत्रे
तिसर्वत्रसंवध्यते २९ वर्हिष्मतीनामनिरुक्तिंब्रुवन्प्रसंगाद्देशस्यश्रैष्ठ्यमाहद्वाभ्यांकुशाःकाशाश्चासन् शश्वत्तनि
त्यंहरितंवर्चोवर्णोयेषांयज्ञघ्नान्राक्षसादीन्पराभवंनीत्वायज्ञंविष्णुं ३० यज्ञपुरुषंविष्णुंयजतइतियत्रायजतभुवस्थानंलब्ध्वा

राम
८३

यांतेलब्धवान् सन्नित्यर्थः यतोलब्धवान् तं यज्ञपुरुषं इतिवास्वर्गादपिभूमिः श्रेष्ठा तत्रापि तस्थानं श्रेष्ठमित्युक्तं भवति ३१
प्रस्तुतमाह यांवर्हिष्मतींनामपुरीं समावसत् पूर्वं यस्यामुषितः तस्यां निर्विश्य भवनं प्रविष्टः सन् कामभोगान् वुभुजे इत्यन्वयः
अन्येषां धर्म्मादीनामविरोधेन ३२ प्रत्यूषेषु उषस्सु संगीयमाना सत्कीर्त्तिर्यस्य तथापि स्वयं हरेरेवकथाः शृण्वन् भोगान्
वुभुजे उक्तंच गृहेष्वाविसतांपुंसांविषयाणिचसेवतां मद्वार्त्तायातयामानांनवंधायगृहामता ३३ योगमायासु ऐच्छिक

अयजद्यज्ञपुरुषं लब्धा स्थानं यतो भुवं ३१ वर्हिष्मतींनाम विभुर्यांनिर्विश्य समावसत्
तस्यां प्रविष्टो भवनं तापत्रयविनाशनं सभार्यः सप्रजः कामान्वुभुजेऽन्याविरोधतः ३२ सं
गीयमानसत्कीर्त्तिः सस्त्रीभिः सुरगायकैः प्रत्यूषेष्वनुवद्धेन हृदा शृण्वन् हरेः कथाः ३३ नि
ष्णातं योगमायासु मुनिं स्वायंभुवं मनुं यद्भ्रंशयितुं भोगा न शेकुर्भगवत्परं ३४ अयात
यामास्तस्यासन् यामाः स्वान्तरयापनाः शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ३५
स एवं स्वान्तरं निन्ये युगानामेकसप्ततिं वासुदेवप्रसंगेन परिभूतगतित्रयः ३६ शारीरा
मानसा दिव्या वैयासे ये च मानुषाः भौतिकाश्च कथं क्लेशा वाधन्ते हरिसंश्रयं ३७ एभोगास्चनासुप

द्यतः आभ्रंशपितुं आईषदपिभ्रंशयितुं अभिभवितुं ३४ अतः यातोयामोयस्यपक्वस्यान्नस्यतद्गतसारं भवति अतो अन्यदपि
गतसारं यातयाममुच्यते अयातयामाः अगतसाराः आसन् स्वान्तरंतदीयंमन्वंतरं यापयंतिनयंतिये यामाः कालावयवाः कु
र्वतः स्ववाकोरूपनिवध्नतः ३५ परिभूतं गतित्रयं जाग्रदादिसात्त्विकादिवायेन ३६ दिव्याः स्वर्गतरिक्षाः मानुषाः शत्रुप्रभवाः भौ

टिका श्रीभागवत स्कं ४ अ २८ ४३

तस्यत्तानातिशयमाहयइति नृणांसाधारणधर्मान् ३८ तस्यपदपत्यंदेवहूतिःतस्योदयंप्रभावं ३९ ॥इतिश्रीभागवतेमहापु
राणेतृतीयस्कंधेटीकायांद्वाविंशोध्यायः २२ त्रयोविंशेतपोयोगनिर्मितेसर्वसंपदि विमानेकामगेचित्रानयोरतिरुदीर्य्यते
१ प्रस्थितेगमनेकृतेसति १२ दंभंकपटं अघंनिषिद्धाचरणं तेजीयांसंअतितेजस्विनं ३ दैवाद्गरीयसः दैवादपिगुरुतः

यः एष्टो मुनिभिः प्राह धर्मान्नानाविधान् शुभान् नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा
३८ एतत्त आदिराजस्य मनोश्चरितमद्भुतं वर्णितं वर्णनीयस्य तदपत्योदयं शृणु ३९ ॥ इति
श्रीभागवते महापुराणे तृतीयस्कंधे द्वाविंशतितमोऽध्यायः २२ मैत्रेय उवाच पितृभ्यां प्रस्थि
ते साध्वी पतिमिंगितकोविदा नित्यं पर्यचरत्प्रीत्या भवानीव भवं विभुं १ विश्रंभेणात्मशौ
चेन गौरवेण दमेन च शुश्रूषया सौहृदेन वाचा मधुरया च भो २ विसृज्य कामं दंभं च द्वेषं
लोभमघं मदं अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत् ३ स वै देवर्षिवर्यस्तां मानवीं स
मनुव्रतां दैवाद्गरीयसः पत्युराशासानां महाशिषः ४ कालेन भूयसा क्षामां कर्शितां व्रत
चर्यया प्रेमगद्गदया वाचा पीडितः कृपयाब्रवीत् ५ तुष्टोऽहमद्य तव मानवि मानदायाः
शुश्रूषया परमया परया च भक्त्या यो देहिनामयमतीव सुहृत्स्वदेहो नावेक्षितः समुचितः क्षपितुं

तानदैवमपिअन्ययाकर्तुंसमर्थादित्यर्थः ४ व्रतचर्ययाकर्शितां तत्रापिभूयसाकालेनातिक्षामामित्यर्थः एमदर्थे ६॥
५ सहत्प्रियः मदर्थेक्षपयितुंनावेक्षितःनगणितः समुचितः श्लाघ्योपिमत्सेवासक्तयाउपेक्षितइत्यर्थः ६॥ ॥

तपश्च समाधिश्च विद्या च उपासना तासु यः आत्मयोगः चित्तैकाग्र्यं तेन विजिताः प्राप्ताः भगवत्प्रसादाः दिव्याः भो ॥
गाः तानेव ते अवरुद्धान् त्वयापि विशोकतान् प्रपश्य ते दिव्यां दृष्टिं वितरामि यया द्रक्ष्यसि ७ अन्ये पुनर्भोगाः ॥
किं न किमपि अतितुच्छा इत्यर्थः तत्र हेतुः भगवत उरुक्रमस्य या भ्रूः तस्या उज्जृंभो वक्रीभावस्तेन विध्वंसिताश्च ॥
र्थरचना मनोरथा ये षु निजधर्मेण याति ब्रत्येन दुह्यंत इति तथा तान् दुरधिगान् दुष्प्रापान् नृपावयमितियावि ॥

येमे स्वधर्मनिरतस्य तपः समाधिविद्यात्मयोगविजिता भगवत्प्रसादाः तानेव ते मदनुसे
वनयाऽवरुद्धान् दृष्टिं प्रपश्य वितराम्यभयानशोकान् ७ अन्ये पुनर्भगवतो भ्रुव उद्विजृं
भविभ्रंशितार्थरचनाः किमुरुक्रमस्य सिद्धाऽसि भुंक्ष्व विभवान्निजधर्मदोहान् दिव्यान्न
रैर्दुरधिगान्नृपविक्रियाभिः ८ एवं ब्रुवाणमबलाऽखिलयोगमायाविद्याविचक्षणम
वेक्ष्य गताधिरासीत् संप्रश्रयप्रणयविह्वलया गिरेषत्व्रीडाऽवलोकविलसद्धसितान
नाह ९ देवहूतिरुवाच राद्धं बत द्विजवृषैतदमोघयोगमायाऽधिपे त्वयि विभो तदवैमि भर्

क्रियास्तत्र तद्भोगविकृतयः ताभिः ८ अखिला योगमाया अवतंतदुपासनास्तासु विचक्षणं निपुणमेवं ब्रुवाणं पति
मवेक्ष्य गताधिर्निश्चिंता जाता संप्रश्रयो विनयः प्रणयः प्रेम ताभ्यां विह्वला गद्गदा तया गिरा ईषद्व्रीडासहितोयोऽव
लोकस्तेन विलसद्धसितमाननं यस्याः सा आह जगाद ९ बत इति हर्षे हे द्विजवृष द्विजश्रेष्ठ हे भर्तः त्वयि एतत्सर्वं राद्धं सि
द्धमेवतदहमवैमि जानामि किंतु यस्त्वया समयोऽभिहितः स तावद्भूयात् सहादितिगर्भसंभवमात्रपर्यंत इत्यर्थः यस्मा

२३
भा॰टी॰
८५

द्गरीयसिश्रेष्ठेभर्त्तरिहेतुभूतेस्त्रीणांप्रसवोगुणःमहान्लाभः समासपाठेगरीयसिपत्यौसतिसतीनांयतोगुणप्रसवः
गुणविस्तारोभवति अतः पुत्रोत्पत्त्याममगुणविस्तारेजातेपि आत्त्वदुक्तंसर्वंभवत्विति भावः १० अंगसंगार्थेच
प्रथममितिकर्तव्यतांसंपादयेत्याह हेदेवेशा तत्र अंगसंगेइति कृत्यसाधनं यथोपदेशंकामशास्त्रानुसारेण उप
शिक्षसंजानीहि उपकल्पयेत्यर्थः येनसाधनेनाभ्यंगभोजनपानादिना अतीवरंतुमिच्छयाकर्शितोदीनअश्वममैषआ

यस्तेऽभ्यधायिसमयःसकृदंगसंगोभूयाद्गरीयसिगुणःप्रसवःसतीनां १० तत्रेतिकृ
त्यमुपशिक्षयथोपदेशंयेनैषमेकर्शितोऽतिरिरंसयात्मा सिद्ध्येत तेकृतमनोभवधर्षि
तायादीनस्तदीशभवनंसदृशंविचक्ष्व ११ श्रीमैत्रेयउवाच प्रियायाःप्रियमन्विच्छन्क
र्दमोयोगमास्थितः विमानंकामगंक्षत्तस्तर्ह्येवाविरचीकरत् १२ सर्वकामदुघंदिव्यंस
र्वरत्नसमन्वितम् सर्वर्द्ध्युपचयोदर्कंमणिस्तंभैरुपस्कृतम् १३ दिव्योपकरणोपेतंसर्व
कालसुखावहं पट्टिकाभिःपताकाभिर्विचित्राभिरलंकृतम् १४ ॥ ११ त्वादेहःसिध्येतरतिसमर्थो

भवेत् कथंभूतायाः तत्वयैवकृतः क्षोभितोयोमनोभवस्तेनधर्षितायाः तत्ततोऽनुरूपंभवनंचविचक्ष्ववितर्कयवि
चारयेतियावत् ११ तर्हितत्क्षणमेवआविरचीकरत्आविर्भावयांबभूव १२ तदेवविशिनष्टिसर्वकामदुघमितिन
वभिःसर्वैःस्वरत्नादिभिःसमन्वितं सर्वर्द्धीनांसर्वसंपदांयउपचयस्तस्यउदर्कउत्तरोत्तराभिवृद्धिर्यस्मिन् उपस्कृतंशोभि
तम् १३ उपकरणपरिकरःपट्टिकाआल्पविस्तारपटवस्त्रविशेषाःपताकाःविस्तृताःताभिः १४॥ ॥ ॥

राम
८५

विचित्राणि माल्यानि पुष्पाणि यासु मंजु यथा भवत्येवं सिंजंतः षडंघ्रयो यासु ताभिः स्रग्भिः १५ उपर्युपरि विरचितग्र
हेषु कशिपुभिः शय्याभिः कांतं कमनीयं पर्यंकादिभिश्च कांतं १६ १७ द्वाः सुद्वारेषु विद्रुमनिर्मिता देहली उदुंवरस्त
या भातं शोभितं वज्रखचितकपाटयुक्तं इंद्रनीलमयेषु शिखरेषु प्रासादाग्रभागेषु १८ चक्षुष्मंत इव ये पद्मरागाग्र्या

स्रग्भिर्विचित्रमाल्याभिर्मंजुसिंजत्षडंघ्रिभिः दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजित
म् १५ उपर्युपरि विन्यस्तनिलयेषु पृथक् पृथक् क्षिप्तैः कशिपुभिः कांतं पर्यंकव्यजना
सनैः १६ तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितं महामरकतस्थल्या जुष्टं विद्रुमवे
दिभिः १७ द्वाःसु विद्रुमदेहल्या भातं वज्रकपाटवत् शिखरेष्विंद्रनीलेषु हेमकुंभैरवि
श्रितम् १८ चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः जुष्टं विचित्रवैतानैर्महार्हैर्हेमतो
रणैः १९ हंसपारावतव्रातैस्तत्र तत्र निकूजितं कृत्रिमान्मन्यमानैः स्वानधिरुह्याधि
रुह्य च २० विहारस्थानविश्रामसंवेशप्रांगणाजिरैः यथोपजोषं रचितैर्विस्मापनमिवा
त्मनः २१ ईदृग्गृहं तत्पश्यंतीं नातिप्रीतेन चेतसा ॥ ८९ ॥ तैः यद्वा चक्षुष्मद्भिर्वकैः पद्मरागाग्र्यैर्विचि
त्रैर्वैतानैर्वितानसमूहैः १९ कृत्रिमानपि हंसादीन् स्वान् स्वजातीन् मन्यमानैस्तत्र तत्राधिरुह्याधिरुह्य निकूजितं २०
विहारस्थानं क्रीडाप्रदेशः विश्रामः शयनगृहं संवेश उपभोगस्थानं प्रांगणं गृहाद्बहिः अजिरं प्राकाराद्बहिः यथोप
जोषं यथासुखं आत्मनः स्वस्य मायाविनोऽपि विस्मयजनकमिव २१ नातिप्रीतेन मलिनदेहत्वात् ॥ ॥

२३
मा॰तू॰
९६

परिचारिकाभावाच्च २२ अस्मिन् ह्रदे विंदुसरसि आरुह अधिरोह शुक्लेन विष्णुना कृतं आनंदविंदुनिपातनेन यापकं प्रा
पकं २३ समादाय आदृत्य सरजं मलिनं वेणीभूतान् च दिलान् २४ शवलो विवर्णो मलेनायस्मिन् तत् सरस्वत्याः शिवानि जलानि आशेरते य
स्मिन् शिवा जलाशया जलचरा यस्मिन् इति वा २५ सा तत्र निमग्ना सती विस्मयं ददर्शेत्याह सांतः सरसीति दशभिः

सर्वेभूताशया भित्तः प्रावोचत्कर्दमः स्वयम् २२ निमज्यास्मिन् ह्रदे भीरु विमानमिदमारु
ह इदं शुक्ल कृतं तीर्थमाशिषां यापकं नृणाम् २३ सा तद्भर्तुः समादाय वचः कुवलयेक्ष
णा सरजं विभ्रती वासो वेणीभूतांश्च मूर्द्धजान् २४ अंगं च मलपंकेन संछन्नं शवलस्तनं
आविवेश सरस्वत्याः सरः शिवजलाशयम् २५ सांऽतः सरसि वेश्मस्थाः शतानि दश कन्
यकाः सर्वाः किशोरवयसो ददर्शोत्पलगंधयः २६ तां दृष्ट्वा सहसोत्थाय प्रोचुः प्रांज
लयः स्त्रियः वयं कर्म्मकरीस्तुभ्यं शाधि नः करवाम किम् २७ स्नानेन तां महार्हेण स्ना
पयित्वा मनस्विनीं दुकूले निर्मले नूत्ने ददुरस्यै च मानद २८ भूषणानि परार्द्ध्यानि वरी
यांसि द्युमंति च अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् २९ ॥ ॥ ॥ ॥

उत्पलगंधयः २६ स्त्रियः प्रोचुस्तुभ्यं तव कर्मकरीः परिचारिका वयं अस्मानाज्ञापयेति २७ ततश्च स्नानेन स्नानयो
ग्यतैलादिना २८ परार्द्ध्यानि उत्कृष्टानि वरीयांसि तत् क्रियाणि दीप्तिमंति च पानं पेयं अमृतं स्वादु आसवं मादकं २९

भाग
९६

आदर्शे स्वमात्मानं ददर्शेति शेषः आत्मानं विशिनष्टि चतुर्भिः कृतं स्वस्त्ययनं मंगलं यस्य पुंस्त्वमात्मशब्दसामानाधिक
रण्यात ३० विरजमित्यस्य प्रपंचः स्नाते उद्वर्त्य क्षालिते कृतं शिरःस्नानमभ्यंगो येन भूषितत्वमेवाह निष्कं पदकं ग्री
वायां यस्य ३१ बहुनि रत्नानि यस्यां तया रुचकेन मंगलद्रव्येण कुंकुमादिना तदुक्तं विश्वप्रकाशे रुचकं मंगलद्रव्ये ग्री
वाभरणदंतयोरिति ३२ सुदतासुभ्रुवा चक्षुषेति च जातावेकवचनानि एतैर्लसत् शोभमानं मुखं यस्य कथंभूतेन।

अथादर्शे स्वमात्मानं स्रग्विणं विरजांबरम् विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानि
तम् ३० स्नातं कृतशिरस्स्नानं सर्वाभरणभूषितं निष्कग्रीवं वलयिनं कूजत्कांचननूपु
रम् ३१ श्रोण्योरध्यस्तया कांच्या कांचन्या बहुरत्नया हारेण च महार्हेण रुचकेन च
भूषितम् ३२ सुदतासुभ्रुवा श्लक्ष्णस्निग्धापांगेन चक्षुषा पद्मकोशस्पृधा नीलैरल।
कैश्चलसन्मुखम् ३३ यदा सस्मार ऋषभमृषीणां दयितं पतिम् तत्र चास्ते सह स्त्री।
भिर्यत्रास्ते स प्रजापतिः ३४ भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा निशाम्य तद्योग
गतिं संशयं प्रत्यपद्यत ३५ स तां कृतमलस्नानां विभ्राजंतीमपूर्ववत्॥ चक्षुषा श्लक्ष्णो मनो
हरः स्निग्धोऽपांगो नेत्रप्रांतो यस्य पद्मकोशेन स्पर्द्धत इति पद्मकोशस्पृक् तेन ३३ दृष्ट्वा च यदा पतिं सस्मार तदा यत्रासौ न
त्रैव स्वयमप्यास्त ३४ आत्मानं निशाम्य दृष्ट्वा तां च तस्य योगगतिं योगप्रभावं दृष्ट्वा संशयं किमिदमिति विस्मयं ३५
समुनिर्विवाहात्याक् यद्वात्मनो रूपं तदेव पुनर्बिभ्रतीं संवीतौ प्रावृतौ रुचिरौ स्तनौ यस्याः॥ ॥

पाठांतरेतुरूपविशेषणं ३६ शोभनेवाससीयस्याः जातोभावः प्रेमयस्य हे अमित्रहन् जितकाम ३७ तस्मिन्विमानेमुः
निर्वभ्राजे नलुप्तोमहिमास्वातंत्र्यंयस्य उपचीर्णंशुश्रूषितंवपुर्यस्य विकसितकुमुद्गणवान् अपीच्योतिसुंदरः पूर्णचंद्र
वन्मुनिर्नभइवविमानेताराइवनाः स्त्रियः कुमुदानीवतासांनेत्राणीतिज्ञेयम् ३८ तेनविमानेन अष्टलोकपालानांवि

आत्मनोबिभ्रतोरूपंसंवीतरुचिरस्तनीं ३६ विद्याधरीसहस्रेणसेव्यमानोसुवाससं
जातभावोविमानंतदारोहयदमित्रहन् ३७ तस्मिन्नलुप्तमहिमाप्रिययानुरक्तोवि
द्याधरीभिरुपचीर्णवपुर्विमाने बभ्राजउत्कचकुमुद्गणवानपीच्यस्ताराभिरावृतइ
वोडुपतिर्नभस्थः ३८ तेनाष्टलोकपविहारकुलाचलेंद्रद्रोणीष्वनंगसखमारुतसौ
भगासु सिद्धैर्नुतोद्युधुनिपातशिवस्वनासुरेमेचिरंधनदवल्ललनावरूथी ३९ वैश्रंभके
सुरसनेनंदनेपुष्पभद्रके मानसेचैत्ररथ्येचसरेमेरामयारतः ४० भ्राजिष्णुनाविमाने
नकामगेनमहीयसा वैमानिकानत्यशेतचरन्लोकान्यथाऽनिलः ४१ किंदुरापादनं
तेषांपुंसामुद्दामचेतसां येराश्रितस्तीर्थपदश्चरणोव्यसनात्ययः ४२॥ विहारोयस्मिन्कुलाचलेंद्रे
मेरुःतस्यद्रोणीषुदरीषु अनंगस्यसखायोमारुतः शीतसुगंधमंदानिलः तेनसौभगंसौभाग्यंसौंदर्यंयासु सिद्धैर्नुतःस्तु
तःमनुद्युधुनिर्गंगातस्याः पातेनशिवःस्वनोयासु तासुरेमेललनावरूथीस्त्रीरत्नसमूहवान् ३९ वैश्रंभकादिषुदेवोद्या
नेषुमानसेचसरसिरतःप्रीतःसन् ४० अत्यशेत अतिक्रम्यस्थितः ४१ उद्दामचेतसांधीराणांव्यसनंसंसारःतस्यात्ययो

प्रेक्षयित्वादर्शयित्वाभुवोगोलंमंडलंस्वसंस्थयाद्वीपवर्षादिरचनयायावानूतावंतंवहून्याश्चर्याणियस्मिन्तं॥
४३ विभज्यनवधानवप्रभेदेनात्मानंकृत्वा ४४ ४५ शरदःसंवत्सराःमनाकूईषदिवव्यतीयुः ४६ आत्मनास्वदेहा
देरूपेणअतिप्रीत्याभावयन् तथासतिमदपत्यंमवेदितिनोधानवधासर्वसंकल्पविदितितस्याःवह्वपत्यसंकल्पजा

प्रेक्षयित्वाभुवोगोलंपत्न्यैयावान्स्वसंस्थया वह्वाश्चर्य्यंमहायोगीस्वाश्रमायन्यवर्त्तत ४३ विभज्यनवधात्मानंमानवींसुरतोत्सुकां रामांनिरमयन्रेमेवर्षपूगान्मुहूर्त्तवत् ४४ तस्मिन्विमानउत्कृष्टांशय्यांरतिकरींश्रिता नचावुध्यततंकालंपत्याऽपीच्येनसंगता ४५ एवंयोगानुभावेनदंपत्योरममाणयोः शतंव्यतीयुःशरदःकामलालसयोर्मनाक् ४६ तस्यामाधत्तरेतस्तांभावयन्नात्मनात्मवित् नोधाविधायरूपंस्वंसर्वसंकल्पविद्विभुः ४७ अतःसासुषुवेसद्योदेवहूतिःस्त्रियःप्रजाः सर्वास्ताश्चारुसर्वांग्योलोहितोत्पलगंधयः ४८ पतिंसाप्रव्रजिष्यंतंतदालक्ष्योशतीसती स्मयमानाविक्लवेनहृदयेनविदूयता ४९॥

एतन्नित्यर्थः विमुक्तयाकर्त्तुंसमर्थश्च आत्मविदितिच तस्यामनासक्तत्वात् स्त्रियोजा
ताइतिभावःपुमान्पुंसोऽधिकेशुक्रे स्त्रीभवत्यधिकेस्त्रियाइतिस्मृतेः ४७ अतः अनंतरमेवसद्यःएकस्मिन्नेवाह
नि चारुणिसर्वाण्यंगानियासां ४८ प्रव्रजिष्यंतंआलक्ष्यवितर्कोस्मयमानावहिः अंतस्तुविक्लवेनव्याकुलेनविदूयता

नखाः एवमणयः तैः श्रीः शोभा यस्य तेन पदा भुवं लिखंतीति दुरंतचिंतालक्षणं ५० उपोवाहसंपादितवान् अभयमि
ति भाविनो दैन्यात्संसाराच्च यद्भयं तन्निवर्त्तयेत्यर्थः ५१ तत्र दैन्यं निवेदयति तुभ्यं तव दुहितृभिः स्वयमेवात्मनः समाः
योग्याः पतयो विमृग्याः इति दैन्यं प्राप्तं संसारभयमुररीकृत्याह कश्चिदिति विशोकाय ज्ञानोपदेशाय स्त्रीभिरर्थणा
नपाकरणात् किंचित्कालं तव दवस्थानेन ब्रह्मवित्पुत्रः कश्चित्किं स्यादित्यर्थः ५२ विषयान् मुंक्ष्व किं ब्रह्मविद्यये

लिखंत्यधोमुखी भूमिं पदा नखमणिश्रिया उवाच ललितां वाचं निरुध्याश्रुकलाश्र
नैः ५० सर्वं तद्भगवान्मह्यमुपोवाह प्रतिश्रुतं अथापि मे प्रपन्नाया अभयं दातुमर्हसि
५१ ब्रह्मन्दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः कश्चित्स्यान्मे विशोकाय त्वयि प्रव्रा
जिते वनं ५२ एतावताऽलं कालेन व्यतिक्रांतेन मे विभो इंद्रियार्थप्रसंगेन परित्यक्तप
रात्मनः ५३ इंद्रियार्थेषु सज्जंत्या प्रसंगस्त्वयि मे कृतः अजानंत्या परं भावं तथाप्यस्त्वभ
याय मे ५४ संगो यः संसृतेर्हेतुरसत्सु विहितो धिया स एव साधुषु कृतो निःसंगत्वाय क
ल्पते ५५ नेह यत्कर्म धर्माय न विरागाय कल्पते न तीर्थपदसेवायै जीवन्नपि मृतो हि सः

तिचेत्तत्राह एतावतालं पूर्यतां परित्यक्तः परः आत्मा यया तस्या मम ५३ स्वकृतमनुशोचंत्याह इंद्रियार्थेष्विति चतुर्भिः
मम यापरं भावं तत्त्वं ब्रह्मविदिति ५४ प्रसंगः कथमभयायास्तु तत्राह संग इति अधिया अज्ञानेन ५५ स्वभावतः प्रवृत्तेन य
स्य कर्म धर्मार्थं न कल्पते धर्माभिमुखं न भवेत् तत्रापि निष्कामधर्मद्वारा विरागाय न कल्पते तद्द्वारा च तीर्थपदस्य ह

नमुमुक्षेयमोक्तुमिच्छांनकृतवत्यस्मि ५७ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेटीकायांत्रयोविंशोऽध्यायः॥ २३ चतुर्विंशेततोजन्मकपिलस्याहतत्पितुः प्रव्रज्यातमनुज्ञाप्यऋणत्रयविमोक्षतः १ शालिनींश्लाघ्यांशुक्लेन अभिव्याहृतंसहाहंस्वांशशकलयेत्यादि १ इत्थंमाखिदः खेदंमाकार्षीः आत्मानंप्रतिअहंभाग्यहीनेति अदूरा

माहंभगवतोनूनंवंचितामायया दृढं यत्त्वांविमुक्तिदंप्राप्यनमुमुक्षेयबंधनात् ५७ ॥इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयोपाख्यानेत्रयोविंशतितमोध्यायः २३ मैत्रेयउवाच निर्वेदवादिनीमेवंमनोर्दुहितरंमुनिः दयालुःशालिनीमाहशुक्लाभिव्याहृतंस्मरन् १ श्रीऋषिरुवाच माखिदोराजपुत्रीत्थमात्मानंप्रत्यनिंदिते भगवांस्तेऽक्षरोगर्भमदूरात्संप्रपत्स्यते २ धृतव्रतासिभद्रंतेदमेननियमेनच तपोद्रविणदानैश्चश्रद्धयाचेश्वरंभज ३ सत्वयाराधितःशुक्लोवितन्वन्मामकंयशः छेत्तातेहृदयग्रंथिमौदर्य्योब्रह्मभावनः ४ श्रीमैत्रेयउवाच देवहूत्यपिसंदेशंगौरवेणप्रजापतेः॥ सम्यक्श्रद्धायपुरुषंकूटस्थमभजद्गुरुं॥५॥ ६ ॥ ६६ ॥ ॥ ॥

तदीयं २ दमेनइंद्रियसंयमेननियमेनस्वधर्म्मेणतपांसिद्रविणदानानिचतैः ३ हृदयग्रंथिंचिज्जडात्मकं अहंकारलक्षणंबंधकंछेत्स्यतिऔदर्यःपुत्रःसन् ब्रह्मभावयतिउपदिशतीतितथा ४ श्रद्धायविश्वस्य ५॥ ॥

२७

भी०त० बहुतिथेबहुतेस्कालेऽतिक्रांतेकार्द्दमंकर्द्दमसम्बंधि॥६॥ घनाघनाइत्येकंपदंवर्षंतोमेघाःगायंतिस्मनृत्यंतिस्म ७ अपवर्ज्जितामुक्ताः ८ परिश्रितंवेष्टितं ९ आगत्यकिंकृतवान् तदाह भगवंतमितिद्वाभ्यांतत्वानांसंख्यानंयस्मिन्तस्यसांख्यस्यवि
ज्ञप्त्यैविशेषेणज्ञापनायभगवंतंजातंविद्वान् अजोब्रह्मास्वराट्स्वतः सिद्धज्ञानः १० तस्यचिकीर्षितंसभाजयन्पूज

तस्यांवहुतिथेकालेभगवान्मधुसूदनः कार्द्दमंवीर्यमापन्नोजज्ञेग्निरिवदारुणि
६ अवादयंस्तदाव्योम्निवादित्राणिघनाघनाः गायंतितंस्मगंधर्वानृत्यंत्यप्सरसो
मुदा ७ पेतुःसुमनसोदिव्याः खेचरैरपवर्ज्जिताः प्रसेदुश्चदिशःसर्व्वाः अंभांसिचम
नांसिच ८ तत्कर्द्दमाश्रमपदंसरस्वत्यापरिश्रितं स्वयंभूः साकमृषिभिर्मरीच्यादिभि
रभ्ययात् ९ भगवंतंपरंब्रह्मसत्वेनांशेनशत्रुहन् तत्वसंख्यानविज्ञप्त्यैजातंविद्वान
जःस्वराट् १० सभाजयन्विशुद्धेनचेतसातच्चिकीर्षितं प्रहृष्यमाणैरसुभिःकर्द्दमं
चेदमभ्यधात् ११ ब्रह्मोवाच त्वयामेऽपचितिस्तातकल्पितानिर्व्यलीकतः यन्मेसं
जगृहेवाक्यंभवान्मानदमानयन् १२ एतावत्येवशुश्रूषाकार्यापितरिपुत्रकैः बाढमित्यनु
मन्येतगौरवेणगुरोर्वचः १३॥ एयन् प्रहृष्यमाणैरसुभिरिंद्रियैरुपलक्षितःकर्द्दमंचेदमभ्यधादितिद्वयोरन्व
यःचकाराद्देवहूतिंच ११ तत्रत्वयेतिपंचभिःकर्द्दमंप्रत्याह अपचितिः पूजाकृतायद्यस्मान्निष्कपटंसम्यक्गृहीत
वान् १२ अनुमन्येतेतियत्एतावत्येव १३॥

राम०
८९

अनेकधाप्रभावैर्वैश्वैर्बृंहयिष्यंति वर्द्धयिष्यंति १४ ऋषिमुख्येभ्यो मरीच्यादिभ्यः १५ पुत्रस्तु साक्षादीश्वर इत्याह वेदा
हमिति शेवधिं निधिं सर्वाभीष्टदं १६ देवहूतिं प्रत्याह त्रिभिः ज्ञानं शास्त्रोक्तं विज्ञानमपरोक्षं च त एव योगउपायस्ते
नकर्म्मणां जटाः मूलानि वासनाः उद्धरन् उत्पाटयिष्यन् पद्ममुद्रायुक्तं पदांबुजं यस्य १७ हे मानवि अविद्या स्वरूपा

इमा दुहितरः सत्यस्तव वत्स सुमध्यमाः सर्गमेतं प्रभावैः स्वैर्बृंहयिष्यंत्यनेकधा १४
अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि १५
वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया भूतानां शेवधिं देहं बिभ्राणं कपिलं मुने १६ ज्ञानवि
ज्ञानयोगेन कर्म्मणामुद्धरन् जटाः हिरण्यकेशः पद्माक्षः पद्ममुद्रापदांबुजः १७ एष मा
नवि ते गर्भं प्रविष्टः कैटभार्द्दनः अविद्यासंशयग्रंथिं छित्वा गां विचरिष्यति १८ अयं सिद्ध
गणाधीशः सांख्याचार्यैः सुसंमतः लोके कपिल इत्याख्यां गंता ते कीर्त्तिवर्द्धनः १९ श्रीमैत्रे
य उवाच तावाश्वास्य जगत्स्रष्टा कुमारैः सहनारदः हंसो हंसेन यानेन त्रिधामपरमं ययौ २०
गते शतधृतौ क्षत्तः कर्द्दमस्तेन चोदितः यथोदितं स्वदुहितॄः प्रादाद्विश्वसृजां ततः २१

ज्ञानसंशय मिथ्याज्ञानानि तन्मयं तव हृदयग्रंथिम् १८ सुसंमतः सुपूजितः सन् गंता प्राप्स्यति १९ कुमारैः सहेति
पिषः सहनारदः नास्ट सहितश्च मरीच्यादीन् विवाहार्थमवस्थाप्य नैष्ठिकैरेतैः पंचभिः सहितो हंसो ब्रह्मा ययौ त्रिधाम
तृतीयं धाम स्वर्गः तस्य परां काष्ठां सत्यलोकं २० शतधृतौ ब्रह्मणि २१॥

२२ पुत्रांयोग्यां अथयच्छत अदात् २३ वितन्यते समृद्धः क्रियते शांत्यधिष्ठात्रीं देवतामित्यर्थः समलालयत् संतो
षितवान् २४ निमंत्र्य एष्टुं आनंदिं हर्षं प्राप्ताः संतः २५ सचमुनिः त्रियुगं विष्णुं विविक्ते रहसि २६ पापच्यमानानां भृशं
दह्यमानानां निरये संसारे स्वीयैरमंगलैः पापैः २७ कुतः सर्वादेवताः प्रसन्नाः इतिज्ञाते अलभ्यलाभादितिद्वाभ्यामा

मरीचये कलां प्रादादनुसूयामथात्रये श्रद्धामंगिरसेऽयच्छत्पुलस्त्याय हविर्भुवम् २२
पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीं ख्यातिं च भृगवेऽयच्छद्वसिष्ठायाप्यरुंधतीम् २३
अथर्वणेऽददाच्छांतिं यया यज्ञो वितन्यते विप्रर्षभान्कृतोद्वाहान्सदारान्समलालयत् २४
ततस्त ऋषयः क्षत्तः कृतदारा निमंत्र्य तं प्रातिष्ठन्नंदिमापन्नाः स्वंस्वमाश्रममंडलम् २५ स
चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभं विविक्त उपसंगम्य प्रणम्य समभाषत २६ अहो पाप
च्यमानानां निरये स्वैरमंगलैः कालेन भूयसा नूनं प्रसीदंतीह देवताः २७ बहुजन्मवि
पक्वेन सम्यग्योगसमाधिना द्रष्टुं यतंते यतयः शून्यागारेषु यत्पदं २८ स एव भगवानद्य
हेलनं न गणयन्नः गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः २९ ॥ ६ ॥ ६६६॥

हि बहुषु जन्मसु विपक्वेन सुसिद्धेन सम्यग्योगो भक्तियोगस्तस्मिन्समाधिरैकाग्र्यं तेन शून्यागारेषु विविक्तस्थानेषु
यस्य तव पदं २८ हेलनमवज्ञां लाघवं न गणयन् अगणयित्वा उचितमेव तवैतदित्याह यस्त्वं स्वानां भक्तानां पक्षं
पुष्णासीति तथा सः २९ ॥

एतत्प्रपंचयतिद्वाभ्यांस्वयमेवावतीर्णोसिस्ववाक्यंतवपुत्रोभविष्यामीतियत् तत्सत्यंकर्तुंज्ञानंज्ञानसाधनंसांख्यंचचिकी
र्षुःसन् ३० यानितवालोकिकानिचतुर्भुजादिरूपाणितान्येवतेऽभिरूपाणियोग्यानियानिचस्वजनानांरोचंतेमनु
ष्यरूपाणितान्यपितेरोचंतइत्यर्थः अरूपिणःप्राकृतरूपरहितस्य ३१ अभिवादार्हंपादपीठंयस्यऐश्वर्यादिभिः
पूर्तंपूर्णं ३२ ऐश्वर्यादिकंविवृण्वन्नाह परंपरमेश्वरंतत्रहेतुःस्वच्छंदाःस्वाधीनाःशक्तयोयस्यताएवाहप्रधानंप्र

स्तोयंवाक्यमृतंकर्तुमवतीर्णोसिमेगृहे चिकीर्षुर्भगवान्ज्ञानंभक्तानांमानवर्द्धनः ३० ता
न्येवतेऽभिरूपाणिरूपाणिभगवंस्तव यानियानिचरोचंतेस्वजनानामरूपिणः ३१ त्वांसू
रिभिस्तत्वबुभुत्सयाऽद्धासदाभिवादार्हणपादपीठं ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रिया
पूर्तमहंप्रपद्ये ३२ परंप्रधानपुरुषंमहांतंकालंकविंत्रिवृतंलोकपालं आत्मानुभूत्या
ऽनुगतप्रपंचंस्वच्छंदशक्तिंकपिलंप्रपद्ये ३३ आस्माभिपृच्छेऽद्यपतिंप्रजानांत्वयाऽव
तीर्णर्णउताप्तकामः परिव्रजत्पदवीमास्थितोऽहंचरिष्येत्वांहृदियुंजन्विशोकः ३४॥

कृतिरूपंपुरुषंतदधिष्ठातारं महांतंमहत्तत्वरूपंकालंतेषांक्षोभकंत्रिवृतंअहंकाररूपंलोकात्मकंतत्पालात्मकंचतदे
वंमाययाप्रधानादिरूपतामुक्त्वाचिच्छक्त्यानिष्प्रपंचतामाह आत्मानुभूत्याचिच्छक्त्याअनुगतःस्वस्मिन्लीनःप्रपंचोय
स्यतंकविंसर्वज्ञंप्रधानाद्याविर्भावलयसाक्षिणमित्यर्थः ३३ संन्यासानुज्ञांप्रार्थयते आस्माभिपृच्छेयत्किंचिदभिपृच्छा
मीत्यर्थः त्वयापुत्ररूपेणावतीर्णानिनिहितानिऋणानिदेवादिरूपाणियस्यसः आप्तकामश्चाहंपरिव्रजतांसंन्यासिनां

२४
भा॰ तृ॰
८१

त्वहंतावत्तज्ज्ञानोपदेशायैवत्वद्गृहेवतीर्णः अतस्त्वद्गृहेवसतोऽपिमुक्तिःसुलभैवयद्यवश्यंगंतव्यमेवेत्याग्रहःतथापिमा
मेवानुस्मरन्गच्छेत्याशयेनाहमयेतिषड्भिःसत्यलौकिकेवैदिकेलौकिकेचवाक्येस्वोक्तस्यप्रामाण्यमभिदर्शयतियच्चस्मा
त्तुभ्यंतवपुत्रोभविष्यामीत्यवोचं अथअतएवततऋतंयथाभवतितथामयाऽजनिजन्मस्वीकृतं ३५ दुराशयात्लिं
गावमुमुक्षूणांमुक्तिनामात्मदर्शनेसंमतायतत्त्वानांप्रसंख्यानायविद्धीत्युत्तरस्यानुषंगः ३६ नन्वयमात्मज्ञानमार्गः

श्रीभगवानुवाच मयाप्रोक्तंहिलोकस्यप्रमाणंसत्यलौकिके अथाजनिमयातुभ्यंयदवोचमृ
तंमुने ३५ एतन्मेजन्मलोकेस्मिन्मुमुक्षूणांदुराशयात् प्रसंख्यानायतत्त्वानांसंमतायात्म
दर्शने ३६ एषआत्मपथोऽव्यक्तोनष्टःकालेनभूयसा तंप्रवर्त्तयितुंदेहमिमंविद्धिमयाभृतं
३७ गच्छकामंमयापृष्टोमयिसंन्यस्तकर्मणा जित्वासुदुर्जयंमृत्युममृतत्वायमांभज ३८
मामात्मानंस्वयंज्योतिःसर्वभूतगुहाशयं आत्मन्येवात्मनावीक्ष्यविशोकोभयमृच्छसि ३९
मात्रेआध्यात्मिकींविद्यांशमनींसर्वकर्मणाम् वितरिष्येययाचासौभयंचातितरिष्यति ४०

एम
८१

पूर्वसिद्धएवनेदानीमपूर्ववत्प्रवर्त्तनीयस्तत्राहएषइतिअव्यक्तःसूक्ष्मः ३७ कामंयथेच्छंआपृष्टःअनुज्ञातःयद्वा या
वत्त्वंगंतुंमांपृष्टवान्तथाऽत्र्यवस्थातुमयापित्वमापृष्टइत्यर्थःमयिसंन्यस्तेनसमर्पितेनकर्मणाअविद्ययामृत्युं
तीर्त्वाविद्ययाऽमृतमश्नुतइतिश्रुतेः ३८ ततश्चमांपरमंपरमात्मानंआत्मनिस्वस्मिन्आत्मनामनसाअन्वीक्षमाणः
अभयंमोक्षंप्राप्स्यसि ३९ मात्रेदेवहूत्यैशमनींउन्मूलनींभयंअतिशयेनतरिष्यति परमानंदंचप्राप्स्यतीतिचकारार्थः ४०॥

समुदितः सम्यगुक्तः सन् तं प्रदक्षिणीकृत्य ४१ मुनीनां व्रतं मौनमहिंसालक्षणं ४२ सदसतः परं यत्तस्मिन् ब्रह्मणि गुणावभासके निर्गुणे एकभक्त्या अव्यभिचारिण्या भक्त्या अनुभाविते अपरोक्षीकृते ४३ अतो देहादिष्वहंकारादिरहितः अत एव निर्द्वंद्वः शीतोष्णाद्यना — कुलः समदृक् भेदाग्राहकः किंतु स्वदृक् स्वयमेव पश्यन् — प्रत्यक्प्रवणा प्रशांता विक्षे

श्रीमैत्रेय उवाच एवं समुदितस्तेन कपिलेन प्रजापतिः दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ४१ व्रतं स आस्थितो मौनं आत्मैकशरणो मुनिः निःसंगो व्यचरत्क्षोणीमनग्निरनिकेतनः ४२ मनो ब्रह्मणि युंजानो यत्तत्सदसतः परं गुणावभासे विगुण एकभक्त्यानुभाविते ४३ निरहंकृतिर्निर्ममश्च निर्द्वंद्वः समदृक् स्वदृक् प्रत्यक्प्रशांतधीर्धीरः प्रशांतोर्मिरिवोदधिः ४४ वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि परेण भक्तिभावेन लब्धात्मा मुक्तबंधनः ४५ आत्मानं सर्वभूतेषु भगवंतमवस्थितं अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि ४६ इच्छाद्वेषविहीनेन सर्वत्र समचेतसा भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ४७॥ ॥

परहिता धीर्यस्य ४४ तदेवं विधकल्पितोपाधिनिवृत्तिमुक्त्वा परमेश्वरपदप्राप्तिमाह वासुदेव इति त्रिभिः प्रतीचो जीवस्यात्मनि लब्धं आत्मा चित्तं येन यतः मुक्तं बंधनमज्ञानं यस्य ४५ लब्धात्मतामेवाह आत्मानमिति ४६ तदेवं तेन भागवती गतिः प्राप्ता पाठांतरे स एव तां गतिं प्राप्त इति ४७॥ ॥ ॥ ॥

२५
भा॰टी॰
८२

॥इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेटीकायांचतुर्विंशतितमोऽध्यायः २४ पंचविंशेजनन्यातुपृष्टोवंधविमो
चनं आदावाहपरंभक्तिलक्षणंकर्दिंमः सुतः १ कपिलेनार्पितामात्रेगूढभावनियंत्रिता योगमाणिक्यमंजूषास्फु
टमुद्राप्यतेऽधुना २ उक्तानुवादपूर्वकंकापिलंयोगंपृच्छति कपिलइतित्रिभिः तत्वानांसंख्याताःगणकःसांख्य
प्रवर्त्तकइत्यर्थः अजएवस्वयंजातः आत्मप्रज्ञप्तये आत्मतत्वज्ञापनाय १ पुंसांमध्येवर्ष्मणः वृद्धस्यउत्तमस्येत्यर्थः

॥इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयेचतुर्विंशतितमोऽध्यायः २४ शौन
कउवाच कपिलस्तत्वसंख्याताभगवानात्ममायया जातःस्वयमजःसाक्षादात्मप्रज्ञप्त
येनृणां १ नह्यस्यवर्ष्मणः पुंसांवरिम्णःसर्वयोगिनां विश्रुतौश्रुतदेवस्यभूरितृप्यंति
मेऽसवः २ यद्यद्विधत्तेभगवान्स्वच्छंदात्मात्ममायया तानिमेश्रद्दधानस्यकीर्तन्यान्यनु
कीर्तय ३ श्रीसूतउवाच द्वैपायनसखस्त्वेवंमैत्रेयोभगवांस्तथा प्राहेदंविदुरंप्रीतआ
न्वीक्षिक्यांप्रचोदितः ४॥

९९ सर्वयोगिनांमध्येवरिम्णःवरस्यभावोवरिमाभवितृप्रधानोऽयंनि
र्देशः वरिष्ठस्येत्यर्थः यद्वा वरीयस्त्वादित्यर्थः विश्रुतौकीर्त्तौ असवइंद्रियाणि भूरिअलंनतृप्यंति श्रुतेनश्रवणे
नदीव्यतिद्योततइतितथातस्य यद्वा भूरिबहुशः श्रुतोदेवोयेनतस्यापिमेऽसवइतिसंबंधः २स्वानांछंदेनइ
च्छया आत्मादेहोयस्यसः यद्यत्कर्मविधत्तेतानिकर्माणिकीर्त्तनार्हाणि अनुकीर्त्तय ३ यथात्वंमांप्रचोद
यसिएवंप्रचोदितः सन् तयातत्वआनुसारेण आन्वीक्षिक्यां आत्मविद्यायां ४ ॥ ॥ ॥

राम
८२

विंदुसरो इति आर्षः विंदुसरसि ५ तत्त्वमार्गस्याग्रं पारं दर्शयतीति तथा एवमानविते गर्भं प्रविष्टः कैटभार्दन इत्यादि धातुर्वचः संस्मरंती त्याह ६ असतामिंद्रियाणां तर्षणात् विषयाभिलाषात् निर्विण्णा श्रांतास्मि येन संभाव्यमानेन पूर्यमाणेन ७ पा रंगमयतीति पारगं त्वमेव श्रेष्ठं चक्षुर्मेया लब्धं त्वदनुग्रहाज्जन्मनामंते भाव्ये सति ८ तत्र पंचयतियइति सभग

श्रीमैत्रेय उवाच पितरि प्रस्थितेऽरण्यं मातुः प्रीयचिकीर्षया. तस्मिन् विंदुसरेऽवात्सीत् भगवान्कपिलः किल ५ तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनं स्वसुतं देवहूत्याह। धातुः संस्मरती वचः ६ देवहूतिरुवाच. निर्विण्णा नितरां भूमन्नसदिंद्रियतर्षणात् ये न संभाव्यमाने न प्रपन्नाऽधं तमः प्रभो ७ तस्य त्वं तमसोऽधस्य दुष्पारस्याद्य पारगं स च्चक्षुर्जन्मनामंते लब्धं मे त्वदनुग्रहात् ८ य आद्यो भगवान् पुंसामीश्वरो वै भवान्किल लोकस्य तमसांऽधस्य चक्षुः सूर्य इवोदितः ९ अथ मे देव संमोहमपाक्रष्टुं त्वमर्हसि यो ऽवग्रहोऽहं ममेतीत्येतस्मिन् योजितस्त्वया १० तं त्वा गताऽहं शरणं शरण्यं स्वभृत्यसंसा रतरोः कुठारं जिज्ञासयाऽहं प्रकृतेः पुरुषस्य नमामि सद्धर्मविदां वरिष्ठं ११॥ एवान् चक्षुः सूर्य उ दितः सूर्यो यथा ९ अपाक्रष्टुं अपाकर्तुं कोसौ संमोहस्तमाह एतस्मिन् देहादौ त्वयैव योजितो योऽहं ममेत्यवग्रहः। आग्रहः द्वितीय इति शब्दः तं कायेरागादिग्रहणार्थः १० प्रकृतेः पुरुषस्य च जिज्ञासया त्वामहं शरणं गतास्मीति न मामीत्यन्वयः कुठारं छेत्तारं ११॥

अपवर्गवर्द्धनं मोक्षरतिजनकं ईषत्स्मितेन शोभितमाननं यस्य १२ आध्यात्मिक आत्मनिष्ठः यत्र यस्मिन् ॥ [illegible]
१३ १४ तत्र सर्वांगनैपुण्यं चित्तसंयमाधीनमिति दर्शयन्नाह चेत इति अस्यात्मनो जीवस्य गुणेषु विषयेषु पुं

श्रीमैत्रेय उवाच इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्द्धनम् धियाऽभि
नंद्यात्मवतां सतां गतिर्बभाष ईषत् स्मितशोभिताननः १२ श्रीभगवानुवाच योग
आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे अत्यंतोपरतिर्यत्र दुःखस्य च सुखस्य च १३
तमिमं ते प्रवक्ष्यामि यमवोचं पुराऽनघे ऋषीणां श्रोतुकामानां योगं सर्वांगनैपुणम् १४
चेतः खल्वस्य बंधाय मुक्तये चात्मनो मतं गुणेषु सक्तं बंधाय रतं वा पुंसि मुक्तये १५ अ
हंममाभिमानोत्थैः कामलोभादिभिर्मलैः वीतं यदा मनः शुद्धमदुःखमसुखं समं १६
तदा पुरुष आत्मानं केवलं प्रकृतेः परं निरंतरं स्वयंज्योतिरणिमानमखंडितं १७ ज्ञानवै
राग्ययुक्तेन भक्तियोगेन चात्मना परिपश्यत्युदासीनं प्रकृतिं च हतौजसं १८ न युज्य
मानया भक्त्या भगवत्यखिलात्मनि सदृशोऽस्ति शिवः पंथा योगिनां ब्रह्मसिद्धये १९ ॥

सि परमेश्वरे वा शब्दस्तु शब्दार्थे १५ यथा च चित्तसंयमे पुरुषार्थसिद्धिस्तं दर्शयति अहमिति त्रिभिः मलैर्वीतं विरहि
तं यदा शुद्धं मनो भवति मनःशुद्धेर्ज्ञापकमाह अदुःखमिति १६ निरंतरं निर्भेदं अणिमानं सूक्ष्मं अखंडितमपरिच्छिन्नं १७

अस्यसर्वस्यापिसत्संगोमूलमित्याह प्रसंगमिति अपावृतंनिरावरणं २० साधूनांलक्षणमाह तितिक्षवइतिचतुर्भिः सा
धवः शास्त्रानुवर्तिनः साधुसुशीलंतदेवभूषणंयेषां २१ २२ एतान् उक्तलक्षणान्तापा आध्यात्मिकादयोनतपंतिन
व्यथयंति कुतः मद्गतचेतोयेषांतान् २३ येतापैर्नाभिभूयंतेतेनसाधव इत्यर्थः २४ सत्संगस्यभक्त्यंगतामुपपादयति सता
मिति वीर्यस्यसम्यक् वित् वेदनंयासुतावीर्यसंविदः हृत्कर्णयोः रसायनाः सुखदाः तासांजोषणात्सेवनात् अपवर्गोऽ

प्रसंगमजरंपाशमात्मनःकवयोविदुः ॥ सएवसाधुषुकृतोमोक्षद्वारमपावृतं २०॥
तितिक्षवःकारुणिकाःसुहृदःसर्वदेहिनां अजातशत्रवःशांताःसाधवःसाधुभूषणाः
२१ मय्यनन्येनभावेनभक्तिंकुर्वंतियेदृढां मत्कृतेत्यक्तकर्माणस्त्यक्तस्वजनबांधवाः
२२ मदाश्रयाःकथामृष्टाःशृण्वंतिकथयंतिच तपंतिविविधास्तापानैतान्मद्गतचे
तसः २३ तएतेसाधवःसाध्विसर्वसंगविवर्जिताः संगस्तेष्वथतेप्रार्थ्यःसंगदोषहराहि
ते २४ सतांप्रसंगान्ममवीर्यसंविदोभवंतिहृत्कर्णरसायनाःकथाः तज्जोषणादाश्व
पवर्गवर्त्मनिश्रद्धारतिर्भक्तिरनुक्रमिष्यति २५ भक्त्यापुमान्जातविरागऐंद्रियाद्दृ
ष्टश्रुतान्मद्रचनानुचिंतया॥

विद्यानिवृत्तिः वर्त्मयस्मिन्तस्मिन् हरौप्रथमंश्रद्धाततोरतिःततोभक्तिः
अनुक्रमिष्यतिअनुक्रमेणभविष्यतीत्यर्थः २५ ततःकिमतआह भक्त्येति ममरचनायाःसृष्ट्यादिलीलातस्याः अ
नुचिंतयायाभक्तिस्तयाऐंद्रियात्सुखात्जातविरागःसन् दृष्टश्रुतात् ऐहिकामुष्मिकात्ततोयत्नउद्युक्तः॥ ॥

सन् चित्तस्य ग्रहणे यतिष्यते यतिष्यति अंजुभिः भक्तिप्रधानत्वादनायासैः २६ तदेवं प्रकृतेर्गुणानामसेवया ज्ञानादि
भिश्च अयं जीव इहैव देहे मामेवावरुंधे प्राप्नोति २७ काचिदिति कास्विदित्यर्थः उचिता योग्या तत्रापि मम स्त्रियाः कीदृशी
गोचरा योग्या निर्वाणं मोक्षात्मकं तव पदं स्वरूपं अन्वश्नवै अनंतरमेव सर्वात्मना प्राप्स्यामि अंजसा त्विति पाठे अहं त्विति

चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते अंजुभिर्योगमार्गैः २६ असेवयाऽयं प्रकृतेर्गु
णानां ज्ञानेन वैराग्यविजृंभितेन योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुं
धे २७ श्रीदेवहूतिरुवाच काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरा यया पदं ते निर्वाण
मंजसाऽन्वश्नवा अहम् २८ यो योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः कीदृशः कति चां
गानि यतस्तत्त्वावबोधनं २९ तदेतन्मे विजानीहि यथाहं मंदधीर्हरे सुखं बुध्येय दुर्बोधं
योषा भवदनुग्रहात् ३० श्रीमैत्रेय उवाच विदित्वाऽर्थं कपिलो मातुरित्थं जातस्नेहो य
त्र तन्वाऽभिजातः तत्त्वाम्नायं यत्प्रवदंति सांख्यं प्रोवाच वै भक्तिवितानयोगं ३१ ॥ ॥

संबंधः २८ भगवद्बाणः यो भगवंतं लक्षीकरोतीत्यर्थः यतः यस्माद्योगात् २९ विजानीहि विशेषेण ज्ञापय सुखं अ
नायासेन ३० इत्थं मातुरर्थं प्रयोजनं विदित्वा जातस्नेहः स्नेहहेतुः यत्र यस्यां तन्वा देहेनाविर्भूतः तत्त्वान्याम्नायंते अनु
क्रम्यंते यस्मिन् किं तत् यत् सांख्यं प्रवदंति तत्प्रोवाच भक्तिविनानं च योगं च ३१ ॥ ❁ ॥ ॥ ॥

कोविकित्स्युचिता भक्तिरिति पृष्टामुत्तमां भक्तिं लक्षयति गुणा विषयाः लिंग्यंते ज्ञायंते यैस्तेषां देवानां द्योतनात्मका नामिंद्रियाणां तदधिष्ठातॄणां वा सत्वे सत्वमूर्तौ हरावेव या वृत्तिः सा भक्तिः सिद्धेर्मुक्तेरपि गरीयसीत्युत्तरेणान्वयः कथंभूता अनिमित्ता निष्कामा स्वाभाविकी अयत्नसिद्धा तेषामेवंविधवृत्तौ हेतुमाह गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदः तद्विहितमानुश्राविकं तद्देवकर्म येषां अतएव एकं एकरूपमविक्षिप्तं मनो यस्य पुंसः शुद्धसत्वस्येत्यर्थः ३२

श्रीभगवानुवाच देवानां गुणलिंगानामानुश्रविककर्मणां सत्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ३२ अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी जरयत्याशु या कोशं निगीर्णमनलो यथा ३३ नैकात्मतां मे स्पृहयंति केचिन्मत्पादसेवाभिरता मदीहाः ये न्योन्यतो भागवताः प्रसज्य सभाजयंते मम पौरुषाणि ३४ पश्यंति ते मे रुचिराण्यंब संतः प्रसन्नवक्त्रारुणलोचनानि रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदंति ३५ तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ॥

भक्तिश्च प्रासंगिकी भवत्येवेत्याह या भक्तिः कोशं लिंगशरीरं जरयति क्षपयति स्वप्रयत्नं विनैव प्रसिद्धौ दृष्टांतः निगीर्णं भुक्तमन्नमनलो जाठरो यथा जरयति तद्वदिति ३३ भक्तेर्गरिष्ठत्वमेवोपपादयति नैकात्मतामिति पंचभिः एकात्मतां सायुज्यमोक्षं मदर्थमीहा क्रिया येषां प्रसज्य आसक्तिं कृत्वा पौरुषाणि वीर्याणि ३४ प्रसन्नानि वक्त्राणि अरुणानि लोचनानि च येषु तैर्मद्रूपैः साकं सहनित्यं परमेश्वरानुभवसुखं भक्तावधिकमिति भावः ३५ आत्मानंदस्त्ववश्यंभावीत्याह तैरिति दर्शनीया मनोहरा अवयवा

मुखनेत्रादयो येषु तैः हृतः आत्मा चित्तं येषां हृता आकृष्टाः प्राणाश्चेंद्रियाणि येषां तान् भजतः अनिच्छतः इच्छाहीना
नपि अण्वीं गतिं मुक्तिं प्रयुंक्ते प्रापयति कैः सा धनैः हृतात्मनः उदारैर्विलासादिभिः तत्र विलासो लीला वामं मनोहरं सू
क्तं मधुरभाषणं ३६ विभूत्यादिकं च तत्राधिकमित्याह अथो इति अविद्यानिवृत्त्यनंतरं विभूतिं सत्यलोकाधिगतां भोगसं
पत्तिं अणिमाद्यष्टांगमैश्वर्यं अनुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तमपि भागवतीं च श्रियं वैकुंठस्थां संपत्तिं अस्पृहयंति
तियद्यपि न स्पृहयंतीत्यर्थः तथापि तु लोके वैकुंठे अश्नुवते प्राप्नुवंत्येव ३७ नन्वेवं तर्हि लोककालाविशेषात् स्वर्गादिव

हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुंक्ते ३६ अथो विभूतिं मम मा
याविनस्तामैश्वर्यमष्टांगमनुप्रवृत्तं श्रियं भागवतीं वाऽस्पृहयंति भद्रां परस्य मे तेऽश्नुवते
तु लोके ३७ न कर्हिचिन्मत्पराः शांतरूपे नंक्ष्यंति नो मेऽनिमिषो लेढि हेतिः येषामहं प्रि
य आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टं ३८ इमं लोकं तथैवामुमात्मानमुभयायि
नं आत्मानमनु ये चेह ये रायः पशवो गृहाः ३९ ॥ ननु भोग्यानां कदाचिद्विनाशः स्यात् तत्राह हे शां

तद्रूपे यद्वा शांतं शुद्धसत्त्वं तद्रूपे वैकुंठे मत्पराः कदाचिदपि न नंक्ष्यंति भोग्यहीना न भवंति अनिमिषो मे हेतिः मदीयं का
लचक्रं च नो लेढि तान्न ग्रसति तत्र हेतुः येषामिति सुत इव स्नेहविषयः सखेव विश्वासास्पदं गुरुरिवोपदेष्टा सुहृदिव
हितकारी इष्टं दैवमिव पूज्यः एवं सर्वभावेन मां ये भजंति तान्मदीयं कालचक्रं न ग्रसतीत्यर्थः ३८ एवंभूतानां मुक्तिं एकां
तभक्त्यैव ददामीत्याह इममिति द्वाभ्यां उभयायिनं लोकद्वयगामिनं आत्मानं सोपाधिकं आत्मानमनु ये पुत्रकलत्रादि

२७
भा॰अ॰
७१

सत्यव्रतानांसत्यव्रतस्यऋषीणांचक्षुत्रिणोगच्छंतीतिवह्निंगसमवायाद्बहुवचनं जिह्ममीनंमाया

प्रलयपयसिधातुःसुप्तश ... कैर्मुखेभ्यः श्रुतिगणम
पनीतंप्रत्युपादत्तहत्वा दि ... तिजमकथयद्योब्रह्मसत्य
व्रतानांतमहमखिलहेतुं ... जिह्ममीनंनतोस्मि ६१॥
॥ ६ ॥ इतिश्रीभागव ... तेमहापुराणेअष्टमस्कं
धेभगवतोमत्स्यावतार ... चरितानुवर्णनंनामचतुर्विं
शतितमोऽध्यायः २४ ॥ ... ॥श्रीकृष्णायनमोनमः॥ श्री॥

स्कं॰८
७१

मत्स्य॥ ॥ इतिश्रीभागवतेमहापुराणेभावार्थदीपिकायांश्रीधरस्वामिविरचितायांअष्टमस्कंधेटी
कायांचतुर्विंशोऽध्यायः २४ ॥

पुराणसंहितांमत्स्यपुराणं अशेषतः अब्रवीदित्यनुषंगः ५५ ५६ अतीतः पूर्वोयः प्रलयः तस्यापा

पुराणंसंहितांदिव्यांसांख्ययोगक्रियावतीं सत्यव्रतस्यराजर्षेरात्मगुह्यम
शेषतः ५५ अश्रौषीदृषिभिःसाकंमात्मतत्वमसंशयं नाव्यासीनोभगवता।
प्रोक्तंब्रह्मसनातनम् ५६ अतीतप्रलयापायउत्थितायसवेधसे हत्वाऽसुरं
हयग्रीवंवेदान्प्रत्याहरद्धरिः ५७ सतुसत्यव्रतोराजाज्ञानविज्ञानसंयुतः वि
ष्णोः प्रसादात्कल्पेऽस्मिन्आसीद्वैवस्वतोमनुः ५८ सत्यव्रतस्यराजर्षेर्माया
मत्स्यस्यशार्ङ्गिणः संवादंमहदाख्यानंश्रुत्वामुच्येतकिल्बिषात् ५९ अवतारोह
रेर्योयंकीर्त्तयेदन्वहंनरः संकल्पास्तस्यसिद्ध्यंतिसयातिपरमांगतिम् ६०॥

येऽवसाने ५७ ज्ञानंशास्त्रीयंविज्ञानमनुभवः ५८ ५९ योऽयंहरेरवतारस्तंयः कीर्त्तयेत्०॥ ६०॥

१

किंचप्राकृतोगुरुरनर्थहेतुरित्याह जनइति आदिशते उपदिशति असतींमतिं अर्थकामादिमतिं।
तमः संसारं ५१ ननुतर्हिसर्वोपिलोकोमामेवकिंनोपसरति अज्ञानादित्याह. त्वमिति प्रियस्यासाक्षा

जनोजनस्यादिशतेऽसतींमतिंययाप्रपद्येतदुरत्ययंतमः त्वंत्व
व्ययंज्ञानममोघमंजसाप्रपद्यतेयेनजनोनिजंपदं ५१ त्वंसर्वलोक
स्यसुहृत्प्रियेश्वरोह्यात्मागुरुर्ज्ञानमभीष्टसिद्धिः तथापिलोकोनभवंतमं
धधीर्जानातिसंतंहृदिबद्धकामः ५२ तंत्वामहंदेववरंवरेण्यंप्रपद्यईशं।
शंप्रतिबोधनाय छिंध्यर्थदीपैर्भगवन्वचोभिर्ग्रंथीन्हृदय्यान्विवृ
णुस्वमोकः ५३ श्रीशुकउवाच इत्युक्तवंतंनृपतिंभगवानादिपूरुषः
मत्स्यरूपीमहांऽभोधौविहरंस्तत्वमब्रवीत् ५४ ॥ १ ॥ १ ॥

वीश्वरश्च ५२ अहंतुत्वामेवशरणंयामीत्याह तंत्वामिति प्रतिबोधनायउपदेशाय अर्थदीपैः परमार्थप्र
काशकैः हृदयेभवान्ग्रंथीन् अहंकारादीन् स्वमोकः स्वरूपंविवृणुप्रकाशय ५३ नृपतिंप्रति ५४॥ ९

तमोविजह्यात् एहीनमलः निजंवर्णंचस्वरूपंभजेत् सईशोनोगुरुः भूयात् यतः सएवगुरोरपिपरमो गुरुः मलहानेदृष्टांतः रुद्ररोदनंरुद्रस्यरोदनंरजतंयदरोदीत् तद्रुद्रस्यरुद्रत्वंयदश्रुवशीर्यततद्रजतंहिरण्यम भवदितिश्रुतेः तद्यथाग्नेःसंपर्कान्मलंजहातिसंवर्णंभजते नतुक्षालनादिभिः तथानयज्ञादिभिर्मलत्यागः। किंतुत्वत्सेवयैवतेषांतुसेवाऽगत्वमेवेतिभावः ४८ परमेश्वरत्वंपरमगुरुत्वंचप्रपंचयन्नाह नेतियं॥

भजेतवर्णंनिजमेषसोऽव्ययोभूयात्सईशः परमोगुरुर्गुरुः ४८

नयत्प्रसादायुतभागलेशमन्येचदेवागुरवोजनाः स्वयं कर्तुंस मेताःप्रभवंतिपुंसस्तमीश्वरंत्वांशरणंप्रपद्ये ४९ अचक्षुरंध स्ययथाऽग्रणीः कृतस्तथाजनस्याऽविदुषोऽवुधोगुरुः त्वमर्क दृक्सर्वदृशांसमीक्षणोवृतोगुरुर्नः स्वगतिंवुभुत्सतां ५० ॥ ॥

प्रसादस्यायुतभागस्तस्यलेशमात्रमपिअन्येदेवादयः सर्वेसमेताअपिस्वयंतन्निरपेक्षाःसंतः कर्तुंनप्र भवंति ४९ तदेवदृष्टांतेनस्पष्टयन्नाह अचक्षुरिति अविदुषोजनस्य अवुधोऽविद्वान् गुरुस्तथैवअ र्कप्रकाशवत् स्वतएवदृक् ज्ञानंयस्यसः अर्कदृक् अतः सर्वदृशांसर्वेंद्रियाणांसमीक्षणःप्रकाश कः अतएवस्वगतिंवोद्धुमिच्छद्भिःनोस्माभिर्गुरुर्वृतोसि ५० ॥

चावशेषः संभवति तस्मादन्यथा वर्ण्यते नैवायं वास्तवः कोपि प्रलयः किंतु सत्यव्रतस्य ज्ञानोपदेशायाविर्भू-
तो भगवान् वैराग्यार्थमकस्मात्प्रलयमिव दर्शयामास यथाऽस्मिन्नेव वैवस्वतमन्वंतरे मार्कंडेयाय दर्शितवा-
न् तपेस्मै वच महाकल्पेस्मिन्निति विशेषणं संगच्छते तथा च ततः समुद्र उद्वेलः सर्वतः समदृश्यत इति तस्मै
वतयादर्शनमुक्तमित्येषा दिक् प्रस्तुतं तु श्लोकत्रयं व्याख्यास्यामः तत्र नानायोनिषु संसरतः स्वस्य भगवद्रूपयैव
तन्मायिन्निदृष्ट्वा मुक्तये तमेव प्रार्थयते अनादिर्या अविद्या तया उपहता आवृता आत्मनः संविद्येषां ते अत एव

यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ४६ जनोऽबुधोऽयं

निजकर्मबंधनः सुखेच्छया कर्म समीहतेऽसुखं यत्सेवया तां विधुनोत्यसन्म-

तिं ग्रंथिं स भिंद्याद्धृदयं स नो गुरुः ४७ यत्सेवयाग्नेरिव रुद्ररोदनं पुमान्विजह्यान्म-

लमात्मनस्तमः ॥ ८ वा विद्यामूलैः संसारपरिश्रमैरातुराः इह संसारे यदृच्छया यदनुग्रहाद्देवउप-
सृताः आश्रिताः संतो यं आप्नुयुः प्राप्नुवंति स भवानेव साक्षान्नो गुरुः सन् ग्रंथिं भिंद्यादित्युत्तरेणान्वयः ४६॥
ननु वैराग्यं विना कुतो मुक्तिः नहि तत्सत्वं त्वत्सेवैकफलत्वात्सेवा मा दिशेत्याशयेनाह जन इति अबुधोऽयं जनः अ-
सुखं यथा भवति तथा कर्म समीहते तां सुखेच्छां नो हृदयरूपं ग्रंथिं स भिंद्यात् यं ततः स एव नः परो गुरुः ४७ ननु
यज्ञदानादिभिः सत्वशुद्धिं विना कथं ग्रंथिभेदः स्यात् तत्राह यत्सेवयेति यस्य सेवयैव पुमानात्मनो मनसो मलं ॥८

॥ ४२ ४३ ४४ वस्त्रेणदोरकरूपेण ४५ सागरंतारयिष्यंतंतरिष्यन्निवसागरं सत्यव्रतोगुरुत्वेनतुष्टाव हरिमष्टभिः अत्रेदंचिंत्यंकिमयंमहाप्रलयोदैनंदिनोवेति तत्रतावत्ब्राह्मोलयइति योऽसावस्मिन्महाकल्पेइतिचोक्तेर्महाप्रलयइतिप्राप्तेनेतिब्रूमः महाप्रलयेपृथ्वीव्यादीनामवशेषासंभवात् यावत्ब्राह्मीनिशेत्याद्युक्तिविरोधाच्च अतोदैनंदिनइतियुक्तं नचैतदपिसंगच्छते सांवर्त्तकैरनावृष्ट्यादिभिर्विनाअकस्मादे

ध्यायन्भगवदादेशंददृशेनावमागतान् तामारुरोहविप्रेंद्रैरादायौषधिवीरुधः ॥ ४२ तमूचुर्मुनयःप्रीताराजन्ध्यायस्वकेशवं सवैनःसंकटादस्मादविताशंविधास्यति ४३ सोऽनुध्यातस्ततोराज्ञाप्रादुरासीन्महार्णवे एकशृंगधरोमत्स्योहैमोनियुतयोजनः ४४ निबध्यनावंतत्शृंगेयथोक्तोहरिणापुरा वस्त्रेणाहिनातुष्टस्तुष्टावमधुसूदनम् ४५ राजोवाच अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ॥

कवसप्तमेऽहनित्रैलोक्यंनिमंक्ष्यतीतिमत्स्योक्तेरनुपपत्तेः यच्चोक्तंप्रथमस्कंधेरूपंसजगृहेमात्स्यंचाक्षुषोंतरसंप्लवे नाव्यारोप्यमहीमय्यामपाद्वैवस्वतंमनुमिति तददपितदादुर्घटं नहिप्रलयद्वयेपिमहीमय्यांनाव्यारोहःसंभवति नचचाक्षुषमन्वंतरेप्रलयोस्ति नथाचसति सप्तमोमनुर्वैवस्वतइत्यपिदुर्घटंस्यात् तंतावद्दोषधीःसर्वाइत्यादिनिर्देशोपिनसंगच्छते नहितदा

संवर्त्तोभसिप्रलयोदके त्वामुपस्थास्यतिप्राप्स्यति ३३ ओषधीः आदायेतिशेषः ३४ ऋषीणामेवालो।

त्रिलोक्यांलीयमानायांसंवर्त्ताभसिवैतदा उपस्थास्यतिनौः काचिद्विशालात्वांमये।
रिता ३३ त्वंतावदोषधीः सर्वाबीजान्युच्चावचानिच सप्तर्षिभिः परिवृतः स
र्वसत्वोपबृंहितः ३४ आरुह्यबृहतींनावंविचरिष्यस्यविक्लवः एकार्णवेनिरालो
केऋषीणामेववर्च्चसा ३५ दोधूयमानांतांनावंसमीरेणवलीयसा. उपस्थि
तस्यमेशृंगेनिवध्नीहिमहाहिना ३६ ·अहंत्वामृषिभिः साकंसहनावमुदन्वा।
ति विकर्षन्विचरिष्यामियावद्ब्राह्मीनिशाप्रभो ३७ मदीयंमहिमानंचपरंब्र।
ह्मेतिशब्दितं वेत्स्यस्यनुगृहीतंमेसंप्रश्नैर्विवृतंहृदि ३८ इत्थमादिश्यराजा
नंहरिरंतरधीयत सोऽन्ववैक्षततंकालंयंहृषीकेशआदिशत् ३९ आस्तीर्यद
र्भान्प्राक्कूलान्राजर्षिः प्रागुदङ्मुखः निषसादहरेः पादौचिंतयन्मत्स्यरूपिणः
४० ततः समुद्रउद्वेलः सर्वतः प्लावयन्महीं वर्द्धमानोमहामेघैर्वर्षद्भिःसमदृश्यत ४१

केनविचरिष्यसि ३५ महाऽहिनावासुकिना ३६ ३७ मेमयाअनुगृहीतंप्रसादीकृतंहृदिअपरोऽक्षंवेत्स्यसित्व
याकृतैःसंप्रश्नैःमेमयाविवृतंप्रकाशितंसंतं ३८ ३९ ४० ४१

२८

भा॰अ॰ ६७

२४ २५ अभिव्यानशे अभितोव्याप्तवान् २६ २७ मुख्यः सत्यः आत्माचगतिश्च आश्रयः २८ २९ हे अरविंदाक्ष पृथगात्मनांदेहाद्या
भिमानिनांसतामितरेषांपदोपसर्पणंयथामृषाभवेत् तथासुहृत्प्रियात्मनस्तवपदोपसर्पणंमृषानभवेत् यद्यस्मात्तन्नोभक्तानां

क्षिप्यमाणस्तस्माद्धेदमिहमांमकरादयः अदंस्यतिबलावीरमांनेहोत्स्रष्टुमर्हसि २४ एवंविमोहित
स्तेनवदतावल्गुभारतीं तमाहकोभवानस्मान्मत्स्यरूपेणमोहयन् २५ नैवंवीर्योजलचरोदृष्टोऽ
स्माभिःश्रुतोपिच योभवान्योजनशतमह्नाऽभिव्यानशेसरः २६ नूनंत्वंभगवान्साक्षाद्धरिर्नाराय
णोऽव्ययः अनुग्रहायभूतानांधत्सेरूपंजलौकसां २७ नमस्तेपुरुषश्रेष्ठस्थित्युत्पत्त्यप्ययेश्वर भक्तानां
नःप्रपन्नानांमुख्योह्यात्मगतिर्विभो २८ सर्वेलीलावतारास्तेभूतानांभूतिहेतवः ज्ञातुमिच्छाम्यदोरूपं
यदर्थंभवताधृतं २९ नतेऽरविंदाक्षपदोपसर्पणंमृषाभवेत्सर्वसुहृत्प्रियात्मनः यथेतरेषांपृथगात्मनां
सतामदीदृशोयद्वपुरद्भुतंहिनः ३० श्रीशुकउवाच इतिब्रुवाणंनृपतिंजगत्पतिः सत्यव्रतंमत्स्यवपुर्यु
गक्षये विहर्तुकामःप्रलयार्णवेऽब्रवीच्चिकीर्षुरेकांतजनप्रियःप्रियम् ३१ श्रीभगवानुवाच सप्तमे
ह्यतनादूर्ध्वमहन्येतदरिंदम निमंक्ष्यत्यप्ययांभोधौत्रैलोक्यंभूर्भुवादिकम् ३२ ॥ ६ ॥

मद्भुतंवपुरदीदृशः दर्शितवानसि पाठांतरे पृथगात्मनोभेददर्शिनःपुंसः असतांपरिच्छिन्नानांपदोपसर्पणंयथामृषेत्य
र्थः ३० एकांतजनाभक्ताःप्रियायस्य ३१ अप्ययांभोधौप्रलयार्णवेत्रैलोक्यंभूर्भुवआदिकमित्यर्थः ३२॥ ६ ॥

राम ६७

१४।१५।१६।१७॥यत्राहंसुखंनिवसामितदोकः स्थानंकल्पय १८ औदंचनोदकेमणिकस्थेजले १९।२० २१ रक्षायोगेन

नमाहसातिकरुणंमहाकारुणिकंनृप यादोभ्योज्ञातिघातिभ्योदीनांमांदीनवत्स
ल कथंविसृजसेराजन्भीतामस्मिन्सरिज्जले १४ तमात्मनोनुग्रहार्थंप्रीत्यामत्स्यव
पुर्द्धरं अजानन्रक्षणार्थायशफर्याःसमनोदधे १५ तस्यादीनतरंवाक्यमाश्रुत्यसम
हीपतिः कलशाप्सुनिधायैनांदयालुर्निन्यआश्रमं १६ सातुतत्रैकरात्रेणवर्द्धमानाक
मंडलौ अलब्ध्वात्मावकाशंवाइदमाहमहीपतिम् १७ नाहंकमंडलावस्मिन्कृच्छ्रंव
स्तुमिहोत्सहे कल्पयौकःसुविपुलंयत्राहंनिवसेसुखं १८ सएनांततआदायन्यधादौ
दंचनोदके तत्रक्षिप्तामुहूर्त्तेनहस्तत्रयमवर्द्धत १९ नमएतदलंराजन्सुखंवस्तुमुदंच
नम् पृथुदेहिपदंमह्यंयत्वाहंशरणंगता २० ततआदायसाराज्ञाक्षिप्ताराजन्सरोवरे
तदावृत्यात्मनातोयंमहामीनोन्ववर्द्धत २१ नैतन्मेस्वस्तयेराजन्नुदकंसलिलौकसः
निधहिरक्षायोगेनह्रदेमामविदासिनि २२ इत्युक्तःसोनयन्मत्स्यंतत्रतत्रविदासिनि
जलाशयेसंमितंतंसमुद्रेप्राक्षिपज्झषं २३॥

रक्षायाःयोगेनोपायेन यथामहाह्रदप्राप्तेर्वाग्जलंविना
नमुच्येयंतेनोपायेननधेहि अविदासिनिअनुपक्षये २२ संमितंतत्तज्जलाशयपरिमितम् २३॥६॥ ॥

२४
भा॰श्री॰ जुगुप्सितत्वं परिहरति धियो गुणैर्यान्युच्चावचानि रूपाणि तेषु नियंतृत्वेन चरन्नपीश्वरो नोच्चावचत्वं भजते निर्गुणत्वात्
६६ कुतः पुनः शुद्धसत्वमयैर्मत्स्याद्याकारैरुच्चावचत्वशंकेति भावः ६ विशेषतो मत्स्यावतारप्रयोजनमाह आसीदिति

उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः ६
आसीदतीतकल्पांते ब्राह्मो नैमित्तिको लयः समुद्रोपप्लुतास्तत्र लोका भूरादयो
नृप ७ कालेनागतनिद्रस्य धातुः शिशयिषोर्बली मुखतो निःसृतान्वेदान्हय
ग्रीवोंतिकेऽहरत् ८ ज्ञात्वा तद्दानवेंद्रस्य हयग्रीवस्य चेष्टितं दधार शफरीरूपं भ
गवान्हरिरीश्वरः ९ तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् नारायणपरो
ऽतप्यत्तपः स सलिलाशनः १० योऽसावस्मिन्महाकल्पे तनयः स विवस्वतः श्राद्धदे
व इति ख्यातो मनुत्वे हरिणार्पितः ११ एकदा कृतमालायां कुर्वतो जलतर्पणं तस्यां
जल्युदके काचित् शफर्येकाऽभ्यपद्यत १२ सत्यव्रतोंजलिगतां सह तोयेन भारत
उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः १३ ॥ त्रिभिः ब्रह्मणो निद्रायां भवो ब्राह्मः स तेनैव निमि
त्तेन जातो नैमित्तिकः समुद्रेणोपप्लुता निमग्नाः ७ अंतिके निःसृतान् ८ शफरीरूपं मात्स्यं ९ प्रयोजनांतरं लीलाप्रका
रमाह तत्र राजऋषिरित्यादि यावत्समाप्ति १० स एव श्राद्धदेव इति ख्यातः ११ कृतमालायां नद्याम् १२ ॥ १३ ॥ ६ ॥ राम
६६

सुकृतंयथावत्कृतंविदुः ३१ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांत्रयोविंशोध्यायः २३ चतुर्विंशे
प्रसंगेनमत्स्यरूपस्यशार्ङ्गिणः लीलोच्यतेयतः सत्यव्रतरक्षामहार्णवे १ तनुंतन्नुनिदर्शीदोनिजैश्वर्यनिदर्शना
त् मत्स्यंएच्छतिपृथ्वीशोलीलयावामनोपमं २माययामत्स्यविडंबनंमत्स्यरूपानुकरणंयस्यांनिरूप्यते १ ननु

क्रियमाणेकर्म्मणीदंदैवेपित्र्येथमानुषे यत्रयत्रानुकीर्त्त्येततत्तेषांसुकृतंवि
दुः ३१ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेवामनावतारचरितेत्रयोविंशो
ध्यायः २३ राजोवाच भगवन्श्रोतुमिच्छामिहरेरद्भुतकर्म्मणः अवतारकथा
माद्यांमायामत्स्यविडंबनं १ यदर्थमदधाद्रूपंमात्स्यंलोकजुगुप्सितं तमःप्रकृति
दुर्मर्षंकर्मग्रस्तमिवेश्वरः २ एतन्नोभगवन्सर्वंयथावद्वक्तुमर्हसि उत्तमश्लोक
चरितंसर्वलोकसुखावहं ३ श्रीसूतउवाच इत्युक्तोविष्णुरातेनभगवान्बादराय
णिः उवाचचरितंविष्णोर्मत्स्यरूपेणयत्कृतं ४ श्रीशुकउवाच गोविप्रसुरसाधू
नांछंदसामपिचेश्वरः रक्षामिच्छंस्तनूर्धत्तेधर्मस्यार्थस्यचैवहि ५ ॥ ६ ॥ ६ ॥ ६ ॥

कस्मादकस्मादेवमत्स्यावतारश्रवणेच्छा श्रीवामनसादृश्यादित्याह यदर्थमितिद्वाभ्यां दुर्मर्षंदुःसहं २ ब
लेरनुग्रहायजुगुप्सितमपियाचकरूपंधृतवानितियुक्तमुक्तं यदर्थंतुलोकजुगुप्सितंमात्स्यंरूपमधारयत् एत
न्नोयथावद्वक्तुमर्हसीत्यर्थः ३ ४ सामान्येनावतारप्रयोजनमाह गोविप्रेति ५ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

॥ २६ । २७ एतच्चरितंसर्वमाख्यातमितिविशेषोक्त्याअन्यान्यपिसंतीत्युक्तं २८ तानितर्हिनिःशेषाणिवर्णनी
यानीत्यपेक्षायामाह पारमिति उरुबहुविक्रमतोविष्णोर्महिम्नःपारंयोगृणानोभवतिसमर्त्यः पार्थिवानिरजां
स्यपिविममेगणितवान् यथापार्थिवपरमाणुगणनमशक्यंतथाविष्णोर्गुणगणनमप्यशक्यमित्यर्थः तथा
चमंत्रः विष्णोर्नुकंवीर्याणीति एतदेवमंत्रांतरार्थंसूचयन्नाह यस्यपुरुषस्यपूर्णस्यमहिम्नःपारं मंत्रदृक्नाप्ता

प्राप्यत्रिभुवनंचेंद्रउपेंद्रभुजपालितः श्रियापरमयाजुष्टोमुमुदेगतसाध्वसः ।
२५ ब्रह्माशर्वःकुमारश्चभृग्वाद्यामुनयोनृपपितरःसर्वभूतानिसिद्धावैमानिका
श्चये २६ सुमहत्कर्मतद्विष्णोर्गायंतःपरमाद्भुतंधिष्ण्यानिस्वानितिनितेजग्मुरदि
तिंचशशंसिरे २७ सर्वमेतन्मयाख्यातंभवतःकुलनंदन उरुक्रमस्यचरितंश्रोतॄणा
मघमोचनं २८ पारंमहिम्नउरुविक्रमतोगृणानोयःपार्थिवानिविममेसरजांसिम
र्त्यः किंजायमानउतजातउपैतिमर्त्यइत्याहमंत्रदृगृषिःपुरुषस्ययस्य २९ यइदं
देवदेवस्यहरेरद्भुतकर्म्मणः अवतारानुचरितंशृण्वन्यातिपरांगतिं ३० ॥ ६ ॥

विर्वसिष्ठइतिएवमाह कथंकिंजायमानोजातोवाउपैतिनकोपीतिवदन्ननंतत्वेनैवाहेत्यर्थः तथाचमंत्रः न
तविष्णोजायमानोनजातोदेवमहिम्नःपरमंतमापेति २९ यइदंशृण्वन्भवतिसपरांगतिंयाति ३० ॥ ६ ॥ ६ ॥

अर्हतःपात्रतःवस्तुतश्चदक्षिणादिनायच्छिद्रंन्यूनं तत्सर्वंतवानुकीर्तनमात्रमेवनिश्छिद्रंकरोतीति १६ १७
हरेराज्ञांप्रतिनंद्यबलेर्यज्ञच्छिद्रंसमाधत्तसंदधेपाअंतरेसमाधायतदाज्ञांसंपादितवानितिशेषः १८ १९ दे

सर्वंकरोतिनिश्छिद्रमनुसंकीर्तनंतव १६ तथापिवदतोभूमन्करिष्याम्यनुशास
नम् एतच्छ्रेयः परंपुंसांयत्तवाज्ञानुपालनं १७ ~~श्रीशुक उवाच~~ अभिनंद्यहरेराज्ञामुश
नाभगवानिति यज्ञच्छिद्रंसमाधत्तबलेर्विप्रर्षिभिःसह १८ एवंबलेर्महींराजन्भि
क्षित्वावामनोहरिः ददौभ्रात्रेमहेंद्रायत्रिदिवंयत्परैर्हृतम् १९ प्रजापतिपतिर्ब्रह्मा
देवर्षिपितृभूमिपैः दक्षभृग्वंगिरोमुख्यैः कुमारेणभवेनच २० कश्यपस्यादितेः
प्रीत्यैसर्वभूतभवायच लोकानांलोकपालानामकरोद्वामनंपतिम् २१ वेदानांसर्व
देवानांधर्मस्ययशसःश्रियः मंगलानांव्रतानांचकल्पंस्वर्गापवर्गयोः २२ उपेंद्रंक
ल्पयांचक्रेपतिंसर्वविभूतये तदासर्वाणिभूतानिभृशंमुमुदिरेनृप २३ ततस्त्विंद्रः
पुरस्कृत्यदेवयानेनवामनं लोकपलैर्दिवंनिन्येब्रह्मणाचानुमोदितः २४

वाश्चऋषयश्चभूमिपाश्चमनवः तैःसहितः २० २१ ननुलोकादीनांपतिरिंद्रोस्त्येवसत्यं तथापिवेदादीनांकल्पं
पालनेदक्षं २२ वामनमुपेंद्रंकल्पयांचक्रे २३ देवयानेनमार्गेण विमानेनेतिवा २४ ॥६॥ ६॥ ६॥ ६॥

२४
भा॰ अ॰
६४

॥ मद्दर्शनेनयोमहाह्लादः तेनध्वस्तंकर्मबंधनमज्ञानंयस्य १० ११ १२ १३ कर्मवितन्वतः शिष्यस्ययत्छि
द्रमंतरंन्यूनं जातंतत्तंतनुविस्तारयसंधत्स्वयजमानंविनाकथंसंधातव्यमितिनवाच्यमित्याह यन्नदिति ब्रह्म
दृष्टंब्राह्मणे दृष्टमेवसमंभवेत् किंपुनरनुष्ठितमित्यर्थः १४ भवान्यस्यसर्वेणापिभावेनवस्तुमात्रेणपूजितः तं

श्रीभगवानुवाच वत्सप्रह्लादभद्रंतेप्रयाहिसुतलालयं मोदमानः स्वपौत्रेणज्ञाती
नांसुखमावह ९ नित्यंद्रष्टासिमांतत्रगदापाणिमवस्थितम् मद्दर्शनमहाह्लादध्व
स्तकर्म्मनिबंधनः १० श्रीशुकउवाच आज्ञांभगवतोराजन्प्रह्लादोबलिनासह बाढ
मित्यमलप्रज्ञोमूर्ध्न्याधायकृतांजलिः ११ परिक्रम्यादिपुरुषंसर्वासुरचमूपतिः प्रण
तस्तदनुज्ञातः प्रविवेशमहाबिलं १२ अथाहोशनसंराजन्हरिर्नारायणोऽन्तिके आसी
नमृत्विजांमध्येसदसिब्रह्मवादिनां १३ ब्रह्मन्संतनुशिष्यस्यकर्मछिद्रंवितन्वतः य
त्तत्कर्म्मसुवैषम्यंब्रह्मदृष्टंसमंभवेत १४ श्रीशुकउवाच कुतस्तत्कर्म्मवैषम्यंयस्य
कर्मेश्वरोभवान् यज्ञेशोयज्ञपुरुषः सर्वभावेनपूजितः १५ मंत्रतस्तंत्रतश्छिद्रंदेशका

स्यकर्मसुकुतोवैषम्यं कथंभूतः कर्मणामीश्वरः प्रवर्त्तकः यज्ञेशः यज्ञफलदः य ऽऽ लाहिवस्तुतः
तमयज्ञपुरुषः १५ आस्तांतावत्पूजा यस्मान्मंत्रतः स्वरादिभ्रंशेनतंत्रतः व्युत्क्रमादिनादेशतः कालतश्च

अशासत् उपेंद्रः सन्यालयामास ४ ५ दुर्गपालोसिरक्षिष्येसर्वतोऽहंत्वामित्युक्तत्वात् ६ हेशरणद आश्र
यप्रदयेकुसृतयः दुर्वृत्ताः खलयोनयः उग्रजातयश्चतेवयंतस्यभवतोदाक्षिण्यदृष्टेः पदवींकस्माद्धेतोःप्रणीताःब
हुमानेनचित्तानुवर्तनेनदाक्षिण्यंतेनयादृष्टिस्तद्विषयतांप्रापिताः ७ भक्तप्रियत्वादितिचेत् नहिएवंतवेहितंअहो

एवमिंद्रायभगवान्प्रत्यानीयत्रिविष्टपं पूरयित्वाऽदितेःकाममशासत्सकलंजगत्
४ लब्धप्रसादंनिर्मुक्तंपौत्रंवंशधरंबलिं निशाम्यभक्तिप्रवणःप्रह्लादइदमब्रवीत् ५
प्रह्लाद उवाच नेमंविरंच्योलभतेप्रसादंनश्रीर्नशर्वःकिमुताऽपरेते यन्नोऽसुराणाम
सिदुर्गपालोविश्वाभिवंद्यैरपिवंदितांघ्रिः ६ यत्पादपद्ममकरंदनिषेवणेनब्रह्माद
यःशरणदाश्नुवतेविभूतीः कस्माद्वयंकुसृतयःखलयोनयस्तेदाक्षिण्यदृष्टिपदवीं
भवतःप्रणीताः ७ चित्रंतवेहितमहोऽमितयोगमायालीलाविसृष्टभुवनस्यविशारद
स्य सर्वात्मनःसमदृशोविषमःस्वभावोभक्तप्रियोयदसिकल्पतरुस्वभावः ८ ॥

चित्रंकिंतत्सर्वात्मनःसमदृशश्चस्वभावोविषमइतियत् सर्वात्मत्वेचित्रचरितत्वेहेतुःअमिताअचिंत्यायोग
मायातयालीलातयाविसृष्टानिविरचितानिभुवनानियेनतस्य अहोइत्यत्रसंधिरार्षः समदृक्त्वेहेतुःविशारदस्य
सर्वज्ञस्य अथवाभक्तप्रियत्वेपितववैषम्यंनास्त्येव यतःकल्पतरुस्वभावःसन्भक्तप्रियोसि नहिकल्पतरुराश्रिता
नामेवकामान्पूरयन्नपिविषमोभवतीत्यर्थः ८ ॥

२२
भा॰ अ॰ ६३

संगाद्य आसुरो भावः स विनंक्ष्यति ३६ इति श्रीभागवते महापुराणे अष्टमस्कंधे टीकायां द्वाविंशोऽध्यायः २२
त्रयोविंशे बलो याते सुतलं सपितामहे उपेंद्रेण दिवं गत्वा पूर्ववन्मोदते हरिः १ वाष्पस्य कलाभिर्विंदुभिरा
कुले ईक्षणे यस्य भक्त्या उत्कलः उत्कंठः १ अहो त्वत्प्रणामस्य महिमा यदर्थेकृतः समुद्यम एव प्रपन्नानां भक्तानां
यार्थः तस्य विधौ अभक्तेऽर्पितस्य संपादने समाहितः अप्रमत्तः स्थितः कुतः उद्यं नोद्यमेन लोकपालैरमरैः सत्व

तत्र दानवदैत्यानां संगात्ते भाव आसुरः दृष्ट्वा मदनुभावं वै सद्यः कुंठो विनंक्ष्यति ३६
इति श्रीभागवते महापुराणे अष्टमस्कंधे बलिवामनसंवादो नाम द्वाविंशोऽध्यायः २२
श्रीशुक उवाच इत्युक्तवंतं पुरुषं पुरातनं महानुभावोऽखिलसाधुसंमतः बद्धांजलिर्बा
ष्पकलाकुलेक्षणो भक्त्युत्कलो गद्गदया गिराब्रवीत् १ श्रीबलिरुवाच अहो प्रणामा
य कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः यल्लोकपालैस्त्वदनुग्रहोऽमरैरलब्ध
पूर्वोऽपसदेऽसुरेऽर्पितः २ श्रीशुक उवाच इत्युक्त्वा हरिमानम्य ब्रह्माणं सभवं ततः॥
विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ३॥ ऽऽ प्रधानैरपि अलब्धपूर्वस्त्वदनुग्रहः अपसदे
नीचे राजसे मयि अर्पितः अयं भावः परमेश्वराय तुभ्यमहं वराकस्त्रिलोकी दत्तवानिति तदास्तां प्रणामो
ऽपि न सम्यक्कृतः किंतु तदर्थं समुद्यममात्रं कृतं तेन च कर्मतपोदानादिकोटिभिरप्यलभ्यस्त्वदनुग्रहः सं
पादितः अहो त्वत्प्रणामप्रभावाश्चर्यमिति २। ३॥ ६॥ ६॥

२८ नह्येतस्मिन् कुलेकश्चिन्निःसत्वः कृपणः पुमानित्यादिनाछलैरेवमयाधर्मउक्तः तथापितंधर्ममयंनत्य
जति अतः सत्यवाक् २९ ममयाअहमेवाश्रयः पालकोयस्यसः ३१ स्थानंप्रापितइतियदुक्तंतदेवस्थान
माह तावत्सावर्णिमन्वंतरपर्यंतंसुतलमध्यास्तां अधिवसत्वित्यर्थः यद्यस्मिन्वसतां आध्यादयोममेक्षया

क्षीणरिक्थश्च्युतः स्थानात्क्षिप्तोबद्धश्चशत्रुभिः ज्ञातिभिश्चपरित्यक्तोयातना
मनुयापितः २९ गुरुणाभर्त्सितःशप्तोजहौसत्यंनसुव्रतः छलैरुक्तोमयाधर्मो
नायंत्यजतिसत्यवाक् ३० एषमेप्रापितःस्थानंदुष्प्रापममरैरपि सावर्णेरंतरस्या
यंभवितेंद्रोमदाश्रयः ३१ तावत्सुतलमध्यास्तांविश्वकर्मविनिर्मितं यन्नाधयो
व्याधयश्चक्लमस्तंद्रापराभवः नोपसर्गानिवसतांसंभवंतिममेक्षया ३२ इंद्रसे
नमहाराजयाहिभोभद्रमस्तुते सुतलंस्वर्गिभिःप्रार्थ्यंज्ञातिभिःपरिवारितः ३३ नत्वा
मभिभविष्यंतिलोकेशाःकिमुतापरे त्वच्छासनातिगान्दैत्यान्चक्रंमेसूदयिष्यति ३४
रक्षिष्येसर्वतोहंत्वांसानुगंसपरिच्छदम् सदासन्निहितंवीरतत्रमांद्रक्ष्यतेभवान् ३५

नसंभवंति ३२ एवंब्रह्माणंप्रत्युक्त्वाकरुणापरवशःसाक्षाद्बलिंप्रत्याह इंद्रसेनेतिचतुर्भिः ३३ त्वच्छास
नंअतिगच्छंतिअतिवर्त्तंतइतितथातान् ३४ तथाऽपिभवद्दियोगान्नदनिच्छंतंप्रत्याहसदेति ३५ ॥ ६१ ॥

तस्यविशः अर्थान नन्वर्थापहारः कोऽयमनुग्रहः तत्राह यन्मदः येरर्थैर्मदोयस्यसः अतएवस्तब्धः अनम्रः सन् मदस्तंभहे
तूनामर्थानामपहारएवानुग्रह इत्यर्थः २४ दुर्लभंपुरुषजन्मकथंचितल्लब्धवतोजीवस्यजन्मादिनिमित्तोगर्वोमहाहानिक
रस्तस्यचनाशोमदनुग्रहोऽस्त्वेत्याह यदेतिद्वाभ्यां अनीशः परतंत्रः सन्निजैः कर्मभिर्नानायोनिषुक्रमिकीटादिषुसंसरन् २५
तत्रपौरुष्यांगतोजन्मादिभिरपियस्ययदिस्तंभोनभवेत् तर्हिअयंमदनुग्रहएव २६ कथंतर्हिधृवादिभ्योर्थसंपदोदत्ता

श्रीभगवानुवाच ब्रह्मन्यमनुगृह्णामितद्विशोविधुनोम्यहं यन्मदः पुरुषः स्तब्धो
लोकंमांचावमन्यते २४ यदाकदाचिज्जीवात्मासंसरन्निजकर्म्मभिः नानायोनिष्व
नीशोयंपौरुषींगतिमाव्रजेत् २५ जन्मकर्म्मवयोरूपविद्यैश्वर्यधनादिभिः यद्यस्य
नभवेत्स्तंभस्तत्रायंमदनुग्रहः २६ मानस्तंभनिमित्तानांजन्मादीनांसमंततः सर्वश्रे
यः प्रतीपानांहंतमुह्येन्नमत्परः २७ एषदानवदैत्यानामग्रणीः कीर्तिवर्द्धनः अजैषी
दजय्यांमायांसीदन्नपिनमुह्यति २८ ॥

सीतिचेत् तत्राह मानएवस्तंभः अनम्रता तस्य
निमित्तभूतानांसमंततः सर्वशः सर्वश्रेयः प्रतिकूलानांजन्मादीनांसत्वेपि जन्मादिभिरितिवा हंते
तिखेदेदृढब्रुवन् मत्परोनमुह्येत् अतोभक्तस्येच्छयासंपदोपिददामिति अभक्तस्तुमुह्येदितितदपहारए
पमेवतस्यानुग्रहंकरोमीतिभावः २७ अस्यचेदानींमत्परत्वाद्दैन्येदुष्प्रापमपिदास्यामीतिवक्तुंतस्यमोहाभावे

२९ नह्येतस्मिन् कुलेकश्चिन्निःसत्वः कृपणः पुमानित्यादिनाछलैरेवमयाधर्मउक्तः तथापितंधर्ममयंनत्य
जति अतः सत्यवाक् ३० ममयाअहमेवाश्रयः पालकोयस्यसः ३१ स्थानंप्रापितइतियदुक्तंतदेवस्थान
माह तावत्सावर्णिमन्वंतरपर्यंतंसुतलमध्यास्तां अधिवसत्वित्यर्थः यद्यस्मिन्वसतां आध्यादयोममेक्षया

क्षीणरिक्थश्च्युतः स्थानात् क्षिप्तोबद्धश्चशत्रुभिः ज्ञातिभिश्चपरित्यक्तोयातना
मनुयापितः २९ गुरुणाभर्त्सितः शप्तोजहौसत्यंनसुव्रतः छलैरुक्तोमयाधर्मो
नायंत्यजतिसत्यवाक् ३० एषमेप्रापितः स्थानंदुष्प्रापममरैरपि सावर्णेरंतरस्या
यंभवितेंद्रोमदाश्रयः ३१ तावत्सुतलमध्यास्तांविश्वकर्मविनिर्मितं यत्राधयो
व्याधयश्चक्लमस्तंद्रापराभवः नोपसर्गानिवसतांसंभवंतिममेक्षया ३२ इंद्रसे
नमहाराजयाहिभोभद्रमस्तुते सुतलंस्वर्गिभिःप्रार्थ्यंज्ञातिभिःपरिवारितः ३३ नत्वा
मभिभविष्यंतिलोकेशाःकिमुतापरे त्वच्छासनातिगान्दैत्यान्चक्रंमेसूदयिष्यति ३४
रक्षिष्येसर्वतोहंत्वांसानुगंसपरिच्छदम् सदासन्निहितंवीरतत्रमांद्रक्ष्यतेभवान् ३५

नसंभवंति ३२ एवंप्रह्लाणंप्रत्युक्त्वाकरुणापरवशःसाक्षाद्बलिंप्रत्याह इंद्रसेनेतिचतुर्भिः ३३ त्वच्छास
नंअतिगच्छंतिअतिवर्तंतइतितथातान् ३४ तथाऽपिभवद्वियोगान्नदनिच्छंतंप्रत्याह सदेति ३५ ॥ ६ ॥

पुनाविचित्रवैशसैहिंसांसंप्रापितोपि ८ देहादीनामसारतांनिश्चित्याकुतोभयं ध्रुवं च भवतः पादपद्ममेवप्र
पेदे अथतस्मादहमपिदैवेनतस्यैवभाग्येनतत्वांतिकंनीतः इति चतुर्णामन्वयः ॥ ततः आयुषोंतेरिक्थहारैः
पुत्रैः सर्वस्वापहारिभिः इहगेहेषु केवलमायुषोव्यय एव न तु सुखंकिंचित् ९ सः प्रसिद्धोमहान्स्वपक्षंदैत्यकु

भवद्विपक्षेणविचित्रवैशसंसंप्रापितस्त्वत्यरमः स्वपित्रा ८ किमात्मनानेनज
हातियोंततः किंरिक्थहारैः स्वजनाख्यदस्युभिः किंजाययासंसृतिहेतुभूतयाम
र्त्यस्यगेहैः किमिहाऽयुषोव्ययः ९ इत्थंसनिश्चित्यपितामहोमहानगाधबोधोभ
वतः पादपद्मं ध्रुवंप्रपेदेह्यकुतोभयंजनान्नभीतः स्वपक्षक्षपणस्यसन्नम १० अथाऽ
हमप्याऽत्मरिपोस्तवांतिकंदैवेननीतः प्रसभंत्याजितश्रीः इदंकृतांतांतिकवर्तिजी
वितंययाऽध्रुवंस्तब्धमतिर्नबुध्यते ११ श्रीशुकउवाच तस्येत्थंभाषमाणस्यप्रह्ला
दोभगवत्प्रियः आजगामकुरुश्रेष्ठराकापतिरिवोत्थितः १२ तमिंद्रसेनः स्वपिता
महंश्रियाविराजमानंनलिनायतेक्षणं प्रांशुंपिशंगांबरमंजनत्विषंप्रलंबबाहुंसुभगं

लंक्षपयतीतितथातस्यापि १० अथतस्मात् अहमपिदैवेनतस्यैवभाग्येनतवांतिकं ॥ समैक्षत १३
नीतः प्रसभंबलात्त्याजिताश्रीर्यस्ययया श्रियास्तब्धमतिः सन्नुमानिदंजीवितमध्रुवंनबुध्यते कथंभूतंकृतांत

भा॰ ट॰ स्क॰ ८ अ॰ २३ २१

स्वकृताहंकारादिरूपापराधस्मरणेन सव्रीडं नीचीनमधोमुखं यस्य सः १४ शिरसा नमन्नेव उपेत्य मूर्ध्ना ननाम बलेस्तं कृतमनुग्रहं दृष्ट्वा पुलकैरश्रुभिश्च विह्वलः १५ त्वयैवेति नह्यैंद्रं पदमेतदीपं त्वया पदत्तं किंतु स्वीयमेव पुनः स्वीकृतं तच्च शोभनमेव कृतं न तत्र हेतुः मन्य इति यद्यस्मात् श्रीरेव यदात्ममोहनं तस्माद्विभ्रंशितः

तस्मै बलिर्वारुणपाशयंत्रितः समर्हणं नोपजहार पूर्ववत् ननाम मूर्ध्नाश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह १४ स तत्र हासीनमुदीक्ष्य सत्पतिं सुनंदनंदाद्यनुगैरुपासितं उपेत्य भूमौ शिरसा महामना ननाम मूर्ध्ना पुलकाश्रुविह्वलः १५ प्रह्लाद उवाच त्वयैव दत्तं पदमैंद्रमूर्जितं हृतं तदेवाद्य तथैव शोभनं मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात् १६ यया हि विद्वानपि मुह्यते यतस्तत्को विचष्टे गतिमात्मनो यथा तस्मै नमस्ते जगदीश्वराय नारायणायाखिललोकसाक्षिणे १७ श्रीशुक उवाच तस्यानुशृण्वतो राजन्प्रह्लादस्य कृतांजलेः हिरण्यगर्भो भगवानुवाच मधुसूदनम् १८ ॥६॥ ६॥

१६ मोहनत्वमेवाह यया श्रिया विद्वानपि यतः संयतोऽपि मुह्यति तत्तस्याः सत्त्वां कोऽन्यः पुमानात्मनो गतिं तत्त्वं यथावद्विचष्टे पश्यति तस्मै महाकारुणिकाय १७ तस्य प्रह्लादस्यानुशृण्वतः उवाचेति किंचिद्वक्तुं प्रवृत्त इत्यर्थः

तदेवं विंध्यावलिरपि वक्तुं प्रवृत्ता तां च संमानयन् हिरण्यगर्भः क्षणं तूष्णीं स्थितः अतस्तस्या एव वाक्यं प्रथ
ममवतारयति बद्धं वीक्ष्येति १९ त्रिजगतः कर्त्तुः प्रभोः पालकस्य अस्यतः संहर्त्तुश्च ईश्वरस्य तवान्ये किमाव
हंति किं समर्पयंति त्वया वरोपितः कर्तृवादः कर्त्तारः स्वतंत्रा वयमिति वादमात्रमपि येषां ते अयं भावः लो
केत्रयं मयापितं तत्तीयपादाय देहं समर्प्य प्रतिश्रुतमृतं करामीति देहादिषु स्वाम्याविष्कारेण ब्रुवन्नयं कुबुद्धि

बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला प्रांजलिः प्रणतोपेंद्रं बभाषे वाङ्मु
खी नृप १९ विंध्यावलिरुवाच क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र
कुधियोऽपर ईश कुर्युः कर्त्तुः प्रभोस्तव किमस्यत आवहंति त्यक्तह्रियस्त्व
द्वरोपितकर्तृवादाः २० ब्रह्मोवाच भूतभावन भूतेश देवदेव जगन्मय मुंचैनं ह
तसर्वस्वं नायमर्हति निग्रहम् २१ कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये
निवेदितं च सर्वस्वमात्माऽविक्लवया धिया २२ यत्पादयोरशठधीः सलिलं प्र
दाय दूर्वांकुरैरपि विधाय सतीं सपर्यां अप्युत्तमां गतिमसौ भजते त्रिलोकीं दाश्वा

न्निर्लज्जश्च यतस्त्वमेव सर्वस्यापि स्वामी अतो मंदबुद्धिमेनं केवलं ऽ नविक्लवमनाः कथमार्त्तिमृ च्छे
लं कृपया विमुच्य पालयेति २० तदेवं प्रह्लादस्य विंध्यावलेश्च परमार्थात्तया प्रसन्नो हरिः ब्रह्मा तु लोकदृष्ट्यैव
विज्ञापयति भूतभावनेति त्रिभिः २१ निग्रहान्नर्हत्वे हेतुः कृत्स्नेति सर्वस्वमेवाह आत्मेति २२ तदेवं केमुत्यन्यायेना

तस्यविशः अर्थान् नन्वर्थापहारः कोऽयमनुग्रहः तत्राह यन्मदः येरर्थैर्मदोयस्यसः अतएवस्तब्धः अनम्रः सन् मदस्तंभहे
तूनामर्थानामपहारएवानुग्रह इत्यर्थः २४ दुर्लभंपुरुषजन्मकथंचितल्लब्धवतोजीवस्यजन्मादिनिमित्तोगर्वोमहाहानिक
रस्तस्यचनाशोमदनुग्रहादेवेत्याह यदेतिद्वाभ्यां अनीशः परतंत्रः सन्निजैःकर्मभिर्नानायोनिषुकृमिकीटादिषुसंसरन् २५
नत्रपौरुष्यांगतोजन्मादिभिरपियस्ययदिस्तंभोनभवेत् तर्हिअयंमदनुग्रहएव २६ कथंतर्हिध्रुवादिभ्योऽर्थसंपदोदत्ता

श्रीभगवानुवाच ब्रह्मन्यमनुगृह्णामितद्विशोविधुनोम्यहं यन्मदःपुरुषःस्तब्धो
लोकंमांचावमन्यते २४ यदाकदाचिज्जीवात्मासंसरन्निजकर्मभिः नानायोनिष्व
नीशोयंपौरुषींगतिमाव्रजेत् २५ जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः यद्यस्य
नभवेत्स्तंभस्तत्रायंमदनुग्रहः २६ मानस्तंभनिमित्तानांजन्मादीनांसमंततः सर्वश्रे
यःप्रतीपानांहंतमुह्येन्नमत्परः २७ एषदानवदैत्यानामग्रणीः कीर्तिवर्द्धनः अजैषी
दजयांमायांसीदन्नपिनमुह्यति २८ ॥

सीतिचेत् तत्राह मानएवस्तंभः अनम्रता तस्य
निमित्तभूतानांसमंततः सर्वशः सर्वश्रेयःप्रतिकूलानांजन्मादीनांसत्वेपि जन्मादिभिरितिवा हंते
तिखेदेहेब्रह्मन् मत्परोनमुह्येत् अतोभक्तस्येच्छयासंपदोपिददामिति अभक्तस्तुमुह्येदिति तदपहारएव
ममतस्यानुग्रहंकरोमीतिभावः २७ अस्यचेदानीमत्परत्वादन्यैर्दुष्प्रापमपिदास्यामीतिवक्तुंतस्यमोहाभावे

दात्मभयापरिहाराय सर्वस्वंत्यज्यते त्वंतु कुतोभीतः सन्नात्मानं समर्पयसि अत आह विभेमीति असाधुवादात् अपकीर्त्तेर्यथाऽहंभृशमुद्विजे निरयादिभ्यो न तथा विभेमि ३ ननु मया निग्रहात्त्वापकीर्त्तिर्जातेव नैवेत्याह पुंसामिति अर्हत्तमैरर्पितं यंदंडं मात्रादयोपि न हि आदिशंति नैवार्पयंति हि नैषिणात्वया निगृहीतोहं श्लाघ्य एवास्मीति भावः ४ नन्वहं देवानां हितैषी नासुराणां तत्राह त्वंनूनमिति पारोक्ष्यः शत्रु

नैवास्म्यहं कृच्छ्राद्भवतो विनिग्रहादसाधुवादाद्भृशमुद्विजे यथा ३ पुंसां श्लाघ्यतरं मन्ये दंडमर्हत्तमार्पितम् यंन माता पिता भ्राता सुहृदश्चादिशंति हि ४ त्वंनूनमसुराणां नः पारोक्ष्यः परमो गुरुः यो नोऽनेकमदांधानां विभ्रंशं चक्षुरादिशत् ५ यस्मिन्वैरानुबंधेन रूढेण विबुधेतराः बहवो लेभिरे सिद्धिं यामु हैकांतयोगिनः ६ तेनाहं निगृहीतोस्मि भवता भूरिकर्म्मणा बद्धश्च वारुणैः पाशैर्नातिव्रीडे न च व्यथे ७ पितामहो मे भवदीयसंमतः प्रह्लाद आविष्कृतसाधुवादः ॥ ८ ॥

च्छलेन वर्त्तमानः ५ शत्रुत्वं पुनर्भक्तानिवास्माननुगृहीतुमेवेत्याह यस्मिन्निति ६ अहो ह प्रसिद्धं ६ ॥ अतो नात्र मम लज्जा नापि दुःखमित्याह तेन गुरुणा भवता ७ किंच योयं दंडरूपो ममानुग्रहस्त्वया कृतः स तु त्वद्भक्तपौत्रत्वेन नु त्वहमनुग्रहस्य पात्रमित्याशयेनाह पितामह इति भवदीयानां संमतः यतः ॥ आविष्कृतः साधुवादो यस्य स त्वमेव परमः आश्रयो यस्य सः अतः भवतो विपक्षेण विद्विषा हिरण्यकशि

त्वया चाहं विप्रलब्धः तस्मादलीकफलं निरयं भुंक्ष्वेत्यर्थः ३४ इति श्रीभागवते महापुराणे अष्टमस्कंधे टीकायां एकविंशोऽध्यायः २१ द्वाविंशे तु प्रसन्नः सन्प्रस्थाप्य सुतले बलिं दत्वा वरान्हरिर्नूनं मत्वा नत द्वारपोऽभवत् १ समर्पितं तनूवित्तं निर्मलाचलभक्तिनः छलितो बलिना चित्रं स्वमेवार्पयदच्युतः २ विप्रकृतः अपकृतः भिद्यमानः सत्वाच्चाल्यमानः १ हे उत्तमश्लोके तिकदाक्षः मम वच ईरितं प्रतिश्रुतं तन्न तावद्व्यलीकं त्वयाक

विप्रलब्धो ददामीति त्वया ऽहं चाढ्यमानिना तद्व्यलीकफलं भुंक्ष्व निरयं कतिचि

त्समाः ३४ इति श्रीभागवते महापुराणे अष्टमस्कंधे बलिनिग्रहो नाम एकविंशो

ऽध्यायः २१ शुक उवाच एवं विप्रकृतो राजन्बलिर्भगवता ऽसुरः भिद्यमानो ऽप्य

ऽभिन्नात्मा प्रत्याहाविक्लवं वचः १ बलिरुवाच यद्युत्तमश्लोक भवान्ममेरितं व

चो व्यलीकं सुरवर्य मन्यते करोम्यृतं तन्न भवेत्प्रलंभनं पदं तृतीयं कुरु शीर्ष्णि मे नि

जम् २ बिभेमि नाहं निरयात्पदच्युतो न पाशबंधाद्व्यसनाद्दुरत्ययात् ॥ ३ ॥

पटेन वामन तया भिक्षित्वा स्वांतरस्याविष्कृतत्वात् एवमपि यदि भवान्व्यलीकं मन्यते तथाऽपि ऋतमेवाहंकरोमि मदुक्तं विप्रलंभनं न भवतु मे शीर्ष्णि निजं तृतीयं पदं कुरु नच द्वाभ्यां विश्वं क्रांतवतः तव मे शिरः पदपर्याप्तं न भवतीति मन्येथाः वित्तेन चेत्पदद्वयं जातं तर्हि इदमधिकमेव स्यात् वित्तादपि वित्तवतोऽधिकत्वादिति भावः २ ननु च आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि आत्मानं सततं रक्षेद्दारैरपि धनैरपीत्यादि वचना

अस्यसर्वस्वापहारेणममेत्यभिमानंसंत्यज्येदानींदेहस्वीकारेणाहंकारमपित्याजयित्वापरमानुग्रहंकर्त्तुमिच्छ ति नचानेनतुल्योऽन्यःकोपिसत्यसंधोधीरोवास्तीतितद्यशःप्रख्यापनार्थंकिंचित्यातयितुमपीच्छतीतिप्रभोरभि प्रायंज्ञात्वातंबबंधेति सोन्येऽहनिसोमाभिषवदिने २६ रोदस्योःद्यावापृथिव्योः २७ २८ २९ असौसूर्यः ३० म

बबंधवारुणैःपाशैर्बलिंसौत्येऽहनिक्रतौ २६ हाहाकारोमहानासीद्रोदस्योःसर्वतो दिशम् गृह्यमाणेऽसुरपतौविष्णुनाप्रभविष्णुना २७ तंबद्धंवारुणैःपाशैर्भगवानाह वामनः नष्टश्रियंस्थिरप्रज्ञमुदारयशसंनृप २८ पदानित्रीणिदत्तानिभूमेर्मह्यंत्वयाऽसुर द्वाभ्यांक्रांतामहीसर्वातृतीयमुपकल्पय २९ यावत्तपत्यसौगोभिर्यावदिंदुःस होडुभिः यावद्वर्षतिपर्जन्यस्तावतीभूरियंतव ३० पदैकेनमयाक्रांतोभूर्लोकःखं दिशस्तनोः स्वर्लोकस्तद्द्वितीयेनपश्यतस्तेस्वमात्मना ३१ प्रतिश्रुतमदातुस्तेनिर येवासइष्यते विशत्वंनिरयंतस्माद्गुरुणाचानुमोदितः ३२ वृथामनोरथस्तस्यदू रेस्वर्गःपतत्यधः प्रतिश्रुतस्यादानेनयोऽर्थिनंविप्रलंभते ३३ ॥

यात्रात्मनेत्यन्वयः व्यापिनेत्यर्थः खंचदिशश्चतनोः तन्वा तेस्वंत्वदीयंसर्वस्वं ३१ गुरुणाशुक्रेणानुमो दितःसन् ३२ सएवमुक्तोपिनिरयपरिहारार्थंस्वर्गाद्भ्रंशपरिहारार्थंचमनोरथंकुर्वंतंप्रत्याहवृथेतियःप्र तिश्रुतस्यअदानेनयाचकंविप्रलंभतेतस्यमनोरथोवृथैवस्वर्गश्चतस्यदूरएवसचाधः पतत्येव ॥ ३३ ॥

१७।१८. अर्थकृत्सनुकूलः १९ पौरुषैस्तंकालमतिवर्तितुं पुमानीश्वरः समर्थोनभवति २०।२१।

जयंतः श्रुतदेवश्चपुष्पदंतोऽथसात्वतः सर्वेनागायुतप्राणाश्चमूंतेजघ्नुरासुरीम्
१७ हन्यमानान्स्वकान्दृष्ट्वापुरुषानुचरैर्बलिः वारयामाससंरब्धान्काव्यशाप
मनुस्मरन् १८ हेविप्रचित्तेहेराहोहेनेमेश्रूयतांवचः मायुध्यतनिवर्तध्वंनन:कालो
ऽयमर्थकृत् १९ यःप्रभुः सर्वभूतानांसुखदुःखोपपत्तये तंनातिवर्तितुंदैत्याःपौरुषै
रीश्वरःपुमान् २० योनोभवायप्रागासीदभवायदिवौकसां सएवभगवानद्यवर्त्तते
तद्विपर्ययम् २१ बलेनसचिवैर्बुद्ध्यादुर्गैर्मंत्रौषधादिभिः सामादिभिरुपायैश्चका
लंनात्येतिवैजनः २२ भवद्भिर्निर्जिताह्येतेबहुशोऽनुचराहरेः दैवेनर्द्धैस्तएवाद्ययु
धिजित्वानदंतिनः २३ एतान्वयंविजेष्यामोयदिदैवंप्रसीदति तस्मात्कालंप्रतीक्षध्वं
ध्वंयोनोऽर्थत्वायकल्पते २४ श्रीशुकउवाच पत्युर्निगदितंश्रुत्वादैत्यदानवयूथ
पाः रसांनिर्विविशूराजन्विष्णुपार्षदताडिताः २५ अथतार्क्ष्यसुतोज्ञात्वाविराट्प्रभुचि

२२ हरेरनुचरादेवाः दैवेनऋद्धैः समृद्धैर्भवद्भिः २३ अर्थत्वायआनुकूल्याय २४ २५ ।। चीकीर्षितं
।। विष्णुपक्षिणुराजतइतिविराट् प्रभोश्चिकीर्षितंज्ञात्वाअयमर्थः ।।

तदेवंप्रपंचयतिरसामितिपादोनैः सप्तभिः मारुतंगणंवायुसंघंइंद्रस्यसेनेवसेनायस्यसः इंद्रपदेस्थितत्वा
त् अचष्टऐक्षत २३ आत्मास्वयंबलिमुख्यायेषांतान् ऋक्षमालांनक्षत्रपंक्तिं २४ अंगहेराजन्समस्तान्

रसामन्त्रष्टांघ्रितलेऽथपादयोर्महींमहीध्रान्पुरुषस्यजंघयोः पतत्रिणोजानुनि
विश्वरूपोरुष्वगणंमारुतमिंद्रसेनः २३ संध्यांविभोर्वाससिगुह्यऐक्षतप्रजापती
न्जघनेआत्ममुख्यान् नाभ्यांनभःकुक्षिषुसप्तसिंधूनुरुक्रमस्योरसिचर्क्षमालां
२४ हृद्यंगधर्मस्तनयोर्मुरारेर्ऋतंचसत्यंचमनस्यथेंदुं श्रियंचवक्षस्यरविंदह
स्तांकंठेचसामानिसमस्तरेफान् २५ इंद्रप्रधानानमरान् भुजेषुतत्कर्णयोःक
कुभोद्यौश्चमूर्द्धिकेशेषुमेघान्श्वसनंनासिकायामक्ष्णोश्चसूर्यंवदनेचवह्निं २६
वाण्यांचछंदांसिरसेजलेशंभ्रुवोर्निषेधंचविधिंचपक्ष्मसु ॥ ॥ अहश्चरात्रिं
चपरस्यपुंसोमन्युंललाटेऽधरएवलोभं २७ स्पर्शेचकामंनृपरेतसोंभः पृष्ठेत्व
धर्मंक्रमणेषुयज्ञं छायासुमृत्युंहसितेचमायांतनूरुहेष्वोषधिजातयश्च २८
नदीश्चनाडीषुशिलानखेषुबुद्धावजंदेवगणानृषींश्च ॥ रेफांश्चशब्दान् २५ द्यौश्च

द्यांच २६ रसेरसने २७ रेतसोरेतसिक्रमणेषुपादन्यासेषु ओषधिजातयः ओषधिजातीश्च २८ प्राणेषु

इंद्रियेषु २९ सर्वात्मनीत्यादिवाक्यांतरं सुदर्शनमित्यादीनामीशमुपतस्थुरित्युत्तरेणान्वयः ३० विद्याध
रसंज्ञो ऽसि ३१ मीनकुंडले मकरकुंडले स्फुरंति किरीटादीनि यस्य सः मधुव्रतानां स्रजो यस्यां तया वनमाल
या श्रीवत्सादिभिश्चावृतो व्याप्तः ३२ उरुक्रमत्वमेवाह क्षितिमिति द्वितीयं पदं क्रमतो विक्षिपतस्त्रिविष्टपं

प्राणेषु गात्रे स्थिरजंगमानि सर्वाणि भूतानि ददर्श वीरः २९ सर्वात्मनीदं भुवनं नि
रीक्ष्य सर्वे ऽसुराः कश्मलमापुरंग सुदर्शनं चक्रमसह्यतेजो धनुश्च शार्ङ्गं स्तनयि
त्नुघोषम् ३० कौमोदकीं विष्णुगदां तरस्विनीं विद्याधरो ऽसिः शतचंद्रयुक्तः तूणो
त्तमावक्षयसायकौ च सुनंदमुख्या उपतस्थुरीशम् ३१ स्फुरत्किरीटांगदमीनकुंडलः
श्रीवत्सरत्नोत्तममेखलांबरैः मधुव्रतस्रग्वनमालया वृतो रराज राजन्भगवानुरुक्र
मः ३२ क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः पदं द्वितीयं क्र
मतस्त्रिविष्टपं न वै तृतीयाय तदीयमण्वपि उरुक्रमस्यांघ्रिरुपर्युपर्यथो महर्जनाभ्यां
तपसः परंगतः ३३ ॥ इति श्रीभागवते महापुराणे ऽष्टमस्कंधे विश्वरूपदर्शनं नाम विं

तृतीयं किंचिन्मात्रं जातं तृतीयाय तु न किंचिदपि तत्र हेतुः उरुक्रमस्यांघ्रिः ऽऽ शतितमोऽध्यायः २० ॥
त्रिविष्टपादुपर्युपरि गच्छन्महर्जनाभ्यां तपसश्च परंगतः सत्यलोकं गत इति ३३ इति श्रीभागवते महापुराणेऽष्ट
॥ मस्कंधे टीकायां विंशोऽध्यायः २० ॥

स्वकविशेषपदापूर्त्तिमिषेणवलिवंधनं विस्नुनाकृतमुत्कर्षतस्यप्रथयितुंजने १ उरुक्रमस्यांघ्रिस्तपसः परंग
तइत्युक्तं ततः किंवृत्तंतदाह सत्यंसत्यलोकंप्राप्तंतमंघ्रिंसमीक्ष्याब्जभवोऽभ्यगा तत्तथामरीचिमिश्राऋषयश्चे
तिद्वयोरन्वयः कथंभूतो ब्जभवः हरेरंघ्रेर्नखाएवेंदवः तेर्हतास्वधाम्नोद्युतिर्यस्यसः स्वयंचतैरावृतः छन्नः हे

श्रीशुकउवाच सत्यंसमीक्ष्याब्जभवोनखेंदुभिर्हतस्वधामद्युतिरावृतोऽभ्यगात् म
रीचिमिश्राऋषयोवृहद्व्रताः सनंदनाद्यानरदेवयोगिनः १ वेदोपवेदानियमान्वि
तायमास्तर्केतिहासांगपुराणसंहिताः येचापरेयोगसमीरदीपितज्ञानाग्निनारंधि
तकर्मकल्मषाः ववंदिरेयत्स्मरणानुभावतः स्वायंभुवंधामगताअकर्मकं २ अ
थांघ्रयेप्रोन्नमितायविष्णोरुपाहरत्पद्मभवोर्हणोदकं समर्च्यभक्त्याऽभ्यगृणाच्छु
चिश्रवायन्नाभिपंकेरुहसंभवः स्वयं ३ धातुःकमंडलुजलंतदुरुक्रमस्यपादावने
जनपवित्रतयानरेंद्र स्वर्धुन्यभून्नभसिसापततीनिमार्ष्टिलोकत्रयंभगवतोविशदेव

नरदेववृहद्व्रतायोगिनश्च १ अंगानिशिक्षादीनिपुराणानितत्संहिताश्च योगएवसमीरस्तेनऽऽकीर्त्तिः ४॥
नदीपितंज्ञानमेवाग्निस्तेनरंधितंदग्धंकर्मकल्मषंकर्ममलंयेषांतेचसर्वेतमंघ्रिंववंदिरे यस्यांघ्रेः स्मरणानुभाव
तः अकर्मकंकर्मभिरप्राप्यं २ विष्णोरंघ्रयेस्वयंयस्यनाभिपंकेरुहसंभवः तस्यविष्णोरंघ्रिंसमभ्यर्च्य ३ लोकत्र
॥ यंनिमार्ष्टिपवित्रयति ४ ॥

२४
भा-अ
५८

संक्षिप्ताउपसंहृता आत्मविभूतिः स्वविस्तारो येन तस्मै यथा पूर्वं वामनरूपेण स्थिताये त्यर्थः ५ ६ ७ ८ त्रिपदवि

ब्रह्मादयो लोकनाथाः स्वनाथाय समादृताः सानुगा बलिमाजह्रुः संक्षिप्तात्मविभूतये ५ तोयैः समर्हणैः स्रग्भिर्दिव्यगंधानुलेपनैः धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलांकुरैः ६ स्तवनैर्जयशब्दैश्च तद्वीर्यमहिमांकितैः नृत्यवादित्रगीतैश्च शंखदुंदुभिनिःस्वनैः ७ जाम्बवानृक्षराजस्तु भेरीशब्दैर्मनोजवः विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ८ महीं सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाञ्चया ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः ९ नवा अयं ब्रह्मबंधुर्विष्णुर्मायाविनां वरः द्विजरूपप्रतिछन्नो देवकार्यं चिकीर्षति १० अनेन याचमानेन शत्रुणा वटुरूपिणा सर्वस्वं नो हृतं भर्तुर्न्यस्तदंडस्य बर्हिषि ११ सत्यव्रतस्य सततं दीक्षितस्य विशेषतः नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः १२ तस्मादस्य वधो धर्मो भर्तुः शुश्रूषणं च नः इत्यायुधानि जगृहुर्बलेरनुचरासुराः १३ ते सर्वे वामनं हंतुं शूलपट्टिशपाणयः अनिच्छतो बलेराजन्प्राद्रवन्जातमन्यवः १४ तानभिद्रवतो दृष्ट्वा दितिजानीकपान्नृप प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः १५ नंदः सुनंदोथ जयो विजयः प्रबलो बलः कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्त्रिराट् १६ ॥ त्रयाव्याजयाञ्चाकपटयाञ्चा तया स्वभर्तुर्बलेर्महीं हृतां दृष्ट्वा अमर्षिताः संतः ऊचुः ९ किमूचुः तदाह नवा इति सार्द्धैस्त्रिभिः १० ११ १२ अनुचराश्च ते असुराश्च १३ १४ ।१५।१६

१६ जालकं मुक्ताभरणविशेषः तन्मालावती अवनेजनी नाम पां कलशं भृतं पूर्णं १७ १८ १९ २० अवर्द्धत वांछा
तः प्रतिगृह्यतामिति बलिना पूर्वमुक्तत्वात् गुणत्रयमात्मनियस्य ततत् अतएवभूः खमित्यादयो यद्य— स्मिन्

एवं शप्तः स्वगुरुणा सत्यान्न चलितो महान् वामनाय ददावेनामर्चित्वोदकपूर्वकं॥ १६
विंध्यावलिस्तदागत्य पत्नी जालकमालिनी आनिन्ये कलशं हैममवनेजन्यपः पाभृ
तं १७ यजमानः स्वयं तस्य श्रीमत्पादयुगं मुदा अवनिज्यावहन् मूर्द्धि तदपो विश्वपा
वनीः १८ तदासुरेंद्रं दिवि देवतागणा गंधर्वविद्याधरसिद्धचारणाः तत्कर्म सर्वेपि गृ
णंत आर्जवं प्रसूनवर्षैर्ववृषुर्मुदान्विताः १९ नेदुर्मुहुर्दुंदुभयः सहस्रशो गंधर्वकि
द्याधरकिंनरा जगुः मनस्विनानेन कृतं सुदुष्करं विद्वानदाद्यद्रिपवे जगत्त्रयं २०
तद्वामनं रूपमवर्द्धताद्भुतं हरेरनंतस्य गुणत्रयात्मकं भूः खं दिशो द्यौर्विवराः पयो
धयस्तिर्यङ्नृदेवा ऋषयो यदासत २१ काये बलिस्तस्य महाविभूतेः सहर्त्विगाचा
र्यसदस्य एतत् ददर्श विश्वं त्रिगुणं गुणात्मके भूतेंद्रियार्थाशयजीवयुक्तं २२

आसनं स्थितवंतः २१ ऋत्विगादिसहितो बलिस्तस्य हरेः काये एतद्विश्वं ददर्श॥ २२॥ २२॥॥

देहत्यागादपिधनत्यागेकीर्त्तिर्भवतीत्याह सुलभाइति तनुंत्यजंतीतितथा तीर्थेपात्रे श्रद्धतोऽतिदुष्करोधनत्याग
एवमयाकार्यइतिभावः ९ तर्हिनिर्धनत्वेनदैन्यंस्यादितिचेत् तत्राह मनस्विनइति यादृशतादृशानामप्यर्थिनांका

सुलभायुधिविप्रर्षेह्यनिवृत्तास्तनुत्यजः नतथातीर्थआयातेश्रद्धयायेधनत्यजः ९
मनस्विनः कारुणिकस्यशोभनंयदर्थिकामोपनयेनदुर्गतिः कुतःपुनर्ब्रह्मविदांभ
वादृशांततोबटोरस्यददामिवांछितम् १० यजंतियज्ञंक्रतुभिर्यमादृताभवंतआम्नाय
विधानकोविदाः सएषविष्णुर्वरदोऽस्तुवापरोदास्याम्यमुष्मैक्षितिमीप्सितांमुने ११ य
द्यप्यसावधर्म्मेणमांबध्नीयादनागसं तंथाप्येनंनहिंसिष्येभीतंब्रह्मतनुंरिपुं १२ एष
वाउत्तमश्लोकोनजिहासतियद्यशः हत्वामैनांहरेत्युद्धेशयीतनिहतोमया १३ श्री
शुकउवाच एवमश्रद्धितंशिष्यमनादेशकरंगुरुः शशापदैवप्रहितःसत्यसंधंमनस्वि
नं १४ दृढंपंडितमान्यज्ञःस्तब्धोऽस्यस्मदुपेक्षया मच्छासनातिगोयस्त्वमचिराद्भ्र

मोपनयेनकामपूरणेनदुर्गतिर्दैन्यमितियतततच्छोभनंभद्रमेवभवादृशानांतुकामोपनयेनदुर्गतिः ऽऽ श्यसेश्रियः १५
शोभनमितिकिंपुनर्वक्तव्यमित्यर्थः १० ननुनायंबटुःकिंतुविष्णुस्तवशत्रुरित्युक्ते तर्हिसुतरामेवदास्यामीत्याह यजंतीतिपरः
शत्रुर्वास्तु ११ १२ यद्यदियशोनजिहासतितर्हियुध्देऽयंमांहत्वा एनांभूमिंहरेत् शयीतवासम्यक्ज्ञातःसन्ममचित्तेशयीतेति
॥ वास्तवोर्थः १३ अश्रद्धितं अजातश्रद्धं १४।१५ ॥

कथंप्रत्याचक्षेनिराकरोमि ३ ४ नन्वप्रत्याख्यानेदोषाउक्ताः तत्राहनाहमिति अन्यात्दारिद्र्यात् मृत्योर
पि ५ किंच यद्यत्धनादिकंतत्सर्वंसंपरेतंमृतंपुरुषंहास्यतित्यक्ष्यत्येव तत्किमितिजीवित्रैवस्वयंनदेयमितिभा
वः तथापितावद्वृत्तिसंकटपरिहारार्थमर्द्धंदीयतांइतिचेत् तत्राह तस्येति विप्रश्चेत्तेनार्थेनदत्तेनापिनतुष्येत्तर्हि
तस्यार्थस्यत्यागेदानेकिंनिमित्तंनकिंचित् याचितादल्पस्यदानेविप्रस्यासंतोषेणदानंव्यर्थमेवस्यात् अतस्तद्या

सचाहंवित्तलोभेनप्रत्याचक्षेकथंद्विजं प्रतिश्रुत्यददामीतिप्राह्लादिःकितवोतथा
३ नह्यसत्यात्परोऽधर्मइतिहोवाचभूरियम् सर्वंसोढुमलंमन्येऋतेऽलीकपरंनरं
४ नाहंबिभेमिनिरयान्नाधन्यादसुखार्णवात् नस्थानच्यवनान्मृत्तोर्यथाविप्रप्र
लंभनात् ५ यद्यद्धास्यतिलोकेस्मिन्संपरेतंधनादिकम् तस्यत्यागेनिमित्तंकिंविप्रस्तु
ष्येन्नतेनचेत् ६ श्रेयःकुर्वन्तिभूतानांसाधवोदुस्त्यजासुभिः दध्यङ्शिबिप्रभृतयः
कोवि[illegible]ल्पोधरादिषु ७ यैरियंबुभुजेब्रह्मन्दैत्येंद्रैरनिवर्तिभिः तेषांकालोऽग्रसील्लो

चितंसर्वंदेयंनकिंचिदितिभावः ६ नहिनदेयमेवेतिचेत्तत्राहश्रेऽऽ कान्नयशोऽधिगतंभुवि ८॥
यइति दुस्त्यजैरसुभिरपिकोविकल्पोविचारः ७ यैर्दैत्येंद्रैर्युद्धेऽनिवर्तिभिरियंभूर्बुभुजेउपभुक्तातेषामिहलोकान्
परलोकांश्चभोगानितिवाकालोऽग्रसीत् संहृतवान्नतुभुवितैरधिगतंप्राप्तंयशोऽग्रसीत् अतःकीर्तिरेवसाध्याना
॥ न्यदितिभावः ८ ॥

॥८ शुद्धपत्र॥

नेतिपदनृतंवचः एतत्पूर्णं अर्थव्ययाभावात् अभ्यात्मंचेतिचकारान्वयः आत्मनोऽभिमुखमन्यस्यार्थमा
कर्षतीत्यभ्यात्मंयोहिनित्यंममकिंचिदपिनास्तिसीदामीतिब्रूतेसहितेनानृतेनपरेषामर्थानाकर्षतीतिप्रसिद्धं
४२ ननुतर्हिइदमनृतमेवसर्वदासेव्यंस्यात्नेत्याह सर्वमितितथाचश्रुतिः अथैतत्पूर्णमभ्यात्मंयन्नेतिब्रूयात्
सयत्सर्वंनेतिब्रूयात्पापिकाऽस्यकीर्तिर्जायेतसैनंतत्रैवहन्यादितिअतोवृत्तिसंकटादिष्वनृतंनदोषायेत्युपसंहरति
स्त्रीषुप्रोक्तंनर्मतेनवशीकरणनर्मणिपरिहासेविवाहेचवरादिस्तुतौगवांब्राह्मणानांचहितार्थेहिंसायांचकस्यचित्प्रा

भिक्षतंसर्वमोंकुर्वन्नालंकामेनचात्मने अथैतत्पूर्णमभ्यात्मंयच्चनेत्यऽनृतंवचः
४२ सर्वंनेत्यनृतंब्रूयात्सदुष्कीर्तिःश्वसन्मृतः स्त्रीषुनर्मविवाहेचवृत्त्यर्थेप्राणसं
कटे गोब्राह्मणार्थेहिंसायांनानृतंस्याज्जुगुप्सितं ४३ इतिश्रीभागवतेमहापुराणे
अष्टमस्कंधेवामनप्रादुर्भावेएकोनविंशोऽध्यायः १९ श्रीशुकउवाच वलिरेवंगृ=
हपतिः कुलाचार्येणभाषितः तूष्णींभूत्वाक्षणंराजन्नुवाचावहितोगुरुम् १ वलिरु
वाच सत्यंभगवताप्रोक्तंधर्मोयंगृहमेधिना अर्थंकामंयशोवृत्तिंयोनबाधेतकर्हिचि

त्प्रायांतथाचयाज्ञवल्क्यः वर्णिनांहिवधोयत्रसाक्ष्यनृतंवदेदिति तथाचश्रुतिः तस्मात्कालएवदद्यात्काले
नदद्यात्सत्यानृतेमिथुनीकरोतीति ४३ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांएकोनविंशोऽध्या
यः १९ विंशेत्वनृतभीतोऽसौत्यक्त्वाऽपिकपटंहरेः ददावथततोविष्णुःसहसाऽवर्धताद्भुतं १।१ भगवतात्वयाप्रो

भा॰ अ॰ ५४

किमतआहवृक्षेदेहेऽजीवतितत्पुष्पफलंनस्यान्नृतानस्यादितिपाठेऽनृतमुक्तायावाचःपरामर्शः देहश्चानृतेन ।
रक्षणीयइत्याह अनृतंत्वात्मनोदेहस्यमूलं ३९ एतदेवदृष्टान्तेनस्पष्टयति तद्यथावृक्षउत्पाटितमूलःशुष्यति ।
अचिरादेवोद्वर्ततेपततिच एवंनष्टमनृतंयस्यसआत्मादेहःशुष्येत् यद्यपिचश्रुत्याएवमेवानृतंवदन्नात्मानमावि ।
र्मूलंकरोतीत्येवंनिंद्याऽनृतंनिषिद्धं तथाप्युपसंहारानुसारेणतत्केवलानृतविषयमित्यभिप्रेत्यैवंव्याख्याति द ।
यितत्वेतेनेतिचतथैवोक्तेः तथाचश्रुतिः ॐमितिसत्यंनेत्यनृतंतदेतत्पुष्पंफलंवाचोयत्सत्यंसहेश्वरोयशस्वी ।
कल्याणकीर्तिर्भविता पुष्पंहिफलंवाचःसत्यंवदत्यथैतन्मूलंवाचोयदनृतं तद्यथावृक्षआविर्मूलःशुष्यतिसउ ।

वृक्षोऽजीवतितन्नस्यादनृतंमूलमात्मनः ३९ तद्यथावृक्षउन्मूलःशुष्यत्युद्वर्ततेऽचिरा
त् एवंनष्टानृतःसद्यआत्माशुष्येन्नसंशयः ४० पराग्रिक्तमपूर्णंवाअक्षरंयत्तदोमिति
यत्किंचिदोमितिब्रूयात्तेनरिच्येतवैपुमान् ४१ ॥

द्वर्ततएवमेवानृतंवदन्नाविर्मूलमात्मानंकरोतिस
शुष्यतिसउद्वर्तते, तस्मादनृतंनवदेद्दयेतत्वेतेनेति एतेनअनेनतुअनृतेनदयेतसंकटेष्वात्मानंरक्षेदितिभावार्थः
४० सर्वथासत्यवचनेदेहोननिर्वहेदितिस्फुटीकर्तुंसत्यस्यदोषान् अनृतस्यगुणानाह पराग्रितिद्वाभ्यांयदोमित्य
क्षरंतत्पराक् दूरेअर्थंगृहीत्वाचतीतिपराक्रिक्तमितिश्रुतिपदस्यव्याख्यानंअपूर्णंवेइति तत्तस्मात् अर्थिनोयत्किं
चिदोमितिदास्यामीतिब्रूयात्तेनरिच्येतन्यूनोभवेत् किंचभिक्षवेसर्वमोंकुर्वन् दास्यामीत्यंगीकुर्वन् आत्मनेकामे
नालंपर्याप्तोनभवति तस्यभोगोनसिद्ध्यतीत्यर्थः तथाचश्रुतिः पराग्वाएतद्रिक्तमक्षरंयदेतदोमितितद्यत्किंचोमि

८८

नेतियदनृतंवचः एतत्पूर्णं अर्थव्ययाभावात् अभ्यात्मंचेतिचकारान्वयः आत्मनोऽभिमुखमन्यस्यार्थमा
कर्षतीत्यभ्यात्मंयोहिनित्यंममकिंचिदपिनास्तिसीदामीतिब्रूतेसहितेनानृतेनपरेषामर्थानाकर्षतीतिप्रसिद्धं
४२ ननुतर्हिइदमनृतमेवसर्वदासेव्यंस्यात्नेत्याह सर्वमितितथाचश्रुतिः अथैतत्पूर्णमभ्यात्मंयन्नेतिब्रूयात्
सयत्सर्वंनेतिब्रूयात्पापिकाऽस्यकीर्तिर्जायेतसैनंतत्रैवहन्यादितिअतोवृत्तिसंकटादिष्वनृतेनदोषायेत्युपसंहरति
स्त्रीषुप्रोक्तं...नवशीकरणेनर्मणिपरिहासेविवाहेचवरादिस्तुतौगवांब्राह्मणानांचहितार्थेहिंसायांचकस्यचित्प्रा

भिक्षवे सर्वमोंकुर्वन्नालंकामेनचात्मने अथैतत्पूर्णमभ्यात्मंयच्चनेत्यनृतंवचः
४२ सर्वंनेत्यनृतंब्रूयात्सदुष्कीर्तिः श्वसन्मृतः स्त्रीषुनर्मविवाहेचवृत्त्यर्थेप्राणसं
कटे गोब्राह्मणार्थेहिंसायांनानृतंस्याज्जुगुप्सितं ४३ इतिश्रीभागवतेमहापुराणे
अष्टमस्कंधेवामनप्रादुर्भावेएकोनविंशोऽध्यायः १९ श्रीशुकउवाच बलिरेवंगृ
हपतिः कुलाचार्येणभाषितः तूष्णींभूत्वाक्षणंराजन्नुवाचावहितोगुरुम् १ बलिरु
वाच सत्यंभगवताप्रोक्तंधर्मोयंगृहमेधिनां अर्थंकामंयशोवृत्तिंयोनबाधेतकर्हिचि

त्प्रायांतथाचयाज्ञवल्क्यः वर्णिनांहिवधोयत्रतत्रसाक्ष्यनृतंवदेदिति तथाचश्रुतिः तस्मात्कालएवदद्यात्काले
नदद्यात्तत्सत्यानृतेमिथुनीकरोतीति ४३ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांएकोनविंशोऽध्या
यः १९ विंशेत्वनृतभीतोऽसौज्ञात्वाऽपिकपटंहरेः ददावेववतेनोविष्णुः सहसाऽवर्धताद्भुतं १।१ भगवतात्वयाप्रो

ईश्वरस्यापियाच्ञाकारणंयाच्ञाप्रकारंचोक्त्वावलेर्वैधनप्रश्नोत्तरत्वेनतस्यगर्वातिरेकेणाधिक्षेपप्रकारमाह अहो
इतित्रिभिःतेवाचोवृद्धानांसंमताः त्वंतुवालःवालिशमतिश्चबालिशानामज्ञानामिवमतिर्यस्यअतएवस्वार्थं
प्रतियथावदवुधःवस्तुतस्तुवालइव अवालिशमतिश्चेतिच्छेदः स्वार्थंप्रत्यवुधइतिचभक्तानामेवार्थंवुध्यसेन
स्वार्थंवुध्यसे पूरिपूर्णस्यतवतद्व्यतिरेकेणस्वार्थाभावादित्यर्थः १८ अवुधत्वमेवाह मामिति द्वीपस्यदाशुषंदाना

वलिरुवाच अहोब्राह्मणदायादवाचस्तेवृद्धसंमताः त्वंवालोवालिशमतिःस्वार्थंप्रत्य
वुधोयथा १८ मांवचोभिःसमाराध्यलोकानामेकमीश्वरं पदत्रयंवृणीतेयोवुद्धिमान्द्वी
पदाशुषं १९ नपुमान्मामुपव्रज्यभूयोयाचितुमर्हति तस्माद्वृत्तिकरींभूमिंवटोकामंप्रती
च्छमे २० श्रीभगवानुवाच यावंतोविषयाःप्रेष्ठास्त्रिलोक्यामजितेंद्रियं नशक्नुवंतितेस
र्वेप्रतिपूरयितुंनृप २१ त्रिभिःक्रमैरसंतुष्टोद्वीपेनापिनपूर्यते नववर्षसमेतेनसप्तद्वीप
वरेच्छया २२ सप्तद्वीपाधिपतयोनृपावैन्यगयादयः अर्थैःकामैर्गतानांतंतृष्णायाइति
नःश्रुतं २३ यदृच्छयोपपन्नेनसंतुष्टोवर्ततेसुखं नासंतुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः २४

ंअवुद्धिमान्वस्तुतस्तुवुद्धिमानित्येवच्छेदः १९ कामंयथेच्छंसम्यक्पादप्रसारणेनेत्यर्थः अतएवतथाकरिष्य
तीति २० पुनरपिनिःस्पृहत्वमेवाविष्कुर्वन्नाह यावंतइतिसप्तभिः २१ नववर्षसमेतेन द्वीपेनापि सप्तानांद्वीपवरा
णांइच्छया २२ तृष्णायाअंतंनगताइत्यस्माभिःश्रुतं २३ असंतुष्टस्तुप्राप्तैस्त्रिभिर्लोकैरपिनसुखंवर्त्तते २४॥

॥श्लो॥[illegible]॥

२५ आशुशुक्षणिरग्निः २६ सिद्धोहं कृतार्थः एतावतैव सर्वस्वापहारासिद्धेरितिगूढोभिप्रायः तदेवाह वित्तं हि यावत्प्रयोजनमेव सुखं अधिकस्य क्लेशावहत्वादित्यर्थः २७ २८ २९ ३० अनयः अन्यायः ३१ अन्यायमे

पुंसो यं संसृतेर्हेतुरसंतोषोर्थकामयोः यदृच्छयोपपन्नेन संतोषो मुक्तये स्मृतः २५ यदृ-
च्छालाभतुष्टस्य तेजो विप्रस्य वर्द्धते तत्प्रशाम्यत्यसंतोषादंभसेवाशुशुक्षणिः २६ तस्मा
त्त्रीणि पदान्येव वृणे त्वद्वरदर्षभात् एतावतैव सिद्धोहं वित्तं यावत्प्रयोजनं २७ श्रीशुक
उवाच इत्युक्तः स हसन्नाह वांछातः प्रतिगृह्यतां वामनाय महीं दातुं जग्राह जलभाजनं
२८ विष्णवे क्ष्मां प्रदास्यंतमुशना असुरेश्वरम् जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदां
वरः २९ शुक्राचार्य उवाच एष वैरोचने साक्षाद्भगवान्विष्णुरव्ययः कश्यपाददितेर्जातो
देवानां कार्यसाधकः ३० प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता न साधु मन्ये दैत्यानां महा-
नुपगतोऽनयः ३१ एष ते स्थानमैश्वर्यं श्रियं तेजो यशः श्रुतं दास्यत्याच्छिद्य शक्राय मा
यामाणवको हरिः ३२ त्रिभिः क्रमैरिमाँल्लोकान्विश्वकायः क्रमिष्यति सर्वस्वं विष्णवे द
त्वा मूढ वर्तिष्यसे कथम् ३३ क्रमतो गां पदैकेन द्वितीयेन दिवं विभोः ॥ वाहमेवेति ३२ ननु मया

परत्रयमेव प्रतिश्रुतं प्रतिज्ञातं नाधिकं तत्राह त्रिभिरिति क्रमतामिति चेत्तत्राह सर्वस्वमिति ३३ तथापि प्रतिश्रुतं संपादनीयमेवेति चेत्तत्राह क्रमत इति द्वाभ्यां एकेन पादापा

माक्रममाणस्येत्यर्थः तार्त्तीयस्यतृतीयपादन्यासस्य ३४ ३५ तथापिसर्वस्वदानात्कीर्त्तिस्तावद्भविष्यतीतिचेत्।
तत्राह नतद्दानमिति तपःचित्तैकाग्र्यंकर्मपूर्त्तं ३६ ३७ ननुतर्हिप्रतिश्रुत्यनेतिकथमनृतंवाच्यंतत्राह धर्माये
तिसार्द्धैः षड्भिः अत्रापिसत्यानृतव्यवस्थायां वह्वृचश्रुत्याहिप्रथमं ३७ मितिसत्यंनेत्यनृतमित्यादिनासत्या।
नृतयोर्लक्षणमुक्त्वानंतरं स्तुतिनिंदाभ्यांसत्यंविहितंअनृतंचनिषिद्धं अनंतरंच पराग्वाएतद्रिक्तमक्षरमित्यादिना
सत्येदोषान् अनृतेचगुणानुक्त्वातस्मात्कालएवदद्यात्कालेनदद्यान्नसत्यानृतेमिथुनीकरोतीत्युपसंहारेणव

एवंचकायेनमहतातार्त्तीयस्यकुतोगतिः ३४ निष्ठांतेनरकेमन्येह्यप्रदातुःप्रतिश्रुतम्
प्रतिश्रुतस्ययोऽनीशःप्रतिपादयितुंभवान् ३५ नतद्दानंप्रशंसंतियेनवृत्तिर्विपद्यते दा
नंयज्ञस्तपःकर्मलोकेवृत्तिमतोयतः ३६ धर्माययशसेऽर्थायकामायस्वजनायच पंच
धाविभजन्वित्तमिहामुत्रचमोदते ३७ अत्रापिवह्वृचैर्गीतंशृणुमेऽसुरसत्तम सत्यमो
मितियत्प्रोक्तंयन्नेत्याहानृतंहितत् ॥ ३८ सत्यंपुष्पफलंविद्यादात्मवृक्षस्यगीयते

तिसंकटादिष्वनृतमप्यनुज्ञातंतमिमंश्रुत्यर्थंदर्शयन्नाह ओमित्यंगीकारेणयत्प्रोक्तंतत्सत्यंनेतियदाह
तदेवानृतं ३८ ननुसत्यमीषदनृतंविनानसिध्यतीत्याशयेनाह सत्यंपुष्पफलंविद्यात्जानीयात् आत्मवृ
क्षस्यदेहरूपस्यकुतः गीयतेश्रुत्योच्यतइत्यर्थः पाठांतरंतुसुगमं यद्यपिश्रुत्यावाचःसत्यंपुष्पफलंचेत्युक्तं।
थापिवाचोदेहनिर्वाहाधीनत्वादात्मवृक्षस्येतिप्रस्तुतानुसारेणोक्तंभवतुपुष्पफलस्थानीयंसत्यंततः ॥ ॥

भा॰अ॰ ५४

किमतस्त्राह वृक्षे देहे अजीवति तत्पुष्पफलं न स्यात् स्तान स्यादिति पाठे अत्युक्तायावाचः परामर्शः देहश्चानृतेन रक्षणीय इत्याह अनृतं त्वात्मनो देहस्य मूलं ३९ एतद्दृवदृष्टांतेन स्पष्टयति तद्यथा वृक्ष उत्पाटित मूलः शुष्यति अचिरादेवोद्वर्तते पतति च एवं नष्टमनृतं यस्य स आत्मा देहः शुष्येत् यद्यपि च श्रुत्या एवमेवानृतं वदन्नात्मानमाविमूलं करोतीत्येवं निंद्यया अनृतं निषिद्धं तथाप्युपसंहारानुसारेण तत्केवलानृतविषयमित्यभिप्रेत्यैवं व्याख्यातं द्येन त्वेतेनेति च तथैवोक्तेः तथा च श्रुतिः ॐमिति सत्यं नेत्यनृतं तदेतत्पुष्पं फलं वाचो यत्सत्यं स हेश्वरो यशस्वी कल्याणकीर्तिर्भविता पुष्पं हि फलं वाचः सत्यं वदत्यथैतन्मूलं वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः शुष्यति स उ

वृक्षे ऽजीवति तन्न स्यादनृतं मूलमात्मनः ३९ तद्यथा वृक्ष उन्मूलः शुष्यत्युद्वर्त्ततेऽचिरात् एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः ४० पराग्रिक्तमपूर्णं वा अक्षरं यत्तदोमिति यत्किंचिदोमिति ब्रूयात्तेन रिच्येत वै पुमान् ४१ ॥ द्वर्त्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्त्तते तस्मादनृतं न वदेद्दयेत त्वेतेनेति एतेन अनेन तु अनृतेन दयेत संकटेष्वात्मानं रक्षेदिति श्रुत्यर्थः ४० सर्वथा सत्यवचनेन देहो न निर्वहेदिति स्फुटीकर्त्तुं सत्यस्य दोषान् अनृतस्य गुणानाह पराग्रिति द्वाभ्यां यदोमित्यक्षरं तत्पराक् दूरे अर्थं गृहीत्वा चतीति पराक् रिक्तमिति श्रुतिपदस्य व्याख्यानं अपूर्णं वेइति तत्तस्मात् अर्थिनो यत्किंचिदोमिति दास्यामीति ब्रूयात्तेन रिच्येत न्यूनो भवेत् किंच भिक्षवे सर्वमोंकुर्वन् दास्यामीत्यंगीकुर्वन् आत्मने कामेनालं पर्याप्तो न भवति तस्य भोगा न सिद्ध्यन्तीत्यर्थः तथा च श्रुतिः पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति तद्यत्किंचोमि

स्वांनिष्ठांप्रकृतिं ३९ कालेनहर्षादिनिमित्तेनमयाकालरूपेणभागशोऽजअंशेनसमेतामदधीनासती ४० ४१॥

श्रीभगवानुवाच दिष्ट्यात्वंविबुधश्रेष्ठस्वांनिष्ठामात्मना स्थितः यन्मेस्त्रीरूपयास्वैरंमोहितो प्यंगमायया ३९ कोऽनुमेऽतितरेन्मायांविषक्तस्त्वदृतेपुमान् तांस्तान्विसृजतींभावान्दुस्त रामकृतात्मभिः ३६ सेयंगुणमयीमायानत्वामभिभविष्यति मयासमेताकालेनकालरू पेणभागशः ४० श्रीशुकउवाच एवंभगवताराजन्श्रीवत्सांकेनसत्कृतः आमंत्र्यतंपरि क्रम्यसगणःस्वालयंययौ ४१ आत्मांशभूतांतांमायांभवानींभगवान्भवः शंसतामृषिमुख्यानां प्रीत्याचष्टाथभारत ४२ अयिव्यपश्यस्त्वमजस्यमायांपरस्यपुंसःपरदेवतायाः अहंकला नामृषभोविमुह्येययाऽवशोऽन्येकिमुतास्वतंत्राः ४३ यंमामपृच्छस्त्वमुपेत्ययोगात्समा सहस्रांतउपारतंवै सएषसाक्षात्पुरुषःपुराणोनयत्रकालोविशतेनवेदः ४४ श्रीशुक उवाच इतितेभिहितस्तातविक्रमःशार्ङ्गधन्वनः सिंधोर्निर्मथनेयेन धृतःपृष्ठेमहाऽच लः ४५ एतन्मुहुःकीर्तयतोनुशृण्वतोनरिष्यतेजातुसमुद्यमःक्वचित् यदुत्तमश्लोकगु णानुवर्णनंसमस्तसंसारपरिश्रमापहं ४६॥ ९ ४२ ४३ ४४ अष्टाध्यायार्थनिगमनंइती

[illegible]

१२

भा॰अ॰ भगवता कृतं भक्तपक्षपातं स्मरन्नमस्करोति असतामविषयं भावो भजनं तेन गम्यमंघ्रिं प्रपन्नान् शरणागतान् सिं
३८ धुमथ्य सिंधोर्मथनेन जातममृतं यः आशयत् अभोजयत् ४७ इतिश्रीभागवते महापुराणे अष्टमस्कंधे टीकायां द्वा

असदविषयमंघ्रिंभावगम्यं प्रपन्नानमृतममरवर्यानाशयत्सिंधुमथ्यं कपटयुवतिवेषो
मोहयन्यः सुरारीन् तमहमुपसृतानां कामपूरं नतोस्मि ४७ इतिभागवते महापुराणेऽ
ष्टमस्कंधे शंकरमायामोहनं नाम द्वादशोध्यायः १२ श्रीशुक उवाच मनुर्विवस्वतः पु
त्रः श्राद्धदेव इति श्रुतः सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु १ इक्ष्वाकुर्नभगश्चैव धृ
ष्टः शर्यातिरेव च नरिष्यंतोथ नाभागः सप्तमो दिष्ट उच्यते २ करूषश्च पृषध्रश्च दशमो
वसुमान्स्मृतः मनोर्वैवस्वतस्यैते दशपुत्राः परंतप ३ आदित्या वसवो रुद्रा विश्वेदेवा
मरुद्गणाः अश्विनावृभवो राजन्निंद्रस्तेषां पुरंदरः ४ कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रो
थ गौतमः जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः ५ अत्रापि भगवज्जन्म कश्यपाददिते
रभूत् आदित्यानामवरजो विष्णुर्वामनरूपधृक् ६ ॥ त्रयोदशोऽध्यायः १३ त्रयोदशे तु वर्ण्यंते सप्तमा
दीन्यनुक्रमात् मन्वंतराणि सर्वाणि षड्विधानि पृथक्पृथक् १ सप्तमादिमन्वंतराण्याह मनुरित्यादिना यावदध्यायस
माप्ति १ २ ३ आदित्यादयो देवा इत्यन्वयः ४ ५ भगवतो जन्म अवतारः तमेवाह आदित्यानां विवस्वान् यमायु

एम
३८

शक्त्यास्त्रवतारेणान्वितानि ७ अष्टमंमनुंवक्तुंकथामाह विवस्वतइतित्रिभिः ८ एकेवडवांतृतीयामाहुः ममतु
संज्ञैववडवेतिमतं तदुक्तंषष्ठेसैवभूत्वाऽथवडवानासत्यौसुषुवेभुवीतियमश्च यमीचयमुनाश्राद्धदेवश्चेतित्रयसु

संक्षेपतोमयोक्तानिसप्तमन्वंतराणिते भविष्याण्यथवक्ष्यामिविष्णोःशक्त्यान्वितानिच॥
७ विवस्वतश्चद्वेजायेविश्वकर्म्मसुतेउभे संज्ञाछायाचराजेंद्रयेप्रागभिहितेतव ८ तृतीयांव
डवामेकेतासांसंज्ञासुतास्त्रयः यमोयमीश्राद्धदेवश्छायायाश्चसुतांश्छृणु ९ सावर्णिस्तपती
कन्याभार्यासंवरणस्यया शनैश्चरस्तृतीयोऽभूदश्विनौवडवात्मजौ १० अष्टमेंऽतरआयाते
सावर्णिर्भवितामनुः निर्मोकविरजस्काद्याःसावर्णितनयान्नृप ११ तत्रदेवाःसुतपसोविर
जाअमृतप्रभाः तेषांविरोचनसुतोबलिरिंद्रोभविष्यति १२ दत्त्वेमांयाचमानायविष्णवेयः
पदत्रयं राद्धमिंद्रपदंहित्वाततःसिद्धिमवाप्स्यति १३ योसौभगवताबद्धःप्रीतेनसुतलेपुनः
निवेशितोधिकेस्वर्गादधुनास्तेस्वराडिव १४ गालवोदीप्तिमान्रामोद्रोणपुत्रःकृपस्तथा
ऋष्यशृंगःपिताऽस्माकंभगवान्बादरायणः १५ इमेसप्तर्षयस्तत्रभविष्यंतिस्वयोगतः
इदानीमासतेराजन्स्वेस्वेआश्रममंडले १६॥ एताः ९ १० सावर्णिपुत्राः ११ १२ पदत्रयंयाचमानाय
इमांसर्वांमहींसप्तमेमन्वंतरेदत्त्वाअष्टमेमन्वंतरेविष्णोःप्रसादेनचाराद्धंलब्धमिंद्रपदंहित्वेत्यर्थः १३ १४ रामःपरशुरा

१३
भा॰ अ॰
३९

१७ १८ अद्भुतः इंद्रः १९ २० २१ हविष्मत्प्रमुखाइत्युक्तानामेवकेषांचिन्नामान्याहहविष्मानिति २२ विषूच्यां

देवगुह्यात्सरस्वत्यांसार्वभौमइतिप्रभुः स्थानंपुरंदराद्धृत्वाबलयेदास्यतीश्वरः १७ नवमोद
क्षसावर्णिर्मनुर्वरुणसंभवः भूतकेतुर्दीप्तिकेतुरित्याद्यास्तत्सुतान्नृप १८ पारामरीचिगर्भा
द्यादेवाइंद्रोऽद्भुतः स्मृतः द्युतिमत्प्रमुखास्तत्रभविष्यंत्यृषयस्ततः १९ आयुष्मतोंबुधारा
यामृषभोभगवत्कला भवितायेनसंराद्धांत्रिलोकींभोक्ष्यतेऽद्भुतः २० दशमोब्रह्मशावर्णि
रुपश्लोकसुतोमहान् तत्सुताभूरिषेणाद्याहविष्मत्प्रमुखाद्विजाः २१ ॥ क्षेपक ॥ तत्रापि
जन्मभविताहरेर्विश्वसृजोगृहे अमूर्तिरितिविख्यातोयेनाप्यायेतवैजगत् २१ ॥ हवि
ष्मान्सुकृतः सत्योजयोमूर्तिस्तदाद्विजाः सुवासनविरुद्धाद्यादेवाः शंभुः सुरेश्वरः २२ विष्वक्से
नोविषूच्यांतुशंभोः सख्यंकरिष्यतिजातः स्वांशेनभगवान्गृहे विश्वसृजोविभुः २३ मनुर्वैधर्म
सावर्णिरेकादशमआत्मवान् अनागतास्तत्सुताश्चसत्यधर्मादयोदश २४ विहंगा
माःकामगमानिर्वाणरुचयः सुराः इंद्रश्चवैधृतस्तेषामृषयश्चारुणादयः २५ आर्यकस्य
सुतस्तत्रधर्मसेतुरितिस्मृतः वैधृतायांहरेरंशस्त्रिलोकींधारयिष्यति २६ ॥ ८ ॥

जातः सन् २३ एकादशमइत्यादिरार्षः २४ २५ तस्यमनोरंतरंसाधयिष्यति २६ ॥ ८ ॥

सम
३९

॥२७ २८ सत्यसहसः सूनृतायाश्च सुतः सन् २९ दिवस्पतेरिंद्रस्योपहर्त्ता संपादकः संभविष्यति ३० ३१ ३२ ३३ ३४ क्रियातंतून् कर्मसंततीः वितायिता विस्तारयिष्यति ३५ ॥ ❋ ॥ ❋ ॥

भविता रुद्रसावर्णी राजन् द्वादशमो मनुः देववानुपदेवश्च देवश्रेष्ठादयः सुताः २७
ऋतधामा च तत्रेंद्रो देवाश्च हरितादयः ऋषयश्च तपोमूर्त्तिस्तपस्व्याग्नीध्रकादयः २८ स्वधा
माख्यो हरेरंशः साधयिष्यति तन्मनोः अंतरं सत्यसहसः सूनृतायाः सुतो विभुः २९ मनुस्त्रयो
दशो भाव्यो देवसावर्णिरात्मवान् चित्रसेनविचित्राद्या देवसावर्णिदेहजाः ३० देवाः सुकर्म
सुत्रामसंज्ञा इंद्रो दिवस्पतिः निर्मोकतत्वदर्शाद्या भविष्यंत्यृषयस्तदा ३१ देवहोत्रस्य तन
य उपहर्त्ता दिवस्पतेः योगेश्वरो हरेरंशो बृहत्यां संभविष्यति ३२ मनुर्वा इंद्रसावर्णिश्चतुर्द
शम एष्यति उरुगंभीरबुद्ध्याद्याः इंद्रसावर्णिवीर्यजाः ३३ पवित्राश्चाक्षुषा देवाः शुचिरिंद्रो
भविष्यति अग्निर्वाहुः शुचिः शुद्धो मागधाद्यास्तपस्विनः ३४ सत्रायणस्य तनयो बृहद्भा
नुस्तदा हरिः वितानायां महाराज क्रियातंतून् वितायिता ३५ राजन् चतुर्द्दशैतानि
त्रिकालानुगतानि ते प्रोक्तान्येभिर्मितः कल्पो युगसाहस्रपर्ययः ३६ ॥ ठ् ॥

युगसाहस्रेण पर्ययः परिवर्त्तो यस्य युगसहस्रप्रमाण इत्यर्थः ३६ ॥ ठ् ॥ ठ् ॥ ❋ ॥ ठ् ॥ ठ् ॥

१३

भा॰अ॰ ॥इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांत्रयोदशोऽध्यायः १३ चतुर्दशेतुसर्वेषांमन्वादीनांयथायथंपृथक्का
र्माणिवर्ण्यंतेभगवद्वशवर्तिनां १ १ पुरुषेणईश्वरेणयज्ञाद्यवतारैःशास्यंतेनियुज्यंतइतितथा २ तदेवाहयज्ञादयइ
ति ३ ऋष्यादीनांकर्माण्याह चतुर्युगांतइति चतुर्भिः यतः येभ्यः श्रुतिगणेभ्यः ४ उदिताउक्ताःयुक्ताःसंयताःसंतोम

॥इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेमन्वंतरानुवर्णनंनामत्रयोदशोध्यायः १३॥
राजोवाच मन्वंतरेषुभगवन्यथामन्वादयस्त्विमे यस्मिन्कर्म्मणियेयेननियुक्तास्तद्वद॥
स्वमे १ ऋषिरुवाच मनवोमनुपुत्राश्चमुनयश्चमहीपते इंद्राःसुरगणाश्चैवसर्वेपुरुष॥
शासनाः २ यज्ञादयोयाःकथिताःपौरुष्यस्तनवोनृप मन्वादयोजगद्यात्रांनयंत्याभिःप्र
चोदिताः ३ चतुर्युगांतेकालेनग्रस्तान्श्रुतिगणान्यथा तपसाऋषयोऽपश्यन्यतोधर्मः
सनातनः ४ ततोधर्मंचतुष्पादंमनवोहरिणोदिताः युक्ताःसंचारयंत्यद्धास्वेस्वेकालेमहींनृ
पाः ५ पालयंतिप्रजापालायावदंतंविभागशः यज्ञभागभुजोदेवायेचतत्रान्विताश्चतैः
६ इंद्रोभगवतादत्तांत्रैलोक्यश्रियमूर्जितां भुंजानःपातिलोकांस्त्रीन्कामंलोकेप्रवर्षति

हींधर्मंसंचारयंतिमहाधर्मंप्रवर्त्तयंतीत्यर्थः ५ प्रजापालामनुपुत्रास्तंधर्मंपालयंतिपावदंतंयावन्मन्वंतराव
सानं विभागशःपुत्रपौत्रादिक्रमेण येचान्येद्यावापृथिव्यादयोयत्रकर्म्मणिभोक्तृत्वेनान्विताःतैश्चसह ६॥७॥

राम
४०

प्रसंगाद्रूपांतरैरपि जगद्यात्राप्रवर्त्तनमाह ज्ञानमिति द्वाभ्यां सिद्धाः सनकादयः ऋषयो याज्ञवल्क्यादयः योगेशा दत्तात्रे
यादयः तत्तद्रूपः सन् ज्ञानं कर्मं च योगं च ब्रूते ८ प्रजेशा मरीच्यादयस्तेन रूपेण सर्गं करोतीति शेषः स्वराड्वपुः राजमूर्त्तिः सर्वेषाम
भावाय भवति पृथ्यग्विधाः गुणाः शीतोष्णादयो यस्य ९ नामरूपात्मिकया मायया विमोहितात्मभिर्जनैः नानादर्शनैः
शास्त्रैः स्तूयमानो निरूप्यमाणोपि नैव दृश्यत इत्यर्थः १० प्रासंगिकं निरूप्य प्रस्तुतमेवोपसंहरति एतत्कल्पविकल्प

ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृक् ऋषिरूपधरः कर्म्म योगं योगेशरूपधृक् ८ सर्गं
प्रजेशरूपेण दस्यून्हन्यात्स्वराड्वपुः कालरूपेण सर्व्वेषामभावाय पृथग्गुणः ९ स्तूयमा
नो जनैरेभिर्मायया नामरूपया विमोहितात्मभिर्नानादर्शनैर्न च दृश्यते १० एतत्कल्प
विकल्पस्य प्रमाणं परिकीर्त्तितं यत्र मन्वंतराण्याहुश्चतुर्द्दश पुराविदः ११ ॥ इति श्रीभागवते
महापुराणे अष्टमस्कंधे मनुवर्णने चतुर्द्दशोध्यायः १४ राजोवाच बलेः पदत्रयं भूमेः क
स्माद्धरिरयाचत भूतेश्वरः कृपणवल्लब्धार्थोपि बबंध तं १ एतद्वेदितुमिच्छामो महत्कौतू
हलं हि नः यज्ञेश्वरस्य पूर्णस्य बंधनं चाप्यनागसः २ ॥ ९ सग्रवांतस्कल्पस्य ११ ॥ इति श्रीभागवते
महापुराणे अष्टमस्कंधे टीकायां चतुर्द्दशोऽध्यायः १४ बलिं पंचदशे विश्वजिता चार्य्या अयाजयन् ततोसौ
स्वर्गमजयद्भयाद्देवा निलिल्यिरे १ अत्रैर्यतेन वाध्यायं वामं वामनचेष्टितं निग्रहच्छलतो यत्र बलेर्भूयान
नुग्रहः २ ईश्वरः स्वयं कृपणवत् कस्माद्धेतोरयाचत लब्धार्थीभूत्वापि तं कस्माद्बबंध १ ॥ २ ॥ ॥

तत्र तावद्बलेः त्रिलोकीमपहर्तुं यज्ञादिच्छलनं कृतवानिति वक्तुं ब्राह्मणाराधनेन बलेन बलेरुत्कर्षं एवं स्वर्गविजयक्रममाह पराजितश्रीरित्यादिना यावदध्यायसमाप्ति युद्धे पराजिता श्रीर्येन सः इंद्रेण असुभिश्च त्याजितः सन् भृगून् भृगोर्वंश्यांश्शुक्रादीन् महात्मा उदारचित्तः अर्थानां निवेदनेनार्पणेन ३ त्रिणाकं स्वर्गं जेतुमिच्छंतं

श्रीशुक उवाच पराजितश्रीरसुभिश्च हापितो हींद्रेण राजन् भृगुभिः स जीवितः सर्वात्मनातानभजद्भृगून्बलिः शिष्यो महात्मार्थनिवेदनेन ३ तं ब्राह्मणा भृगवः प्रीयमाणा अयाजयन् विश्वजिता त्रिणाकं जिगीषमाणं विधिनाऽभिषिच्य महाभिषेकेण महानुभावाः ४ ततो रथः कांचनपट्टनद्धो हयाश्च हर्यश्वतुरंगवर्णाः ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भिरिष्टात् ५ धनुश्च दिव्यं पुरटोपनद्धं तूणावरिक्तौ कवचं च दिव्यं॥ पितामहस्तस्य ददौ च मालामम्लानपुष्पां जलजं च शुक्रः ६ एवं स विप्रार्जितयोधनार्थस्तैः कल्पितस्वस्त्ययनोऽथ विप्रान् प्रदक्षिणीकृत्य कृतप्रणामः प्रह्रादमामंत्र्य नमश्चकार ७॥ १८ विश्वजिता यागेन अयाजयन् महाभिषेकेण ऐंद्रेण बह्वृच ब्राह्मणप्रसिद्धेन ४ हर्यश्वस्येंद्रस्य ये तुरंगास्तेषामिव वर्णो हरितो येषां ५ पुरटं सुवर्णं तूणाविषुधी अरिक्तौ अक्षय्यशरौ पितामहः प्रह्लादः जलजं शंखं ६ विप्रैरर्जितः संपादितो योधनार्थो युद्धपरिकरो यस्य तैरेव कल्पितं स्वस्त्ययनं मंगलवाचनादि यस्य

अथारुह्यरथराजेतिद्वयोरन्वयः सुस्रक्धरः शोभनमालाधरः ८ हेमांगदाभ्यांलसंतौवाहूयस्य धिष्ण्यस्थःअव
नेप्रज्वलितःकुंडस्थआहवनीयइवेतिवा ९ तुल्यमैश्वर्यंबलंचश्रीश्चयेषांतैर्दैत्ययूथपैर्वृतोययावितिद्वयोर
न्वयः परिधीनुदिशः १० स्पृद्धाअतिसमृद्धा ११ धिक्ग्राम्यसुखंतथाविधापुरीअकस्मादेवपरित्यज्येंद्रादयः
पलायिताइतिवैराग्यार्थमिंद्रपुरीमनुवर्णयति रम्यामितिसार्द्धैरेकादशभिः उपवनानिफलप्रधानानिनिकु

अथारुह्यरथंदिव्यंभृगुदत्तंमहारथः सुस्रग्धरोऽथसंनह्यधन्वीखड्गीधृतेषुधिः ८
हेमांगदलसद्बाहुःस्फुरन्मकरकुंडलः राजरथमारूढोधिष्ण्यस्थइवहव्यवाट् ९ तु
ल्यैश्वर्यबलश्रीभिःस्वयूथैर्दैत्ययूथपैःपिबद्भिरिवखंदृग्भिर्दहद्भिःपरिधीनिव १० वृ
तोविकर्षन्महतीमासुरींध्वजिनींविभुः ययाविंद्रपुरींस्पृद्धांकंपयन्निवरोदसी ११ रम्या
मुपवनोद्यानैःश्रीमद्भिर्नंदनादिभिः कूजद्विहंगमिथुनैर्गायन्मत्तमधुव्रतैः १२ प्रवाल
फलपुष्पोरुभारशाखामरद्रुमैः हंससारसचक्राह्वकारंडवकुलाकुलाः नलिन्योयत्र
क्रीडंतिप्रमदाःसुरसेविताः १३ ॥ १२ तानिवा उद्यानानि पुष्पप्रधानानि दूरस्थानिवातैरम्यांकू
जंतिविहंगमिथुनानियेषु गायंतोमत्तामधुव्रतायेषु १२ प्रवालादीनामुरुभारोयासुताःशाखायेषांतेअ
मरद्रुमायेषुतैः यत्रयासुसुरसेविताःप्रमदाः क्रीडंतिताःहंसादिकुलैराकुलाव्याप्तानलिन्यःसरांसियत्रयेषुसं
तितैरुपवनोद्यानैरम्यामितिपूर्वेणैवान्वयः १३ ॥

किंच परिखाभूतया आकाशगंगया आवृतां प्राकारेण सौवर्णेन चावृतां अट्टालाः प्राकारोपरिरचितानि उन्नतानि गृहस्था
नानि तत्सहितेन १४ रुक्मपट्टानि कपाटानि येषु तैर्द्वारैरवांतरैः स्फटिकमयैर्गोपुरैश्च पुरद्वारैर्जुष्टां विभक्ताः प्रपथा राज
मार्गा यस्यां १५ सभा उपवेशस्थानानि चत्वराण्यंगणानि रथ्या उपमार्गाः तैराढ्यां संपन्नां न्यर्बुदं दशकोटयः तैर्गणनीयै
रनंतैर्विमानैर्युतां वज्रविद्रुममय्यो वेदयो येषु तैः शृंगाटकैश्चतुष्पथैर्युतां १६ नित्यं वयस्तारुण्यं रूपं च सौकुमार्यं या॥

आकाशगंगया देव्या वृतां परिखभूतया प्राकारेणाग्निवर्णेन साट्टालेनोन्नतेन च १४
रुक्मपट्टकपाटैश्च द्वारैः स्फटिकगोपुरैः जुष्टां विभक्तप्रपथां विश्वकर्म्मविनिर्मितां १५॥
सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युतां शृंगाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः १६ यत्र
नित्यवयोरूपाः श्यामा विरजवाससः भ्राजंते रूपवन्नार्य अर्चिर्भिरिव वह्नयः १७ सुर
स्त्रीकेशविभ्रष्टनवसौगंधिकस्रजां यत्रामोदमुपादाय मार्ग आवाति मारुतः १८ हेम
जालाक्षनिर्गच्छद्धूमेनागरुगंधिना पांडुरेण प्रतिच्छन्नमार्गे यांति सुरप्रियाः १९ मुक्ता
वितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृतां शिखंडिपारावतभृंगनादितां वैमानि
कस्त्रीकलगीतमंगलां २०॥ एता नार्यः रूपवन्नार्यः स्वलंकृताः स्त्रियः यत्र यस्यां भ्राजंते १७ सुरस्त्रीणां केशेभ्यो
विभ्रष्टानां नवसौगंधिकस्रजामामोदं १८ हेमगवाक्षेभ्यो निर्गच्छता धूमेन सुरप्रिया अप्सरसः १९ मुक्तामयैर्वि
तानैर्मणिहेममयैः केतुभिश्च ध्वजैः नानापताकायुक्ताभिर्वलभीभिश्च विमानानां पुरोभागैः आवृतां व्याप्तां वैमानिक

उपदेवानांगंधर्वादीनांगीतकैश्चमनोरमांजिताप्रभासाक्षाद्दीप्त्यधिष्ठात्रीदेवतायया तां अन्यैरजितप्रभामितिवा पाठांतरेजिताग्रहाः सूर्यादयोयया २१ यत्याम् २२ एतन्ययासेनया २३ २४ केनहेतुनाएवंतेजसाऊर्जित आ

मृदंगशंखानकदुंदुभिस्वनैः सतालवीणामुरजर्ष्टिवेणुभिः नृत्यैः सवाद्यैरुपदेवगीतकैर्मनोरमांस्वप्रभयाजितप्रभां २१ यांनव्रजंत्यधर्मिष्ठाः खलाभूतद्रुहः शठाः मानिनः कामिनोलुब्धाएभिर्हीनाव्रजंतियत् २२ तांदेवधानींसवरूथिनीपतिर्वहिः समंतादुरुधे पृतन्यया आचार्यदत्तंजलजंमहास्वनं दध्मौप्रयुंजन्भयमिंद्रयोषितां २३ मघवांस्तदभिप्रेत्यवलेः परमसुद्यमं सर्वदेवगणोपेतोगुरुमेतदुवाचह २४ भगवन्नुद्यमोभूयान्बलेर्नः पूर्ववैरिणः अविषह्यमिमंमन्येकेनासीत्तेजसोर्जितः २५ नैनंकश्चित्कुतोवापिप्रतिव्योढुमधीश्वरः पिवन्निवमुखेनेदंलिहन्निवदिशोदश दहन्निवदिशोदृग्भिः संवर्त्ताग्निरिवोत्थितः २६ ब्रूहिकारणमेतस्यदुर्द्धर्षत्वस्यमद्रिपोः ओजः सहोवलंतेजोयतएतत्समुद्यमः २७ गुरुरुवाच जानामिमघवन्शत्रोरुन्नतेरस्यकारणं शिष्यायोपभृतंतेजोभृगुभिर्ब्रह्मवादिभिः २८ भवद्विधोभवान्वापिवर्जयित्वेश्वरंहरिं नास्यशक्तः पुरस्थातुंकृतांतस्ययथा

सीत २५ प्रतिव्योढुं अपाकर्तुं २६ यतः कारणादेतस्यओजआदियतओजआदेः एतस्यसमुद्यमः २७ उपभृतंस (जनाः २८॥

अत्रोचितं मंत्रमाह तस्माद्यूयंत्रिविष्टपमुपसृज्यनिलयमदर्शनंयातयतः कालात् ३० केनास्यविपर्ययः स्यादित्य
तआह एषइति विप्राणांवलेनउदर्कं उत्तरोत्तरमधिकंफलंयस्यसः ३१ सुमंत्रितः अर्थः कार्यंयेषांतेनिलयंजा

तस्मान्निलयमुत्सृज्ययूयंसर्वेत्रिविष्टपं यातकालंप्रतीक्षंतोयतः शत्रोर्विपर्ययः ३०
एषविप्रबलोदर्कः संप्रत्यूर्जितविक्रमः एषामेवापमानेनसानुवंधोविनंक्ष्यति ३१ ए
वंसुमंत्रितार्थास्तेगुरुणार्थानुदर्शिना हित्वात्रिविष्टपंजग्मुर्गीर्वाणाःकामरूपिणः ३२
देवेष्वथनिलीनेषुवलिर्वैरोचनः पुरीम् देवधानीमधिष्ठायवशंनिन्येजगत्त्रयं ३३ तंवि
श्वजयिनंशिष्यंभृगवः शिष्यवत्सलाः शतेनहयमेधानामनुव्रतमयाजयन् ३४ तत
स्तदनुभावेनभुवनत्रयविश्रुतां कीर्तिंदिक्षुवितन्वानः सरेजेउडुराडिव ३५ वुभुजेचश्रि
यंस्वृद्धांद्विजदेवोपलंभितां कृतकृत्यमिवात्मानंमन्यमानोमहाजनाः ३६ ॥ इतिश्रीभा
गवतेमहापुराणेअष्टमस्कंधेपञ्चदशोऽध्यायः ॥ १५ श्रीशुकउवाच एवंपुत्रेषुनष्टेषुदे
वमाताऽदितिस्तदा हृतेत्रिविष्टपेदैत्यैः पर्यतप्यदनाथवत् १ ॥ एयुः ३२ ३३ एवंप्राप्तमिंद्रपदंस्थिरी
कर्तुमयाजयन् अनुव्रतंअनुवर्तिनं ३४ ३५ द्विजदेवैर्ब्राह्मणैरुपलंभितांप्रापितां ३६ ॥ इतिश्रीभागवतेमहापुराणे
अष्टमस्कंधेटीकायांपञ्चदशोऽध्यायः १५ षोडशेपुत्रनाशेनशोचंत्यास्त्वदितेःपतिःप्रार्थितः कश्यपः प्राहपयोव्रतमितीर्यते १ इदानींश्रीवामनावतारप्रसंगमाहएवमित्यादियावत्समाप्तिनष्टेषुअदृष्टेषुसत्सु १

२ सः कश्यपः पत्नीमिदमाह ३ दीनवदनत्वादिकमालक्ष्य बहुधा विकल्पयन् पृच्छति अप्यभद्रमिति सप्तभिः हे भद्रे
मृत्योः छंदमिच्छामनुवर्त्तत इति तथा मृत्युवशवर्त्तिनो जनस्येत्यर्थः ४ हे गृहमेधिनि अपि वा किं वा गृहेषु धर्मादेः किं

एकदा कश्यपस्तस्या आश्रमं भगवानगात् निरुत्सवं निरानंदं समाधेर्विरतश्चिरात् २
स पत्नीं दीनवदनां कृतासनपरिग्रहः सभाजितो यथान्यायमिदमाह कुरूद्वह ३ अप्य
भद्रं न विप्राणां भद्रे लोकेऽधुनागतम् न धर्मस्य न लोकस्य मृत्योश्छंदानुवर्त्तिनः ४ अ
पि वाऽकुशलं किंचित् गृहेषु गृहमेधिनि धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनां ५
अपि वाऽतिथयोऽभ्येत्य कुटुंबासक्तया त्वया गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित्
६ गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि यदि निर्यांति ते नूनं फेरुराजगृहोपमाः ७
अप्यग्नयस्तु वेलायां न हुता हविषा सति त्वयोद्विग्नधिया भद्रे प्रोषिते मयि कर्हिचित् ८
यत्पूजया कामदुघान् याति लोकान् गृहान्वितः ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखं ९
॥क्षेपक॥ द्विजानां वा प्रतिश्रुत्य न दत्तं वा शुभानने लोभान्मोहात् भयाद्वापि येन ते मुखमीदृशं १०

चित्कुशलमिति का का प्रश्नः यत्र येषु गृहेषु अयोगिनामपि योगः स्वधर्मादिना योगफलं भवति ५ किं वा त्वयाऽपूजि
ताः एवाभ्येत्य गृहाद्याताः ६ नार्चिताः अनर्चिताः संतो यदि निर्गच्छंति ते गृहाः फेरुराजः सृगालराजः तदीयविवरतुल्याः

 भवत्या आत्मानं मनः अस्वस्थमप्रकृतिस्थं लक्षणैर्मुखम्लान्यादिभिः लक्षयामि १० अस्वास्थ्यकारणमन्यद
 स्तीति वक्तुं तत्र दृष्टमभद्रादिकं नास्तीत्याह भद्रमिति द्वाभ्यां इमे गृहाः त्रिवर्गस्य परं क्षेत्रं उद्भवस्थानं त्रिवर्गोऽपि प्रिया।

अपिसर्वेकुशलिनस्तवपुत्रामनस्विनि लक्षयेऽस्वस्थमात्मानंभवत्यालक्षणैरहम् १०
अदितिरुवाच भद्रंद्विजगवांब्रह्मन् धर्मस्यास्यजनस्यच त्रिवर्गस्यपरंक्षेत्रंगृहमेधि
न्गृहाइमे ११ अग्नयोतिथयोभृत्याभिक्षवोयेचलिप्सवः सर्वंभगवतोब्रह्मन्ननुध्याना
न्नरिष्यति १२ कोनुमेभगवन्कामोनसंपद्येतमानसः यस्याभवान्प्रजाध्यक्षएवंधर्मान्प्र
भाषते १३ तवैवमारीचमनः शरीरजाः प्रजाइमाः सत्वरजस्तमोजुषः समोभवांस्तास्वसु
रादिषुप्रभोतथापिभक्तंभजतेमहेश्वरः १४ तस्मादीशभजंत्यामेश्रेयश्चिंतयसुव्रत हृतश्रि
योहृतस्थानान्सपत्नैः पाहिनः प्रभो १५ परैर्विवासितासाहंमग्नाव्यसनसागरे ऐश्वर्यं।
श्रीर्यशःस्थानंहृतानिप्रबलैर्मम १६ यथातानिपुनः साधोप्रपद्येरन्ममात्मजाः तथा
विधेहिकल्याणंधियाकल्याणकृत्तम १७॥ एथावद्वर्त्तंत इत्यर्थः ११ भगवतस्तवानुध्यानं यन्मया
क्रियते तस्मात् अग्नयोऽतिथय इत्यादि सर्वं न रिष्यति न हीयते १२ प्रस्तुतं विज्ञापयितुमाह कोन्विति १३ संपाद्यं
काममाह तवैवेति चतुर्भिः १४ सपत्नैर्हृत्यैर्हृता श्रीर्यशो हृतं स्थानं येषामिति पुत्राभिप्रायेण बहुवचनं १५ १६ १७॥

कः कश्यपः अथ मं तावत्पुत्रस्नेहं त्याजयितुं विस्मयव्याजेनैव तत्त्वमुपदिशति अहो इति सार्द्धेन १८ १९ अत्रा-
परितुष्यन्तीं प्रत्याह उपतिष्ठस्वेति द्वाभ्यां २० नन्वेवंभूतकामप्राप्तिहेतुर्देवान्तरसेवा प्रसिद्धा तत्राह अमोघेति २१

श्रीशुक उवाच एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव अहो मायाबलं विष्णोः स्नेह-
बद्धमिदं जगत् १८ क्व देहो भौतिकोऽनात्मा क्व चात्मा प्रकृतेः परः कस्य के पतिपुत्राद्या मोह
एव हि कारणं १९ उपतिष्ठस्व पुरुषं भगवन्तं जनार्द्दनं सर्व्वभूतगुहावासं वासुदेवं जगद्गुरुं
२० स विधास्यति ते कामान् हरिर्दीनानुकम्पनः अमोघा भगवद्भक्तिर्नेतरेति मतिर्मम २१ अदि-
तिरुवाच केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिं यथा मे सत्यसंकल्पो विदध्यात्स मनो-
रथं २२ आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनं आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः।
२३ कश्यप उवाच एतन्मे भगवान्पृष्टः प्रजाकामस्य पद्मजः यथाह ते प्रवक्ष्यामि व्रतं केशवतो-
षणं २४ फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः अर्चयेदरविन्दाक्षं भक्त्या परमयान्वितः २५
सिनीवाल्यां मृदालिप्य स्नायात् क्रोडविदीर्णया॥

स यथा च मे मनोरथं विदध्यात् २२ यथा च मे आशु तुष्य-
ति तथा तत्सेवाप्रकारमादिश २३ मे मया पृष्टः पद्मजो मे यद्व्रतमाह एतन्ते तव प्रवक्ष्यामीत्यन्वयः २४ अमले शुक्ले २५।
तत्रादौ पूर्वेद्युः कृत्यमाह सिनीवाल्यामित्यादिना ब्रह्मचार्यऽथ तद्वाक्यामित्यन्ते नग्रंथेन यदि लभ्यते तर्हि क्रोड।

१६
भा॰ भ्र॰
७५

विदीर्णयावन्यवराहोत्त्वातया भ्रालिप्य २६ तत्रमंत्रः त्वंदेवीति हेदेवित्वंरसायाः उद्धृतासि २७ निर्वर्त्तितभ्रात्मनियमोनित्यनैमित्तिकोयेन २८ तत्रावाहनादौनवमंत्रानाह नमस्तुभ्यमिति पाद्यादौविशेषतस्तुद्वादशाक्षरंवक्ष्यति २९ चतुर्विंशतिगुणास्तत्वानितानिजानातीति तथा तस्मैगुणसंख्यानस्यहेतवेसांख्यप्रवर्त्तकाय ३० एवंसामान्यतोनत्वागुणावतारान्प्रणमतित्रिभिः तत्रादौमंत्रोक्तयज्ञरूपेणविष्णोःप्रणामोनमइति द्वेशीर्षेयस्यत्रयःपादायस्य

यदिलभ्येतवैस्रोतस्येतंमंत्रमुदीरयेत् २६ त्वंदेव्यादिवराहेणरसायाःस्थानमिच्छता उद्धृतासिनमस्तुभ्यंपाप्मानंमेप्रणाशय २७ निर्वर्त्तितात्मनियमोदेवमर्चेत्समाहितः भ्रर्चायांस्थंडिलेसूर्येजलेवह्नौगुरावपि २८ नमस्तुभ्यंभगवतेपुरुषायमहीयसे सर्वभूतनिवासायवासुदेवायसाक्षिणे २९ नमोव्यक्तायसूक्ष्मायप्रधानपुरुषायच चतुर्विंशद्गुणज्ञायगुणसंख्यानहेतवे ३० नमोद्विशीर्ष्णेत्रिपदेचतुःशृंगायतंतवे सप्तहस्ताययज्ञायत्रयीविद्यात्मनेनमः ३१॥

एतंतंतवेफलविस्तारकायत्रय्यांविद्यायात्मात्मायस्येतित्रिधावद्धइत्यस्यार्थउक्तः तथाचमंत्रः चत्वारिशृंगात्रयोऽस्यपादाद्वेशीर्षेसप्तहस्तासोऽस्यत्रिधावद्धोवृषभोरोरवीतिमहादेवोमर्त्याम्भ्राविवेशेति मार्गमुद्रयदालूनःसोयंप्रातेर्यथायथंविष्णुस्तुयज्ञरूपेणस्तूयतेनेनतत्वतःतथाचयास्कः चत्वारिशृंगेतिवेदाएवोक्ताःऽत्रयोअस्यपादाइतिसवनानित्रीणिद्वेशीर्षेप्रायणीयोदयनीयोसप्तहस्ताःसप्तछंदांसित्रिवद्धोत्रिधावद्धःमंत्रब्राह्मणकल्पैःवृषभोरोरवीतिशब्दनंसवनक्रमेणऋग्भिर्यजुर्भिःसामभिर्यदेनमृग्भिः

३२ प्राणायसूत्रात्मनेयोगैश्वर्यशरीरंयस्य ३३ ३४ अधिगताप्राप्ताश्रीर्येनतस्मै ३५ ३६ तत्पादपद्मयोःआमोदं। 

नमःशिवायरुद्रायनमःशक्तिधरायच सर्वविद्याधिपतयेभूतानांपतयेनमः ३२ न
मोहिरण्यगर्भायप्राणायजगदात्मने योगैश्वर्यशरीरायनमस्तेयोगहेतवे ३३ नमस्ते
आदिदेवायसाक्षिभूतायतेनमः नारायणायऋषयेनरायहरयेनमः ३४ नमोमरक
तश्यामवपुषेधिगतश्रिये केशवायनमस्तुभ्यंनमस्तेपीतवाससे ३५ त्वंसर्ववरदःपुं
सांवरेण्यवरदर्षभ अतस्तेश्रेयसेधीराःपादरेणुमुपासते ३६ अन्ववर्त्तंतयंदेवाःश्री।
श्रतत्पादपद्मयोःस्पृहयंतइवामोदंभगवान्मेप्रसीदतां ३७ एतैर्मंत्रैर्हृषीकेशमावाहन
पुरस्कृतं अर्चयेच्छ्रद्धयायुक्तःपाद्योपस्पर्शनादिभिः ३८ अर्चित्वागंधमाल्याद्यैःपयसा
स्नपयेद्विभुंवस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः गंधपुष्पादिभिश्चार्चेत्द्वादशार
विद्यया ३९ शृतंपयसिनैवेद्यंशाल्यन्नंविभवेसति ससर्पिःसगुडंदत्वाजुहुयान्मू
लविद्यया ४० निवेदितंतद्भक्तायदद्याद्भुंजीतवास्वयं दत्वाचमनमर्चित्वातांबूलंचनिवेदये

स्पृहयंतइवदेवाश्रश्रीश्चयमन्ववर्त्तंतसमेप्रसीदतु ३७ आवाहनेनपुरस्कृतंसंमानितं ३८ ३९॥ १२ तृ ७१

९६
भा॰अ॰
४६

पूर्वोक्ताभिरन्याभिश्चस्तुतिभिः ४२ तस्यशेषांनिर्माल्यंद्वौअवरौयेषांतान् असंभवेद्वावपिभोजयेदित्यर्थः ४३॥

जपेदष्टोत्तरशतंस्तुवीतस्तुतिभिःप्रभुं कृत्वाप्रदक्षिणंभूमौप्रणमेद्दंडवन्मुदा ४२ कृ॰

त्वाशिरसितच्छेषांदेवमुद्वासयेत्ततः द्व्यवरान्भोजयेद्विप्रान्पायसेनयथोचितं ४३ भुं॰

जीततैरनुज्ञातःशेषंसेष्टःसभाजितैः ब्रह्मचार्यथतद्रात्र्यांश्वोभूतेप्रथमेऽहनि ४४॥

स्नातःशुचिर्यथोक्तेनविधिनासुसमाहितः पयसास्नापयित्वार्चेद्यावद्व्रतसमापनं ४५

पयोभक्षोव्रतमिदंचरेद्विष्ण्वर्चनादृतः पूर्ववज्जुहुयादग्निंब्राह्मणांश्चापिभोजयेत् ४६

एवंत्वहरहःकुर्याद्द्वादशाहंपयोव्रतःहरेराराधनंहोमंमर्हणंद्विजतर्पणं ४७ प्रतिपद्दि॰

नमारभ्ययावच्छुक्लत्रयोदशी ब्रह्मचर्यमधःस्वप्नंस्नानंत्रिषवणंचरेत् ४८ वर्जयेद

सदालापंभोगानुच्चावचांस्तथा अहिंस्रःसर्वभूतानांवासुदेवपरायणः ४९ त्रयोदश्यामं

थोविष्णोःस्नपनंपंचकैर्विभोः कारयेच्छास्त्रदृष्टेनविधिनाविधिकोविदैः ५० पूजांचम॰

हतींकुर्याद्वित्तशाठ्यविवर्जितः चरुंनिरूप्यपयसिशिपिविष्टायविष्णवे ५१॥ ॥

सभाजितैस्तैरनुज्ञातःसन्शेषंबंधुभिःसहितःतस्यांरात्र्यांब्रह्मचारीसन्श्वोभूतेप्रभातेसति ४४ ४५ पयएवभक्षआहारोय

॥ स ४६ ४७ अधःस्वप्नंशयनं ४८ ४९ पंचकैःपंचामृतैः ५० ५१॥

राम
४६

५२ ५३ ५४ ५५ ५६ ५७ मयाचतेसमुदाहृतं ५८ ५९ सर्वयज्ञाख्योऽयंयज्ञः सर्वव्रतमितिचस्मृतमेतद्व्रतं ६०॥

श्रृतेननतेनंपुरुषंयजेतसुसमाहितः नैवेद्यंचातिगुणवद्दद्यात्पुरुषतुष्टिदं ५२ आचार्यंज्ञानसंपन्नंवस्त्राभरणधेनुभिः तोषयेद्दत्विजश्चैवतद्विद्ध्याराधनंहरेः ५३ भोजयेत्तानगुणवतासदन्नेनशुचिस्मिते अन्यांश्चब्राह्मणानशक्त्यायेचतत्रसमागताः ५४ दक्षिणांगुरवेदद्यादृत्विग्भ्यश्चयथार्हतः अन्नाद्येनाश्वपाकांश्चप्रीणयेत्समुपागतान् ५५ भुक्तवत्सुचसर्वेषुदीनांधकृपणादिषु विष्णोस्तत्प्रीणनंविद्वानभुंजीतसहबंधुभिः ५६ नृत्यवादित्रगीतैश्चस्तुतिभिःस्वस्तिवाचकैः कारयेत्तत्कथाभिश्चपूजाभगवतोन्वहं ५७ एतत्पयोव्रतंनामपुरुषाराधनंपरं पितामहेनाभिहितंमयातेसमुदाहृतं ५८ त्वंचानेनमहाभागेसम्यक्चीर्णनकेशवं आत्मनाशुद्धभावेननियतात्माभजाव्ययं ५९ अयंवैसर्वयज्ञाख्यःसर्वव्रतमितिस्मृतं तपःसारमिदंभद्रेदानेचेश्वरतर्पणं ६० तएवनियमाःसाक्षात्तएवचयमोत्तमाः तपोदानंव्रतंयज्ञोयेनतुष्यत्यधोऽक्षजः ६१ तस्मादेतद्व्रतंभद्रेप्रयताश्रद्धयाचर भगवान्परितुष्टस्तेवरानाशुविधास्यति ६२॥इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेअदितिपयोव्रतंनामषोडशोऽध्यायः १६॥१ ६१ ६२॥इतिश्रीभागवतेमहापुणेअष्टमस्कंधेटीकायांषोडशोऽध्यायः १६ ॥ ॥

ततः सप्तदशोऽहित्याह्नतेनतस्मिन्व्रतेहरिः तत्कामपूरणायादौतत्पुत्रोऽभूदितीर्यते १ १ २ ३ ४ ५ प्रीतिविह्वलत्वादेवसा
वद्धांजलिःसतीस्थितानकेवलं ईडितुंपुनर्नोत्सेहेनशशाक अपितुतूष्णींवभूवकथंभूताआनंदजलैराकुलेईक्षणेयस्याः
पुलकैराकुलाआकृतिर्देहोयस्याः तस्यदर्शनेनयोऽत्युत्सवः तेनगात्रेवेपथुःकंपोयस्याः ६ तुष्टावपिवतीवोद्वीक्षमाणा

श्रीशुकउवाच इत्युक्तासाऽदितीराजन्स्वभर्त्राकश्यपेनवै अन्वतिष्ठद्व्रतमिदंद्वादशाहमतंद्रि
ता १ चिंतयंत्येकयावुद्ध्यामहापुरुषमीश्वरं प्रगृह्येंद्रियदुष्टाश्वान्मनसावुद्धिसारथिः २ मन
श्चैकाग्र्याबुद्ध्याभगवत्यखिलात्मनि वासुदेवेसमाधायचचारहपयोव्रतं ३ तस्यास्तत्प्रादुरभू
त्तातभगवानादिपूरुषः पीतवासाश्चतुर्वाहुःशंखचक्रगदाधरः ४ तंनेत्रगोचरंवीक्ष्यसहसो
त्थायसादरं ननामभुविकायेनदंडवत्प्रीतिविह्वला ५ सोत्थायबद्धांजलिरीडितुंस्थितानोत्सेह
आनंदजलाकुलेक्षणा वभूवतूष्णींपुलकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ६ प्रीत्याश
नैर्गद्गदयागिराहरिंतुष्टावसादेव्यदितिःकुरूद्वह उद्वीक्षतीसापिवतीवचक्षुषारमापतिंयज्ञपतिं
जगत्पतिं ७ अदितिरुवाच यज्ञेशयज्ञपुरुषाच्युततीर्थपादतीर्थश्रवःश्रवणमंगलनामधेय॥

इतिचक्रियाभेदात्सेत्यसपदस्यद्विरुक्तिरदोषः ७ अयत्नतोविनिर्जित्यदैत्यानत्यूर्जितानपि भक्तानुरक्षितुमी
शस्त्वमित्यस्तौददितिस्त्रिभिः यज्ञेशेत्यादिदशभिःसंवोधनैस्तवाशक्यंकिमपिनास्तीतिवदंतीप्रार्थयतेहेई

शशंनः कृधि कुरु यतो दीनानां नाथोसि त्वं तीर्थश्रवः कीर्त्तिर्यस्य श्रवणमेव मंगलं यस्य तन्नामधेयं यस्य आपन्नानां शरणागतानां लोकानां वृजिनोपशमाय उदयो यस्य ८ भूम्ने महते नमः महत्वे हेतवः विश्वाय विश्वस्य भवनस्थितिसंयमा यस्मै स्वैरं गृहीता पुरुशक्तेर्मायायाः गुणा येन तस्मै तथापि स्वस्थाय अप्रच्युतस्वरूपाय कुतः शश्वदुपबृंहितः नित्योर्जितो यः पूर्णबोधस्तेन व्यापादितं निरस्तं आत्मनि तमो माया लक्षणं येन तस्मै ९ अस्मदीयमनोरथपूरणमीषत्करमेव तव इति किमुत यत्कल्पापेनाह आयुः परं ब्र

आपन्नलोकवृजिनोपशमोदयाद्य शंनः कृधीश भगवन्नसि दीननाथः ८ विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ९ आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्यौर्भूरसाः सकलयोगगुणास्त्रिवर्गः ज्ञानं च केवलमनंत भवंति तुष्टात्त्वत्तो नृणां किमु सपत्नजयादिराशीः १० श्रीशुक उवाच अदित्यैवं स्तुतो राजन्भगवान्पुष्करेक्षणः क्षेत्रज्ञः सर्वभूतानामिति होवाच भारत ११ श्रीभगवानुवाच देवमातर्भवत्या मे विज्ञातं चिरकांक्षितं यत्सपत्नैर्हृतश्रीणां च्यावितानां स्वधामतः १२ तान्विनिर्जित्य समरे दुर्मदानसुरर्षभान् प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुं १३॥

द्यावापृथिव्योर्भूः पुनरपि द्यौश्च भूश्च रसाश्च लं च द्योभूरसाः द्यौरिति दृश्यकाठे भूश्च रसाश्च बिलस्वर्गा इति विग्रहः रसेति पाठे त्रीणि पदानि सकला योगगुणा अणिमादयः १० क्षेत्रज्ञः अंतर्यामी ११ सपत्नैर्हृता श्रीर्येषां स्वधामतः च्यावितानां च पुत्राणां संबंधि यत्तत् मया विज्ञातं १२ कांक्षितमेवाह तानिति त्रिभिः प्रतिलब्धो जयश्च श्रीश्च यैस्तैः पुत्रैः सह उपासितुं एकत्र

१४ प्रत्याहृतं यशश्च श्रीश्च यैः तान् १५ अपारणीयाः अनतिक्रमणीयाः यत् यस्मात् अनुकूलः ईश्वरः कालो येषां तैर्विप्रैः गुप्ता रक्षिताः अनुकूलैरीश्वरैः समर्थैर्विप्रैः गुप्ता इति वा १६ मम मया चिंत्य एवं तत्र हेतुः संतोषितस्येत्यादि अद्धानुरूपं इ॰

इंद्रज्येष्ठैः स्वतनयैर्हतानां युधि विद्विषां स्त्रियो रुदंतीरासाद्य द्रष्टुमिच्छसि दुःखिताः १४ आत्मजा नसुसमृद्धांस्त्वं प्रत्याहृतयशःश्रियः नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि १५ प्रायोधुनाते ऽसुरयूथनाथा अपारणीया इति देवि मे मतिः यत्ते ऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति॥ १६ अथाप्युपायो मम देवि चिंत्यः संतोषितस्य व्रतचर्यया ते ममार्चनं नार्हति गंतुमन्यथा श्रद्धानुरूपफलहेतुकत्वात् १७ त्वयार्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः स्वांशेन पुत्रत्वमुपेत्य ते सुतान् गोप्तास्मि मारीचतपस्यधिष्ठितः १८ उपधाव पतिं भद्रे प्रजापतिमकल्मषं मां च भावयती पत्यावेवं रूपमवस्थितं १९ नैतत्परस्मा आख्येयं पृष्टयापि कथंचन सर्वं संपद्यते देवि देवगुह्यं सुसंवृतं २० श्रीशुक उवाच एतावदुक्त्वा भगवांस्तत्रैवांतरधीयत अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः २१ उपाधावत्पतिं भक्त्या परया कृतकृत्यवत् स वै समाधियोगेन कश्यपस्तदबुध्यत २२॥ १७ इच्छानुसारेण फलहेतुत्वात् १७ मारीचस्य तपसि अधिष्ठाय स्थितः सन् गोप्तास्मि पालयिष्यामि १८ अतः पतिमुपधाव भजस्व १९ देवानां गुह्यं रहस्यं सर्वं सुसंवृतं सुसंगुप्तं सत् संपद्यते सिद्ध्यति २०

अवितथमीक्षणं दृष्टिर्यस्य सः अनिलो यथा सर्वत्र समोपि दारूणि संघर्षेण तथा च तद्वा हरूमग्निमाधत्ते एवं स्वयं पुत्रेषु समोपि दि-
त्यक्षपणं वीर्यमाधत्तेत्यर्थः २३ धिष्ठितं अधिष्ठाय स्थितं समीडे तुष्टावेत्यर्थः २४ २५ अदितेरेव पूर्वस्मिन् जन्म नि पृश्निरिति
नाम तस्याः गर्भाय अर्भकाय वेदा गर्भे यस्य यद्वा वेदानां गर्भाय वेदेषु प्रकाशमानायेत्यर्थः त्रयो लोका नाभौ यस्य सः त्रिनाभः ता
स्त्रयाणां लोकानां पृष्ठे उपरि स्थिताय शिपिशब्देन पशवो जीवास्तेष्वंतर्यामितया प्रविष्टाय यज्ञो वै विष्णुः पशवः शिपिर्य-

प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः सोऽदित्यां वीर्यमाधत्त तपसा चिरसंभृतं समाहितमना राजन् दारुण्यग्निं यथानिलः २३ अदितेर्धिष्ठितं गर्भं भगवंतं सनातनं हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः २४ ब्रह्मोवाच जयोरुगाय भगवन्नुरुक्रम नमोस्तु ते नमो ब्रह्मण्यदेवाय त्रिगुणाय नमो नमः २५ नमस्ते पृश्निगर्भाय वेदगर्भाय वेधसे त्रिनाभाय त्रिपृष्ठाय शिपिविष्टाय विष्णवे २६ त्वमादिरंतो भुवनस्य मध्यमनंतशक्तिं पुरुषं यमाहुः कालो भवानाक्षिपतीश विश्वं स्रोतो यथांतःपतितं गभीरं २७ त्वं वै प्रजानां स्थिरजंगमानां प्रजापतीनामसि संभविष्णुः दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु २८ ॥

यो रश्मयस्तैर्वेष्टितायेत्यर्थः तथापि विश्वव्यापिने २६ अंतःपतितं तृणादि यथा गभीरं स्रोतः आक्षिपति आकर्षति तथा
कालात्मा भवान् विश्वमाक्षिपति २७ प्रजापतीनां च त्वमेव संभविष्णुः उत्पादनशीलोसि अयं भावः न ह्येवंभूतस्य तव ज-
न्मादि संभवः किंतु देवानां प्रजापतीनां प्रजानां च परमाश्रयत्वेन तत्कार्यसाधनायावतारोयं अतस्तान् स्वर्गच्युतान् पुनः स्व-

॥इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांमप्तदशोऽध्यायः १७ ततस्त्वष्टादशेभूत्वावामनःसन्स्तुतोखिलैःयज्ञं गतस्ततस्तेनसत्कृत्योक्तोवरान्वृणु १ इत्थंविरिंच्येनस्तुतंकर्मदेवकार्यलक्षणंवीर्यंचप्रभावोयस्यसहरिरदित्यांप्रादुर्बभूवेतित्रयाणामन्वयः अमृतभूःमृत्युजन्मशून्यःशंखगदाब्जचक्राण्यस्यसंतीतितथा अर्शआदित्वेनमत्वर्थीयोचप्रत्ययः अविसर्गपाठेसंचासौपिशंगवासाश्च १ झषराजोमकरःनराकारयोःकुंडलयोस्त्विषाउद्ध्वसंतीश्रीर्वदनांबुजे

॥इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेसप्तदशोध्यायः १७ श्रीशुकउवाच इत्थंविरिंच्यस्तुतकर्मवीर्यःप्रादुर्बभूवाऽमृतभूरदित्यां चतुर्भुजःशंखगदाऽब्जचक्रःपिशंगवासानलिनायतेक्षणः १ श्यामावदातोझषराजकुंडलत्विषोल्लसच्छ्रीवदनांबुजःपुमान् श्रीवत्सवक्षावलयांगदोल्लसत्किरीटकांचीगुणचारुनूपुरः २ मधुव्रतव्रातविघुष्टयास्वयाविराजितंश्रीवनमालयाहरिःप्रजापतेर्वेश्मतमःस्वरोचिषाविनाशयन्कंठनिविष्टकौस्तुभः ३ दिशःप्रसेदुःसलिलाशयास्तदाप्रजाःप्रहृष्टाऋतवोगुणान्विताः द्यौरंतरिक्षंक्षितिरग्निजिह्वागावोद्विजाःसंजहृषुर्नगाश्च ४ श्रोणायांश्रवणद्वादश्यांमुहूर्तेऽभिजितिप्रभुः॥५ यस्यश्रीवत्सोवक्षसियस्यवलयैरंगदैश्चसहोल्लसंतिकिरीटादीनियस्य २ श्रीमत्यावनमालयाविराजितःवेश्मगतंतमः ३ अग्निजिह्वादेवाःनगाःपर्वताः ४ तत्प्रादुर्भावसमयमाह श्रोणायामिति भाद्रपदशुक्लद्वादशीश्रवणद्वादशीतिप्रसिद्धातस्यांतत्रापिश्रोणायांश्रवणस्थेचंद्रइत्यर्थः तत्रापिश्रवणस्यप्रथमांशेअभिजितिनक्षत्रेतच्चश्रुत्यादर्शितं अभिजिन्ना

मनक्षत्रं उपरिष्टाद षाढानां अधस्ताच्छ्रोणाया इति एवंविशिष्टे सुमुहूर्ते प्रभुः प्रादुर्बभूवेत्यर्थः किंच नक्षत्राण्यश्वि
न्यादीनि ताराशब्देन ग्रहाः गुरुशुक्रादयः ते आद्या येषां ते सूर्यादयोपि सर्वे तस्य जन्म दक्षिणं उदारं चक्रुः जन्ममुहूर्ते
गुणावहा बभूवुरित्यर्थः ५ विशेषांतरमाह यस्यां द्वादश्यां हरेर्जन्म तत् तस्मा महन्येव विदुः तदा च मध्यंदिनं गतः ।

सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ५ द्वादश्यां सविताऽतिष्ठन्मध्यंदिनगतो नृप
विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ६ शंखदुंदुभयो नेदुर्मृदंगपणवानकाः चित्रवा ।
दित्रतूर्याणां निर्घोषस्तुमुलोऽभवत् ७ प्रीताश्चाप्सरसोऽनृत्यन् गंधर्वप्रवरा जगुः तुष्टुवुर्मु
नयो देवा मनवः पितरोऽग्नयः ८ सिद्धविद्याधरगणाः सकिंपुरुषकिन्नराः चारणा यक्षरक्षां
सि सुपर्णा भुजगोत्तमाः ९ गायंतोऽतिप्रशंसंतो नृत्यंतो विबुधानुगाः अदित्या आश्रमपदं
कुसुमैः समवाकिरन् १० दृष्ट्वाऽदितिस्तं निजगर्भसंभवं परं पुमांसं मुदमाप विस्मिता गृही
तदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ११ यत्तद्वपुर्भाति विभूषणायुधैर
व्यक्तचिद्व्यक्तमधारयद्धरिः बभूव तेनैव स वामनो वटुः संपश्यतो दिव्यगतिर्यथा नटः १२

सविताऽतिष्ठत् सा च द्वादशी विजया नाम प्रोक्तेत्यन्वयः ६ शंखादयो ये तेषां अन्येषां च चित्रतूर्याणां निर्घोषोऽभवत् ७ देवा मन
वइत्यादीनां कुसुमैः समवाकिरन्निति तृतीयेनान्वयः ८ ९ १० ११ विस्मयांतरमाह यत्तदिति यद्वपुर्हरिरधारयत प्रकटितवान् तेनैव वपुषा मातापित्रोः संपश्यतोरेव वामनो वटुर्बभूव दिव्यगतिः अद्भुतचेष्टितः स्वयं कथंभूतः अव्यक्तचिद्रूपः व
यमधारयत भातिर्दीप्तिः विभूषणानि च आयुधानि च तै
र्व्यक्तं यथा भवति तथा १२

१

भा॰ग्र॰ कर्माणिजातकर्मादीनि १३ १४ वनस्पतिःवनानांपतिःसोमः १५ १६ पात्रिकांभिक्षापात्रीं १७ सएवंसंभावितोमा

५० रिषःश्रेष्ठोवटुर्ब्रह्मवर्चसेनब्रह्मर्षिगणसंजुष्टांतांसभामतिक्रम्यारोचत १८ १९ यदर्थंवटुर्बभूवतदाहश्रुत्वेमादि

तंवटुंवामनंदृष्ट्वामोदमानामहर्षयः कर्माणिकारयामासुः पुरस्कृत्यप्रजापतिं ॥१३॥

तस्योपनीयमानस्यसावित्रींसविताब्रवीत् बृहस्पतिर्ब्रह्मसूत्रंमेखलांकश्यपोऽददात्

१४ ददौकृष्णाजिनंभूमिर्दंडंसोमोवनस्पतिः कौपीनाच्छादनंमाताद्यौश्छत्रंजगतःपतेः १५ क

मंडलुंवेदगर्भःकुशान्सप्तर्षयोददुः अक्षमालांमहाराजसरस्वत्यव्ययात्मनः १६ तस्माइत्युप

नीताययक्षराट्पात्रिकामदात् भिक्षांभगवतीसाक्षादुमाऽदादंबिकासती १७ सब्रह्मवर्च

सेनैवंसभांसंभावितोवटुः ब्रह्मर्षिगणसंजुष्टामत्यरोचतमारिषः १८ समिद्धमाहितंव

ह्निंकृत्वापरिसमूहनं परिस्तीर्यसमभ्यर्च्यसमिद्भिरजुहोद्द्विजः १९ श्रुत्वाऽश्वमेधैर्यज

मानमूर्जितंबलिंभृगूणामुपकल्पितैस्ततः जगामतत्राखिलसारसंभृतोभारेणगांसंनम

यन्पदेपदे २० तंनर्मदायास्तटउत्तरेबलेर्यऋत्विजस्तेभृगुकच्छसंज्ञके ॥ ((यावत्समाप्तियज

मानंयजंतभृगूणांभृगुभिःउपकल्पितैःप्रवर्तितैःअखिलेनसारेणबलेनसंभृतःसंपूर्णः २० नर्मदायाउत्तरेतटेभृगुक

च्छसंज्ञकेक्षेत्रेक्रतूत्तमंप्रवर्तयंतोबलेःऋत्विजोभृगवःतेतंव्यचक्षतअपश्यन् आरात्समीपएवोदितंरवि

मिवेति ऋत्विगादयः सूर्यः किलेत्येवमादिव्यतर्कयन्निति शेषः २१ २२ हयमेधवाटं अश्वमेधमंडपं विवेश २३ उप
वीताजिनं उपवीतवद्धृतमजिनमेव उत्तरमुत्तरीयं यस्य तम् २४ संक्षिप्ताः अभिभूताः संतः २५ रूपस्यानुरूपा अव

प्रवर्त्तयंतो भृगवः क्रतूत्तमं व्यचक्षतारादुदितं यथा रविं २१ ते ऋत्विजो यजमानः सदस्या
हतत्विषो वामनतेजसा नृप सूर्यः किलायात्युत वा विभावसुः सनत्कुमारोथ दिदृक्षया क्रतोः
२२ इत्थं सशिष्येषु भृगुष्वनेकधा वितर्क्यमाणो भगवान्स वामनः सदंडं छत्रं सजलं कमंडलुं
विवेश बिभ्रद्धयमेधवाटं २३ मौंज्या मेखलया वीतमुपवीताजिनोत्तरं जटिलं वामनं विप्रं मा
यामाणवकं हरिं २४ प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः प्रत्यगृह्णन्समुत्थाय।
संक्षिप्तास्तस्य तेजसा २५ यजमानः प्रमुदितो दर्शनीयं मनोरमं रूपानुरूपावयवं तस्मा आस
नमाहरत २६ स्वागतेनाऽभिनंद्याऽथ पादौ भगवतो बलिः अवनिज्यार्चयामास मुक्तसंगम
नोरमम् २७ तत्पादशौचं जनकल्मषापहं स धर्मवित्मूर्द्ध्न्यऽदधात्सुमंगलं यद्देवदेवो गिरिश
श्चंद्रमौलिर्दधार मूर्द्ध्ना परया च भक्त्या २८ बलिरुवाच स्वागतं ते नमस्तुभ्यं ब्रह्मन् किं करवाम ते
ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वार्य वपुर्द्धरं २९॥ यवाः यस्य तं दृष्ट्वेति शेषः २६ २७ चंद्रमौलिश्चेत्यन्वयः अप्यर्थे

चकारः चंद्रमौलिरपि गंगा यत्पयं मूर्द्ध्ना दधारेत्यर्थः २८ हे आर्य त्वा त्वां साक्षान्मूर्त्तं ब्रह्मर्षीणां तपः एवं मन्ये कथंभूतं तपः

३० त्वच्चरणावनेजनैर्वार्भिर्हतमंहो यस्य तस्य मे पुनीता पवित्रीकृता ३१ मे मत्तः प्रतीच्छ गृहाण हे अर्हत्तम पूज्यतम
३२ इति श्रीभागवते महापुराणेऽष्टमस्कंधे टीकायां अष्टादशोऽध्यायः १८ ऊनविंशे तु हरिणा याचितेन पदत्रये प्र
तिश्रुते च बलिना ज्ञानन् भृगुर्खारयत् १ दातुः स्तुतिः स्वयं तुष्टिरित्यादि प्रस्तुतोचितं वक्तव्यमिति मिषेणु शिक्ष

अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलं अद्य स्विष्टः क्रतुरयं यद्भवानागतो गृहान् ३०
अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज त्वच्चरणावनेजनैः हतांहसो वार्भिरियं च भूरहो त
था पुनीता तनुभिः पदैस्तव ३१ यद्यद्वटो वांछसि तत्प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये गां कां
चनं गुणवद्धाम मृष्टं तथान्नपेयमुत वा विप्रकन्यां ग्रामान्समृद्धान्तुरगान्गजान्वा
रथांस्तथाऽर्हत्तम संप्रतीच्छ ३२॥ इति श्रीभागवते महापुराणेऽष्टमस्कंधे बलिवामनसं
वादेऽष्टादशोऽध्यायः १८ श्रीशुक उवाच इति वैरोचनेर्वाक्यं धर्मयुक्तं ससूनृतम् निशम्य
भगवान्प्रीतः प्रतिनंद्येदमब्रवीत् १ श्रीभगवानुवाच वचस्तवैतज्जनदेव सूनृतं कुलोचितं
धर्मयुतं यशस्करं यस्य प्रमाणं भृगवः सांपराये पितामहः कुलवृद्धः प्रशांतः २ न ह्येतस्मि
न्कुले कश्चिन्निःसत्वः कृपणः पुमान्॥

एवं प्रार्थितो वामनः १ वचस्तवैत दिति षोडशभिः हे जनदेव सांपरा
ये पारलौकिके धर्मे पितामहश्च प्रह्लादः प्रमाणम् २ निःसत्वस्य लक्षणं यो द्विजातये याचकाय प्रत्याख्याता न ददामो

तिवक्ता कृपणस्यलक्षणं प्रथमंप्रतिश्रुत्ययोवानदातेति ३ तीर्थेदानावसरेयत् यस्मिन्युष्मत्कुले ४ यतः यस्मिन्
जातः ५ क्ष्मोद्धारेभूम्याउद्धरणे ६ ७ ८ पराग्दृशः वहिर्दृष्टेः ९ अतोहृदयेस्थितंमांनज्ञास्यतीत्येवंनिश्चित्यश्वासा

प्रत्याख्याताप्रतिश्रुत्ययोवाऽदाताद्विजातये ३ नसंतितीर्थेयुधिवाऽर्थिनार्थिताःपराङ्मु।
खायेत्वमनस्विनोनृपाः युष्मत्कुलेयद्यशसाऽमलेनप्रह्लादउद्भातियथोडुपःखे ४ यतोजा
तोहिरण्याक्षश्चरन्नेकइमांमहीं प्रतिवीरंदिग्विजयेनाविंदतगदायुधः ५ यंविनिर्जित्यकृ
च्छ्रेणविष्णुःक्ष्मोद्धारआगतंनात्मानंजयिनंमेनेतद्वीर्यंभूर्यनुस्मरन् ६ निशम्यतद्वधंभ्रा
तापाणिंहिरण्यकशिपुःपुरा हंतुंभ्रातृहणंक्रुद्धोजगामनिलयंहरेः ७ तमायांतंसमालोक्यशू
लपाणिंकृतांतवत् चिंतयामासकालज्ञोविष्णुर्मायाविनांवरः ८ यतोयतोहंतत्रासौमृ
त्युःप्राणभृतामिव अतोहमस्यहृदयंप्रवेक्ष्यामिपराग्दृशः ९ एवंसनिश्चित्यरिपोःशरीर
माधावतोनिर्विविशेसुरेंद्र श्वासानिलांतर्हितसूक्ष्मदेहस्तत्प्राणरंध्रेणविविग्नचेताः १०
सतन्निकेतंपरिमृश्यशून्यमपश्यमानःकुपितोननाद ॥ क्ष्मांद्यांदिशःखंविवरान्समुद्रान्।
विष्णुंविचिन्वन्नददर्शवीरः ११॥ ११ निलेंतर्हितःसूक्ष्मोदेहोयस्यविविग्नमतिकंपितंचेतोयस्यअ।
नुकंपितचित्तइतिवास्तवोऽर्थः १० नददर्शअंतःप्रविष्टत्वात् ११ ॥ ॥ ८ ॥ ७ ९ ॥

पुमान्यतः स क्वाशान्नावर्त्ततेतद्दृष्टैव नूनं गतः नित्यमुक्तत्वादिति वास्तवोऽर्थः एवं मृत्युपर्यंतमखंडं विस्मौ वैरं यन्हत
वानंतदुचितमेव तस्याप्रतिद्वंद्वमहाबलपराक्रमस्य शूरोहंमानविजृंभितक्रोधानुबंधस्य १२ कथं नामासौ शूरशिरो
मणिः जीवन्नेव कांतं स्वद्वैरमुपेक्षितवानित्याशयेनाह वैरानुबंध एतावानामृत्योर्भवतिहि देहिनां देहे निगूढाभिमा
नवतां शूराणां तथा अहंमानेनोपबृंहितो मन्युश्च भवत्येव यतोऽज्ञानप्रभवः अज्ञाननिवृत्तेः प्राक् पौरुषत्यागो मांद्य

अपश्यन्निति होवाच मयाऽन्विष्टमिदं जगत् भ्रातृहा मे गतो नूनं यतो नावर्त्तते पुमान् १२
वैरानुबंध एतावानामृत्योरिह देहिनां अज्ञानप्रभवो मन्युरहंमानोपबृंहितः १३ पितामह
ह्लादपुत्रस्तेन द्विट्टान् द्विजवत्सलः स्वमायुर्द्विजलिंगेभ्यो देवेभ्योऽदात्स याचितः १४ भवा
नाचरितान् धर्मानास्थितो गृहमेधिभिः ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्त्तिभिः १५
तस्मात्त्वत्तो महीमीषद्वृणेहं वरदर्षभात् पदानि त्रीणि दैत्येंद्र संमितानि पदा मम १६ नान्य
तेकामये राजन् वदान्याज्जगदीश्वरात् नैनः प्राप्नोति वै विद्वान् यावदर्थपरिग्रहः १७ ॥

मेवेत्यर्थः १३ न देवं पूर्वजान् स्तुत्वात त्पितरं स्तौति पितेति द्विजवेषधारिणो महैरिणो देवा एते ननु द्विजाइ
तितद्विद्वानपि स याचितः सन् स्वीयमायुर्देवेभ्यो ददौ १४ १५ मम पदा संमितानीति त्रिविक्रमपदाभिप्राये
णनचानृतवादः तत्रापि स्वपदत्वानपगमात् १६ यावदर्थमेव प्रतिग्रहो यस्य सः १७ ॥ ॥

१२

भा०अ० २६ २७ २८ २९ अंगहेराजन् ३० ३१ ३२ ३३ एवंतामनुधावन् हरः सरित्सरः सुशैलादिषुचसन्निहितोवभू।

३७

सातमायांतमालोक्यविवस्त्राव्रीडिताभृशम् निलीयमानावृक्षेषुहसंतीनान्वतिष्ठत २६
तामन्वगच्छद्भगवान्भवःप्रमुषितेंद्रियः कामस्यचवशंनीतःकरेणुमिवयूथपः २७ सोऽनु
व्रज्यातिवेगेनगृहीत्वाऽनिच्छतींस्त्रियं केशबंधेउपानीयबाहुभ्यांपरिषस्वजे २८ सोपगू
ढाभगवताकरिणाकरिणीयथा इतस्ततःप्रसर्पंतीविप्रकीर्णशिरोरुहा २९ आत्मानं
मोचयित्वांगसुरर्षभभुजांतरात् प्राद्रवत्साप्टथुश्रोणीमायादेवविनिर्मिता ३० तस्यासौपद
वींरुद्रोविष्णोरद्भुतकर्म्मणः प्रत्यपद्यतकामेनवैरिणेवविनिर्ज्जितः ३१ तस्यानुधावतो
रेतश्चस्कंदामोघरेतसः शुष्मिणोयूथपस्येववासितामनुधावतः ३२ यत्रयत्रापतन्मह्यांरे
तस्तस्यमहात्मनः तानिरूप्यस्यहेम्नश्चक्षेत्राण्यासन्महीपते ३३ सरित्सरस्सुशैलेषुवनेषू
पवनेषुच यत्रक्वचासन्नृषयस्तत्रसंनिहितोहरः ३४ स्कन्नेरेतसिसोऽपश्यदात्मानं।
देवमायया जडीकृतंनृपश्रेष्ठसंन्यवर्त्ततकश्मलात् ३५ अथावगतमाहात्म्यआत्मनोज
गदात्मनः अपरिज्ञेयवीर्यस्यनमेनेतदुहाद्भुतं ३६ तममविक्लवमव्रीडमालक्ष्यमधुसूदनः रामः
उवाचपरमप्रीतोविभ्रत्स्वांपौरुषींतनुं ३७॥ १व ३४ तदुहदेवमाययाजडीकरणं ३५ ३६ ३७ ३७

रिक्षु भ्रमतः कंदुकस्य चापलैश्चांचल्यैः भृशं प्रोद्विग्नतारे आयते लोले चंचले लोचने यस्याः स्वकर्णाभ्यां विभ्राजिते ये कुंडले ताभ्यामुल्लसंतौ कपोलौ ताभ्यां नीलालकैश्च मंडितमाननं यस्याः २० संनह्यतीं वध्नतीं जगद्विमोहयंतीं २१ तां वीक्ष्य देवः श्रीरुद्रः आत्मानमंतिके स्थितामुमां स्वगणांश्च न वेद कथंभूतः इति एवंभूतया कंदुकलीलया या ईषद्व्रीडा तया।

दिक्षु भ्रमत्कंदुकचापलैर्भृशं प्रोद्विग्नतारायतलोललोचनां स्वकर्णविभ्राजितकुंडलो
ल्लसत्कपोलनीलालकमंडिताननां २० श्लथद्दुकूलं कबरीं च विच्युतां संनह्यतीं वामक
रेण वल्गुना विनिघ्नतीं चान्यकरेण कंदुकं विमोहयंतीं जगदात्ममायया २१ तां वीक्ष्य दे
व इति कंदुकलीलयेषद्व्रीडास्फुटस्मितविसृष्टकटाक्षमुष्टः स्त्रीप्रेक्षणप्रतिसमीक्षण
विह्वलात्मा नात्मानमंतिक उमां स्वगणांश्च वेद २२ तस्याः कराग्रात्स तु कंदुको यदा गतो विदू
रं तमनुव्रजत्स्त्रियाः वासः ससूत्रं लघु मारुतोऽहरत् भवस्य देवस्य किलानुपश्यतः २३
एवं तां रुचिरापांगीं दर्शनीयां मनोरमां दृष्ट्वा तस्यां मनश्चक्रे विषज्जंत्यां भवः किल २४
तयाऽपहृतविज्ञानस्तत्कृतस्मरविह्वलः भवान्या अपि पश्यंत्या गतह्रीस्तत्पदं ययौ २५

आस्फुटं स्मितं तेन सह विसृष्टो यः कटाक्षः तेन मुष्टो वंचितः अत एव स्वयं यत्स्त्रियाः प्रेक्षणं तया च प्रतिसमीक्षणं ताभ्यां विह्वल आत्मा मनो यस्य सः २२ कंदुकमनुव्रजंत्याः स्त्रियाः लघु सूक्ष्मं वासः ससूत्रं कांचीसहितं २३ विषज्जं-

१३ १४ सुरकार्याणियोविद्वेषेणभविष्यंतीतिपश्यता अयंभावः अवश्यंतावदुन्मत्तान्दैत्यान्वंचयित्वादेवेभ्योऽमृतंदे
यंनचैवंवेषमंतरूपांतरेणकर्तुमुचितं अतोवंचनमोहनादिसारंकामिनीरूपंमयाधृतमिति १५ तद्रूपंदर्शयिष्यामि
संकल्पप्रभवः कामः तस्योदयोयस्मात् १६ १७ विचित्राणिपुष्पाणि अरुणाः पल्लवाश्चयेषांतेद्रुमायस्मिन्लसत्

येनसंमोहितादैत्याः पायिताश्चामृतंसुराः तद्दिदृक्षवआयाताः परंकौतूहलंहिनः १३ श्रीशु
कउवाच एवमभ्यर्थितोविष्णुर्भगवान्शूलपाणिना प्रहस्यभावगंभीरंगिरिशंप्रत्यभाषत
१४ श्रीभगवानुवाच कौतूहलाययदैत्यानांयोषिद्वेषोमयाकृतः पश्यतासुरकार्या
णिगतेपीयूषभाजने १५ तत्तेऽहंदर्शयिष्यामिदिदृक्षोःसुरसत्तम कामिनांबहुमंतं।
संकल्पप्रभवोदयं १६ श्रीशुकउवाच इतिब्रुवाणोभगवांस्तत्रैवांतरधीयत सर्वतश्चा
रयंश्चक्षुर्भवआस्तेसहोमया १७ ततोददर्शोपवनेवरस्त्रियंविचित्रपुष्पारुणपल्लवद्रुमे।
विक्रीडतींकंदुकलीलयालसद्दुकूलपर्यस्तनितंबमेखलाम् १८ आवर्त्तनोद्वर्त्तनकंपित
स्तनप्रकृष्टहारोरुभरैःपदेपदेप्रभज्यमानामिवमध्यतश्चलत्पदप्रवालंनयतींततस्ततः १९
दुकूलेनपर्यस्तेपरिवृत्तेनितंबेमेखलायस्याः तां १८ उत्पतत्पतत्कंदुकलीलावशेनये आवर्त्तनोद्वर्त्तनेनमनोन्न
मनेताभ्यांकंपितयोःस्तनयोःप्रकृष्टहाराणांचोरुभारैःप्रतिपदंमध्येप्रभज्यमानामिवचलत्पदमेवप्रवालवत्कोम

अतएव त्वां बहुधा वर्णयंति न त्वतत्त्वं केपि न जानंतीत्याह द्वाभ्यां त्वां ब्रह्म वेदांतिनोऽवयंति मन्यंते त्वामेव धर्मं मीमांसका मन्यंते प्रकृतिपुरुषयोः परं पुमांसं सांख्याः विमलोत्कर्षिणी ज्ञानक्रियायोगाभ्यां स्थिता सत्या ईशाना अनु ग्राहा चेत्येवं नवशक्तियुतं परं पांचरात्राः महापुरुषं पातंजलाः ९ परायुर्ब्रह्मा सत्वसर्गाः सत्वगुणेन सृष्टा अपि येन त्वया विरचितं विश्वमपि खलु तत्त्वतो न जानंति किंपुनस्त्वा हे ईश अभद्रा राजसं तामसं च वृत्तं उत्पत्तिश्च येषां ते न जा

त्वां ब्रह्म केचिदवयंत्युत धर्ममेक एके परं सदसतोः पुरुषं परेशं अन्येऽवयंति नवशक्तियुतं परं त्वां केचिन्महापुरुषमव्ययमात्मतंत्रं ९ नाहं परायुर्ऋषयो न मरीचिमुख्या जानंति यद्विरचितं खलु सत्वसर्गाः यन्मायया मुषितचेतस ईश दैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः १० सत्वं समीहितमदः स्थितिजन्मनाशं भूतेहितं च जगतो भवबंधमोक्षौ वायुर्यथा विशति खं च चराचराख्यं सर्वं तदात्मकतयाऽवगमोऽवरुंत्से ११ अवतारा मया दृष्टा रममाणस्य ते गुणैः सोहं तत्द्रष्टुमिच्छामि यत्ते योषिद्वपुर्धृतं १२॥

नंतीति किमुत वक्तव्यं १० किंतु त्वं तत् सर्वं जानासीत्याह सत्वं सर्वं अवरुंत्से व्याप्तो विजानासि किं तत्सर्वं समीहितं स्वकृतं अदः स्थितिजन्मनाशं अमुष्य जगतो जन्मादि भूतानामीहितं च जगतो भवबंधमोक्षौ च व्याप्तौ दृष्टांतः चराचराख्यं देहजातं खं च यथा वायुराविशति तथा कथमवरुंत्से तदात्मकतया तस्य सर्वस्यात्मतयेत्यर्थः आत्मत्वे हेतुः अवगमः ज्ञानरूपइति ११ एवं स्तुत्वा प्रस्तुतं विज्ञापयति अवताराइति द्वाभ्याम् १२ ॥

१२
भा॰ श्री
१४

तव एवंभूतत्वे मुमुक्षूणामाचारः प्रमाणमित्याह तवैवेति उभयतः इहामुत्र च संगं त्यक्त्वा ६ ननु ब्रह्मैव चेदहं तर्हि सं
संगोदासीनस्य मम चरणांभोजोपासनया किं तेषां तत्राह त्वमिति ब्रह्मत्वेपि त्वं नात्यंतमुदासीनः किंतु विश्वस्य प्रपं
चस्योदयादीनां हेतुः तदुपाधीनामात्मनां जीवानामीश्वरश्च तत्तत्फलदाता तर्हि किं राजादिवत्कयाप्यपेक्षया सेवके
भ्यः फलं ददामि नहि नहि अनपेक्ष एव त्वं तर्हि किमीश्वरत्वेन तत्राह तैरात्मभिः तत्फलदानार्थमपेक्ष्यत इति त
दपेक्षस्तस्य भावस्तदपेक्षता तया अनपेक्षत्वमेव दर्शयितुं तदीयं ब्रह्मत्वं विशिनष्टि पूर्णं अमृतं च सुखरूपं विष

तवैव चरणांभोजं श्रेयस्कामा निराशिषः विसृज्योभयतः संगं मुनयः समुपासते ६ त्वं
ब्रह्म पूर्णममृतं विगुणं विशोकमानंदमात्रमविकारमनन्यदन्यत् विश्वस्य हेतुरुदय
स्थितिसंयमानामात्मेश्वरश्च तदपेक्षतयाऽनपेक्षः ७ एकस्त्वमेव सदसत् द्वयमद्वयं
स्वर्णं कृताकृतमिवेह न वस्तुभेदः अज्ञानतस्त्वयि जनैर्विहितो विकल्पो यस्माद्गुणैर्व्या
तिकरो निरुपाधिकस्य ८॥ दुःखसुखवैलक्षण्यार्थमाह अविकारं नित्यं आनंदमात्रं च कुतः विशोकं त
त्कुतः विगुणं किंच अनन्यत् न विद्यते अन्यद्यस्मात् ब्रह्मव्यतिरिक्ताभावादपि निरपेक्षस्त्वमित्यर्थः तर्हि सर्वात्मकत्वे
तत्तद्दुःखप्रसंगो दुर्वारः तत्राह अन्यत् सर्वतो व्यतिरिक्तं च कारणात्मात्त नह्येवंभूतसुखात्मकब्रह्मस्वरूपस्य तवान्यापे
क्षास्ति अतः केवलं भक्तानुग्रहार्थमेव तवैश्वर्यं न स्वार्थमित्यर्थः ७ अन्यत्वमनन्यत्वं चैकस्य कुत इत्याशंक्य दृष्टांतेनोप
पादयति सदसत् कार्यकारणरूपं द्वयं अद्वयं च परमकारणत्वमेवैकः कृतं कुंडलादिरूपं द्वयं अकृतं च केवलमद्वयं स्व

द्वा दशेमोहिनीरूपविभ्रममालोकनोत्सुकम् भवंसंमोहयामासहरिःपुनरसांत्वयत् १ अमुह्यन्नसुराविष्णुमाय यानतरद्भुतं इतिवक्तुंमहादेवमोहोयमुपवर्ण्यते २ हरिःसोममपाययदितीदंनिशंम्यसयत्रास्तेतत्रतद्रूपंद्रष्टुंययाविस्त रेणान्वयः १।२ सोमयाउमयासह ३ त्वयिकिंचिन्नचाश्चर्यंवयंत्वाश्चर्यमानसाः इतिवक्ष्यन्महादेवस्तुष्टावहरि मष्टभिःत्वयिमहामायाविनिपरमेश्वरेनहि किंचि दघटितमिववयंतुपरमकौतूहलेनद्रष्टुमागताइतिवहु।

श्रीबादरायणिरुवाच वृषध्वजोनिशम्येदंयोषिद्रूपेणदानवान् मोहयित्वासुरगणा न्हरिःसोममपाययत् १ वृषमारुह्यगिरिशःसर्वभूतगणैर्वृतः सहदेव्याययौद्र। ष्टुंयत्रास्तेमधुसूदनः २ सभाजितोभगवतासादरंसोमयाभवः सूपविष्ठउवाचेदंप्र। तिपूज्यस्मयन्हरिं ३ श्रीमहादेवउवाच देवदेवजगद्व्यापिन्जगदीशजगन्मय। सर्वेषामपिभावानांत्वमात्माहेतुरीश्वरः ४ आद्यंतावस्ययन्मध्यमिदमन्यदहंवहिः यतोऽव्ययस्यनैतानितत्सत्यंब्रह्मविद्वान् ५॥ एधासंवोधयंस्तौति हेदेवदेवकुतोहंदेवानांदे वइतत आह हेजगद्व्यापिन् तत्कुतः हेजगन्मयतर्हिकिंप्रधानं नहेजगदीशततत्त्वकुतस्तत्राह सर्वेषामपित्वंहेतुः अतईश्वरः आत्मत्वाच्च नजडंप्रधानंत्वमित्यर्थः ४ ननुजगन्मयत्वोक्त्याजगतःउत्पत्यादिनाऽसत्यत्वेनजाड्येनच ममापिकिंतत्यात्वंब्रूषेनहिनहीत्याह आद्यंतौमध्यंचजगतोयतोब्रह्मणोभवंति अस्यचअव्ययस्यएतानिआ द्यंतमध्यानिनसंतियच्चब्रह्मइदंकारास्पदंदृश्यं अहंकारास्पदंद्रष्टृचंवहिर्भोग्यं अन्यच्चभोक्तृचतत्सत्यंचचिद्रू

११
भा॰अ॰
३५

५१ ५२ ५३ ५४ अनुचरैरनुगीयमानाइत्यर्थः उपगीयमानैरनुचरैः सहेतिवा ५५ ५६ अविनष्टाअवयवायेषां

गंधर्वमुख्यौ जगतुर्विश्वावसुपरावसू देवदुंदुभयो नेदुर्नर्तक्यो ननृतुर्मुदा ५१ अन्ये
प्येवंप्रति द्वंद्वान्वाय्वग्निवरुणादयः सूदयामासुरस्त्रौघैर्मृगान्केसरिणोयथा ५२ ब्र
ह्मणाप्रेषितोदेवान्देवर्षिर्नारदोनृप वारयामास विबुधान्दृष्ट्वादानवसंक्षयं ५३ ना
रदउवाच भवद्भिरमृतंप्राप्तंनारायणभुजाश्रयैः श्रियासमेधिताः सर्वेउपारमत विग्र
हात् ५४ श्रीशुकउवाच संयम्यमन्युसंरंभंमानयंतोमुनेर्वचः गीयमानाअनुचरैर्ययुः
सर्वेत्रिविष्टपं ५५ येऽवशिष्टारणेतस्मिन्नारदानुमतेनते बलिंविपन्नमादाय अस्त
गिरिमुपागमन् ५६ तत्राऽविनष्टावयवान्विद्यमानशिरोधरान् उशनाजीवयामास
संजीवन्यास्वविद्यया ५७ बलिश्चोशनसास्पृष्टः प्रत्यापन्नेंद्रियस्मृतिः पराजितो
पिनाखिद्यत्लोकतत्वविचक्षणः ५८ ॥ ॥इतिश्रीभागवतेमहापुराणेअ
ष्टमस्कंधेदेवासुरसंग्रामेएकादशोऽध्यायः ११॥ ॥ ५९ षांविद्यमानाः शिरोधरायेषांतान् ५७ प्र
त्यापन्नानिपुनः प्राप्तानींद्रियाणिस्मृतिश्चयेनसः ५८ ॥इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांए
कादशोऽध्यायः ११॥

राम
३५

द्वादशे मोहिनीरूपविभ्रमालोकनोत्सुकम् भवं संमोहयामास हरिः पुनरसांत्वयत् १ अमुह्यन्नसुरा विष्णुमायया ननु तदद्भुतं इति वक्तुं महादेवमोहोयमुपवर्ण्यते २ हरिः सोमममपाययदिती दं निशम्य स यत्रास्ते तत्र तद्रूपं द्रष्टुं ययावित्युत्तरेणान्वयः १।२ सोमया उमया सह ३ त्वयि किंचिन्न चाश्चर्यं दिव्यं त्वाश्चर्यमानसाः इति वक्ष्यन्महादेवस्तुष्टाव हरिमष्टभिः त्वयि महामायाविनि परमेश्वरे नहि किंचिदघटितमिव वयं तु परमकौतूहलेन द्रष्टुमागता इति वक्तुं।

श्रीबादरायणिरुवाच वृषध्वजो निशम्येदं योषिद्रूपेण दानवान् मोहयित्वा सुरगणान् हरिः सोमममपाययत् १ वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः सह देव्या ययौ द्रष्टुं यत्रास्ते मधुसूदनः २ सभाजितो भगवता सादरं सोमया भवः सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन् हरिं ३ श्रीमहादेव उवाच देवदेव जगद्व्यापिन् जगदीश जगन्मय। सर्वेषामपि भावानां त्वमात्मा हेतुरीश्वरः ४ आद्यंतावस्य यन्मध्यमिदमन्यदहं बहिः यतोऽव्ययस्य नैतानि तत्सत्यं ब्रह्म विद्वान् ५॥ ९धा संबोधयं स्तौति हे देवदेव कुतोऽहं देवानां देवस्तत्र आह हे जगद्व्यापिन् तत्कुतः हे जगन्मय तर्हि किं प्रधानं न हे जगदीश तत्त्व कुतस्तत्राह सर्वेषामपि त्वं हेतुः अतईश्वरः आत्मत्वाच्च न जडं प्रधानं त्वमित्यर्थः ४ ननु जगन्मयत्वोक्त्या जगतः उत्पत्त्यादिना ऽसत्यत्वेन जाड्येन च ममापि किं तया त्वं ब्रूषे नहि नहीत्याह आद्यंतौ मध्यं च जगतो यतो ब्रह्मणो भवंति अस्य च अव्ययस्य एतानि आद्यंतमध्यानि न संति यच्च ब्रह्म इदं कारास्पदं दृश्यं अहंकारास्पदं द्रष्टृ च बहिर्भोग्यं अन्यच्च भोक्तृ च तत्तत्त्वं च चिद्रू

१४ १५ १६ १७ १८ नमुचिर्बलः पाकश्चेतित्रय आजग्मुः १९ २० त्रयाणां पृथग्विक्रमानाह हरीनिति

समिंहवाह आसाद्य गदामुद्यम्य रंहसा जत्रावताडयच्छक्रं गजं च सुमहाबलः १४ गदाप्रहारव्यथितो भृशं विह्वलितो गजः जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ १५ ततो रथो मातलिना हरिभिर्दशशतैर्वृतः आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः १६ तस्य तत्पूजयन्कर्म यंतुर्दानवसत्तमः शूलेन ज्वलता तं तु स्मयमानोऽहनन्मृधे १७ सेहे रुजं सुदुर्मर्षां सत्वमालम्ब्य मातलिः इंद्रो जंभस्य संक्रुद्धो वज्रेणापाहरच्छिरः १८ जंभं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः नमुचिश्च बलः पाकस्तत्रापेतुस्त्वरान्विताः १९ वचोभिः परुषैरिंद्रमर्दयंतोऽस्य मर्मसु शरैरवाकिरन्मेघा धाराभिरिव पर्वतं २० हरीन्दशशतान्याजौ हर्यश्वस्य बलः शरैः तावद्भिरर्दयामास युगपल्लघुहस्तवान् २१ शताभ्यां मातलिं पाको रथं सावयवं पृथक् सकृत्संधानमोक्षेण तदद्भुतमभूद्रणे २२ नमुचिः पंचदशभिः स्वर्णपुंखैर्महेषुभिः आहत्य व्यनदत्संख्ये सतोय इव तोयदः २३ ॥ ६

त्रिभिः हर्यश्वस्य इंद्रस्य तावद्भिः दशभिः शतैः २१ २२ आहत्य इंद्रं विध्वा ॥ २३ ॥ ॥ २३ ॥ ॥ २३ ॥

११

मा·प्र· प्रावृट्कालीनं सूर्यं २४ वणिक्पथाः वणिजः भिन्ना नौर्येषां ते भिन्ननावः इत्यर्थः २५ तुराषाडिंद्रः अश्वादिसहितो

३३

सर्वतः शरकूटेन शक्रं सरथसारथिं छादयामासुरसुराः प्रावृट्सूर्यमिवांबुदाः २४ ॥
अलक्षयंतस्तमतीवविह्वला विचुक्रुशुर्देवगणाः सहानुगाः अनायकाः शत्रुबलेन
निर्जिता वणिक्पथा भिन्ननवो यथार्णवे २५ ततस्तुराषाडिषुबद्धपंजराद्विनिर्गतः
साश्वरथध्वजाग्रणीः बभौ दिशः खं पृथिवीं विरोचयन्स्वतेजसा सूर्य इव क्षपात्यये २६
निरीक्ष्य पृतनां देवः परैरभ्यर्दितां रणे उदयच्छद्रिपुं हंतुं वज्रं वज्रधरो रुषा २७ स
तेनैवाष्टधारेण शिरसी बलपाकयोः ज्ञातीनां पश्यतां राजन् जहार जनयन् भयं २८
नमुचिस्तद्वधं दृष्ट्वा शोकामर्षरुषान्वितः जिघांसुरिंद्रं नृपते चकार परमोद्यमम् २९
अश्मसारमयं शूलं घंटावद्धेमभूषणं प्रगृह्याभ्यद्रवत्क्रुद्धो हतोऽसीति वितर्जयन्
प्राहिणोद्देवराजाय निनदन्मृगराडिव ३० तदापतद्गगनतले महाजवं विचिच्छिदे
हरिरिषुभिः सहस्रधा तमाहनन्नृपकुलिशेन कंधरे रुषान्वितस्त्रिदशपतिः शिरो हरन्

राम

३३

विनिर्गतः अग्रणीः सारथिः २६ २७ २८ शोकामर्षाभ्यां युक्तया रुषा क्रोधेनान्वितः सन् इंद्रं हंतुं परमोद्योगं च
कार २९ घंटावत् घंटाभिर्युक्तं ३० ३१ ॥ ॥

अतिवीर्यं वृत्रमभिनदिति ३२ ३३ तयापतत्रैः पक्षैः ३४ सारमयं वीर्याधिकं त्वाष्ट्रं तपः एव वृत्रः स येन वज्रेण

न तस्य हि त्वचमपि वज्र ऊर्जितो बिभेद यः सुरपतिनौजसेरितः तदद्भुतं परमति
वीर्यवृत्रभित्तिरस्कृतो नमुचिशिरोधरत्वचा ३२ तस्मादिंद्रोऽबिभेच्छत्रोर्वज्रः प्र
तिहतो यतः किमिदं दैवयोगेन भूतं लोकविमोहनं ३३ येन मे पूर्वमद्रीणां पक्षच्छेदः
प्रजात्यये कृतो निविशतां भारैः पतत्रैः पततां भुवि ३४ तपःसारमयं त्वाष्ट्रं वृत्रो येन
विपाटितः अन्ये चापि बलोपेताः सर्वास्त्रैरक्षतत्वचः ३५ सोऽयं प्रतिहतो वज्रो मया मु
क्तोऽसुरेऽल्पके नाहं तदाददे दंडं ब्रह्मतेजोऽप्यकारणं ३६ इति शक्रं विषीदंतमाह वा
गशरीरिणी नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः ३७ मयाऽस्मै यद्वरो दत्तो मृत्युर्नै
वार्द्रशुष्कयोः अतोऽन्यश्चिंतनीयस्ते उपायो मघवन्रिपोः ३८ तां दैवीं गिरमाकर्ण्य
मघवान्सुसमाहितः ध्यायन्फेनमथापश्यदुपायमुभयात्मकं ३९ न शुष्केण न चा
र्द्रेण जहार नमुचेः शिरः तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन्विभुं ४०॥

डं लगुडतुल्यं ब्रह्मतेजः दधीचेः सामर्थ्यं ३६ ३७ आर्द्रशुष्काभ्यां मृत्युर्नैवेति ३८ ३९ उभयात्मकत्वमेवाह न शु
ष्केणन चार्द्रेण फेनेन तथा च श्रुतिः अपां फेनेन नमुचेः शिर इंद्रोदवर्तय इति ४०

॥ मया विपाटितः ३५ दं

११
भा॰अ॰
३७

४१ ४२ ४३ ४४ अनुचरैरनुगीयमानादित्यर्थः उपगीयमानैरनुचरैः सहेति वा ४५ ४६ अविनष्टा अवयवा ये

गंधर्वमुख्यौ जगतुर्विश्वावसुपरावसू देवदुंदुभयो नेदुर्नर्तको ननृतुर्मुदा ४१ अन्ये प्येवं प्रति द्वंद्वान् वाय्वग्निवरुणादयः सूदयामासुरस्त्रौघैर्मृगान्केसरिणो यथा ४२ ब्रह्मणा प्रेषितो देवान् देवर्षिर्नारदो नृप वारयामास विबुधान् दृष्ट्वा दानवसंक्षयं ४३ नारद उवाच भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः श्रिया समेधिताः सर्वे उपारमत विग्रहात् ४४ श्रीशुक उवाच संयम्य मन्युसंरंभं मानयंतो मुनेर्वचः गीयमाना अनुचरैर्ययुः सर्वे त्रिविष्टपं ४५ येऽवशिष्टा रणे तस्मिन्नारदानुमतेन ते बलिं विपन्नमादाय अस्तं गिरिमुपागमन् ४६ तत्राऽविनष्टावयवान् विद्यमानशिरोधरान् उशना जीवयामास संजीवन्या स्वविद्यया ४७ बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेंद्रियस्मृतिः पराजितोपि नाखिद्यत लोकतत्त्वविचक्षणः ४८ ॥ ॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे देवासुरसंग्रामे एकादशोऽध्यायः ११ ॥ ४७ यां विद्यमानाः शिरोधरा येषां तान् ४७ प्रत्यापन्नानि पुनः प्राप्तानींद्रियाणि स्मृतिश्च येन सः ४८ ॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे टीकायां एकादशोऽध्यायः ११ ॥

राम
३७

॥ ३२ नदीं विशिनष्टि विण्मूत्रेति ३३ पशुचर्यां स्वेच्छाचारं ३४ अतीर्थे विहितादन्यत्र विध्यंतीति प्राण

तस्यां निरयपरिखाभूतायां नद्यां यादोगणैरितस्ततो भक्ष्यमाणा आत्मना न वियु
ज्यमानाः प्राणा ऽसुभिरुह्यमानाः स्वाघेन कर्मपाकमनुस्मरंत उपतप्यंते ॥ ३२ विण्मूत्रपू
यशोणितकेशनखास्थिमेदोमांसवसावाहिन्यामुपतप्यंते ३३ ये त्विह वै वृषलीप
तयो नष्टशौचाचारनियमास्त्यक्तलज्जाः पशुचर्यां चरंति ते चापि प्रेत्य पूयविण्मूत्र
श्लेष्मलापूर्णार्णवे निपतंति तदेवातिबीभत्सितमश्नंति ३४ ये त्विह वै श्वगर्दभ
पतयो ब्राह्मणादयो मृगयाविहारा अतीर्थे च मृगान्निघ्नंति तानपि सांपरेतान् लक्ष्यभूतान्य
मपुरुषा इषुभिर्विध्यंति ३५ ये त्विह वै दांभिका दंभयज्ञेषु पशून्विशसंति तानमुष्मिंल्लो
के वैशसे नरके पतितान्निरयपतयो यातयित्वा विशसंति ३६ यस्त्विह वै सवर्णां भार्यां
द्विजो रतः पाययति काममोहितस्तं पापकृतममुत्र रेतःकुल्यायां पातयित्वा रेतः संपाययंति
निरोधो दर्शितः ३५ निरयपतयो यमपुरुषाः ३६ लालाभक्षमाह यस्त्विहेति रेतःपानं कारयंति ३७॥ २६.२७॥

यत्किंचनभक्षादिकंउपनतंप्राप्तंतदसंविभज्यननिर्मिताःपंचयज्ञायेनअतएववायसैःसंस्तुतःसमत्वेनवर्णितः २६ कृमि
भोजनःकृमीनेवभुंजानःयावत् तद्यावंतियोजनानितत्कृमिकुंडंतावंतिवर्षाणियावद्यानत्पातकमित्यर्थः अप्रत्तमसं

यस्त्विहवाअसंविभज्याश्नातियत्किंचनोपनतमनिर्मितपंचयज्ञोवायससंस्तुतःसपरत्र
कृमिभोजनेनरकाधमेनिपतति तत्रशतसहस्रयोजनेकृमिकुंडेकृमिभूतःस्वयंकृमि॰
भिरेवभक्ष्यमाणःकृमिभोजनोयावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानंयातयात्ते २७ यस्त्वि
हवैस्तेयेनबलाद्वाहिरण्यरत्नादीनिब्राह्मणस्यवापहरत्यन्यस्यवाऽनापदिपुरुषस्तममु॰
त्रराजन्यमपुरुषाअयस्मयैरग्निपिंडैःसंदंशैस्त्वचिनिष्कुषंति २८ यस्त्विहवाअगम्यांस्त्रियम
गम्यंवापुरुषंयोषिदभिगच्छतितावमुत्रकशयाताडयंतस्तिग्मयासूर्म्यालोहमय्यापुरुष
मालिंगयंतिस्त्रियंचपुरुषरूपयासूर्म्या २९ यस्त्विहवैसर्वाऽभिगमस्तममुत्रनिरयेवर्त्त
मानंवज्रकंटकशाल्मलीमारोप्यनिष्कर्षंति ३० येत्विहवैराजन्याराजपुरुषावाअपाखं
डानूधर्मसेतून्भिंदंतितेसंपरेत्यवैतरण्यांनिपतंतिभिन्नमर्यादा ३१ ॥ ॥

विभक्तंअप्रहुतंबलीनितयास्तःननिर्वेशमकृतप्रायश्चित्तं २७ निष्कुषंतिछिंदंति २८ तिग्मयातप्तयासूर्म्याप्रतिमया
२९ सर्वाभिगमःपश्वाद्युपगंता ३० अपाखंडाःसत्कुलीनाःसंतःद्वितीयांतपाठेसेतुविशेषणं॥ ३१ ॥ॱ

२१ स्वधर्महा स्वधर्मत्यागी २२ २३ स्वनयनरुदनकश्मलं मोहमुपगतो भवति अदृष्टदोषास्तेनोपरुद्धाः संतोयथाकश्म
लमुपगतास्तद्वत् २३ ईश्वरेणोपकल्पिता मनुष्यरक्तपानादिलक्षणा वृत्तिर्येषां मत्कुणादीनां न विविक्ताविज्ञाता परा॥

यस्त्विह वै निजवेदपथादनापद्यपगतः पाखंडं चोपगतस्तमसिपत्रवनं प्रवेश्य कशया प्रहरंति।
२२ तत्र हासावितस्ततो धावमान उभयतो धारैस्तालवनासिपत्रैश्छिद्यमानसर्वांगो हा हतोऽ
स्मीति परमया वेदनया मूर्छितः पदे पदे निपतति स्वधर्महा पाखंडानुगतं फलं भुंक्ते २२ यस्त्वि
ह वै राजा राजपुरुषो वा अदंड्ये दंडं प्रणयति ब्राह्मणे वा शरीरदंडं स पापीयान्नरकेऽमुत्र सूकर
मुखे निपतति २३ तत्रातिबलैर्विनिष्पिष्यमाणावयवो यथैवेहेक्षुदंड आर्तस्वरेण स्वनयन्
क्वचिन्मूर्छितः कश्मलमुपगतो यथैवेहादृष्टदोषा उपरुद्धाः २४ यस्त्विह वै भूतानामीश्वरक
ल्पितवृत्तीनामविविक्तपरव्यथानां स्वयं पुरुषोपकल्पितवृत्तिर्विविक्तपरव्यथो व्यथामाचरति स
परत्रांधकूपे तदभिद्रोहेण निपतति २५ तत्र हासौ तैर्जंतुभिः पशुमृगपक्षिसरीसृपैर्मशकयूका
मत्कुणमक्षिकादिभिर्ये के चाभिद्रुग्धास्तैः सर्वतोऽभिद्रुह्यमाणस्तमसि विहतनिद्रानिर्वृतिरलब्धा
वस्थानः परिक्रामति यथा कुशरीरे जीवः २६॥ व्यथायै अविवेकिभिस्तेषां पुरुषेण ब्राह्मणादिभावेन विधिनि
षेधपूर्वकं कल्पिता वृत्तिर्यस्य विविक्ता परव्यथा येन विवेकिना २५ अभिद्रुग्धाः हिंसिताः विहता निद्रारूपा निर्वृतिर्यस्य स नल

॥१५ एतत्‌शरीरमहमितिइदंधनादिममेतिमत्वास्वयंचकुटुंबमेवपुष्णातितेनाशुभेन १६ रुरवोभूत्वेति
कर्माण्येवतथायरिणामंप्राप्येत्यर्थः १७ अतिक्रूरस्यभारशृंगाख्यस्यसत्वस्यापदेशःसंज्ञायस्यरुरुत्वेननिमित्तेन
यथावनस्पतिर्दृश्यमानमूलस्तस्मादंधतामिस्रंतमुपदिशंति १५ यस्त्विहवाएतता
दहमितिममेदमितिभूतद्रोहेणकेवलंस्वकुटुंबमेवानुदिनंप्रपुष्णातिसतदिहविहाय
स्वयमेवतदशुभेनरौरवेनिपतति १६ येत्विहयथैवामुनाविहिंसिताजंतवःपरत्रयम
यातनामुपगतंतएवरुरवोभूत्वातथातमेवविहिंसंतितस्माद्रौरवमित्याहुः १७ रुरु
रितिसर्पादतिक्रूरसत्वापदेशःएवमेवमहारौरवोयत्रनिपतितंपुरुषंक्रव्यादानाम
रुरवस्तंक्रव्येणघातयंतियःकेवलंदेहंभरः १८ यस्त्विहवाउग्रःपशून्पक्षिणोवाप्रा
णतउपरंधयतितमपकरुणंपुरुषादैरपिविगर्हितममुत्रयमानुचराःकुंभीपाकेतप्ततैले
उपरंधयंति १९ यस्त्विहपितृविप्रब्रह्मध्रुक्सकालसूत्रसंज्ञकेनरकेऽयुतयोजनपरिमंडले
ताम्रमयेतप्तखलेउपर्यधस्तादग्न्यर्काभ्यामतितप्यमानेऽभिनिवेशितःक्षुत्पिपासाभ्यांचद
ह्यमानांतर्बहिःशरीरआस्तेशेतेचेष्टतेऽवतिष्ठतिपरिधावतिचयावंतिपशुरोमाणितावद्वर्षे
सहस्राणि २०॥ मांसार्थमित्यर्थः १८ प्राणतःसजीवान्‌उपरंधयतिपचतिअपकरुणंनिष्कृपं १९ खलेस

भा॰ टी॰ ५ ॥१०॥

६ ७ ८ ६ मतांतरेणाष्टाविंशतिमाहकिंत्वेति १० पापभेदेनतत्तन्नरकयातनाभेदंप्रपंचयतियस्त्वित्यादिना ११ यात्यमानः

यत्रहवावभगवान्पितृराजोवैवस्वतःस्वविषयंप्रापितेषुस्वपुरुषैर्जंतुषुसंपरेतेषुयथा
कर्मावद्यंदोषमेवानुलंघितभगवच्छासनःसगणोदमंधारयति ६ तत्रहैकेनरकानेक
विंशतिंगणयंति ७ अथतांस्तेराजन्नामरूपलक्षणतोऽनुक्रमिष्यामः ८ तामिस्रोंऽध
तामिस्रोरौरवोमहारौरवःकुंभीपाकःकालसूत्रमसिपत्रवनंसूकरमुखमंधकूपःकृमि
भोजनःसंदंशस्तप्तसूर्मिर्वज्रकंटकशाल्मलीवैतरणीपूयोदःप्राणरोधोविशसनंलाला
भक्षःसारमेयादनमवीचिरयःपानमिति ६ किंचक्षारकर्दमोरक्षोगणभोजनःशूलप्रोतो
दंदशूकोऽवटनिरोधनःपर्यावर्तनःसूचीमुखमित्यष्टाविंशतिनरकाविविधयातनाभूम
यः १० तत्रयस्तुपरवित्तापत्यकलत्राण्यपहरतिसहिकालपाशबद्धोयमपुरुषैरतिभ
यानकैस्तामिस्रेनरकेबलान्निपात्यते ११ अनशनानुदपानदंडताडनसंतर्जनादिभिर्या
तनाभिर्यात्यमानोजंतुर्यत्रकश्मलमासादितएकदैवमूर्छामुपयातितामिस्रप्राये १२ ए
वमेवांधतामिस्रेयस्तुवंचयित्वापुरुषंदारादीनुपभुंक्ते १३ यत्रशरीरीनिपात्यमानोयात
नास्थोवेदनयानष्टमतिर्नष्टदृष्टिश्चभवति १४॥ पीड्यमानःएकदैवतदैव १२ पुरुषंपतिंवंचयित्वा १३ १४

रामः
८१

षड्विंशे तु ततोऽधस्तान्नरकस्थितिरुच्यते पापिनो यत्र दह्यंते यमदूतैर्यथायथं १ पुंसो गतय उच्चावचा विसदृशा इति भो
गवैचित्र्यमुक्तं तदेतत्कुत इति पृच्छति महर्ष इति कर्मणः समानत्वेऽपि श्रद्धावैचित्र्यात्फलवैचित्र्यमिति परिहरति त्रिगु
णत्वादिति सात्विक्याः श्रद्धया कर्तुः सुखित्वं राजस्याः सुखित्वं दुःखित्वं च तामस्याः दुःखित्वं मूढत्वं च तत्रापि तासां श्रद्धानां
तारतम्यात्सुखादितारतम्यं सर्वेषामित्यर्थः १ प्रतिषिद्धं प्रतिषेधः स एव लक्षणं प्रमाणं यस्य तस्य अधर्मस्य कर्तुः श्रद्धावै

राजोवाच महर्ष एतद्वैचित्र्यं लोकस्य कथमिति १ ऋषिरुवाच त्रिगुणत्वात्कर्तुः श्रद्धया·
कर्म्मगतयः पृथग्विधाः सर्वा एव सर्वस्य तारतम्येन भवंति २ अथेदानीं प्रतिषिद्धलक्षण
स्याधर्मस्य तथैव कर्तुः श्रद्धाया वैसादृश्यात्कर्मफलं विसदृशं भवति या ह्यनाद्यविद्याकृत
कामानां तत्परिणामलक्षणाः सृतयः सहस्रशः प्रवृत्तास्तासां प्राचुर्येणानुवर्णयिष्यामः ३
राजोवाच नरका नाम भगवन्किं देशविशेषा अथवा बहिस्त्रिलोक्या आहोस्विदंतराल इति ४
ऋषिरुवाच अंतराल एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्ताद्भूमेरुपरिष्टाच्च जलाद्यस्या
मग्निष्वात्तादयः पितृगणा दिशि स्वानां गोत्राणां परमेण समाधिना सत्या एवाशिष आशासा
नानिवसंति ५

सादृश्यं तमसस्तारतम्यात्तत्रापि कारणं दर्शयन्नाह अनाद्यविद्याकृतानां कामानां ये सृतयो न
रकाः तासां अथेदानीं ताः प्राचुर्येणानुवर्णयिष्याम इत्यन्वयः २ किं भूमावेव देशविशेषाः त्रिलोक्याः ब्रह्मांडाद्बहिर्वा आ
वरणेषु मध्ये अंतराले वा भूमिव्यतिरिक्ते ३ ४ कर्म्मदोषमनतिक्रम्य दोषमेव दमं पापफलं दंडं करोति न उल्लंघितं भग

किंच आस्तां तस्य कृपयावपुर्द्धारणं तद्भजनं वा तन्नामौदार्यमेवाति चित्रमित्याह यस्य नाम यदि पतितो पि महापातक्यपि आ
नुकीर्त्तयेत तर्हि स शुद्ध्येदिति किमु वक्तव्यं यतोऽसावेव नृणामशेषमंहः सद्यो हंति कथमनुकीर्त्तयेत अन्यतः श्रुतं वा आ
कस्माद्वा आर्त्तो वा सन् प्रलंभनाद्वा परिहासात् तस्माच्छेषाद्दन्यं ११ गिर्यादिसहितं भूगोलं सत्वानि प्राणिनः सहस्रजिह्वो

यन्नाम श्रुतमनुकीर्त्तयेदकस्मादार्त्तो वा यदि पतितः प्रलंभनाद्वा हंत्यंहः सपदि नृणामशेष
मन्यं कं शेषाद्भगवत आश्रयेन्मुमुक्षुः ११ मूर्द्धन्यर्पितमणुवत्सहस्रमूर्द्ध्नो भूगोलं सगिरिसरित्स
मुद्रसत्वं आनंत्यादनिमितविक्रमस्य भूम्नः को वीर्याण्यधिगणयेत्सहस्रजिह्वः १२ एवं प्रभा
वो भगवाननंतो दुरंतवीर्योरुगुणानुभावः मूले रसायाः स्थित आत्मतंत्रो यो लीलया क्ष्मां स्थि
तये बिभर्त्ति १३ एता ह्येवेह नृभिरुपगंतव्या गतयो यथाकर्म विनिर्मिता यथोपदेशमनुव
र्णिताः कामान्कामयमानैः १४ एतावतीर्हि राजन्पुंसः प्रवृत्तिलक्षणस्य धर्मस्य विपाकगतयः
उच्चावचा विसदृशा यथाप्रश्नं व्याचख्ये किमन्यत्कथयाम इति १५ ॥ इति श्रीभागवते महा
पुराणे पंचमस्कंधे भूविवरविध्युपवर्णनं नाम पञ्चविंशतितमोऽध्यायः २५॥

दुरंतं वीर्यं बलं यस्य उरवो गुणा अनुभावश्च यस्य स तथा स च रसायाः भूमेर्मूले स्थितः तिष्ठति आत्मतंत्रः आत्माधारः १३
उक्तस्य लोकविभागस्योपयोगं वदन्नुपसंहरति एता ह्येवेह कामान्कामयमानैर्नृभिरुपगंतव्या इत्यन्वयः १४ तस्य प्रपंचः
एतावत्यः विपाकगतयः फलभूता गतयः ताः व्याचख्ये व्याख्यातवानस्मि १५ ॥ इति श्रीभागवते महापुराणे पञ्चमस्कंधे

वाससीयस्य एकमेवकुंडलंयस्य हलस्य ककुदि पृष्ठे हतः न्यस्तः सुभगश्च सुंदरश्च भुजो येन उदारा लीला यस्य सः नंपरि-
म्लानो रागः कांतिर्यस्याः तस्याः नवतुलसिकाया आमोदमध्वासवेन सुरभि मधु रसेन माद्यतां मधुकराणां ये व्राताः तेषां मधुर-
गीतेन श्रीर्यस्याः तां वनमालां कक्षावरत्रां ७ संश्लोकयामास वर्णयामास ८ अस्य जगतः उत्पत्त्यादि हेतवो गुणा यस्येक्षया
कल्पाः स्वस्वकार्यसमर्था आसन् यस्य तु रूपं ध्रुवं अनंतमकृतं अनादि तत्र हेतुः यदेकमेव सत् आत्मन् आत्मनि नानाकार्य्य

यएषएवमनुश्रुतो ध्यायमानो मुमुक्षूणामनादिकालकर्म्मवासनाग्रथितमविद्यामयं हृदय-
ग्रंथिं सत्त्वरजस्तमोमयमंतर्हृदयंगत आशु निर्भिनत्ति तस्यानुभावान् भगवान्स्वायंभुवो ना-
रदः सह तुंवरुणा सभायां ब्रह्मणः संश्लोकयामास ८ उत्पत्तिस्थितिलयहेतवोऽस्य कल्पाः
सत्त्वाद्याः प्रकृतिगुणा यदीक्षयासन् यद्रूपं ध्रुवमकृतं यदेकमात्मन्नानाऽधात्कथमु ह वेद तस्य
वर्त्म ९ मूर्त्तिं नः पुरुकृपया वभार सत्त्वं संशुद्धं सदसदिदं विभाति यत्र यल्लीलां मृगपतिरा-
ददेऽनवद्यामादातुं स्वजनमनांस्युदारवीर्यः १० ॥ ९ प्रपंचमधात् तस्य ब्रह्मरूपस्य वर्त्म तत्त्वं जनः कथ-
मु ह वेद न वेदैवेत्यर्थः ९ तर्हि कथमसौ मुमुक्षुभिः सेव्यते तत्राह मूर्त्तिमिति यत्रेदं सदसद्विभाति सः नोऽस्माकं भक्तानां
वहुकृपया संशुद्धं सत्त्वं मूर्त्तिं वभार स्वजनानां मनांसि आदातुं वशीकर्तुं कृतां यस्य लीलां मृगपतिः सिंहः आददे अशिक्षत
यतः उदाराणि वीर्याणि यस्य तस्मादन्यं मुमुक्षुः कमाश्रयेदित्युत्तरेणान्वयः यद्वा कृपयेत्यत्र हेतुः यद्यस्मात् स्वजनानां मनां-
स्यादातुं लीलामाददे मृगपतिरिवोदारवीर्यः यद्वा मृग्यंत इति मृगाः कामप्रदाः तेषां पतिर्मुख्यः १० ॥ ❋ ॥

२५
भा॰पं॰
७९

चारूणी अंगवलये विलसिताश्च ते विशदाश्च विपुलाश्च धवलाश्च सुभगाश्च रुचिराश्च भुजा एव रजतस्तंभास्तेषु अगरुचंदनकुंकुमानां पंक एव अनुलेपः तेन अवलिंपमानास्तेषाम भिमर्शनेन उन्मथिते हृदये मकरध्वजस्यावेशेन रुचिरं च ललितं च स्मितं यासां ताः तस्यानुरागेण मदेन च मुदितं च तत् मदेन विघूर्णिते प्रचलिते च आ ईषदरुणे करुणाऽवलोकयुक्ते नयने यस्मिन् तद्वदना

यस्यैव हि नागराजकुमार्य आशिष आशासानाश्चार्वंगवलयविलसितविशदविपुलधवलसुभगरुचिरभुजरजतस्तंभेष्वगरुचंदनकुंकुमपंकानुलेपेनावलिंपमानास्तदभिमर्शनोन्मथितहृदयमकरध्वजावेशरुचिरललितस्मितास्तदनुरागमदमुदितमदविघूर्णितारुणकरुणाऽवलोकनयनवदनारविंदं सव्रीडं किल विलोकयंति ५ स एव भगवाननंतोऽनंतगुणार्णव आदिदेव उपसंहृतामर्षरोषवेगो लोकानां स्वस्तय आस्ते ६ ध्यायमानः सुरासुरोरगसिद्धगंधर्वविद्याधरमुनिगणैरनवरतमदमुदितविकृतविह्वललोचनः सुललितमुखरिकाऽमृतेनाप्यायमानः स्वपार्षदविबुधयूथपतीनपरिम्लानरागनवतुलसिकामोदमध्वासवेन माद्यन्मधुकरव्रातमधुरगीतश्रियं वैजयंतीं स्वां वनमालां नीलवासा एककुंडलो हलककुदि कृतसुभगसुंदरभुजो भगवान्माहेंद्रो वारणेंद्र इव कांचनीं कक्षामुदारलीलो बिभर्ति ७॥

रविंदं विलोकयंति ५ अमर्षोऽसहनं रोषः क्रोधः उपसंहृतस्तयोर्वेगो येन ६ उपासनार्थमाह सुरादिभिर्ध्यायमानः चिंत्यमानः अनवरतमदेन मुदितश्चासौ विकृते विह्वललोचनश्च सुललितेन मुखरिकामृतेन वचनामृतेन स्वपार्षदान्विबुधयूथयानां पतींश्चाप्यायमानः हर्षयन् नीले

राम
७९

॥इतिश्रीभागवतेमहापुराणेपञ्चमस्कंधेटीकायांचतुर्विंशोऽध्यायः २४ पंचविंशेततोऽधस्तादाह शेषस्यसंस्थितिं संजिही।
र्षिरिदंकालेयत्ररुद्रसमुद्भवः १ तस्यपातालस्यकोसावनंतः सात्वतीयाः सात्वततंत्रनिष्ठाः चतुर्व्यूहोपासनेयंसंकर्षणंइत्या
चक्षतेनतथाख्यानेहेतुः द्रष्टृदृश्ययोःसम्यक्कर्षणमेकीकरणंयेनतत्कुतः अहमित्यभिमानोलक्षणंचिह्नमधिष्ठातुर्यस्य

॥इतिश्रीभागवतेमहापुराणेपंचमस्कंधेपातालविवरस्वर्गवर्णनोनामचतुर्विंशोध्यायः
२४ श्रीशुकउवाच तस्यमूलदेशेत्रिंशद्योजनसहस्रांतरआस्तेयावैकलाभगवतस्तामस
सीसमाख्यातोऽनंतइतिसात्वतीयाद्रष्टृदृश्ययोःसंकर्षणमहमित्यभिमानलक्षणंसंकर्षणं
इत्याचक्षते १ यस्येदंक्षितिमंडलंभगवतोऽनंतमूर्तेःसहस्रशिरसएकस्मिन्नेवशीर्षणिध्रि
यमाणंसिद्धार्थइवलक्ष्यते २ यस्यहवाइदंकालेनोपसंजिहीर्षतोऽमर्षविरचितरुचिरभ्र
मद्भ्रुवोरंतरेणसांकर्षणोनामरुद्रएकादशव्यूहस्त्र्यक्षस्त्रिशिखंशूलमुत्तंभयन्नुदतिष्ठत् ३
यस्यांघ्रिकमलयुगलारुणविशदनखमणिखंडमंडलेष्वहिपतयःसहसात्वतर्षभैरेकांतभक्तियो
गेनावनमंतःस्ववदनानिपरिस्फुरत्कुंडलप्रभामंडलमंडितगंडस्थलान्यतिमनोहराणिप्रमुदितम
नसःखलुविलोकयंति ४॥१ अहंकाराधिष्ठानेनद्रष्टृदृश्ययोःसंकर्षणात्संकर्षणइत्यर्थः १ अनंतत्वमाह यस्येदमि
तियच्छब्दानांसएवभगवाननंतइत्युत्तरेणान्वयः २ तामसत्वमाह यस्येदंविश्वमुपसंहर्तुमिच्छतःअमर्षेणविरचिते
रुचिरीकृतेकुटिलीकृतेभ्रमंत्यौभ्रुवौतयोर्मध्यंउत्तंभयन्उन्नमयन् ३ सुभगत्वमाह यस्यांघ्रिकमलयुगलेऽरुणाविशदान

२४
भा·पं·
१८

नेकशिरसां अनेकफणानां गणोस्ति एतत्प्रपंचयति कुहकेति महाभोगवंतो महाकायाः पुरुषवाहात् हरेर्वाहनात् २९ विबुधप्रत्यनीकाः देवशत्रवः सकलेष्वपि लोकेष्वनुभावो यस्य तस्यैव तेजसा सुदर्शनेन प्रतिहतो बलावलेपो वीर्यमदो येषां बिलेशयाः सर्प्पा इव इंद्रहत्या प्रयुक्ताभिर्मंत्ररूपाभिर्वाग्भिः एवं हि वैदिकमाख्यानं पणिभिरसुरैर्निगूढा गाम न्वेष्टुं सरमां देवशुनीमिंद्रेण प्रहि

ततोऽधस्तान्महातले काद्रवेयाणां सर्पाणां नैकशिरसां क्रोधवशो नाम गणः कुहकतक्षककालियसुषेणादिप्रधाना महाभोगवंतः पतत्रिराजाधिपतेः पुरुषवाहादनवरतमुद्विजमानाः स्वकलत्रापत्यसुहृत्कुटुंबसंगेन क्वचित्प्रमत्ता विहरंति २९ ततोऽधस्ताद्रसातले दैतेया दानवाः पणयो नाम निवातकवचाः कालेया हिरण्यपुरवासिनः इति विबुधप्रत्यनीका उत्पत्त्या महौजसो महासाहसिनो भगवतः सकललोकानुभावस्य हरेरेव तेजसा प्रतिहतबलावलेपाः बिलेशया इव निवसंति ये वै सरमयेंद्रदूत्या वाग्भिर्मंत्रवर्णाभिरिंद्राद्बिभ्यति ३० ततोऽधस्तात्पाताले नागलोकपतयो वासुकिप्रमुखाः शंखकुलिकमहाशंखश्वेतधनंजयधृतराष्ट्रशंखचूडकंबलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसंति येषामु ह वै पंच सप्त दश शत सहस्रशीर्षाणां फणासु विरचिता महामणयो रोचिष्णवः पातालविवरतिमिरनिकरं स्वरो

चिषा विधमंति

नां संधिमिच्छंतः पणयः प्राहुः किमिदं तिसरमे त्यादिना संधिमनिच्छंतीं द्रस्तुतिपूर्वकं तान्प्रतिपरुषमाह हनाइंद्रेण पणयः आयध्वं इत्यादि तेच तच्छ्रुत्वा बिभ्यनीति ३० महाभोगिनः महाफणाः महानमर्षः क्रोधो येषां पंचादिसंख्यानि

प्रह्लादस्तु एक एवार्थी निष्कामः इत्याह यस्यानुदास्यमिति स्वपितरि उपरते मृते सति स्वपित्र्यं पदं भगवता दीयमानमपि भगवतः खलु परमन्यदिति हत्वा न तु जग्राह हे तपर्ये: २५ ननु त्वमतिवीरः कुतस्त्वमेव बहुमन्यसे तत्राह तस्यानुपथं अनुवर्त्म अमृजिता अक्षीणाः कषाया रागादयो यस्य परिहीणो भगवदनुग्रहो यस्य सः को वा उपगंतुमिच्छतीति २६ अथ शुकोक्तिः नन्वेवंभू

यस्यानुदास्यमेवास्मत्पितामहः किल वव्रे न तु स्वपित्र्यं यदुताकुतोभयं पदं दीयमानं भगवतः परमिति भगवतोपरते खलु स्वपितरि २५ तस्य महानुभावस्यानुपथममृजितकषायः को वास्मद्विधः परिहीणभगवदनुग्रह उपजिगमिषतीति २६ अथ तस्यानुचरितमुपरिष्टाद्विस्तरिष्यते यस्य भगवान् स्वयमखिलजगद्गुरुर्नारायणो द्वारि गदापाणिरवतिष्ठति निजजनानुकंपितहृदयो येनांगुष्ठेन पदा दशकंधरो योजनायुतायुतं दिग्विजय उच्चाटितः २७ ततोऽधस्तात्तलातले मयो नाम दानवेंद्रस्त्रिपुराधिपतिर्भगवता पुरारिणा त्रिलोकीशं चिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत्प्रसादाल्लब्धपदो मायाविनामाचार्यो महादेवेन परिरक्षितो विगतसुदर्शनभयो महीयते २८॥

तर्हि बलिस्तर्हि तस्यैव चरितं विस्तारेण कथ्यतां तत्राह तस्य बलेरनुचरितमुपरिष्टादष्टमे विस्तरिष्यंते तस्य द्वार्यवतिष्ठते निजजनेष्वनुकंपितं कृतानुकंपं हृदयं यस्य द्वारपालकर्म दर्शयति येन श्रीनारायणेन बलेर्द्वारि विशन् दशकंधर उच्चाटितः केन पदा तत्राप्यंगुष्ठेनैव २७ यथा हरिणा स्वभक्तो बलिः सुतले निहितः सुखमास्ते एवं महादेवभक्तोऽपि मयस्तलातले सुखमास्त इत्याह तत इति लब्धं पदं स्थानं येन महीयते पूज्यते २८ ॥६

ततस्तस्मिन् भगवतां भक्तानां ज्ञानिनां च यथायथं आत्मदे ज्ञानदे आत्मतमे च हरौ समर्पितस्य भूमिदानस्य न तत्फलमिति पूर्वेणै
वसंबंधः २१ किंच नेदं भगवदनुकंपाफलमपि किंत्वेकांतभक्तस्य तस्यांतरायमात्रमित्याह नेति भगवान् अमुष्य अमुं बलिं नैवा
नुगृहीतवान् तत्र हेतुः यदुतेति आत्मन ईश्वरस्यानुस्मृतिमुष्णाति निति यातदुक्तं वासुदेवे मनो यस्य जपहोमार्चनादिषु तस्यां
तरायो मैत्रेय देवेंद्रत्वादिकं फलमिति २२ तस्यैकांतभक्तिं सप्रपंचामाह यत्तत् इति प्रसिद्धं इति वक्ष्यमाणमुवाचेहेत्यन्वयः

तद्भगवतामात्मवतां सर्वेषामात्मन्यात्मदस्यात्मतमे च २१ नवै भगवान्नूनममुष्यानुजग्राह यदु
त पुनरात्मानुस्मृतिमोषणं मायामयभोगैश्वर्यमेवातनुतेति २२ यत्तद्भगवतानधिगतान्योपायेन
याच्ञाच्छलेनापहृतस्वशरीरावशेषितलोकत्रयो वरुणपाशैश्च संप्रतिमुक्तो गिरिदर्यां चापविद्ध
इति होवाच २३ नूनं बतायं भगवानर्थेषु न निष्णातो योसाविंद्रो यस्य सचिवो मंत्राय वृत एकांत
तो बृहस्पतिस्तमतिहाय स्वयमुपेंद्रेणात्मानमयाचत आत्मनश्चाशिषो नो एव तद्दास्यमतिगंभी
रवयसः कालस्य मन्वंतरपरिवृत्तं कियल्लोकत्रयमिदं २४॥ कथंभूतः न अधिगत अन्य उपायो येन भगवता

याच्ञाच्छलेनापहृतं स्वशरीरमात्रावशेषितं लोकत्रयं यस्य स सम्यक् प्रतिमुक्तो वरुणैः अपविद्धः प्रक्षिप्तोपि सन् २३ बतेति खेदे भग
वान् विद्वानपि योसाविंद्रः यस्यैकांतेन बृहस्पतिः सचिवः सहायः यतो मंत्रार्थं वृतः सोपि पुरुषार्थेषु नूनं न निष्णातः न निपुणः
यतः उपेंद्रेण द्वारभूतेन तं उपेंद्रं विहायात्मानं मा लोकत्रयमयाचत तं मंत्रप्रदं बृहस्पतिमतिक्रम्येति वा तस्मिन्नसत्त्वे स एव वरुणी
यान् लोकत्रयं यत् न स ददाति तुच्छमित्याह अतिगंभीरं अनंतं वयो यस्य तस्य कालस्य यन्मन्वंतरं तेन परिवृत्तं विपर्य
स्तं लोकत्रयमिदं कियत् २५ ॥

सुतलेवलिरधुनाऽप्यास्त इत्यन्वयः कथंभूतः महेंद्रस्यप्रियंकर्तुमिच्छताप्रथमंपराक्षिप्तमपहृतंलोकत्रयंयस्यसः पुनर्भगवतोऽ
नुकंपयैवतत्रप्रवेशितः सन् कीदृशेनयोऽदितेः सकाशाद्भूत्वावटुवामनरूपेणलब्धकायः तेन १८ कोंचितत्स्यसुतलराज्यंभूमि
भूमिदानफलंमन्यंतेतन्निराकरोति नोएवैतदित्यादियद्विलनिलयेविवरस्थानेऐश्वर्य्यंएतद्भूमिदानस्यसाक्षात्कारफलंनभव

ततोऽधमात्सुतलउदारश्रवाः पुण्यश्लोकोविरोचनात्मजोवलिर्भगवतामहेंद्रस्यप्रियंचिकी
र्षमाणेनाऽदितेर्लब्धकायोभूत्वावटुवामनरूपेणपराक्षिप्तस्वलोकत्रयोभगवदनुकंपयैव
पुनः प्रवेशितइंद्रादिष्वविद्यमानयासुसमृद्धयाश्रियाभिजुष्टः स्वधर्म्मेणाराधयंस्तमे
वभगवंतमाराधनीयमपगतसाध्वसआस्तेऽधुनापि १८ नोएवैतत्साक्षात्कारोभूमि
दानस्ययत्तद्भगवत्यशेषजीवनिकायानांजीवभूतात्मभूतेपरमात्मनिवासुदेवेतीर्थेतमेस
र्वजीवनियंतर्यात्मारामेपात्रउपपन्नेपरयाश्रद्धयापरमादरसमाहितमनसासंप्रतिपादितस्य
साक्षादपवर्गद्वारस्ययद्विलनिलयैश्वर्यं १९ यस्यहवावक्षुत्पतनप्रस्खलनादिषुविवशः स
कृन्नामाभिगृणन्पुरुषः कर्मबंधनमंजसाविधुनोति यस्यहैवप्रतिबाधनंतुमुमुक्षवोन्यथैवोप
((लभंते २०

त्येवकुतइत्यपेक्षायामेवंभूतस्यदानस्यसाक्षादपवर्गहेतुत्वादित्याहयत्तत्प्रसिद्धंदत्तंतस्यतदेवाहभगवत्यशे
षजीवनिकायानांजीवभूतश्चासावात्मभूतश्चसर्वजीवनियंताचासावात्मारामश्चेत्यर्थः तस्मिन्संप्रतिपादितस्य १९ किंचयस्य
नामक्षुत्पतनादिषुचविवशोपिसकृदपिगृणन्कर्मबंधंविधुनोतिकथंभूतंयस्यप्रतिबाधनेत्विहमुमुक्षवोऽन्यथैवापलभंते यन्निहतस

२८
भा·प·
७६

कल्याणानांमंगलरूपाणां १४ यस्मिन्भगवत्तेजसिप्रविष्टे पुंसवनानिगर्भाः आचतुर्थात् भवेत्स्रावः पातः पंचमषष्ठयोरितिस्रावपातौज्ञेयौ १५ सवर्णेरताः स्वैरिण्यः कामिन्यस्त्वसवर्णेपितत्राप्यतिचंचलाः पुंश्चल्यः विलायनं विलायतनं साधयित्वा संभोगसमर्थं कृत्वा स्वेयेअसाधारणाविलासाः तत्पूर्वकोवलोकस्तेनानुरागयुक्तं स्मितं तेन संलापउपगूहनं ॥८६॥

नहितेषांकल्याणानांप्रभवतिकुतश्चनमृत्युर्विनाभगवत्तेजसश्चक्रापदेशात् १४ यस्मिन्प्रविष्टेऽसुरवधूनांप्रायःपुंसवनानिभयाद्देवस्त्रवंतिपतंतिच १५ अथातलेमयपुत्रोऽसुरोबलोनिवसतियेनहवाइहसृष्टाःषण्णवतिर्मायाः काश्चनाद्यापिमायाविनोधारयंतियस्यचजृंभमाणस्यमुखतस्त्रयस्त्रीगणाउदपद्यंतस्वैरिण्यःकामिन्यःपुंश्चल्यइतियावैविलायनंप्रविष्टंपुरुषंरसेनहाटकाख्येनसाधयित्वास्वविलासावलोकनानुरागस्मितसंलापोपगूहनादिभिः स्वैरंकिलरमयंतियस्मिन्नुपयुक्तेपुरुषईश्वरोऽहंसिद्धोऽहमितिअयुतमहागजबलःआत्मानमभिमन्यमानःकथ्यतेमदांधइव १६ ततोऽधस्ताद्वितलेहरोभगवान्हाटकेश्वरःस्वपार्षदभूतगणावृतःप्रजापतिसर्गोपबृंहणायभवोभवान्यासहमिथुनीभूतआस्तेयतःप्रवृत्तासरित्प्रवराहाटकीनामभवयोर्वीर्येणयत्रचित्रभानुर्मातरिश्वनासमिध्यमानओजसापिबतितन्निष्ठ्यूतंहाटकाख्यंसुवर्णंभूषणेनासुरेंद्रावरोधेषुपुरुषाःसहपुरुषीभिर्धारयंति १७॥ ॥नंचतदादिभिःयस्मिन्रसेउपयुक्तेसविते १६ भवयोर्भवस्यभवान्याश्चचित्रभानु

राम
७६

उद्यानानि च अतितराममरलोकश्रियमतिशयितानि येषु चकासतीत्यन्वयः काभिः श्रीभिः केषां कुसुमफलस्तवकाश्च सुभगकिशलयानि च तैरवनताश्चिराविटपायेषां विटपिनां लतानामंगैरालिंगितानां श्रीभिः तथा समिथुनाः चक्रवाकादिमिथुनसहिता ये विविधा विहंगाः तद्युक्तानां जलाशयानां च श्रीभिः कीदृशानां अमलैर्जलैः पूर्णाना पुनरपि कैः रति

उद्यानानि चातितरां मनइंद्रियानंदिभिः कुसुमफलस्तवकसुभगकिशलयावनतरुचिरविटपविटपिनां लतांगालिंगितानां श्रीभिः समिथुनविविधविहंगमजलाशयानाममलजलपूर्णानां झषकुलोल्लंघनक्षुभितनीरनीरजकुमुदकुवलयकल्हारनीलोत्पललोहितशतपत्रादिवनेषु कृतनिकेतनानामेकविहाराकुलमधुरविविधस्वनादिभिरिंद्रियोत्सवैरमरलोकश्रियमतिशयितानि १० यत्र ह वाव न भयमहोरात्रादिभिः कालविभागैरुपलक्ष्यते ११ यत्र हि महाहिप्रवरशिरोमणयः सर्वं तमः प्रबाधंते १२ न वा एतेषु वसतां दिव्यौषधिरसायनान्नपानस्नानादिभिराधयो व्याधयो वलीपलितजरादयश्च देहवैवर्ण्यदौर्गंध्यस्वेदक्लमग्लानिरिति वयोवस्थाश्च भवंति १३॥ अशयितानि झषकुलोल्लंघनेन क्षुभितं यज्जलाशयानां नीरं तस्मिन्यानि नीरजादीनि तेषां वनेषु कृतं निकेतनं यैस्तेषां अर्थात्पक्षिणां एकोऽखंडो यो विहारः तेनाकुलाश्च ते मधुराश्च विविधस्वनादयः तैर्य इंद्रियोत्सवास्तैश्च यद्वा समिथुनेत्यादेरुत्तरेणैव संबंधः मनइंद्रियादिभिरिति स्वनादीनां विशेषणं तत्र नीरजं सामान्येन कमलं लोहितं शतपत्रं तद्विशेषः १० अहोरात्रादिभिर्यद्भयं तन्नोपलक्ष्यते सूर्याद्यभावात् ११ १२ क्लमः श्र

॥२४७॥ पृथिव्याउपरिभूर्लोकावधिमाह यावदंसादयः पार्थिवाविकाराः ६ योजनायुतांतरेणप्रत्येकमुच्छ्रिताःआयामोयःकटाहे
स्तनावद्विस्तारेण ७ सामान्येनविवराणिवर्णयतिएतेष्वित्यादिना अथातलइत्यतः प्राक्तनेनग्रंथेनएतेषुदैत्यादयो
निवसंतीत्यन्वयःकथंभूतेषु अधिकःकामभोगश्चऐश्वर्यानंदश्चविभूतिश्चसंपत्तिःतैःसुसमृद्धभवनादयोयेषुकथंभूताः

ततोधस्ताच्छतयोजनांतरइयंपृथिवीयावद्धंसभासश्येनसुपर्णादयःपतत्रिप्रवराउत्पतंतीति ६ उपवर्णितंभूमेर्यथासंनिवेशावस्थानं अवनेरप्यधस्तात्सप्तभूविवराःएकैकशोयोजनायुतांतरेणायामविस्तारेणोपक्लृप्ताः अतलंवितलंसुतलंतलातलंमहातलंरसातलंपातालमिति ७ एतेषुहिविलस्वर्गेषुस्वर्गादप्यधिककामभोगैश्वर्यानंदविभूतिभिःसुसमृद्धभवनोद्यानाक्रीडविहारेषुदैत्यदानवकाद्रवेयानित्यप्रमुदितानुरक्तकलत्रापत्यबंधुसुहृदनुचरागृहपतयईश्वरादप्यप्रतिहतकामामायाविनोदानिवसंति ८ येषुमहाराजमयेनमायाविनाविनिर्मिताःपुरोनानामणिप्रवरप्रवेकविरचितविचित्रभवनप्राकारगोपुरसभाचैत्यचत्वरायतनादिभिर्नागासुरमिथुनपारावतशुकसारिकाकीर्णकृत्रिमभूमिभिर्विवरेश्वरगृहोत्तमैःसमलंकृताश्चकासति ९॥ नित्यप्रमुदिताः अनुरक्ताःकलत्रादयोयेषांनप्रतिहतःकामोयेषांमायाविनोदोयेषां ८ किंचहे
महाराजयेषुमयेननिर्मिताःपुरश्चकासतिइत्यन्वयःकथंभूताःनानायेमणिप्रवरास्तेषांप्रवेकाःमुख्याःतैर्विरचितैर्विचित्रै
र्भवनादिभिःतथाविवरेश्वराणांगृहोत्तमैश्चसमलंकृताःकीदृशैःगृहोत्तमैःनागाश्चअसुराश्चमिथुनभूताःपारावतादयश्चतैराकी

एवंत्रिभिर्द्युगयोर्द्यापालनंवर्णितंतथा अधोभुवनमर्यादापालनंत्रिभिरुच्यते १ चतुर्विंशेरवेरर्वाक्स्वर्भान्वादिस्थितिः क्रमात्
अतलादिविलस्वर्गमर्यादाःसप्तवर्णिताः २ सूर्यमारभ्यध्रुवांतंसंनिवेशंनिरूप्येदानींसूर्यादधस्तान्निरूपयति अ धस्तादि
तिस्वर्भानुः राहुः अलभत्तत्लेभेसिंहिकायाः पुत्रः १ ग्रहणंवक्तुमाह यददः प्रतपतस्तरणेर्मंडलं अमृतपानेमध्यप्रवेशनतयो

श्रीशुकउवाच अधस्तात्सवितुर्योजनायुतेस्वर्भानुर्नक्षत्रवच्चरतीत्येकेयोऽसावमरत्वंग्रहत्वं
चालभतभगवदनुकंपयास्वयमसुरापसदः सैंहिकेयोह्यतदर्हः तस्यतातजन्मकर्माणिचो
परिष्टाद्वक्ष्यामः १ यददस्तरणेर्मंडलंप्रतपतस्तद्विस्तरतोयोजनायुतमाचक्षतेद्वादशसह
स्रंसोमस्यत्रयोदशसहस्रंराहोर्यःपर्वणितद्व्यवधानकृद्वैरानुबंधः सूर्यचंद्रमसावभिधावति
२ तन्निशम्योभयत्रापिभगवतारक्षणायप्रयुक्तंसुदर्शनंनामभागवतंदयितमस्त्रंतत्तेजसा
दुर्विषहंमुहुः परिवर्त्तमानमभ्यवस्थितोमुहूर्त्तमुद्विजमानश्चकितहृदयआरादेवनिवर्त्तते
तदुपरागमितिवदंतिलोकाः ३ ततोऽधस्तात्सिद्धचारणविद्याधराणांसदनानितावन्मात्रए
व ४ ततोऽधस्ताद्यक्षरक्षःपिशाचप्रेतभूतगणानांविहाराजिरमंतरिक्षंयावद्वायुःप्रवातियावा
न्मेघाउपलभ्यंते ५॥ र्व्यवधानंकरोतीतितथा अतएवैताभ्यांसूचितत्वाद्वैरमनुबध्नातीतितथा २ भागवतंचक्रंपरि

वर्त्तमानंपरिभ्रमत् अभि अभिमुखंमुहूर्त्तमवस्थितः सन् इतिएवमंतरातदवस्थानमुपरागंवदंति तत्रचक्रजुवक्रस्थितिभ्यां
अर्द्धग्रासःसर्वग्रासोनतुग्रासोऽस्तिदूरांतरत्वात् ३ तावन्मात्रेयोजनायते ५ अंतरिक्षंग्रहहीनंतस्यावधिमाहयावद्वायुःप्रवाती

दगयनान्त्यं नक्षत्रं पुष्योदक्षिणायनस्याद्यं आर्द्राश्लेषेतयोर्निरंतरे अभिजिदुत्तराषाढे उत्तरदक्षिणायनयोराद्यंतनक्षत्रेश्रव
णपूर्वाषाढेतयोरुत्तरपूर्वेधनिष्ठामूलंचतयोस्त्युत्तरपूर्वेमघादीनियान्यनुराधांतानिदक्षिणायनान्यष्टतानिवामपार्श्वेवंक्रि
षुवामपार्श्वास्थियुमृगशीर्षादीनिप्रातिलोम्येनपूर्वाभाद्रपदांतानियान्युदगयननक्षत्राण्यष्टतानिदक्षिण पार्श्वेशतभिषक्

धनिष्ठामूलंचदक्षिणवामयोः कर्णयोः मघादीअष्टनक्षत्राणिदक्षिणायनानिवामपार्श्वेवं
क्रिषुयुंजीततथैवमृगशीर्षादीन्युदगयनानिदक्षिणपार्श्वेवंक्रिषुप्रातिलोम्येनप्रयुंजीतशत
भिषाज्येष्ठेस्कंधयोर्दक्षिणवामयोर्न्यसेत ६ उत्तराहनावगस्तिरधराहनौयमः मुखेषुचांगा
रकः शनैश्चरउप बृहस्पतिः ककुदिवक्षस्यादित्योहृदयेनारायणोमनसिचंद्रोनाभ्यामुशनाः
स्तनयोरश्विनौबुध प्राणापानयोराहुर्गलेकेतवः सर्वांगेषुरोमसुसर्वेतारागणाः ७ एतदुहैव
भगवतोविष्णोः सर्वदेवतामयंरूपमहरहः संध्यायांप्रयतोवाग्यतोनिरीक्षमाणउपतिष्ठेतन
मोज्योतिर्लोकायकालायनायानिमिषांपतयेमहापुरुषायधीमहीति ८ ग्रहर्क्षतारामयमाधि
दैविकपापापहंमंत्रकृतांत्रिकालंनमस्यतः स्मरतोवात्रिकालंनश्येततत्कालजमाशुपापं ९
इतिश्रीभागवतेमहापुराणेपञ्चमस्कंधेशिशुमारसंस्थानेत्रयोविंशतितमोध्यायः २३॥ ६

ज्येष्ठेउत्तरदक्षिणायनयोर्येऽवशिष्टेतेस्कंधयोः ६ यमानक्षत्रस्यस्तः तथानारायणोऽश्विनौचककुदिगलपृष्ठशृंगे ७ ज्योति
र्लोकायाश्रयायकालायनायकालचक्ररूपायनमोऽभिधीमहीतिमंत्रेणोपतिष्ठेत ८ मंत्रकृतांपूर्वोक्तंमंत्रंजपतः ९ इतिश्रीभा

कर्मसारथिः सहायो येषां ३ ईश्वराधारत्वात्पतनशंकैव नास्तीति वक्तुमनंतरमाह केचिदिति ज्योतिरनीकं ज्योतिश्चक्रं योगधार
णायां स्थितमिति शेषः ४ लांगूले अग्राद् अधोभागे उदगयनानि अभिजिदादीनि पुनर्वस्वंतानि चतुर्दश दक्षिणपार्श्वे दक्षिणाय

एवं भगणा ग्रहादय एतस्मिन्नंतर्बहिर्योगेन कालचक्र आयोजिता ध्रुवमेवावलंब्य वायुनोदीर्यमा
णा आकल्पांतं परिचक्रमंति नभसि यथा मेघाः श्येनादयो वायुवशाः कर्मसारथयः परिवर्त्तंते ए
वं ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीताः कर्मनिर्मितगतयो भुवि न पतंति ३ केचिनैत।
ज्ज्योतिरनीकं शिशुमारसंस्थानेन भगवतो वासुदेवस्य योगधारणायामनुवर्णयंति ४ यस्य पु
च्छाग्रेऽवाक्शिरसः कुंडलीभूतदेहस्य ध्रुव उपकल्पितः तस्य लांगूले प्रजापतिरग्निरिंद्रो धर्म
इति पुच्छमूले धाता विधाता च कट्यां सप्तर्षयः तस्य दक्षिणावर्त्तकुंडलीभूतशरीरस्य यान्युदग
यनानि दक्षिणपार्श्वे तु नक्षत्राण्युपकल्पयंति दक्षिणायनानि तु सव्ये यथा शिशुमारस्य कुंडली
भोगसंनिवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसंख्या भवंति पृष्ठे त्वजवीथी आकाशगंगा चो
दरतः ५ पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राश्लेषे च दक्षिणवामयोः पश्चिमयोः पादयोः
अभिजिदुत्तराषाढे दक्षिणवामयोर्नासिकयोर्यथासंख्यं श्रवणपूर्वाषाढे दक्षिणवामयोर्लोचनयोः

नानि पुष्यादीन्युत्तराषाढांतानि चतुर्दश वामपार्श्वे ५ तदेव स्थानविशेषेण विभज्य दर्शयति पुनर्वसुपुष्यावित्यादिना पुनर्वसुरु

२२

भा॰पं ॥१६ १७ ॥ ॥इतिश्रीभागवतेपञ्चमस्कंधेटीकायांद्वाविंशोध्यायः २२ त्रयोविंशेध्रुवस्थानंज्योति॥

७३ श्चक्राश्रयंततः शिशुमारस्वरूपेण हरेश्चस्थितिरुच्यते १ यत्तत्प्रसिद्धंविष्णोः पदंयत्रध्रुवउपास्तेतिष्ठती॥

ततउपरिष्टाद्योजनलक्षद्वयात्प्रतीयमानः शनैश्चर एकैकस्मिन्राशौत्रिंशत्त्रिंशन्मा
सान्विलंबमानःसर्वानेवानुपर्येतितावद्भिरनुवत्सरैः प्रायेणहिसर्वेषामशांतिकरः १६ ततउत्त
रस्मादृषयएकादशलक्षयोजनांतरउपलक्ष्यंतेयएवलोकानांशमनुभावयंतोभगवतोविष्णोर्यत्प
रमंपदंप्रदक्षिणप्रक्रमंति १७ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेज्योतिश्चक्रव
र्णनेद्वाविंशतितमोध्यायः २२ श्रीशुकउवाच अथतस्मात्परतस्त्रयोदशलक्षयो
जनांतरतोयत्तद्विष्णोः परमंपदमभिवदंति यत्रहमहाभागवतोध्रुवऔत्तानपादिरग्नि
नेंद्रेणप्रजापतिनाकश्यपेनधर्मेणचसमकालयुग्भिः सबहुमानंदक्षिणतःक्रियमाणइ
दानीमपिकल्पजीविनामाजीव्यउपास्तेतस्येहानुभावउपवर्णितः १ सहिसर्वेषांज्योतिर्ग
णानांग्रहनक्षत्रादीनामनिमिषेणाव्यक्तरंहसाभगवताकालेनभ्राम्यमाणानांस्थाणुरिवा
वष्टंभईश्वरेणविहितःशश्वदवभासते यथामेढीस्तंभआक्रमणपशवः संयोजितास्त्रिभिःस
वनैर्यथास्थानंमंडलानिचरंति २॥ एतत्त्वन्वयः समकालमेवयुज्यंतइतितथातैर्नक्षत्ररूपैः १ मेढीस्तंभेवद्धाधी॥

श्रीमद्भागवतपुराणटीकासहितम्॥

राम

७३

दक्षिणेनैव न तु तेषां पृथगन्या गतिरस्तीत्यर्थः कालाऽनेकालचक्रे उत्तराषाढाश्रवणसंधावभिजिन्नक्षत्रं फलविशेषेण पृथक्कल्पितं तेन सह तथा च श्रुतिः अभिजिन्नाम नक्षत्रं उपरिष्टादषाढानां अधस्ताच्छ्रोणाया इत्यादि ११ पुरतः सूर्येण भोक्ष्यमाणेन नक्षत्रे पश्चात् भुंक्ते सहैव भुज्यमाने चारेण क्रमस्य नक्षत्राद्यतिक्रमेण वृष्टेर्विष्टंभः स्तंभनं यस्मात्तत्र

ततउपरिष्टात् त्रिलक्षयोजनतो नक्षत्राणि मेरुं दक्षिणेनैव कालायन ईश्वरयोजितानि सहाभिजिताऽष्टाविंशतिः ११ ततउपरिष्टादुशना द्विलक्षयोजनत उपलभ्यते पुरतः पश्चात्सहैव वार्कस्य शैघ्र्यमांद्यसाम्याभिर्गतिभिरर्कवच्चरति लोकानां नित्यदाऽनुकूल एव प्रायेण वर्षयंश्चारेणानुमीयते स वृष्टिविष्टंभग्रहोपशमनः १२ उशनसा बुधो व्याख्यातः ततउपरिष्टाद्द्विलक्षयोजनतो बुधः सोमसुत उपलभ्यमानः प्रायेण शुभकृद्यदाऽर्काद्व्यतिरिच्येत तदाऽतिवाताऽभ्रप्रायाऽनावृष्ट्यादिभयमाशंसते १३ अत ऊर्ध्वमंगारकोपि योजनलक्षद्वितय उपलभ्यमानस्त्रिभिस्त्रिभिः पक्षैरेकैकशो राशीन्द्वादशानुभुंक्ते यदि न वक्रेणाभिवर्तते प्रायेणाशुभग्रहोऽघशंसः १४ ततउपरिष्टात् द्विलक्षयोजनांतरगतो भगवान्बृहस्पतिरेकैकस्मिन्राशौ परिवत्सरं परिवत्सरं चरति यदि न वक्रः स्यात्प्रायेणानुकूलो ब्राह्मणकुलस्य १५॥ (विग्र)हा(णां) तमुपशमयतीति तथा १२ तथा बुधो व्याख्यातः पुरतः पश्चात्सहैव चरतीति किंचिद्विशेषं चाह ततइत्यादिना आशंसते सूचयति १३ अघशंसः दुःखसूचकः यदि न वक्रेणाभिवर्तते न र्हि त्रिभिस्त्रिभिः

२२
भा·पं·
७२

६ मंडलाभ्यां सह भुंजीत सह सहि सूर्यः यदा शुक्लप्रतिपदि संक्रांतिर्भवति तदा सौरचांद्रयोर्मासयोर्युगपदुपक्रमो भव
ति स संवत्सरः ततः सौरमानेन वर्षे षट् दिनानि वर्द्धंते चांद्रमानेन षट् ह्रसंतीति द्वादशदिनव्यवधानादुभयोरप्यपश्चा
द्भावो भवति एवं पंच वर्षाणि गच्छंति तन्मध्ये द्वौ मलमासौ भवतः ततः पुनः षष्ठः संवत्सरो भवति तदेवमवांतर

अथ च यावताऽर्धेन नभोवीथ्यां प्रचरति तं कालमयनमाचक्षते ६ अथ च यावन्नभोमंड
लं सह द्यावापृथिव्योर्मंडलाभ्यां कार्त्स्न्येन स ह भुंजीत तं कालं संवत्सरं परिवत्सरं इडावत्स
रमनुवत्सरं वत्सरमिति भानोर्मांद्यशैघ्र्यसमगतिभिः समामनंति ७ एवं चंद्रमा अर्कग
भस्तिभ्य उपरिष्टाल्लक्षयोजनत उपलभ्यमानोऽर्कस्य संवत्सरभुक्तिं पक्षाभ्यां मासभुक्तिं
सपादर्क्षाभ्यां दिनेनैव पक्षभुक्तिमग्रचारी द्रुततरगमनो भुंक्ते ८ अथवापूर्यमाणाभिश्चक।
लाभिरमराणां क्षीयमाणाभिश्च कलाभिः पितृणामहोरात्राणि पूर्वपक्षापरपक्षाभ्यां वि
तन्वानः सर्वजीवनिवहप्राणो जीवश्चैकमेकं नक्षत्रं त्रिंशता मुहूर्तैर्भुंक्ते ९ य एष
षोडशकलः पुरुषो भगवान्मनोमयोऽन्नमयोऽमृतमयो देवपितृमनुष्यभूतपशु
पक्षिसरीसृपवीरुधां प्राणाप्यायनशीलत्वात्सर्वमय इति वर्णयंति १०॥

रभेदेन संवत्सरादिपं
चकं समामनंति ७ सोमादीनामपि स्थानं कार्यं चाह एवं चंद्रमा इति अर्कगभस्तिभ्यः मंडलरूपेभ्यः सपादर्क्षाभ्यां।
सपाददिनद्वयेन ८ सर्वेषां जीवनिवहानां प्राणः अन्नमयत्वात् अमृतमयत्वाच्च अत एव जीवनहेतुत्वात् जीवश्च ९ तदे

रम
७२

॥०॥८८॥

त्मनस्वगतिद्वयमविरुद्धमितिपरिहारार्थः २ तत्रत्कालनियमेनकर्मणांविशुद्धेः साद्गुण्यस्यनिमित्तभूतमात्मानंविभ
ज्यविजिज्ञासमानःवितर्क्यमाणः यथोपजोषंयथाकर्मभोगंऋतुगुणानुशीतोष्णादीन् ३ वर्णाश्रमानुचारानुवर्त्ति
नःपुरुषास्त्रय्याम्नातैःकर्मभिरिंद्रादिरूपंयोगवितानैश्चध्यानादिभिरंतर्यामिरूपंपूजयंतः ४ सएवस्वगत्यामासा

एवंनक्षत्रराशिभिरुपलक्षितेनकालचक्रेणध्रुवंमेरुंचप्रदक्षिणेनपरिधावतासहपरिधा
वमानानांतदाश्रयाणांसूर्यादीनांग्रहाणांगतिरन्यैवनक्षत्रांतरेराश्यंतरेचोपलभ्यमानत्वा
त् २ सएषभगवानादिपुरुषएवसाक्षान्नारायणोलोकानांस्वस्तयआत्मानंत्रयीमयंक
र्मविशुद्धिनिमित्तंकविभिरपिचवेदेनविजिज्ञास्यमानोद्वादशधाविभज्यषट्सुवसंतादि
ष्वृतुषुयथोपजोषमृतुगुणान्विदधाति ३ तमेतमिहपुरुषास्त्रय्याविद्ययावर्णाश्र
माचारानुपथाउच्चावचैः कर्मभिराम्नातैर्योगवितानैश्चश्रद्धयायजंतोऽञ्जसाश्रेयःसमधि
गच्छंति ४ अथसएषआत्मालोकानांद्यावापृथिव्योरंतरेणनभोवलयस्यकालचक्रग
तोद्वादशमासान्भुंक्तेराशिसंज्ञान्संवत्सरावयवान्मासःपक्षद्वयंदिवानक्तंचेतिसपादर्
क्षद्वयमुपदिशंतियावतापष्ठमंशंभुंजीतसवैऋतुरित्युपदिश्यतेसंवत्सरावयवः ५ ॥८८दिव्यवहा

रकारणमित्याहसएवलोकानामात्माद्यावापृथिव्योरंतरेणमध्येयन्नभोवलयमंतरिक्षंतस्यमध्येयत्कालचक्रंतद्गतः
राशिभिर्मेषादिभिःसंज्ञायेषांचैत्रादिसंज्ञास्तुचांद्रमासानांमासमाह पक्षद्वयंमासंइतिचांद्रेणमानेनसपादंमहानक्षत्र

सूक्तवाकाय सुभाषिताय १८ एकैकशश्चतुर्दशद्वंद्वशः सप्तगणाः संतो मासिमासि उपासत इत्यन्वयः १९ गव्यूतिः क्रोशद्वयं सगव्यूतु उत्तरं यथा भवति तथा २० इति श्रीभागवते महापुराणे पञ्चमस्कंधे टीकायां एकविंशोध्यायः २१ द्वाविंशे सोम शुक्रादेः स्थानमाहात्म्यं तरोत्तरम् तत्तद्गत्यनुसारेण इष्टानिष्टं तथा नृणां १ राशीनामभिमुखं चाप्रदक्षिणं च उपवर्णितं स

तथा वालखिल्या ऋषयोंऽगुष्ठपर्वमात्राः षष्टिसहस्राणि पुरतः सूर्यं सूक्तवाकाय नियुक्ताः संस्तुवंति १८ तथान्ये च ऋषयो गंधर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त चतुर्दश मासि मासि भगवंतं सूर्यमात्मानं नानानामानं पृथङ्नानानामानः पृथक्कर्मभिर्द्वंद्वश उपासते १९ लक्षोत्तरं सार्द्धनवकोटियोजनपरिमंडलं भूवलयस्य क्षणेन सगव्यूत्युत्तरं द्विसहस्रयोजनानि स भुंक्ते २० इति श्रीभागवते महापुराणे पञ्चमस्कंधे ज्योतिश्चक्रसूर्यरथमंडलवर्णनं नामैकविंशतितमोध्यायः २१ राजोवाच यदेतद्भगवत आदित्यस्य मेरुं ध्रुवं च प्रदक्षिणेन परिक्रामतो राशीनामभिमुखं च प्रदक्षिणं प्रचलितं भवतोपवर्णितममुष्य वयं कथमनुमिमीमहीति १ सहोवाच यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव प्रदेशांतरेष्वप्युपलभ्यमानत्वात् ॥ ६

मेरुं चलन् दक्षिणेन करोतीति वदता अमुष्य वयं कथमनुमीमहि एतत्कथं ज्ञास्यामो विरुद्धत्वादित्यर्थः १ चक्रवशा

त्रयीमयरत्याद्युपासनार्थं १३ द्वादशमासाअरायस्यषडृतवोनेमयोयस्यत्रीणिचातुर्मास्यानिनाभयोयस्यकृत
इतरभागोयस्य मानसोत्तरगिरौलक्षार्द्धादुपरिवायुबद्धभूमावितिद्रष्टव्यंचक्रंवातावदुच्छ्रितमितिमंतव्यं अन्यथा
युतमात्रोच्छ्रायत्वान्मानसोत्तरस्यमेरोश्चतुराशीतुच्छ्रायत्वादक्षस्यसाम्यानुपपत्तेः १४ तस्मिन्नक्षे चक्रंप्रोतेकृतमूलः

एवंमुहूर्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानिसौरोरथस्त्रयीमयोसौचतसृषुप
रिवर्ततेपुरीषु १३ यस्यैकंचक्रंद्वादशारंषरानेमित्रिणाभिसंवत्सरात्मकंसमामनंति न
स्याऽक्षोमेरोर्मूर्द्धनिकृते तरभागोयत्रप्रोतंरविरथचक्रंतैलयंत्रचक्रवत्भ्रमन्मानसोत्त
रगिरौपरिभ्रमति १४ तस्मिन्नक्षेकृतमूलोद्वितीयोक्षस्तुर्यमानेनसंमितस्तैलयंत्राक्षव
त्ध्रुवेकृतोपरिभागः १५ रथनीडस्तुषट्त्रिंशल्लक्षयोजनायतस्तत्तुरीयभागविशालस्ता
वानूरविरथयुगोयत्रहयाश्छंदोनामानःसप्ताऽरुणयोजितावहंतिदेवमादित्यं १६ पुरस्ता
त्सवितुररुणः पश्चाच्चनियुक्तःसौत्यकर्मणिकिलास्ते १७ ॥((निबद्धपूर्वभागःप्रथमाक्षो
मेरुमानसोत्तरायतः सार्द्धसप्तलक्षाधिकसार्द्धकोटिप्रमाणः तस्यतुर्यमानेनसार्द्धसप्तत्रिंशत्सहस्राधिकैकोनचत्वारिं
शल्लक्षमानेन ध्रुवेकृतः वायुपाशेननिबद्धउपरिभागोयस्य १५ नीडउपवेशस्थानंगायत्र्यादिछंदोनामानःअरु
णेनयोजिताःसंतोदेवंवहंति १६ पुरस्तात्स्थितोऽपिपश्चात्प्रत्यङ्मुखआस्तेयद्वायत्सूर्यस्यपुरस्तात्तस्यवैपश्चि
मत्वात्पश्चादितुक्तंअश्वस्थानेचवायुनाकंसप्ताश्वरूपछंदांसिवहंतैवामतोरविंचक्रपक्षनिबद्धानिचक्रेचाक्षःस

२१
भा०पं०
७०

दृश्यस्येवादर्शनमस्तमयः ततोतीवदूरगमनेनिशीथइति समुद्रतीरस्थदृष्टाश्च अम्भोवाएषप्रातरुदेत्यपःसायं प्रविशतीतिश्रुतिव्यवहारोनवस्तुतः तदुक्तंमैत्रेये उदयास्तमयेचैवसर्वकालंतुसन्मुखेदिशास्वशेषासुतथामैत्रेयविदिशासुचयैर्यत्रदृश्यतेभास्वान्तेषामुदयःस्मृतः तिरोभावंचयत्रेतितत्रैवास्तमनंरवेः नैवास्तमनमर्कस्यनोदयःसर्वदास्मृतः उदयास्तमनाख्यंहिदर्शनादर्शनंरवेः शक्रादीनांपुरेतिष्ठन्स्पृशत्येषपुरत्रयमविकर्णौद्वौविकर्णस्थस्त्रीन्कोणानद्वेपुरेतथेति अतएवतत्रैवोक्तं तस्माद्दिश्युत्तरस्यांवैदिवारात्रिःसदैवहिस

यत्रोदेतितस्यहस्समानसूत्रेनिपानेनिम्लोचति ९ यत्रक्वचनस्यंदेनाभितपतितस्यैहैषसमानसूत्रेनिपातेप्रस्वापयति तत्रगतेनपश्यंतियेतंसमनुपश्येरन् १० यदाचैंद्र्याःपुर्याःप्रचलतेपंचदशघटिकाभियाम्यांसपादकोटिद्वयंयोजनानांसार्द्धद्वादशलक्षाणिसाधिकानिचोपयाति ११ एवंततोवारुणींसौम्यामैन्द्रींचपुनस्तथाऽन्येचग्रहाःसोमादयोनक्षत्रैःसहज्योतिश्चक्रेसमभ्युद्यंतिसहवानिम्लोचंति १२ ॥ ❋ ॥

वैषांद्वीपवर्षाणांमेरुरुत्तरतस्थितइतियतोयत्रचयःपश्यतिसैवतस्यप्राचीतस्यवामतोमेरुस्तिष्ठतीति ८ दीपयोक्तमुदयास्तमनाद्यनियमंदर्शयतियत्रोदेतीत्यादिनास्यंदेनस्वेदोद्गमेनप्रस्वापयतिनिशीथंकरोति येतंसमनुपश्येरन्प्रस्वापसमानसूत्रस्थाः १० साधिकानिपंचविंशतिसहस्राधिकानि ११ सहवासहैवयद्यपिवस्तुतःसूर्यस्यापिनक्षत्रैःसहैवोदयास्तमयौतथापितत्साहित्यादर्शनात्सोमादीनामेवतत्साहित्यमुक्तं १२॥

राम
७०

यमार्गे वीथीत्रयं तदप्युक्तं तत्रैव अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता रोहिण्यार्द्रा मृगशिरो गजवीथ्य भिधीयते पुष्याश्ले
षा तथादित्या वीथी चैरावती स्मृता एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते तथा द्वे चापि फाल्गुन्यौ मघा चैवार्षभी मता हस्तश्चित्रा
तथा स्वाति गोवीथीति तु शब्दिता ज्येष्ठा विशाखानुराधा वीथी जारद्गवी मता एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते मूला
षाढोत्तराषाढा अजवीथ्यभिशब्दिताः श्रवणं च धनिष्ठा च मार्गी शतभिषस्तथा वैश्वानरी भाद्रपदे रेवती चैव कीर्तिता एता
स्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते इति याम्या भरणी आदित्या अदिति देवताका पुनर्वसुः मार्गी मृगवीथी एवं स्थिते उत्तरा
यणे ध्रुवेण सुगाढकोटिनिबद्धवायुपाशद्वयाकर्षणे रथस्यारोहणं तथाभ्यंतरमंडलप्रवेशो गतिमांद्यं चेति दिनवृद्धिः रा
त्रिह्रासश्च दक्षिणायने च पाशप्रेरणादवरोहणे वहिर्मंडलप्रवेशो गतिशैघ्र्यं चेत्यहोरात्रयोर्विपर्ययः वैषुवते तु पाशसा

सौम्यां विभावरीं नाम तासूदयमध्याह्नास्तमयनिशीथानीति भूतानां प्रवृत्तिनिवृत्तिनिमित्ता
नि समयविशेषेण मेरोश्चतुर्दिशं ॥७॥ तत्रत्यानां दिवसमध्यंगत एव सदादित्यस्तपति सव्येना
चलं दक्षिणेन करोति ॥८॥

एतस्मात् समावस्थानेन मध्यमंडलप्रवेशो गतिसाम्यं चेत्यहोरात्रयोः साम्यमिति तथा च
पुराणांतरं आकृष्येते यदा तौ तु ध्रुवेण समधिष्ठितौ तदाभ्यंतरतः सूर्यो भ्रमते मंडलानि तु ध्रुवेण मुच्यमानेन पुना रश्मि
युगेन तु तथैव बाह्यतः सूर्यो भ्रमते मंडलानि वै इति तदेतदुक्तं यदा मेषतुलयोरित्यादिना उदयास्तादिकं वक्तुमाह तस्मिन्मा
नसोत्तरे मेरोः पूर्वतः ऐंद्रीपुरीं उपदिशं तीत्यनुषंगः तासु पुरीषु उदयादीन्युपदिशंति चतुर्दिशमित्युक्तं ये मेरो दक्षिणदेशे तेषा
मैंद्रीमारभ्य पूर्वोदयः ये पश्चिमे तेषां याम्यामारभ्य ये उत्तरे तेषां वारुणीमारभ्य ये पूर्वे तेषां सौम्यामारभ्य ॥७॥ तत्रत्यानां मेरुस्थानां स
व्येनेति नक्षत्राभिमुखतया स्वगत्या मेरुं वामतः कुर्वन्नपि प्रदक्षिणावर्त्तप्रवहाख्यवायुभ्राम्यमाणज्योतिश्चक्रवशात् प्रत्यहं
दक्षिणतः करोति अतश्च ऋगतिवशाद् अतिदूरतो भूमंडलस्येव दर्शनमुदयः आकाशमारूढस्येव दर्शनं मध्याह्नः भूमिंप्रवि

तत्प्रपंचयति यदेति अत्यंतवैषम्याभावात्समानानीत्युक्तं सर्वथासाम्यं तु लंकायामेवाहोरात्रस्य यद्यपि वृषभमिथुनयोरेवाह्नो वृद्धिः कर्कटादिषु ह्रासः तथापि रात्र्यपेक्षया आधिक्यत्वाद्वर्द्धत इत्युक्तं एवं रात्रिवृद्धावपि दिनापेक्षया ह्रसंतीत्युक्तं एकैकेति स्थूलदृष्ट्योक्तं वृद्धिह्रासयोः प्रतिमासं वैषम्यात् ४ विपर्ययाणीति अहानि न्यूनानि रात्रयोऽधिका इत्यर्थः ५ तद्वृद्धिह्रासकालमाह यावदिति ६ एवं मंदादिगतिभिः नवकोटय इति मेरोरुभयतो मानसोत्तरस्यांतर्विस्तारेण पंचदशलक्षाधिककोटित्रयपरिमितेन इदं परिमंडलमानमुन्नेयं एवं पंचदशभिर्घटिकाभिरित्यादिष्वपि त्रैराशिकगणितेन तत्तन्मानमुन्नेयं अत्रापेक्षितो विशेषः पुराणांतराद्‌द्रष्टव्यः तत्रारोहणादिस्थानानि वायुपुराणे दर्शितानि सर्वेषां ग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः स्थानं जरद्गवं मध्यं तथैरावतमुत्तरं वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वत इति तदेव मध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथीत्रयेण त्रिधा भिद्यते त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैः नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथीत्रयं आर्षभी गोवीथी जरद्गवी चेति वैषुवने मध्यममार्गे

यदा मेषतुलयोर्वर्त्तते तदाहोरात्राणि समानानि भवंति यदा वृषभादिषु पंचसु च राशिषु चरति तदाहान्येव वर्द्धंते ह्रसति च मासि मास्येकैका घटिका रात्रिषु ४ यदा वृश्चिकादिषु पंचसु वर्त्तते तदाहोरात्राणि विपर्ययाणि भवंति ५ यावद्दक्षिणायनमहानि वर्द्धंते यावदुदगयनं रात्रयः ६ एवं नव कोटय एकपंचाशल्लक्षाणि योजनानां मानसोत्तरगिरिपरिवर्त्तनस्योपदिशंति तस्मिन्नैंद्रीं पुरीं पूर्वस्मान्मेरोर्देवधानीं नाम दक्षिणतो याम्यां संयमनीं नाम पश्चाद्वारुणीं निम्लोचनीं नाम उत्तरतः॥

स्वर्गापवर्गौ भोगमोक्षदेशौ रसौकांसि अतलादीनि ४५ उपासनार्थमाह देवादीनां सूर्य आत्मा दृगीश्वरः नेत्राधिष्ठाता च ॥
४६ इति श्रीपंचमे विंशतितमोऽध्यायः २० एवमध्यायविंशत्या भूमर्यादा निरूपिता अतः परं द्युमर्यादा पालनेत्रिभिरुच्यते १ एकविंशे रवेः कालचक्रेण भ्रमतोऽन्वहं स्वगत्या राशिसंचारैर्लोकयात्रा निरूप्यते २ एतावान् विस्तारेण को

स्वर्गापवर्गौ नरकाः रसौकांसि च संनिवेशः ४५ देवतिर्यङ्मनुष्याणां सरीसृपसवीरुधां सर्वजीवनिकायानां सूर्य आत्मा दृगीश्वरः ४६ इति श्री भागवते महापुराणे पंचमस्कंधे भुवनकोशवर्णने समुद्रद्वीपवर्षसंनिवेशपरिमाणलक्षणो विंशतितमोऽध्यायः २० श्रीशुक उवाच एतावानेव भूवलयस्य संनिवेशः प्रमाणलक्षणतो व्याख्यातः एतेन हि दिवो मंडलमानं तद्विद उपदिशंति १ यथा हि द्विदलयोर्निष्पावादीनां ते अंतरेणांतरिक्षं तदुभयसंधितं २ तन्मध्यगतो भगवांस्तपतां पतिस्तपन आतपेन त्रिलोकीं प्रतपत्यवभासयत्यात्मभासा स एष उदगयनदक्षिणायनवैषुवतसंज्ञाभिर्मांद्यशैघ्र्यसमानाभिर्गतिभिरारोहणसमानस्थानेषु यथासवनमभिपद्यमानो मकरादिषु राशिष्वहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते ३ ॥ एतद्यः पंचाशत् उ॰ से देवं च पंचविंशतिः १ द्विदलयोर्मध्ये यथैकस्य मानेनापरस्य मानमुपदिश्यते न तद्वत् ते अंतरेण तयोर्मध्ये तदुभयसंधितं ताभ्यामुभयतः संलग्नं २ उदगयनादिसंज्ञाभिर्मंदक्षिप्रसमगतिभिर्यथाकालमारोहणादिस्थानेष्वारोहणाद्यभिपद्यमानो मकरादिष्वहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते ३ ॥ ॥

एावरो ६

स्वस्यपदि शुद्धं सत्त्वं ततः संधारयमाणः आविष्कुर्वन् कीदृशधर्मज्ञानादीन्यष्ट महासिद्धयश्चोपलक्षणं यस्य तत् दोर्दंडैरुप
लक्षितः सन् महाविभूतैः परमैश्वर्यैः स्यपतित्वादक्रूरैवमूर्त्या समंतादास्ते ४० नन्वंतर्यामिणाऽतस्थेनैव सर्वे कर्तुं शक्यं
किं तस्य बहिः समंतादवस्थानेनेत्याशंक्य तस्य प्रयोजनमेव व्याचष्टे आत्मनो योगमायया विरचिताया विविधलोकया
त्रायास्या गोपीथाय रक्षणाय एवं भगवानेवंभूतः आकल्पं वेषंगतः लीलयाऽऽपन्न इति समंतादास्त इत्यस्यार्थः ४१

परिवारितो निजवरायुधोपशोभितैर्निजभुजदंडैः संधारयमाणः तस्मिन् गिरिवरे समंता
त्सकललोकस्वस्तय आस्ते ४०॰ आकल्पमेव वेषं गत एष भगवानात्मयोगमायया विरचित
विविधलोकयात्रागोपीथायेति ४१ योऽन्तर्विस्तार एतेन ह्यलोकपरिमाणं च व्याख्यातं य
द्बहिर्लोकालोकाचलात् ततः परस्ताद्योगेश्वरगतिं विशुद्धामुदाहरंति ४२ अंडमध्यगतः
सूर्यो द्यावाभूम्योर्यदंतरं सूर्यांडगोलयोर्मध्ये कोट्यः स्युः पंचविंशतिः ४३ मृतेंड एष एत
स्मिन् यदभूत्ततो मार्तंड इति व्यपदेशः हिरण्यगर्भ इति यद्धिरण्यांडसमुद्भवः ४४ सू
र्येण हि विभज्यंते दिशः खं द्यौर्मही भिदा॥ ९ अलोकपरिमाणं च मेरोरेकतः सार्द्धद्वादशकोट्य ततो लो

कालोकात् अलोकाद्वा परस्तात् विशुद्धां द्विजपुत्रानयनेऽर्जुनस्य श्रीकृष्णेन प्रदर्शितां ४२ विस्तारेणोक्तं ब्रह्मांडमानं सर्वा
तोपि निरूपयति अंडमध्यगतः किं तन्मध्यं तदाह द्यावाभूम्योः पूर्वोत्तरकपालयोर्यदंतरं मध्यस्थानं सर्वतः पंचविंशतिकोट्यः
स्युः ४३ अंडमध्यावस्थानेकारणं तन्नामनिर्वचनेनाह मृते अचेतने एषः सूर्यो वैराजरूपेण यस्मात्प्रविष्टः ४४ किंच सूर्येणैव

३६ लोकत्रयस्यांते परितो मर्य्यादारूपो विहितः यस्मात् प्रतिबंधकात् सूर्यआदिर्येषां ध्रुवोऽपवर्गो तो येषां आवितन्वानाः समंतात्प्रकाशयंतः परतो गंतुं न शक्नुवंति तावदुन्नहनमुत्सेधः तदनुरूप आयामश्च विस्तारो यस्य ध्रुवादप्युच्छ्रितत्वात्त्रिलोक्या

लोकालोक इति समाख्या यदनेनाचलेन लोकालोकस्यांतर्वर्त्तिनाऽवस्थाप्यते ३६ स लो कत्रयांते परित ईश्वरेण विहितो यस्मात्सूर्यादीनां ध्रुवापवर्गाणां ज्योतिर्गणानां गभस्तयोऽर्वाचीनांस्त्रीँल्लोकानावितन्वाना न कदाचित्पराचीना भवितुमुत्सहंते तावदुन्नहनायामः ३७ एतावांल्लोकविन्यासो मानलक्षणसंस्थाभिर्विचिंतितः कविभिः स तु पंचाशत्कोटिगणितस्य भूगोलस्य तुरीयभागोऽयं लोकाचलः ३८ तदुपरिष्टाच्चतसृष्वाशास्वात्मयोनिनाऽखिलजगद्गुरुणाऽधिनिवेशिता ये द्विरदपतय ऋषभः पुष्करचूडो वामनोऽपराजित इति सकललोकस्थितिहेतवः ३९ तेषां स्वविभूतीनां लोकपालानां विविधवीर्योपबृंहणाय भगवान् परममहापुरुषो महाविभूतिपतिरंतर्याम्यात्मनो विशुद्धसत्त्वं धर्मज्ञानवैराग्यैश्वर्याद्यष्टमहासिद्ध्युपलक्षणं विष्वक्सेनादिभिः स्वपार्षदप्रवरैः॥ ९९ कीमर्यादाभूत इत्यर्थः ३७ सो यं तु लोकालोकाचलः तुरीयभागः चतुर्थांशः सार्द्धद्वादशकोट्यः मेरोरेकत इति द्रष्टव्यं ३८ आशासु दिक्षु येऽधिनिवेशिताः ते आसते ३९ तेषां दिग्गजानां स्वविभूतीनां स्वांशभूतानां महेंद्रादीनां च विविधवीर्योपबृंहणाय सकललोकस्वस्तये च भ

२०
भा॰पं॰
६७

३१ ब्रह्मरूपिणं कमलासनमूर्त्तिं सकर्मकेन ब्रह्मसालोक्यादिसाधनेन ३२ कर्ममयं कर्म्मणा[illegible]रूपं ब्रह्मलिंग्यते यस्मात् एकस्मिन्नेव
परमेश्वरेऽत्रेनो निष्ठायस्य तत् अतएव वस्तुतोऽद्वैतं ३३ ततः शुद्धोदात्परस्तात् लोकः सूर्याद्यालोकवान् देशः अलोकः तद्रहित ।
स्तयोरंतराले मध्ये तयोर्विभागार्थमित्यर्थः ३४ ततः परस्तादि[illegible]देवक्रियताऽत्तरेण इति अपेक्षायां तदंतवर्त्तिनीं भूमिमा
ह यावन्मानसोत्तरमेर्वोरंतरं सार्द्धसप्तलक्षोत्तरं सार्द्धकोटिपरिमितं त[illegible]वती भूः शुद्धोदात्परतोऽस्ति तत्र च प्राणिनोऽपि संतितत्तः कां

एतद्द्वीपस्याप्यधिपतिः प्रैयव्रतो वीतिहोत्रो नामैतस्यात्मजौ रमणकधातकिनामानौ वर्षपती नि
युज्य स स्वयं पूर्वजवद्भगवत्कर्मशील एवास्ते ३१ तद्वर्षपुरुषा भगवंतं ब्रह्मरूपिणं सकर्मकेन कर्म्मणाऽऽरा
धयंतीदं चोदाहरंति ३२ यत्तत्कर्म्ममयं लिंगं ब्रह्मलिंगं जनोऽर्चयेत् एकांतमद्वयं शांतं तस्मै भगव
ते नम इति ३३ ऋषिरुवाच ततः परस्ताल्लोकालोकनामाचलो लोकालोकयोरंतराले परित उपक्षिप्तः
३४ यावन्मानसोत्तरमेर्वोरंतरं तावती भूमिः कांचन्यन्याऽऽदर्शतलोपमा यस्यां प्रहितः पदार्थो न क
थंचित्पुनः प्रत्युपलभ्यते तस्मात्सर्वसत्त्वपरिहृतासीत् ३५॥ ३५ चनी भूमिरन्यास्तीत्यर्थः सा चैकोनचा
त्वारिंशल्लक्षोत्तरकोट्यष्टकपरिमिता ज्ञेया अर्द्धपुष्करद्वीपेन सह शुद्धोदः षसप्ततिलक्षाणि एवं हि सति मेरुलोकालो
कयोरंतरं सार्द्धद्वादशकोटिपरिमितं वक्ष्यमाणमुपपन्नं भवति एतदेव शैवतंत्रे षूक्तं कोटिद्वयं त्रिपंचाशल्लक्षाणि च
ततः परं पंचाशच्च सहस्राणि सप्तद्वीपा ससागरा ततो हेममयी भूमिर्दशकोट्यो वरानने देवानां क्रीडनार्थाय
लोकालोकस्ततः पर इति अत्र च दशकोटित्वं पूर्वोक्तभूम्या सह द्रष्टव्यं सर्वसत्त्वपरिहृतेति देवव्यतिरिक्तेन निविड्डेयं देवानां क्रीड

राम
६७

॥२४॥२६॥२७॥२८॥ आत्मकेतुभिः प्राणादिवृत्तिभिः २९॥ ज्वलनशिखावदमलानां कनकपत्राणां अयुतानामयुतानि यस्य तत्
तस्यापि प्रैयव्रत एवाधिपतिर्नाम्ना मेधातिथिः सोपि विभज्य सप्त वर्षाणि पुत्रनामानि तेषु स्वात्मजा
न्पुरोजवमनोजवपवमानधूम्रानीकचित्ररेफबहुरूपविश्वधारसंज्ञान्निधायाधिपतीन्स्वयं भ
गवत्यनंत आवेशितमतिस्तपोवनं प्रविवेश २५ एतेषां वर्षमर्यादागिरयो नद्यश्च सप्त सप्तैव
ईशान उरुशृंगो बलभद्रः शतकेशरः सहस्रस्रोतो देवपालो महानस इति २६ अनघा
युर्दा उभयस्पृष्टिरपराजिता पंचपदी सहस्रस्रुतिर्निजधृतिरिति २७ तद्वर्षपुरुषा ऋतसत्यव्र
तदानव्रतानुव्रतनामानो भगवंतं वाय्वात्मकं प्राणायामविधुतरजस्तमसः परमसमाधिना यजंति
२८ अंतःप्रविश्य भूतानि यो बिभर्त्यात्मकेतुभिः अंतर्यामीश्वरः साक्षात्पातु नो यद्वशे स्फुटं इति २९
एवमेव दधिमंडोदात्परतः पुष्करद्वीपस्ततो द्विगुणायामः समंतत उपकल्पितः समानेन स्वादूदके
न समुद्रेण बहिरावृतो यस्मिन्बृहत्पुष्करं ज्वलनशिखामलकनकपत्रायुतायुतं भगवतः कमला
सनस्याध्यासनं परिकल्पितं तद्द्वीपमध्ये मानसोत्तरनामैक एवार्वाचीनपराचीनवर्षयोर्मर्यादाच
लोऽयुतयोजनोच्छ्रायायामो यत्र तु चतसृषु दिक्षु चत्वारि पुराणि लोकपालानामिंद्रादीनां यदुपरि
ष्टात्सूर्यरथस्य मेरुं परिभ्रमतः संवत्सरात्मकं चक्रं देवानामहोरात्राभ्यां परिभ्रमति ३०॥ देवानामहोरा

स्वयंभगवान् ज्ञानोपरमकल्याणंयशोयस्य २० २१ आपोमयंअम्मयं २२ हेआपः पुरुषवीर्याईश्वरा। तु लब्धसामर्थ्याः स्थभवथ अतएवभूर्भुवः स्वः त्रैलोक्यंपुनंत्यः ताभवत्योनोस्माकंस्पृशतांस्पर्शनंकुर्वतां।भुवः

तस्मिन्नपिप्रैयव्रतोघृतपृष्ठोनामाधिपतिः स्वेद्वीपेवर्षाणिसप्तविभज्यतेषुपुत्रनामसुस प्तस्विक्थादान्वर्षपान्निवेश्यस्वयंभगवान्भगवतः परमकल्याणयशसआत्मभूतस्यहरे श्चरणारविंदमुपजगाम २० आमोमधुरुहोमेघपृष्ठोसुधामाभ्राजिष्ठोलोहितार्णोवन स्पतिरितिघृतपृष्ठसुतास्तेषांवर्षगिरयः सप्तसप्तैवनद्यश्चाभिख्याताः शुक्लोवर्द्धमानोभो जनउपबर्हिणोनंदोनंदनः सर्वतोभद्रइति २१ अभयाऽमृतौघाआर्यकातीर्थवतीवृ त्तिरूपवतीपवित्रवतीशुक्लेतियासामंभः पवित्रममलमुपयुंजानाः पुरुषर्षभद्रविण देवकसंज्ञावर्षपुरुषाआपोमयंदेवमपांपूर्णेनांजलिनायजंते २२ आपः पुरुषवीर्या। स्थपुनंतीर्भूर्भुवः स्वः तानः पुनीतामीवघ्नीः स्पृशतामात्मनाभुवइति २३ एवंपरस्तात्क्षी रोदात्परितः उपवेशितः शाकद्वीपोद्वात्रिंशल्लक्षयोजनायामः समानेनचदधिमंडोदेनपरी तः यस्मिन्हिशाकोनाममहीरुहः स्वक्षेत्रव्यपदेशकोयस्यहमहासुरभिगंधस्तंद्वीपमनुवा सयति २४॥ शरीराणिपुनंतु यतआत्मनास्वरूपेणैवअमीवघ्नीः पापहंत्र्यः २३ दध्नोमंडरसः सएवोदकंय

॥ १४ ॥ १५ ॥ १६ ॥ हे जातवेदः त्वं साक्षात्परस्य ब्रह्मणो हरेर्हव्यवाडसि अतो देवानां यज्ञेन पुरुषं हरिमेव यजत्र अंगानां नाम्नाद तमंगिने समर्पयेत्यर्थः १७ उपक्लृप्तो वेष्टितः यथा कुशद्वीपो घृतोदेन वृतः १८ गुहस्य का

ततद्वीपपतिः प्रैयव्रतो राजा हिरण्यरेतो नाम स्वं द्वीपं सप्तभ्यः स्वपुत्रेभ्यो यथाभागं विभज्य स्वयं तपस्यातिष्ठत १४ वसुवसुदानदृढरुचिनाभिगुप्तस्तुत्यव्रतविविक्तवामदेवना॥

मभ्यस्तेषां वर्षेषु सीमागिरयो नद्यश्चाभिज्ञाताः सप्तैव चक्रश्चतुःशृंगः कपिलश्चित्रकूटो देवानीक ऊर्ध्वरोमा द्रविण इति १५ रसकुल्या मधुकुल्या मित्रविंदा श्रुतविंदा देवगर्भा घृ

तच्युता मंत्रमालेति यासां पयोभिः कुशद्वीपौकसः कुशलकोविदाभियुक्तकुलकसंज्ञा भा

गवंतं जातवेदसरूपिणं कर्मकौशलेन यजंते १६ परस्य ब्रह्मणः साक्षाज्जातवेदोऽ॥

सि हव्यवाड् देवानां पुरुषांगानां यज्ञेन पुरुषं यजेति १७ तथा बहिः क्रौंचद्वीपो द्विगुणः स्वमानेन क्षीरोदेन परित उपक्लृप्तो वृतो यथा कुशद्वीपो घृतोदेन यस्मिन् क्रौंचो नाम पर्वतराजो द्वीपनामनिर्वर्तक आस्ते १८ यो सौ गुहप्रहरणोन्मथितनितंबकुंजोपि क्षीरोदे

नासिच्यमानो भगवता वरुणेनाभिगुप्तो विभयो बभूव १९ ॥ ॥ ॥ ॥

र्तिकेयस्य प्रहरणेन आयुधेन उन्मथितानि नितंबाः कुंजानि च यस्य १९ ॥ १९ ॥ १९ ॥ १९ ॥ १९ ॥

॥ सुपर्णोसि गरुत्मान् त्रिवृत्ते शिर इत्यादिश्रुतेः छंदोभिः स्वावयवभूतैः श्री विष्णुं स्तौतीति च्छंदस्तुत् तस्य द्वीपस्य
हूतये व्यपदेशाय ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ स्वगोभिः स्वरश्मिभिः अंधः अन्नं सोमो नो राजा अस्तु अभिमुख्येन

यत्र ह वै शाल्मली प्लक्षायामा यस्यां वाव किल निलयमाहुर्भगवतः छंदःस्तुतः पतत्रि
राजस्य सा द्वीपहूतये उपलक्ष्यते ॥ ८ तद् द्वीपाधिपतिः प्रियव्रतात्मजो यज्ञबाहुः
स्वसुतेभ्यः सप्तभ्यस्तन्नामानि सप्तवर्षाणि व्यभजत् सुरोचनं सौमनस्यं रमणकं देवव
र्षं पारिभद्रमाप्यायनमविज्ञातमिति ९ तेषु वर्षाद्रयो नद्यश्च सप्तैवाभिज्ञाताः स्वर
सः शतशृंगो वामदेवः कुंदः मुकुंदः पुष्पवर्षः सहस्रश्रुतिरिति अनुमतीः शिनीवा
ली सरस्वती कूहू रजनी नंदा राकेति १० तद्वर्षपुरुषाः श्रुतधर वीर्यधर वसुंधरेषंधर
संज्ञा भगवंतं वेदमयं सोममात्मानं वेदेन यजंते ११ स्वगोभिः पितृदेवेभ्यो विभजन् कृ
ष्णशुक्लयोः प्रजानां सर्वासां राजांऽधः सोमो न आस्त्विति १२ एवं सुरोदाद्बहिस्तद्द्विगु
णः समानेनावृतो घृतोदेन यथापूर्वः कुशद्वीपो यस्मिन् कुशस्तंबो देवकृतस्तद्द्वीपाख्याक
रो ज्वलन इवापरः स्वशष्परोचिषा दिशो विराजयति १३॥ १२ भवतु हस्वपाठे त्वविवक्षया संध्यभा
वः १२ एवं सुरोदाद्बहिर्घृतोदेनावृतः कुशद्वीप इत्यन्वयः स्वशष्पाणि स्वकोमलशिखाः तेषां रोचिषा १३ ॥ ॥

अभिज्ञाताः प्रसिद्धाः सप्तैव अन्ये च पर्वता नद्यश्च सहस्रशः संतीत्यर्थः मानसोत्तरस्य मंडलाकारत्वोक्तेस्तेषु प्लक्षादिपंचद्वी पेषु वर्षाद्रयस्तिर्यगायताकारा उभयतोऽब्धिं स्पृशन्त इति गम्यते अन्यथा सप्तभिः सप्तवर्षविभागासंभवात् वैस्मवेवर्षाणां पूर्वादिक्रमो ज्ञेयः ३ जलोपस्पर्शनेन विधूतं रजस्तमश्च येषां हंसादयो ब्राह्मणादिस्थानीयाः वर्णाः विबुधोपमं संदर्शो।

शिवं यवयसं सुभद्रं शान्तं क्षेमममृतमभयमिति वर्षाणि तेषु गिरयो नद्यश्च सप्तैवाभि ज्ञाताः ३ मणिकूटो वज्रकूट इन्द्रसेनो ज्योतिष्मान् सुपर्णो हिरण्यष्ठीवो मेघमाल इति से तुशैलाः अरुणा नृम्णा आङ्गिरसी सावित्री सुप्रभाता ऋतंभरा सत्यंभरा इति महानद्यः यासां ज लोपस्पर्शनविधूतरजस्तमसो हंसपतङ्गोर्ध्वायनसत्याङ्गसंज्ञाश्चत्वारो वर्णाः सहस्रायुषो वि बुधोपमसंदर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवंतं त्रयीमयं सूर्यमात्मानं यजंते ४ प्रत्नस्य विष्णो रूपं यत्सत्यस्यर्त्तस्य ब्रह्मणः अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहीति ५ प्लक्षादिषु पंचसु पुरुषाणामायुरिन्द्रियमोजः सहो बलं बुद्धिर्विक्रम इति च सर्वेषामौत्पत्तिकी सिद्धिरविशेषेण वर्त्तते ६ प्लक्षः स्वसमानेनेक्षुरसोदेनावृतो यथा तथा द्वीपोऽपि शाल्मलो द्विगु णविशालः समानेन सुरोदेनावृतः परिवृङ्क्ते ७

एवं क्रमस्वेदादिरहितं रूपं प्रजननमपत्योत्पादनं च येषां ४ वि गीता अपि द्वीपमंत्रा व्याख्यायंते प्रत्नस्य पुराणपुरुषस्य विष्णो यद्रूपं तं सूर्यमीमही त्रिशरणं व्रजेम कथंभूतं सत्यादीनामा। त्मानं अधिष्ठातारं तत्र सत्यमनुष्ठीयमानो धर्मः ऋतं प्रमीयमाणो धर्मः ब्रह्मणस्तद्बोधकस्य वेदस्य अमृतस्य शुभफलस्य मृत्यो

स्तिष्ठस्य सम्यग्यजनस्य सहतोस्य प्रवचनस्य हतस्य अन्यस्यापि कर्मणः स्वर्गसुखादुपभुक्तादवशेषितं यदि किंचिदस्ति तेनाजनाभे वर्षे नोस्माकं जन्म स्यात् कीदृशं स्मृतिमत् हरिरेव सेव्य इत्यनुसंधानयुक्तं यतः हरिर्भजतां शं सुखं तनोति २८ २९ ३० ३१ इति

यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनं तेनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्यद्भजतां शं तनोति २८ शुक उवाच जंबुद्वीपस्य च राजन्नुपद्वीपानष्टौ हैक उपदिशंति सगरात्मजैरश्वान्वेषण इमां महीं परितो निखनद्भिरुपकल्पितान् २९ तद्यथा स्वर्णप्रस्थश्चंद्रशुक्ल आवर्तनो रमणको मंदरहरिणः पांचजन्यः सिंहलो लंकेति ३० एवं तव भारतोत्तम जंबुद्वीपवर्षविभागो यथोपदेशमुपवर्णित इति ३१ इति श्रीभागवते महापुराणे पंचमस्कंधे जंबुद्वीपवर्णनेनाम एकोनविंशः १९ शुक उवाच अतः परं प्लक्षादीनां प्रमाणलक्षणसंस्थानतो वर्षविभाग उपवर्ण्यते १ जंबुद्वीपोऽयं यावत्प्रमाणविस्तारस्तावता क्षारोदधिना परिवेष्टितो यथा मेरुर्जंबाख्येन लवणोदधिरपि ततो द्विगुणविशालेन प्लक्षाख्येन परिक्षिप्तो यथा परिखा बाह्योपवनेन। प्लक्षो जंबूप्रमाणो द्वीपाख्याकरो हिरण्मय उत्थितो यत्राग्निरुपास्ते सप्तजिह्वस्तस्याधिपतिः प्रियव्रतात्मज इध्मजिह्वः स्वं द्वीपं सप्तवर्षाणि विभज्य सप्तवर्षनामभ्य आत्मजेभ्य आकलय्य स्वयमात्मयोगेनोपरराम २॥१९ श्रीभागवते महापुराणे पंचमस्कंधे टीकायां एकोनविंशोध्यायः १९ विंशे प्लक्षादिषट्द्वीपस्थितिमाह सहार्णवैः लोकालोकस्थितिश्चांतर्बहिर्भोगादिमानतः ॥ १ ॥

तावता लक्षविस्तारेण परिक्षिप्तः परिवेष्टितः उपास्ते तिष्ठति आ

॥८॥ द्वीपसप्तक

अतः यत्र वैकुंठकथाः सूनन्द्यो न संति तदाश्रयाः कथापगाश्रयाः महांतो नृत्याद्युत्सवा येषु तादृशा यज्ञेशस्य मखाश्च पूजाः सः सुरेशस्य ब्रह्मणोपि लोको न सेव्यतां २४ अमुमुक्षून् नरान्निंदति प्राप्ता इति ज्ञानं च तदर्थाः क्रियाश्च तदर्थानि द्रव्याणि च तेषां कलापेन संभृतां पूर्णां अपुनर्भवाय मोक्षाय वनौका इव वनौकसः पक्षिणो यथा लब्धकान्मुक्ताः अपि पुनर्यदि तस्मिन्नेव वृक्षे प्रमत्ता विहरंति तर्हि यथा बध्यंते तद्वत् २५ अहो भारतवासिनां भाग्यमित्याहुः यैरिति आ

नयत्र वैकुंठकथासुधापगा न साधवो भागवतास्तदाश्रयाः नयत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वै स सेव्यतां २४ प्राप्ता नृजातिं त्विह ये च जंतवो ज्ञानक्रियाद्रव्यकलापसंभृतां न वै यतेरन्नपुनर्भवाय ते भूयो वनौका इव यांति बंधनं २५ यैः श्रद्धया बर्हिषि भागशो हविर्निरुप्तमिष्टं विधिमंत्रवस्तुतः एकः पृथङ्नामभिराहुतो मुदा गृह्णाति पूर्णः स्वयमाशिषां प्रभुः २६ सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत्पुनरर्थिता यतः स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवं २७॥

अग्नये जुष्टं निर्वपामि इंद्राय जुष्टं निर्वपामीत्येवं भागशो निरुप्तं पृथक्कृतं कथं विधिना प्रकारेण मंत्रेण च वस्तुतश्च पुरोडाशादिभेदेन इष्टं देवतामुद्दिश्य त्यक्तं निरुप्तं च ममेदमिति स्वीकृत्य त्यागानंतरं अश्नातीत्यर्थः पृथगिंद्रादिनामभिराहूतः आहूतः आशिषां प्रभुः स्वयं पूर्णोपि हरिः २६ तत्रापि निष्कामाः कृतार्था इत्याहुः सत्यमिति प्रार्थितः सन्नर्थितं ददातीति सत्यं अथापि परमार्थदो न भवत्येव यद्दत्तात् यतो दत्तादनंतरं पुनरप्यर्थिता भवति ननु नार्थितश्चेत् किमपि न दद्यादित्याशंक्याह अनिच्छतां निष्कामानां तदुत्या

अपवर्गस्वरूपमाह योऽसाविति अनात्म्ये आत्मनि भवमात्म्यं रागादि तद्रहिते अनिरुक्ते वाचामगोचरे अनिलयने अनाधारे अनन्यनिमित्तोऽहैतुको भक्तियोग एव लक्षणं स्वरूपं यस्य स कथं भवति नानागतीनां निमित्तं योऽविद्याग्रंथिः तस्य रंधनं छेदनं तत् द्वारेण महापुरुषपुरुषा विष्णुभक्तास्तैः प्रकृष्टः संयोगो यदा भवति तदा २० एतदेव मानुष्यमेव सर्वपुरुषार्थसाधनं गायंति अमीषामेभिः उत स्वित् अथवा स्वयमेव साधनं विनैव हरिर्येषां प्रसन्नोऽभूत् एवंभूतस्य पुण्यस्य दुष्करत्वात् भारताजिरे भारतांगणे नः केवलं स्पृहैव यत्र तन्मुकुंदसेवोपयोगि नृषु जन्म यैर्लब्धं २१ स्पृहामेवाह किं

योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताऽविद्याग्रंथिरंधनद्वारेण यदा हि महापुरुषपुरुषप्रसंगः २० एतदेव हि देवा गायंति अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः यैर्जन्म लब्धं नृषु भारताजिरे मुकुंदसेवौपयिकं स्पृहा हि नः २१ किं दुष्करैर्नः क्रतुभिस्तपोव्रतैर्दानादिभिर्वा द्युजयेन फल्गुना न यत्र नारायणपादपंकजस्मृतिः प्रमुष्टाऽतिशयेंद्रियोत्सवात् २२ कल्पायुषां स्थानजयात्पुनर्भवात् क्षणायुषां भारतभूजयो वरं क्षणेन मर्त्येन कृतं मनस्विनः संन्यस्य संयांत्यभयं पदं हरेः २३॥ ५७०९॥ ॥

मित्यादि सप्तभिः दुष्करैः क्रत्वादिभिर्नः फल्गुना तुच्छेन द्युजयेन स्वर्गप्राप्त्या किं न किंचित्फलं कुतः यत्र नारायणपादपंकजस्मृतिर्नास्ति प्रत्युत अतिशयितादिंद्रियाणामुत्सवात् भोगात् प्रमुष्टाऽभूत् २२ क्षणमल्पमेवायुर्येषां वरत्वे हेतुः मर्त्येनापि देहेन क्षणेनैव कालेन कृतं कर्म संन्यस्य हरेः पदं सम्यग्यांति २३॥ ॥

आत्मनाचदेहेनाप्युपस्पृशंति १७ १८ लब्धजन्मयैस्तैः पुरुषैः सात्विकादिस्वकृतेनकर्मणादिव्यादिगत
यआत्मनोविधीयंतेसाध्यंतेहियस्मात् सर्वाएवगतयः कर्मानुसारेणसर्वेषांभवंति यस्यवर्णस्ययद्विधानंमोक्ष

एतासामपोभारत्यः प्रजानामभिरेवपुनंतीनामात्मनाचोपस्पृशंति १७ चंद्रव
शाताम्रपर्णीअवटोदाकृतमालावैहायसीकावेरीवेणीपयस्विनीशर्करावर्त्तातुंगभद्रा
कृष्णावेण्याभीमरथीगोदावरीनिर्विंध्यापयोष्णीतापीरेवासुरसानर्म्मदाचर्मण्वती
सिंधुः अंधः शोणश्चनदौमहानदीवेदस्मृतीऋषिकुल्यात्रिसामाकौशिकीमंदाकि
नीयमुनासरस्वतीदृषद्वतीगोमतीसरयूरोधस्वतीसप्तवतीसुषोमाशतद्रूश्चंद्रभागाम
रुद्वृधावितस्ताअसिक्नीविश्वेतिमहानद्यः १८ अस्मिन्नेववर्षेपुरुषैर्लब्धजन्मभिः
शुक्ललोहितकृष्णवर्णेनस्वारब्धेनकर्मणादिव्यमानुषनारकागतयोबह्व्यआत्मनआ
नुपूर्व्येणसर्वाह्येवसर्वेषांविधीयंते यथावर्णविधानमपवर्गश्चापिभवति १९ ॥

प्रकारःसंन्यासवनस्थत्वादितदनतिक्रमेणास्मिन्नेववर्षेनृणांअपवर्गश्चभवति.एतच्चकर्म्मादिवहुसाधनसंभ
वाभिप्रायेणोक्तंनत्वन्यत्रापवर्गाभावेन तदुपर्यपिवादरायणःसंभवादिति देवानामपिमोक्षस्यसूचितत्वात् १९॥

तस्मात्सुरोवाअन्योवायःकोपिश्रीराममेवसर्वप्रकारेणभजेत् सुकृतज्ञं अल्पीयस्यपिभजनेवहुमानिनंउत्तरान्कोसलान् अयोध्यावासिनः ८ उपचितैर्धर्मादिभिरात्मोपलभ्यतेयेनतत्तपश्चरतितत्रउपशमः इंद्रियाणांसयमःउपरमो निरहंकारताआत्मवतामनुग्रहायंनस्वार्थेईश्वरत्वात् ९ भगवदनुभावउपवर्ण्यतेयेनपंचरात्रेणतत्सावर्णेर्मनोःउ

सुरोऽसुरोवाप्यथवानरोनरः सर्वात्मनायः सुकृतज्ञमीश्वरं भजेतरामंमनुजाकृतिंहरिं यउत्तराननयत्कोसलान्दिवमिति ८ भारतेपिवर्षेभगवान्नरनारायणाख्यआकल्पांत मुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलंभनमनुग्रहायात्मवतामनुकंपयात पोऽव्यक्तगतिश्चरति ९ तंभगवान्नारदोवर्णाश्रमवतीभिर्भारतीभिःप्रजाभिर्भगवत्प्रोक्ता भ्यांसांख्ययोगाभ्यांभगवदनुभावोपवर्णनंसावर्णेरुपदेक्ष्यमाणः परमभक्तिभावेनोपसरा तिइदंचाभिगृणाति १० ॐ नमोभगवतेउपशमशीलायोपरतानात्म्यायनमोऽकिंच नवित्तायऋषिऋषभायनरनारायणायपरमहंसपरमगुरवेआत्मारामाधिपतयेन मोनमइति ११ गायतिचेदंकर्तास्यसर्गादिषुयोनवध्यतेनहन्यतेदेहगतोपिदैहिकैःद्र ष्टुर्नदृग्यस्यगुणैर्विदूष्यतेतस्मैनमोऽसक्तविविक्तसाक्षिणे १२॥ उपसरतिसेवते १० उपरतानात्म्याय निरहंकाराय ११ असक्तोऽसौविविक्तश्चसाक्षीचतस्मैनमः असक्तत्वंदर्शयति अस्यविश्वस्यसर्गादिषुकर्तापियो नवध्यतेअहंकर्तेतिनमन्यतेविविक्तत्वमाह देहगतोपिदैहिकैःक्षुत्पिपासादिभिर्योनहन्यतेनाभिभूयतेसाक्षित्वमाहद्र

योगकौशलं निरूपयन्योगं प्रार्थयते इदमिति त्रिभिः हे योगेश्वर हिरण्यगर्भाय योगनैपुण्यं जगाद इदमेव तत् किं जन्म प्र
भृति भक्त्या अंतकाले पुमांस्त्वयि मनो धारयेदिति यत् कथंभूतः स नउज्झितं दुष्कलेवरं तदभिमानो येन १३ अन्यथा तस्य
शास्त्राभ्यासादिश्रमो व्यर्थ इत्याह ऐहिकामुष्मिककामेषु लंपटो मूर्खः सुतादिषु योगक्षेमं चिंतयन् कुत्सितस्य कलेवरा।

इदं हि योगेश्वर योगनैपुणं हिरण्यगर्भो भगवान्जगाद यत् यदंतकाले त्वयि निर्गुणे मनो
भक्त्या दधीतोज्झितदुष्कलेवरः १३ यथैहिकामुष्मिककामलंपटः सुतेषु दारेषु धनेषु चिं
तयन् शंकेत विद्वान्कुकलेवरात्ययात् यस्तस्य यत्नः श्रम एव केवलं १४ तन्नः प्रभो त्वं कुकलेव
रार्पितां त्वन्मायया ऽहंममतामधोक्षज भिंद्याम येनाऽशु वयं सुदुर्भिदां विधेहि योगं त्वयि नः
स्वभावजमिति १५ भारतेऽप्यऽस्मिन्वर्षे सरिच्छैलाः संति हि वहवः मलयो मंगलप्रस्थो मै
नाकस्त्रिकूट ऋषभः कूटकः कोल्लकः सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलो वेंकटः महेंद्रो
वारिधारो विंध्यः शुक्तिमानृक्षगिरिः पारियात्रो द्रोणश्चित्रकूटो गोवर्द्धनो रैवतकः ककु
भो नीलो गोकामुख इंद्रकीलः कामगिरिरिति चान्ये च शतसहस्रशः शैलास्तेषां नितंवप्रभवा
नदा नद्यश्च संत्यसंख्याताः १६॥ ॥ स्यात्ययात् मृत्योः शंकेत तथा विद्वानपि सन्यः शंकेत तस्य यत्नः श्रम एव १४ यस्मा
दिदृशोऽपीयमेवदशा ततस्मात् हे प्रभो अधोक्षज त्वमेव नो योगं विधेहि कीदृशं त्वयि स्वभावं सहजवासनारूपं येन योगे
न वयं त्वन्मायया नः कुकलेवरे अर्पितामहंममतां शीघ्रं भिंद्याम त्यजेम दुर्भिदां उपायांतरैः सर्वथा त्यक्तुमशक्यां १५ इलावृत्तवर्द

तत्रहेतुःत्वंब्रह्मेति सदसतोभावान्देवतिर्यगादिरूपान्भावयतीति तथा सृज्यंतत्वद्व्यतिरिक्तंनास्तीत्याहुःआत्मै
वत्वंनानाशक्तिभिर्जगद्रूपेणाभातःयतस्मादीश्वरः २४ स्वतःसिद्धज्ञानत्वमुपपादयंतोजगदात्मनाआभानप्रकारमा
हुःत्वंशब्दस्यवेदस्ययोनिःअतःस्वतःसिद्धज्ञानस्त्वंजगदादिर्महतत्त्वं आत्माचअहंकारःकथंभूतःप्राणेंद्रियद्रव्या
णांकारणभूतागुणायस्यराजसादित्रिविधइत्यर्थःस्वभावादयंश्चत्वमेवक्रतुःसंकल्पःसत्यमृतंचेतियोधर्मःसत्वं

त्वंब्रह्मपरमंगुह्यंसदसद्भावभावनः नानाशक्तिभिराभातस्त्वमात्माजगदीश्वरः २४ त्वं
शब्दयोनिर्जगदादिरात्माप्राणेंद्रियद्रव्यगुणःस्वभावः कालःक्रतुःसत्यमृतंचधर्मस्त्वय्य
क्षरंयत्त्रिवृदामनंति २५ अग्निर्मुखंतेऽखिलदेवतात्माक्षितिंविदुर्लोकभवांघ्रिपंकजं
कालंगतिंतेऽखिलदेवतात्मनोदिशश्चकर्णौरसनंजलेशं २६ नाभिर्नभस्तेश्वसनंनभ
स्वान्सूर्यश्चचक्षूंषिजलंस्मरेतः परावरात्माश्रयणंतवात्मासोमोमनोद्यौर्भगवन्शिरस्ते
२७ कुक्षिःसमुद्रागिरयोस्थिसंघारोमाणिसर्वौषधिवीरुधस्ते छंदांसिसाक्षात्तवसप्तधा
तवस्त्रयीमयात्मन्हृदयंसर्वधर्मः २८॥ ९९ महदादिस्वरूपत्वेहेतुःत्रिवृत्त्रिगुणात्मकंयदक्षरंप्रधा
नंत्वयित्वदाश्रयंतदामनंति यद्वा एवंभूते त्वयित्रिवृदक्षरंप्रणवंप्रकाशकमाहुरित्यर्थः २५ अखिलदेवतात्माअ
ग्निःसर्वादेवतात्माइतिश्रुतेःसःअग्निस्तेमुखंहेलोकभवद्वितीयांतेषुविदुरित्यस्यसंबंधः २६ परेअवरेचयेआत्मानोजी
वास्तेषामाश्रयस्तवात्माहंकारः २७ त्रयीमयात्मन्वेदत्रयमूर्ते २८॥

पंचोपनिषदः तत्पुरुषाघोरसद्योजातवामदेवेशानरूपामंत्रा येर्मुखैरष्टोत्तरत्रिंशन्मंत्राणांवर्गः तेषामेव मंत्राणांपदच्छेदेनाष्टोत्तरत्रिंशत्कलात्मकामंत्रा इत्यर्थः अवस्थितिः उपरतावस्था २९ अधर्मस्याभिपुदंभलोभादिषु येरूर्मिभिर्विसर्गः प्रतिसर्गः संहारः यद्वायैः सत्वादिभिर्विविधः सर्गस्तानिनेत्रत्रयं हे देवच्छंदोमयऋषिर्वेदः सत्वेसाक्षाद्दक्षणं साक्षान्मनुरितिपाठेमनुर्वेदः तमेवाह छंदोमयइति ३० हेगिरित्रतेपरंज्योतिरखिलानांलोकंपा

मुखानिपंचोपनिषदस्तवेशयैस्त्रिंशदष्टोत्तरमंत्रवर्गः यत्तच्छिवाख्यंपरमार्थतत्त्वंदेवः स्वयंज्योतिरवस्थितिस्ते २९ छायात्वधर्माभिषुयैर्विसर्गानेत्रत्रयसत्वरजस्तमांसि साक्षात्मनुः शास्त्रकृतस्तवेक्षाच्छंदोमयोदेवऋषिः पुराणः ३० नतेगिरित्राखिललोकपालविरंच्यवैकुंठसुरेंद्रगम्यंज्योतिः परंयत्ररजस्तमश्चसत्वंनयत्रब्रह्मनिरस्तभेदं ३१ कामाध्वरत्रिपुरकालगराद्यनेकभूतद्रुहः क्षपयतः स्तुतयेनतत्ते यत्त्वंतकालइदमात्मकृतं स्वनेत्रवह्निस्फुलिंगशिखयाभसितंनवेद ३२ ॥ ९ ६९ ॥ ६ ॥ ❋ ॥

लादीनांगम्यंनभवतिकुतः यत्ररजआदिनास्तिकिंतज्ज्योतिः यन्निरस्तभेदंब्रह्म ३१ कामश्चअध्वरश्चदक्षयज्ञः त्रिपुरादयश्चये अनेकभूतद्रुहस्तान्क्षपयतः संहरतस्तेतत्कर्मस्तुतयेनभवति अत्यल्पमेतदित्यर्थः गरभक्षणस्याप्यवश्यंभावित्वेन सिद्धवन्निर्देशः स्तुतये अलंनभतीत्यत्रहेतुः यस्तुभवान्स्वनेत्रवह्निविस्फुलिंगस्यशिखयाइदंजगत् भसितंभस्मसाज्ज्ञातंनवेद नालोचयत्यपि ३२ ॥ ९ ६९ ॥ ६ ॥ ❋ ॥

राम
२१

तदेवंनित्यंपरानुग्रहव्यग्रंत्वांयेनिंदंतितेऽतिमूर्खाइत्याहुः येत्वउमयासहचरंतंतस्मान्नित्तरांरतंकामिनंकत्थंते प्रलपंति तथाश्मशानेचरंतंउग्रंक्रूरंपरुषंचहिंस्त्रंकत्थंतेकथंभूतं आत्मरामाश्चतेगुरवोविश्वस्य हितोपदेष्टारस्तैर्हृदिचिंतितमंघ्रिद्वंद्वंयस्य तथाभूतमपितपसाभितप्तमपितेनूनंतवोतिमविदन्निति काकुः त्वल्लीलांनैवलल्लीलांनैवविदुरित्यर्थः अतोहातलज्जाः त्यक्तत्रपाः कथमात्मारामैः सेवितचरणयुगल

येत्वात्मरामगुरुभिर्हृदिचिंतितांघ्रिद्वंद्वंचरंतमुमयातपसाभितप्तं कत्थंतउग्रपरुषंनिरतंश्मशानेतेनूनमूतिमविदंस्तवहातलज्जाः ३३ तत्तस्यतेसदसतोः परतः परस्यनांजः स्वरूपगमनेप्रभवंतिभूम्नः ब्रह्मादयः किमुतसंस्तवनेवयंतुतत्सर्गसर्गविषयाअपिशक्तिमात्रं ३४ एतत्परंप्रपश्यामोनपरंतेमहेश्वर मृडनायहिलोकस्यव्यक्तिस्तेऽव्यक्तकर्मणः ३५ श्रीशुकउवाच तद्वीक्ष्यव्यसनंतासांकृपयाभृशपीडितः सर्वभूतसुहृद्देवइदमाहसतींप्रियां ३६॥ ॥

स्यतेकामित्वंसंभवति कथंवातपसाअभितप्तस्यशांतस्योग्रत्वंपरुषत्वंवासंभवतीत्यविचार्यैवप्रलपंतीत्यर्थः ३३ आनुजातावन्नित्दस्मानांवात्नोमहांतोपितवतत्वंनजानंतीत्याहुः तत्तस्मात्तवस्वरूपस्यगमनेज्ञानेब्रह्मादयोपिनसमर्थाः संस्तवनेतुकुतः शक्तास्युः तत्रवयंकथंप्रभवामयतस्तेषांसर्गेअत्यंतावाचीनाः तथापियदेतत्तवस्तवनंतत्सर्वशक्तिपरिमितमात्रमित्यर्थः ३४ तदेवाहुः एतत्परमितिनपरंरूपंतथापितद्दर्शनादेवकृतार्थावयमि

मत्प्रभावमविचार्यैव विषपाने प्रवृत्तं मां कथंचिदियं प्रिया वारयेदिति शंकया तामनुज्ञापयन्नाह अहोवतेति सार्द्धैः
अतुर्भिः वैशसं दुःखं ३७ प्राणपरीप्सूनां प्राणरक्षणेप्सूनां मे मया प्रभोः समर्थस्य अर्थः कार्यं ३८ किंच बद्धवै

शिव उवाच अहोवत भवान्येतत्प्रजानां पश्य वैशसं क्षीरोदमथनोद्भूतात्कालकूटादुप
स्थितं ३७ आसां प्राणपरीप्सूनां विधेयमभयं हि मे एतावान् हि प्रभोरर्थो यद्दीनपरिपाल
नं ३८ प्राणैः स्वैः प्राणिनः पांति साधवः क्षणभंगुरैः बद्धवैरेषु भूतेषु मोहितेष्वात्ममाय
या ३९ पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः प्रीते हरौ भगवति प्रीयेहं सचराचरः ४०
तस्मादिदं गरं भुंजे प्रजानां स्वस्तिरस्तु मे एवमामंत्र्य भगवान् भवानीं विश्वभावनः ४१
तद्विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत ततः करतलीकृत्य व्यापि हालाहलं विषं ४२ अ
भक्षयन्महादेवः कृपया भूतभावनः तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः ४३ य
च्चकार गले नीलं तच्च साधोर्विभूषणं तप्यंते लोकतापेन साधवः प्रायशो जनाः परमा
राधनं तद्धि पुरुषस्याखिलात्मनः ४४ निशम्य कर्म तच्छंभोर्देवदेवस्य मीढुषः प्रजा दा
क्षायणी ब्रह्मा वैकुंठश्च शशंसिरे ४५॥ ॥ बद्धवैरेषु भूतेषु परस्परं जिघांसत्सु ३९ कृपयतः कृपां कुर्वतः पुंसः ४० मे
मत्तः स्वस्तिः शोभना सत्ता सुखेन जीवितमस्त्वित्यर्थः ४१ जग्धुमत्तुं करतलीकृत्य करतलपरिमितमात्रं कृत्वा

प्रस्कन्नं गलितं अपरे च ये सविषाः ते पि जगृहुः अनेन विषस्य तीव्रतोक्ता ४६ ॥ इति श्रीभागवते महापुराणे अष्ट
मस्कंधे टीकायां सप्तमोऽध्यायः ७ अष्टमे मथ्यमानेऽब्धौ लक्ष्म्या विस्तौ हृते ऽसुरैः धन्वंतरेर्हृते सोमे मोहिन्युद्भ

प्रस्कन्नं पिवतः पाणेर्यत्किंचिज्जगृहुः स्मतत् वृश्चिकाहिविषौषध्यो दंदशूकाश्च
येपरे ४६ ॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे अमृतमथने सप्तमोऽध्यायः ७
श्रीशुक उवाच पीते गरे वृषांकेण प्रीतास्तेऽमरदानवाः ममंथुस्तरसा सिंधुं हविर्धा
नी ततोऽभवत् १ तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः यज्ञस्य देवयानस्य मेध्या
य हविषे नृप २ तत उच्चैःश्रवा नाम हयोऽभूच्चंद्रपांडुरः तस्मिन्बलिः स्पृहां चक्रे नेंद्र ई
श्वरशिक्षया ३ तत ऐरावतो नाम वारणेंद्रो विनिर्गतः दंतैश्चतुर्भिः श्वेताद्रेर्हरन्भ
गवतो महिं ४ कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः तस्मिन्मणौ स्पृहां चक्रे
वक्षोऽलंकरणे हरिः ५ ततोऽभवत्पारिजातः सुरलोकविभूषणं पूरयत्यर्थिनो योऽ
र्थैः शश्वद्भुवि यथा भवान् ६ ॥ हविर्धानी सुरभिः देवयानस्य ब्रह्मलोकमार्गप्रापकस्य
यज्ञस्य संबंधिनो हविषे २ ईश्वरशिक्षया प्रागेवकृततया ३ भगवतो यः श्वेताद्रिः कैलासः तस्य महिंमा
हिमानं दंतैः शिखरतुल्यैर्हरन् चंद्रवत्पांडुर इत्यनुषंगः ४ ५ ६ ॥ ॥ ॥ ॥ ॥

वल्गुभिर्गत्यादिभिः स्वर्गिणां रमण्यः रतिकर्त्र्यः ७ सुदामा पर्वतः तत्रैकस्यां दिशि जाता सौदामनी स्फटिका
दिमयगिरिशृंगेष्वधिकं विस्फुरंती विद्युदिव कांत्या दिशो रंजयती श्रीः संपत्साक्षान्मूर्तिधारिणी सती सैव भगव
त्परा रमा आविरभूदित्यर्थः ८ तस्या रूपादिमहिम्ना आक्षिप्तं चेतो येषां ९ भगवद्वक्षसि स्थितया श्रिया विलो
कितानां देवानां यथा पूर्वं सर्वसंपत्प्राप्तिमसुराणां च तद्विपर्ययं वक्तुं अभिषेकादिमहोत्सवपूर्वकं ब्रह्मादिपरि

ततश्चाप्सरसो जाता निष्ककंठ्यः सुवाससः रमण्यः स्वर्गिणां वल्गुगतिलीलावलो
कनैः ७ ततश्चाविरभूत्साक्षाच्छ्रीरमा भगवत्परा रंजयंती दिशः कांत्या विद्युत्सौदाम
नीयथा ८ तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः रूपौदार्यवयोवर्णमहिमाक्षिप्त
चेतसः ९ तस्या आसनमानिन्ये महेंद्रो महदद्भुतं मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुंभैर्ज
लं शुचि १० आभिषेचनिका भूमिराहरत्सकलौषधीः गावः पंच पवित्राणि वसंतो म
धुमाधवौ ११ ऋषयः कल्पयांचक्रुरभिषेकं यथाविधि जगुर्भद्राणि गंधर्वा नट्यश्च
ननृतुर्जगुः १२ मेघा मृदंगपणवमुरजानकगोमुखान् व्यनादयन् शंखवेणुवीणास्तुमु
लनिःस्वनान् १३॥

॥ हारेण भगवत्प्राप्तिप्रकारमाह तस्या आसनमित्यादिना अथासीद्वारुणी त्यतः प्राक्तने
न ग्रंथेन १० आभिषेचनिकाः अभिषेकोचिताः पंच पवित्राणि पंचगव्यानि मधुमाधवौ चैत्रवैशाखभवं फलपु
ष्पादि पाठांतरेपि हृद्यं हे केपि सएवार्थः मधुमाससंभवं मध्विति वा ११ अभिषेकं अभिषेकोचितं विधिं नट्यः नटानां स्त्रियः १२

॥१४ १५ १६ १७ १८ पदंआश्रयं ध्रुवंनित्यं अव्यभिचारिणोनित्याः संतोगुणायस्मिन्तन्नान्वविंदत क्व
चित्कस्यचिद्दोषसद्भावात् १९ तदेवाह नूनमितित्रिभिः मन्युनिर्जयानास्ति दुर्वासः प्रभृतिषुगुरुशुक्रादिषुसंगव

ततोऽभिषिषिचुर्देवीं श्रियंपद्मकरांसतीं दिग्गिभाः पूर्णकलशैः सूक्तवाक्यैर्द्विजेरितैः
१४ समुद्रःपीतकौशेयवाससीसमुपाहरत् वरुणःस्रजंवैजयंतींमधुनामत्तषट्पदां
१५ भूषणानिविचित्राणिविश्वकर्माप्रजापतिः हारंसरस्वतीपद्ममजोनागाश्चकुंडले
१६ ततः कृतस्वस्त्ययनोत्पलस्रजंनदद्द्विरेफांपरिगृह्यपाणिना चचालवक्त्रंसुकपो
लकुंडलंसव्रीडहासंदधतीसुशोभनं १७ स्तनद्वयंचातिकृशोदरीसमंनिरंतरंचंद
नकुंकुमोक्षितं ततस्ततोनूपुरवल्गुसिंजितैर्विसर्पतीहेमलतेवसाबभौ १८ विलोक
यंतीनिरवद्यमात्मनःपदंध्रुवंचाव्यभिचारिसद्गुणं गंधर्वयक्षासुरसिद्धचारणत्रैपि
ष्टपेयादिषुनान्वविंदत १९ नूनंतपोयस्यनमन्युनिर्जयोज्ञानंक्वचित्तच्चनसंगवर्जितं॥
कश्चिन्महांस्तस्यनकामनिर्जयःसईश्वरःकिंपरतोव्यपाश्रयः २० धर्मःक्वचित्तत्रनभूत
सौहृदंत्यागःक्वचित्तत्रनमुक्तिकारणं॥ र्जितंज्ञानंनास्तिमहत्वेपिब्रह्मसोमादीनकामनिर्जयःपरतोव्य
पाश्रयःपरापेक्षारुद्रादिःसकिमीश्वरः २० नभूतसौहृदंपरशुरामादिषुनमुक्तिकारणंत्यागःशिबिप्रभृतिषुपुंसःकार्त्त

वीर्यमस्ति अजवेगनिष्कृतं कालवेगेन परिहृतं तु न भवति गुणसंगवर्जितः सनकादिः द्वितीयः मम वरो न हि समा
धिनिष्ठत्वात् २१ चिरायुष्यमपि मार्कंडेयादौ शीलं मंगलं नास्ति इंद्रियदमनशीलत्वात् क्वचित्तदप्यस्ति हिरण्यकशि
पुप्रभृतौ आयुषः स्थैर्यं न वेद्यं दुर्वासनं भगवत्द्वेषेणाकस्मादेव मृत्युसंभवात् यत्र कुत्र च श्रीरुद्रे मार्कंडेयादिवत्
इंद्रियदमनाद्यभावाच्छीलं मंगलं चायुर्निश्चयश्च तु भयमस्ति न चान्यः पूर्वोक्तः कश्चिद्दोषः तथापि सोप्यमंगलः
श्मशानवासाद्यमंगलचेष्टितः श्रीमुकुंदलक्षीकृत्याह कश्चेति कश्चित्तु मंगलः निरवद्यश्च स तु मां न हि कांक्ष

वीर्यं न पुंसोस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसंगवर्जितः २१ क्वचिच्चिरायुर्न
हि शीलमंगलं क्वचित्तदप्यस्ति न वेद्यमायुषः यत्रोभयं कुत्र च सोप्यमंगलः सुमंगलः
कश्च न कांक्षते हि मां २२ एवं विमृश्याव्यभिचारिसद्गुणैर्वरं निजैकाश्रयताऽगुणाश्र
यं वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुंदं निरपेक्षमीप्सितं २३॥ एते आत्मारामत्वात् २२॥

एवं विमृश्य रमा निरपेक्षमपि मुकुंदमेव वरं वव्रे तत्किं अव्यभिचारिभिः सद्भिः धर्मज्ञानादिभिर्गुणैः॥
निजैकाश्रयतया च नैरपेक्ष्येण वरं सर्वोत्तमं तत्र हेतुः अगुणाश्रयं प्रकृतिगुणातीतं पाठांतरेप्ययमेवार्थः
अत एव स्वस्य ईप्सितं किंच सर्वैर्गुणैरणिमादिभिरपेक्षितं इतं अयं भावः यद्यपि स्वयमात्मारामत्वेनान्य
निरपेक्षः तथाप्याश्रिता अणिमादिसिद्धीर्यथा नोपेक्षते तथा मामपि नोपेक्षेत तावतैव तत्सेवयाहं कृता
र्थास्मि किमन्यैः प्राकृतैरिति तमेव वृतवतीति २३ ॥ ॥

तदेवाह तस्यांसदेशेकमनीयांनवकंजमालांनिधायतदनुग्रहं प्रतीक्षमाणातूष्णींतस्पनिकटेतस्थौकथं
भूतांमालांमाद्यंतोयेमधुव्रताः तेषांवरूथस्यगिराउपघुष्टांनादितां कथंभूताश्रीः सव्रीडहासेनविकसन्नयनं
तेननतस्यउरः स्वधामयातासती वक्षः प्रतीक्षमाणातस्थावित्यर्थः २४ भगवानपित्रैलोक्याभिवृद्धयेस्ववक्षसि

तस्यांऽसदेशउशतींनवकंजमालांमाद्यन्मधुव्रतवरूथगिरोपघुष्टां तस्थौनिधा
यनिकटेतदुरःस्वधामसव्रीडहासविकसन्नयनेनयाता २४ तस्याःश्रियस्त्रिजगतो
जगतोजनन्यावक्षोनिवासमकरोत्परमंविभूतेः श्रीःस्वाःप्रजाःसकरुणेननिरीक्षणेन
यत्रस्थितैधयतसाधिपतींस्त्रिलोकान् २५ शंखतूर्यमृदंगानांवादित्राणांपृथुकुस्वनः
देवानुगानांसस्त्रीणांनृत्यतांगायतामभूत् २६ ब्रह्मरुद्रांगिरोमुख्याःसर्वेविश्वसृजोऽ
विभुं ईडिरेऽवितथैर्मंत्रैस्तल्लिंगैःपुष्पवर्षिणः २७ श्रियाविलोकितादेवाःसप्रजाप
तयःप्रजाः शीलादिगुणसंपन्नालेभिरेनिर्वृतिंपरां २८ निःसत्वालोलुपाराजन्निरुद्यो
गागतत्रपाः यदाचोपेक्षितालक्ष्म्याबभूवुर्दैत्यदानवाः २९ ॥ ॥ ६ ॥ ६ ॥

स्याःस्थानंदत्तवानित्याह तस्याइति विशिष्टाभूतयोविभवायस्याः तथात्रिजगतोजनन्याः श्रियः परमंसुस्थि
रं ऐधयतअवर्द्धयत २५ २६ तल्लिंगैर्विष्णुप्रतिपादकैः अवितथैर्यथार्थैः २७ २८ २९ ॥ ॥

८

भा॰ अ॰ वारुणीवरुणदेवत्यंयदन्नंतन्मयीसुरा ३० ३१ दीर्घौपीवरौदोर्दंडौयस्य कंबुग्रीवः शंखनाभिरिवत्रिरेखासु
२५ रेखाग्रीवायस्य ३२ स्निग्धः कुंचितः केशानामंतोयस्य ३३ ३४ इज्यभाक्यज्ञभागभोक्ता अमृतेनआभृतं

अथासीद्वारुणीदेवीकन्या —— कमललोचना असुराजगृहुस्तांवैहरेरनुमतेनते ३०
अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः उदतिष्ठन्महाराजपुरुषःपरमाद्भुतः ३१
दीर्घपीवरदोर्दंडः कंबुग्रीवोऽरुणेक्षणः श्यामलस्तरुणः स्रग्वीसर्वाभरणभूषितः ३२
पीतवासामहोरस्कः सुमृष्टमणिकुंडलः स्निग्धकुंचितकेशांतःसुभगःसिंहविक्रमः
३३ अमृतापूर्णकलशंबिभ्रद्वलयभूषितःसवैभगवतःसाक्षात्विष्णोरंशांशसंभवः ३४
धन्वंतरिरितिख्यातआयुर्वेददृगिज्यभाक् तमालोक्यासुराःसर्वेकलशंचामृताभृतं।
३५ लिप्संतःसर्ववस्तूनिकलशंतरसाहरन् नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाज
ने ३६ विषण्णमनसोदेवाहरिंशरणमाययुः इतितद्दैन्यमालोक्यभगवान्भृत्यकामकृ
त् माखिद्यतमिथोऽर्थंवःसाधयिष्येस्वमायया ३७ मिथःकलिरभूत्तेषांतदर्थतर्षचेत

परिपूर्णं ३५ ३६ मिथः दैत्यानांपरस्परंकलहोत्पादनेनयोगमाययाचमोहिन्यावोऽर्थंसा((सा॥
धयिष्यामिअतोमाखिद्यतेत्याहेतिशेषः ३७ तदेवाह मिथइति तर्षः कामः ततयुक्तानिचेतांसियेषां॥

राम
२५

इत्येवंसमबलानांकलिरभूत् ३८ दुर्बलानांत्वाक्रोशप्रकारमाह देवाइतिद्वाभ्यां येदेवाःतुल्येनायासेनहेतवः साधकाः तुल्यश्चायासोहेतुश्चधनादिर्येषामितिवा सत्रयागेयथासर्वेषांसमंफलंतद्वत् तथाचश्रुतिः ऋद्धिकामाः सत्रमासीरन्निति येयजमानास्तेऋत्विजइतिच ३९ ४० ४१ तद्रूपंवर्णयतिपंचभिः प्रेक्षणीयमुत्पलमिवश्यामं सर्वेष्ववयवेषुसुंदरं समानयोःकर्णयोराभरणेयस्मिन् सुकपोलंचतदुन्नतनासिकंचाननंयस्मिन् ४२ नवयौवन

अहंपूर्वमहंपूर्वंनत्वंनत्वमितिप्रभो ३८ देवाःस्वंभागमर्हंतियेतुल्यायासहेतवः सत्रयागइवैतस्मिन्नेषधर्मःसनातनः ३९ इतिस्वान्प्रत्यषेधन्वैदैतेयाजातमत्सराः दुर्बलाःप्रबलानराजन्गृहीत्वाकलशान्मुहुः ४० एतस्मिन्नंतरेविष्णुःसर्वोपायविदीश्वरः योषिद्रूपमनिर्देश्यंदधारपरमाद्भुतं ४१ प्रेक्षणीयोत्पलश्यामंसर्वावयवसुंदरं समानकर्णाभरणंसुकपोलोन्नसाननं ४२ नवयौवननिर्वृत्तस्तनभारकृशोदरं मुखामोदानुरक्तालिझंकारोद्विग्नलोचनं ४३ बिभ्रत्सुकेशभारेणमालामुत्फुल्लमल्लिकां सुग्रीवकंठाभरणंसुभुजांगदभूषितं ४४ विरजांबरसंवीतनितंबद्वीपशोभया॥ ६ ॥

निर्वृत्तयोःस्तनयोर्भारेणचकृशमुदरंयस्मिन् ४३ सुष्ठुग्रीवायस्मिन् कंठेआभरणंयस्मिन् तच्चतच्चशोभना ग्रीवायेनतत्कंठाभरणंयस्मिन्नितिवा सुभुजयोरंगदाभ्यांभूषितं ४४ विरजांबरेणसंवीतोनितंबएवद्वीपः विशालत्वात्तत्रशोभायस्याः तयाकाञ्च्याप्रकर्षेणविलसत्॥ ६ ॥ ९ ६ ९ ॥ ६ ॥

वल्गुयया भवत्येवं चलतोश्चरणयोर्नूपुरे यस्मिन् ४५ सव्रीडेन स्मितेन सह विक्षिप्ता कंपिता या भ्रूः तस्या विलासेन सहयान्यवले॰कितानि तैः दैत्ययूथपानां चेतः सुमुहुर्मुहुः काममुद्दीपयन् ४६ इति श्रीभागवते महापुराणे अष्टमस्कंधे टीकायां अष्टमोध्यायः ८ नवमे मोहिनि तैर्दैत्यैरर्पिते ऽमृतभाजने तद्वंचनेन देवेभ्यो ऽमृतं दत्तं नययेर्यत्ते १ १ अहो रूपं सौंदर्यं धाम द्युतिः इति वदंतः का त्वमित्यादि पप्रच्छुः २ मथ्नंतीव क्षोभयंतीव ३ कस्यासीत्ययुक्तमुक्तम।

कांच्या प्रविलसद्वल्गु चलच्चरणनूपुरं ४५ सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः ४६ इति श्रीभागवते महापुराणे अष्टमस्कंधे। अष्टमोध्यायः ८ श्रीशुक उवाच तेन्योन्यतो ऽसुराः पात्रं हरंतस्त्यक्तसौहृदाः क्षिपंतो दस्युधर्माण आयांतीं ददृशुः स्त्रियम् १ अहो रूपमहो धाम अहो अस्या नवं वयः इ ति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः २ का त्वं कंजपलाशाक्षि कुतो वा किं चिकीर्षसि कस्यासि वद वामोरु मथ्नंतीव मनांसि नः ३ न वयं त्वा ऽमरैर्दैत्यैः सिद्धगंधर्वचारणैः नास्पृष्टपूर्वां जानीमो लोकेशैश्च कुतो नृभिः ४ नूनं त्वं विधिना सुभ्रूः प्रेषितासि शरीरि

स्त्रीभिः यतस्त्वं न केन वित्तभुक्तपूर्वेत्याहुः नेति द्वाभ्यां त्वा त्वां अमरादिभिरस्पृष्टपूर्वां न जानीमः इ ((णां)।
तिन अपि तु जानीम एव ४ अस्माभिर्दत्वद्दर्शनं त्वीश्वरेणैव संपादितमित्याहुः नूनमिति सर्वेंद्रियाणां च



मनसश्च प्रीतिं विधातुं स कृपनेन प्रेषितासि

किंवायदृच्छयैवागताऽसिनैवंनूनंप्रेषितैवेत्यर्थः ५।६ भेदोविग्रहोयथानभवेत्तथा ७।८ संगताअनुसरंताः ९ १० हेसुरद्विषः भावेनकेनाप्यभिप्रायेणगंभीरंयथाभवत्येवंजहसुः ११ ईषत्स्मितेनशोभायस्यास्तयामयाकृतं॥

सर्वेंद्रियमनःप्रीतिं विधातुंसघृणेनकिं ५ सावर्णानांस्पर्द्धमानानामेकवस्तुनिभामिनि ज्ञातीनांबद्धवैराणांशंविधत्स्वसुमध्यमे ६ वयंकश्यपदायादाभ्रातरःकृतपौरुषाः विभजस्वयथान्यायंनैवभेदोयथाभवेत् ७ इत्युपामंत्रितोदैत्यैर्मायायोषिद्वपुर्हरिः प्रहस्यरुचिरापांगैर्निरीक्षन्निदमब्रवीत् ८ श्रीभगवानुवाच कथंकश्यपदायादाः पुंश्चल्यांमयिसंगताः विश्वासंपंडितोजातुकामिनीषुनयातिहि ९ शालावृकाणांस्त्रीणांचस्वैरिणीनांसुरद्विषः सख्यान्याहुरनित्यानिनूत्नंनूत्नंविचिन्वतां १० श्रीशुकउवाच इतितेक्ष्वेलितैस्तस्याआश्वस्तमनसोऽसुराः जहसुर्भावगंभीरंददुश्चामृतभाजनं ११ ततोगृहीत्वाऽमृतभाजनंहरिर्बभाषईषत्स्मितशोभयागिरा यद्यभ्युपेतंक्वचसाध्वसाधुवाकृतंमयावोविभजेसुधामिमां १२ इत्यभिव्याहृतंतस्याआकर्ण्यासुरपुंगवाः अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत १३ अथोपोष्यकृतस्नानाहुत्वाचहविषाऽनलं दत्वागोविप्रभूतेभ्यःकृतस्वस्त्ययनाद्विजैः १४॥ एतत्साध्वसाधुवायद्यभ्युपेतंअंगीकुरुततर्हिविभजे १२ असुरपुंगवाःदैत्यश्रे

यथोपजोषं यथाप्रीति अहतस्य लक्षणं अहतं यंत्रनिर्मुक्तं उक्तं वासः स्वयंभुवा शस्तं तन्मांगलिकेषु तावन्मात्रेन सर्वदा प्रागग्रेषु कुशेषु विविशुः १५ धूपैरामोदितायां सुरभीकृतायां शालायाम् १६ अथ तस्यां शालायां हे नरेंद्र सा कलशपाणिराविवेश कथंभूता मणिवधादाकनिष्ठकरस्य करभो वहिः करभसदृशौ सुवृत्तावूरू यस्याः सा उशत्कमनीयं दुकूलं यस्मिन् तेन श्रोणीतटेन विशालया श्रोण्या अलसा मंदा गतिर्यस्याः सा पाठांतरे करभसदृशयोरूर्वोर्लसत् दुकू

यथोपजोषं वासांसि परिधायाहतानि ते कुशेषु प्राविशन्सर्वे प्रागग्रेष्वभिभूषिताः १५ प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च धूपामोदितशालायां जुष्टायां माल्यदीपकैः १६ तस्यां नरेंद्र करभोरुरुशद्दुकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी सा कूजती कनकनूपुरशिंजितेन कुंभस्तनी कलशपाणिरथाविवेश १७ तां श्रीसखीं कनककुंडलचारुकर्णनासाकपोलवदनां परदेवताख्यां संवीक्ष्य संमुमुहुरुत्स्मितवीक्षणेन देवासुरा विगलितस्तनपट्टिकांतां १८ असुराणां सुधादानं सर्पाणामिव दुर्नयं मत्वा जातिनृशंसानां न तां व्यभजदच्युतः १९

लेयस्याः सा चासौ श्रोणीतटेन अलसगतिश्च मदेन विह्वले अक्षिणी यस्याः १७ तां स्त्रियः सखीं संवीक्ष्य देवासुराः संमुमुहुः कथंभूतां कनकमये कुंडले यस्याः सा चासौ चारवः कर्णादयो यस्याः सा च तां विगलितो विस्रस्तः स्तनपट्टिका यया अंतो यस्याः एवं तान्मोहयित्वा यत्कृतवान् तदाह त्रिभिः असुराणां सुधादानं सर्[illegible]दानमिव दुर्नयं अन्याय्यं मत्वा तां सुधां तेभ्यो न व्यभजत अयं भावः दैत्यैर्मदीयं सा ध्वसाधु वा सर्वमनुमतमेवातो मद्वाक्याद्देवानेव सुधां पाययिष्यामि

किंचतैर्यथान्यायं विभजस्वेत्युक्तं न चैतेभ्यो जात्यैव क्रूरेभ्यो दानं न्याय्यमतस्तेभ्यः सुधां न दद्यामिति १९ ॥

पंक्तीः पृथक्कृ विविक्ताः कल्पयित्वा विधाय तासु पंक्तिषु स्वेषु स्वेषु तत्सजातीयेषु तांश्च असुरानपि प्रतारणार्थमेवोप
वेशयामास २० उपसंचरैर्बहुमानप्रियवाक्यादिना तानतिक्रम्यातिक्रम्य गमनैर्दूरस्थानपि देवान् २१ तया
कृतः स्नेहो येषु स्त्रिया सह विवादस्य जुगुप्सया २२ कृतं अतिप्रणयः स्नेहो यैः प्रणयापायेन कातराः भीताः एतेना

कल्पयित्वा पृथक्पंक्तीरुभयेषां जगत्पतिः तांश्चोपवेशयामास स्वेषु स्वेषु च पंक्तिषु
२० दैत्यान्गृहीतकलशो वंचयन्नुपसंचरैः दूरस्थान्पाययामास जरामृत्युहरां सुधां॥
२१ ते पालयंतः समयमसुराः स्वकृतं नृप तूष्णीमासन् कृतस्नेहाः स्त्रीविवादजुगुप्स
या २२ तस्यां कृतातिप्रणयाः प्रणयापायकातराः बहुमानेन चावद्धा नोचुः किंचन विप्रियं २३ देवलिंगप्रतिच्छन्नः स्वर्भानुर्देवसंसदि प्रविष्टः सोमम पिबच्चंद्राकीभ्यां च सूचितः
२४ चक्रेण क्षुरधारेण जहार पिबतः शिरः हरिस्तस्य कबंधस्तु सुधयाऽप्लावितोऽपतत् २५
शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत् यस्तु पर्वणि चंद्राकीवभिधावति वैरधीः २६
पीतप्रायेऽमृते देवैर्भगवान्लोकभावनः पश्यतामसुरेंद्राणां स्वरूपं जगृहे हरिः २७ ॥

वल्कपणाः [illegible]वाकिंचित्स्विंतु पूर्सतु धीराः क्षणं प्रतीक्षध्वमित्यादि बहुमानेन आवद्धाः नियंत्रिताः समयपालनादि
भिः षड्भिरेतैः कारणैरप्रियं किंचिदपि नोचुः किंतु तूष्णीमासन् २३ देवपंक्तौ चंद्रार्कयोर्मध्ये प्रविष्टः सोमममृतमपिवत् २४

हरिभक्त्यानामेवोद्यमः फलति नान्येषामित्येवमाख्यानं तत्तात्पर्यमाह एवमिति समादेशादयो येषां हेतुर्मंदरा
द्रिः अर्थः समुद्रेक्षिप्तवीरुदादि विविधः कल्पः फलं केषांचिज्जातं केषांचिन्नेति वैचित्र्यं येषां ते फलवैषम्यवंतो
बभूवुरित्यर्थः तदेवाह तत्रतेषु यस्य पादपंकजरजः आश्रयणाद्देवा अमृतं फलमापुः स एव सेव्य इत्यर्थः यन्न दैत्यानि
त्यसंबंधात् २८ एतदेवोपपादयति यदिति असुः प्राणः वसु धनं प्राणादिभिर्देहात्मजादिषु नृभिर्यत् युज्यते
प्रयुज्यते देहाद्यर्थं यत्क्रियत इत्यर्थः तदसत् व्यर्थं भवति कुतः पृथक्त्वात् भेदाश्रयत्वात् शाखानिषेचनवत् तै

एवं सुरासुरगणाः समदेशकालहेत्वर्थकर्ममतयोपि फले विकल्पाः तत्रामृतं सुरग
णाः फलमंजसापुर्यत्पादपंकजरजःश्रयणान्न दैत्याः २८ यद्युज्यतेऽसुवसुकर्म
मनोवचोभिर्देहात्मजादिषु नृभिस्तदसत्पृथक्त्वात् तैरेव सद्भवति यत्क्रियतेऽपृथ
क्त्वात्सर्वस्य तद्भवति मूलनिषेचनं यत् २९॥ इति श्रीभागवते महापुराणे अष्टमस्कं
धे अमृतमथने नाम नवमोध्यायः ९ श्रीशुक उवाच इति दानववैतेयानाविंदन्नमृतं नृ

व प्राणादिभिरीश्वरोद्देशेन यत्क्रियते तत्तु सत् महाफलं भवति अपृथक्त्वात् ईश्वरस्य सर्वत्रानुगतत्वात् तत्र दृष्टां
तः यत्तरोर्मूले निषेचनं तत् यथा सर्वस्य स्कंधशाखादेरपि भवतीति यद्वा त्वद्भो पेपंचमौ पृथक्त्वं पर्यालोच्य भे
दहष्ट्या देहाद्युद्देशेन यत्क्रियते तदसत् अपृथक्त्वं पर्यालोच्य ईश्वरदृष्ट्या तैरेव तेष्वेव च यत्क्रियते तत्सत् भवा
तीति शेषः समाप्त २९ ॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे टीकायां नवमोध्यायः॥ ९ ॥ ❋ ॥
॥ दशमे संगरो दैत्यैरारब्धे तु मृधे सुरैः दैत्यमाया विषह्योदेवेष्वाविरभूद्धरिः १ ॥ ॥

तदेवममृतावाप्तिर्नोभक्तानामितीरितं भक्तमत्सरतः प्राणहानिः पुनरुदीर्यते २ १ २ ३ ४ रणः संग्रामः

युक्ताः कर्मणि यत्तास्च वासुदेवपराङ्मुखाः १ साधयित्वाऽमृतं राजन्पाययित्वा स्वकान् सुरान् पश्यतां सर्वभूतानां ययौ गरुडवाहनः २ सपत्नानां परामृद्धिं दृष्ट्वा ते दितिनंदनाः । अमृष्यमाणा उत्पेतुर्देवान्प्रत्युद्यतायुधाः ३ ततः सुरगणाः सर्वे सुधया पीतयैधिताः । प्रतिसंयुयुधुः शस्त्रैर्नारायणपदाश्रयाः ४ तत्र दैवासुरो नाम रणः परमदारुणः रोध स्युदन्वतो राजंस्तुमुलो रोमहर्षणः ५ तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे समासा द्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ६ शंखतूर्यमृदंगानां भेरीडमरिणां महान् हस्त्य श्वरथपत्तीनां नदतां निस्वनोऽभवत् ७ रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः हया हयै रिभाश्चेभैः समसज्जंत संयुगे ८ उष्ट्रैः केचिदिभैः केचिदपरे युयुधुः खरैः केचिद्गौरमृगैरृक्षै र्द्वीपिभिर्हरिभिर्भटाः ९ गृध्रैः कंकैर्बकैरन्ये श्येनभासैस्तिमिंगिलैः शरभैर्महिषैः खड्गैर्गो वृषैर्गवयारुणैः १० शिवाभिराखुभिः केचित्कृकलासैः शशैर्नरैः बस्तैरेके कृष्णसारैर्हंसैर न्ये च सूकरैः ११ अन्ये जलस्थलखगैः सत्वैर्विकृतविग्रहैः सेनयोरुभयो राजन्विविशु स्तेऽग्रतोऽग्रतः १२॥ ॥ उदन्वतः समुद्रस्य रोधसि तीरे बभूव ५ अन्योऽन्यं समासाद्य निजघ्नुः ६। ७।८।९।१०।११।१२॥

चित्रध्वजपटैर्दि[illegible]ताण्णांमालाभिश्वराजिभिर्देवदानववीराणांध्वजिन्यौयादसांमालाभिःसागराविवरेजतु
रितिव्रमाणामर्चिषः यादोभिरितिवासितैरमलैरातपत्रैश्चबार्हैश्चामरैश्चव्यजनैः १३ वातेनोद्धूतैरुत्तरीयैःउष्णीषै

चित्रध्वजपटै राजन् आतपत्रैः शितामलैः महाधनैर्वज्रदंडैर्व्यजनैर्बार्हचामरैः १३ वा
तोद्धूतोत्तरोष्णीषैरर्चिभिर्वर्मभूषणैः स्फुरद्भिर्विशदैःशस्त्रैःसुतरांसूर्यरश्मिभिः १४ देवदा
नववीराणांध्वजिन्यौपांडुनंदन रेजतुर्वीरमालाभिर्यादसामिवसागरौ १५ वैरोचनोबलिः
संख्ये सोऽसुराणांचमूपतिः यानंवैहायसंनामकामगंमयनिर्मितं १६ सर्वसांग्रामिकोपेतं
सर्वाश्चर्यमयंप्रभो [illegible]निर्देश्यंदृश्यमानमदर्शनं १७ आस्थितस्तद्विमानाग्र्यंस
र्वानीकाधिपैर्वृतः बाल[illegible]रेजे चंद्र इवोदये १८ तस्यासन्सर्वतोयानैर्यूथानां
पतयोऽसुराः नमुचिः शंबरोबाणोविप्रचित्तिरयोमुखः १९ द्विमूर्द्धाकालनाभोथप्रहेतिर्हे
तिरिल्वलः शकुनिर्भूतसंतापोवज्रदंष्ट्रोविरोचनः २० हयग्रीवःशंकुशिराःकपिलोमेघदुं
दुभिः तारकश्चक्रदृक्शुंभोनिशुंभोजंभउत्कलः २१ अरिष्टोऽरिष्टनेमिश्चमयश्चत्रिपुराधिपः अ
न्येपौलोमकालेयानिवातकवचादयः २२॥ सूर्यरश्मिभिः सुतरांस्फुरद्भिः १४ १५ असु
राणांयाचमूः तस्याःपतिःसबलिर्यानमास्थितः १६ १७ उदये उदयगिरिशिखरेस्थितःचंद्रइवविरेजेइतित्रया

२३ २४ स्रवंतिप्रस्रवणानियस्मिन्नितिमदधारासादृश्यं २५ नानावाहनादीनियेषांतेदेवा असुराश्च मिथोयुयु।
धुः २६ २७ द्वंद्वान्येवाह युयोधेतिसप्तभिः अस्यत आसत अयुध्यतेत्यर्थः २८ २९ सूर्योदेवएकएवशतेनब

अलब्धभागाः सोमस्यकेवलंक्लेशभागिनः सर्वएतेरणमुखेबहुशोनिर्जितामराः २३
सिंहनादान्विमुंचंतः शंखान्दध्मुर्महारवान् दृष्ट्वासपत्नानुत्सिक्तान्बलभित्कुपितोभृशम्।
२४ ऐरावतंदिक्करिणमारूढः शुशुभेस्वराट् यथास्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः २५
तस्यासन्सर्वतोदेवानानावाहध्वजायुधाः लोकपालाः सहगणैर्वाय्वग्निवरुणादयः
२६ तेऽन्योन्यमभिसंसृत्यक्षिपंतोमर्मभिर्मिथः आह्वयंतोविशंतोऽग्रेयुयुधुर्द्वंद्वयोधिनः
२७ युयोधबलिरिंद्रेणतारकेणगुहोऽस्यत वरुणोहेतिनायुध्यन्मित्रोराजन्प्रहेतिना
२८ यमस्तुकालनाभेनविश्वकर्मामयेनवै शंबरोयुयुधेत्वष्ट्रासवित्रातुविरोचनः २९
अपराजितेननमुचिरश्विनौवृषपर्वणा सूर्योबलिसुतैर्देवोबाणज्येष्ठैःशतेनच ३०
राहुणाचतथासोमः पुलोम्नायुयुधेऽनिलः निशुंभशुंभयोर्देवीभद्रकालीतरस्विनी ३१
वृषाकपिस्तुजंभेनमहिषेणविभावसुः इल्वलः सहवातापिर्ब्रह्मपुत्रैररिंदम ३२ ॥

लिसुतैः बाणोज्येष्ठोयेषांतैः ३० निशुंभशुंभाभ्यांदेवी ३१ ३२ ॥ ६ ॥ ६ ॥ ६ ॥ ❁ ॥

भा·अ· १०
३०

३३ ३४ ३५ ३६ आरोहंतीत्यारोहाः तैः सहिताः अन्येच वाहाः पूर्वंतुकेवलंगजादयउक्ताः कथंभूताः निकृत्ता वाह्वादयो येषां छिन्नानि ध्वजादीनि येषां ते ३७ तेषां देवादीनां पदाघातैः रथांगैश्च चूर्णितादायोधनात् रणभूमेः

कामदेवेनदुर्मर्षउत्कलोमातृभिःसह बृहस्पतिश्चोशनसानरकेणशनैश्चरः ३३
मरुतोनिवातकवचैः कालेयैर्वसवोऽमराः विश्वेदेवास्तुपौलोमैरुद्राः क्रोधवशैःसह ३४ तएवमाजावसुराः सुरेंद्राद्वंद्वेनसंहत्यचयुध्यमानाः अन्योन्यमासाद्यनिजघ्नुरोजसाजिगीषवस्तीक्ष्णशरासितोमरैः ३५ भुशुंडिभिश्चक्रगदर्ष्टिपट्टिशैः शक्त्युल्मुकैः प्रासपरश्वधैरपि निस्त्रिंशभल्लैः परिघैः समुद्गरैः सभिंडिपालैश्चशिरांसिचिच्छिदुः ३६ गजास्तुरंगाः सरथाः पदातयः सारोहवाहाविविधाविखंडिताः निकृत्तबाहूरुशिरोधरांघ्रयश्छिन्नध्वजेष्वासतनुत्रभूषणाः ३७ तेषांपदाघातरथांगचूर्णितादायोधनादुल्बणउत्थितस्तदारेणुर्दिशः खंद्युमणिंचछादयन्न्यवर्तताऽसृक्स्रुतिभिःपरिप्लुतात् ३८ शिरोभिरुद्धूतकिरीटकुंडलैः संरंभदृग्भिः परिदष्टदच्छदैः ॥

॥ उत्थितो रेणुर्दिशः खं द्युमणिं सूर्यं च छादयंस्तदेव स्वादेन्यवर्तत कथंभूतात् असृक्स्रुतिभिः रक्तक्षरणैः परिप्लुतात् सिक्तात् यद्वा परिप्लवनाद्धेतोर्न्यवर्तत भावे क्तः रक्तधाराणां तत्पर्यंतमुच्छलनादित्यर्थः प्रथमांतपाठे रेणोर्विशेषणं ३९ शिरोभिर्महाभुजैश्च कर

३०

प्रकर्षेणास्तृतास तीव भीकरं भूतैः शिरोभिः उद्धृतानि उत्पतितानि किरीटानि कुंडलानि च येभ्यः तैः संरंभयुक्ताः सदृशो
येषु तैः परिदष्टा दच्छदा ओष्ठा येषु तैः ३९ पतितानि यानि स्वशिरांसि तत्र तैरक्षिभिः तैः पश्यंतश्च स्वर्थः उद्यतान्या

महाभुजैः साभरणैः सहायुधैः सा प्रास्तृताभूः कुरुभोरुभिर्वभौ ३९ कबंधास्तत्र चोत्पेतुः
पश्यंतः स्वशिरोऽक्षिभिः उद्यतायुधदोर्दंडैराधावंतो भटान्मृधे ४० वलिर्महेंद्रं दशभि
स्त्रिभिरैरावतं शरैः चतुर्भिश्चतुरो वाहानेकेनारोहमार्छयत् ४१ सतानापततः शक्र
स्तावद्भिः शीघ्रविक्रमः चिच्छेद निशितैर्भल्लैरसंप्राप्तान्हसन्निव ४२ तस्य कर्मोत्तमं
वीक्ष्य दुर्मर्षः शक्तिमाददे तां ज्वलंतीं महोल्काभां हस्तस्थामच्छिनद्धरिः ४३ ततः शू
लं ततः प्रासं ततस्तोमरमृष्टयः यद्यच्छस्त्रं समादद्यात्सर्वं तदच्छिनद्विभुः ४४ ससर्जा
थासुरीं मायामंतर्धानगतोऽसुरः ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो ४५ ततो नि
पेतुस्तरवो दह्यमाना दवाग्निना शिलाः सटंकशिखराश्चूर्णयंत्यो द्विषद्बलं ४६ महो
रगाः समुत्पेतुर्दंदशूकाः सवृश्चिकाः सिंहव्याघ्रवराहाश्च मर्दयंतो महागजान् ४७

युधानि यैः तैर्दोर्दंडैर्युक्ताः ४० वाहान् ऐरावतपादरक्षकान् आरोहं गजयंतारं आर्छयन् विव्याध ४१ ४२
दुर्मर्षः असहनो वलिः ४३ ४४ ४५ टंकचैत्तीक्ष्णाग्रैः शिखरैः सहिताः ४६ ४७ ॥ ❋ ॥

४८ स्तनयित्नवश्च अंगारान्मुमुचुरित्यनुषंगः ४९ अधाक् आर्षः अधाक्षीदित्यर्थः ५० उद्धूतैस्तरंगैरावर्तै
श्च भीषणः ५१ एवमन्यैश्च दैत्यैः सृज्यमानासु ५२ यत्र यदा तत्र तदातैर्ध्यातः सन् ५३ अष्टौ आयुधयुक्ता बाहवः

यातुधान्यश्च शतशः शूलहस्ता विवाससः छिंधि भिंधीति वादिन्यस्तथा रक्षोगणाः
प्रभो ४८ ततो महाघना व्योम्नि गंभीरपरुषस्वनाः अंगारान्मुमुचुर्वातैराहतास्तन
यित्नवः ४९ सृष्टो दैत्येन सुमहान्वह्निः श्वसनसारथिः सांवर्तक इवात्युग्रो विबुधध्व
जिनीमधाक् ५० ततः समुद्र उद्वेलः सर्वतः प्रत्यदृश्यत प्रचंडवातैरुद्धूततरंगावर्त
भीषणः ५१ एवं दैत्यैर्महामायैरलक्ष्यगतिभीषणैः सृज्यमानासु मायासु विषेदुः
सुरसैनिकाः ५२ न तत्प्रतिविधिं यत्र विदुरिंद्रादयो नृप ध्यातः प्रादुरभूत्तत्र भगवा
न्विश्वभावनः ५३ ततः सुपर्णांसकृतांघ्रिपल्लवः पिशंगवासा नवकंजलोचनः॥
अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुंडलः ५४ तस्मिन्प्रविष्टेऽसु
रकूटकर्मजा माया विनेशुर्महिना महीयसः स्वप्नो यथा हि प्रतिबोध आगते हरिस्मृतिः
सर्वविपद्विमोक्षणं ५५॥ ५४ वो यस्य श्रीश्च कौस्तुभश्च अनर्घ्ये किरीटं च कुंडले च उल्लसंति श्रीकौस्तुभादीनि
यस्मिन् ५५ असुराणां कूटकर्म मंत्रादिप्रयोगः तस्माज्जाताः महिना महिम्ना हरेः स्मृतिरेव सर्वासां विपदां विमोक्षणं

द्रुमारिवाहः सिंहवाहः अहिनोत् चिक्षेप लीलयैव तद्गृहीत्वा अहनत् अहन् हे नृप ५६ यस्य चक्रेण छिन्नशिरसौ पेततुः तं तथा भूतमपि आहत्य संघट्य अंड जेंद्रं गरुडमहनत् तं हंतुं गदामुन्निन्ये इत्यर्थः आद्यो हरिः ५७ ॥ इति श्रीभागव

दृष्ट्वा मृधे गरुडवाहमिभारिवाह आविध्य शूलमहिनोदथ कालनेमिः तल्लीलया गरुडमूर्ध्नि पतद्गृहीत्वा तेनाहनन्नृप सवाहमरिं त्र्यधीशः ५६ माली सुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण छिन्नशिरसावथ माल्यवांस्तु आहत्य तिग्मगदयाऽहनदंडजेंद्रं तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाद्यः ५७ ॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे दशमोऽध्यायः १० श्रीशुक उवाच अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसः परयाऽनुकंपया जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तान्रणे यैरभिसंहताः पुरा १ वैरोचनाय संरब्धो भगवान्पाकशासनः उदयच्छद्यदा वज्रं प्रजा हाहेति चुक्रुशुः २ वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरःस्थितं मनस्विनं सुसंपन्नं विचरंतं महामृधे ३ नटवन्मूढ मायाभिर्मायेशान्नो जिगीषसि जित्वा बालान्निबद्धाक्षान्नटो हरति तद्धनम् ४ ॥

इति श्रीभागवते महापुराणे अष्टमस्कंधे टीकायां दशमोऽध्यायः १० एकादशे तु देवेषु दैत्यघाति षु नारदः देवान्वारयच्छुक्रो मृतान्दैत्यानजीवयत् ११ उदयच्छत् उन्निन्ये २ ३ निबद्धान्यक्षीणि येषां तान् बालान् जित्वा नटः कपटद्यूतेन यथा तेषां धनं हरति तथा हे मूढ मायेशान् अस्मान् जेतुं

मत्प्रभावंशृण्वित्याह आरुरुक्षंतिआरोढुमिच्छंतियेचउत्सिसृप्संतिउद्धंघयितुमिच्छंतिमोक्षमिच्छंतीत्यर्थः
अधोविधुनोमिपातयामि ५ ६ ७ कालरशनेकालयंत्रितं अतोनहृष्यंति तत्रएवंविवेकेयूयमपंडिताः

आरुरुक्षंतिमायाभिरुत्सिसृप्संतियेदिवम् तान्दस्यून्विधुनोम्यज्ञान्पूर्वस्माच्चपदादधः ५ सोऽहंदुर्मायिनस्तेद्यवज्रेणशतपर्वणा शिरोहरिष्येमंदात्मन्घटस्वज्ञातिभिःसह ६ बलिरुवाच संग्रामेवर्तमानानांकालचोदितकर्मणाम् कीर्तिर्जयोऽजयोमृत्युःसर्वेषांस्युरनुक्रमात् ७ तमिदंकालरशनंजनाःपश्यंतिसूरयः नहृष्यंतिनशोचंतितत्रयूयमपंडिताः ८ नवयंमन्यमानानामात्मानंतत्रसाधनं गिरोवःसाधुशोच्यानांगृह्णीमोमर्मताडनाः ९ श्रीशुकउवाच इत्याक्षिप्यविभुंवीरोनाराचैर्वीरमर्दनः आकर्णपूर्णैरहनदाक्षेपैराहतंपुनः १० एवंनिराकृतोदेवोवैरिणातथ्यवादिना नामृष्यत्तदधिक्षेपंतोत्राहतइवद्विपः ११ प्राहरत्कुलिशंतस्माअमोघंपरमर्दनः सयानोन्यपतद्भूमौछिन्नपक्षइवाचलः १२ सखायंपतितंदृष्ट्वाजंभोबलिसखःसुहृत् अभ्ययात्सौहृदंसख्युर्हतस्यापिसमाचरन् १३॥११॥ अनिपुणाः ८ तत्रकीर्तिजयादौआत्मानंसाधनंमन्यमानानांवोगिरोनगृह्णीमोमर्मसुताडनंयाभिस्ताः ९ विभुमिंद्रंवीरोबलिः १० तोत्रमंकुशःतेनाहतइव ११ सयानःविमानसहितः १२

यमदूतायेश्वानः सारमेयंसंसमेयंश्वानं ३७ द्रव्यविनिमये क्रयविक्रयादौ निरवकाशेनिरालंबे अवीचिशब्दार्थमाह
यत्रेति वीचिस्तरंगः तद्रहितत्वादवीचिः ३८ योविप्रस्तत्कलत्रंवासुरांपिबतिअन्योपिवाव्रतस्थः सन्राजन्योवैश्यो

येत्विहवैदस्यवोऽग्निदागरदाग्रामान्सार्थान्वाविलुंपंतिराजानोराजभटावातांश्चापि
हिपरेतान्यमदूतावज्रदंष्ट्राःश्वानःसप्तशतानिविंशतिश्चसरभसंखादंति ३७ य
स्त्विहवाअनृतंवदतिसाक्ष्येद्रव्यविनिमयेदानेवाकथंचित्सवैप्रेत्यनरकेऽवीचिमा
त्यधःशिरानिरवकाशेयोजनशतोच्छ्रायाद्गिरिमूर्ध्नः संपात्यते यत्रजलमिवस्थल
मश्मपृष्ठमवभासतेतदवीचिमत्तिलशोविशीर्यमाणशरीरोनम्रियमाणःपुनरारो
पितोनिपतति ३८ यस्त्विहवैविप्रोराजन्योवैश्योवासोमपीथस्तत्कलत्रंवासुरां
व्रतस्थोपिवापिबति प्रमादतस्तेषांनिरयंनीतानामुरसिपदाक्रम्यास्येवह्निनाद्रव
माणंकार्ष्णायसंनिषिंचंति ४० अथचयस्त्विहवाआत्मसंभावनेनस्वयमधमोज
न्मतपो॥॥ १वासोमपीथः कृतसोमपानइत्यन्वयः तयोः सोमस्थानेफलंचमसविधानात् सोमपाननिषे
धाच्च तथाचश्रुतिः न्यग्रोधस्तिभिराहृत्यताःसंपिष्यदधन्युपमृज्यतमस्मैभक्षंसंप्रयच्छेन्नसोममिति ४० सपूर्वेमपि

मृतकएवसन्मृत्वा ४१ पुरुषस्यमेधेनहिंसयाभैरवादीन्यजंतेयाश्चस्त्रियःकामरूपाःरक्षोगणाभूत्वाययेहतेपुरु

विद्याचारवर्णाश्रमवतोवरीयसोनबहुमन्येतसमृतकएवमृत्वाक्षारकर्दमेनिर
येऽवाक्शिरानिपातितोदुरंतायातनाह्यश्नुते ४१ येत्विहवैपुरुषाःपुरुषमेधेनय
जंतेयाश्चस्त्रियोनृपशून्खादंतितांश्चतेपशवइहनिहतायमसदनेयातयंतो
रक्षोगणाःसौनिकाइवस्वधितिनावदार्याऽसृक्पिबंतिनृत्यंतिगायंतिचहृष्य
माणायथेहपुरुषादाः ४२ येत्विहवाअनागसोऽरण्येग्रामेवावैस्रंभकैरुप
सृतानुपविस्रंभय्यजिजीविषून्शूलसूत्रादिषूपप्रोतान्क्रीडनकतयायातयंति
तेपिचप्रेत्ययमयातनासुशूलादिषुप्रोतात्मानःक्षुत्तृड्भ्यांवाभिहताःकंकवटादि
भिश्चेतस्ततस्तिग्मतुंडैराहन्यमानात्मकश्मलंस्मरंति ४३ येत्विहवैभूतान्युद्वे
जयंतिनराउल्बणस्वभावायथादंदशूकास्तेपिप्रेत्यनरकेदंदशूकाख्येनिपतंति॥

पादाःसंतःपूर्वमनृत्यंततद्वत् ४२ वैस्रंभकैःविश्वासोपायैःउपविस्रंभय्यविश्वास्य ४३ विलेशयान्मूषकानश्ववा

धान्यकोष्ठे सगरेणसविषेण ४४ ४५ अतिथयोऽज्ञातपूर्वाः अभ्यागताज्ञातपूर्वाःतान्‌पापेनवक्रीक्ष

यत्रनृपदंदशूकाः पंचमुखाः सप्तमुखाः उपसृत्यग्रसंतियथाविलेशयान् ४४ येत्विहवा अंधावटकुशूलगुहादिषुभूतानिनिरुंधंतितथाऽमुत्रतेष्वेवो पवेश्यसगरेणवह्निनाधूमेननिरुंधंति ४५ यस्त्विहवाअतिथीनभ्या गतान्वागृहपतिरसकृदुपगतमन्युर्दिधक्षुरिवपापेनचक्षुषानिरीक्षतेतस्या पिनिरयेपापदृष्टेरक्षिणीवज्रतुंडागृध्राः कंककाकवटादयः प्रसह्योरुबला दुत्पाटयंति ४६ यस्त्विहवाआढ्याभिमतिरहंकृतिस्तिर्यक्प्रेक्षणः सर्व तोऽभिविशंकीत्यर्थव्ययनाशचिंतयापरिशुष्यमाणहृदयवदनोनिर्वृतिमन वगतोग्रहइवार्थमभिरक्षतिसचापिप्रेत्यतदुत्पादनोत्कर्षणसंरक्षणशम ॥ ॥ ॥ लग्रहः सूचीमुखेनरकेनिपतति॥ ॥ ॥ ॥

तेन ४६ आढ्याभिमतिः धनगर्वितः अहंकृतिः श्रेष्ठोहमितिमानीतिर्यक्प्रेक्षणंयस्यसर्वतःगुर्वादेरपि

२६
भा॰पं॰
८५

धनंचोरयिष्यंतीतिविशंकमानः परिशुष्यमाणंहृदयंवदनंचयस्यअनवगतः अप्राप्तः तस्यार्थस्योत्पादनादि
भिः शमलंगृह्णातीतितथापरिवयंतिसूत्रप्रोतानकुर्वंति ४७ इतरत्रस्वर्गादौ इहमर्त्यलोकेपुनर्भवेपुनर्जन्म

यत्रहवित्तग्रहंपापपुरुषंधर्मराजपुरुषावायकाइवसर्वतोंऽगेषुसूत्रैः परिवयंति
४७ एवंविधानरकायमालयेसंतिशतशः सहस्रशः तेषुसर्वेषुचसर्वएवाधर्मा
नुवर्तिनोयेकेचिदिहोदिताअनुदिताश्चावनिपतेपर्यायेणविशंतितथैवधर्मानुव
र्त्तिनइतरत्रइहतुपुनर्भवेउभयशेषाभ्यांनिविशंतिनिवृत्तिलक्षणमार्गआदावेव
व्याख्यातः एतावानेवांडकोशोयश्चतुर्दशधापुराणेषुविकल्पितउपगीयते ४८
यत्तद्भगवतोनारायणस्यसाक्षान्महापुरुषस्यस्थविष्ठंरूपमात्ममायागुणमयम
नुवर्णितमादृतः पठतिशृणोतिश्रावयतिसउपगेयंभगवतः परमात्मनोऽग्राह्यम
पिश्रद्धाभक्तिविशुद्धबुद्धिर्वेद ४९ ॥इह निमित्तं उभयोर्धर्माधर्मयोः शेषाभ्यां आदावेवहि

राम

नीयस्कंधेवैश्वानरंयातीत्यादिनाउपगेयंउपनिषदंश्रद्धाभक्तिभ्यांविशुद्धाबुद्धिर्यस्य ४८ यथावच्छ्रुत्वा
कथंभूतासंस्थासकलानांजीवनिकायानांधामआश्रयभूतंवपुः ४९ ॥

॥

२६
भा०पं०
८६

॥ ५० ५१ पंचमस्कंधसंबंधि पदभावार्थदीपनैः प्रीयतां परमानंदनृहरिर्बालभाषितैः १ ॥ इतिश्रीभागवतेमहा

श्रुत्वास्थूलंतथासूक्ष्मं रूपंभगवतोयतिः स्थूलेनि
र्जितमात्मानंशनैःसूक्ष्मं धियानयेदिति ५० भूद्वीप
वर्षसरिदद्रिनभःसमुद्रपाता लदिङ्नरकभागणलोकसं
स्थागीतामयातवनृपाद्भु तमीश्वरस्यस्थूलंवपुःसक
लजीवनिकायधाम ५१ इतिश्रीभागवतेमहापुरा
णेपंचमस्कंधेअष्टादश साहस्र्यांसंहितायांनर
कवर्णनोनामषड्विंशतितमोध्यायः २६॥

पुराणेपंचमस्कंधेपदभावार्थदीपिकायांश्रीधरस्वामिविरचितायांपञ्चमस्कंधेषड्विंशतितमोध्यायः २६ समाप्तम्॥ राम

इदांनीदेहंत्यक्तुकामाधर्मतत्वमाह कर्णावाच्छाद्यनिर्गच्छेत् यद्यदिमंतंमारयितुंवाकल्पोनभवति कदाधर्मावितरिध
र्मरक्षकेईशेस्वामिनिअसृणिभिर्निरंकुशैर्नृभिरस्यमानेअधिक्षिप्यमाणेप्रभुःशक्तश्चेत्रुशतींअकल्याणवादिनीं
प्रसह्यबलात्छिंद्यात् ततोऽपिस्वयंप्राणान्विसृजेदितियत्सधर्मः १७ तवत्वत्तःउत्पन्नंशितिकंठोनीलकंठःतन्निं
दकात् प्रमादादापन्नस्यापवित्रस्यत्यागंविनानशुद्धिरितिदृष्टांतेनाहज ग्धस्यभक्षितस्यान्नस्योद्धरणंवमनमेवपुंसः

कर्णौपिधायनिरयाद्यदकल्पईशेधर्मावितर्यसृणिभिर्नृभिरस्यमाने छिंद्यात्प्रस
ह्यरुशतीमसतींप्रभुश्चेज्जिह्वामसूनपिततोविसृजेत्सधर्मः १७ अतस्तवोत्पन्नमिदंक
लेवरंनधारयिष्येशितिकंठगर्हिणः जग्धस्यमोहाद्धिविशुद्धिमंधसोजुगुप्सितस्योद्ध
रणंप्रचक्षते १८ नवेदवादाननुवर्ततेमतिःस्वएवलोकेरमतोमहामुनेः यथागति
र्देवमनुष्ययोः पृथक्स्वएवधर्मेनपरंक्षिपेत्स्थितः १९ ॥ ॥ ॥

विशुद्धिंप्रचक्षते १८ यदुक्तंलुप्तक्रियाशुचयइतितत्राप्याहनेतिवेदवादान् विधिनिषेधरूपान्स्वएवलोकेस्वात्मन्ये
वरममाणस्यमहतोमुनेःसम्यग्विरक्तस्यमतिर्नानुवर्ततेनिवृत्ताधिकारत्वात् अधिकारभेदेदृष्टांतः यथादेवानांगतिराका
शएवंमनुष्याणांपृथिव्यामेव अतःस्वधर्मएवप्रवृत्तिलक्षणेनिवृत्तिलक्षणेवास्थितःसन्परमन्यधर्मंपुरुषंवानक्षिपेत्न
निंदेत् व्यवस्थिताधिकारत्वेनोभयोःसत्यत्वात् नक्षिपेदेवेतिवाऽन्वयः १९ ॥ ॥ ॥

भा॰ चे॰
१९

एतदेवोपपादयन्नाह प्रवृत्तमग्निहोत्रादि निवृत्तं शमदमादि ऋतं सत्यमेव यतः वेदे आश्रितं विहितं तच्च विविच्य व्यव
स्थया आश्रितं न तु विशेषेण व्यवस्थामेवाह उभयं रागवैराग्यलक्षणं लिंगं चिह्नमधिकारिविशेषणं यस्मिन् तत् ननु
यावज्जीवमग्निहोत्रं जुहोति शान्तो दान्त इत्यादिषु नैवं व्यवस्था प्रतीयत इति सत्यं तथाप्युभयोरेकाधिकारविरोधात्तथा पर्य
वस्यतीत्याह युगपद्वा वा यौगपद्यं यौगपद्ये नैकस्मिन् कर्त्तरि तत्कर्मद्वयं विरोधि ननु तर्हि निवृत्तं कर्म शिवेनापि कर्त्तव्य
मेवेत्याह ब्रह्मणि सदाशिवे किंचिदपि कर्म न छेति न प्राप्नोति अतो यथा प्रवृत्तनिवृत्तयोः परस्परधर्माकरणेन दोषः

कर्म प्रवृत्तं च निवृत्तमप्यृतं वेदे विविच्योभयलिंगमाश्रितम् । विरोधि तद्यौगपद्यैककर्त्तरि
द्वयं तथा ब्रह्मणि कर्म नर्छति ॥ २० ॥ मावः पद्व्यः पितरस्मदास्थिता या यज्ञशालासु ना ।
धूमवर्त्मभिः तदन्नतृप्तैरसुभृद्भिरीडिता अव्यक्तलिंगा अवधूतसेविताः ॥ २१ ॥ नैतेन दे
हेन हरे कृतागसो देहोद्भवेनालमलं कुजन्मना ॥ २१ ॥

नचेश्वरे एतदुभयधर्माकरणेऽपीति भावः २०
चिताभस्मकृतस्नानः त् या नग्न इत्यादिनायो भोगाद्यभाव उक्तस्तत्राह हे पितः अस्माभिरास्थिताः आश्रिताः पद्व्यः
अणिमादिसमृद्धयः वो युष्माकं मा न संतीत्यर्थः यतो वः पद्व्यो यज्ञशालासु एव भवंति ता अतदन्नेन यज्ञगतेनान्नेन तृ
प्तैः केवलमीडिताः धूमवर्त्मभिश्च भुज्यंते या अस्मत्पद्व्यस्तास्तु नैवंभूताः किंतु अव्यक्तलिंगा अव्यक्तं लिंगं हेतुर्यासां इ
च्छामात्रप्रभवत्वात् अवधूतैः ब्रह्मविद्भिः सेविताः अतोऽहमाढ्यो रुद्रो दरिद्र इति गर्वं माकृथा इति भावः २१ किंब
हुनोक्तेन इदं देहं त्यक्ष्याम्येवेत्याह द्वाभ्यां एतेन नालं न पूर्यते किं अपि त्वलमेव कथंभूतेन कुजन्मना तदेवाह हरेः कृता

रामः
१५

पराधस्यतवदेहाद्दुर्भूतेनेनउत्पन्नेनेनतु श्लाघ्योयंदेहः कथंत्याज्यस्तत्राह कुजनकस्यतवप्रसंगतः संबंधात्समलज्जाऽभूत् अतोयोमहतांमप्रियकर्त्तानस्मादुत्पन्नमेतद्धिक् त्वत्संबंधादश्लाघ्यमित्यर्थः २२ किंचपरिहासादिषुद्विनोदेनापिदाक्षायणीतिसंबोधयन्त्वदीयंनत्संबंधवाचकंगोत्रंनामयदावृषध्वजश्राहगृह्णातितदाऽहंव्यपेतनर्मस्मितंयथाभवत्येवं

श्रीरममाभूत्कुजनप्रसंगतस्तज्जन्मधिक्योमहतामवद्यकृत् २२ गोत्रंत्वदीयंभगवान्वृषध्वजोदाक्षायणीत्याहयदासुदुर्मनाः व्यपेतनर्मस्मितमाशुतदाहंव्युत्स्रक्ष्यएतत्कुणपंत्वदंगजम् २३ श्रीमैत्रेयउवाच इत्यध्वरेदक्षमनूद्यशत्रुहन्क्षितावुदीचींनिषसादशांतवाक् स्पृष्ट्वाजलंपीतदुकूलसंवृतानिमील्यदृग्योगपथंसमाविशत् २४ कृत्वासमानावनिलौजितासनासोदानमुत्थाप्यचनाभिचक्रतः शनैर्हृदिस्थाप्यधियोरसिस्थितंकंठाद्भ्रुवोर्मध्यमनिंदिताऽनयत् २५ एवंस्वदेहंमहतांमहीयसामुहुःसमारोपितमंकमादरात् जिहासतीदक्षरुषामनस्विनीदधारगात्रेष्वनिलाग्निधारणाम् २६॥ ॥सुदुर्मनाअतिदुःखितचित्ताभवामि ततस्माद्धितिष्ठितंसतत्कुणपप्रायंव्युत्स्रक्ष्येत्यक्षामि २३ दक्षंप्रत्यनुवादंकृत्वाशत्रुहन्क्रोधादिरिपुघातिन् उदीचींउदीच्यांदिशिपाठांतरेउदङ्मुखीशांतवाक् गृहीतमौनाजलंस्पृष्ट्वा आचम्य दृक्दृशौ २४ योगमार्गमेवाह कृत्वेति अनिलौप्राणापानौद्वंद्वीधोदितौनिरोधेनसमानौएकरूपौ नाभिचक्रेकृत्वाततउदानमुत्थाप्यधियासहहृदिस्थापयित्वाकंठमार्गेणभ्रुवोर्मध्यम

४
भा॰ च॰
९५

चरणांबुजे आसवे भजनानंदं भर्तुरपरं न ददर्श देहश्च सद्यः प्रज्वलितो ऽमृतसमाधिना योऽग्निस्तेन २७ खे भुवि च हाहे॥
त्यादिवादः तमेवाह हंतेति विषादे दैवतमस्य पूज्यतमस्य प्रिया केन दक्षेण प्रकोपिता सती २८ महदनात्म्यं दौर्जन्यं अस्य
सर्वत्रस्तेह एव नात्म्य इत्याहुः यस्येति येन विमता अवज्ञाता २९ दुर्मर्षं अत्यसहनं हृदयं यस्य लोके जनमध्ये च शब्दा

ततः स्वभर्तुश्चरणांबुजासवं जगद्गुरोश्चिंतयती न चापरं ददर्श देहो हतकल्मषा सती
सद्यः प्रजज्वाल समाधिजाग्निना २७ तत्पश्यतां खे भुवि चाद्भुतं महद्धा हेति वादः सुमहा
नजायत हंत प्रिया दैवतमस्य देवी जहावसून्केन सती प्रकोपिता २८ अहो अनात्म्यं
महदस्य पश्यत प्रजापतेर्यस्य चराचरं प्रजाः जहावसून्यद्विमता ऽत्मजा सती मनस्विनी मा
नमभीक्ष्णमर्हति २९ सो ऽयं दुर्मर्षहृदयो ब्रह्मध्रुक् च लोके ऽपकीर्तिं महतीमवाप्स्य
ति यदङ्गजां स्वां पुरुषद्विडुद्यतां न प्रत्यषेधन्मृतये ऽपराधतः ३० वदत्येवं जने सत्या द
ष्ट्वा ऽसुत्यागमद्भुतं दक्षं तत्पार्षदा हंतुमुदतिष्ठन्नुदायुधाः ३१ तेषामापततां वेगं निशाम्य भ
गवान्भृगुः यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ३२॥

राधतः स्वावज्ञया मृतये मरणायोद्यतां न निवारितवान् पुरुषद्विट् शिवद्वेषी ३० अद्भुतं दृष्ट्वाच ३१ यज्ञघ्नान्हं
तीति यज्ञघ्नघ्नं तेन अपहतं रक्ष इत्यादिना ३२

रामः
९५

अध्वर्युणा भृगुणा येतपसा सोमं प्राप्ताः ऋभवोनामदेवाउत्थिताः ३३ ब्रह्मतेजसाउशद्भिर्दीप्यमानैः ३४ इतिश्रीभागवतेमहा
पुराणेचतुर्थस्कंधेटीकायांचतुर्थोऽध्यायः ४ पंचमेतुसतीदेहत्यागमाकर्ण्यशंकरः वीरभद्रंरुषोत्पाद्यतेनदक्षमघात
यत् १ प्रजापतेर्हेतोर्निधनं कुतः तेनासत्कृतत्वकृतायाः तस्याध्वरेयेऋभवोदेवास्तैः १ सधूर्जटिः रुद्रः घोरः सन्जटामु

अध्वर्युणाहूयमानेदेवाउत्पेतुरोजसा ऋभवोनामतपसासोमंप्राप्ताः सहस्रशः ३३
तैरलातायुधैः सर्वेप्रमथाः सहगुह्यकाः हन्यमानादिशोभेजुरुशद्भिर्ब्रह्मतेजसा ३४॥
इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेसतीदेहोत्सर्गश्चतुर्थोऽध्यायः ४ श्रीमैत्रेयउवाच
भवोभवान्यानिधनंप्रजापतेरसत्कृतायाअवगम्यनारदात् स्वपार्षदसैन्यंचतदध्वरर्भु
भिर्विद्रावितंक्रोधमपारमादधे १ क्रुद्धः सुदष्टौष्ठपुटः सधूर्जटिर्जटांतडिद्वह्निसटोग्ररोचिषं उ
त्कृत्यरुद्रः सहसोत्थितोहसन् गंभीरनादोविससर्जतांभुवि २ ततोऽतिकायस्तनुवास्पृशन्
दिवंसहस्रबाहुर्घनरुक् त्रिसूर्यदृक् करालदंष्ट्रोज्वलदग्निमूर्द्धजः कपालमालीविविधोद्यता
युधः ३ ॥ ए. उत्कृत्योत्पाट्योत्थितः सन् तांभुविविससर्ज सुदष्टओष्ठपुटोयेननडितांबह्नीनांचसटाज्वालास्तद्व

तदुग्ररोचिर्यस्यास्तां २ ततोजटायाः सकाशात् अतिकायोवीरभद्रोजातइतिशेषः तनुवातत्वाद्देहेनदिवंस्पृशन् अभ्रा
त्पुंचवरस्तस्यः घनरुक्मेघसवर्णः त्रयः सूर्याइवदृशोयस्यकरालास्तुगादंष्ट्रायस्यज्वलदग्निरिवमूर्द्धजायस्यकपालमालापु

५
भा॰ च॰
९६

हे रुद्र हे भटयुद्धकुशल मद्भटानां त्वमग्रणीः सन् सयज्ञं दक्षं जहि ब्रह्मतेजो दुर्जयमिति माऽमंस्थाः यतस्त्वं मे
अंशकः ४ मन्युना रुद्रेण परिचक्रमे प्रदक्षिणीचकार असंगमप्रतिघातं यत् रंहो वेगः तेन भो नात महीया॥
यसां बलीयसामपि सहः सहिष्णुबलं सोढुं क्षमं मेने ५ जगदंतको मृत्युः तस्माप्यंतकं शूलं घोषयंति शब्दं कुर्वं

तं किं करोमीति गृणंतमाह बद्धांजलिं भगवान् भूतनाथः दक्षं सयज्ञं जहि मद्भटानां
त्वमग्रणी रुद्र भटांशको मे ४ आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे विभुम्
मेने तदात्मानमसंगरंहसा महीयसां तात सहः सहिष्णुम् ५ अन्वीयमानः सह रुद्रपार्षदै
र्भृशं नदद्भिर्व्यनदत्सुभैरवं उद्यम्य शूलं जगदंतकांतकं स प्राद्रवद्घोषणभूषणांघ्रिः
६ अथ र्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुं तमः किमेतत्कुत एतद्र
जोऽभूदिति द्विजा द्विजपत्न्यश्च दध्युः ७ वाता न वांति न हि संति दस्यवः प्राचीनबर्हिर्जी
वति होग्रदंडः गावो न काल्यंत इदं कुतो रजो लोकोऽधुना किं प्रलयाय कल्पते ८॥ ❋ ॥

नो नि घोषणा निं नूपुरादीनि भूषणानि ययोस्तावंघ्री यस्य सः ६ ककुभि दिशि तमो न भवति किंतु रज इति ज्ञा
त्वा हुः रज एतत्कुतो भूतं दध्युः चिंतयामासुः ७ हे लं न रासं भवेन्नौत्पाति कं कल्यंतिवाताइति दस्यूनामभावे हेतुः
प्राचीनबर्हिस्तदानींतनो राजा जीवतीति न काल्यंते न शीघ्रं नीयंते ८ ॥ ❦❦ ॥ ❋ ॥

स्कं॰ ४
९६

प्रसूः निर्दक्षपत्नी सा मिश्रा मुख्या यासां विपाकः फलं पश्यंतीनामिति तस्माद्दुःखाधिक्ये हेतुः अवदध्यौ अवज्ञातवान् अ
नागाम् अनागसं ९ न चेदं सुतावज्ञामात्रं किं तु रुद्रावज्ञानं च अतो नास्य भद्रं भविष्यतीत्याहुः यस्त्विति द्वाभ्यां व्युप्तो विकीर्णो
जटाकलापो यस्य स्वस्थूलस्य सूच्या अग्रे अर्पितः प्रोताः दिग्गजेंद्रा यस्य उदितानि समुन्नमितानि अस्त्राणि यैस्ते दोषा वाहवए।
ध्वजास्तान्वितत्य हर्षेण नृत्यति उच्चैः अट्टहासः कठोरो हासस एव स्तनयित्नुर्गर्जितं तेन भिन्ना विदीर्णा दिशो येन सः १०

प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ताः ऊचुर्वियाको वृजिनस्यैष तस्य यत्पश्यंतीनां दुहितॄणां
प्रजेशः सुतां सतीम् अवदध्याव नागाम् ९ यस्त्वंतकाले व्युप्तजटाकलापः स्वशूलसूच्या-
र्पितदिग्गजेंद्रः वितत्य नृत्यत्युदितास्त्रदोर्ध्वजानुच्चाट्टहासस्तनयित्नुभिन्नदिक् १० अ-
मर्षयित्वा तमसह्यतेजसं मन्युप्लुतं दुर्विषहं भ्रुकुट्या करालदंष्ट्राभिरुदस्तभागणं स्यात्स्व-
स्ति किं कोपयतो विधातुः ११ बह्वेवमुद्विग्नदृशोच्यमाने जनेन दक्षस्य मखे महात्मनः
उत्पेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्यक् १२ ॥ ॥ ॥

अमर्षयित्वा असहनयुक्तं कृत्वा मन्युप्लुतं क्रोधव्याप्तं उदस्तः विक्षिप्तो भागणो नक्षत्रसंघो येन पुनश्च तं कोपयंतो वि-
धातुरपि किं स्वस्ति स्यात् तस्य दक्षस्य का कथा ११ उद्विग्ना प्रचलिता दृक् यस्य तेन जनेन बह्वित्थं यथा भवत्येवमुच्यमा-
ने सति उत्पाततमाः महोत्पाताः उत्थिताः पर्यक् सर्वतः अकथं भूताः महात्मनोऽपि दक्षस्य भयावहाः १२ ॥ ❀ ॥

नानाश्वायुधानि येषां वामनकैः ह्रस्वैः उद्यतायुधैः पिंगैः कपिलैः पिशंगैः पीतैः मकरस्येवोदरमाननं च येषां तैः परितो धा
वद्भिः अवरुद्धः १३ यज्ञशालायाः पूर्वपश्चिमस्तंभयोः अर्पितं पूर्वपश्चिमायतं काष्ठं प्राग्वंशः तं यज्ञशालायाः पश्चिम
तः पत्नीशालां तां यज्ञशालायाः पुरतः स्थितं सदो मंडपं सदसः पुरतो हविर्धानं तस्योत्तरत आग्नीध्रशालां तद्विहारं यज

तावत्सरुद्रानुचरैर्मखो महान्नानायुधैर्वामनकैरुदायुधैः पिंगैः पिशंगैर्मकरोदराननैः
पर्याद्रवद्भिर्विदुराऽन्वरुध्यत १३ केचिद्बभंजुः प्राग्वंशं पत्नीशालां तथा परे सद आग्नी
ध्रशालां च तद्विहारं महानसम् १४ रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् कुंडेष्व
मूत्रयन्केचिद्बिभिदुर्वेदिमेखलाः १५ अबाधंत मुनीनन्य एके पत्नीरतर्जयन् अ
परे जगृहुर्देवान्प्रत्यासन्नान्पलायितान् १६ भृगुं बबंध मणिमान्वीरभद्रः प्रजापतिं चंडी
शः पूषणं देवं भगं नंदीश्वरोऽग्रहीत् १७ सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः तैरर्
द्यमानाः सुभृशं ग्रावभिर्नैकधाद्रवन् १८ जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान्भवः।
भृगोर्लुलुंचे सदसि योऽहसत्श्मश्रु दर्शयन् १९ ॥ एमानगृहं महानसं पाकभोजनशालां १४ रुरुजुः

बभंजुः उत्तरवेद्याः मेखलाः सीमासूत्राणि आज्ञा गुरूणां ह्यविचारणीया इति हेतोर्नैते दोषभाजिन इति भावः १५ प्र
त्यासन्नान पलायितान् समीपस्थान् पलायितानपि जगृहुः १६ १७ ग्रावभिरर्द्यमानाः नैकधा अनेकधा दुद्रुवुः १८

स्रुवो हस्ते यस्य भवो वीरभद्रः लुलुंचे उत्पाटितवान् १९ ॥

उज्जहार उद्धृतवान् सदस्यः सभायां स्थितः सन् शपंतं शिवनिंदां कुर्वंतं दक्षं अक्ष्णा अक्षिसंकोचेन असूसुचत् प्रेरितवान् २०
कलिंगदेशराजस्यानिरुद्धो द्यूते बलभद्राय यथाघूते दंतान्पातितवान् गरिमणि गुरुतरे रुद्रे निंद्यमाने दतः दंतान् दर्शयन् यो जहास पूष्णो रिति पाठे द्विवचनमैंद्रापौष्णश्चरुर्भवतीत्यत्र अन्यसहितस्यापि पूष्णो दंतपातप्राप्त्यर्थं सूचितवान् तथाहि पूषा प्रपिष्टभागो ऽदंतको हि तेस्वा अब्रुवन्निति विहितस्य पेषणस्य द्विदेवत्याभावात् तत्र तस्य दंताः संतीति वक्तव्यं स्यात् न चैतत् त्वंगच्छ

भगस्य नेत्रे भगवान् पातितस्य रुषा भुवि उज्जहार सदस्थोऽक्ष्णा यः शपंतमसूसुचत् २० पूष्णो ह्यपातयद्दंतान्कालिंगस्य यथा बलः शप्यमाने गरिमणि यो ऽहसद्दर्शयन्दतः २१ आक्रम्योरसि दक्षस्य शितधारेण हेतिना छिंदन्नपि तदुद्धर्तुं नाशक्नोत् त्र्यंबकस्तदा २२ शस्त्रैरस्त्रान्वितैरेवमनिर्भिन्नत्वचं हरः विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरं २३ दृष्ट्वा संज्ञपनं योगं पशूनां स पतिर्मखे यजमानपशोः कस्य कायात्तेनाहरच्छिरः २४ साधुवादस्तदा तेषां कर्म तत्तस्य शंसतां भूतप्रेतपिशाचानामन्येषां तद्विपर्ययः २५॥

ननु तस्याशंक्यत त्रापि तस्य दंतपातो ऽवस्थाभेदे प्रवृत्तेन द्विवचनेन न ज्ञाप्यते अत एव पूष्णो ऽनुग्रहं दंडे धावत्स्यति पूषा तु यजमानस्य दद्भिर्भक्षतु पिष्टभुगिति केवलस्य तु प्रपिष्टभुक् भविष्यति अन्यसहितस्य यजमानस्य दद्भिर्भक्षयिष्यतीत्यर्थः २१ छिंदन्नपि त्वक् शिरस उपरि त्यक्तो भविष्यति त्र्यंबकोवीरभद्रः २२ अस्त्रान्वितैर्मंत्रसहितैः न निर्भिन्ना त्वक् यस्य तथाभूतं दृष्ट्वा तिशेष २३ स पशूनां पतिः संज्ञपनं योगं कंठनिष्पीडनादि समारणोपायं दृष्ट्वा तेनोपायेनाहरत् २४ अन्येषां ब्राह्मणादीनां तद्विपर्ययः असाधुवा

गुह्यकालयं कैलासम् २६ इति चतुर्थे टीकायां पंचमः ५ ष्ठेतु देवसंघेन सह गत्वा भवं विधिः सांत्वयामास दक्षाद्विजीविताद्यर्थ मादरात् १ अथ देवगणाः स्वयंभुवे न्यवेदयन्निति द्वितीयेनान्वयः १ शूलादिभिः संछिन्नानि त्रुटितानि भिन्नानि विदीर्णान्यंगानि येषां सहस्रत्विग्भिः सभ्यैश्च वर्त्तमानाः २ कयंदक्षस्य यज्ञे ब्रह्मा विष्णुश्च नेयतुः न जग्मतुः यत्राहृद्धकोय।

गुहावैतच्छिरस्तस्मिन्दक्षिणाग्नावमर्षितः तद्देवयजनं दग्ध्वा प्रातिष्ठद्गुह्यकालयं २६ इति श्रीभागवते महापुराणे चतुर्थस्कंधे दक्षयज्ञविध्वंसो नाम पंचमोऽध्यायः ५ मैत्रेय उवाच अथ देवगणाः सर्वे रुद्रानीकैः पराजिताः शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः १ संछिन्नभिन्नसर्वांगाः सर्त्विक्सभ्याभयाकुलाः स्वयंभुवे नमस्कृत्य कार्त्स्न्येनैतन्न्यवेदयन् २ उपलभ्य पुरैवैतद्भगवानब्जसंभवः नारायणश्च विश्वात्मा न कस्याध्वरमीयतुः ३ तदाकर्ण्य विभुः प्राह तेजीयसि कृतागसि क्षेमाय तत्र सा भूयान्न प्रायेण बुभूषताम् ४ अथापि यूयं कृतकिल्बिषा भवं ये बर्हिषो भागभाजं परादुः प्रसादयध्वं परिशुद्धचेतसा क्षिप्रप्रसादं प्रगृहीतांघ्रिपद्मम् ५॥ १ तत्र नारायणविरंच्यावपि नागतौ ३ विभुर्ब्रह्मा तेजीयसि अनिते जस्विनि यु स्येकृतागसि सत्यपि स्वयं तत्र कृतागसां बुभूषतां अपराधं कर्त्तुमिच्छतां सा तथा बुभूषा तेषां क्षेमाय न भूयात् प्रायेणेति लोकोक्तिः न भवेदेवेत्यर्थः ४ अथापि प्रसादयध्वं क्षमापयत ये भवंतः बर्हिषो यज्ञस्य भागभाजं परादुः दूरादेव खंडितवं

ध्वरस्य जीवितं पुनः संधानं प्रार्थयमानाः संतः यस्मिन् कुपिते सति सपालो लोकः न भवेत् तस्येदित्यर्थः ६ वयं नु तत्र गंतुं
विभीमः त्वमेव किंचिदुपायं विधत्स्वेति चेत् अत आह नेति यज्ञस्य दानीं तन इंद्रः यस्य तत्त्वं बलवीर्ययोः प्रमाणमियत्तां च
न विदुः वीर्यपराक्रमः पापमितिपाठेऽपराधम् ७ ८ कैलासं वर्णयति जन्मौषधीत्यादि चतुर्दशभिः नरेतरैर्देवैर्जुष्टं ६ ॥

आशासाना जीवितमध्वरस्य लोकः सपालः कुपितेन यस्मिन् तमाशु देवं प्रियया विहीनं
क्षमापयध्वं हृदि विद्धं दुरुक्तैः ६ नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वं वि
दुः प्रमाणं बलवीर्ययोर्वा यस्यात्मतंत्रस्य क उपायं विधित्सेत् ७ स इत्थमादिश्य सुरान
जस्तु तैः समन्वितः पितृभिः सप्रजेशैः ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रव
रं प्रियं प्रभोः ८ जन्मौषधितपोमंत्रयोगसिद्धैर्नरेतरैः जुष्टं किंनरगंधर्वैरप्सरोभिर्वृ
तं सदा ९ नानामणिमयैः शृंगैर्नानाधातुविचित्रितैः नानाद्रुमलतागुल्मैर्नानामृग
गणावृतैः १० नानाऽमलप्रस्रवणैर्नानाकंदरसानुभिः रमणं विहरंतीनां रमणैः सिद्धयो
षिताम् ११ मयूरकेकाभिरुतं मदांधालिविमूर्छितैः प्लावितै रक्तकंठानां कूजितैश्च पतत्रिणां

शृंगै रमणं रतिप्रदमित्युत्तरेणान्वयः कथंभूतैर्नानाधातुभिर्विचित्रितैः नानाद्रुमलतागुल्माश्च येषु १० नानाऽमला
नि प्रस्रवणानि येषु नानाकंदराः सानवश्च येषु रमणैः सह क्रीडंतीनां ११ मयूराणां केकाभिः स्वनैर्नादितं मदांधैरलिभि
र्विमूर्छितैः मूर्छना रागगानविशेषः तद्व्याप्तैः कृतं रक्तकंठानां कोकिलानां प्लावितैः प्लुतत्वं नीतैः स्वरैः अन्येषां पतत्रिणां

उद्धैरुत्रतशाखैर्द्रुमैर्द्विजानुपक्षिणआह्वयंतमिव लोके हि दृस्तमुत्क्षिप्योच्चैः स्वरेणाह्वानमर्थिनां कुर्वंति अद्रिश्चोक्षि
प्रहसाकारैर्द्रुमैस्तत्र न्यपक्षिस्वनैश्च तयालक्ष्यत इत्यर्थः व्रजद्भिर्गीतं गैर्गर्जंतमिव निर्झरध्वनिभिर्गुणंतं भाषमाणमिव
१३ १४ चूताम्रयोरवांतरजातिभेदः वेणुकीचकयोश्चनीरंध्रसरंध्रत्वेन भेदः १५ वेणुजातिभिरित्यत्र वेणुकाएलाजा

आह्वयंतमिवोद्धस्तैर्द्विजान्कामदुघैर्द्रुमैः व्रजंतमिव मातंगैर्गृणंतमिव निर्झरैः १३ मंदारैः
पारिजातैश्च सरलैश्चोपशोभितं तमालैः शालतालैश्च कोविदारासनार्जुनैः १४ चूतैः क
दंबैर्नीपैश्च नागपुन्नागचंपकैः पाटलाशोकबकुलैः कुंदैः कुरबकैरपि १५ स्वर्णा
र्णशतपत्रैश्च वरवेणुकजातिभिः कुब्जकैर्मल्लिकाभिश्च माधवीभिश्च मंडितं १६ पना
सोदुंबराश्वत्थप्लक्षन्यग्रोधहिंगुभिः भूर्जैरोषधिभिः पूगैराजपूगैश्च जंबुभिः १७ ख
र्जूराम्रातकाम्राद्यैः प्रियालमधुकेंगुदैः द्रुमजातिभिरन्यैश्च राजितं वेणुकीचकैः १८ कु
मुदोत्पलकह्लारशतपत्रवनार्द्धिभिः नलिनीषु कलं कूजत्खगवृंदोपशोभितं १९ मृगैः
शाखामृगैः क्रोडैर्मृगेंद्रैर्ऋक्षशल्यकैः ॥ एतिर्मालती १६ १७ द्रुमजातिभिरित्यत्र जातिरवांतरभे
दसामान्यं १८ कुमुदादिसमृद्धिभिर्हेतुभिर्नलिनीषु सरस्सु कलं मधुरं यथा भवत्येवं कूजंति यानि पक्षिवृंदानि तैरुप
शोभितं १९ मृगादिभिर्निर्जुष्टं निषेवितं नानाभिः कस्तूरीमृगैः पूर्वं मृगगणाः शृंगविशेषणत्वेनोक्ताः इदानीं स्वातंत्र्ये

णेत्यपीनरुक्तं कदलीखंडैः संरुद्धानि आवृतानि नलिनीनांपुलिनानितैः श्रीः शोभायस्मिन् २० नंदयागंगयापर्य
स्तंपरिवेष्टितंसत्याः भवान्याः स्नानेनपुण्यतरमतिसुगंधमुदकंयस्यां २१ तत्रगिरौवनंचददृशुः यत्रवनेतन्नामसौ
गंधिकंपंकजंभवतिजातावेकवचनं २२ पुरींवर्णयति नंदाचेतिचतुर्भिः सरितौपुराद्बाह्यतोभवतः तीर्थपादस्यहरेः

गवयैर्नाभिभिर्व्याघ्रैर्निर्जुष्टंमहिषादिभिः कदलीखंडसंरुद्धनलिनीपुलिनश्रियं २०
पर्यस्तंनंदयासत्याः स्नानपुण्यतरोदया विलोक्यभूतेशगिरिंविबुधाविस्मयंययुः २१॥
ददृशुस्तत्रतेरम्यामलकांनामवैपुरीं वनंसौगंधिकंचापियत्रतन्नामपंकजम् २२ नंदा
चालकनंदाचसरितौबाह्यतःपुरः तीर्थपादपदांभोजरजसातीवपावने २३ ययोःसुर
स्त्रियःक्षत्तरवरुह्यस्वधिष्ण्यतः क्रीडंतिपुंसःसिंचंत्यो विगाह्यरतिकर्शिताः २४ य
योस्तत्स्नानविभ्रष्टनवकुंकुमपिंजरं वितृषोऽपिपिबंत्यंभःपाययंतोगजागजीः २५॥
तारहेममहारत्नविमानशतसंकुलां जुष्टांपुण्यजनस्त्रीभिर्यथाखंसतडिद्घनं २६ ॥

पादांभोजरजसा २३ ययोर्विगाह्यप्रविश्यक्रीडंति २४ ययोरंभोविगततृषोऽपिगजाःपिबंतितत्रहेतुः तासां
सुरस्त्रीणांस्नानेनभ्रष्टंगलितंयन्नवकुंकुमंतेनपिंजरंपीतवर्णंगजीः करिणीः २५ तारंरूप्यंतारादिमयविमा
नानांशतैः संकुलांनडिद्भिः स्त्रीणांघनैर्विमानानांखेनपयोःसादृश्यं २६ ॥ ॥ ॥ ॥

भा॰ च॰ २० यक्षेश्वरपुरीं हित्वा अतिक्रम्य तद्वनं च ददृशुः ते देवाः आरात् दूरात् इदं ददृशुरिति चतुर्थेनान्वयः कथंभूतं वनं चित्राणि माल्यानि फलानि छदाश्च पत्राणि येषु तैर्द्रुमैर्हृद्यं सुस्वरं २७ रक्तकंठखगानामनीकस्य स्वरैर्मंडिताः षट्पदस्वरा यस्मिन् कलहंसानां कुलस्य प्रेष्ठस्वरं दंडानि पद्मानि तैर्युक्ता जलाशया यस्मिन् २८ वनकुंजरैः संघृष्टा ये हरिचं

हित्वा यक्षेश्वरपुरीं वनं सौगंधिकं च तत् द्रुमैः कामदुघैर्हृद्यं चित्रमाल्यफलच्छदैः २७ रक्तकंठखगानीकस्वरमंडितषट्पदं कलहंसकुलप्रेष्ठं खरदंडजलाशयम् २८ वनकुंजरसंघृष्टहरिचंदनवायुना अधिपुण्यजनस्त्रीणां मुहुरुन्मथयन्मनः २९ वैडूर्यकृतसोपाना वाप्य उत्पलमालिनीः प्राप्तं किंपुरुषैर्दृष्ट्वा त आराद्ददृशुर्वटम् ३० स योजनशतोत्सेधः पादोनविटपायतः पर्यक्कृताचलच्छायो निर्नीडस्तापवर्जितः ३१ तस्मिन्महायोगमये मुमुक्षुशरणे सुराः ददृशुः शिवमासीनं त्यक्तामर्षमिवांतकम् ३२ सनंदनाद्यैर्महासिद्धैः शांतैः संशांतविग्रहं ॥ दनद्रुमाः तत्संबंधिना वायुना पुण्यजनस्त्रीणां मनः अधिकमुन्मथयत् २९ यत्र च उत्पलमालिन्यो वाप्यस्तत्र किंपुरुषैः प्राप्तं वनं दृष्ट्वा पाठांतरे किंपुरुषैः प्राप्ता वापीश्च दृष्ट्वा तदर्थः ३० योजनशतमुत्सेधः उच्छ्रायो यस्य पादोनैः सर्वतः पंचसप्ततियोजनप्रमाणैर्विटपैः शाखाभिरायतो विस्तृतः पर्यक्कृता सर्वतः कृता अचला छाया येन निर्गतं नीडं यस्मात् ३१ मुमुक्षूणां शरणं आश्रयं त्यक्तामर्षोऽन्तकस्तत्तुल्यं ३२ तं विशिनष्टि

राम॰ २०

सनंदाद्यैरिति पंचभिः सख्या कुवेरेणोपास्यमानं ३३ विद्याउपासना तपश्चित्तैकाग्र्यं योगः समाधिस्तेषां पंथानं प्रवर्त्तं
नद्वारं लोकस्य मंगलं हितं तत्तौ वात्सल्यात् स्नेहाच्चरंतं ३४ संध्याभ्ररुचा रक्तवर्णेनांगेन भस्मादिलिंगं चंद्रलेखां च वि
भ्रतं ३५ व्रतिनामासनं वृषीतस्यां ब्रह्म प्रवोचंतं ३६ सव्यं पादपद्मं दक्षिणे ऊरौ कृत्वा विन्यस्य जानुनि च सव्ये बाहुं कृ
त्वा दक्षिणबाहुप्रकोष्ठे मणिवंधस्थाने अक्षमालां च कृत्वा दक्षिणहस्तकृतया तर्कमुद्रया उपलक्षितमासीनमित्यर्थः

उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम् ३३ विद्यातपोयोगपथमास्थितं तमधीश्व
रं चरंतं विश्वसुहृदं वात्सल्याल्लोकमंगलम् ३४ लिंगं च तापसाभीष्टं भस्मदंडजटाजि
नम् अंगेन संध्याभ्ररुचा चंद्रलेखां च विभ्रतम् ३५ उपविष्टं दर्भमय्यां वृष्यां ब्रह्म सनात
नम् नारदाय प्रवोचंतं पृच्छते शृण्वतां सताम् ३६ कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानु
नि बाहुं प्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया ३७ तं ब्रह्मनिर्वाणसमाधिमाश्रितं व्युपाश्रितं
गिरिशं योगकक्षां सलोकपाला मुनयो मनूनामाद्यं मनुं प्रांजलयः प्रणेमुः ३८॥ ॥

तदुक्तं योगशास्त्रे एकं पादमथैकस्मिन्विन्यसेदूरुसंस्थिते इतरस्मिंस्तथा वाहुं वीरासनमिदं स्मृतं तर्कमुद्रा चोक्ता तर्जनीमं
गुष्ठयोरग्रे मिथः संयोज्य चांगुलीः प्रसार्य वंधनं प्राहुस्तर्कमुद्रेति मांत्रिका इति ३९ ब्रह्मनिर्वाणं ब्रह्मानंदः तत्र समाधिरै
काग्र्यं तमाश्रितं योगकक्षां योगपट्टं च वामजानुदृढीकरणार्थं विशेषेणोपाश्रितवंतं मननशीला मनवस्तेषामाद्यं मुख्यं

४
भा॰च॰
४२

अर्हत्तमोविष्णुर्वामनमूर्त्तिर्यथाकस्यकश्यपस्य ३९ महर्षिभिःसहिताःयेनीललोहितमनुमंत्रितेतेअपितस्मैवंदनंच
क्रुः एवंसर्वैर्नमस्कृतःप्राहकृतः प्रणामोदेवैर्यस्मैतं ४० यद्यपित्वंनीचवन्मांनमस्करोषितथापितवैश्वर्यमहंवेद्मीत्या
हजानइति विश्वस्येशंजाने तत्रहेतुःजगतोयोनिर्याशक्तिः प्रकृति वीजंचशिवः पुरुषस्तयोःकारणंतथापिनिरंत
निर्भेदंयद्ब्रह्मनिर्विकारंतदेवत्वामितिजाने ४१ ननुविरुद्धमेतत्तत्राह त्वमेवसरूपयोरविभक्तयोःशिवशक्त्योः

सतूपलभ्यागतमात्मयोनिंसुरासुरेशैरभिवंदितांघ्रिःउत्थायचक्रेशिरसाभिवंदनम
र्हत्तमःकस्यपथैवविष्णुः ३९ तथाऽपरेसिद्धगणामहर्षिभिर्येवैसमंतादनुनीललोहि
तम् नमस्कृतःप्राहशशांकशेखरंकृतप्रणामंप्रहसन्निवात्मभूः ४० ब्रह्मोवाच जा
नेत्वामीशंविश्वस्यजगतोयोनिबीजयोः शक्तेःशिवस्यचपरंयत्तद्ब्रह्मनिरंतरम् ४१
त्वमेवभगवन्नेतच्छिवशक्त्योःस्वरूपयोः विश्वंसृजसिपास्यऽत्सि क्रीडन्नूर्णपटोयथा
४२ त्वमेवधर्मार्थदुघाऽभिपत्तयेदक्षेणसूत्रेणससर्जिथाध्वरं त्वयैवलोकेऽवसिताश्च
सेतवोयान्ब्राह्मणाःश्रद्दधतेधृतव्रताः ४३॥ क्रीडन्विश्वसृष्ट्यादिकरोषिऊर्णनाभिरिवस्वरूपयो

रितिपाठेस्वांशशक्त्योःअतोनविरोधः४२ धर्म्मोम र्थंचदोग्धियात्रयीतस्याअभिपत्तयेरक्षणायअध्वरंसृष्टवानसियद्वा
हिधर्मार्थदुघ धर्मार्थाभिपत्तयेतत्प्राप्तयेदक्षेणसूत्रेणनिमित्तेनसेतवोवर्णाश्रममर्यादाश्चअवसिताःनिबद्धाःनिर्णीताइति
वाश्रद्दधतेश्रद्धयाअनुतिष्ठति ४३॥

सर्वकर्मफल दातापि त्वमेवेत्याह हे मंगलमंगलानां शुभानां कर्मणां कर्त्तुः स्वः स्वर्गं परं मोक्षं वा तनुषे अमंगलानां अशुभा
नां कर्मणां कर्त्तुश्च तमिस्रं नरकं तनुषे तत्र केन हेतुना तदेव तस्मिन्नेव कस्यचिद्विपर्ययो भवति ४४ त्वत्कोपोऽत्र हेतुरित्या
संभावितमिति कैमुत्यन्यायेनाह न वै सतां सतः रोषोऽभिभवेत् तव त्वां द्वितीयार्थे षष्ठी उपपशुं अज्ञं यथाऽभिभवति तद्वत् ४५
अतः पृथग्धियः भेददृशः अतः कर्मण्येव दृष्टिर्येषां दुष्ट आशयो येषां परेषामुदयेन संपदा अर्पिता हृदि रुक् येषां अ

तं कर्मणां मंगलमंगलानां कर्त्तुः स्वलोके तनुषे स्वः परं वा अमंगलानां च तमिस्रमुल्ब
णं विपर्ययः केन तदेव कस्यचित् ४४ नवै सतां त्वच्चरणार्पितात्मनां भूतेषु सर्वेष्वभिप
श्यतां तव भूतानि चात्मन्यपृथग्दिदृक्षतां प्रायेण रोषोभिभवेद्यथा पशुं ४५ पृथग्धियः
कर्मदृशो दुराशयाः परोदयेनार्पितहृद्रुजोऽनिशं परान्दुरुक्तैर्वितुदंत्यरुंतुदास्तान्माऽ
वधीद्देववधान्भवद्विधः ४६ यस्मिन्यदा पुष्करनाभमायया दुरंतया स्पृष्टधियः पृ
थग्दृशः कुर्वंति तत्र ह्यनुकंपया कृपां न साधवो दैवबलात्कृते क्रमम् ४७॥ एवं तु दाममर्मभेनारः

देवेनैव वधो येषां तान् भवद्विधः निरुपमः साधुः माऽवधीत् न हन्यात् ४६ प्रस्तुत साधूनां वृत्तमालोक्यानुग्रहमेव कर्त्तुम
र्हसीत्याह द्वाभ्यां यस्मिन् देशे यदा काले स्पृष्टधियो मोहितचित्ताः पृथग्दृशो भवंति तत्रापराधे साधवो हि अनुकंपया अ
नंतरं मेव परदुःखासहिष्णुतया चित्तप्रकंपेन कृपां कुर्वंति न तु क्रमं पराक्रमं कुतः दैवबलात्कृते अर्थे ममैव दैवमेवं भूतं
कोऽत्रापराधः तेषामिति मत्वा हननं न कुर्वंतरत्यर्थः ४७॥

भवांस्तु अस्पृष्टमतिः अतः समस्तदृक् सर्वज्ञः नयामायया हतआत्मा येषां तेषु अतएवकर्मानुगतविघ्नेषुत्वदपराधेः
नुग्रहंकर्तुमर्हसि ४८ एवंसामान्येनोक्त्वाप्रस्तुतमाह कुर्विति त्रिभिः त्वयाहतस्य अतएवासमाप्तस्यप्रजापतेरध्वरा
स्यहेमनो यत्राध्वरेकुयाज्ञिकाः भागिनोपितवभागंनददुः भागार्हत्वमाह येनत्वयामखोनिनीयते फलंप्राप्यते ४९

भवांस्तुपुंसः परमस्यमाययादुरंतयाऽस्पृष्टमतिः समस्तदृक् नयाहतात्मस्वनुकर्मचे
तस्वऽनुग्रहंकर्तुमिहार्हसिप्रभो ४८ कुर्वध्वरस्योद्धरणंहतस्यभोत्वयाऽसमाप्तस्यमनो।
प्रजापतेः नयत्रभागंतवभागिनोददुः कुयज्विनोयेनमखोनिनीयते ४९ जीवता
द्यजमानोऽयंप्रपद्येताक्षिणीभगः भृगोःश्मश्रूणिरोहंतुपूष्णोदंताश्चपूर्ववत् ५० देवा
नांभग्नगात्राणामृत्विजांचायुधाश्मभिः भवताऽनुगृहीतानामाशुमन्योऽस्त्वनातुरम् ५१
एषतेरुद्रभागोऽस्तुयदुच्छिष्टोऽध्वरस्यवै यज्ञस्तेरुद्रभागेनकल्पतामद्ययज्ञहन् ५२॥ ॥
॥इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेरुद्रसांत्वनंनामषष्ठोऽध्यायः ६॥ ॥

५० हेमन्यो अनातुरम् आरोग्यमस्तु ५१ भागश्चतवास्त्वित्याह एषइति हेरुद्रयावदित्यर्थेयदित्यव्ययं यज्ञे
कृनेयावानुच्छिष्टः अवशिष्टोर्थः तावानेषतवभागोऽस्तु हेरुद्रतेनभागेनाद्ययज्ञः कल्पतांसंपद्यतां॥ ॥
॥५२॥ इतिचतुर्थेटीकायांषष्ठोऽध्यायः ६॥

॥सप्तमे विष्णुरुद्भूतः स्तुतो दक्षभवादिभिः यज्ञं प्रवर्तयामास दक्षेणेति निरूप्यते १ अजेन योऽनुनीतः प्रार्थितो भवस्तेना
भिहितं हे महाबाहो विदुरः १ अघमपराधं २ स्वापराधमपहृत्यानुगृह्णाति दग्धं शीर्षं यस्य तस्य प्रजापतेः अजस्य
मुखं यस्मिन् तत्तथाभूतं शिरोऽस्तु बर्हिषः संबंधिनं भागं मित्रनाम्नो देवस्य ३ प्रकर्षेण कृतानि लग्नान्यंगानि येषां ते

श्रीमैत्रेय उवाच इत्यजेनानुनीतेन भवेन परितुष्यता अभ्यधायि महाबाहो प्रहस्य श्रू
यतामिति १ महादेव उवाच नाघं प्रजेश बालानां वर्णये नानुचिंतये देवमायाभिभूतानां
दंडस्तत्र धृतो मया २ प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः मित्रस्य चक्षुषेक्षेत भागं स्वं
बर्हिषो भगः ३ पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक् देवाः प्रकृतसर्वांगा ये म उच्छेषणं
ददुः ४ बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः भवंत्वध्वर्यवश्चान्ये बस्तश्मश्रुर्भृगुर्भ
वेत् ५ मैत्रेय उवाच तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितं परितुष्टात्मभिस्तात साधुसा
ध्वित्यथाब्रुवन् ६ ततो मीढ्वांसमामंत्र्य शुनासीराः सहर्षिभिः भूयस्तद्देवयजनं समीढ्वद्वेध
सो ययुः ७॥ (ते) भवंतु उच्छेषणं यज्ञावशिष्टं ४ येषां त्वंगानि छिन्नष्टानि ते तु अश्विनो बाहुभ्यां कृतबाहवः पूष्णो हस्ता
भ्यां कृतहस्ताश्च भवंतु अध्वर्यवः अन्ये च ऋत्विजः बस्तस्य श्मश्रूण्येव श्मश्रूणि यस्य ५ मीढुष्टमः शिवः तेनोक्तं परितुष्टैश्चित्तैः
६ मीढ्वांसं शिवं त्वया आगत्य सर्वं कार्यं इत्यामंत्र्य संप्रार्थ्य शुनासीरा देवाः सह मीढुषा वेधसा च वर्तमानाः समीढ्वद्वेधसः ७॥

कार्त्स्न्येन वक्तुं हस्तवाङ्घ्र्यादिसाधारण्यं विधाय ८ ९ पूर्वं वृषध्वजद्वेषेण कलिलः कलुषीकृत आत्मा यस्य सः तदा श
रत्कालीनो चंद्र इवामलोऽभवत् १० ११ १२ यदपि यद्यपि विप्रलब्धः पराभूतो मया भवान् तथापि त्वया दंडो भृतः शि

विधाय कार्त्स्न्येन च तद्यदाह भगवान् भवः संदधुः कस्य कायेन सवनीयपशोः शिरः ८ ॥
संधीयमाने शिरसि दक्षो रुद्राभिवीक्षितः सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडं ९ ता
दा वृषध्वजद्वेषकलिलात्मा प्रजापतिः शिवावलोकादभवच्छरच्चंद्र इवामलः १० भव
स्तवाय कृतधीर्नाशक्नोदनुरागतः औत्कंठ्याद्बाष्पकलया संपरेतां सुतां स्मरन् ११ कृच्छ्रा
त्संस्तभ्य च मनः प्रेमविह्वलितः सुधीः शशंस निर्व्यलीकेन भावेनेशं प्रजापतिः १२ दक्ष उ
वाच भूयाननुग्रह अहो भवता कृतो मे दंडस्त्वया मयि भृतो यदपि प्रलब्धः न ब्रह्मबंधुषु
च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु १३ विद्यातपोव्रतधरान्मुखतः स्म वि
प्रान् ब्रह्मात्मतत्वमवितुं प्रथमं त्वमस्राक् तद्ब्राह्मणान् परम सर्वविपत्सु पासि पा
लः पशूनिव विभो प्रगृहीतदंडः १४ ॥ ॥ ९ क्षात्मकनानतूपेक्षितोऽस्मीत्युक्तमेवैतदित्याह ब्रह्म
बंधुषु च ब्राह्मणाभासेष्वपि तुभ्यं तव हरेश्चेति वां युवयोरवज्ञा उपेक्षा नास्ति १३ तत्र हेतुमाह विद्येति ब्रह्मा भू
त्वा त्वमस्राक् असाक्षीः किमर्थमात्मतत्वमवितुं यद्वा ब्रह्म वेदं आत्मतत्वं च अवितुं संप्रदायप्रवर्त्तनेन ज्ञापयितुमित्यर्थः त

अत्रच प्रत्युपकारो नास्तीत्याह योऽसाविति अविदिततत्त्वदृशा अप्राप्ततत्त्वज्ञानेन तद्विगणय्य विस्मृत्य अर्हत्तमस्य निंदया अर्वागधः पतंतं मामपात् रक्षितवान् स्वकृतेनैव परानुग्रहेणैव तुष्येत् नमयातत्प्रतिकर्तुं शक्यमित्यर्थः १५ अनुमंत्रितोऽनुज्ञातः उपाध्यायसहितैः ऋत्विगादिभिः अनुवर्तयामास १६ वीराणांप्रमथादीनां संसर्गकृतदोषस्य

योऽसौ मयाऽविदिततत्त्वदृशा सभायां क्षिप्तो दुरुक्तिविशिखैर्विगणय्य तन्मां अर्वाक्पतंतमर्हत्तमनिंदयाऽपात् दृष्ट्याऽऽर्द्रया स भगवान्स्वकृतेन तुष्येत् १५ श्रीमैत्रेय उवाच क्षमाप्यैवं स मीढुषं ब्रह्मणा चानुमंत्रितः कर्म संतानयामास सोपाध्यायर्त्विगादिभिः १६ वैष्णवं यज्ञसंतत्यै त्रिकपालं द्विजोत्तमाः पुरोडाशं निरवपन् वीरसंसर्गशुद्धये १७ अध्वर्युणात्तहविषा यजमानो विशांपते धिया विशुद्धया दध्यौ तथा प्रादुरभूद्धरिः १८ तदा स्वप्रभया तेषां द्योतयंत्या दिशो दश मुष्णंस्तेज उपानीतस्तार्क्ष्येण स्तोत्रवाजिना १९ श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलालकभ्रमरमंडितकुंडलास्यः॥

उपात्तहविषा अध्वर्युणा सह विशुद्धया बुद्ध्या दध्यौ हे विशांपते विदुर १८ स्वया प्रभया तेषां तेजो मुष्णन् तिरस्कुर्वन् उपानीतः समीपं प्रापितः स्तोत्रे बृहद्रथंतरे वाजौ पक्षौ तद्युता बृहद्रथंतरे पक्षाविति श्रुतेः १९ तमेवानुवर्णयति श्यामरतिद्वाभ्यां हिरण्यवद्रशना यस्य तथा स्वर्णं लक्ष्यते अर्कतुल्येन किरीटेन जुष्टः नीलालका एव भ्रमरास्तैर्मंडितं कुंड।

लयुक्तमासंयस्य कंबादिभिरायुधैर्भृत्यरक्षार्थमग्रैर्हिरण्मयैर्भुजैः पुष्पितः कर्णिकार इव वृक्षविशेषः शोभमानः भुजा
नां हिरण्मयत्वं केयूरकंकणमुद्रिकाद्यलंकारैः २० वक्षसि अधिश्रिता वधूर्लक्ष्मीर्यस्य सः उदारो हासो अवलोकश्च ता
भ्यां कलया लेशेन पार्श्वे उभयतो भ्रमती व्यजनचामरे चामरव्यजने एव राजहंसौ यस्मिन् सः स्तूयमानः शोभातिशयं नीय

कंबब्जचक्रशरचापगदासिचर्मव्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः २० वक्षस्यधिश्रि
तवधूर्वनमाल्युदारहासावलोककलया रमयंश्च विश्वं पार्श्वभ्रमद्व्यजनचामरराज
हंसः श्वेतातपत्रशशिनोपरि रज्यमानः २१ तमुपागतमालक्ष्य सर्वे सुरगणादयः प्रणे
मुः सहसोत्थाय ब्रह्मेंद्रत्र्यक्षनायकाः २२ तत्तेजसा हतरुचः सन्नजिह्वाः ससाध्वसाः मू
र्ध्ना धृतांजलिपुटा उपतस्थुरधोक्षजं २३ अप्यर्वाग्वृत्तयो यस्य महि त्वात्मभुवादयः यथा
मति गृणंति स्म कृतानुग्रहविग्रहं २४ दक्षो गृहीतार्हणसादनोत्तमं यज्ञेश्वरं विश्वसृ
जां परं गुरुं॥ ॥ रज्यमानः २१ ब्रह्मेंद्रत्र्यक्षनायका मुख्या येषां ते २२ हतरुचः तिरस्कृतप्रभाः सन्न

जिह्वा गद्गदवाचः ससाध्वसास्तन्महिम्ना क्षुभितचित्ताः उपतस्थुः तुष्टुवुः २३ यस्य महि महिमानं प्रति तु अर्वाग्वृत्तयो येषां
ते अपि यथामति गृणंति स्म अस्तुवन् कृतः प्रकटीकृतो नुग्रहार्थं विग्रहो येन तं यद्वा तेषां अर्वाग्वृत्तित्वे हेतुः ते तु यस्य महि
महिमा विस्मृतिमान् स्युः आत्मभुवादयः इत्यर्थः २४ तत्र तावद्दक्षस्तुतिप्रकारमाह दक्ष इति गृहीत मर्हण सादनोत्तमं येन तं उत्तमया

त्रे आसाद्यऽर्हणेषु समर्पितेषु प्रीत्या सार्हणापात्रं स्वयमेव येन गृहीतमित्यर्थः यद्वा कथं प्रपेदे गृहीतमर्हणासादनोत्तं

मंयया भवति तथा तद्गृहीत्वा प्रपेदइत्यर्थः गृहीत्वेति पाठस्तु सुगमः गृणन् स्तुवन् प्रपेदे शरणं जगाम दृक्षअविक्लसद

स्मिश भृगुब्रह्मेंद्रयोषितः ऋषयश्च तथा सिद्धाय जमानी चलोकपाः योगी ब्रह्माग्निदेवाश्च स्तुवंति जगदीश्वरं तथा गंध

र्वविद्याध्र ब्राह्मणाश्च पृथक्तैः २५ ननु साक्षात्परमेश्वरएव रुद्रः तस्य ब्रह्मपुत्रत्वेन जीवत्वमनुकारमात्रं हंत किमि

ति त्वया भेददृष्ट्या ऽसौ ऽवज्ञात इति मां भगवान् आक्षेप्स्यतीत्याशंक्याप्रच्युतस्वरूपस्य जीवधर्मनाऽलंतव मायये वस

गल्कतेनान्यस्येत्याह शुद्धमिति स्वधाम्नि स्वस्वरूपे तिष्ठन् भवान् शुद्धं चिन्मात्रं चेतनत्यघनः शुद्धत्वे हेतुः उपरता नित्या

## सुनंदनंदाद्यनुगैर्वृतं मुदा गृणन् प्रपेदे प्रयतः कृतांजलिः २५ दक्षउवाच शुद्धं स्वधा
## म्न्युपरताखिलवुद्ध्यवस्थं चिन्मात्रमेकमभयं प्रतिषिद्ध्य मायां तिष्ठंस्तयैव पुरुषत्वमुपे
## त्य तस्यामास्ते भवानपरिशुद्धइवात्मतंत्रः २६ ॥ ९ ॥ ॥ ९ ॥

निवृत्ता अखिलावुद्ध्यवस्था यस्मात् अतः एकं भेदशून्यं अत एव अभयं द्वितीयाद्वै भयं भवतीति श्रुतेः जीवस्यापि

वस्तुत एवंभूतत्वात्तद्वैलक्षण्यार्थमुक्तं मायां प्रतिषिद्ध्य अभिभूय स्वतंत्र एव सन् तया मायया पुरुषत्वं मनुष्यनाट्य

मुपेत्य तस्यां मायायां तिष्ठन् अपरिशुद्धइव रागादिमानिवा ऽऽरामकृष्णाद्यवतारे तथा प्रतीयते भवानित्यर्थः अ

न्ये त्वविद्योपाधयो मायाभिभूताः संसरंति अतस्त्वमेवेश्वरो न रुद्रादय इति भावः अत एवं मां भेददृष्टिं भगवान्

वारयिष्यति अहं ब्रह्मा च शर्वश्च जगतः कारणं परमित्यादिना २६

ऋत्विजोपिस्वस्यापराधंपरिहरंतः स्तुवंति भोअनंजनउपाधिमलशून्य यद्यपित्वमेवरुद्रादिदेवतारूपः तथापिनं
दीश्वरशापात्कर्मण्येवदुराग्रहधियः संतस्तवतत्त्वंनविद्मः किंतुधर्मस्यापूर्वस्योपलक्षणभूतंत्रिवृत्त्रयीप्रतिपा
द्यमध्वराख्यंतवरूपमस्माभिर्ज्ञातंकीदृशंयदर्थेयस्यसिद्ध्यै अधिदैवंदेवताधिकारेण अदोव्यवस्थाः अमूर्व्य
वस्थाः अत्रइयमेवदेवतानान्येवंभूतानियमाइत्यर्थः यद्वा व्यवस्थाइत्याख्याते अडागमाद्यभावआर्षः यदर्थं
अदइदंइंद्राद्यधिदैवंरूपंविशेषेणास्थितवानसीत्यर्थः २७ सदस्यास्तुनिरीश्वरेपिदक्षाध्वरेधनलोभेनस्वप्रवृत्ति

ऋत्विजऊचुः तत्त्वंनतेवयमनंजनरुद्रशापात्कर्मण्यवग्रहधियोभगवन्विदामः॥
धर्मोपलक्षणमिदंत्रिवृदध्वराख्यंज्ञातंयदर्थमधिदैवमदोव्यवस्थाः २७ सदस्याऊचुः
उत्पत्त्यध्वन्यशरणउरुक्लेशदुर्गेऽतकोग्रव्यालान्विष्टेविषयमृगतृष्ण्यात्मगेहोरुभारः॥
द्वंद्वश्वभ्रेखलमृगभयेशोकदावेऽज्ञसार्थःपादौकस्तेशरणदकदायातिकामोपसृष्टः २८॥

मन्त्विंत्यानुतप्ताविरक्तिमाशासानाः स्तुवंति हेशरणद आश्रयप्रदउत्पत्त्यध्वनिसंसारमार्गेवर्त्तमानोऽज्ञानांसार्थः
समूहस्तेपादौकस्तत्त्वादरूपंनिवासंकदायास्यतिअशरणेविश्रामस्थानशून्येउरुक्लेशाएवदुर्गमस्थानानियस्मि
न् अंतकएवोग्रोव्यालस्तेनान्विष्टेलक्षीकृतेविषयरूपामृगतृष्णायस्मिन् आत्माहंकारास्पदंशरीरंममत्वास्पदंगे
हंचसएवउरुर्भारोयस्यसः द्वंद्वानिसुखदुःखादीन्येवश्वभ्राणिगर्त्तायस्मिन् खलाएवमृगाव्याघ्रादयस्तेभ्योभयंयस्मि
स्मिन् शोकएवदावाग्निर्यस्मिन् कामेनोपसृष्टः पीडितः २८॥

श्रीरुद्रस्तु पूर्वं मम निंदाद्दुःसहासीत् इदानीं तु तां न गणयामीत्याह नवेति आशिषा कामेन असक्तैः निष्कामैः रविन्त धियः अभिनिवेशिनः चित्तं अविद्यलोकः अविद्यः विद्याहीनो लोकः मामां यदि अपविद्धं जपति आचारभ्रष्टं जपति तत्ज्ञ स्यनं तव यः परोऽनुग्रहस्तेन त्वत्तरणावा योऽनुग्रहस्तेन २९ भृगुस्तु स्वभावतस्तत्त्वज्ञानहीनाः जीवाः नो ज्ञानकृतं मम दुःखे

रुद्र उवाच तव वरद वरांघ्रावाशिषेहाखिलार्थे ह्यपि मुनिभिरसक्तैरादरेणार्हणीये ॥ ॥
यदि रचितधियं माऽविद्यलोकोऽपविद्धं जपति न गणये तत्त्वत्परानुग्रहेण २९ भृगुरुवाच
यन्मायया गहनयाऽपहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपंतः नात्मन्श्रितं तव
विदंत्यधुनाऽपि तत्त्वं सोऽयं प्रसीदतु भवान्प्रणतात्मबंधुः ३० ब्रह्मोवाच नैतत्स्वरूपं भवतोऽ
सौ पदार्थभेदग्रहैः पुरुषो यावदीक्षेत ज्ञानस्य चार्थस्य गुणस्य चाश्रयो मायामयाद्व्यति
रिक्तो यतस्त्वम् ३१ इंद्र उवाच इदमप्यच्युत विश्वभावनं वपुरानंदकरं मनोदृशां सुरवि
द्विट्क्षपणैरुदायुधैर्भुजदंडैरुपपन्नमष्टभिः ३२॥ ((स्थितं क्षमस्वेति आह यन्माययेति आत्मन् आत्मनि
श्रितं अनुगतं तव तत्त्वं न विदंति प्रणतानामात्मा बंधुश्च ३० ब्रह्मादयो न विदंतीति भृगुणोक्ते तदसह मानो ब्रह्मा तत्त्वज्ञान
माविष्कुर्वन्निवाह नैतदिति पदार्थभेदग्राहकैरिंद्रियैर्गुणस्येंद्रियस्य यद्वा ज्ञानार्थयोः कारण[illegible]सत्त्वादेः अत एव त्वं आ
सतः मायामयात्व्यतिरिक्तो भवान् ३१ इंद्रस्तु इंद्रियविषयः सर्वोऽपि मिथ्येति ब्रह्मणोक्तमसहमान आह इदं तव वपुरपि उप

भा०च०
२६॥

ऋत्विजांपत्न्यस्तुवंति यज्ञोऽयंतवयजनायत्वांयष्टुंकेनब्रह्मणापूर्वंसृष्टः हेयज्ञात्मन् तंनोयज्ञंनलिनकांत्यादृशानेत्रेणपु
नीहिपवित्रंकुरु कथंभूतंयज्ञं शवाःशेरतेयस्मिन्निति शवशयनंश्मशानंतद्वदाभाप्रतीतिर्यस्य सचासौअशांतमेधश्चउपरतोऽस्व
स्मेधशब्देनपशुहिंसाद्युत्सवोलक्ष्यते शावमुदकंतत्रशेतेइतितथापद्मंतन्नाभेतिसंबोधनंवा ३३ ऋषयस्तुकर्माण्य
नुतिष्ठतस्तवएवंननुतत्फलेनचयुज्यंतेभगवतितत्स्वभावमालक्ष्यविस्मिताःस्तुवंति अनन्वितंअसंघटमानं यद्यस्मात् आत्म
नास्वयंकर्माचरसिअनुतिष्ठसिनत्वज्यसेलिप्यसे यतश्च अन्येविभूतयेसंपदेईश्वरींलक्ष्मींउपसेदुःभेजुः यद्वा यतइति

पत्न्यऊचुः यज्ञोऽयंतवयजनायकेनसृष्टोविध्वस्तःपशुपतिनाद्यदक्षकोपात् तंनस्त्वंश
वशयनाभशांतमेधंयज्ञात्मन्नलिनरुचादृशापुनीहि ३३ ऋषयऊचुः अनन्वितंतेभगव
न् विचेष्टितंयदात्मनाचरसिहिकर्मनाज्यसे विभूतयेयतउपसेदुरीश्वरींनमन्यतेस्वयमा
नुवर्तिनींभवान् ३४ सिद्धाऊचुः अयंत्वत्कथामृष्टपीयूषनद्यांमनोवारणःक्लेशदावाग्नि
दग्धःतृषार्तोऽवगाढोनसस्मारदावंननिष्क्रामतिब्रह्मसंपन्नवन्नः ३५ ॥ ॥

सार्वविभक्तिकस्तसिः यामित्यर्थः भवांस्तुस्वयमेवानुवर्तमानांतांनमन्यतेनाद्रियते ३४ सिद्धास्तुत्वत्कथासुखमभि
नंदंतःस्तुवंति अयंनोमनोगजः त्वत्कथैवमृष्टंशुद्धंपीयूषंतन्मयीयानदीतस्यांअवगाढःप्रविष्टोदावाग्नितुल्यंसंसार
तापंनसस्मरति नचततोनिर्गच्छति ब्रह्मसंपन्नवत् ब्रह्मैक्यंप्राप्तइव ३५॥ ॥ ॥ ॥ ॥

रामः
२६

यजमानीदक्षपत्नी सोति तेस्वागतं भद्रमागमनं जातं हे अधीश यया शिरसा हीनः कबंधमात्रः पुरुषोंगैः करचरणाद्यवय
वैः शोभनैरपि न शोभते तया त्वां विना केवलं प्रयाजाद्यंगैर्मखो न शोभते अतो नः श्रिया सह त्रायस्व त्वद्भक्तान्कुर्वित्यर्थः॥
३६ लोकपाला स्वीश्वरत्वाभिमानारूढा भगवतस्तत्त्वमपश्यंत ऊचुः दृष्टः किं न दृष्टृ इत्यर्थः कुतः असद्दृग्भिः पुंस्त्वमाविष्टृ
लिंगत्वादसत्प्रकाशरूपाभिर्दृग्भिरिंद्रियैः अयं भावः शुद्धचित्तानां त्वं शुद्धसत्त्वमूर्त्तिर्भासि अस्माकं तु बहिर्मुखेंद्रियाणां॥

यजमान्युवाच स्वागतं ते प्रसीदेश तुभ्यं नमः श्रीनिवास श्रिया कांतया त्राहि नः त्वामृते ऽधी
शनांगैर्मखः शोभते शीर्षहीनः कबंधो यथा पूरुषः ३६ लोकपाला ऊचुः दृष्टः किं नो दृ
ग्भिरसद्ग्रहैस्त्वं प्रत्यग्द्रष्टा दृश्यते येन दृश्यं मायाह्येषा भवदीया हि भूमन्यस्त्वं षष्ठः पंच
भिर्भासि भूतैः ३७ योगेश्वरा ऊचुः प्रेयान्न ते ऽन्यो ऽस्त्यमुतस्त्वयि प्रभो विश्वात्मनीक्षेन्न पृ
थग्य आत्मनः अथापि भक्त्येशतयोपधावतामनन्यवृत्त्या ऽनुगृहाण वत्सल ३८ जगदु
द्भवस्थितिलयेषु दैवतो बहुभिद्यमानगुणयात्ममायया॥ एवं पंचभूतोपलक्षितो जीवविशेष इवाव
भासि अतस्त्वमस्मदिंद्रियगोचरो न भवसि धिगस्मज्जीवितमिति ३७ योगेश्वरास्तदभेदेन भजतामनुग्रहमात्मकं मन्यमा
नाः स्वामिभृत्यभावेन भजतामप्यनुग्रहं प्रार्थयमानाः स्तुवंति द्वाभ्यां प्रेयानिति विश्वात्मनि परब्रह्मणि त्वयि य आत्मनः पृ
थक्त्वं न ईक्षेत अमुतः अमुष्मादन्यः ते प्रेष्ठो नास्ति आत्मनो जीवान् पृथक् न ईक्षेते तिवा हे वत्सल भक्तजनप्रिय अ
नन्यवृत्त्या अव्यभिचारिभक्त्या भजतो ऽनुगृहाणेत्यर्थः ३८ अव्यभिचारिणी भक्तिः कथं स्यात् भजनीयानां॥ ७७

भा॰ टी॰ ८
२४

बहुत्वादित्याशंक्याहुः जगतउद्भवादिषु निमित्तेषु देवनोजीवानां दृष्टत्वबहुधाभिद्यमाना गुणा यस्यास्तयात्वमायया आ
त्मनिस्वरूपे रचिताब्रह्मादिभेदमतिर्येन तस्मै स्वसंस्थयाकेवलस्वरूपावस्थानेन च विनिवर्त्तितोभेदभ्रमो गुणाश्च तद्वे
तवश्चात्मनि येन तस्मै ३९ शब्दब्रह्मस्तौति नमस्तइति श्रितं स्वीकृतंसत्वंयेन अंतःभक्त्यादिफलप्रसवित्रे सत्वगुणत्वनि
र्गुणत्वंचैकस्य कथमित्याशंक्याह यस्य काष्ठां तत्वंनाहं वेद्मि अपरे ब्रह्मादयश्च न विदुस्तस्मै ४० अग्निस्तुयज्ञमूर्त्तिंप्र
णमति यस्य तेजसा सुष्ठुसमिद्धं प्रदीप्तं तेजो यस्य सोऽहं प्रशस्ते अध्वरे हविर्वहामि तं यज्ञियं यज्ञाय हितं पालकं यज्ञं यज्ञ

रचितात्मभेदमतये स्वसंस्थया विनिवर्त्तितभ्रमगुणात्मने नमः ३९ ब्रह्मोवाच नमस्ते
श्रितसत्वाय धर्मादीनां च सूतये निर्गुणाय च यत्काष्ठां नाहं वेदापरेऽपि च ४० अग्निरुवा
च यत्तेजसाऽहं सुसमिद्धतेजा हव्यं वहे स्वध्वर आज्यसिक्तं तं यज्ञियं पञ्चविधं च पंचभिः
स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम् ४१ देवा ऊचुः पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं
त्वमेवाद्यस्तस्मिन्सलिल उरगेंद्राधिशयने॥ मूर्त्तिं पंचविधत्वमेतरेयकेउक्तं स एष यज्ञः पंचवि
धोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति यं पंचभिर्यजुर्भिर्मंत्रैः स्विष्टं सुपूजितं तथा च श्रुतिः आश्रावय
इति चतुरक्षरं अस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पंचाक्षरं द्व्यक्षरो वषट्कार इति स्मृतिश्च चतुर्भिश्च
चतुर्भिश्च द्वाभ्यां पंचभिरेव च हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदत्विति ४१ देवास्तुवंति यद्यपि सत्वं वयमपि देवा
स्तथापि जगदाद्यं तयोस्त्वमेव नान्यः कश्चिदित्याहुः पुरेति कल्पापाये प्रलये विकृतं कार्यजातं उदरीकृत्य संहृत्य त्वमेवाद्यः

रामः
२७

पुमान् उरगेंद्र एवाधिकं शयनं शय्या यस्मिन् शेषे शयनं करोषि सिद्धैर्ज्ञनलोकादिवासिभिर्विमृशिता विचिंतिता अ
ध्यात्मपदवी ज्ञानमार्गो यस्य स एव त्वं यद्इदानीमक्ष्णोः पथिचरसि प्रत्यक्षोऽसि अवसि रक्षसि ४२ गंधर्वा सरसस्तु वयं
भिया केवलं सर्वानपि परमेश्वरत्वेनोपश्लोकयामः त्वमेव तु परमेश्वरः अन्ये तु त्वदंशा एवेत्याहुः अंशांशा इति हे विभू
मन् महत्तम क्रीडाभांडं क्रीडोपकरणं विश्वं ब्रह्मांडं यस्य तस्मै तेन नमनं कुर्मः ४३ विद्याधरास्तु वंति केवलं विद्याभिः सं

पुमान् शेषे सिद्धैर्हृदि विमृशिताध्यात्मपदवीः स एवाद्याक्ष्णोर्यः पथिचरसि भृत्यानवसि
नः ४२ गंधर्वा ऊचुः अंशांशास्ते देव मरीच्यादय एते ब्रह्मेंद्राद्या देवगणा रुद्रपुरोगाः क्री
डाभांडं विश्वमिदं यस्य विभूमन् तस्मै नित्यं नाथ नमस्ते करवाम ४३ विद्याधरा ऊचुः त्व
न्मायया ऽर्थमभिपद्य कलेवरेऽस्मिन् कृत्वा ममाहमिति दुर्मतिरुत्पथैः स्वैः क्षिप्तोऽप्यस
द्विषयलालस आत्ममोहं युष्मत्कथामृतनिषेवक उद्व्युदस्येत् ४४ ब्राह्मणा ऊचुः त्वं
क्रतुस्त्वं हविस्त्वं हुताशः स्वयं त्वं हि मंत्रः समिद्दर्भपात्राणि च त्वं सदस्यर्त्विजो दंपती देव
ता अग्निहोत्रं स्वधा सोम आज्यं पशुः ४५ ॥ ((पदः आप्यंतेऽहंकारादिव्यामोहनिवृत्तिस्तु त्वत्कथाश्रवणे वि
नानास्तीत्याहुः अर्थं पुरुषार्थसाधनं कलेवरं अभिपद्य प्राप्य त्वन्मायया ऽस्मिन् ममेत्यहमिति चाभिमानं कृत्वा इममात्ममोहं यु
ष्मत्कथामृतनिषेवकः उत् उच्चैर्व्युदस्येत् परित्यजेत् नान्यः ननु स्वैः पुत्रादिभिरधिक्षिप्तो दुःखितः सन् परित्यजेद् वनेत्याहुः क्षि

गांष्ट्रक्षीरसायाः रसातलात् दंष्ट्रयाभ्युज्जहर्थ विशेषेणोद्धृतवानसि योगिभिः स्तूयमानः हेत्रयीगात्रवेदमूर्त्ते य
ज्ञोयागः सयूपः क्रतुस्तद्विशेष स्तद्रूपी यज्ञसंकल्परूपइतिवा यज्ञः क्रतुः कर्मयस्येतिवा ४६ सत्वमस्माकंत्वद्दर्श
नमाकांक्षतांप्रसीदअस्मद्यज्ञमभ्युद्धरेत्यर्थः नचाशक्यंतवै तत् यतस्तवनाम्निकीर्त्यमानएवयज्ञविघ्नाः क्षयं
यांतिएवंप्रभावोयस्तस्मैनमः ४७ इत्यनेनप्रकारेणसर्वैः कीर्त्यमानेहेभद्र विदुरसंनिन्येप्रवर्त्तयामास ४८

त्वंपुरागांरसायामहासूकरोदंष्ट्रयापद्मिनींवारणेंद्रोयथा स्तूयमानोमदृत्त्रीलयोगि
भिर्व्युज्जहर्थत्रयीगात्रयज्ञक्रतुः ४६ सप्रसीदत्वमस्माकमाकांक्षतांदर्शनंतेपरिक्षा
ष्टसत्कर्मणां कीर्त्यमानेनृभिर्नाम्नियज्ञेशते यज्ञविघ्नाःक्षयंयांतितस्मैनमः ४७ मैत्रे
यउवाच इतिदक्षःकविर्यज्ञंभद्ररुद्राभिमर्शितं कीर्त्यमानेहृषीकेशेसंनिन्येयज्ञभावने
४८ भगवान्स्वेनभागेनसर्वात्मासर्वभागभुक् दक्षंबभाषआभाष्यप्रीयमाणइवानघ
४९ श्रीभगवानुवाच अहंब्रह्माचशर्वश्चजगतः कारणंपरं आत्मेश्वरउपद्रष्टास्वयंदृग
विशेषणः ५०॥ ॥९॥ सर्वात्मनयासर्वभागभोक्ताऽपिभगवान्निजानंदतृप्तोऽपिस्वेनभा
गेनत्रिकपालपुरोडाशेनप्रीयमाणइवदक्षमाभाष्यसंबोध्यवचोबभाषे ४९ योऽहंजगतः कारणंआ
त्माचेश्वरश्चउपद्रष्टासाक्षीचस्वयंप्रकाशश्चनिरुपाधिश्चसएवब्रह्माचशर्वश्चेत्यन्वयः॥ ५० ॥ ❋ ॥

रामः
२७

कृतइत्यत आह अहमेवात्ममायामधिष्ठाय जगत्सृष्ट्यादि कुर्वन्सन्स च क्रियोचितां संज्ञां धारयामि ५१ तस्मिन्केवलेऽ
द्वितीये समानासमानजातीयभेदरहिते ब्रह्मणि मयि ब्रह्मरुद्रौ भूतानि च भेदेनाज्ञः पश्यतीत्यर्थः ५२ विद्वांस्तु भेदं न प
श्यतीति सदृष्टान्तमाह यथेति ५३ तस्मादेवमैक्यं पश्यन् कृतार्थो भवतीत्याह त्रयाणाम् एको भावः स्वरूपं येषाम् ५४ ॥

आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज सृजन्रक्षन्हरन्विश्वं दध्रे संज्ञां क्रियोचि
ताम् ५१ तस्मिन्ब्रह्मण्यद्वितीये केवले परमात्मनि ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुप
श्यति ५२ यथा पुमान्न स्वाङ्गेषु शिरःपाण्यादिषु क्वचित् पारक्यबुद्धिं कुरुते एवं भूतेषु
मत्परः ५३ त्रयाणामेकभावानां यो न पश्यति वै भिदाम् सर्वभूतात्मनां ब्रह्मन्स शान्ति
मधिगच्छति ५४ मैत्रेय उवाच एवं भगवतादिष्टः प्रजापतिपतिर्हरिं अर्चित्वा क्रतुना स्वे
न देवानुभयतोऽयजत् ५५ रुद्रं च स्वेन भागेन ह्युपाधावत्समाहितः कर्मणोदवसाने
न सोमपानितरानपि उदवस्य सहर्त्विग्भिः सस्नाववभृथं ततः ५६ तस्मा अप्यनुभावे
न स्वेनैवावाप्तराधसे धर्म एव मतिं दत्त्वा त्रिदशास्ते दिवं ययुः ५७ ॥ ५४ स्वेन क्रतुना त्रिकपालेष्ट्या उभ

यतः अग्रे प्रधानेन च ५५ स्वेन भागेन यज्ञावशिष्टेन उत्तवस्यते समाप्यतेऽनेनेत्युदवसानं तेन कर्मणा सोमपानितन
रानपि उपाधावदित्यनुषङ्गः ततश्च उदवस्य कर्म समाप्य अवभृथरूपं यथा भवति तथा स्नातवान् ५६ स्वेनैवाऽनु
भावेनाप्तराधसे प्राप्तसिद्धये तस्मा अपि ५७ ॥

॥८॥ ५९८॥ ५९

पू० आरंते भजते स्म अनन्यभावानामेकैवगतिः यः तं प्रलयकाले सुप्ता शक्तिरीश्वरमिव ५८ बृहस्पतेः शिष्यान्मयाश्रुतं ६० यः पवित्रं यश आकर्ण्य तथाऽनुकीर्त्तयेत् सः आत्मनः परस्यापि अघं संसारव्यसनं सर्वदा धुनोति ६१ इति श्रीभागवते महापुराणे चतुर्थस्कंधे टीकायां दक्षयज्ञसंधानं नाम सप्तमोऽध्यायः ७ दक्षकन्याऽन्वये प्राप्ता दक्षयज्ञकथोदिता मनुपुत्राऽन्व

एवं दाक्षायणी हित्वा सती पूर्वकलेवरं जज्ञे हिमवतः क्षेत्रे मेनायामिति शुश्रुम ५८ तमेव दयितं भूय आवृंक्ते पतिमम्बिका अनन्यभावैकगतिं शक्तिः सुप्तेव पूरुषम् ५९ एतद्भगवतः शंभोः कर्म्म दक्षाध्वरद्रुहः श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः ६० इदं पवित्रं परमीशचेष्टितं यशस्यमायुष्यमघौघमर्षणम् यो नित्यदाकर्ण्य नरोऽनुकीर्त्तयेत् धुनोत्यघं कौरव भक्तिभावतः ६१ इति श्रीभागवते महापुराणे चतुर्थस्कंधे दक्षयज्ञसंधानो नाम सप्तमोऽध्यायः ७ श्रीमैत्रेय उवाच सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः नैते गृहान् ब्रह्मसुता ह्यावसन्नूर्ध्वरेतसः १ मृषाऽधर्मस्य भार्यासीद्दंभं मायां च शत्रुहन् असूत मिथुनं तत्तु निर्ऋतिर्जगृहेऽप्रजः २

ये प्राप्ता ध्रुवचर्याऽथ पंचभिः १ अथ मे गुरुदारोक्तिरोषमत्सरतः पुरात् निर्गतेन ध्रुवेणाह तपसा तोषणं हरेः २ एवं तावत् मनुकन्यान्वयोक्तो वमरीच्यादीनां ब्रह्मपुत्राणां वंशा वर्णिताः तत्रावशिष्टं किंचिदाह सनकाद्या इति नावसन् नाश्रिताः ऊर्ध्वरेतसो नैष्ठिकाः अस्त एषां वंशो नास्ति १ अधर्मोऽपि ब्रह्मपुत्रस्तस्य वंशमाह मृषेति चतुर्भिः दंभः परप्रतारणं मायातद्वि

निष्कृतिः शठतायतत्याभ्यांकलिश्चतस्यस्वसादुरुक्तिश्चेत्यर्थः ३ यातनातीव्रवेदना ४ प्रतिसर्गोऽनुसर्गएव यद्वाप्र
तिसर्गः प्रलयः अधर्मस्यप्रलयहेतुत्वात् प्रतिसर्गत्वम् एतत् एतमधर्मवंशंपुण्यमितिवर्ज्जनद्वारापुण्यहेतुत्वात् ५ म

तयोः समभवल्लोभोनिष्कृतिश्चमहामते ताभ्यांक्रोधश्चहिंसाचयद्दुरुक्तिःस्वसाक
लिः ३ दुरुक्तौकलिराधत्तभयंमृत्युंचसत्तम तयोश्चमिथुनंजज्ञेयातनानिरयस्तथा॥
४ संग्रहेणमयाख्यातः प्रतिसर्गस्तवानघ त्रिःश्रुत्वैतत्पुमान्पुण्यंविधुनोत्यात्मनो
मलं ५ अथातः कीर्त्तयेवंशंपुण्यकीर्तेः कुरूद्वह स्वायंभुवस्यापिमनोर्हरेरंशांशजन्म
नः ६ प्रियव्रतोत्तानपादौशतरूपापतेःसुतौ वासुदेवस्यकलयारक्षायांजगतःस्थितौ
७ जायेउत्तानपादस्यसुनीतिःसुरुचिस्तयोः सुरुचिःप्रेयसीपत्युर्नेतरायत्सुतोध्रुवः॥
८ एकदासुरुचेःपुत्रमंकमारोप्यलालयन् उत्तमंनारुरुक्षंतंध्रुवंराजाऽभ्यनंदत ९ त
थाचिकीर्षमाणंतंसपत्न्यास्तनयंध्रुवं सुरुचिःशृण्वतोराज्ञःसेर्ष्यमाहातिगर्विता १०

नोःपुत्रवंशंहरेरंशांशोब्रह्मातस्यांशात् देहाद्वाज्जन्मयस्य ६ जगतोरक्षायांस्थितौ ७ सुनीतिः सुरुचिश्चजायेतयोः
र्मध्ये ८ तयोः प्रियाप्रियत्वंप्रपंचयन् ध्रुवचरित्रमाहपंचभिरध्यायैः सुरुचेः पुत्रमुत्तमसंज्ञंलालयन् ९ तथा

८
भा॰ च॰
३०

गर्वोक्तिमेवाह त्रिभिर्नेति नृपतेर्द्धिष्ण्यं आसनं नृपात्मजोऽपि भवान्नारोढुमर्हति ११ १२ पुरुषमीश्वरं १३ भि
न्नं तं पश्यतं सन्नवाचं कुंठितवाचं १४ उदूह्य आरोप्य अंतः पुरजनमुखात् श्रुत्वा १५ शोक एव दावाग्निस्तेन

नवत्स नृपतेर्द्धिष्ण्यं भवानारोढुमर्हति न गृहीतो मया यत्त्वं कुक्षावपि नृपात्मजः ११
बालोऽसि वत नात्मानमन्यस्त्रीगर्भसंभृतं नूनं वेद भवान्यस्य दुर्लभेऽर्थे मनोरथः १२
तपसाराध्य पुरुषं तस्यैवानुग्रहेण मे गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम्
१३ मैत्रेय उवाच मातुः सपत्न्याः सुदुरुक्तिविद्धः श्वसन्रुषा दंड हतो यथाऽहिः हित्वा
मिषंतं पितरं सन्नवाचं जगाम मातुः प्ररुदन्सकाशम् १४ तं निःश्वसंतं स्फुरिताधरोष्ठं
सुनीतिरुत्संग उदूह्य बाले निशम्य तत्पौरमुखान्नितांतं सा विव्यथे यद्गदितं सप
त्न्याः १५ सोत्सृज्य धैर्यं विललाप शोकदावाग्निना दावलतेव बाला वाक्यं सपत्न्याः
स्मरती सरोजश्रिया दृशा बाष्पकलामुवाह १६ दीर्घं श्वसंती वृजिनस्य पारमपश्यती
बालकमाह बाला माऽमंगलं तात परेषु मंस्था भुंक्ते जनो यत्परदुःखदस्तत् १७

दावाग्निगता लतेव स्थिता सा बाला विलापं चकार १६ वृजिनस्य दुःखस्य अमंगलमपराधं परेषु माऽमंस्थाः यद्यतः प

रम
३०

दुर्भगयामयाउदरेगृहीतः तस्मादेवत्वमन्येनव्हद्रश्च दुर्भगत्वमेवाह यांमामिडस्पतिर्भूपतिर्भार्येतिवोढुं स्त्रीकर्तुं विलज्जते
स्मवादासीमपि १८ पितृभार्यान्विनमात्रासमामातुः सपत्नीतयाऽपियदुक्तं तपसाआराध्यपुरुषमित्यादितत् आति
ष्ठकुरु अध्यासनंयदीच्छसि १९ परिचर्यैनिषेव्यविश्वस्यविभावनायपालनायआत्तास्वीकृतागुणाभिपत्तिः सत्वगु

णत्वं सुरुच्याऽभिहितं भवान्मेयद्दुर्भगायाउदरेगृहीतः स्तन्येनवृद्धश्च विलज्जतेयांभार्येतिवा
वोढुमिडस्पतिर्माम् १८ आतिष्ठ तत्तात विमत्सरस्त्वमुक्तंसमात्राऽपियदव्यलीकं आराधया
धोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमोयथा १९ यस्यांघ्रिपद्मं परिचर्य विश्वविभा
वनायात्तगुणाभिपत्तेः अजोऽध्यतिष्ठत्खलु पारमेष्ठ्यंपदंजितात्मश्वसनाभिवंद्यम् २० त
थामनुर्वोभगवान्पितामहोयमेकमत्यापुरुदक्षिणैर्मखैः इष्ट्वाभिपेदेदुरवापमन्यतोभौमंसु
खंदिव्यमथापवर्ग्यम् २१ तमेववत्साश्रयभृत्यवत्सलंमुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् अनन्य
भावेनिजधर्मभाविते मनस्यवस्थाप्यभजस्वपूरुषम् २२ नान्यंततः पद्मपलाशलोचनाद्दुः
खच्छिदंतेमृगयामिकंचन योमृग्यतेहस्तगृहीतपद्मयाश्रियेतरैरंगविमृग्यमाणया २३॥

णादिष्ठानंयेनततस्य जितआत्मामनः श्वसनः प्राणश्चयैस्तैरभिवंद्यं २० एकमत्यासर्वोंतर्यामिदृष्ट्या २१ मृग्यापदाब्जयोः पद्ध
तिर्मार्गोयस्यतमेवाश्रयशरणंव्रज ततोभजस्वनान्यस्मिन्भावोयस्यतस्मिन् निजधर्मैर्भाविते शोधिते २२ तमेवेत्यनेनसूचितंस

भा॰ टी॰ ३१

संजल्पितं विलापं न तस्य अर्थस्यागमो यस्मात्तथाभूतं वचः आकर्ण्य २४ २५ विस्मित इत्युक्तं तदेवाह अहो तेजः प्रभावः २६ २७ विकल्पे मानापमानविवेके सत्यपि भिन्ना न संति किंतु मोहकल्पिता एवेत्यर्थः कुतः यत्सुखदुःखवान्निजकर्मभिरेव भव

श्रीमैत्रेयउवाच एवंसंजल्पितंमातुराकर्ण्यार्थागमंवचः संनियम्यात्मनात्मानंनिश्चक्रा
मपितुः पुरात् २४ नारदस्तदुपाकर्ण्यज्ञात्वातस्यचिकीर्षितम् स्पृष्ट्वामूर्द्धन्यघघ्नेनपा
णिनाप्राहविस्मितः २५ अहोतेजःक्षत्रियाणांमानभंगममृष्यताम् बालोप्ययंहृदा
धत्तेयत्समातुरसद्वचः २६ श्रीनारदउवाच नाधुनाऽप्यवमानंतेसन्मानंवाऽपिपुत्रक
लक्षयामःकुमारस्यसक्तस्यक्रीडनादिषु २७ विकल्पेविद्यमानेऽपिनह्यसंतोषहेत
वः पुंसोमोहमृतेभिन्नायल्लोकेनिजकर्मभिः २८ परितुष्येत्ततस्ताततावन्मात्रेणपूरुषः
दैवोपसादितंयावद्वीक्ष्येश्वरगतिंबुधः २९ अथमात्रोपदिष्टेनयोगेनावरुरुत्ससियत्प्र
सादंसवैपुंसांदुराराध्योमतोमम ३० मुनयःपदवींयस्यनिःसंगेनोरुजन्मभिः नविदु
र्मृगयंतोऽपितीव्रयोगसमाधिना ३१॥ तिनियतः २८ उपशमोपदेशेन निवर्त्तयति परितुष्येत् क्षितिषड्भिः ईश्वर
गतिं वीक्ष्य ईश्वरानुकूल्यं विना नोद्यमाः फलहेतव इति ज्ञात्वा परितुष्येत् संतोषमेव कुर्यात् २९ दुष्करश्चतवायमुद्यम इत्याह अ
थेति द्वाभ्यां यस्य प्रसादमवरोद्धुं प्राप्तुमिच्छसि ३० निःसंगेन तीव्रयोगेन समाधिना मृगयंतोऽपि यस्य पदवीं मार्गं न विदुः सदे

स्कं॰ ४ अ॰ ८

राम॰ ३१

श्रेयसांकालेहृदत्ते ३२ सुखदुःखयोर्मध्येसुखेसतिपुण्यंक्षीयतइतिदुःखेसतिपापंक्षीयतइत्यात्मानंतोषयन् तमसःपारं मोक्षंप्राप्नोति ३३ किंचगुणैरधिकात्पुंसइतिल्यब्लोपेपंचमी तंदृष्ट्वाप्रीतिंकुर्यान्नत्वसूयांइत्यर्थः अनुक्रोशंकृपांलि सेत्नतुतिरस्कारंसमानान्मैत्रींनतुस्पर्द्धां ३४ ३५ क्षात्रंस्वभावंप्राप्तवतः अतएवाविनीतस्यदुर्वाक्यवाणैर्भिन्नेहृदि

अतोनिवर्त्ततामेषनिर्बंधस्तवनिष्फलः यतिष्यतिभवान्कालेश्रेयसांसमुपस्थिते ३२ य स्ययद्दैवविहितंसतेनसुखदुःखयोः आत्मानंतोषयन्देहीतमसःपारमृच्छति ३३ गुणाधि कान्मुदंलिप्सेदनुक्रोशंगुणाधमात् मैत्रींसमानादन्विच्छेन्नतापैरभिभूयते ३४ ध्रुवउवाच सोऽयंशमोभगवतासुखदुःखहतात्मनां दर्शितःकृपयापुंसांदुर्दर्शोऽस्मद्विधैस्तुयः ३५ अथा पिमेऽविनीतस्यक्षात्त्रंघोरमुपेयुषः सुरुच्यादुर्वचोवाणैर्नभिन्नेश्रयतेहृदि ३६ पदंत्रिभुव नोत्कृष्टंजिगीषोःसाधुवर्त्ममे ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ३७ नूनंभवा न्भगवतोयोऽगजःपरमेष्ठिनः वितुदन्नटतेवीणांहितार्थंजगतोऽर्कवत् ३८ मैत्रेयउवाच॥ इत्युदाहृतमाकर्ण्यभगवान्नारदस्तथा प्रीतःप्रत्याहतंबालंसद्वाक्यमनुकंपया ३९॥ श्रयतेनतिष्ठति

३६ अन्यैरनधिष्ठितंत्रिभुवनेउत्कृष्टपदंजेतुमिच्छोर्मेसाधुवर्त्ममार्गंब्रूहि ३७ अंकजइतिपाठे उत्संगाज्जातोयोनार दःसभवान्वीणांवितुदन्वादयन् हितायअटति ३८ ३९ ॥ ॥

भा॰ च॰ ३२

निःश्रेयसस्य अभिप्रेतार्थस्य पंथाः कोऽसावित्यत आह भगवान्वासुदेवः अतएव तं भज ४० ४१ मधुवनाख्यं यमुनायास्तटं गच्छ यत्र मधुवने ४२ अध्ययनाद्यभावमपि आत्मन उचितानि योग्यानि देवतानमस्कारादीनि कृत्वेति यमनियमाउक्ताः आसनकल्पनं च कुशादिभिः स्वस्तिकादिभिश्च ४३ प्राणेंद्रियमनसां मलं चांचल्यं व्युदस्येति प्राणायामप्रत्याहाराः

श्रीनारदउवाच जनन्याऽभिहितः पंथाः सवै निःश्रेयसस्य ते भगवान्वासुदेवस्तं भजतं प्र
वणात्मना ४० धर्म्मार्थकाममोक्षार्थं य इच्छेच्छ्रेय आत्मनः एकं ह्येव हरेस्तत्र कारणं पादसेव
नम् ४१ तत्तात गच्छ भद्रं ते यमुनायास्तटं शुचि पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः ४२
स्नात्वाऽनुसवनं तस्मिन् कालिंद्याः सलिले शिवे कृत्वोचितानि निवसन्नात्मनः कल्पितासनः
४३ प्राणायामेन त्रिवृता प्राणेंद्रियमनोमलं शनैर्व्युदस्याभिध्यायेन्मनसा गुरुणा गुरुम् ४४
प्रसादाभिमुखं शश्वत्प्रसन्नवदनेक्षणं सुनासं सुभ्रुवं चारुकपोलं सुरसुंदरम् ४५ तरुणं र
मणीयांगमरुणोष्ठेक्षणाधरं प्रणताश्रयणं नृम्णं शरण्यं करुणार्णवम् ४६ श्रीवत्सांकं
घनश्यामं पुरुषं वनमालिनम् शंखचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ४७ ध्येयं धारणमाह

अभिध्यायेदित्यादि षड्भिः गुरुणा धीरेण मनसा गुरुं श्रीहरिं ४४ सुरेषु सुंदरं ४५ रमणीयान्यंगानि यस्य ओष्ठश्चेक्षणे च ओष्ठेक्षणे अरुणे ओष्ठेक्षणे धारयतीति तथा तं अरुणं ओष्ठमीक्षणं च धारयतीति वा नृम्णं सुखकरं यद्वा नृम्णं धनं

कौस्तुभस्याभरणंग्रीवायांयस ४८ कांचीकलापेनपर्यस्तंपरिवेष्टितं मनोनयनयोर्वर्द्धनंहर्षकरं ४९ हृत्पद्मकर्णिका
यांघिस्यंमध्यस्यानंतदाक्रम्यसमर्चनामात्मनिमनसिस्थितं ५० ध्यानमाहस्मयमानमितिनियतेनप्रागुक्तधारणया

किरीटिनंकुंडलिनंकेयूरवलयान्वितं कौस्तुभाभरणग्रीवंपीतकौशेयवाससम् ४८ कां
चीकलापपर्यस्तंलसत्कांचननूपुरं दर्शनीयतमंशांतंमनोनयनवर्द्धनम् ४९ पद्भ्यांनख
मणिश्रेण्याविलसद्भ्यांसमर्च्चता हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ५० स्म
यमानमभिध्यायेत्सानुरागावलोकनं नियतेनैकभूतेनमनसावरदर्षभम् ५१ एवंभ
गवतोरूपंसुभद्रंध्यायतोमनः निर्वृत्यापरयातूर्णंसंपन्नंननिवर्त्तते ५२ जप्यश्चपरमो
गुह्यःश्रूयतांमेनृपात्मज यंसप्तरात्रंप्रपठन्पुमान्पश्यतिखेचरान् ५३ ॐनमोभगव
तेवासुदेवाय मंत्रेणानेनदेवस्यकुर्याद्द्रव्यमयींबुधः सपर्यांविविधैर्द्रव्यैर्देशकालवि
भागवित् ५४ सलिलैःशुचिभिर्माल्यैर्वन्यैर्मूलफलादिभिः शस्तांकुरांशुकैश्चार्च्चेत्तुल
स्याप्रिययाप्रभुम् ५५॥ रसुस्थिरेण अतएकभूतेनएकाग्रेणधारणोक्ता निविशेषणानिध्यानेपिद्रष्टव्यानि
यद्यप्यत्रैकमात्रमेवतदुक्तमेकादशस्कंधे नान्यानिचिंतयेद्भूयःसुस्मितंभावयेन्मुखमिति ५१ समाधिमाहएवमितिनि
र्वृत्यासंपन्नंसत् ५२ जप्योमंत्रः ५३ ५४ द्रव्याण्येवाहसलिलैरितिशस्तैर्दूर्वांकुरैःवन्यैरेवांशुकैःभूर्जत्वगादिभिः ५५

श्रा०च०
३३

पूजाया अधिष्ठानमाह लब्ध्वेति संपाद्य द्रव्यमयीं शिलादिभिर्निर्मितां पूजासाद्गुण्यहेतून् प्रहसाद्भ्यां आभृतात्मा
त्माधृतचित्तः मितवन्यभुक्इ नितया ५६ यत्करिष्यतीति तदानीमवतारप्राचुर्याभावात् ५७ पूर्वसेविताः सेव
नेकारिताः कार्यत्वेन विहिता इत्यर्थः मंत्रहृदयेन द्वादशाक्षरेण ५८ एवमुक्तरीत्या मनोगतं यथा भवति तथा का-

लब्ध्वा द्रव्यमयीमर्चां क्षित्यंब्वादिषु वार्चयेत् आभृतात्मा मुनिः शांतो यतवाग्मितवन्यभुक्
५६ स्वेच्छावतारचरितैरचिंत्यनिजमायया करिष्यत्युत्तमश्लोकस्तद्ध्यायेद्धृदयंगतम् ५७
परिचर्या भगवतो यावत्यः पूर्वसेविताः ता मंत्रहृदयेनैव प्रयुंज्यान्मंत्रमूर्तये ५८ एवं कायेन
मनसा वचसा च मनोगतं परिचर्यमाणो भगवान्भक्तिमत्परिचर्यया ५९ पुंसाममायि
नां सम्यग्भजतां भाववर्द्धनः श्रेयो दिशत्यभिमतं यद्धर्मादिषु देहिनां ६० विरक्तश्चेंद्रिय
रतौ भक्तियोगेन भूयसा तं निरंतरभावेन भजेताद्धा विमुक्तये ६१ इत्युक्तस्तं परिक्रम्य प्र
णम्य च नृपार्भकः ययौ मधुवनं पुण्यं हरेश्चरणचर्चितं ६२ तपोवनं गते तस्मिन्प्रविष्टोऽ
न्तःपुरं मुनिः अर्हितार्हणको राज्ञा सुखासीन उवाच तं ६३॥ ॥ ॥

यादिभिर्भक्तिमत्या परिचर्यया परिचर्यमाणो धर्मार्थकामेषु यदभिमतं तत् श्रेयो दिशतीति द्वयोरन्वयः ५९ ६० विर
क्तः सन् भजेत् किमर्थं विमुक्तये ६१ हरेश्चरणाभ्यां चर्चितं मंडितं ६२ अर्हितं सत्कृत्य समर्पितं अर्हणमर्घादिकं यस्मै ६३

रामः
३३

किंवानरिष्यतेननश्यतीतिसवितर्कः प्रश्नः ६४ मात्रासहनिर्वासितइतितस्या अप्यनादृतत्वात् ६५ मास्मादंतिकिंस्विभ
क्षयंतीत्यर्थः ६६ ६७ देवेनश्रीहरिणागुप्तमात्मसात्कृत्वारक्षितंयस्ययशोजगत्प्रावृङ्क्तेव्याप्नोति ६८ विपुलयन्वि

नारदउवाच राजन्किंध्यायसेदीर्घंमुखेनपरिशुष्यता किंवानरिष्यतेकामोधर्मोवाऽर्थेनसंयु
तः ६४ राजोवाच सुतोमेबालकोब्रह्मन्स्त्रैणेनाऽकरुणात्मना निर्वासितः पंचवर्षः सहमा
त्रामहान्कविः ६५ अप्यनाथंवनेब्रह्मन्मास्मादंत्यर्भकंवृकाः श्रांतंशयानंक्षुधितंपरिम्ला
नमुखांबुजं ६६ अहोमेबतदौरात्म्यंस्त्रीजितस्योपधारय योऽङ्कंप्रेम्णारुरुक्षंतंनाभ्यनंद
मसत्तमः ६७ श्रीनारदउवाच मामाशुचःस्वतनयंदेवगुप्तंविशांपते तत्प्रभावमविज्ञायप्रा
वृङ्क्तेयद्यशोजगत् ६८ सुदुष्करंकर्मकृत्वालोकपालैरपिप्रभुः एष्यत्यचिरतोराजन्यशो
विपुलयंस्तव ६९ श्रीमैत्रेयउवाच इतिदेवर्षिणाप्रोक्तंविश्रुत्यजगतीपतिः राजलक्ष्मी
मनादृत्यपुत्रमेवान्वचिंतयत् ७० तत्राभिषिक्तःप्रयतस्तामुपोष्यविभावरीं समाहितःपर्य
चरदृष्यादेशेनपूरुषं ७१ त्रिरात्रांतेत्रिरात्रांतेकपित्थबदराशनः आत्मवृत्त्यनुसारेणमासं
निन्येऽर्चयन्हरिं ७२॥ एस्तारयन् ६९ ७० ध्रुवोमधुवनेकिमकरोदित्यपेक्षायामाह तत्रेत्यादिना अभिषिक्तः
स्नातोयस्यांप्राप्तस्तां ७१ कपित्थानिबदराणिचअशनंयस्य आत्मवृत्तिःदेहस्थितिःतदनुसारेण ७२

भाग॰ ४

७३ तृतीयं च आनयन् ईषद्विनयन् अनुपाधावत् इत्यन्वयः प्रतिमासमाहारसंकोचं तयोः तिरेव न कृतवानित्यर्थः ७४ ७५
७६ भूतानि शब्दादीनींद्रियाणि च आशेरते यस्मिन् तन्मन आकृष्य ब्रह्म ध्यायन् ७७ धारयमाणस्य सतः तस्य तेजःसो
ढुं अशक्नुवंतः कंपिताः ७८ तस्यांगुष्ठेन निपीडिता आक्रांता सती मही तत्र तदा अर्द्धेन नम समे ऽशाके अर्द्धशब्दस्य न

द्वितीयं च तथा मासं षष्ठे षष्ठे ऽर्भको दिने तृणपर्णादिभिः शीर्णैः कृतान्नो ऽभ्यर्च्चयद्विभुं
७३ तृतीयं चानयन्मासं नवमे नवमे ऽहनि अब्भक्ष उत्तमश्लोकमुपाधावत्समाधिना ७४
चतुर्थमपि वै मासं द्वादशे द्वादशे ऽहनि वायुभक्षो जितश्वासो ध्यायन्देवमधारयत् ७५
पंचमे मास्यनुप्राप्ते जितश्वासो नृपात्मजः ध्यायन्ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचलः ७६
सर्वतो मन आकृष्य हृदि भूतेंद्रियाशयं ध्यायन्भगवतो रूपं नाद्राक्षीत्किंचनापरं ७७ ॥
आधारं महदादीनां प्रधानपुरुषेश्वरं ब्रह्म धारयमाणस्य त्रयो लोकाश्चकंपिरे ७८ यदै
कपादेन स पार्थिवार्भकस्तस्थौ तदंगुष्ठनिपीडिता मही ननाम तत्रार्द्धमिवेंद्रधिष्ठिता तरी
वसव्येतरतः पदे पदे ७९ तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्यासुमनन्यया धिया

पुंसकत्वादंशांशिनोरभेदाच्चैवं सामानाधिकरण्यं इभेंद्रेणाधिष्ठिता तरी नौर्यथा पदे पदे सव्यतो दक्षिणतश्च नमति तद्व
त् ७९ अन्यदप्याश्चर्यमाह तस्मिन् ध्रुवे विश्वं विश्वात्मकं विष्णुं आत्मनः सकाशात् अनन्यया धिया आत्माभेददृष्ट्यास्त्र

रामः
३४

मिथ्यायनिमति किंकृत्वा असुंप्राणंतत् द्वारंचनिरुध्यविश्वमात्मन्येकीकृत्यस्वप्राणनिरोधेकृते विश्वस्यप्राणनि
रोधोजातइतिभावः ८० एवंप्राणनिरोधंकदाचिदपिनविद्मः अखिलसत्वधाम्नः सर्वप्राणिशरीरस्यततस्मात्त्वद्वृजि
जिनात्क्लेशात् ८१ यतोबालात्कोऽसौबालः कथंचतस्मात्प्राणनिरोधइत्यतआह उत्तानपादस्यपुत्रोमयिविश्व

लोकानिरुच्छ्वासनिपीडिताभृशंसलोकपालाःशरणंययुर्हरिं ८० देवाऊचुः नैवंविदा
मोभगवन्प्राणरोधंचराचरस्याखिलसत्वधाम्नः विधेहितन्नोवृजिनाद्विमोक्षंप्राप्तावयंत्वां
शरणंशरण्यम् ८१ श्रीभगवानुवाच माभैष्टबालंतपसोदुरत्ययात् निवर्तयिष्येप्रतिया
तस्वधामयतोहिवःप्राणनिरोधआसीदौत्तानपादिर्मयिसंगतात्मा ८२ इतिश्रीभागवते
महापुराणेचतुर्थस्कंधेध्रुवचरितेऽष्टमोऽध्यायः ८ । श्रीमैत्रेयउवाच तएवमुच्छिन्नभयाउ
रुक्रमेकृतावनामाः प्रययुस्त्रिविष्टपम् सहस्रशीर्षाऽपिततोगरुत्मतामधोर्वनंभृत्यदिदृ
क्षयागतः १ सवैधियायोगविपाकतीव्रयाहृत्पद्मकोशेस्फुरितंतडित्प्रभं ॥ ॥

रूपेसंगतात्माऽएकंप्राप्तोवर्ततइति ८२ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेटीकायामष्टमोऽध्यायः ८ नवमेतुहरिं
लब्ध्वातस्माद्वरान्ध्रुवः प्रत्यागत्याकरोद्राज्यंपित्रादत्तमितीर्यते एवंभगवद्वाक्येनगतभयाः १ सवैध्रुवःयोगविपाकेन
दार्ढ्येन निश्चलयाप्रज्ञाधिरूढंपुरतःस्थितमपियदांतर्हितंतदसौनापश्यत्तदाभगवतेक्षणतःस्वरूपंमाकृष्टंअत ॥१

तिरोहितमुपलक्ष्य व्युत्थितः सन् तदवस्थं यावद्दृग्गोचरः स्फुरितं तादृशं ददर्श २ आगतसाध्वसः जातसंभ्रमः विनमय्य आनतं कृत्वा । संभ्रममेवाह दृग्भ्यां प्रपिबन्निव पश्यन्नवंदत आस्येन चुंबन्निवावंदत भुजाभ्यामाश्लिषन्निवावंदतेत्यर्थः ३ विवक्षंतं तद्गुणानुवक्तुमिच्छंतं अतद्विदं स्तुत्यादिकर्तुमजानंतं अस्य ध्रुवस्य सर्वस्य च हृद्यवस्थितत्वात् ज्ञात्वा ब्रह्ममयेन वेदात्मकेन शं

तिरोहितं सहसैवोपलक्ष्य बहिः स्थितं तदवस्थं ददर्श २ तद्दर्शनेनागतसाध्वसः क्षिताववंदतांगं विनमय्य दंडवत् दृग्भ्यां प्रपश्यन् प्रपिबन्निवार्भकश्चुंबन्निवास्येन भुजैरिवाश्लिषन् ३ स तं विवक्षंतमतद्विदं हरिर्ज्ञात्वाऽस्य सर्वस्य च हृद्यवस्थितः कृतांजलिं ब्रह्ममयेन कंबुना पस्पर्श बालं कृपया कपोले ४ स वै तदैव प्रतिपादितां गिरं दैवीं परिज्ञातपरात्मनिर्णयः तं भक्तिभावोऽभ्यगृणादसत्वरं परिश्रुतोरुश्रवसं ध्रुवक्षितिः ५ ध्रुव उवाच योऽतः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना अन्यांश्च हस्तचरणश्रवणत्वगादीन्प्राणान्नमो भगवते पुरुषाय तुभ्यं ६॥ एव ४ भगवता प्रतिपादितां गिरं प्रतिपद्य इति शेषः प्रतिपद्यतामिति पाठे तां वेदात्मिकां परिज्ञातः परात्मनोरीश्वरजीवयोर्निर्णयो येन सः अत एव भक्त्या भावः प्रेम यस्य सः असत्वरं स्थैर्येण परितः श्रुतं विख्यातं उरुश्रवः कीर्तिर्यस्य तं ध्रुवा क्षितिः स्थानं यस्येति भाविनिर्देशः ५ ईशानुग्रहसंप्राप्तवागाद्यद्भुतवृत्तिभिः द्वादशादित्यसंकाशैः श्लोकैः स्तौति हरिं ध्रुवः यो मे प्रसुप्तां लीनां वाचं अन्यांश्च प्राणानिंद्रियाणि स्वधाम्ना चिच्छक्त्या संजीवयति यतः अखिला

ननुवागादींद्रियशक्तिधरावन्ह्यादयः प्रसिद्धानाहमित्यतआह एकइति अनुविश्यपुरुषोऽन्तर्यामीत्वमेकएवतस्यामाया
याः असत्सुगुणेष्विंद्रियाद्रियादिषुस्थितः सन्तत्तद्देवरूपेणनानेवभासि ननुत्वद्व्यतिरेकेणज्ञानक्रियाशक्तिधरः कश्चिद
स्तीत्यर्थः ७ अपिचकिंवक्तव्यंवन्ह्यादयोज्ञानादिशक्तिधरानभवंतीतियस्मात्ब्रह्मणोऽपिज्ञानंत्वदधीनमेवेत्याह
त्वद्दत्तयावयुनयाज्ञानेनभवंतंशरणंप्रपन्नोब्रह्माइदंविश्वंअपश्यत् कथंसुप्तः पुरुषः प्रबुद्धः सन्नयथापश्यतितद्व
त् अतः आपवर्ग्यामुक्तास्तेषामपिशरणं कृतविदासर्वेंद्रियजीवनेनत्वत्कृतमुपकारंजानताकथंविस्मर्यते एवंभूतंत्वा

एकस्त्वमेवभगवन्निदमात्मशक्त्यामायाख्ययोरुगुणयामहदाद्यशेषं सृष्ट्वाऽनुविश्यपुरुषस्त
दसद्गुणेषुनानेवदारुषुविभावसुवद्विभासि ७ त्वद्दत्तयावयुनयेदमचष्टविश्वंसुप्तप्रबुद्धइव
नाथभवत्प्रपन्नः तस्यापवर्ग्यशरणंतवपादमूलंविस्मर्यतेकृतविदाकथमार्तबंधो ८ नूनंवि
मुष्टमतयस्तवमाययातेयेत्वांभवाऽप्ययविमोक्षणमन्यहेतोः अर्चंतिकल्पकतरुंकुणपोपभो
ग्यमिच्छंतियत्स्पर्शजंनरकेऽपिनृणां ९ यानिर्वृतिस्तनुभृतांतवपादपद्मध्यानाद्भवज्जनकथाश्र
वणेनवास्यात॥ एवंभजंतः कृतघ्नाइत्यर्थः ८ येचमादृशाःकामाद्यर्थंभजंतितेऽतिमूढाइत्याह नूनमिति भवाप्ययोर्ज
न्ममरणेतद्विमोक्षहेतुंत्वामन्यहेतोः कामाद्यर्थंभजंतितेनूनंविमुष्टमतयः वंचितचित्ताः यतस्तेकल्पतरुंत्वामर्चंतिततः कुणपतु
ल्यदेहस्योपभोग्यंसुखमिच्छंति नचेच्छायोग्यंतदित्याह यतस्पर्शजंविषयसंबंधजन्यंसुखंतुनरकेऽपिभवति ९ ननुस्वर्गा
दिसुखंसकामैः प्राप्यतेनिष्कामभजनेनतत्कस्मादित्यतआह येति स्वमहिमनिनिजानंदरूपेऽपिमाभूत् नभवतीत्यर्थः अंत

नृत्यमाना: नृत्यन्त: रक्तकंठ्य: नानारागैरनुरंजितकंठ्य: कृष्णस्याभिमर्शेन संस्पर्शेन मुदिता: इदं विश्वं ९ मुकुंदेन सह स्वरजाती: षड्जादिस्वरालापगती: अमिश्रिता: कृष्णेनोन्नीताभिरसंकीर्णा: प्रीयमाणेन समानिता: तज्ज्ञातुन्नयूतमेव ध्रुवं ध्रुवाख्यं तालं विशेषं कृत्वा निन्ये उन्नीनवती १० एवं नृत्यगीतादिना श्रीकृष्णस्य संमानितानां तासां अतिप्रीतिविलसितं कृतमाह काचिदिति

उच्चैर्जगुर्नृत्यमाना रक्तकंठ्यो रतिप्रियाः कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतं ९ काचित् समं मुकुंदेन स्वरजातीरमिश्रिताः उन्निन्ये पूजिता तेन प्रीयता साधु साध्विति तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् १० काचिद्रासपरिश्रांता पार्श्वस्थस्य गदाभृतः जग्राह बाहुना स्कंधं श्लथद्वलयमल्लिका ११ तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभं चंदनालिप्तमाघ्राय हृष्टरोमा चुचुंब ह १२ कस्याश्चिन्नाट्यविक्षिप्तकुंडलत्विषमंडितं गंडं गंडे संदधत्याः प्रादात्तांबूलचर्वितं १३ नृत्यती गायती काचित्कूजन्नूपुरमेखला पार्श्वस्थाच्युतहस्ताब्जं श्रांताधात्स्तनयोः शिवं १४ गोप्यो लब्ध्वाऽच्युतं कांतं श्रिय एकांतवल्लभं ॥

[illegible] मल्लिका: सा ११ उत्पलस्य सौरभमिव सौरभं यस्य तं बाहुं १२ नाट्येन नृत्येन विक्षिप्तयोश्चंचलयो: कुंडलयोस्त्विषेण [illegible] मंडितं गंडं कपोलं तथाभूते स्वगंडे संदधत्या: संयोजयंत्या: १३ कूजती नूपुरमेखला च यस्या: सा [illegible] १४ ॥ एवमन्या अपि गोप्यो यथायथं नानाविभ्रमैर्विजह्रुरित्याह ॥ ० ॥ श्रीकृष्णाय नमः ॥ ९ ॥ ९ ॥ ९ ॥ ९ ॥

गोप्यइति १५ तत्र आदकेषुगायकेषुचसस्त्रीकेषुगंधर्वकिन्नरादिषुरसावेशेनसुह्यत्सुनृत्यत्सुचान्यामेववाद्यादिसंपत्तिंदर्शयन्सुसमंभ्रममाह कर्णोत्पलेति कर्णोत्पलैश्चअलकविटंकैरलकालंकृतैः कपोलैश्चघर्मैश्चवक्त्रेषुश्रीःशोभायासांताः घोषाःकिंकिण्यः वलयनूपुरघोषैर्वाद्यैर्वादित्रैः स्वकेशेभ्यःस्रस्ताःस्रजोयासांताः एतेनतालगतिसंतुष्टाःकेशाःसशिरःकंपपादेषुपुष्पवृष्टिं ... कुर्वन्तिस्मेत्युत्प्रेक्षितं भगवतासहननृतुः भ्रमराएवगायकायस्यांरासगोष्ठ्यां १६ यथागोप्योनानाविभ्रमैर्भगवतासहविजह्रुः एवंभगवानपिस्वविलासैस्ताभिःसहरेमेइत्याह एवमिति तद्विलासाऽनभिभूतत्वेवरतौदृष्टांतः यथाऽर्भकइति

गृहीतकंठ्यस्तद्दोर्भ्यां गायंत्यस्तंविजह्रिरे १५ कर्णोत्पलालकविटंककपोलघर्म्मवक्त्रश्रियोवलयनूपुरघोषवाद्यैः गोप्यःसमंभगवताननृतुःस्वकेशस्रस्तस्रजोभ्रमरगायकरासगोष्ठ्यां १६ एवंपरिष्वंगकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः रेमेरमेशोव्रजसुंदरीभिर्यथाऽर्भकःस्वप्रतिबिंबविभ्रमः १७ तदंगसंगप्रमुदाकुलेंद्रियाः केशान्दुकूलंकुचपट्टिकांवा नांजःप्रतिव्योढुमलंव्रजस्त्रियोविस्रस्तमालाभरणाःकुरूद्वह १८ कृष्णविक्रीडितंवीक्ष्यमुमुहुःखेचरस्त्रियः ॥१९॥ स्वप्रतिबिंबैर्विभ्रमः क्रीडायस्यसःएवंअनेनैतद्दर्शितं स्वीयमेवसर्वंकलाकौशलंसौगंध्यलावण्यमाधुर्यादिचतासुसंचार्य्यताभिःसहरेमेयथाऽर्भकःस्वप्रतिबिंबैरमते १७ ताःस्तुभगवद्विलासैराकुलाबभूवुरित्याह तदंगेति तस्यांगसंगेनप्रकृष्टामुत्प्रीतिस्तयाआकुलानि ... वशानीन्द्रियाणियासां ताःविस्रस्तंबंधनंकेशादीनांअंजसाप्रतिव्योढुंयथापूर्वंधर्तुंनालंनसमर्थाबभूवुः विस्रस्तामालाआभरणानिचयासांताः ॥१८॥ नकेवलंताएवाकुलेंद्रियाःकिंतुदेव्योपीत्याह कृष्णविक्रीडितमिति किंच शशांकश्चेति अनेनैतत्सूचितंशशांकेन

३३
भा०द०
पू०
१११

नगृतोबिस्मृतायांततः प्राकृताः सर्वेऽपग्रहाः तत्रतत्रैवतस्थुः ततश्चातिदीर्घासुरात्रिषुयथासुखंविजह्रुरिति ॥ १९ ॥
किंचकृत्वेति अयंभावः कात्यायनिमहामायेमहायोगिन्यधीश्वरि नंदगोपसुतंदेविपतिंमेकुरुतेनमः इतिप्रत्येकंश्री
भिः प्रार्थनात्भगवताऽपियातावल्लाव्रजेसिद्धामयेमारंस्यथक्षपाइतितथैवप्रतिश्रुतत्वात्तावंतमात्मानंकृत्वारेमेइ
तियावतीः यावत्यः २० कृपाऽतिशयमाह तासामिति २१ ततोतिहृष्टानांगोपीनांचरितमाह गोप्यइति स्फु
रतांस्वर्णकुंडलानांकुंतलानांचत्विषांगंडेषुयाश्रीः तयासुधितेनअमृतायितेनहाससहितेननिरीक्षणेनचऋ

कामार्दिताः शशांकश्चसगणोविस्मितोऽभवत् १९ कृत्वातावंतमात्मानंयावतीः
गोपयोषितः रेमेसभगवांस्ताभिरात्मारामोऽपिलीलया २० तासामतिविहारेण
श्रांतानांवदनानिसः प्रामृजत्करुणः प्रेम्णाशंतमेनांगपाणिना २१ गोप्यः स्फुरत्पु
रटकुंडलकुंतलत्विड्गंडश्रियासुधितहासनिरीक्षणेन मानंदधत्यऋषभस्यजगुः
कृतानिपुण्यानितत्कररुहस्पर्शप्रमोदाः २२ ताभिर्युतःश्रममपोहितुमंगसंगघृष्ट

षभस्यपत्युः श्रीकृष्णस्यमानंदधत्यः पूजांकुर्वंत्यः ॥ ७ स्रजः सकुचकुंकुमरंजितायाः ॥
दत्तकर्माणिजगुः तस्यकररुहैर्नखैः स्पर्शेनप्रमोदोयासांताः ॥ २२ ॥ अथजलकेलिमाह ताभिरिति तासा
मंगसंगेनघृष्टासंमर्दितायाःस्रक्तस्याः स्रजः अतएवतासांकुचकुंकुमेनरंजितायाः संबंधिभिर्गंधर्व
पालिभिः गंधर्वपाः गंधर्वपतयइवगायंतोयेऽलयस्तैरनुद्रुतः ॥ अनुगतः सः श्रीकृष्णः वाः ॥ ६ ॥ ६ ॥ ६ ॥

१११

उदकं आविशत् भिन्नसेतुः विदारितवप्रः स्वयं चातिक्रांतलोकवेदमर्य्यादः २३ स्वरतिः आत्मारामोपि अत्र गो
पीमंडले अंभसि वा जलस्थलक्रीडि दर्शिते २४ वनक्रीडां दर्शयति ततश्चेति यमुनायाउपवनेजलस्थलप्रसूना
नां गंधोयस्मिन् तेनानिलेनजुष्टानि दिशांतटानि अंतायस्मिन् यद्वा दिशश्चतटं स्थलं च यस्मिन्नुपवने भृंगा

गंधर्वपालिभिरनुद्रुत आविशद्वाः श्रांतोगजीभिरिभराडिव भिन्नसेतुः २३ सोऽंभस्य
लं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽंग वैमानिकैः कुसुम
वर्षिभिरीड्यमानोरेमेस्वयं स्वरतिरत्रगजेंद्रलीलः २४ ततश्च कृष्णोपवनेजलस्थल
प्रसूनगंधानिलजुष्टदिक्तटे चचारभृंगप्रमदागणावृतोयथामदच्युद् द्विरदः
करेणुभिः २५ एवंशशांकांशुविराजितानिशाः ससत्यकामोऽनुरताबलागणः ॥
सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयाः २६ राजोवाच सं
स्थापनाय धर्मस्य प्रशमायेतरस्य च अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ २७ ॥

णां प्रमदानां च गणैरावृतः २५ रासक्रीडांनिगमयति एवमिति सत्यकामः सत्यसंकल्पः अनुरागिस्त्रीकदंबस्थः एवं
सर्वा निशाः सेवितवान् शरत्काव्यकथारसाश्रयाः शरदि भवाः काव्येषु कथ्यमानाये रसाः तेषामाश्रयभूताः
यद्वा निशा इति द्वितीयांऽत्यंतसंयोगे शृंगाररसाश्रयाः शरदि प्रसिद्धाः काव्येषु याः कथास्ताः सिषेव इति एवम
प्यात्मन्येवावरुद्धसौरतः चरमधातुर्न तु स्खलितो यस्येति कामजयोक्तिः २६।२७ ॥ ७ ॥

प्रतीपंप्रतिकूलमधर्म्ममित्यर्थः आचरत्कृतवानन्नचेदमधर्म्ममात्रंकलंजभक्षणादिवत्किंतुमहासाहसमित्याह पर
दाराभिमर्शनमिति २८ आप्तकामस्यनायमधर्म्मइतिचेतत्यद्येवंकामाभावान्निंदितंकेनाभिप्रायेणकृतवानितिपृच्छतिआ
प्तकामइति २९ परमेश्वरेकैमुतिकन्यायेनपरिहर्तुंसामान्यतोमहतांवृत्तांतमाह धर्मव्यतिक्रमइतिसाहसंचदृष्टंब्रह्म
पतीद्रसोमविश्वामित्रादीनांतच्चतेषांतेजस्विनांदोषायनभवतीति ३० तर्हियद्यदाचरतिश्रेष्ठइतिन्यायेनान्योपिकुर्य्यादित्या

सकथंधर्मसेतूनांवक्ताकर्ताऽभिरक्षिता प्रतीपमाचरत्ब्रह्मन्परदाराभिमर्शनं २९ आ
प्तकामोयदुपतिःकृतवान्वैजुगुप्सितं किमभिप्रायएतन्नः संशयंछिंधिसुव्रत २९ श्री
शुकउवाच धर्मव्यतिक्रमोदृष्टईश्वराणांचसाहसं तेजीयसांनदोषायवन्हेःसर्वभुजो
यथा ३० नैतत्समाचरेज्जातुमनसाऽपिह्यनीश्वरः विनश्यत्याचरन्मौढ्याद्यथारुद्रो
ब्धिजंविषं ३१ ईश्वराणांवचस्सत्यंतथैवाचरितंक्वचित् तेषांयत्स्ववचोयुक्तंबुद्धिमां
स्तत्समाचरेत् ३२ कुशलाचरितेनैषामिहस्वार्थोनविद्यते विपर्ययेणवानर्थोनि
रहंकारिणांप्रभो ३३ किमुताखिलसत्वानांतिर्य्यङ्मर्त्यदिवौकसां ॥ शंक्याहनैतदिति

अनीश्वरोदेहादिपरतंत्रः यथारुद्रव्यतिरिक्तोविषमाचरन्भक्षयन् ३१ कथंतर्हिसदाचारस्यप्रामाण्यमतआ
ह ईश्वराणामिति तेषांवचःसत्यंअतस्तदुक्तमाचरेदेव आचरितंतुक्वचित्सत्यंअतःस्ववचोयुक्तंतेषांवचसायद्युक्तं
तंअविरुद्धंतत्तदेवाचरेत् ३२ ननुतर्हितेनापिकिमेवंसाहसंनाच[illegible]तत्राहकुशलेति प्रारब्धकर्मक्षपणमात्रमेवतेषांकृ

[illegible]

कुशलाकुशलान्वयो न विद्यत इति किंपुनर्वक्तव्यमित्यर्थः ३४ एतदेव स्फुटीकरोति यस्य पादपंकजपरागस्य निषेवणेन तृ
प्ताः यद्वा यस्य पादपंकजपरागे निषेवा येषां ते तथा ते च ते तृप्ताश्चेति भक्ता इत्यर्थः तथा ज्ञानिनश्च न नह्यमानाः बंधनमप्रा
प्नुवंतः परदारत्वं गोपीनामंगीकृत्य परिहृतं ३५ इदानीं भगवतः सर्वांतर्यामिणः परदारसेवा नाम न काचिदित्याह गोपीना
मिति योंऽतश्चरति अध्यक्षो बुद्ध्यादिसाक्षी स एव क्रीडनेन देहभाक् न तु अस्मदादितुल्यः येन दोषः स्यादिति ३६ नन्वेवं चेदाप्तका

ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ३४ यत्पादपंकजपरागनिषेवतृप्ता योगप्र
भावविधुताखिलकर्मबंधाः स्वैरं चरंति मुनयोऽपि न नह्यमानास्तस्येच्छयात्तवपुषः
कुत एव बंधः ३५ गोपीनां तत्पतीनां च सर्वेषामेव देहिनां योंतश्चरति सोऽध्यक्षः क्रीड
नेनेह देहभाक् ३६ अनुग्रहाय भूतानां मानुषं देहमास्थितः भजते तादृशीः क्रीडा याः
श्रुत्वा तत्परो भवेत् ३७ नासूयन् खलु कृष्णाय मोहितास्तस्य मायया मन्यमानाः स्वपार्श्व
स्थान् स्वान् स्वान् दारान् व्रजौकसः ३८ ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः अनिच्छंत्यो
ययुर्गोप्यः स्वगृहान् भगवत्प्रियाः ३९ विक्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितो

मस्य निंदिते कुतः प्रवृत्तिरित्यत आह अनुग्रहायेति शृंगाररसाकृष्टचेतसो ऽनुशृणुयादथ वर्णयेद्यः ॥
तिबहिर्मुखानपि स्वपरान् कर्तुमिति भावः ३७ नन्वन्येपि भिन्नाचाराः स्वचेष्टितमेवेति वदंतीत्यत आह नासूयन्निति एवं भू
तैश्वर्याभावेन तथा कुर्वंतः पापाद्भेया इति भावः ३८ ब्रह्मरात्रे ब्राह्मे मुहूर्ते उपावृत्ते प्राप्ते ३९ भगवतः कामविजयरूपरासक्रीड

३३ भा०द० पू० ९११

कामविजयमेव फलमाह विक्रीडितमिति अचिरेण धीरः सन् हृद्रोगं कामं आशु अपहिनोति परित्यजतीति ४० इति श्री परमानंदहंसे श्रीधरनिर्मिता श्रीभागवतभावार्थदीपिका दशमाश्रया १ इति दशमे टीकायां त्रयस्त्रिंशोऽध्यायः ३३ चतुस्त्रिंशेऽहिनाग्रस्तं नंदं हरिरमूमुचत् विद्याध्रं चांगिरः शापाच्छंखचूडं तथाऽवधीत् १ एतापदेशतः कामं किंकरीकृत्य

भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ४० इति श्रीभागवते दशमस्कंधे रासक्रीडावर्णनंनाम त्रयस्त्रिंशोऽध्यायः ३३ श्रीशुक उवाच एकदा देवयात्रायां गोपाला जातकौतुकाः अनोभिरनडुद्युक्तैः प्रययुस्तेंऽविकावनं १ तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं प्रभुं आनर्चुरर्हणैर्भक्त्या देवीं च नृपतेंऽविकां २ गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति ३ ऊषुः सरस्वतीतीरे जलं प्राश्य धृतव्रताः रजनीं तां महाभागा नंदसुनंदकादयः ४ कश्चिन्महानहिस्तस्मिन् विपिनेऽतिबुभुक्षितः यदृच्छयागतो नंदं शयानमुरगोऽग्रसीत् ५ स चुक्रोशाहिना ग्रस्तः कृष्ण कृष्ण महानयं सर्प्पो मां ग्रसते तात प्रपन्नं परिमोचय ६ तस्य चाक्रंदितं श्रुत्वा गोपालाः स

कामतः अनुगृह्णन् वशं निन्ये तथा विद्याधराधिपं २ तदेवं कामानुग्रहमुखेन कामजयं प्रतिपाद्य तथैव वि ॐ हंसो त्थिताः॥ द्याधरजयं प्रतिपादयितुं तत्प्रसंगं दर्शयति एकदेति ११ २ गावः गाः मधु [illegible] मध्वन्नं मधुना सहितमन्नं ३ जलमात्रं प्राश्योपोषिता तां निशां तत्र ऊषुः न्यवसन् ४ महानहिः अजगरः उरगः उरसा गच्छन्नित्यलक्षितत्वमुक्तं अग्रसीत् जग्रास ५।६ दिव्य धुस्ताडयामासुः

उल्मुकैर्ज्वलत्काष्ठैः ७ अलातैस्तैरेवोल्मुकैर्हन्यमानोपितं नं... शनामुंचत तदा भगवान्पदातमस्पृशत् ८ भगवतश्च
रणस्पर्शमात्रेणैव हताशुभः विद्याधरेषु अर्चितं पूजितं ९ गोप्ष्वात्मनऐश्वर्यं प्रकाशयितुमविद्वानिव तमपृच्छत्तदी

प्सतं चदृष्ट्वा विभ्रांताः सर्प्पं विव्यधुरुल्मुकैः ७ अलातैर्दह्यमानोपि नामुंचत्तमुरंगमः त
मस्पृशत्पदाभ्येत्य भगवान्सात्वतांपतिः ८ सवै भगवतः श्रीमत्पादस्पर्शहताशुभः भेजे स
र्पवपुर्हित्वा रूपं विद्याधरार्चितं ९ तमपृच्छद्धृषीकेशः प्रणतं समवस्थितं दीप्यमानेन व
पुषा पुरुषं हेममालिनं १० को भवान्परया लक्ष्म्या रोचतेऽद्भुतदर्शनः कथं जुगुप्सितामेतां
गतिं वा प्रापितोऽवशः ११ सर्प उवाच अहं विद्याधरः कश्चित्सुदर्शन इति श्रुतः श्रिया स्व
रूपसंपत्त्या विमानेनाचरन्दिशः १२ ऋषीन्विरूपानंगिरसः प्राहसं रूपदर्पितः तैरिमां
प्रापितो योनिं प्रलब्धैः स्वेन पाप्मना १३ शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः यदहं
लोकगुरुणा पदा स्पृष्टो हताशुभः १४ तं त्वाहं भवभीतानां प्रपन्नानां भयापहं आपृच्छे शा
पनिर्मुक्तः पादस्पर्शादमीवहन् १५ प्रपन्नोऽस्मि महायोगिन्महापुरुष सत्पते अनुजानीहि मां

प्यमानेन वपुषा समवस्थितं १० यः परया शोभया प्रकाशते स भवान्क इति ११ १२ ... देव सर्वलोकेश्वरेश्वर १६
प्राहसं उपहसितवानस्मि प्रलब्धैरुपहसितैर्मदीयेनैव पापेन निमित्तेन १३ यतस्ततः शापात् १४ आपृच्छे स्वलोकं गंतुमनुज्ञां

३४
भा०द०
पू०
११४

॥१९॥ १९ अहि देहं निहत्यैवं भागुर्न्मं तं सुदर्शनं तद्दद्दुन्मादिनं कृष्णः शंखचूडमताडयत् १ तस्म संगमाहरूकसा विदिति
२० विरजौ... विति विरजसी निर्मले अंबरे ययोस्तौ २१ किंच निशाप्रवेशं सत्कुर्वंतौ उदित उडुपस्तारकाश्च यस्मिन् तत तमल्लि
कागंधेन मत्त अलयो यस्मिन् तत् २२ अनिबद्धत्वादन्यैर्युगपत्कल्पयितुमशक्यमपि तौ स्वरमंडलमूर्च्छितं युगपत्कल्प

ब्रह्मदंडाद्विमुक्तोहं सद्यस्तेऽच्युत दर्शनात् यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च १७
सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवंद्य च सुदर्श
नो दिवं यातः कृच्छ्रान्नंदश्च मोचितः ॥ निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मित
चेतसस्ततः समाप्य तस्मिन्नियमं पुनर्व्रजं नृपाययुस्तत्कथयंत आदृताः १९ कदाचिदथ गो
विंदो रामश्चाद्भुतविक्रमः विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषितां २० उपगीयमानौ लल
ितं स्त्रीजनैर्बद्धसौहृदैः स्वलंकृतानुलिप्तांगौ स्रग्विणौ विरजोंऽबरौ २१ निशामुखं मानयंता
वुदितोडुपतारकं मल्लिकागंधमत्तालिजुष्टं कुमुदवायुना २२ जगतुः सर्वभूतानां मनः
श्रवणमंगलं तौ कल्पयंतौ युगपत्स्वरमंडलमूर्च्छितं २३ गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता

...मनः श्रवणयोर्मंगलं यथा भवति तथा जगतुः अगायतामिति २३ मूर्च्छिता ऽऽ नाविदन्नृप ॥ ॥
स्तद्गीतलीनचित्ताः संसत् अश्यत् दुकूलं यस्मात्तमात्मानं ... इस्रस्ताः केशेभ्यः ॥ श्रीरामचंद्राय नमः ॥ ॥ ॥

११४

स्रजोयस्तंचततोनाविदन् २४ २५ निरीक्षतोर्न्निरीक्षमाण[illegible]स्तौनाथौयस्यनंप्रमदाजनंकालयामासहयान्मेस्यामा
स २६ दस्युनाव्याघ्रेण २७ माभैष्टभयंनप्राप्नुतेत्पभयवाचौ २८ २९.३० शिरसासहचूडामणिंचजहारेत्यर्थः ३१ ३२॥

स्रंसद्दुकूलमात्मानंस्रस्तकेशस्रजंततः २४ एवंविक्रीडितोःस्वैरंगायतोःसंप्रमत्तवत् शंख
चूडइतिख्यातोधनदानुचरोऽभ्यगात् २५ तयोर्निरीक्षतोराजंस्तन्नाथंप्रमदाजनं क्रोशंतंका
लयामासदिश्युदीच्यामशंकितः २६ क्रोशंतंकृष्णरामेतिविलोक्यस्वपरिग्रहं यथागाः
दस्युनाग्रस्ताभ्रातरावन्वधावताम् २७ माभैष्टेत्यभयारावौशालहस्तौतरस्विनौ आसेद
तुस्तंतरसात्वरितंगुह्यकाधमं २८ सवीक्ष्यतावनुप्राप्तौकालमृत्यूइवोद्विजन् विसृज्यस्त्री
जनंमूढः प्राद्रवज्जीवितेच्छया [illegible]मन्वधावद्गोविंदोयत्रयत्रसधावति जिहीर्षुस्त
च्छिरोरत्नंतस्थौरक्षन्स्त्रियोबलः ३० अविदूरइवाभ्येत्यशिरस्तस्यदुरात्मनः जहारमुष्टि
नैवांगसहचूडामणिंविभुः ३१ शंखचूडंनिहत्यैवंमणिमादायभास्वरं अग्रजायाददत्प्री
त्यापश्यंतीनांचयोषितां ३२ इतिश्रीभागवतेमहापुराणेदशमस्कंधेशंखचूडवधश्चतुस्त्रिंशो
ध्यायः ३४ श्रीशुकउवाच गोप्यःकृष्णेवनंयातेतमनुद्रुतचेतसः ॥ ११ इतिश्रीभागवतेमहापुराणे
दशम[illegible]कायांचतुस्त्रिंशोध्यायः॥ ३४॥ पंचत्रिंशेवनंयातेकृष्णेगोकुलयोषितः युग्मश्लोकानुगीतेननिन्युर्दिनं ॥

३४
भा०द०
पू०
१९५

क्वेनकालेन १ वामबाहुकृतवामकपोल इत्यादीनि द्वादशयुगलानीति हे गोप्यः वामे बाहौ तन्मूले कृतः अर्पितः वामकपोलो येन बलितेन नर्तितेन भ्रुवौ येन सः बलितभ्रुर्मुकुंदः अधरे अर्पितं वेणुं कोमलाभिरंगुलिभिराश्रितामार्गाः सप्तस्वरच्छिद्राणि यस्य तं यत्र यदा ईरयति वादयति २ तदा व्योमयानानां सिद्धानां वनिताः सिद्धैः स्वपतिभिः सह वर्तमानाः [illegible] रितं [illegible] कर्ण्य प्रथमं विस्मिताः ततः कामबाणेभ्यः समर्पितानि चित्तानि याभिस्ताः ततः स्वशा इत्यर्थः सलज्जाः सत्यः कश्मलं मोहं ययुः अत्र लिंगं [illegible] विस्मृताः नीव्यो याभिरिति अत एवं भूतस्य कृष्णस्य विरहं कथं सहाम

कृष्णलीलाः प्रगायंत्यो निन्युर्दुःखेन वासरान् १ गोप्य ऊचुः वामबाहुकृतवामकपोलो बलितभ्रुरधरार्पितवेणुं कोमलांगुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुंदः २ व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य्य सलज्जाः काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ३ हंत चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत् नंदसूनुरयमार्तजनानां नर्म्मदो यर्हि कूजितवेणुः ४ वृंदशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् दंतदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ५ ॥ इति सर्वत्र वाक्यशेषः ३ हंत हे अबलाः इदं चित्रं शृणुत हारहासः हारवद्विशदो हासो यस्य सः यद्वा वेणुवादनेन अधोवदनेन हसतः हारेषु स्फुरन् हासो यस्य सः यद्वा हारवद्वक्षसि शोभमानो हासो यस्य सः यद्वा हाराणां हास इव विशदा स्फूर्तिर्य्यस्मिन् उरसीति उरसि स्थिरा विद्युदिव लक्ष्मीर्य्यस्य सः यर्हि यदा कूजितवेणुर्नादितवेणुर्भवति ४ तदा व्रजे वृषा मृगाः गावश्च वेणुवाद्येन हृतानि चेतांसि येषां ते आरात् दूरादेव दंतैर्दष्टाः कवला ग्रासा यैस्ते धृताः उन्नमिताः कर्णा यैस्ते [illegible] इव लिखितचित्रमिव आसन् अविदुषां तिरश्चामपि

१९५

किंच अचेतनासु सरित्सु नदति चित्रमित्याहुः हे आलि हे सखि बर्हिणो मयूरस्य स्तवकाः मयूरपिच्छाः धातवो गैरिकादयश्च प
लाशा निपल्लवाश्च तैर्बद्धश्चासौ मल्लानां परिबर्हः परिकरः तं विडंबयति अनुकरोतीति तथा स मुकुंदः गोपैः सह वेणुनेति उप
रितनमन्त्रापि तत्त्वं यत्र यदा गाः सम्यगाह्वयति ६ तर्हि तदा तद्ध्वनिश्रवणात् अनिलेनानीतं तस्य पदांबुजरजः स्पृहयंत्य इव
भग्नगतयः सरितः वै निश्चितं वयमिव ता अप्यबहुपुण्याः यतो न प्राप्नुवंति केवलं प्रेम्णा विपिताः कंपिताः भुजास्तरंगाः यासां ताः

बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडंबः कर्हिचित्सबल आलि सगोपैर्गाः स
माह्वयति यत्र मुकुंदः ६ तर्हि भग्नगतयः सरितो वै तत्पदांबुजरजोऽनिलनीतं स्पृहयती
र्वयमिवाऽबहुपुण्याः प्रेमवेपितभुजास्तिमितापः ७ अनुचरैः समनुवर्णितवीर्य आदि
पूरुष इवाचलभूतिः वनचरो गिरितटेषु चरंतीर्वेणुनाह्वयति गाः स यदा हि ८ वनलता
स्तरव आत्मनि विष्णुं व्यंजयंत्य इव पुष्पफलाढ्याः प्रणतभारविटपा मधुधाराः प्रेमहृष्टतन
वो ववृषुः स्म ९ दर्शनीयतिलको वनमालादिव्यगंधतुलसीमधुमत्तैः ॥ स्तिमिता निश्चला

आपो यासां ताः गोप्योऽपि लोचनयोः स्तिमितजला भवंतीति ७ स्थावरेष्वप्यति चित्रं दृश्यत इत्याहुः अनुचरैर्गोपैर्देवादि
भिर्वा मुग्धानां कं आदिपुरुष इवेति अचलभूतिर्निश्चलश्रीः वेणुना तत्तन्नाम्ना गा आह्वानेन ८ तदा पाकस्य भारेण विटपाः शाखा
यासां ताः वनगता लताः स्वस्मिन् विष्णुं प्रकाशमानं सूचयंत्य इव मधुधाराः ववृषुः स्मेति विस्मयेन तरवश्च तथेत्यहीतीनाम
पि तेषामानंद इति भावः एतानि तु विष्णुभक्तिलक्षणानि ९ किंच सरसि सरसां नेषु विहरतां पक्षिणामपि मनः आकर्णितद्री

३४
भा० द०
पू०
११६

दर्शनीयतिलकइतिदर्शनीयस्तिलकोयस्यदर्शनीयानांसुंदराणांमध्येभूषणमितिवा वनमालासुयादिकं धातुलक्ष्मी
तस्याः मधुनामभिः अलिकुलैः अलघुउच्चैः अभीष्टं अनुकूलंगीतं आदरेणगृह्णन्यर्हिअधरे वेणुंर्भवा
ति १० सरसिसारसाहंसा अन्येचविहगाः तेचारुणागीतेनहृतचेतसः एत्यतत आगम्यहरिंउपासत अभजंतमत्समी
पविविस्युर्वाहंतेतिविषादे ११ मथापिहहरिविहरतइत्याहुः सहबलइति भोव्रजदेव्योगोप्यः सहबलः सरामः स्रक्सः स्रग्भिर्वि
र्मिताभ्यां अवतंसाभ्यांकर्णभूषणाभ्यां विलासोयस्य यद्वा मुक्ताफलस्रगापीडनविलासोयस्येतिक्षितिभृतः सानुषुगिरेस्त

अलिकुलैरलघुगीतमभीष्टमाद्रियन्यर्हिसंधितवेणुः १० सरसिसारसहंसविहंगाश्चा
रुगीतहृतचेतसएत्य हरिमुपासततेयतचित्ताहंतमीलितदृशोधृतमौनाः ११ सहबलः
स्रगवतंसविलासः सानुषुक्षितिभृतोव्रजदेव्यः हर्षयन्यर्हिवेणुरवेणजातहर्षउपरंभति
विश्वं १२ महदतिक्रमणशंकितचेतामंदमंदमनुगर्ज्जतिमेघः सुहृदमभ्यवर्षत्सुमनो
भिश्छायायाचविदधत्प्रतपत्रं १३ विविधगोपरसेषुविदग्धोवेणुवाद्यउरुधानिजशिक्षाः

देषुवर्तमानः स्वयंजातहर्षोविश्वंहर्षयन् यदावेणुरवेणउपरंभतिनिनादयतिनादेनापूरयतीत्यर्थः १२ तदामेघः महतः
कृष्णस्यातिक्रमणेशंकितंचेतोयस्यसः नपुरतोयातिनचोच्चैर्गर्ज्जतिकिंतुतत्रैवस्थितः सन्वेणुरवमनुमंदंमंदंगर्ज्जति
किंच सुहृदंविश्वार्तिहरणादिसाम्यात्सुहृदंकृष्णंसुमनोभिरभ्यवर्षत् अदृश्यैर्देवैः क्रियमाणंकुसुमवर्षमेघेकल्पयित्वो
क्तं तुषारोवाकुसुमतयाकल्पितः सएववादेवतारूपोभ्यवर्षदितिआतपादातपात्त्रायतइतिप्रतपत्रंछत्रंचच्छाययाकुर्वन्निति १३

श्रीमद्भागवतस्यश्रीधरस्वामिकृतटीकासहितस्यपूर्वार्द्धे

हे सति यदा देन तव सुतो नानागोपक्रीडासु विदग्धो निपुणो वेणुवाद्ये [illegible] यनिजैव शिक्षायासुताः स्वोत्प्रेक्षिताः नत्वन्यतः आनाइ त्यर्थः स्वरजातीर्निषादऋषभादिस्वरालापभेदान् अनयत् उन्नीतवान् १४ ततताः स्वरजातीः सवनशः मंद्रमध्यतारभेदेन यतोगी तध्वनिरागतः ततश्च आनताकंधरा चित्तं चयेषांते उपधार्य सम्यगाकर्ण्य कवयः कोविदा अपि न निश्चितं तत्त्वं तद्भेदो यैस्ते कश्म लं मोहं ययुरिति १५ अस्माकंतु मोहं किं ब्रूमइत्याहुः निजपदाब्जदलैरिति ध्वजादीनि विचित्राणि ललामानि चिन्हानि येषां तै

तव सुतः सति यदाधरबिंबे दत्तवेणुरनयत् स्वरजातीः १४ सवनशस्तदुपधार्य्य सुरेशाः शक्र शर्व परमेष्ठिपुरोगाः कवय आनतकंधरचित्ताः कश्मलं ययुरनिश्चिततत्वाः १५ निजपदा ब्जदलैर्ध्वजवज्रनीरजांकुशविचित्रललामैः व्रजभुवः शमयन् खुरतोदं वर्ष्मधुर्य्यगतिरीडि तवेणुः १६ व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः कुजगतिं गमिता न विदा मः कश्मलेन कवरं वसनं वा १७ मणिधरः क्वचिदागणयन् गा मालया दयितगंधतुलस्याः प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन् भुजमगायत यत्र १८ ॥ निजानि पदान्येव अब्जदलानि तैर्व्रज भुवः खुरतोदं [illegible] मणव्यथां शमयन् वर्ष्मणा देहेन धुर्य्यो गजः तद्वद्गतिर्य्यस्य सः कृस्नो वादितवेणुः सन् १६ यद्व्रजति तेन निमित्तेन सविलासवीक्षणेन अर्पितो मनोभववेगो या सु ता वयं कुजा वृक्षा [illegible] तेषां गतिं गमिताः सत्यः मोहेन न विदामः कवरं [illegible] वसनं वेति १७ किंच मणिधरः मणीन् ग्रथितान् गोगणनार्थं धरतीति मणिधरः क्वापि देशे एतैर्मणिभिः गाः आसमंतात् गणयन् [illegible] दयितगंधायास्तुलसीतस्याः मालया सहवर्त्तमानः प्रणयिनः प्रियस्य अनुचरस्य अंसे भुजं प्रक्षिपन् यत्र यदा के

३५
भा०द०
पू०
११५

तद्वा तत्र क्वणितस्य वेणोः रवेण वंचितानि अपहृतानि चित्तानि यासां ताः कृष्णस्य हरिणस्य गृहिण्यो भार्याः गुणगणार्णं गुणगणसमुद्रं कृष्णमनुगत्य प्राप्य ताः कृष्णमेवान्वसत अन्वासत ननु कदाचिदित्यर्थः कुतः यतो विमुक्ता गृहाशा याभिस्ताः गोपिका इव ता अपि ह्येवमेव अन्वासतेति १९ तदेवं वृंदावनप्रदेशेषु क्रीडित्वा सायाह्ने गोधनानि निवृत्त्य यमुनायां क्रीडतस्तस्य सौभाग्यमनुवर्णयति कुंदेति कुंददामकृतकौतुकवेष इति गोपीनामुत्सवाय कुंददामभिः कृतः कौतुकेन उत्सवेन वेषो ऽलंकारो येन सः हे अनघे यशोदे तव वत्सः नंदसूनुः कृष्णः यद्वा सहैव वयस्याः कथयंत्यः काश्चित् तव वत्स इति काश्चिन्नं

क्वणितवेणुरववंचितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः गुणगणार्णमनुगम्य हरिण्यो गोपिका इव विमुक्तगृहाशाः १९ कुंददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायां नंदसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार २० मंदवायुरुपवात्यनुकूलं मानयन्मलयजस्पर्शेन वंदिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः २१ वत्सलो व्रजगवां यदगध्रो वंद्यमानचरणः पथि वृद्धैः

नंदसूनुरिति चाहुः नर्मदः हर्षदः सन् यदा विजहार क्रीडितस्म २० तदा मलयजस्पर्शेन मलयजस्य चंदनस्येव सुरभिः शीतश्च यः स्पर्शः तेन तं कृष्णं मानयन् अनुकूलं यथा तथा उपवाति वीजयति यद्वा मलयजो दक्षिणो वायुः यद्वा मलयजस्य कृष्णेन स्वांगे ऽनुलिप्तस्य स्पर्शेन मानयन्निति किंच वंदिन इव स्तावकाः संतः गंधर्वादिगणाः वाद्यगीतपुष्पवर्षादिभिः परिवव्रुः परित उपासत २१ आयांतमालोकयत ह्यं त्यः पर स्परमूचुः वत्सल इति व्रजस्य गवां च यद्वा व्रजेनिबद्धानां अनुकंप्यानामस्माकमित्यर्थः वत्सलः ॥ ७ ॥ ७ ॥

११७

हितवृतकुतः यत यस्मादगधः अगं धरतीतिगोवर्द्धनोद्धरणः बहुशो रक्षणस्योपलक्षणमेतत् वृद्धैर्ब्रह्मादिभिः सर्वैः सेर्ष्य
म पथोनिवेद्यमानचरणइत्यर्थः सायंशीघ्रमागंतुंनददतीत्यर्थः उपोह्य एकीकृत्य गीतयुक्तोवेणुर्यस्यसः २२ श्रमयुक्तया
पिकान्त्यानेत्राणां हर्षं उन्नयन् उच्चैः प्रापयन् खुररजोभिः छुरिता व्याप्ताः स्रजोयस्यसुहृदामस्माकमाशिषः मनोरथस्यदि
त्सयादातुमिच्छयादेवक्याजठरेभवतीतितथासएवउडुराजश्चंद्रः निर्वृतिहेतुत्वेनसएषएतीति २३ अतिसंभ्रमेणकाश्चि
त्समीपमायांतंकथयंतिईषन्मदेनविघूर्णितेविह्वलितेलोचनेयस्यसः वदरपांडुवदनः ईषत्पक्ववदरवत्पांडुरंवदनंयस्य

[illegible]धनमुपोह्य दिनांतेगीतवेणुरनुगेडितकीर्तिः २२ उत्सवंश्रमरुचापिदृशीना
मुन्नयन् खुररजश्छुरितस्रक् दित्सयैतिसुहृदाशिषएषदेवकीजठरभूरुडुराजः २३
मदविघूर्णितलोचनईषन्मानदःस्वसुहृदांवनमाली वदरपांडुवदनोमृदुगंडंमंडयन्क
नककुंडललक्ष्म्या २४ यदुपतिर्द्विरदराजविहारोयामिनीपतिरिवैषदिनांते मुदितवक्त्र
उपयाति दुरंतंमोचयन्व्रजगवांदिनतापं २५ श्रीशुकउवाच ॥

सः अत्रहेतुः कनककुंडलयो
र्लक्ष्म्याकांत्यामृदुकोमलौगंडौयस्मिन्तत्वदनंमंडयन्निति कोमलगंडस्थलंवाशोभयन्निति २४ यदुपतिरितिदेव
कीजठरभूरितिचप्रागयंवसुदेवस्यक्वचिज्जातस्तवात्मजइत्यादिगर्गवाक्यप्रसिद्ध्योक्तं यद्वा सत्वउदेष्यि[illegible]त्वनांकु
राइतिवत्ज्ञात्वाकाश्चिद्वदंतीति गजेन्द्रलीलः गजेंद्रगतिरिति यामिनीपतिश्चंद्रइवप्रसन्नवक्त्रः व्रजगवामस्माकंदुरंतंदिन
[illegible] ॥६॥ ॥ तापंचशमयन् उपयातिएषसमीपमायातीति २५ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ॥ ॥

कृष्णविरहदुःखेनापितुअहोकृष्णलीलाएवगायंत्यः तस्मिनच्चित्तेचितनोजीवितंयासांताः तस्मिन्नेवमनः संकल्पःक्रियायासांताः अतोमहानुदयः उत्सवोयासांताः अहःस्वपिरेमिरे ३६ इतिदशमेटीकायांपंचत्रिंशोऽध्यायः ॥ ३५ ॥ षट्त्रिंशेतुहतेऽरिष्टेनारदोक्त्याबलाच्युतौ वसुदेवसुतौज्ञात्वाकंसोऽक्रूरंसमादिशत् १ गोपीरासांतरायांतंशंखचूडंनिहत्यसः अहनगोपीमहानंदेसहदुष्टमरिष्टकं २ एवंदेवगंधर्वादिगीतनृत्यवाद्यकुसुमवर्षादिभिःकृष्णंप्रतिदृष्ट्वाव्रजस्यपरमोत्सवे

एवंव्रजस्त्रियोराजनकृष्णलीलानुगायतीः रेमिरेऽहस्सुतच्चित्तास्तन्मनस्कामहोदयाः ३६ इतिश्रीभागवतेमहापुराणेदशमस्कंधेवृंदावनक्रीडायांरासपंचाध्याय्यांगोपिकागीतंनामपंचत्रिंशोऽ० ३५ श्रीशुकउवाच अथतर्ह्यागतोगोष्ठमरिष्टोवृषभासुरः महींमहाककुत्कायःकंपयनखुरविक्षताम् १ रंभमाणःखरतरंपदाचविलिखन्महीं उद्यम्यपुच्छंवप्राणिविषाणाग्रेणचोद्धरन् २ किंचित्किंचिच्छकृन्मुंचन्मूत्रयंस्तब्धलोचनः यस्यनिर्ह्रादितेनाङ्गनिष्ठुरेणगवांनृणां ३ पतंत्यकालतोगर्भाःस्रवंतिस्मभयेनवै निविशन्तिघनायस्यककुद्यचलशंकया ४ तंतीक्ष्णशृंगमुद्वीक्ष्यगोप्योगोपाश्चतत्रसुः

वर्तमानेतद्विरुद्धार्थांतराधिकारार्थमथशब्दः तर्हितदावृषभाकृतिरसुरस्तंवर्णयतिसार्द्धत्रयेणमहांतौककुत्कायौयस्यसः खुरैर्विदारितांमहींकंपयन् १ रंभमाणःवृषभजातिशब्दंकुर्वन्विलिखनविदारयनउद्यम्यऊर्ध्वंकृत्वावप्राणितटानिउत्क्षिपन् २ किंचित्किंचिच्छकृतमध्येमध्येईषदीषतपुरीषंमुंचनतथामूत्रयनमूत्रमुत्सृजनस्तब्धलोचनःअनिमेषलोचनः ३ यस्यध्व

अत ऊर्ध्वं प्रसृतिः स्यादिति विभागः ककुद्गिलत्पृष्ठशृंगे ४ ५ कृष्णकृष्णरक्षेति ६ ७ एवं वदन्नास्फोट्य करत
लेन बाहुमाहत्य तेन तलशब्देन कोपयन् भुजाभोगं भुजाभुजः स एव भोगः सर्पदेहः तं सर्पदेहाकारं भुजमित्यर्थः स्वय
मच्युतः अन्यान्दुष्टान्हरति संहरतीति हरिः ८ उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमंतो मेघा यस्मिन्सः ९ अग्रेन्यस्ते

पशवो दुद्रुवुर्भीता राजन्संत्यज्य गोकुलं ५ कृष्ण कृष्णेति ते सर्वे गोविंदं शरणं ययुः
भगवानपि तद्वीक्ष्य गोकुलं भयविह्वलं ६ माभैष्टेति गिराश्वास्य वृषासुरमुपाह्वय
त् गोपालैः पशुभिर्मन्द त्रासितैः किमसत्तम ७ बलदर्पहाऽहं दुष्टानां त्वद्विधानां
दुरात्मनां इत्यास्फोट्याच्युतोऽरिष्टं तलशब्देन कोपयन् सख्युरंसे भुजाभोगं प्रसार्यावा
स्थितो हरिः ८ सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् उद्यत्पुच्छभ्रमन्मेघः क्रु
द्धः कृष्णमुपाद्रवत ९ अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतं कटाक्षिप्याद्रवत्तू
र्णमिंद्रमुक्तोऽशनिर्यथा १० गृहीत्वा शृंगयोस्तं च अष्टादश पदानि सः प्रत्यपोवाह भग
वान्गजं प्रतिगजो यथा ११ सोऽपविद्धो भगवता पुनरुत्थाय सत्वरः आपतत्स्विन्नसर्वांगो

विषाणाग्रे येन सः स्तब्धे असृक्तुल्ये लोचने यस्य सः कटाक्षिप्या कटाक्षेण तिर्यङ्नि ऽऽ निःश्वसन्क्रोधमूर्छितः
रीक्ष्य १० प्रत्यपोवाह प्रतिलोमं व्यनुदत ११ अपविद्धः अपक्षिप्तः आपतत् आद्रवत् स्विन्नानि स्वेदयुक्तानि सर्वांगाणि यस्य सः

३६
भा०द०
पू०
११७

कृत्वा विषाणमुत्पाट्य तेनैव जघान स च आपतत् १३ मूत्रं च शकृच्च मूत्रशकृत् देकवद्भावः तदुभयं समुत्सृजन् क्षिपन्नित्यर्थः पादांश्च क्षिपन् इतस्ततश्चालयन् अनवस्थितेक्षणः प्रचलितनेत्रः कृच्छ्रं कष्टं नगाम अथ निर्ऋतेर्मृत्योः क्षयं निवासं जगाम कृच्छ्रं यथा भवति तथा मृत इति वा १४ नयनोत्सवः नयनानां मूर्तिमानुत्सवः १५ कामं व्रजे वसंतं मं कृष्णं तेन तु निस्मृतं नारदः स्मारयामास कंसदूत गिरे खलु तदाह अरिष्ट इति देवदर्शनो देवर्षिः यद्वा एवं कथिते एवं भविष्यतीति साक्षा

तमापतंतं स निगृह्य शृंगयोः पदा समाक्रम्य निपात्य भूतले निष्पीडयामास यथाऽर्द्रमंबरं कृत्वा विषाणेन जघान सोऽपतत् १३ असृग्वमन्मूत्रशकृत्समुत्सृजन् क्षिपंश्च पादाननवस्थितेक्षणः जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरंतो हरिमीडिरे सुराः १४ एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः विवेश गोष्ठं सबलो गोपीनां नयनोत्सवः १५ अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा कंसायाहाथ भगवान्नारदो देवदर्शनः १६ यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता १७ न्यस्तौ स्वमित्रे नन्दे वै याभ्यां ते पुरुषा हताः निशम्य तद्भोजपतिः कोपात्प्रचलितेंद्रियः १८ ॥ ६ ॥

देववद्दर्शनं ज्ञानं यस्य सः १६ आप्तेनैव नारदेनोक्तमाह यशोदाया इति देवक्या अष्टमगर्भत्वेन प्रसिद्धां कन्यां यशोदायाः सुतामाह यशोदायाः सुतत्वेन प्रसिद्धं कृष्णं देवक्याः सुतमाह रोहिणीपुत्रं रामं च देवक्याः सप्तमं सुतमाह यद्वा नंदसुतत्वेन प्रसिद्धं रामं च वसुदेवभार्यायाः रोहिण्याः पुत्रमाह तौ वसुदेवसुतौ चेत् कथं व्रजं गतौ तत्राह वसुदेवेनेति ॥ १७ ।१८।

निवारितइति हतेवसुदेवेतौपलायेतामतोमावध्यतामितिमंत्रंवदतानारदेननिवारितइति १९ २० २१ २२ मह्यं।
ममनिदर्शितः विधात्रानारदेनवा २३ व्रजंगंतुमुद्यतौतावाह भवद्भ्या मितिमंचाउत्तुंगस्तंभादिरचितस्थानानि २४ २५

निशातमसिमादत्तवसुदेवजिघांसया निवारितोनारदेनतत्सुतौमृत्युमात्मनः १९।
ज्ञात्वालोहमयैःपाशैर्बबंधसहभार्यया प्रतियातेतुदेवर्षौकंसआभाष्यकेशिनं २०
प्रेषयामासहन्येतांभवतारामकेशवौ ततोमुष्टिकचाणूरशलतोशलकादिकान् २१।
अमात्यान्हस्तिपांश्चैवसमाहूयाहभोजराट् भोभोनिशम्यतामेतद्वीरचाणूरमुष्टिकौ २२
नन्दव्रजेकिलासातेसुतावानकदुन्दुभेः रामकृष्णौततोमह्यंमृत्युःकिलनिदर्शितः २३ भ
वद्भ्यामिहसंप्राप्तौहन्येतांमल्ललीलया मंचाःक्रियंतांविविधामल्लरंगपरिश्रिताः २४।
पौराजानपदाःसर्वेपश्यंतुस्वैरसंयुगं महामात्रत्वयाभद्ररंगद्वार्युपनीयतां २५ द्विपः
कुवलयापीडोजहितेनममाहितौ आरभ्यतांधनुर्यागश्चतुर्दश्यांयथाविधि विशसं
तुपशून्मेध्यान्भूतराजायमीढुषे २६ इत्याज्ञाप्यार्थतंत्रज्ञआहूययदुपुंगवं गृहीत्वा
पाणिनापाणिंततोऽक्रूरमुवाचह २७ भोभोदानपतेमह्यंक्रियतांमैत्रमादृतः ॥ ६ ॥

अहितौशत्रूमीढुषेवरदाय २६ अर्थतंत्रज्ञः अर्थसिद्धांतमेवजानातीति २७ हेदानपतेहेअक्रूरमैत्रंमित्रकृत्यंत्वयाक्रि यतां

३६
भा०
पू०
१२०

त्वत्तोऽन्यस्त्राहृतः सादरोहिततमश्चनविद्यतइति २८ २९ ३० सोमेमृत्युर्नितरांस्पष्टः वैकुंठसंश्रयैर्विष्णुसंश्रयैर्देवैः ३१
कितत्तस्तत्राह घातयिष्येइति कालकल्पेन मृत्युतुल्येनवैद्युतोपमैः अशनितुल्यैः ३२ ३३ ३४ नष्टकंटकानष्टशत्रुःन

नान्यस्त्वत्तोहिततमोविद्यतेभोजवृष्णिषु २८ अतस्त्वामाश्रितःसौम्यकार्यगौरवसाध
नं यथेन्द्रोविष्णुमाश्रित्यस्वार्थमध्यगमद्विभुः २९ गच्छनन्दव्रजंतत्रसुतावानकदुन्दुभेः
आसातेताविहानेनरथेनानयमाचिरम् ३० निसृष्टःकिलमेमृत्युर्देवैर्वैकुंठसंश्रयैः ताव
नयस्वनंगोपैर्नंदाद्यैःसाभ्युपायनैः ३१ घातयिष्यइहानीतौकालकल्पेनहस्तिना यदिमु
क्तौततोमल्लैर्घातयेवैद्युतोपमैः ३२ तयोर्निहतयोस्तप्तान्वसुदेवपुरोगमान्तद्बंधून्नि
हनिष्यामिवृष्णिभोजदशार्हकान् ३३ उग्रसेनंचपितरंस्थविरंराज्यकामुकं तद्भ्रातरंदेव
कंचयेचान्येविद्विषोमम ३४ ततश्चैषामहीमित्रभवित्रीनष्टकंटका जरासंधोममगु
रुर्द्विविदोदयितःसखा ३५ शंबरोनरकोबाणोमय्येवकृतसौहृदाः तैरहंसुरपक्षीयान्
हत्वाभोक्ष्येमहींनृपान् ३६ एतज्ज्ञात्वानयक्षिप्रंरामकृष्णाविहार्भकौ धनुर्मखनिरी
क्षार्थंद्रष्टुंयदुपुरश्रियं ३७ अक्रूरउवाच राजन्मनीषितंसम्यक्तववस्वावद्यमार्ज्जनं

नुकतिष्ठापासुहृद्वधेननष्टकंटकाकथंस्यादितितत्राहजरासंधइति ३५ ३६ यदुपुरश्रियंद्रष्टुंचेति ३७ तत्रस्वमनीषितंविचारितंसम्यक्कृत्वावधंमरणंनत्वमार्ज्जनं ॥

१२०

तथापि एतात्मानभिनिवेशो न कार्य इति भविष्यत्सूचयन्नाह सिद्ध्यसिद्ध्योरिति ३८ पुरुषकारस्यसव्यभिचारतामाह म
नोरथानिति ३९ ४० इति दशमे षट्त्रिंशोध्यायः ३६ सप्तत्रिंशे हते केशिन्यच्युतो भाविकर्म्मभिः नारदेन स्तुतः क्रीडन्
व्योमासुरमथावधीत् १ नृषवेषासुरं यद्वत् केशिनं हयवेषिणं कंसप्राणसखं हत्वा कंसं व्यसुमिवाकरोत् २ केशी त्विति

सिद्ध्यसिद्ध्योः समं कुर्याद्दैवं हि फलसाधनं ३८ मनोरथान्करोत्युच्चैर्ज्जनो दैवहतानपि
युज्यते हर्षशोकाभ्यां तथाप्याज्ञां करोमि ते ३९ श्रीशुक उवाच एवमादिश्य चाक्रूरं मंत्रि
णश्च विसृज्य सः प्रविवेश गृहं कंसस्तथाक्रूरः स्वमालयं ४० इति श्रीभागवते महापुरा
णे दशमस्कंधेऽक्रूरसंप्रेषणं नाम षट्त्रिंशोध्यायः ३६ श्रीशुक उवाच केशी तु कंसप्र
हितः खुरैर्महीं महाहयो निर्ज्जरयन्मनोजवः सटावधूताभ्रविमानसंकुलं कुर्वन्नभो हेषि
तभीषिताखिलः १ विशालनेत्रो विकटास्यकोटरो बृहद्गलो नीलमहांबुदोपमः दुराश
यः कंसहितं चिकीर्षुर्व्रजं स नंदस्य जगाम कंपयन् २ तं त्रासयंतं भगवान्स्वगोकुलं तद्धे
षितैर्वालविघूर्णिताम्बुदं ॥३॥ अथ प्रथमश्लोके नयएवंभूतः केशी त्यन्वयः तं भगवानुपाह्वयदिति द्वितीये
नान्वयः महाहयः सन्महीं निर्जरयन् श्लथयन् विदारयन्नित्यर्थः सटाभिः केसरैः अवधूतानि अतस्ततः क्षिप्तानि अभ्रा
णि विमानानि च तैः संकीर्णं नभः कुर्वन् हेषितैः स्वजातिशब्दैर्भीषितम खिलं विश्वं येन सः १ २ तद्धेषितैस्तैरतिनिष्ठु
रैर्हेषितैः वालैः स्वपुच्छलोमभिः विघूर्णिताः परिभ्रामिताः ॥३॥ ७ ॥

सुदायेन तं आजौ संग्रामार्थं आत्मानं कृष्णं अन्वेषयन्तं पुरतो निर्गतः सन् उपाह्वयत् स्वसमीपं आजुहाव स च केशी तन्निश
म्य मृगेंद्रवन्नादमकरोत् ३ ततः स केशी तं कृष्णं दृष्ट्वा मुखेन खं पिबन्निव मुखं विवृत्य व्यादाय अभिमुखः सन् अभिजगा
म किंचात्यमर्षणः अतिकुपितः अत्यंतमसहमानो वा प्रत्यक्पद्भ्यां जघान दुरासदः अन्यैरभिभवितुमशक्यः दुरत्ययः
उद्यतः सन् दुरतिक्रमः अत्र हेतुश्चंडजवः चण्डः तीव्रः जवो वेगः धावने यस्य ४ ॥ तद्धननं वंचयित्वा तं च हननाय प्रसारि

आत्मानमाजौ मृगयंतमग्रणीरुपाह्वयत्स व्यनदन्मृगेंद्रवत् ३ स तं निशम्याभिमुखो मु
खेन खं पिबन्निवाभ्यद्रवदत्यमर्षणः जघान पद्भ्यामरविंदलोचनं दुरासदश्चंडजवो
दुरत्ययः ४ तद्वंचयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः सावज्ञमुत्सृ
ज्य धनुःश तांतरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ५ स लब्धसंज्ञः पुनरुत्थितो रुषा ।
व्यादाय केशी तरसापतद्धरिं सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन् प्रवेशयामास यथोरगं वि
ले ६ दंता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयःस्पृशो यथा बाहुश्च तद्देहगतो म
हात्मनो यथामयः संववृधे उपेक्षितः ७ समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चर
णांश्च विक्षिपन् ॥

तयोः पादयोः हस्ताभ्यां गृहीत्वा परिविध्य भ्रामयित्वा व्यवस्थितः तथैव स्थितो बभूव ५ व्या
दाय मुखं प्रसार्य वेगेन हरिं प्रत्याद्रवत् सोऽपि हरिः हसन् उत्तरं सव्यं भुजं निर्भयत्वे दृष्टांतः यथोरगं बिल इति ६ ततः किं तदाह दंता
इति चर्वणार्थं भगवद्भुजं स्पृशंतीति तथा ते व्यादानेन ये दंताः विवृताश्च यः लोहं स्पृशंतीति स्पृशः तथा ते यद्वा तप्तमयः अतितप्तं लोहम् १२५

उत्सृजन् ८ कर्कटिकाफलं हि पक्वं सदत्यंतं विदीर्णं भवति तद्वद्विदीर्णात्तस्य देहात् विगतप्राणात् अविस्मितः गर्वरहि-
तः अयत्नेन हतोऽरिर्येन सः ९ कंसाय कृष्णमादिश्य तद्रहस्यादिपिशुनैः कंसघातादि कृष्णस्य कार्यमावेदयन्मुनिः १ त-
दाह देवर्षिरित्यादिना न चायं सूचकः किंतु सर्वसुहृदित्याह भागवतप्रवर इति १० अस्मद्रहस्यं वैरिणि कंसे संसूचितवानिति माशं
कीत्याह कृष्णकृष्णेत्यादिना अयं भावः त्वमीश्वरो भूभारदैत्यसंहाराय अवतीर्णोसि अतस्तदनुरूपाचरणेन विश्वं परिपालये-
ति तत्र त्वयितृावद्भयशंकैव नास्तीत्याह अप्रमेयात्मन् अपरिछिन्नस्वरूप योगेश अचिंत्यप्रभाव जगदीश्वर विश्वनियंतः वा

प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लेंडं विसृजन् क्षितौ व्यसुः ८ तद्देहतः कर्कटिका-
फलोपमाद्व्यसोरपाकृष्य भुजं महाभुजः अविस्मितोऽयत्नहतारिरुत्स्मयैः प्रसूनवर्षैर्दिवि-
षद्भिरीडितः ९ देवर्षिरुपसंगम्य भागवतप्रवरो नृप कृष्णमक्लिष्टकर्माणं [illegible] अभाषत
१० कृष्ण कृष्णाप्रमेयात्मन्योगेश जगदीश्वर वासुदेवाखिलावास सात्वतां प्रवर प्रभो ११
त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसां गूढो गुहाशयः साक्षी महापुरुष ईश्वरः १२ ॥

सुदेव सर्वभूतेषु वर्तमान अखिलावास सर्वस्याश्रय संप्रति सात्वतां प्रवर श्रेष्ठ प्रभो सर्वशक्ते ११ कथमेवंरूपोहमिति चेदत आह
त्वमात्मेति न हि त्वं जीववत्परिच्छिन्नः किंतु सर्वभूतानां अंतर एकोऽनुस्यूत आत्मा अंतरनुस्यूतत्वे दृष्टांतः एधसां काष्ठानामंत-
र्ज्योतिरिव ननु भूतेषु स्थितोपि तैर्न दृश्य स इत्याह गूढ इति अत्र हेतवः गुहाशयः बुद्ध्यंतरः किंच साक्षी न हि बुद्धिसाक्षी दृश्यत इत्य-
र्थः अपिच महापुरुषः अतः परिछिन्नमतिभिर्न ज्ञायस इत्यर्थः तर्हि सर्वांतरत्वे किं प्रमाणं अत आह ईश्वर इति नहीश्वरं विना पर-

९८ ॥

भा० १०
पू०
१२२

अहमीश्वरः अन्यस्तु सर्वमीशितव्यमित्येतद्देवकृतं अत आह आत्मनेति साधनांतरनिरपेक्ष एव आत्माश्रयः स्वतंत्रो मायया शक्त्या भवान्गुणान्ससृजे सृष्टवान् तैः सृष्टैर्गुणैः इदं विश्वं सृजसि अत्सि संहरसि अवसि पालयसि ननु सृष्ट्यादिक्रिया बहुसाधकसाध्यैव दृष्टेत्यत आह सत्यसंकल्प इति नहि संकल्पैकसाध्ये वहिः साधनापेक्षेति भावः अतस्त्वमीश्वर इत्युपसंहारः

आत्मनात्माश्रयः पूर्वं मायया ससृजे गुणान् तैरिदं सत्यसंकल्पः सृजस्यत्स्यवसीश्वरः १३ सत्वं भूधरभूतानां दैत्यप्रमथरक्षसां अवतीर्णो विनाशाय सेतूनां रक्षणाय च १४ दिष्ट्या ते निहतो दैत्यो लीलयायं हयाकृतिः यस्य हेषितसंत्रस्तास्त्यजंत्यनिमिषा दिवं १५ चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिनं कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो १६ तस्यानु शंखयवनमुराणां नरकस्य च पारिजातापहरणमिंद्रस्य च पराजयं १७ उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्षणं नृगस्य मोक्षणं पापाद्द्वारकायां जगत्पते १८ स्यमंतकस्य च मणेरादानं सह भार्यया मृतपुत्रप्रदानं च ब्राह्मणस्य स्वधामतः ॥ १९ ॥

१३ प्रस्तुतमाह सत्वमिति भूधरभूतानां भुवं धरंतीति भूधरा राजानस्तद्रूपाणां १४ १५ परश्वोऽहनीति अद्यैवाक्रूर एष्यति श्वो मथुरां गंतासि परश्वश्चाणूरादीस्त्वया निहतान्द्रक्ष्यामीति सिद्धवन्निर्देशो विज्ञापनप्रकारविशेषः १६ १७ तस्य अनु तदनंतरं शंखादीनां शंखः पंचजनः तस्य वधं द्रक्ष्यामीति शेषः भाविनिर्देशमात्रमेतत् नत्वानंतर्यं विवक्षितं १८ भार्यया जांबवत्या सह स्वधामतः महा

१२२

२० द्वारकामावसन्द्वारकायांवसन्कर्ताकरिष्यति २१ अमुष्यविश्वस्यभारस्यवा २२ एवंविज्ञाप्यकृताभिनंदनंभगवंतं
नमस्यतिद्वयेन विशुद्धविज्ञानघनमिति केवलंज्ञानैकमूर्तिंअतएवस्वसंस्थयास्वरूपसम्यक्स्थित्यैवपरमानंदरूपयासम्य
गाप्ताः प्राप्ताः सर्वे अर्थाः येनतं आप्तकामतोक्तासत्यसंकल्पतामाह अमोघवांछितंइति ननुवांछाचेदस्तितर्हिदुर्नि
वारसंसृतिः अत आह स्वतेजसेति चिच्छक्त्यानित्यनिवृत्तोमायाकार्यरूपोगुणप्रवाहोयस्मात्तंअतोभगवंतंनिरतिशयै

पौंड्रकस्यवधंपश्चात्काशिपुर्याश्चदीपनं दंतवक्रस्यनिधनंचैद्यस्यचमहाक्रतौ २० यानि
चान्यानिवीर्याणिद्वारकामावसन्भवान् कर्ताद्रक्ष्याम्यहंतानिगेयानिकविभिर्भुवि २१
अथतेकालरूपस्यक्षपयिष्णोरमुष्यवै अक्षौहिणीनांनिधनंद्रक्ष्याम्यर्जुनसारथेः २२ विशु
द्धविज्ञानघनंस्वसंस्थयासमाप्तसर्वार्थममोघवांछितं स्वतेजसानित्यनिवृत्तमायागुणप्रवाहं
भगवंतमीमहि २३ त्वामीश्वरंस्वाश्रयमात्ममाययाविनिर्मिताऽशेषविशेषकल्पनं क्रीडार्थमद्या
त्तमनुष्यविग्रहंनतोस्मिधुर्यंयदुवृष्णिसात्वतां २४ श्रीशुकउवाच एवंयदुपतिंकृष्णंभा
गवतप्रवरोमुनिः प्रणिपत्याभ्यनुज्ञातोययौतद्दर्शनोत्सवः २५ ॥ स्वर्येईमहिशरणंव्रजेमेति २३ ननुत्रि
कालज्ञस्त्वंकथंमत्प्रपंचंनजानासिजानासिचेत्कथमगुणप्रवाहंत्वीक्षितआह त्वामितिईश्वरंअन्यस्यवशयितारंस्वा
श्रयं अन्यस्याःवशंअतः आत्ममायया आत्माधीनयामाययाविनिर्मिताअशेषविशेषामहदाद्याः यादवादिरूपावाकल्प

भा० द०
पू०
१२३

गारई ॥ ननुनारदेन व्योमवधोनदृष्टस्तत्कथं व्योमवधप्रशक्तिरितितत्रोच्यते प्रातरेवकेशिवधानंतरंनारदोक्तमंगीकृत्यपुन
स्तैरेवपशून्पालयताव्योमोहतः यद्वाव्योमवधः पूर्वमेववृत्तोपिकेशिवधात्केशिवधप्रसंगादत्रोच्यत इतिद्रष्टव्यं केचित्तुनःशंख

भगवानपिगोविंदोहत्वाकेशिनमाहवे पशूनपालयत्पालैः प्रीतैर्व्रजसुखावहः २६
एकदातेपशून्पालाश्चारयंतोद्रिसानुषु चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः २७
तत्रासन्कतिचिच्चोराः पालाश्चकेचित्रपमेषायिताश्चतत्रैकेविजह्रुरकुतोभयाः २८
मयपुत्रोमहामायोव्योमोगोपालवेषधृक् मेषायितानपोवाहप्रायश्चोरायितोबहून् २९
गिरिदर्यांविनिक्षिप्यनीतंनीतंमहासुरः शिलयापिदधेद्वारंचतुःपंचावशेषिताः ३० त
स्यतत्कर्मविज्ञायकृष्णःशरणदःसतां गोपान्नयंतंजग्राहवृकंहरिरिवौजसा ३१ सनिजं
रूपमास्थायगिरींद्रसदृशंबली इच्छन्विमोक्तुमात्मानंनाशक्नोद्ग्रहणातुरः ३२ तंनि
गृह्याच्युतोदोर्भ्यांपातयित्वामहीतले पश्यतांदिविदेवानांपशुमारममारयत ३३ गु
हापिधानंनिर्भिद्यगोपान्निःसार्यकृच्छ्रतः स्तूयमानःसुरैर्गोपैःप्रविवेशस्वगोकुलं ३४

चूडवधात्पूर्वमेवपठंतिचतमाह एकदेति २७ २८ मेषायितान्मेषवदाचरितान्स्वयंचोरवदाचरितःसन्नपोवाहन्नप
कृष्यनिनाय २९ पिदधेछादितवान् ३० शरणदः आश्रयप्रदः हरिःसिंहइव ३१ ३२ पशुमारंपशुमारोयथाभवतितथा श्वासमित्यर्थः ३३ भुविगोपैः स्तूयमानः उपरिवैमानिकैर्देवैरिति

१२३

इतिदशमेसप्तत्रिंशोऽध्यायः ३७ अष्टत्रिंशेयथाध्यायनक्रूरोगोकुलंगतः तथैवरामकृष्णाभ्यांगृहंनीत्वासुसत्कृतः १ मा
तःकेशिवधेवृत्तेद्वादश्यांनिर्गतेमुनौ ततोव्योमेहतेऽक्रूरःसायंगोकुलमागमत् २ तदेवंनारदेनकंसवधादिकार्येविज्ञापिते
श्रीकृष्णेमथुरांगंतुमुद्यतोवर्ततेतदाऽक्रूरोपिगोकुलमागमतइत्याह अक्रूरोपीति अपीतिसंभावनायां १ २ अर्हतेयोग्याय
३ स्वस्यकृष्णस्यदर्शनेअसंभवमाशंक्यपुनःसंभावयति ममैतदिति द्वयेनविषयात्मनोविषयाविष्टचित्तस्यशूद्राज्जन्मय।

इतिश्रीभागवतेमहापुराणेदशमस्कंधेव्योमासुरवधोनाम सप्तत्रिंशोऽध्यायः ३७ श्रीशु
कउवाच अक्रूरोऽपिचतांरात्रिंमधुपुर्यांमहामतिः उषित्वारथमास्थायप्रययौनंदगो
कुलं १ गच्छन्पथिमहाभागोभगवत्यंबुजेक्षणे भक्तिंपरामुपगतएवमेतदचिंतयत् २
किंमयाचरितंभद्रंकिंतप्तंपरमंतपः किंवाथाप्यर्हतेदत्तंयद्द्रक्ष्याम्यद्यकेशवं ३ ममैत
द्दुर्लभंमन्यउत्तमश्लोकदर्शनं विषयात्मनोयथाब्रह्मकीर्तनंशूद्रजन्मनः ४ मैवंममा
धमस्यापिस्यादेवाच्युतदर्शनं ह्रियमाणःकालनद्याक्वचित्तरतिकश्चन ५ ममाद्यामं

स्यन...ब्रह्मकीर्तनंवेदोच्चारणंयथेति ४ यद्वामैवंकिंतुअधमस्यनीच ५ गलंनष्टंफलवांश्चैवमेभवः ॥
स्यापिममस्यादेतत्कुतइत्यतआह ह्रियमाणःकालनद्येति अयंभावः यथानद्याह्रियमाणानांतृणादीनांमध्येकिंचित्क
दाचित्तरतिकूलंप्राप्नोतितथाकर्मवशेनकालेनह्रियमाणानांभ्रमतांजीवानामपिमध्येकश्चित्तरेदितिसंभवतीति ५ अतो
ऽनयामहत्येवममामंगलंध्रुवंनष्टमेवमिति ज्ञायते भवोजन्मचसफलंजातमितियतस्ततः ॥ ६ ॥ ६ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

नमस्करिष्यामि ६ अमंगलनाशेसत्यचकौतुरमाह कंसइति वनेन्याश्चर्यैश्रनिखलः कंसोपिममात्यंत मनुग्रहं अहृतद्भुत
वात्सल्यतोऽमुनाकंसेन प्रहितोहरेरंघ्रिपद्मं द्रक्ष्ये द्रक्ष्यामीतिपूर्वेअंबरीषादयः तमः संसारं अतरन्उत्तीर्णाः ७ अंघ्रिपद्मं विभाव
यतियदितिब्रह्मभवादिभिरर्चितमिति परमैश्वर्यमाह श्रियाचेति सौभाग्यातिशयंमुनिभिर्भक्तसहितैरिति परमपुरुषार्थत्वं
गोचारणायेतिदयालुत्वंयद्गोपिकानामिति प्रेममात्रसुलभत्वं ८ मनोरथांतरं करोति द्रक्ष्यामीति शोभमानौ कपोलौ नासि

यन्नमस्येभगवतोयोमिध्येयांघ्रिपंकजं ६ कंसोवतायाद्यकृतमेत्यनुग्रहं द्रक्ष्येंऽघ्रिपद्मं प्रहि
तोऽमुनाहरेः कृतावतारस्यदुरत्ययंतमः पूर्वेतरनयंवखमराश्लनिषा ७ यदर्चितंब्र
ह्मभवादिभिः सुरैः श्रियाचदेव्यामुनिभिः ससात्वतैः गोचारणायानुचरैश्चरद्वनेयद्गोपिका
नांकुचकुंकुमांकितं ८ द्रक्ष्यामिनूनंसुकपोलनासिकं स्मितावलोकारुणकंजलोचनं मु
खंमुकुंदस्यगुडालकावृतं प्रदक्षिणंमेप्रचरंतिवैमृगाः ९ अप्यद्यविष्णोर्मनुजत्वमीयुषोभा
रावताराय भुवो निजेच्छया लावण्यधाम्नो भविता उपलंभनं मह्यं न नस्यात्फलमंजसादृशः १०

कोचयस्मिन्ततस्मितसहितअवलोकोयस्मिन् अरुणेकंजवल्लोचनेयस्मिन्तच्चतच्चमुखंगुडालकावृतंवक्रकेशावृतं
दानीमेवशुभंसूचकंदृष्ट्वागतिदृष्टत्वन्नाह प्रदक्षिणमिति ॥ ९ ॥ ॥ पुनरप्यन्यच्चिंतयति अप्यद्येति ईयुषःप्राप्तव
तः लावण्यस्यधामआश्रयः तस्यविष्णोः यद्वाविष्णोर्लावण्ययुतंयद्धामवपुः तस्यउपलंभनंदर्शनंभविताभविष्यतिअपियं
॥ द्येवंस्यात्तर्हिमह्यंममदृशोलोचनस्यफलंनस्यादितिनअपितुस्यादेवेत्यर्थः १० ॥

यईक्षितेत्यादिचतुर्भिः कुलकं तत्रैवंशंकानन्वस्मदादिवदेवकर्तृत्वभोक्तृत्वादिधर्मैस्तत्रतत्रप्रतीयमानस्यकथंविष्णु
त्वमितीमांशंकांश्लोकत्रयेणाऽपाकुर्वंश्चतुर्थेनतमहंद्रक्ष्यामीतिमनोरथंकरोतितथाहि यईक्षितेति असत्सतोः कार्य्य
कारणयोः ईक्षितापिईक्षणमात्रेणकर्त्ताऽपिअहंररहितः अहंकाररहितः तथाअपास्ततमोभिदाभ्रमः तमःस्वाज्ञानंततः
अज्ञानात्भिदाभेदः ततोभ्रमः अभिनिवेशादिः अपास्ताअपाकृतास्तमआदयोयस्मिन्सः कुतएतत्तत्राह स्वतेजसाचि
च्छक्त्यानित्यस्वरूपसाक्षात्कारेणतथापिस्वमाययास्वाधीनयामाययातदीक्षयातस्यैवईक्षयाप्राणाक्षधीभिः सहितैः

यईक्षिताऽहंररहितोऽप्यसत्सतोःस्वतेजसाऽपास्ततमोभिदाभ्रमः स्वमाययात्मन्र
चितैस्तदीक्षयाप्राणाक्षधीभिःसदनेष्वभीयते ११ यस्याखिलामीवहभिः सुमंग
लैर्वाचोविमिश्रागुणकर्म्मजन्मभिः प्राणंतिशुंभंतिपुनंतिवैजगद्यास्तद्विरक्ताःशव
शोभनामताः १२ सचावतीर्णःकिलसात्वतान्वयेस्वसेतुपालामरवर्यशर्म्मकृत ॥

आत्मन् आत्मनिस्वस्मिन्नेवरचितैर्ज्जीवैः सदनेषुवृंदावनतरुषुगोपीगृहेषुचलीलयाकर्माणिकुर्वन्नुसक्तवदभीयते
आभिमुख्येनप्रतीयते ११ ननुसर्वथाहंकारादिरहितस्यात्मारामस्यलीलापिकुतइत्याशंक्यपरानुग्रहार्थंत्याशयेनाह।
यस्येति अखिलानिअखिलस्यवाअमीवहानिपापानिघ्नंतीत्यखिलामीवहानितैस्तथासुमंगलैः शोभनानिमंगलानि।
येभ्यस्तैः गुणाः करुणादयः कर्माणिजन्मानिचतैर्विमिश्रायुक्ताः वाचः जगत्प्राणंतिजीवयंतिशुंभंतिशोभयंतिपुनंतिपवित्रयं
तिव्यतिरेकमाह याइतितैर्विरक्तारहिताःतास्तुस्वलंकृताः अपिवस्त्राद्यलंकृतशववच्छोभमानाःमताः सतांसंमताः १२ स

सुखकर्त्तासन्नवतीर्णः यत्यशः १२ त्रैलोक्येएकमेवकांतंदर्शिर्दृष्टिः तदुतांमहानुत्सवोयस्मात् यद्वा महानुत्सवएव अ
तएवश्रियईप्सितमास्पदंएवंभूतंरूपंश्रीमूर्त्तिंदधानंतमीश्वरं द्रक्ष्यामीति अत्रलिंगं उषसः प्रभातसमयाः सुदर्शनाः
शुभदर्शनाः सुखंप्रभातासन्न्यः शुभसूचकावभूवुरित्यर्थः १४ किंच अथदर्शनानंतरंसपदितत्क्षणमेवरथादवतीर्णः स
न्प्रधानपुरुषयोः रामकृष्णयोश्चरणंयोगिभिरपिआत्मलाभायकेवलंधियैवधृतंसाक्षादहंनमस्यामिआभ्यांसह अनयोः

यशोवितन्वन्व्रजआरजईश्वरोगायंतिदेवायदशेषमंगलं १३ तंत्वद्यनूनंमहतांगतिं
गुरुंत्रैलोक्यकांतंदृशिमन्महोत्सवं रूपंदधानंश्रियईप्सितास्पदंद्रक्ष्येममासन्नुषसः
सुदर्शनाः १४ अथावरूढः सपदीशयोरथात्प्रधानपुंसोश्चरणंस्वलब्धये धियाधृतं
योगिभिरप्यहंध्रुवंनमस्यआभ्यांचसखीन्वनौकसः १५ अप्यंघ्रिमूलेपतितस्यमेवि
भुः शिरस्यधास्यन्निजहस्तपंकजं दत्ताभयंकालभुजंगरंहसाप्रोद्वेजितानांशरणैषि
णांनृणां १६ समर्हणंयत्रनिधायकौशिकस्तथाबलिश्चापजगत्त्रयेंद्रतां ॥ ६ ॥ ६ ॥

सखीन्गोपांश्चनमस्यामीति १५ किंचअपीति अधास्यत् धास्यतितद्विभावयतिदत्ताभयमितिसार्द्धेन १६ बलिनाता
वत्पदत्रयपरिमितभूदानसमयेतस्यहस्तेउदकंनिहितंकौशिकइंद्रः तेनापिकदाचित्किंचिन्निहितमितिज्ञातव्यंमुमुक्षू
णांसंसारभयस्यनिवर्त्तकंसकामानांअभ्युदयप्रदंचेत्युक्तंअनुरक्तानांपरमंसुखदंचेत्याह यद्वावाशब्दोवितर्के विहारेरा

॥ सत्क्रीडायांसौगंधिकस्यगंधश्चगंधो ॥ श्रीरामचंद्रायनमः ॥ ६ ॥ ७ ॥

यस्यतत्सौगंधिकगंधि १७ एवंपरमानुग्रहंसंभाव्यपुनरप्यसंभवमाशंक्यपरिहरति नमयीति यद्यप्यहंकंसेनप्रहितः
अतस्तस्यदूतः तथापिमयिअरेरयमितिबुद्धिंनउपैष्यतिनकरिष्यतीत्यर्थः यतोविश्वदृकसर्वज्ञः अतोममचेतसोऽतश्च
वहिश्चयदीहितंचेष्टितं एततयःक्षेत्रज्ञः अंतर्यामीनित्यज्ञानेनेक्षते अयंभावः चेतसोबहिरेवकंसमनुवर्तेअंतस्तुकृष्ण
मेवतदेतदसौहृदिस्थितोजानातीति यद्वा एतस्यजगतः ईहितमिति १८ अपियदिअंघ्रिमूलेचरणोपांतेअवहितंसंयतं

यद्वाविहारेव्रजयोषितांश्रमंस्पर्शेनसौगंधिकगंध्यपानुदत १७ नमय्युपैष्यत्यरि
बुद्धिमच्युतः कंसस्यदूतःप्रहितोपिविश्वदृक योंतर्बहिश्चेतसएतदीहितंक्षेत्रज्ञई
क्षत्यमलेनचक्षुषा १८ अप्यंघ्रिमूलेऽवहितंकृतांजलिमामीक्षितासस्मितमार्द्रया
दृशा सपद्यपध्वस्तसमस्तकिल्विषोवोढामुदंवीतविशंकऊर्जितां १९ सुहृत्तमंज्ञा
तिमनन्यदैवतंदोर्भ्यांवृहद्भ्यांपरिरप्स्यतेऽथमां आत्माहितीर्थीक्रियतेतदैवमेबंधश्च
कर्म्मात्मकउच्छसित्यतः २० लब्ध्वांगसंगंप्रणतंकृतांजलिंमांवक्ष्यतेऽक्रूरततेत्युरु
श्रवाः तदावयंजन्मभृतोमहीयसानैवादृतोयोधिगमुष्यजन्मतत २१ ॥ ६ ॥ ६ ॥

कृपाऽमृतेनआर्द्रयादृशामांईक्षितादृक्ष्यतितर्हिसपद्यएवविनष्टाखिलकल्मषः परांमुदंबोढाप्राप्स्यामीति १९ अथमांप
रिरप्स्यतेआलिंगिष्यतियदातदैवमेआत्मादेहः तीर्थीक्रियतेअतिपवित्रीकरिष्यतेउच्छसितिश्लथोभविष्यतिअंतोदेहात्
२० ततभोस्तातेतितदाजन्मभृतः सफलजन्मानः अन्यथातज्जन्मैवनभवतीत्याह महीयसेति महीयसाश्रीकृष्णेनयोनादृतः अ

३८
भा०द०
पृ०
१२६

ननुसुहृदादिषुपरिष्वंगसंप्रश्नादयोजीवधर्म्माः कथमीश्वरेसंगच्छंते अतआह नतस्येति दयितः प्रियः तद्विपरीतोऽप्रि
यः सुहृत्तमोहिततमस्तद्विपरीतोद्वेष्यः एतत्सर्वव्यतिरिक्तउपेक्ष्यइतिदयितादयोनसंतीतिसत्यंतथापिभक्तान्भजतेतत्रचय
थातेभक्तास्तांस्तथाभजतेयेयथामांप्रपद्यंतेतांस्तथैवभजाम्यहमितिभगवद्वचनात् अविषमत्वेपिभक्तेभ्यएवफलंददाती
त्यत्रदृष्टांतः यद्वत्सुरद्रुमइति २२ योमयांऽजलिःकरिष्यतेतस्मिन्नेवअंजलौगृहीतंमांआप्तानिसमस्तानिअर्घ्यादिसत्

नतस्यकश्चिद्दयितःसुहृत्तमोनचाप्रियोद्वेष्यउपेक्ष्यएववा तथाऽपिभक्तान्भजतेयथा
तथासुरद्रुमोयद्वदुपाश्रितोऽर्थदः २२ किंवाऽग्रजोमाऽवनतंयदूत्तमः स्मयन्परिष्वज्य
गृहीतमंजलौ गृहंप्रवेश्याप्तसमस्तसत्कृतंसंप्रक्ष्यतेकंसकृतंस्वबंधुषु २३ श्रीशुकउवा
च इतिसंचिंतयन्कृष्णंश्वफल्कतनयोऽध्वनि रथेनगोकुलंप्राप्तःसूर्यश्चास्तगिरिंनृप
२४ पदानितस्याखिललोकपालकिरीटजुष्टामलपादरेणोः ददर्शगोष्ठेक्षितिकौतुका
निविलक्षितान्यब्जयवांकुशाद्यैः २५ तद्दर्शनाल्हादविवृद्धसंभ्रमःप्रेम्णोर्ध्वरोमाऽश्रुक
लाकुलेक्षणः रथादवस्कंद्यसतेष्वचेष्टतप्रभोरमून्यंघ्रिरजांस्यहोइति २६ ॥ कृतानियेनतं

मां २३ सतुमार्गमपिनवेदतथापिरथेनप्राप्तइति २४ अखिलैर्लोकपालैःकिरीटेषुजुष्टाअमलाःपादरेणवोयस्यतस्यक्षिति
कौतुकानिक्षितेरलंकाररूपाणि २५ तद्दर्शनेनयआल्हादस्तेनविवृद्धःसंभ्रमोयस्यसः प्रेम्णाऊर्द्ध्वानिरोमाणियस्यसः अश्रू
णांकलाभिर्लेशैः आकुलेईक्षणेयस्यसः अवस्कंद्यअवप्लुत्यतेषुपदेषुसोऽक्रूरः अचेष्टतअलुठत् अहोइति दुर्लभतांभावयं

ननु किमर्थं भक्तं खलु ठतनास्ति प्रेमसंभ्रमे फलोद्देश इत्याह देहभृतामिति देहभाजामेतावानेव पुरुषार्थः कंसस्य संदेशा दारभ्य हरेर्लिंगदर्शनश्रवणादिभिर्योयः मक्रूरस्य वर्णित इति संदेशआद्योयस्यार्थस्य सयावानक्रूरस्य जात इति वा २७ त तः कृसंचरामं च ददर्श गावो दुह्यंते ऽस्मिन्निति गोदोहनं तत्स्थानं गतौ प्राप्तौ २८ २९ अनुक्रोशो ऽनुकंपा तद्विलसितं स्मितयु

देहभृतामियानर्थो हित्वा दंभं भियं शुचं संदेशाद्यो हरेर्लिंगदर्शनश्रवणादिभिः २७ ददर्श कृसं रामं च व्रजे गोदोहनं गतौ पीतनीलांबरधरौ शरदंबुरुहेक्षणौ २८ किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ सुमुखौ सुंदरवरौ बालद्विरदविक्रमौ २९ ध्वजव ज्रांकुशांभोजैश्चिह्नितैरंघ्रिभिर्व्रजं शोभयंतौ महात्मानौ सानुक्रोशस्मितेक्षणौ ३० उ दाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ पुण्यगंधानुलिप्तांगौ स्नातौ विरजवाससौ ३१ प्रधा नपुरुषावाद्यौ जगद्धेतू जगत्पती अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ३२ दिशो विति मिरा राजन् कुर्वाणौ प्रभया स्वया यथा मारकतः शैलो रौप्यश्च कनकाचितौ ३३ ॥ ६॥ ६

तन्मीक्षणं ययोस्तौ ३० उदारा रुचिरा क्रीडा ययोस्तौ स्रग्विणौ रत्नस्रग्भिरलंकृतौ ३१ प्रधानभूतौ पुरुषौ प्रकृतिपुरुषात्मकौ वा कु तः आद्यौ तदपि कुतः जगद्धेतू जगत्कारणौ अत एव जगत्पती विपरीतो वा च तुर्णां पदानां हेतुहेतुमद्भावः जगत्यर्थे पृथिव्या भारापनय नाय स्वांशेन मूर्तिभेदेन बलकेशवौ संतौ ३२ स्वप्रभया विगततिमिरा दिशः कुर्वाणौ कनककनकाचितौ सुवर्णव्याप्ताविति सालंकारयोः

॥ ३४ ॥ भगवद्दर्शनाल्हादेन यद्बाष्पं तेन पर्य्याकुले ईक्षणे यस्य सः पुलकैराचितं व्याप्तं अंगं यस्य सः स्वाख्याने अक्रूरोऽहं नम
स्करोमीति कथनेनाशक्नोत् ३५ अभिप्रेत्य अक्रूरोऽयमेतदर्थमागतमिति ज्ञात्वा कंसाहननसामर्थ्यद्योतयन्निव रथांगेन च
क्रेणांकितो यः पाणिस्तेनाभ्युपाकृष्य तमालिंगितवान् ३६ पाणी अंजलिरूपेण संहताविव गृहीत्वा ३७ मधुपर्क एवार्हणं त

रथात्तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः पपात चरणो[पां]ते दंडवद्रामकृष्णयोः ३४
भगवद्दर्शनाल्हाद[बा]ष्पपर्याकुलेक्षणः पुलकाचितांग औत्कंठ्यात्स्वाख्याने नाश
कन्नृप ३५ भगवांस्तमभिप्रेत्य रथांगांकितपाणिना परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्स
लः ३६ संकर्षणश्च प्रणतमुपगुह्य महामनाः गृहीत्वा पाणिना पाणी अनयत्सानुजो गृहं
३७ पृष्ट्वाथ स्वागतं त[स्मै] निवेद्य च वरासनं प्रक्षाल्य विधिवत्पादौ मधुपर्कार्हणमाहरत्
३८ निवेद्य गां चातिथये संवाह्य श्रांतमादृतः अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद्विभुः ३९ त
स्मै भुक्तवते प्रीत्या रामः परमधर्मवित् मुखवासैर्गंधमाल्यैः परां प्रीतिं व्यधात्पुनः ४० पप्र
च्छ सत्कृतं नंदः कथं स्थ निरनुग्रहे कंसे जीवति दाशार्ह सौनपाला इवावयः ॥ ४१ ॥

सिनत्वा यदुक्रिय मर्हणं आहरत् आनीय समर्पितवानित्यर्थः ३८ ३९ ४० सत्कृतं संमानितं निरनुग्रहे क्रूरे कथं के
न प्रकारेण स्थ जीवथेत्यर्थः सौनः पशुघाती स एव पालको येषामवीनां मेषाणां त इव तत्तुल्या इत्यर्थः ॥ ४१ ॥ ६ ॥

निरनुग्रहतोऽत एव योऽवधीदिति तोकान्तोकानि अमुतप्यऋखलेनैव तर्प्पयति यः अतः खलः तस्य कंसस्य प्रजानां हे अ
क्रूर येषां जीवनमात्रमपि दुर्लभं तेषां वः किं नु कुशलं विचारयामेति ४२ मधुरया वाचा इत्थं सत्कृतः तथैव वाचा परिपृष्टेन
प्रश्नेन अध्वपरिश्रमं संसारश्रमं ४३ इति दशमे टीकायामष्टत्रिंशोऽध्यायः ३८ नवत्रिंशे पुरीं गच्छत्यच्युते गोपिकोक्तयः

योऽवधीत्स्वस्वसुस्तोकान्क्रोशंत्या असुतृपः खलः किं नु स्वित्तत्प्रजानां वः कुशलं वि
मृशामहे ४२ इत्थं सूनृतया वाचा नंदेन सुसभाजितः अक्रूरः परिपृष्टेन जहावध्वपरिश्रमं
४३ इति श्रीभागवते महापुराणे दशमस्कंधे अक्रूरागमनन्नाम अष्टत्रिंशोऽध्यायः ३८
श्रीशुक उवाच सुखोपविष्टः पर्यंके रामकृष्णोरुमानितः लेभे मनोरथान्सर्वान्पथि या
न्स चकार ह १ किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने तथापि तत्परा राजन्न हि वांछं
ति किंचन २ सायंतनाशनं कृत्वा भगवान्देवकीसुतः सुहृत्सु वृत्तं कंसस्य पप्रच्छान्यच्चि
कीर्षितं ३ श्रीभगवानुवाच तात सौम्यागतः कच्चित्स्वागतं भद्रमस्तु वः अपि स्वज्ञातिबंधू
अक्रूरेणाथ कालिंद्यां विष्णुलोकस्य दर्शनं १ भक्तानां मनोरथाः सत्या भवंतीति नामनमीवमनामयं ४।
यानयन्नाह सुखोपविष्ट इति रामकृष्णाभ्यां उरु अधिकं मानितः १ २ ३ हे तात हे सौम्य स्वागतं यथा तथा आगतः स्व
ज्ञातिबंधूनां स्वसुहृदः ज्ञातयः सपिंडाः बंधवः असपिंडाः संबंधिनः तेषामपि किं अनमीवं अपापमदुःखमिति यावत

श्रीमद्भा॰ द॰ ॥४॥

३९
भा० द०
पू०
१२८

एवं प्रश्नोपि मम नातिसंगत इत्याह किं न्विति अहे हे अक्रूर पृच्छे पृच्छामि नः अस्माकं कुलस्यामये रोगे नो मातुल इति नाम यस्य तस्मिंश्च स्वानां ज्ञातीनां तस्य प्रजासु च ५ अस्मत् अस्मान्निमित्तं वृजिनं दुःखं आर्ययोर्निरपराधयोर्यद्धेतोः यः अहमेव हेतुः तस्मात् ६ हे सौम्य स्वानां वो दर्शनं अद्य मम संजातं ततदिष्ट्याभद्रं ७ माधवः मधीर्वेशजः ८ यः धनुर्मखव्याज

किं नु नः कुशलं पृच्छे एधमाने कुलामये कंसे मातुलनाम्न्यंग स्वानां नस्तत्प्रजासु च ५।
अहो अस्मदभूद्भूरि पित्रोर्वृजिनमार्ययोः यद्धेतोः पुत्रमरणं यद्धेतोर्बंधनं तयोः ६ दिष्ट्याद्य दर्शनं स्वानां मह्यं वः सौम्य कांक्षितं संजातं वर्ण्यतां तात तवागमनकारणं ७ श्रीशुक उवाच पृष्टो भगवता सर्वं वर्णयामास माधवः वैरानुबंधं यदुषु वसुदेववधोद्यमम् ८
यत्संदेशो यदर्थं वा दूतः संप्रेषितः स्वयं यदुक्तं नारदेनास्य स्वजन्मानकदुंदुभेः ९ श्रुत्वाऽक्रूरवचः कृष्णो बलश्च परवीरहा प्रहस्य नंदं पितरं राज्ञादिष्टं विजज्ञतुः १० गोपान्समादिशत्सोपि गृह्यतां सर्वगोरसः उपायनानि गृह्णीध्वं युज्यंतां शकटानि च ११ यास्यामः श्वो मधुपुरीं दास्यामो नृपते रसान् द्रक्ष्यामः सुमहत्पर्व यांति जानपदाः किल १२ ॥ यत्संदेशो यस्य यदर्थं चाणूरादिभिर्घातनार्थं अस्य कंसस्य स्वजन्म कृष्णजन्म आनकदुंदुभेः सकाशात् ९ विजज्ञतुः विशेषेण ज्ञापयामासतुः १० सोपि नंदो गोपान्समादिशत् तदेव दर्शयति गृह्यतामित्यादिना गोरसः क्षीरादिः उपायनानि उत्तमवस्तूनि ११ रसान् घृतादीन् शब्दच्छलेनेदं सूचयति अचिकित्स्यरोगस्य चिकित्सार्थं रसान्दास्याम इति १२

१२८

सत्त्रात्र जरसा: श्रिकृतेन आघोषयत्सर्वतो घोषितवान् १२ ता: कृष्णैकजीवना गोप्य: ततस्तदाक्रूरस्यागमनमुपश्रुत्येति १३ अथान्यां नन्याह पंचभि: काश्चिदिति तेन श्रवणेन कृतो योऽन्तस्तापः तेन य: श्वासस्तेन म्लाना मुखश्रीर्यासां ता बभूवुरिति दुकूलानि च वलयानि च केशग्रंथयश्च स्रंसंत: दुकूलादयो यासां ता: तथाभूता: काश्चन बभूवुरिति १४ तस्य श्रीकृष्णस्यानुध्या

एवमाघोषयत्क्षत्त्रा नंदगोप: स्वगोकुले गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिता भृशं रा मकृष्णौ पुरं नेतुमक्रूरं व्रजमागतं १३ काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रिय: स्रं सद्दुकूलवलयकेशग्रंथ्यश्च काश्चन ॥ १४ ॥ अन्याश्च तदनुध्याननिवृत्ताशेषवृत्त य: नाभ्यजानन्निमं लोकमात्मलोकं गता इव १५ स्मरंत्यश्चापरा: शौरेरनुरागस्मितेरि ता: हृदिस्पृशश्चित्रपदा गिर: संमुमुहु: स्त्रिय: १६ गतिं सुललितां चेष्टां स्निग्धहासाव लोकनं शोकापहानि नर्माणि प्रोद्दामचरितानि च १७ चिंतयंत्यो मुकुंदस्य लीलाविरह कातरा: समेता: संघश: प्रोचुरश्रुमुख्योऽच्युताशया: १८ गोप्य ऊचु ॥ तदनुध्यानेन निवृत्ता अ शेषाश्च क्षुरादिवृत्तय: यासां ता: इमं लोकं देहमपि न जानंति स्म मुक्ता इवेति १५ अपरा: स्त्रिय: शौरेर्गिर: ॥ स्मरंत्य: संमुमुहु: कथंभूता: अनुरागेण यत्स्मितं तेन ईरिता: हृदिस्पृशंतीति हृदिस्पृश: मनोज्ञा: चित्राणि प दानि यासु ता: ॥ १६ ॥ १७ ॥ विरहेण कातरा विह्वला: अच्युते आशयश्चित्तं यासां ता: ॥ १८ ॥ ७ ॥ ७ ॥

दासंसंगतिं विधाय विघट्टयतीति विधातारं क्ष्येकमाक्रोशंत्य आहुः अहो इति मैत्र्या हिताचरणेन प्रणयेन स्नेहेन
च अकृतार्थान् अप्राप्तभोगानपि तान् वियुनंक्षि वियोजयसि तस्मान्न तव दया बालिशोपि त्वमित्याहुः अपार्थकमिति
१९ विगर्हितं तव चेष्टितमित्याहुः यस्त्वमिति शोकमपनुदती निश्शोकापनोदः सन्त्रासो स्मितलेशश्च गूढहासः तेन सुंदरं मुकुं
दस्य वक्त्रं सत्कृत प्रदर्श्य पुनरस्य परोक्ष्यं अदृश्यतां करोषि अतः तव कृतं कर्म अ साधु निंद्यमित्यर्थः २० किंच दत्वाप
हारित्वेनातिक्रूरस्त्वमित्याहुः क्रूरस्त्व मिति नन्वक्रूरोऽहं तेनाहमिति चेदाहुः अक्रूरसमाख्ययेति नह्येवं कर्तुम

अहो विधातस्तव न क्वचिद्दयासंयोज्य मैत्र्या प्रणयेन देहिनः तांश्चाकृतार्थान् वियु
नंक्ष्यपार्थकं विक्रीडितं तेऽर्भकचेष्टितं यथा १९ यस्त्वं प्रदर्श्यासितकुंतलावृतं मुकुंद
वक्त्रं सुकपोलमुन्नसं शोकापनोदस्मितलेशसुंदरं करोषि पारोक्ष्यमसाधु ते कृतं २०
क्रूरस्त्वमक्रूरसमाख्यया स्म नश्चक्षुर्हि दत्तं हरसे बताज्ञवत् येनैकदेशेऽखिलसर्गसौष्ठवं
त्वदीयमद्राक्ष्म वयं मधुद्विषः २१ न नंदसूनुः क्षणभंगसौहृदः समीक्षते नः स्वकृता
तुरा बत विहाय गेहान् स्वजनान् सुतान् पतींस्तद्दास्यमद्धोपगता नवप्रियः २२ ॥ न्यः प्रभवति अ
तो नामांतरेण सन् ध्रुवं त्वमेवागतोसि कृतं संहरामि न युष्माकं चक्षुरिति चेन्न येन तवदत्तेन चक्षुषा मधुद्विषः एकदेशे नेत्रवक्त्रादौ त्व
दीयं समग्रसृष्टिसौपुण्यं अद्राक्ष्म दृष्टवत्यो वयं तच्चक्षुः अयं भावः मम सर्वरहस्यमाभिर्ज्ञातमित्यमर्षेण वक्त्रसंवियोजयन्नः
स्मानंधीकरोषीति च २१ विधातारं विहाय परस्परमूचुः न नंदसूनुरिति वर्ततिरवेदे क्षणभंगं अस्थिरं सौहृदं यस्य सः गृहादी
न्विहाय अद्धा साक्षात्तस्यैव दास्यमुपागताः स्वकृतातुराः तत्कृतेनैव स्मितादिना परवशा अपि नः अस्मान् न समीक्षते नवं नवं प्रियं यस्य

मेर्ष्यमूचुः सुखं प्रभातेति व्रजस्पतेः श्रीकृष्णस्य मुखं पास्यंति सादरेण द्रक्ष्यंति कथंभूतं अपांगेन नेत्रप्रांतेन उत्कलितं उज्जृंभितं स्मितमेव आसवो रसो यस्मिन् तत् यद्वा अपांगोत्कलितस्मितेन आसवरूपं यन्मुखं तत् तस्य पानं मुख्यमेव संभावयंति २३ ननु द्वित्राणि दिनानि तथा भवतु नाम तथाप्यसत्स्नेहाकृष्टः पित्रादिभिश्च परावर्तितः आगमिष्यतीत्याशंक्याहुः हे अवलाः तासां मधुवन्मंजुभिर्भाषितैर्वशीकृत चित्तस्तथा तासां सलज्जस्मितैर्विभ्रमैर्भ्रमन् परवान् पित्रादिपरतंत्रोपि यद्वा व्रजे परे अन्ये बंधवः संति यस्य सः तथा मनस्वी धीरोपि ग्राम्याः अविदग्धा नः कथं प्रतियास्यते प्रत्येष्यते न कथंचिदित्यर्थः

सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवं याः संप्रविष्टस्य मुखं व्रजस्पतेः पास्यंत्यपांगोत्कलितस्मितासवं २३ तासां मुकुंदो मधुमंजुभाषितैर्गृहीतचित्तः परवान्मनस्व्यपि कथं पुनर्नः प्रतियास्यतेऽबला ग्राम्याः सलज्जस्मितविभ्रमैर्भ्रमन् २४ अद्य ध्रुवं तत्र दृशो भविष्यते दाशार्हभोजांधकवृष्णिसात्वतां महोत्सवः श्रीरमणं गुणास्पदं द्रक्ष्यंति ये चाध्वनि देवकीसुतं २५ मैतद्विधस्याकरुणस्य नाम भूदक्रूर इत्येतदतीव

२४ किंच अस्मदुत्सवभाजोन्यस्त्वाद्य भविष्यंतीत्याहुः अद्येति तत्र पुरे दाशार्हादीनां दृशः दृष्टेर्म ... दारुणः हा नुत्सवो भविष्यते भविष्यति ये देवकीसुतं द्रक्ष्यंति तथा ये चाध्वनि गच्छंतं द्रक्ष्यंति तेषामपि दृशो भविष्यतीति यद्वा दृशइति द्वितीया तेषां दृशो नेत्राणि महोत्सवो भविष्यते प्राप्स्यति प्राप्त्यर्थस्य भवतेरात्मनेपदित्वात् २५ अक्रूरं शपंत्य आहुः मैतद्विधस्येति एषा विधा विधानं कर्म यस्य तस्य अतएव निष्करुणस्य अक्रूर इति शोभनं नाम मा भूत्तत्र हेतुः ॥६॥ ६॥ ६॥ ६॥

३९
भा०द०
पू०
१३०

अतीवदारुण इत्यादि प्रियात्प्राणादपि प्रियतरं कृष्णं अध्वनः पारं अस्मद्दृग्गोचरत्वात् अतिदूरं देशं नेष्यति २६ अहो धिगस्मज्जीवितमित्याहुः अनार्द्रधीरिति अनार्द्रा कठिना धीर्यस्य सः तावदेव कृष्णो रथमधिरूढः अस्याविनयमालक्ष्य स्थविरैश्चोपेक्षितं तेन निवारितवंत इत्यर्थः किंच दैवं चेति अयं भावः यदि दैवमस्माकं अनुकूलं भवेत् तर्हि विघ्नैः कश्चिदेषां मध्ये प्रतीहन्येत अकस्मादश्वपातो वा भवेत् अन्यद्वा किंचिदनिष्टं स्यात् न तु तत् किंचिदस्तीति २७ परस्परं संमंत्र्य साहं स

योऽसावनाश्वास्य सुदुःखितं जनं प्रियात्प्रियं नेष्यति पारमध्वनः २६ अनार्द्रधीरेष समास्थितो रथं तमन्वमी च त्वरयंति दुर्मदाः गोपा अनोभिः स्थविरैरुपेक्षितं दैवं च नोऽद्य प्रतिकूलमीहते २७ निवारयामः समुपेत्य माधवं किं नोऽकरिष्यन् कुलवृद्धबांधवाः मुकुंदसंगान्निमिषार्द्धदुस्त्यजाद्दैवेन विध्वंसितदीनचेतसां २८ यस्यानुरागललितस्मितवल्गुमंत्रलीलावलोकपरिरंभणरासगोष्ठ्यां नीताः स्म नः क्षणमिव क्षणदा विना तं गोप्यः कथं न्वतितरेम तमो दुरंतं २९ ॥ ऽ मधिरूढ्याहुः निवारयाम इति किं अकरिष्यन् किं करिष्यंति निमिषार्द्धदुस्त्यजात् मुकुंदसंगाद्विध्वंसितानि वियोजितानि अत एव दीनानि चेतांसि यासां एवंभूतानामस्माकं न मृत्योरपि भयमित्यर्थः २८ इतोऽपि कारणाद्वश्यं साहसमेवावलंबनीयमित्याहुः हे गोप्यः यस्य ललितं स्मितं च वल्गु मंत्रश्च लीलावलोकश्च परिरंभणं च अनुरागेणैतानि यस्यां रासगोष्ठ्यां रासक्रीडासभायां नः अस्माभिः क्षणदाः रात्रयः क्षणमिव नीताः तमसुं कृष्णं विना दुरंतं तमः विरहदुःखं कथं नु अतितरेम न कथंचिदित्यर्थः २९ ॥ ६ ॥

राम:
१३०

किंच आसांनाथतमोऽतिनरणंजीवनमेवकथंस्यादित्याहुः यइति अन्हःक्षयेदिनावसानेखुररजोभिःछुरिताधूसराअ
लकाःस्रजश्चयस्यसःव्रजंविशन्स्मितेनयत्कटाक्षनिरीक्षणंतेननश्चित्तंक्षिणोतिहरतिअमुंकृष्णंविनाकथंभवेमजी
वेमेति २९ कृष्णेविषक्तानिमानसानियासांसासुस्वरंउच्चैः ३१ क्रूरमक्रूरतःअत्वाकंसंकंसनिषूदनः गोपीमनोरथाराम्ःस

योऽन्हःक्षयेव्रजमनंतसखःपरीतोगोपैर्विशन्खुररजश्छुरितालकस्रक्वेणुंक्वणन्।
स्मितकटाक्षनिरीक्षणेनचित्तंक्षिणोत्यमुमृतेनुकथंभवेम ३० श्रीशुकउवाच एवंब्रु
वाणाविरहातुराभृशंव्रजस्त्रियःकृष्णविषक्तमानसाः विसृज्यलज्जांरुरुदुःस्मसुस्वरं
गोविंददामोदरमाधवेति ३१ स्त्रीणामेवंरुदंतीनामुदितेसवितर्यथअक्रूरश्चोदयामा
सकृतमैत्रादिकोरथं ३२ गोपास्तमन्वसज्जंतनंदाद्याःशकटैस्ततः आदायोपायनंभू
रिकुंभान्गोरससंभृतान् ३३ गोप्यश्चदयितंकृष्णमनुव्रज्यानुरंजिताः प्रत्यादेशंभगव
तःकांक्षंत्यश्चावतस्थिरे ३४ तास्तथातप्यतीर्वीक्ष्यस्वप्रस्थानेयदूत्तमः सांत्वयामास
सप्रेमैरायास्यइतिदौत्यकैः ३५ यावदालक्ष्यतेकेतुर्यावद्रेणूरथस्यच ॥ ३६ रामःस्वपुरंययौ

स्त्रीणामिति ताअनाहत्यकृतमैत्रादिकः मैत्रंमित्रदैवतंसंध्योपासनंतदादिकर्मकृतंयेनसः ३२ अन्वसज्जंतअन्वग
च्छन् ३३ अनुरंजिताःपरावृत्यनिरीक्षणादिभिःकिंचिदानंदिताःप्रत्यादेशंप्रत्याख्यानं ३४ तप्यतीःसंतप्यमानाःआ
यास्येशीघ्रमागमिष्यामीतिदूतवाक्यैः  ३५ ताभिःअनुमस्थापिताःप्रापिताःआत्मानश्चित्तानियाभिस्ताः॥ ३६॥ ३६ ॥

लेख्यमयपुत्रिकाइवनिश्चलाः ३६ ३७ ३८ वृक्षाणांखंडंसमूहमुपव्रज्य ३९ शत्रुभ्यःशंकितःसन्रथोपरिनिवेश्य ४०।
ब्रह्मवेदंजपन् केमौवालौकतौमल्लाविति शंकितचेतसे अक्रूरायजलेस्वमत्याश्चर्यंव्यदर्शयत् ४१।४२।४३ सिद्धा

अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिताः ३६ तानिराशानिवर्तनुगोविंदविनिव
र्तने विशोकाअहनीनिन्युर्गायंत्यःप्रियचेष्टितं ३७ भगवानपिसंप्राप्तोरामाक्रूरयुतोनृ
प रथेनवायुवेगेनकालिंदींमघनाशिनीं ३८ तत्रोपस्पृश्यपानीयंपीत्वामृष्टंमणिप्र
भं वृक्षखंडमुपव्रज्यसरामोरथमाविशत् ३९ अक्रूरस्तावुपामंत्र्यनिवेश्यचरथोपरि
कालिंद्याह्रदमागत्यस्नानंविधिवदाचरत् ४० निमज्ज्यतस्मिन्सलिलेजपन्ब्रह्मसनात
नं तावेवददृशेऽक्रूरोरामकृष्णौसमन्वितौ ४१ तौरथस्थौकथमिहसुतावानकदुंदुभेः त
र्हिस्वित्स्यंदनेनस्तइत्युन्मज्ज्यव्यचष्टस ः ४२ तत्रापिचयथापूर्वमासीनौपुनरेवसः न्यम
ज्जद्दर्शनंयन्मेमृषाकिंसलिलेतयोः ४३ भूयस्तत्रापिसोऽद्राक्षीत्स्तूयमानमहीश्वरं सिद्ध
चारणगंधर्वैरसुरैर्नतकंधरैः ४४ सहस्रशिरसंदेवंसहस्रफणमौलिनं नीलांबरंविसश्वेतं शृं

दिभिःस्तूयमानं ४४ सहस्रंशिरांसियस्यतं सहस्रफणेषुमौलयोयस्यसंतीतित ॥ गैःश्वेतमिवस्थितं ४५
यातंनीलंअंबरंयस्यतं विसश्वेतंविसवत्कमलनालवत्श्वेतंशृंगैःशिखरैः श्वेतंकैलासमिवस्थितं ॥ ४५ ॥ छ ॥ छ

तस्योत्संगे कुंडलीकृतदेहार्द्धे विलोकयेत्येकादशेन श्लोकेनान्वयः ४६ शोभने भ्रुवौ यस्य उन्नता नासिका यस्य तं चकं च
शोभनौ कपोलौ यस्य अरुणौ अधरौ यस्य तं च तं च ४७ तुंगावंसौ यस्य उरस्थले श्रीर्यस्य तं च तं च बलिमत् पल्लवोदरं वल्ल
यः तिर्यक् निम्ना रेखा यस्य संतितद्बलिमत् तं च तं तत् पल्लववत् अश्वत्थदलसदृशमुदरं यस्य तं ४८ कटितटं च श्रोणिश्च
करभसदृशमूरुद्वयं च बृहच्च तत् कटितटश्रोणिकरभोरुद्वयं च तेनान्वितं अथवा बृहद्भ्यां कटितटश्रोणिभ्यां करभोरुद्व

तस्योत्संगे घनश्यामं पीतकौशेयवाससं पुरुषं चतुर्भुजं शांतं पद्मपत्रारुणेक्षणं ४६ चा
रुप्रसन्नवदनं चारुहासनिरीक्षणं सुभ्रून्नसं चारुकर्णसुकपोलारुणाधरं ४७ प्रलंबपीव
रभुजं तुंगांसोरस्थलश्रियं कंबुकंठं निम्ननाभिं बलिमत्पल्लवोदरं ४८ बृहत्कटितटश्रो
णिकरभोरुद्वयान्वितं चारुजानुयुगं चारुजंघायुगलसंयुतं ४९ तुंगगुल्फारुणनख
व्रातदीधितिभिर्वृतं नवांगुल्यंगुष्ठदलैर्विलसत्पादपंकजं ५० सुमहार्हमणिव्रातकि
रीटकटकांगदैः कटिसूत्रब्रह्मसूत्रहारनूपुरकुंडलैः ५१ भ्राजमानं पद्मकरं शंखचक्रग
दाधरं श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनं ५२ सुनंदनंदप्रमुखैः पार्षदैः सनकादि

येन चान्वितं ४९ तुंगौ ईषदुन्नतौ गुल्फौ अरुणनखव्राताश्च तेषां दीधितिभिः तथा नवाः कोमला अंगुल्यः अंगुष्ठौ च ताः एव दलानि तैश्च विलसत् शोभमानं पादपंकजं यस्य तं ५० महार्हमणिव्रातान्वितैः किरीटादिभिः ५१ ॥ ५२ ॥
पृथक् पृथक् भावोऽभिप्रायो येषां तैः तत्र पार्षदैः स्वामीति स्तूयमानं सनकादिभिर्ब्रह्मेति ब्रह्माद्यैर्महेश्वरः ॥ ६ ॥ ६

३९
भा०द०
पू०
१३२

इति मरीच्यादिभिर्द्विजोत्तमैः परः प्रजापतिरिति ५२ वसुः उपरिचरः प्रह्लादनारदवसवः प्रमुखा मुख्या येषां तैः परं
दैवतमिति च श्रेष्ठैर्वचोभिः पृथग्भावैर्वचोभिरिति वा ५४ विद्याविद्ये जीवानां मुक्तिसंसृतिहेतू मायातयोः कारणं श
क्तिर्ह्लादिनी संवित्ज्ञानं आभिरन्याभिश्च निषेवितं ५५ विलोक्य सु भृशं प्रीतः अस्मत्कृतो ऽसावेवंभूतः परमेश्वर

सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ५३ प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः
स्तूयमानं पृथग्भावैर्वचोभिरमलात्मभिः ५४ श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येल
योर्जया विद्ययाऽविद्यया शक्त्या मायया च निषेवितं ५५ विलोक्य सुभृशं प्रीतो भक्त्या
परमया युतः हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ५६ गिरा गद्गदयाऽस्तौषीत्स
त्त्वमालंब्य सात्वतः प्रणम्य मूर्ध्नाऽवहितः कृतांजलिपुटः शनैः ५७ इति श्रीभागवते
महापुराणे दशमस्कंधे अक्रूरप्रतियाने एकोनचत्वारिंशोऽध्यायः ३९ अक्रूर उवा
च नतोऽस्म्यहं त्वाऽखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययं यन्नाभिजातादर
विंदकोशाद्ब्रह्माविरासीद्यत एष लोकः १ भूस्तोयमग्निः पवनः खमादिर्महानजादिः

इति ज्ञात्वेति ५६ ५७ इति श्रीभागवते महापुराणे दशमस्कंधे अक्रूरप्रतियाने नामएकोनऽ मन इंद्रियाणि
चत्वारिंशोऽध्यायः ३९ चत्वारिंशे ततोऽक्रूरः कृष्णं मत्वेश्वरेश्वरं प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदतः १ श्रीकृष्णं प्रणे

१३२

तदेवं सांख्ययोगावेकीकृत्योक्तौ त्रयीमार्गे कर्मज्ञानभेदेन दर्शयति त्रय्याचेति श्लोकद्वयेन वैतानिकाः कर्म्मयोगिनः।
त्वां वै त्वामेव यजंते ननु गेइंद्रवरुणवह्न्यादीन्यजंते न तु मामिति अतआह नानावज्रहस्तादीनि रूपाणि येषां ते ये ऽमरा
स्तेषामाख्यया नाम्ना त्वामेव यजंत इति अयं भावः ऐंद्रवारुणादिसूक्तेषु ... सर्वैश्वर्य्येण प्रकाश्यं तेन च सर्वे भ्दएवह
वः संभदंति ... नामभेदेन त्वामेव यजंत इति तथा च श्रुतिः स प्रथमः संप्रकृतिर्विश्वकर्मा स प्रथमो मित्रावरुणोऽग्निः
स प्रथमो बृहस्पतिश्चिकित्वान्तस्मा इंद्राय हविरा जुहोतीति ५ ज्ञानयज्ञेन समाधिना ६ सांख्ययोगत्रयीमार्गा उक्ताः वै

त्रय्यां च विद्यया केचित्त्वां वै वैतानिका द्विजाः यजंते विततैर्यज्ञैर्नानारूपामराख्यया
५ एके त्वाऽखिलकर्माणि संन्यस्योपशमं गताः ज्ञानिनो ज्ञानयज्ञेन यजंति ज्ञानविग्रहं ६
अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते यजंति त्वन्मयास्त्वां हि बहुमूर्त्येकमूर्तिकं
७ त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणं बह्वाचार्यविभेदेन भगवन्समुपासते ८ स
र्व एव यजंति त्वां सर्वदेवमयेश्वरं येप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ॥ ९ ॥ स्ववैशैवमा

र्गावाहद्वयेन अन्ये चेति संस्कृतात्मानः वैष्णवशैवदीक्षयादीक्षिताः संतः ते त्वयाभिहितेन पंचरात्रादिविधिना त्वन्मयाः
त्वन्मयत्वेनात्मानं चिंतयंतः त्वदेकप्रधाना इत्यर्थः वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभेदेन बहुमूर्तिं नारायणरूपेणैकमूर्तिकं
च त्वामेव यजंति ७ बह्वाचार्यविभेदेनेति नानाभेदैः शैवपाशुपतादिमार्गेण ८ येपि क्षुद्रदेवताभक्तास्तेपि त्वामेव यजंतीत्याह
सर्व एवेति हे सर्वदेवमय ननु चेते परस्परं देवताधिक्षेपकलहव्याकुलचित्ताः कथमेकमेव यजंतीत्युच्यते तत्राह यद्यप्यन्यधियः

तस्मात्सर्वे मार्गास्त्वय्येव पर्य्यवस्यंतीति सदृष्टांतमाह यथेति अद्रेः सकाशात्सर्वतः प्रभवंति यानद्यः ताः पुनः पर्जन्येन
पूरिताः बहुस्रोतसः सत्यः सर्वतः सिंधुमेव विशंति यद्वत् तद्वदेतागतयो मार्गा अंततस्त्वामेव विशंतीति १० अत्र हेतुमा
ह सत्वमिति भवतः शक्तिर्या प्रकृतिस्तस्याः सत्वादयो गुणाः अतः प्राकृताः प्रकृतिकार्योपाधयो ब्रह्मपर्यंताः स्थावराद
यो जीवाः स्वोपाधिद्वारा तेषु गुणेषु प्रोताः प्रविष्टाः प्रकृतौ साच त्वयीति अतः क्रमेणोपाधिलयात्सर्वेपि त्वामेव प्रविशंतीति
यद्वा भवतः प्रकृतेर्गुणेषु प्रोताः ब्रह्मादयो भवद्भूतिरिति नृसंति अतस्त्वमेव सर्वदेवमय इति ११ ननु भवद्गुणाः प्रकृतेरि

यथाद्रिप्रभवानद्यः पर्जन्यापूरिताः प्रभो विशंति सर्वतः सिंधुं तद्वत्त्वां गतयोंऽततः १० स
त्वं रजस्तम इति भवतः प्रकृतेर्गुणाः तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः ११ तुभ्यं
नमस्तेऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधियां च साक्षिणे गुणप्रवाहोऽयमविद्यया कृ
तः प्रवर्तते देवनृतिर्य्यगात्मसु १२ अग्निर्मुखं तेऽवनिरंघ्रिरीक्षणं सूर्यो नभो नाभिरथो दि

तिः द्वयमापि प्रकृतिसंबंधं ब्रवीषि ततश्च तेषां मम च को विशेषः स्यादित्याशंक्य विशेषमाह तुभ्यमिति ॥
तुभ्यमिति अविषक्तदृष्टये अविलुप्तबुद्धये कुतः सर्वात्मने स्वव्यतिरिक्ताभावाद विषक्तदृष्टित्वमित्यर्थः किंच सर्वधि
यां साक्षिणे सर्वबुद्धिसाक्षित्वान्न कापि बुद्धिलय इत्यर्थः इतरेतु संसरंतीत्याह गुणप्रवाह इति देवनृतिर्य्यक्ष्वात्मानो ये
षां तेषु देवादिशरीराभिमानिष्वित्यर्थः त्वदविद्यया कृतोयं गुणप्रवाहः प्रवर्तते अतो महान्विशेष इत्यर्थः १२ सर्वात्म
नस्तव नेतो कं सगुणं रूपं स्तौति अग्निर्मुखमिति द्वाभ्यां अग्न्यादीन नूद्य ईश्वरावयवता विधीयते योऽयमग्निः ॥ ७ ॥

४१
भा०द०
पू०
१३४

सतुतवमुखमित्यादिवचनव्यत्ययाईक्षणं चक्षुः श्रुतिः श्रवणेंद्रियंकंमूर्द्धाप्राणश्च बलंचतत् १३ अद्रयः परस्यते अस्थि
नस्रानि १४ नकेवलमेतावत् किंतु सर्वोऽप्ययंप्रपंचस्त्वदवयवभूत एवेति वदन्नेवंसत्यपिप्रपंचस्य षड्जन्मादयोवि
कारास्त्वयि न प्रसज्यंते तस्य त्वयि कल्पितत्वादित्याह त्वयीति अव्ययात्मनि पुरुषे पूर्णे लोकादयः संजिहते प्रचलं
ति हे अव्ययात्मन्निति वा कथंभूते त्वयि मनोमये मनः प्रधाने म[illegible]त्व्यंगे दृश्यते त्वय्यव्ययाबुध्या मनसैवानुद्र

द्यौः कं सुरेंद्रास्त्वबाहवोऽर्णवाः कुक्षिर्मरुत्प्राणबलंप्रकल्पितं १३ रोमाणिवृक्षौषधयः
शिरोरुहाणिमेघाः परस्यास्थिनखानितेऽद्रयः निमिषणंरात्र्यहनीप्रजापतिर्मेढ्रस्तुवृष्टि
रेदवीर्यमिष्यते १४ त्वय्यव्ययात्मन्पुरुषेप्रकल्पितालोकाःसपालाबहुजीवसंकुलाः
यथाजलेसंजिहतेजलौकसोऽप्युदुंबरेवामशकामनोमये १५ यानियानीहरूपाणिक्री
डनार्थंविभर्षिहि तैरामृष्टशुचोलोकामुदागायंतितेयशः १६ नमःकारणमत्स्यायप्र
लयाब्धिचरायच हयशीर्ष्णेनमस्तुभ्यंमधुकैटभमृत्यवे १७ अकूपारायबृहतेनमोमं
दरधारिणे क्षित्युद्धारविहारायनमःसूकरमूर्तये १८ ॥ एवंमित्यादिस्फुटार्थैः जलेयथाजलौक
सः सूक्ष्मप्राण्यंडराशयः यथाचउदुंबरांतः उदुंबरेषुमशकाः परस्परस्वात्तीन भिन्नाः एवमनंतोब्रह्मांडानित्वयिसंच
रंतीत्यर्थः १५ तस्मादेवंभूतंतवस्वरूपंदुरवगाहमितित्वदवतारकथाऽमृतमेवसंतः सेवंतइत्याह यानियानीति आ
मृष्टापरिमार्जिताशुचयेषांते १६ अतः स्वयमप्यवताराननमस्यति नम इति हयशीर्ष्णे हयग्रीवाय मधुकैटभयोर्मृत्यवेहं

॥१९॥ भृगूणां पतये परशुरामाय २० संकर्षणं रामं चतुर्व्यूहरूपेण प्रणमति नमस्ते वासुदेवायेति २१ २२ एवं स्तुत्वा बंधमोक्षं प्रार्थयितुमाह भगवन्निति असति देहादौ साहं आयहो यस्य सः असत्यां अहो ग्रहो यस्येति वा २३ न केवलं मम लोकः अहमपि तथैवेत्याह अहं चेति २४ मूढत्वमेव प्रकटयति विपर्ययमतिरिति अनित्ये कर्मफले नित्यमिति

नमस्तेऽद्भुतसिंहाय साधुलोकभयापह वामनाय नमस्तुभ्यं क्रांतत्रिभुवनाय च १९
नमो भृगूणां पतये दृप्तक्षत्रवनच्छिदे नमस्ते रघुवर्याय रावणांतकराय च २० नमस्ते वासुदेवाय नमः संकर्षणाय च प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः २१ नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने म्लेच्छप्रायक्षत्रहंत्रे नमस्ते कल्किरूपिणे २२ भगवन्जीवलोकोऽयं मोहितस्तव मायया अहं ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु २३ अहं चात्मात्मजागारदारार्थस्वजनादिषु भ्रमामि स्वप्नकल्पेषु मूढः सत्यधिया विभो २४ अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहं द्वंद्वारामस्तमोविष्टो न जाने त्वात्मनः प्रियं २५ यथाऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः अभ्येति मृगतृष्णां वै तद्वत्त्वाऽहं पराङ्मुखः २६

अनात्मनि देहे आत्मेति दुःखरूपे गृहादौ सुखमिति विपरीतमतिरित्यर्थः द्वंद्वेषु सुखदुःखादिषु आरमते क्रीडतीति तथा सः न तु दुःखेऽकुतो रतिस्तत्राह तमोविष्टः तमसाव्याप्तः आत्मनः प्रियं प्रेमास्पदं त्वां न जाने इत्यर्थः २५ सदृष्टांतमाह यथेति तस्माज्जलादुद्भवंतीति तदुद्भवानि तृणानि तैः तथा मायाच्छन्नं त्वा त्वामहं हित्वा पराङ्मुखो देहाद्यभिमुखो वर्तेऽस्मि २६।

नन्वेवं जानतः कुतो विषयाभिमुख्यं तत्राह नोत्सह इति कृपणा विषयवासनायुक्ता धीर्यस्य सः अत एव का
मकर्मभ्यां हतं क्षुभितं इंद्रियैश्च नलिभिर्विषयसंयुक्तैरितस्ततः आकृष्यमाणं मनो रोद्धुं नियमयितुं न शक्नो
मीति २७ तदेवमस्वतंत्रोयः सोऽहं तव अंघ्रिं उपगतः शरणं प्र[illegible]न्विंद्रियपरतंत्रस्यैतदपि कुतस्तत्राह तत्
चापीति हे ईश अंतर्यामिन् त्वत् अंघ्र्युपगमनं च असतां दुरापं अतो भवतोऽनुग्रह एवेत्यहं मन्ये अनुग्र
हे सतीति ज्ञानं नु सतां सेवया इदं भवतीति किं न तदनुग्रहेणेत्यत आह पुंस इति जीवस्य संसारस्यापवर्गः स
माप्तिर्यदा त्वत्स्वरूपेया भवेत् संभावना स्यात् इदं भवति हे अब्जनाभ तदा सदुपासना संपद्यते तयैव त्वयि मतिर्भवे

नोत्सहेऽहं कृपणधीः काम कर्महतं मनः रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमित
स्ततः २७ सोऽहं तवांघ्र्युपगतोऽस्म्यसतां दुरापं तच्चाप्यहं भवदनुग्रह ईश मन्ये
पुंसो भवेद्यर्हि संसरणाऽपवर्गस्त्वय्यब्जनाभ सदुपासनया मतिः स्यात्॥ २८॥
नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे ॥ ७७ तत्त्वत्स्वरूपं विना न सत्सेवा न सुतरां त्वन्मतिः नित
रां मुक्तिरित्यर्थः २८ पादयोः पतन्प्रार्थयते द्वयेन नम इति विज्ञानमेव मात्रा मूर्तिर्यस्य तस्मै अत एव सर्वप्र
त्ययहेतवे समस्तज्ञानकारणाय किंच पुरुषेशप्रधानाय पुरुषस्य ये ईशाः सुखदुःखादिप्रापकाः काल[illegible]
स्वभावादयस्तेषां प्रधानाय नियंत्रे कुतः ब्रह्मणे [illegible]परिपूर्णाय किंच अनंतशक्तये अनंताः शक्तयो यस्य यद्वा अ
नंता मायाख्या शक्तिर्यस्य तस्मै अथवा प्रधानं प्रकृतिः तत्प्रवर्तकः पुरुषः ईशः कालः एतत्त्रितयात्मने ब्रह्मणे

वक्ष्यति च भगवान्प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः सतोभिव्यंजकः कालो ब्रह्म तत्त्रितयं त्वहमिति ॥ ॥२९॥ सर्वप्रत्ययहेतुत्वमभिव्यंजयंस्तौति नमस्त इति वासुदेवाय चित्ताधिष्ठात्रे सर्वभूतक्षयायक्षयः आश्रयः अहं। कारस्थप्राणिनामाश्रयः ततश्च अहंकाराधिष्ठात्रे संकर्षणायेत्यर्थः हृषीकेशेति बुद्धिमनसोरधिष्ठात्रोः प्रद्युम्नानिरुद्धयोरेकीकृत्य ग्रहणं शरणागतं मां पाहीति प्रार्थना ३० इति दशमे टीकायां चत्वारिंशोऽध्यायः ४० एकचत्वारिं[illegible]

पुरुषेशप्रधानाय ब्रह्मणेऽनंतशक्तये २९ नमस्ते वासुदेवाय सर्वभूतक्षयाय च हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ॥ ३० ॥ इति श्रीभागवते महापुराणे दशमस्कंधे अक्रूरस्तुतिर्नाम चत्वारिंशोऽध्यायः ॥४०॥ श्रीशुक उवाच स्तुवतस्तस्य भगवान्दर्शयित्वा जले वपुः भूयः समाहरत्कृष्णो नटो नाट्यमिवात्मनः १ सोऽपि चांतर्हितं वीक्ष्य जलादुन्मज्ज्य सत्वरः कृत्वा चावश्यकं सर्वं विस्मितो रथमागमत २ तमपृच्छद्धृषीकेशः किं ते दृष्टमिवाद्भुतं भूमौ वियति तोये वा तथा त्वां लक्षयामहे ३ अक्रूर उवाच अद्भुतानीह यावंति भूमौ वियति वा जले त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ४ ॥ ऽऽ हन्तरजकं प्रविशन्पुरीं ततो वरानदात्तुष्टः सुदाम्नो वायकस्य च १ सशंकमक्रूरमनः प्रबोध्य स्वधामसंदर्शनसत्कृपातः स्वराजधानीं मथुरामपश्यदलंकृतानंतमहोत्सवाढ्यां २।१।२।३ भूमौ वियति जले वा यावंत्यद्भुतानि तानि त्वय्येव संति तं च त्वां विपश्यतो मे किमद्भुतं मद्दृष्टं अपि



॥ १ ॥ [illegible]

ननुमत्वान्तेः पूर्वमेवत्वंविस्मितमुखोलक्षितोऽसिअतोभूमौवियतिजलेवाकिमप्यद्भुतंदृष्टमेवेतिचेदत्त। आहयत्राद्भुतानीति यत्रत्वयिसर्वाण्यद्भुतानिसंतितंत्वामिहपश्यतोमेअन्यत्रभूम्यादौकिमद्भुतंदृष्टंत्वां विनानतत्रकिंचिदद्भुतमित्यर्थः ब्रह्मन्नहेपरमेश्वरेत्यर्थः [illegible]धापाठः ५ गांदिनीसुतोऽक्रूरः ६॥

यत्राद्भुतानिसर्वाणिभूमौवियतिवाजले तंत्वांऽनुपश्यतोब्रह्मन्किंमेदृष्टमिहाद्भुतं ५ श्रीशुकउवाच इत्युक्त्वाचोदयामासस्यंदनंगांदिनीसुतः मथुरामनयद्रामंकृष्णंचैवदिनात्यये ६ मार्गेग्रामजनाराजन्तत्रतत्रोपसंगताः वसुदेवसुतौवीक्ष्यप्रीतादृष्टिंनचाददुः ७ तावद्व्रजौकसस्तत्रनंदगोपादयोऽग्रतः पुरोपवनमासाद्यप्रतीक्षंतोऽवतस्थिरे ८ तान्समेत्याहभगवानक्रूरंजगदीश्वरः गृहीत्वापाणिनापाणिंप्रश्रितंप्रहसन्निव ९ भवान्प्रविशतामग्रेसहयानःपुरीगृहं वयंत्विहावमुच्याथततोद्रक्ष्यामहेपुरीम् १० अक्रूरउवाच नाहंभवद्भ्यांरहितःप्रवेक्ष्येमथुरांप्रभो त्यक्तुंनार्हसिमांनाथभक्तंतेभक्तवत्सल॥ ११ ॥

दृष्टिंनाददुः पश्यंतएवस्थिताइत्यर्थः ७ रामकृष्णागमनंप्रतीक्षमाणाः स्थिताइत्यर्थः॥ ८ ॥ प्रश्रितंविनीतं॥ ९॥ स्वगृहंचप्रविशतांअवमुच्यउत्तार्यविश्राम्येत्यर्थः॥ १०॥ ११॥ छ॥ ॥

साग्रजः सहगोपालैरित्यर्थः १२ यच्छौचेनयस्यपादरजसः क्षालनोदकेनगृहांगणस्थितेन १३ श्लोकयः पुण्यकीर्त्यर्हैः
एकांतभक्तानांयागतिस्तांचलेभे ॥ १४ ॥ अपुनंनपवित्रितवत्यः याभिरद्भिः खः स्वर्गप्राप्ताः १५ प्रार्थयमा
नोनमस्करोति देवदेवेति अतः परमन्यत्श्रेयोनास्तीतिमत्वाबहुधासंबोधयति १६ आदीनावतयदुचक्राय

आगच्छयामगेहान्नः सनाथान्कुर्वधोक्षज सहाग्रजः सगोपालैः सुहृद्भिश्चसुहृत्तमः
१२ पुनीहिपादरजसागृहान्नोगृहमेधिनां यच्छौचेनानुतृप्यंतिपितरः साग्नयः सुराः
१३ अवनिज्यांघ्रियुगलमासीच्छ्लोक्यो बलिर्महान् ऐश्वर्यमतुलंलेभेगतिं चैकांति
नांतुया १४ आपस्तेऽघ्यवनेजन्यस्त्रींल्लोकांच्छुचयोऽपुनन् शिरसाधत्तयाः शर्वः
स्वर्याताः सगरात्मजाः १५ देवदेवजगन्नाथपुण्यश्रवणकीर्तन यदूत्तमोत्तमश्लो
कनारायणनमोस्तुते १६ श्रीभगवानुवाच आयास्येभवतोगेहमहमार्यसमन्वितः
यदुचक्रद्रुहंहत्वावितरिष्येसुहृत्प्रिय १७ एवमुक्तोभगवतासोऽक्रूरोविमनाइव पु
रींप्रविष्टः कंसायकर्मावेद्यगृहंययौ १८ अथापराह्णेभगवान्कृष्णः संकर्षणान्वितः

दुह्यतीयदुचक्रध्रुकतंकंसंहत्वासुहृदांप्रियंवित मथुरांप्राविशद्गोपैर्दिदृक्षुः परिवारितः १९
रिष्येदास्यामि १७ रामकृष्णावानीताविति स्वकृतंकर्मावेद्यसमर्प्येति १८ गोपैः परिवारितः प्राविशत् १९ ॥ ५ ॥

श्रीकृष्णदृष्टां पुरीमनुवर्णयति चतुर्भिः ददर्शतामिति स्फाटिकानि तुंगानि गोपुराणि पुरद्वाराणि अन्यानि च द्वाराणि यस्यां तां बृहंति हेममयानि कपाटानि तोरणानि च यस्यां तां ताम्रं च आरः आरकूटश्च तन्मयाः कोष्ठा धान्यागाराश्च शालादयो यस्यां तां परिखाः परितः खातगर्त्ताः ताभिर्दुरासदां दुर्गमां उद्यानानि दूरस्थानि वनानि रम्याणि उपवनानि च निकटानि तैरुपशोभितां २० सौवर्णाः शृंगाटकाश्चतुष्पथाः हर्म्याणि धनिनां गृहाणि च निष्कुटाः गृहोचिता आरामाश्च तैः श्रेणीनां एकरूपशिल्पोपजीविनां सभाभिः उपवेशस्थानैः अन्यैश्च भवनैः गृहैः उपस्कृतां अलं

ददर्श तां स्फाटिकतुंगगोपुरद्वारां बृहद्धेमकपाटतोरणां ताम्रारकोष्ठां परिखादुरासदामुद्यानरम्योपवनोपशोभितां २० सौवर्णशृंगाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृतां वैदूर्य्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु २१ जुष्टेषु जालामुखरंध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादितां संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्यांकुरलाजतंडुलां २२ आपूर्णकुंभैर्दधिचंदनोक्षितैः प्रसूनदीपावलिभिः स

कृतां अमलाः स्फाटिकाः हरितः मरकताः वैदूर्यादिरत्नैर्जुष्टेषु वलभ्यादिषु आविष्टैरुपविष्टैः पारावतैर्बर्हिभिश्च नादितां तत्र वलभ्यः गृहपुरोभागेषु वक्रदारुच्छादनानि वेदयः वलभी नाम धोदेशे विरचिताः अवष्टंभवेदिकाः २१ जालामुखरंध्राणि गवाक्षच्छिद्राणि कुट्टिमानि मणिबद्धाः भूमयः तेष्विति रथ्या राजमार्गाः आपणाः पण्यवीथ्यः मार्गाः अन्ये च चत्वराणि अंगणानि संसिक्तानि रथ्यादीनि यस्यां तां प्रकीर्णमाल्यादयो यस्यां तां २२ तथा स्वलंकृतानि द्वाराणि येषां ते गृहा यस्यां तां कैः आपूर्णैः कुंभैर्दध्ना चंदनेन च उक्षितैः सिक्तैः प्रसूनानां दीपानां चावल्या

उपलक्षिता रंभाः क्रमुकाश्च तत्सहितैः सकेतुभिः केतवो ध्वजाः तत्सहितैः पट्टिका वितस्तिविस्तारपट्टवस्त्राणि त
त्सहितैः तत्रेयं रीतिः द्वारेषूभयतस्तंडुलानामुपरि कुंभाः तत्परितः प्रसूनावलयः कंठे पट्टिकाः मुखे चूतादिपल्लवाः त
दुपरि पात्रां तरे दीपावलयः तत्सन्निधौ रंभाः क्रमुकाः केतवस्तोरणानि चेति २३ नरदेवानां वर्त्मना राजमार्गेण तां पुरीं सं
प्रविष्टौ इति द्वितीयांत २४ औत्सुक्यमेवाह द्वयेन काश्चिदिति विपर्यक् विपरीतं धृतानि वस्त्राणि भूषणानि च याभिः ।

सवृंतरंभाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां सपट्टिकैः २३ तां संप्रविष्टौ वसुदेव
नंदनौ वृतौ वयस्यैर्नरदेववर्त्मना द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहु
र्नृपोत्सुकाः २४ काश्चिद्विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः कृतै
कपत्रश्रवणैकनूपुरा नांक्त्वा द्वितीयं त्वपराश्च लोचनं २५ अश्नंत्य एकास्तदपास्य
भोजनमभ्यज्यमाना अकृतोपमज्जनाः स्वपंत्य उत्थाय निशम्य निःस्वनं प्रपाययंत्यो
ऽर्भमपोह्य मातरः २६ मनांसि तासामरविंदलोचनः प्रगल्भलीलाहसितावलोकैः
जहार मत्तद्विरदेंद्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवम् २७ ॥ स्ताः युगलेषु धार्येषु कुंड

लकंकणादिषु एकं विस्मृत्य समीयुः कृतं एकमेव पत्रं पयोस्ते श्रवणे यासां एकमेव नूपुरं चरणाभरणं यासां ताश्च ताश्च नां
क्त्वा अनंक्त्वा एकस्मिन्नेव लोचने कज्जलं निधायेत्यर्थः २५ तद्भोजनं त्यक्त्वा अभ्यज्यमानाः सखीभिः क्रियमाणतैलाभ्यं
गाः अकृतस्नानाः अर्भं बालकं अपोह्य निरस्य २६ प्रगल्भायाः लीलाः ताभिः हसितानि निरीक्षणानि च तैः श्रियं रमयतीति श्री

४१
भा॰ द॰
पू॰
१३८

मुहुःश्रुतत्वादनुद्रुतचेतसःसद्यस्तंदृष्ट्वातस्यप्रेक्षणंच उत्स्मितंचतदेवसुधातयाउक्षणंसेचनंतेनलब्धोमानोयाभि
स्ताःदृशाउद्घाटितेननेत्रद्वारेणआत्मनिमनसिलब्धंप्राप्तंपरिष्वज्यतदप्राप्तिजनितमनंतमाधिंव्यथांजहुःहेअ
रिंदमनिर्जितकामेतिसंबोधनंशृंगाररसेनिमग्नोमाभूरिति २८ सौमनस्यैःशोभनगंधकुसुमसमूहैःशोभनमनो

दृष्ट्वामुहुःश्रुतमनुद्रुतचेतसस्तंतत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः आनंदमू
र्त्तिमुपगुह्यदृशात्मलब्धंहृष्यत्त्वचोजहुरनंतमरिंदमाधिं २८ प्रासादशिखरारूढाः
प्रीत्युत्फुल्लमुखांबुजाः अभ्यवर्षन्सौमनस्यैःप्रमदाबलकेशवौ २९ दध्यक्षतैःसो
दपात्रैःस्रग्गंधैरभ्युपायनैः तावानर्चुःप्रमुदितास्तत्रतत्रद्विजातयः ३० ऊचुःपौरा
अहोगोप्यस्तपःकिमचरन्महत् याह्येतावनुपश्यंतिनरलोकमहोत्सवौ ३१ रजकं
कंचिदायांतंरंगकारंगदाग्रजः दृष्ट्वाऽयाचतवासांसिधौतान्यत्युत्तमानिच ३२
देह्यावयोःसमुचितान्यंगवासांसिचार्हतोः भविष्यतिपरंश्रेयोदातुस्तेनात्रसंशयः
३३ सयाचितोभगवतापरिपूर्णेनसर्वतः साक्षेपंरुषितःप्राहभृत्योराज्ञःसुदुर्मदः ३४

भावैर्वा २९ ३० पौराःपुरस्त्रियः॥ ३१ ॥ रजको ईदृशान्येववासांसिनित्यंगिरिवनेचराः ॥
वस्त्रनिर्णेजकःसएववस्त्राणांरंगमपिकुर्वन्रंगकारः ३२ ३३ रुषितःकुपितः ॥ ३४ ॥ हेउद्धत्ताः ॥
॥ गिरौवनेचरथयेनित्यंतेयूयंपरिधत्तेतिसंभावनायांलोट् ॥ ७ ॥ ७ ॥ ७ ॥ ॥

अभीप्सथप्रार्थयध्वं ३५ राजकुलानिराजकीयाः लुंपंतिनिःस्वंकुर्वंति ३६ ३७ वासःकोशान्वस्त्रपुटकान् ३८ ३९ वा
यकःतंतुवायविशेषः वेषंअलंकारंचैलेयैर्वस्त्रमयैराकल्पैर्भूषणैः ४० पर्वणिउत्सवे ४१ इहलोकेपरमांश्रियंचव

परिधत्तकिमुद्वृत्താराजद्रव्याण्यभीप्सथ ३५ याताशुबालिशामैवंप्रार्थ्यंयदिजिजीविषा
बध्नंतिघ्नंतिलुंपंतिदृप्तंराजकुलानिहि ३६ एवंविकत्थमानस्यकुपितोदेवकीसुतः रज
कस्यकराग्रेणशिरःकायादपातयत् ३७ तस्यानुजीविनःसर्वेवासःकोशान्विसृज्यवै दु
द्रुवुःसर्वतोमार्गंवासांसिजगृहेऽच्युतः ३८ वसित्वात्मप्रियेवस्त्रेकृष्णःसंकर्षणस्तथा शेषा
ण्यादत्तगोपेभ्योविसृज्यभुविकानिचित् ३९ ततस्तुवायकःप्रीतस्तयोर्वेषमकल्पयत् विचि
त्रवर्णैश्चैलेयैराकल्पैरनुरूपतः ४० नानालक्षणवेषाभ्यांकृष्णरामौविरेजतुः स्वलंकृतौ
बालगजौपर्वणीवसितेतरौ ४१ तस्यप्रसन्नोभगवान्प्रादात्सारूप्यमात्मनः श्रियंचपर
मांलोकेबलैश्वर्य्यस्मृतीद्रियं ४२ ततःसुदाम्नोभवनंमालाकारस्यजग्मतुः तौदृष्ट्वासस
मुत्थायननामशिरसाभुवि ४३ तयोरासनमानीयपाद्यंचार्घ्यार्हणादिभिः पूजांसानुगयो
श्चक्रेस्रक्तांबूलानुलेपनैः ४४ प्राहनःसार्थकंजन्मपावितंचकुलंप्रभो पितृदेवर्षयोम
लंचरेश्वर्य्यंचस्मृतिंचइंद्रियंचततपाटवंचप्रादात् ४२ ४३ ४४ ४५ ॥६७॥ ह्यंतुष्टाह्यागमनेनवां ४५

४१
भा०द०
पू०
१३०

॥ ४८ ॥

क्षेमाय अभयाय भवाय उद्भवाय ४६ रजकवधेनवापकानुग्रहेणचयुवयोर्विषमदृष्टितयाऽनीश्वरतानाशंकनीयेत्याह-नहिवामिति अत्रहेतुः समयोरिति अत्रापिहेतुद्वयंसुहृदोरितिजगदात्मनोरितिच ४७।४८ इत्यभिप्रेत्य

भवंतौकिलविश्वस्यजगतःकारणंपरं अवतीर्णाविहांशेनक्षेमायचभवायच ४६
नहिवांविषमादृष्टिःसुहृदोर्ज्जगदात्मनोः समयोःसर्वभूतेषुभजंतंभजतोरपि ४७ ता
वाज्ञापयतोभृत्यंकिमहंकरवाणिवां पुंसोऽत्यनुग्रहोह्येषभवद्भिर्यन्नियुज्यते ४८।
इत्यभिप्रेत्यराजेंद्रसुदामाप्रीतमानसः शस्तैःसुगंधैःकुसुमैर्मालांविरचितांददौ ४९ ता
भिःस्वलंकृतौप्रीतौकृष्णरामौसहानुगौ प्रणतायप्रपन्नायददतुर्वरदौवरान् ५० सोपिव
व्रेऽचलांभक्तिंतस्मिन्नेवाखिलात्मनि तद्भक्तेषुचसौहार्दंभूतेषुचदयांपरां ५१ इतितस्मै
वरंदत्वाश्रियंचान्वयवर्द्धिनीं बलमायुर्यशःकीर्त्तिंनिर्ज्जगामसहाग्रजः ५२ इतिश्रीभा
गवतेमहापुराणेदशमस्कंधेपुरप्रवेशोनामएकचत्वारिंशोऽध्यायः ४१ श्रीबादरायणि
रुवाच अथव्रजन्राजपथेनमाधवःस्त्रियंगृहीतांगविलेपभाजनां ॐ इत्येवंविज्ञापितवान् अभि

प्रेत्यतन्मतंज्ञात्वा ४९ ५० ५१ अन्वयवर्द्धिनींवंशवृद्धिमंतीमित्यर्थः अप्रार्थितंश्रीप्रभृतिकंचदत्वाततोनिर्जगामिति ५२ स्वैरंचरन्मधुपुरेरजकंनिहत्यकृष्णः प्रदायचवरानथवायकाय मालाकृतंसमनुकंप्यचकारकुब्जामृज्वींघनस्त्वसहसानमयन्वभं

श्चंदनादयः गृहीताऽङ्गविलेपनभाजनानियया तां रसप्रदः सुखप्रदः १ हे अङ्गने हे वरोरु इति सोपहासं संबोध्य पृच्छति त्वं
कास्य तदनुलेपनं कस्य वा उह इति निपातो भ्रूविक्षेपयुक्ते वितर्के अस्मत्सेवा सद्यःफलत्येवेत्याह नचिरादिति २ त्रिस्त्रः श्री
वोरःकट्यो वक्रा इति त्रिवक्रेति नाम यस्याः सा अनुलेपनसाधनक्रियायां कंसस्य बहुमता दास्यस्मि ३ रूपं च अङ्गसौष्ठवं पे

विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यान्तीं प्रहसन्रसप्रदः १ का त्वं वरोर्वेतदुहानुलेप
नं कस्यांगने वा कथयस्व साधु नः देह्यावयोरंगविलेपमुत्तमं श्रेयस्ततस्ते न चिराद्भविष्य
ति २ सैरंध्र्युवाच दास्यस्म्यहं सुंदर कंससंमता त्रिवक्रनामा ह्यनुलेपकर्मणि मद्भावितं
भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ३ रूपपेशलमाधुर्य्यहसितालापवीक्षि
तैः धर्षितात्मा ददौ सांद्रमुभयोरनुलेपनं ४ ततस्तावंगरागेण स्ववर्णेतरशोभिना संप्रा
प्तपरभागेन शुशुभातेऽनुरंजितौ ५ प्रसन्नो भगवान्कुब्जां त्रिवक्रां रुचिराननां ऋज्वीं कर्त्तु
मनश्चक्रे दर्शयन्दर्शने फलं ६ पद्भ्यामाक्रम्य प्रपदे द्व्यंगुल्युत्तानपाणिना ।। शलं च सौकुमा

र्यं माधुर्यं च रसिकता हसितं च आलापाश्च वीक्षितं च तैर्धर्षितात्मा मोहितचित्ता सांद्रं घनं ४ स्ववर्णेतरशोभिना रामकृ
ष्णयोर्वर्णाभ्यामितरः पीतादिवर्णस्तेन शोभितुं शीलं यस्य तेन संप्राप्तपरभागेन संप्राप्तः परो नाभेरुपरितनो भागो येन [illegible] संप्राप्तः
परभागः शोभातिशयो येनेति वा तेनानुरंजितौ ५ स्वदर्शने सद्यः[illegible]लं दर्शयन् ६ तस्याः प्रपदे पादाग्रद्वयं पद्भ्यामापीड्य द्वे ।।

४२
भा॰ द॰
पू॰
१४०

अंगुल्यावुत्तानेउत्तनेयस्मिन्पाणौतेनचिबुकेमुखस्याधोभागेधृत्वाऽध्यात्मंदेहंउन्नमयामास ७ तदेवऋजुसमानमंगंयस्याः बृहत्यौश्रोणीपयोधरौचयस्याः सामुकुंदस्पर्शनाद्धेतोर्विमलत्वकारणं ८ ९ १० ११ आधिर्विकर्षणंमनःपीडा

प्रगृह्य चुबुकेऽध्यात्ममुदनीनमदच्युतः ७ सा तदर्जुसमानांगी बृहच्छ्रोणिपयोधरा मुकुंदस्पर्शनात्सद्योबभूवप्रमदोत्तमा ८ ततोरूपगुणौदार्यसंपन्नाप्राहकेशवं उत्तरीयांतमाकृष्यस्मयंतीजातहृच्छया ९ एहिवीरगृहंयामोनत्वांत्यक्तुमिहोत्सहे त्वयोन्मथितचित्तायाःप्रसीदपुरुषर्षभ १० एवंस्त्रियायाच्यमानःकृष्णोरामस्यपश्यतः मुखंवीक्ष्यानुगोपानांप्रहसंस्तामुवाचह ११ एष्यामितेगृहंसुभ्रूःपुंसामाधिविकर्षणं साधितार्थोऽगृहाणांनःपांथानांत्वंपरायणं १२ विसृज्यमाध्व्यावाण्यातांव्रजन्मार्गेवणिक्पथैः नानोपायनतांबूलस्रग्गंधैःसाग्रजोर्चितः १३ तद्दर्शनस्मरक्षोभादात्मानंनाविदन्स्त्रियः विस्रस्तवासःकबरवलयालेख्यमूर्तयः १४ ततःपौराःपृच्छमानोधनुषःस्थानमच्युतः तस्मिन्प्रविष्टोददृशेधनुरैंद्रमिवाद्भुतं १५ पुरुषैर्बहुभिर्गुप्तमर्चितंपरमर्द्धिमत १६ शमनंकं

सवधेनमत्वंयस्मा... अर्थःसुहृदांप्रयोजनंयेनसः अगृहाणांअकृतदाराणांपांथानांप्रवासिनांपरमयनंआश्रयस्त्वंमधुरयागिरातांप्रस्थाप्यव्रजन्वणिक्पथैर्वणिग्भिरर्चितः १३ लेख्याश्चित्रन्यस्ताइवमूर्त्तयोयासांताः १४ धनुर्मुखशालांप्र

भा॰ द॰
१४०

बलात् १६ निमिषेणाऽतिशीघ्रं मदकरी मत्तहस्ती १७ १८ गृह्यतां बध्यतामिति वदंतो जिघृक्षवः आततायिनः १९ नके
बलं तु द्वौ [illegible] तस्य धनुषः शकलेन गृहीत्वा जघ्नतुश्चेति २० परतः प्रातर्गंतव्यमिति शालामुखादेव पुनर्निष्क्रम्य २१ ते
जः प्रभावं प्रागल्भ्यं धृष्टतां २२ शकटं शकटयावमोचनस्थानं २३ मुकुंदस्य विगमे व्रजान्निर्गमनसमये या आशिषः आशा

वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे १६ करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा नि
मिषेण पश्यतां नृणां विकृष्य प्रबभंज मध्यतो यथेक्षुदंडं मदकर्युरुक्रमः १७ धनुषो भ
ज्यमानस्य शब्दः खं रोदसी दिशः पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् १८ तद्रक्षि
णः सानुचराः कुपिता आततायिनः ग्रहीतुकामा आवव्रुर्गृह्यतां बध्यतामिति १९ अथ
तान् दुरभिप्रायान् विलोक्य बलकेशवौ क्रुद्धौ धन्वन आदाय शकले तांश्च जघ्नतुः २० ब
लं च कंसप्रहितं हत्वा शालामुखात्ततः निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसंपदः २१ तयोस्तद
द्भुतं वीर्यं निशाम्य पुरवासि[illegible] तेजः प्रागल्भ्यं रूपं च मेनिरे विबुधोत्तमौ २२ तयोर्विचरतोः स्वै
रमादित्योऽस्तमुपेयिवान् कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः २३ गोप्यो मुकुंदविगमे

सततसुखं प्रभाता रजनीयमद्य ध्रुवं तत्र दृशो भविष्यत इत्याऽ[illegible] [illegible]हातुरायाः आशासता शिष ऋता मधुपुर्यभूवन्
दिपदुत्तावत्यः ता ऋताः सत्याः बभूवुः पुरुषभूषणस्य श्रीकृष्णस्य गात्रस्य देहस्य लक्ष्मीं शोभां कथंभूतस्य गात्रस्य नु अहो॥

इतरान् ब्रह्मादीन् हित्वा यदयनं आश्रयं श्रीः कामयामास यां गात्रलक्ष्मीमिति वा २४ अवनिक्तं क्षालितमंघ्रियुगलं ययो स्तौ क्षीरमिश्रमन्नं भुक्त्वा सुखं न्यवसतां २५ परं केवलं गोविंदरामयोर्विक्रीडितं न तु पराक्रमः कश्चित् २६ उभयथा स्व प्नजागरितभेदेन प्रत्येकं मृत्योर्दौत्यकराणि च तथा च मंत्रः इत्याद्युक्त्वा ऽपघ्नन् हिरण्याक्षो ऽयोमुखः रक्षसां दूत आग त इत्यादिः तथा यद्देतद्भूतान्यन्वाविश दैवीं वाचं वदतीत्यादिश्रुतिः २७ तानि दर्शयति श्लोकत्रयेण जलादौ प्रतिरूपे दृश्य

सं पश्यतां पुरुषभूषणगात्रलक्ष्मीं हित्वेतरानुभजतश्चकमेऽयनं श्रीः २४ अवनिक्तांघ्रि युगलौ भुक्त्वा क्षीरोपसेचनं ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितं २५ कंसस्तु धनु षो भंगं रक्षिणां स्वबलस्य च वधं निशम्य गोविंदरामविक्रीडितं परं २६ दीर्घं प्रजागरो भी तो दुर्निमित्तानि दुर्मतिः बहून्याचष्टोभयथा मृत्योर्दौत्यकराणि च २७ अदर्शनं स्वशि रसः प्रतिरूपे च सत्यपि असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा २८ छिद्रप्रतीतिश्छा यायां प्राणघोषानुपश्रुतिः स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनं २९ स्वप्ने प्रेतपरिष्वं गः खरयानं विषादनं यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगंबरः ३० ॥ ऽऽ मानेपि स्वशिरसस्त

त्रादर्शनं असत्यपि द्वितीये चक्षुषोंतर्धाने अंगुल्यादौ ज्योतिषां चंद्रादीनां द्वित्वं २८ छायायां प्रतिबिंबे छिद्रप्रतीतिः पि हितकर्णपुटस्य स्वस्यान्तः श्रूयमाणो ध्वनिः स प्राणघोषः तस्याश्रवणं वृक्षेषु स्वर्णवर्णप्रतीतिः रजःकर्दमादिषु स्वपदानामद र्शनं एतानि जागरितावस्थादुर्निमित्तानि २९ स्वाप्नान्याह स्वप्न इति प्रेतैर्मृतैः परिष्वंगः खरमारुह्य यानं विषभक्षणं नलदमाली

॥ ३१ ॥ कष्टेनकथंचित्प्रभातायांपुनः सूर्येचाद्भ्यः समुत्थितइतितथाचश्रुतिः यदुद्गान्महतोर्णवाद्विभ्राजमानः सलिलस्यमध्यात्समावृषभोलोहिताक्षः सूर्योविपश्चिन्मनसापुनात्विति ३२ ३३ यथोपजोषंयथासुखं ३४ ३५ मल्ल।

अन्यानिचेत्थंभूतानिस्वप्नजागरितानिच पश्यन्मरणसंत्रस्तोनिद्रांलेभेनचिंतया ३१
व्युष्टायांनिशिकौरव्यसूर्येचाद्भ्यः समुत्थिते कारयामासवैकंसोमल्लक्रीडामहोत्सवं ३२ आनर्चुःपुरुषारंगंतूर्य्यभेर्य्यश्चजघ्निरे मंचाश्चालंकृताः स्रग्भिःपताकाचैलतोरणैः ३३ तेषुपौराजानपदाब्रह्मक्षत्रपुरोगमाः यथोपजोषंविविशूराजानश्चकृतासनाः। ३४ कंसःपरिवृतोमात्यैराजमंचउपाविशत् मंडलेश्वरमध्यस्थोहृदयेनविदूयता ३५ वाद्यमानेषुतूर्येषुमल्लतालोत्तरेषुच मल्लाःस्वलंकृताःदृप्ताःसोपाध्यायाःसमागताः ३६ चाणूरोमुष्टिकःकूटःशलस्तोसलएवच तआसेदुरुपस्थानंवल्गुवाद्यप्रहर्षिताः ३७ नंदगोपादयोगोपाभोजराजसमाहुताः निवेदितोपायनास्तेएकस्मिन्मंचआविशन् ३८ इतिश्रीभागवतेमहापुराणेदशमस्कंधेमल्लरंगोपवर्णनंनामद्विचत्वारिंशोध्यायः

तालउत्तरउपरिउच्चैःश्रूयतेयेषुतेषुतूर्य्येषुउपाध्यायाःआचार्याः ॥ ३६ ॥ उपस्थानंमल्लरंगं॥ ॥४॥
॥ ३७ ॥ समाहुताःसमाहूताः निवेदितान्युपायनानियैस्ते ३८ इतिदशमस्कंधेद्विचत्वारिंशोध्यायः ॥ ४२ ॥

त्रिचत्वारिंशके हत्वा गजेंद्रं रामकृष्णयोः रंगप्रवेशसौभाग्यं चाणूरेण च भाषणं १ पूर्वैस्सुरैरेव कृतं शौचं शुद्धत्वं निरपेक्षत्वं या भ्यां तौ एतदुक्तं भवति धनुर्भंगादिना आवाभ्यां निजेच्छया . . . तेपि पितरौ न मुंचति आवां च पुनः जिघांसति अतो ॥ स्य मातुलस्यापि वधेनावयोर्दोष इत्येवं कृतापराधपरिहारावित्यर्थः मल्लानां दुंदुभीनां च निर्घोषं मल्लतालदुंदुभिनिर्घो

श्रीशुक उवाच अथ कृष्णश्च रामश्च कृतशौचौ परंतप मल्लदुंदुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः १ रंगद्वारं समासाद्य तस्मिन्नागमवस्थितं अपश्यत्कुवलयापीडं कृष्णोऽवष्ठप्रचोदितं २ बध्वा परिकरं शौरिः समुह्य कुटिलालकान् उवाच हस्तिपं वाचा मेघनादगभीरया ३ अंबष्ठांबष्ठ मार्गं नौ देह्यपक्रम मा चिरम् नो चेत्सकुंजरं त्वाद्य नयामि यमसादनं ४ एवं निर्भर्त्सितोऽवष्ठः कुपितः कोपितं गजं चोदयामास कृष्णाय कालांतकयमोपमं ५ करींद्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत् कराद्विगलितः सोऽमुं निहत्यांघ्रिष्वलीयत ६ संक्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् परामृशत्पुष्करेण स प्रसह्य विनिर्गतः ॥ ७ ॥ षं वा १ अंबष्ठो हस्तिपः तेन चोदितं २ परिकरं युद्धोचितपरिधानं कृत्वा समुह्य निबध्य ३ ४ अंतको मृत्युः कालस्तन्निमित्तं यमस्तन्नियंता तैरुपमा यस्य तं ५ विगलितो विच्युतः मुष्टिना निहत्यालीयत अदृश्यो बभूव ६ अचक्षाणः अपश्यन् घ्राणमेव घ्राणं तेन दृष्टिर्दर्शनं यस्य स लोचनागोचरमपि हि पशवो घ्राणेन जानंतीति प्रसिद्धं परामृशत् धृतवान् पुष्करेण शुंडाग्रेण सः कृष्णः

धनुषः धनुषां पंचविंशतिर्यावत् तावंतं देशं गजं विचकर्ष आकृष्य नीतवान् कं क इव विचकर्ष यथा नागं सर्प्पं वद्धतमा
नं गजं सुपर्णो वृत्तद्वय मिति आविरासीद्यथा प्राच्यां दिशि इंदुरिव पुष्कल इतिवत् ८ स पर्यावर्तमानेनेति पुच्छग्राहिणं
कृष्णं संग्रहीतुं यदि दक्षिणतः परिवर्त्तते गजः तर्हि सव्यतो भ्रामयति यदा सव्यतः परिवर्तते तदा दक्षिणतो भ्रामयं स्तेन स

पुच्छेग्रगृह्यातिवलं धनुषः पंचविंशतिं विचकर्ष यथा नागं सुपर्णाइव लीलया ८ स
पर्यावर्तमानेन सव्यदक्षिणतो ऽच्युतः बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः ९ त
तोऽभिमुखमभ्येत्य पाणिनाहत्य वारणं प्राद्रवन् पातयामास स्पृश्यमानः पदे पदे १०
सधावन्क्रीडया भूमौ पतित्वा सहसोत्थितः तं मत्वा पतितं क्रुद्धो दंताभ्यां सोऽहनत् क्षि
तिं ११ स्वविक्रमे प्रतिहते कुंजरेंद्रोऽत्यमर्षितः चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद्रु
षा १२ तमापतंतमासाद्य भगवान्मधुसूदनः निगृह्य पाणिना हस्तं पातयामास भूतले
१३ पतितस्य पदाक्रम्य मृगेंद्र इव लीलया दंतमुत्पाट्य तेनेभं हस्तिपांश्चाहनद्धरिः १४ मृ
तकं द्विपमुत्सृज्य दंतपाणिः समाविशत् अंसन्यस्तविषाणोऽसृङ्मदविंदुभिरंकितः १५

हव भ्राम गोवत्सेन भ्राम्यमाणेन बालकः स एव कृष्णोऽयथा ... बालक इवेति ९ वारणं गजं प्राद्रवन् प्रकर्षेण समंततो
धावन् पातयामास यथा पतति तथा नैव चयन प्राद्रवदित्यर्थः १० किंच स धावन्निति अहनत् अहन् ११ १२ १३ १४ रंगं
समाविशत् तदा वीरश्रियावभौ कथंभूतः अंसेन्यस्तं विषाणं गजदंतो येन सः असृजो रक्तस्य मदस्य च विंदुभिः परितोंकितः

विरूढा उद्गताः स्वेदकणिकास्ताभिरुपलक्षितं वदनांबुरुहं ययोस्तौ ः नकेवलंस एकः समाविशत् किंतु तौ गोपैरक्षि १६ तत्र च शृंगारादिसर्वरसकदंबमूर्तिर्भगवांस्तत्तदभिप्रायानुसारेण दर्भौन साकल्येन सर्वेषामित्याह मल्लानामिति मल्लादीनां अज्ञानां दृष्टृणामशन्यादिरूपेणादशधाविदितः सन् साग्रजोरंगंगत इत्यन्वयः मल्लादिष्वभिव्यक्ताः रसाः

विरूढस्वेदकणिकावदनांबुरुहौ बभौ १६ तौ गोपैः कतिपयैर्बलदेवजनार्दनौ रंगं विविशतू राजन् गजदंतवरायुधौ १६ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान् गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रंगं गतः साग्रजः १७ हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप १८ तौ रेजतू रंगगतौ महाभुजौ विचित्रवेषाभरणस्रगंबरौ यथा नटावुत्तमवेषधारिणौ मनः क्षिपंतौ प्रभया निरीक्षतां १९ निरीक्ष्य तावुत्तमपूरुषौ जना मंचस्थिता नागरराष्ट्रका नृपाः प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्न

क्रमेण श्लोकेन निवध्यंते रौद्रोऽद्भुतश्च शृंगारो हास्यं वीरो दयानथाभयानकश्च वीभ ॐ र्दृप्तानयनैस्तदाननं २०

त्सः शांतः स्नेहेन भक्तिरसः अविदुषां विराड्विकलः अपर्याप्तो राजत इति तथा च अनेन वीभत्सरस उक्तः तिक्तलत्वं चक्रवज्रसारसर्वांगावित्यादिना वक्ष्यंते १७ उद्विविजे भीतो बभूव १८ यथा नटाविति निर्भयत्वं दर्शितं १९ प्रहर्षवेगेन उत्कलितानि उत्फुल्लानि ईक्षणानि आननानि च येषां ते तयोराननं पपुः पानं तृप्ताः निराकांक्षा न बभूवुरित्यर्थः २०

तदेवाह पिबंतइवेतिाश्लिष्यंतः परिष्वंगंकुर्वंतइवलक्षिताइत्यर्थः २१ यथादृष्टं धनुर्भंगादि यथाश्रुतंगोवर्द्धनोद्ध
रणादितत्तदनतिक्रम्यतदनुरूपमित्यर्थः प्रत्यक्षंचतयोरूपंगजदंतादियुक्तंगुणाः शौर्यादयः माधुर्यंहसितालापा
पादिप्रागल्भ्यंधार्ष्ट्यंतैः स्मारिताइवस्मरणंप्रापिताइव २२ विस्मितानांवाक्यान्याहाष्टभिः एतावित्यादिभिः ॥

पिबंतइवचक्षुर्भ्यांलिहंतइवजिह्वया जिघ्रंतइवनासाभ्यांश्लिष्यंतइवबाहुभिः २१ ऊ
चुःपरस्परंतेवैयथादृष्टंयथाश्रुतं तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिताइव २२ एतौभ
भगवतःसाक्षाद्धरेर्नारायणस्यहि अवतीर्णाविहांशेनवसुदेवस्यवेश्मनि २३ एषवै
किलदेवक्यांजातोनीतश्चगोकुलंकालमेतंवसन्गूढोववृधेनंदवेश्मनि २४ पूतनानेन
नीताऽतंचक्रवातश्चदानवः अर्जुनौधेनुकःकेशीगुह्यकोऽन्येचतद्विधाः २५ गावःस
पालाएतेनदावाग्नेःपरिमोचिताः कालियोदमितःसर्पइंद्रश्चविमदःकृतः २६ स
प्ताहमेकहस्तेनधृतोऽद्रिप्रवरोऽमुनावर्षवाताशनिभ्यश्चपरित्रातंचगोकुलं २७ गो
प्योऽस्यनित्यमुदितहसितप्रेक्षणंमुखं पश्यंत्योविविधांस्तापांस्तरंतिस्माश्रमंमुदा २८

॥ २३ ॥ किलेतिसर्वत्रान्वयः २४ गुह्यकःशंखचूडः अन्येवाऽघासुरादयः ॥ २५ ॥ २६ ॥ २७ ॥ आश्रमं पक्व
॥ मयुक्तंमुखंअश्रमंसुखमितिवा यद्वाश्रमं यथाभवतितथातरंतिस्मेति ॥ २८ ॥ ६७ ॥ ॥

अनेनपरिरक्षितोयदोर्वंशःसुबहुविश्रुतःसन्श्र्यादिलक्ष्म्यादिवदंतीति २९ धेनुकबकवत्सासुरेषुविपर्य्ययोक्ति

वदंत्यनेनवंशोऽयंयदोःसुबहुविश्रुतः श्रियंयशोमहत्त्वंचलप्स्यतेपरिरक्षितः २९
अयंचास्याग्रजःश्रीमान्रामःकमललोचनः प्रलंबोनिहतोयेनवत्सकोयेवकादयः
३० जनेष्वेवंब्रुवाणेषुतूर्य्येष्वभिनिनदत्सुच कंसंरामौसमाभाष्यचाणूरोवाक्यमब्रवीत् ३१
हेनंदसूनोहेरामभवंतौवीरसंमतौ नियुद्धकुशलौश्रुत्वाराज्ञाहूतौदिदृक्षुणा ३२ प्रि
यंराज्ञःप्रकुर्वंत्यःश्रेयोविंदंतिवैप्रजाः मनसाकर्मणावाचाविपरीतमतोऽन्यथा ३३
नित्यंप्रमुदितागोपावत्सपालायथास्फुटं वनेषुमल्लयुद्धेनक्रीडंतश्चारयंतिगाः ३४
तस्माद्राज्ञःप्रियंयूयंवयंचकरवामहे भूतानिनःप्रसीदंतिसर्वभूतमयोनृपः ३५ त
न्निशम्याब्रवीत्कृष्णोदेशकालोचितंवचः नियुद्धमात्मनोभीष्टंमन्यमानोऽभिनंद्य
च ३६ प्रजाभोजपतेरस्यवयंचापिवनेचराः करवाम्प्रियंनित्यंतन्नःपरमनुग्रहः ३७
बालावयंतुल्यबलैःक्रीडिष्यामोयथोचितं भवेन्नियुद्धंमाधर्मःस्पृशेन्मल्लसभासदः ३८

जनवादेष्वनिश्चयात् ३० जनेष्वेवंब्रुवाणेषुतदसहमानश्चाणूरोऽब्रवीदिति ३१ ३२ ३३ ३४ हेकृष्णप्रियंकरवामेति
राज्ञिप्रीतेभूतानिचप्रसीदेयुः ३५ ३६ ३७ यथोचितंनियुद्धंबाहुयुद्धंभवेत् मल्लसभासदःमल्लसभाधिकृतान्जनान्

सहस्त्रद्विपानां सत्वं बलं विभर्तीति सहस्त्रद्विपसत्वभृत् ३९ यथा बलिभिर्मादृशैः सहास्मन्योऽधर्मः विक्रमपराक्रमं कुरु मुष्टिको विक्रमताद् इति अनुषंगः ४० इति दशमे टीकायां त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
चतुश्चत्वारिंशके तु मल्लकंसादिमर्द्दनं ——— कंसयोषित्समाश्वासस्ताभ्यां पित्रोश्च दर्शनं ॥ १ ॥

चाणूर उवाच न बालो न किशोरस्त्वं बलश्च बलिनां वरः लीलयेभो हतो येन सहस्त्रद्विपसत्वभृत् ३९ तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः ४० इति श्रीभागवते महापुराणे दशमस्कंधे कुवलयापीडवधो नाम त्रिचत्वारिंशोऽध्यायः ४३ श्रीशुक उवाच एवं चर्चितसंकल्पो भगवान्मधुसूदनः आससादाथ चाणूरं मुष्टिकं रोहिणीसुतः १ हस्ताभ्यां हस्तयोर्बध्वा पद्भ्यामेव च पादयोः विचकर्षतुरन्योन्यं प्रसह्य विजिगीषया २ आस्फोट्य हस्तौ हस्ताभ्यामूरूभ्यां च पुनः पुनः विसृज्य भूयः संगृह्य परिक्रम्य परस्परं ३ [illegible] त्निभ्यां जानुभ्यां चैव जानुनी शिरः शीर्ष्णोरसोरस्ता

चर्चितः निश्चित एवं संकल्पो यस्य सः १ २ बाहुमध्यात् वनिष्ठांगुलिव्यतिरेकेण कृतमुष्टिहस्तौ अरत्निः ३ पद्भ्यां मर्दनं हस्तादिषु गृहीत्वा परितश्चालनं विक्षेपो नोदनं परिरंभो बाहुभ्यां निपीडनं अवपातनं अधःक्षेपः उत्सर्पणं उत्सृज्य पुरतो गमनं अपसर्पणं पृष्ठतो गमनं एतैः प्रत्यरुंधतां प्रत्याहतवंतौ

४४
भा॰द॰
पू॰
१४५

उत्थापनं पादौ जानुनी च पिंडीकृत्य पतितस्योच्चाटनं उन्नयनं हस्ताभ्यामुद्धृत्य नयनं चालनं कंठादिलग्नस्य निःसा
रणं स्थापनं पाणिपादादि पिंडीकरणं एवं परस्परं आत्मनो देहस्यापचक्रतुः अपकारं कृतवंतौ ५ तद्युद्धं बलाबलवत्
एकतो बलं अन्यतोऽबलं तद्युद्धं विषममित्यूचुरित्यर्थः यद्वा तद्बलाबलवतोर्युद्धं दृष्ट्वा महानयमधर्म इत्यूचुः स्वन्व
यः ६ तदेव दर्शयति महानिति बालयोर्बलवतोश्च युद्धं राजा चेत्पश्येत्स्वयं वारणीयः एते राज्ञः पश्यतः स्वयमप्यन्वि

परिभ्रामणविक्षेपपरिरंभावपातनैः उत्सर्पणापसर्पणैश्चान्योन्यं प्रत्यरुंधतां ५
त्थापनैरुन्नयनैश्चालनैः स्थापनैरपि परस्परं जिगीषंतावपचक्रतुरात्मनः ६ तद्बलाब
लवद्युद्धं समेताः सर्वयोषितः ऊचुः परस्परं राजन्सानुकंपा वरूथशः ७ महानयं बता
धर्म एषां राजसभासदां ये बलाबलवद्युद्धं राज्ञोऽन्विच्छंति पश्यतः ८ क्व वज्रसारस
र्वांगौ मल्लौ शैलेंद्रसन्निभौ क्व चातिसुकुमारांगौ किशोरौ नाप्तयौवनौ ९ धर्मव्यतिक्र
मो ह्यस्य समाजस्य ध्रुवं भवेत् यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् १० न सभां प्रवि
शेत्प्राज्ञः सभ्यदोषाननुस्मरन् अब्रुवन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुते ११ ॥ क्वेति अनुम
न्यंत इति महानधर्म इत्यर्थः ७ बलाबलवत्पुद्धतां प्रपंचयति पंचभिः क्वेति वज्रसाराणि वज्रवत्कठिनानि सर्वाण्यं
गानि ययोस्तौ ८ समाजस्य सभायाः ९ अपर ऊचुः न सभामिति अब्रुवन् ज्ञात्वापि तूष्णीं तिष्ठन् विब्रुवन् विपरीतं ब्रुवन्
अज्ञः न जानामीति ब्रुवन् अतः प्राज्ञः सभां न प्रविशेदिति १० वलातः शत्रुमभितः इति शत्रोः सर्वतो धावनतः श्रीकृष्णस्य श्रम

॥४४॥

अन्या ऊचुः किं न पश्यत इति सामर्षसक्रोधं हासेन संरंभः आवेशस्तेन शोभितं १२ अन्या ऊचुः पुराणा एवेति गूढलिंगे-
न मनुष्यदेहेन गूढः वनस्थानि चित्राणि माल्यानि यस्य सः गिरित्रः शिवः रमा च ताभ्यामर्चितावंघ्री यस्य सः अयं भावः
ध्विनि मां सभायस्त्वामयं पराभूयते तास्तु व्रजभुवो धन्याः यत्पासु अयं कृष्णो विविधक्रीडयाऽचति गच्छतीति अहो कष्ट
मल्पपुण्यावयं यतोऽस्माभिरनवसरे दृष्टोऽयं १३ गोप्यस्तु बहुपुण्या इत्याहुस्त्रिभिः गोप्य इति अमुष्य कृष्णस्य रूपं

बल्लातः शत्रुमभितः कृष्णस्य वदनाम्बुजं वीक्ष्यतां अमर्षार्णुं त्वं पद्मकोशमिवाम्बुभिः १२
किं न पश्यत रामस्य मुखमाताम्रलोचनं मुष्टिकं प्रतिसामर्षहाससंरंभशोभितं १३ पु
ण्या वत व्रजभुवो यदयं नृलिंगगूढः पुराणपुरुषो वनचित्रमाल्यः गाः पालयन्सहब
लः क्वणयंश्च वेणुं विक्रीडयाऽचति गिरित्ररमार्चितांघ्रिः १४ गोप्यस्तपः किमचरन्
यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धं दृग्भिः पिबंत्यनुसवाभिनवं दुरापमेकां
तधाम यशसः श्रिय ऐश्वरस्य १५ या दोहनेऽवहनने मथनोपलेपप्रेंखेंखनार्भरुदितो
क्षणमार्जनादौ गायंति चैनमनुरक्तधियोऽश्रुकंठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः

अंगलावण्येन सारः श्रेष्ठं किंच असमोर्ध्वं न विद्यते समं ऊर्ध्वमधिकं च यस्य तत्तादृपि न अन्येन आभरणादिना सिद्धं किंतु स्व
त एव ऐश्वरस्य ऐश्वर्येस्य च एकांतधाम अव्यभिचारिस्थानं पाठांतरे अमुष्य ईश्वरस्येत्यन्वयः एवंभूतं नित्यं नवीनं रूपं याने
त्रैः पिबंतीति १७ किंच या दोहनादिषु एनं गायंति ता व्रजस्त्रियो धन्याः प्रेंखेंखनं दोलांदोलनं उक्षणं सेचनं कथंभूताः उरु
क्रमे चित्तं उरुक्रमचित्तं तेनैव यानं सर्वविषयप्राप्तिर्यासां ताः पाठांतरे उरुक्रमं चित्तयंत्य इत्यर्थः कुतः अनुरक्तधियः तत्र लिंगं

श्रुकंठ्यः १५ प्रातरिति या अबला अस्य वेणुं निशम्य गृहात्तूर्णं
निर्गम्य पथि सस्मितमुखं पश्यंति ता भूरिपुण्या इति १६ ॥

एवं सभयं ब्रुवाणासु स्त्रीषु तासां भयनिवृत्तये वक्ष्यमाणं शत्रुं हन्तुं मनश्चक्रे १७ सभयाः स्त्रीणां गिरः श्रुत्वा पुत्रयोः स्नेहेन यास्तु कृतया आतुरौ विह्वलौ पुत्रयोर्बलमजानन्तौ पितरावनुतापं प्रापतुरिति १८ १९ तदा भगवतो गात्राणां चूर्णितानि जा न्वादीनां निष्पातैः प्रहारैः वज्रस्य निष्पेषः तीव्रप्रतापः तद्वन्निष्ठुरैः भज्यमानाङ्गः श्लथश्चासौ नः इत्यर्थः २० श्येनस्येव वे

प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभिः समं क्वणयतोऽस्य निशम्य वेणुं निर्गम्य तूर्ण मबलाः पथि भूरिपुण्याः पश्यन्ति सस्मितमुखं सदयावलोकं १७ एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः शत्रुं हन्तुं मनश्चक्रे भगवान्भरतर्षभ १८ सभयाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचातुरौ पितरावन्वतप्येतां पुत्रयोरबुधौ बलं १९ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ युयुधाते यथान्यायं तथैव बलमुष्टिकौ २० भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह २१ स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ भगवन्तं वासुदेवं क्रुद्धो वक्षस्यबाधत २२ नाचलत्तत्प्रहारेण मालाहत इव द्विपः बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन्हरिः २३ भूपृष्ठे पोथयामास तरसा

गोयस्य सः चाणूरः अवाधत अताडयत् २१ २२ भूपृष्ठे भुव उपरि पोथयामास आस्फालयत् क्षीणजीवितं यत इन्द्रध्वजो वज्रं यद्वा इन्द्रध्वजो नाम गौडेषु प्रसिद्धः कस्मिंश्चिदुत्सवे महान्स्तम्भो ध्वजपताकाद्यलङ्कृतः पुरुषाक्ष ॥तिः उत्क्षिप्यते सयथा पतति तद्वदपदिति २३ ॥ ६ ॥

१४६

॥२४॥ अर्दितः पीडितः उर्व्युपस्थे भूतले २५ २६ २७ २८ वल्गंतौ नृत्यादि कुर्वंतौ २९ साधु साधु इति वदंतः ३०

विस्रस्ताकल्पकेशस्रगिंद्रध्वज इवापतत् २४ तथैव मुष्टिकः पूर्वं स्वमुष्ट्याभिहतेन वै बलभद्रेण बलिना तलेनाभिहतो भृशं २५ प्रवेपितः स रुधिरमुद्वमन् मुखतो ऽर्दितः व्यसुः पपातोर्व्युपस्थे वाताहत इवांघ्रिपः २६ ततः कूटमनुप्राप्तं रामः प्रहरतां वरः अवधील्लीलया राजन् सावज्ञं वाममुष्टिना २७ तर्ह्येव हि शलः कृष्णपदापहतशीर्षकः द्विधा विदीर्णस्तोशलक उभावपि निपेततुः २८ चाणूरे मुष्टिके कूटे शले तोशलके हते शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः २९ गोपान्वयस्यानाकृष्य तैः संसृज्य विजह्रतुः वाद्यमानेषु तूर्येषु वल्गंतौ धृतनूपुरौ ३० जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः ऋते कंसं विप्रमुख्याः साधवः साधु साध्विति ३१ हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् न्यवारयत्स्वतूर्याणि वाक्यं चेदमुवाच ह ३२ निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् धनं हरत गोपानां नंदं बध्नीत दुर्मतिं ३३ वसुदेवश्च दुर्मेधा हन्यतामाश्वसत्तमः उग्रसेनः पिता चापि सानुगः परपक्षगः ३४ एवं विकत्थमाने वै कंसे प्रकुपितो ऽव्ययः लघिम्नोत्पत्य तरसा मंचमुत्तुंगमारुहत् ३५ ॥ ३१ ३२ ३३ अव्यय अश्रमः लघिम्ना लाघवेन ३४ ३५॥

दुर्विषहं अविषह्यमुग्रं तेजो यस्य स तं तारक्षः ३६ गरिष्ठत्वाय विश्वाश्रयत्वमुक्तं तत्र हेतुः अब्जनाभः कुतस्तस्योप
र्य्येव पपात यतः आत्मतंत्रः स्वतंत्रः ॥ ३७ ॥ ३८ ॥ ३९ ॥ निर्वेशो निष्कृतिः आनृण्यमित्यर्थः तत्कारिणः सं

तमाविशंतमालोक्य मृत्युमात्मन आसनात् मनस्वी सहसोत्थाय जगृहे सोऽसिं च
र्मणी ३६ तं खड्गपाणिं विचरंतमाशुश्येनं यथा दक्षिणसव्यमंबरे समग्रहीद्दुर्विष
होग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य ३७ प्रगृह्य केशेषु चलत्किरीटं निपात्य रंगोपरि तुं
गमंचात् तस्योपरिष्टात्स्वयमब्जनाभः पपात विश्वाश्रय आत्मतंत्रः ३८ तं संपरेतं विचकर्ष
भूमौ हरिर्यथेभं जगतो विपश्यतः हाहेति शब्दः सुमहांस्तदाऽभूदुदीरितः सर्वजनैर्न्नरें
द्र ३९ स नित्यदोद्विग्नधिया तमीश्वरं पिबन्वदन्वा विचरन्स्वपन्श्वसन् ददर्श चक्रा
युधमग्रतो यतस्तदेव रूपं दुरवापमाप ४० तस्यानुजा भ्रातरोऽष्टौ कंकन्यग्रोधकादयः
अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिणः ४१ तथातिरभसांस्तांस्तु संयत्तान्रोहि
णीसुतः अहन्परिघमुद्यम्य पशूनिव मृगाधिपः ४२ नेदुर्दुंदुभयो व्योम्नि ब्रह्मेशा
द्या विभूतयः पुष्पैः किरंतस्तं प्रीत्या शशंसुर्नन्नृतुः स्त्रियः ४३ ॥ तेषां स्त्रियो महारा

तमेत्य अभ्यधावन् ४० तथा तादृगतिरभसो वेगो येषां तान् संयत्तान् उद्युक्तान् ४१।४२॥ जसुहृन्मरणदुःखिताः
॥ ४३ शोचंत्यो विलापांश्चक्रुः

शुचः अश्रूणि ४४ धर्मज्ञेत्यादीनि विलापे प्रेमसंबोधनानि तेन्वदीयावयं ४५ त्वयापत्याविरहितापुरीयं नशो।भतइतिस्वदृष्ट्याऽभिधानं ४६ अनागसामितितु परमार्थाभिधानं ४७ एषः कृष्णः प्रभवंत्यस्मादिति प्रभवः अपि

तत्राभीयुर्विनिघ्नंत्यः शीर्षाण्यश्रुविलोचनाः ४३ शयानान्वीरशय्यायां पतीनालिंग्य शोचतीः विलेपुः सुस्वरं नार्यो विसृजंत्यो मुहुः शुचः ४४ हा नाथ प्रिय धर्मज्ञ करुणानाथवत्सल त्वया हतेन निहता वयं ते सगृहप्रजाः ४५ त्वया विरहिता पत्या पुरीयं पुरुषर्षभ न शोभते वयमिव निवृत्तोत्सवमंगला ४६ अनागसां त्वं भूतानां कृतवान् द्रोहमुल्बणं तेनेमां भो दशां नीतो भूतध्रुक्को लभेत शं ४७ सर्वेषामिह भूतानामेष हि प्रभवाप्ययः गोप्ता च तदवध्यायी न क्वचित्सुखमेधते ४८ श्रीशुक उवाच राजयोषित आश्वास्य भगवान्लोकभावनः यामाहुर्लौकिकीं संस्थां हतानां समकारयत् ४९। मातरं पितरं चैव मोचयित्वाथ बंधनात् कृष्णरामौ ववंदाते शिरसास्पृश्य पादयोः ५० देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ कृतसंवंदनौ पुत्रौ सस्वजाते न शंकितौ ५१ ॥

यंत्यस्मिन्निति अप्ययः स च स च तदवध्यानं अवज्ञानं कर्तुं शीलं यस्य सः ४८ ४९ आस्पृश्य ईषत्स्पृष्ट्वा ५० ॥ पुत्रभ्रांतिं विहाय जगदीश्वरौ विति ज्ञात्वा शंकितौ संतौ न सस्वजाते नालिंगितवंतौ किंतु बद्धांजलीतस्थतुरित्यर्थः ५१

प्रसह्यहत्वाहस्तौदुंमल्लेंद्रान्मल्ललीलया॰ बीभत्सचरितंकंसंसबीभत्समममारयत् १ इतिदशमेचतुश्चत्वारिंशोध्याः॥ यः ४४ पंचचत्वारिंशकेऽथपितृनंदादिसांत्वनं उग्रसेनाभिषेकश्चगुरौवासात्पुरागमः १ उपलब्धार्थौ विदित्वेति अ यमर्थः उपसमीपेआवयोःपुत्रबुद्ध्यासांसारिकपरमसुखभोगात् पूर्वमेवलब्धार्थौआवामीश्वराविति लब्धः प्राप्तः प रमज्ञानरूपोऽर्थोयाभ्यांतौतथाभूतौज्ञात्वामयिप्रसन्नेसत्यऽनयोर्ज्ञानंनामकिंदुर्लभंस्यात् दुर्लभंतुमयिपुत्रतयाप्रेम अतइदानीमेवतत् ज्ञानंमाभूदितिनिजांस्वाधीनांमायांतयोःप्रसारितवानिति १ तदेवदर्शयतिउवाचेत्यादिभिरष्ट

इतिश्रीभागवतेमहापुराणेदशमस्कंधेकंसवधोनामचतुश्चत्वारिंशोध्यायः ४४

श्रीबादरायणिरुवाच पितरावुपलब्धार्थौविदित्वापुरुषोत्तमः माभूदितिनिजांमा यांततानजनमोहिनी १ उवाचपितरावेत्यसाग्रजःसात्वतर्षभः प्रश्रयावनतःप्रीणन्नं बतातेतिसादरं २ नास्मत्तोयुवयोस्तातनित्योत्कंठितयोरपि बाल्यपौगंडकैशोराःपुत्रा भ्यामभवन्क्वचित् ३ नलब्धोदैवहतयोर्वासोनौभवदंतिके यांबालाःपितृगेहस्थाविं दंतेलालितामुदं ४ सर्वार्थसंभवोदेहोजनितःपोषितोयतः ॥ ऽऽभिःप्रीणयन्सादरंब्रुवन् २ अस्मत्तः अस्मन्निमित्तंनित्यमुत्कंठितयोरपियुवयोःपुत्राभ्यांआवाभ्यांकृत्वाबाल्यपौगंडकैशोराः तत्तदवस्थाऽ नुभवसुखानीत्यर्थः नाभवन्निति अस्मत्तःपुत्राभ्यामितिसामानाधिकरण्यंवा ३ किंचआवामेवदैवहीनावित्याह नलब्धइति पितृगेहस्थाबालायांमुदंविंदंतेसाचनलब्धेति ४ एवंतावत्श्लोकद्वयेनयुवयोरावयोश्चकामहानिर्ज्ञीत

पुनर्युष्मत्परिचर्यालोपेन धर्महानिरपि जातेत्याह सर्वार्थसंभव इति सर्वेषां धर्माद्यर्थानां संभवो यस्मिन् स देहो यतः याभ्यां जनितः पोषितश्च तयोः पित्रोर्निर्वेशं निष्कृतिमानृण्यं मर्त्यः शतसंवत्सरमात्रेणायुषा न प्राप्नोति ५ तन्मध्ये पितुर्यः पुत्रः कल्यः समर्थः सन्नपि देहेन धनेन च पित्रोर्वृत्तिं जीविकां न संपादयेत्तं प्रेत्य लोकांतरे यमदूताः स्वस्यैव मांसं खादयंती

न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ५ यस्तयोरात्मजः कल्प आत्मना च धनेन च वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयंति हि ६ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुं गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः ७ तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः मोघमेते व्यतिक्रांता दिवसा वामनर्चतोः ८ तत्क्षंतुमर्हथस्तात मातर्नौ परतंत्रयोः अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशं ९ श्रीशुक उवाच इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा मोहितावंकमारोप्य परिष्वज्यापतुर्मुदं १० सिंचंतावश्रुधाराभिः स्नेहपाशेन चावृतौ न किंचिदूचतू राजन्बाष्पकंठौ विमोहितौ ११ एवमाश्वास्य पितरौ भगवान्देवकीसुतः मातामहं तूग्रसेनं यदूनामकरोन्नृपं १२ आह चास्मान्महाराज प्रजाश्चाज्ञप्तुमर्हसि ॥

ति ६ किंच मात्रादिशुश्रूषामकुर्वन्विफलजीवितश्च भवतीत्यत आह मातरमिति अबिभ्रदपुष्णन् श्वसन्नपि मृत तुल्य एवेति ७ तत्तस्मान्नौ आवयोः मोघं व्यर्थं अनर्चतोः अपूजयतोः ८ ९ १० दुर्हृदा कंसेन क्लत्वा ११ आश्वास्य सांतयित्वा ९

भा० द० टी० अ० ४५

भा० द० पू० १४९

ययातिशापादिति तव तु यादवत्वेऽपि मदाज्ञया न दोष इति भावः १३ मम तादृशी शक्तिर्नास्तीति चेत्तत्राह मयीति मत्प्र
सादेन सर्वं भविष्यतीत्यर्थः १४ स्वान् ज्ञातीन्संबंधांश्च दिग्भ्य आनाय्येति १५ १६ सिद्धाः पूर्णाः कृष्णरामाभ्यां गतो नि
वृत्तो ज्वरस्तापो येषां ते १७ सदयस्मितं वीक्षणं यस्मिन् तत् १८ प्रवयसो वृद्धा अपि अतिशयितं बलमोजश्च येषां ते १९

ययातिशापाद्यदुभिर्नासितव्यं नृपासने १३ मयि भृत्य उपासीने भवतो विबुधादयः ब
लिं हरंत्यवनताः किमुतान्ये नराधिपाः १४ सर्वान्स्वज्ञातिसंबंधान्दिग्भ्यः कंसभयाकु
लान् यदुवृष्ण्यंधकमधुदाशार्हकुकुरादिकान् १५ सभाजितान्समाश्वास्य विदेशा
वासकर्शितान् न्यवासयत्स्वगेहेषु वित्तैः संतर्प्य विश्वकृत १६ कृष्णसंकर्षणभुजैर्गु
प्ता लब्धमनोरथाः गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः १७ वीक्षंतोऽहरहः प्रीता मुकुं
दवदनांबुजम् नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम् १८ तत्र प्रवयसोऽप्यासन्युवा
नोऽतिबलौजसः पिबंतोऽक्षैर्मुकुंदस्य मुखांबुजसुधां मुहुः १९ अथ नंदं समासाद्य भगवा
न्देवकीसुतः संकर्षणश्च राजेंद्र परिष्वज्येदमूचतुः २० पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ ला
लितौ भृशम् पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि २१ स पिता सा च जननी यौ पुष्णीतां

॥ २० ॥ भृशमात्मनोऽप्याधिक्येन पोषितौ न चाश्चर्यमेतदित्याह पित्रोरिति आत्मनो देहादप्या स्वपुत्रवत्
त्मजेष्वभ्यधिका हि प्रीतिरिति २१ देवकीवसुदेवयोः पुत्रौ युवां नास्मत्पुत्रावित्यपि न वाच्यमित्याह ॥ २ ॥ ६ ॥ ७ ॥

राम १४९

सपितेति २२।२३ सव्रजंव्रजवासिभिः सहितम् कुप्यानिस्वर्णरजतादिव्यतिरिक्तकांस्यपात्रादीनितत्प्रभृतिभिः २४
२५ पुरोधसागर्गाचार्येण द्विजसंस्कृतिमुपनयनम् २६ गावोगाः रुक्मस्यमालाविद्यंतेयासांताः क्षौमवस्त्रमालावतीः
२७ याः पूर्वंमनोदत्ताः आसन्ताएवाददात् ननुताः कंसेनापहृताः सत्यम् राजगोष्ठादाच्छिद्यदत्ताइत्याह कंसेनाधर्मत

शिशून्बंधुभिरुत्सृष्टानकल्पैः पोषरक्षणे २२ यातयूयंव्रजंतातवयंचस्नेहदुः
खितान् ज्ञातीन्वोद्रष्टुमेष्यामोविधायसुहृदांसुखम् २३ एवंसांत्वय्यभगवान्नंदंस
व्रजमच्युतः वासोलंकारकुप्याद्यैरर्हयामाससादरं २४ इत्युक्तस्तौपरिष्वज्यनंदःप्रण
यविह्वलः पूरयन्नश्रुभिर्नेत्रेसहगोपैर्व्रजंययौ २५ अथशूरसुतोराजन्पुत्रयोःसम
कारयत् पुरोधसाब्राह्मणैश्चयथावद्द्विजसंस्कृतिम् २६ तेभ्योदाद्दक्षिणागावोरुक्म
माल्याःस्वलंकृताः स्वलंकृतेभ्यःसंपूज्यसवत्साःक्षौममालिनीः २७ याःकृष्णराम
जन्मर्क्षेमनोदत्तामहामतिः ताश्चाददादनुस्मृत्यकंसेनाधर्मतोहृताः २८ ततश्च
लब्धसंस्कारौद्विजत्वंप्राप्यसुव्रतौ गर्गाद्यदुकुलाचार्याद्गायत्रंव्रतमास्थितौ २९।
प्रभवौसर्वविद्यानांसर्वज्ञौजगदीश्वरौ नान्यसिद्धामलज्ञानंगूहमानौनरेहितैः ३०

इति २८ गायत्रंव्रतंब्रह्मचर्यम् २९ प्रकर्षेणभवंत्याभ्यामितिप्रभवौ अतएवसर्वज्ञौ स्वतः सिद्धममलंज्ञानंप्रच्छादयंतौ

॥३१॥ यथा यथावत् उपसाद्य प्राप्य गुरौ वृत्तिमन्यानन्ग्राहयंतौ शिक्षयंतौ गुरुमुपेतौ उपगतौ सेवितवंतावित्यर्थः ३२ शुद्धो भावो ययासु ताभिरनुवृत्तिभिः सांगोपनिषदः अंगानि षडंगानि शिक्षादीनि तैरुपनिषद्भिश्च सहितान् ३३ सरहस्यं मंत्रदेवताज्ञानसहितं धर्मान्मन्वादिधर्मशास्त्राणि न्यायपथान्मीमांसादीन् आन्वीक्षिकीं तर्कविद्यां षड्विधां संधिविग्रहो यानमासनं द्वैधमाश्रयश्चेति एवं षड्विधां राजनीतिम् ३४ सकृन्निगदमात्रेण एकवारं गुरोरुच्चारणमात्रेण ३५ तावतीः चतुःषष्टिकलाः ताश्च शैवतंत्रोक्ता लिख्यंते यथा गीतं १ वाद्यम् २ नृत्यम् ३ नाट्यम् ४ आलेख्यम् ५ विशेषकच्छेद्यम् ६ तंडुलकुसुमबलिप्रकाराः ७ पु

अथो गुरुकुले वासमिच्छंतावुपजग्मतुः काश्यं सांदीपनिं नाम ह्यवंतिपुरवासिनम् ३१
यथोपसाद्य तौ दांतौ गुरौ वृत्तिमनिंदिताम् ग्राहयंतावुपेतौ स्म भक्तया देवमिवादृतौ ३२
तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः प्रोवाच वेदानखिलान् सांगोपनिषदो गुरुः ३३
सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम्
३४ सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ सकृन्निगदमात्रेण तौ संजगृहतुर्नृप ३५ अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः

ष्पास्तरणम् ८ दशनवसनांगरागाः ९ मणिभूमिकाकर्म १० शयनरचनम् ११ उदकवाद्यम् १२ उदकघातः १३ चित्रयोगाः १४ माल्यग्रथनविकल्पाः १५ शेखरापीडयोजनम् १६ नेपथ्ययोगाः १७ कर्णपत्रभंगाः १८ सुगंधयुक्तिः १९ भूषणयोजनम् २० ऐंद्रजालम् २१ कौतुमारयोगाः २२ हस्तलाघवम् २३ चित्रशाकापूपभक्ष्यविकारक्रिया २४ पानकरसरागासवयोजनम् २५ सूचीकर्म २६ सूत्रक्रीडा २७ प्रहेलिका २८॥

प्रतिमाला २९ दुर्वचकयोगः ३० पुस्तकवाचनं ३१ नाटकाख्यायिकादर्शनं ३२ काव्यसमस्यापूरणं ३३ पट्टिकावेत्रवाणवि
कल्पाः ३४ तर्ककर्माणि ३५ तक्षणं ३६ वास्तुविद्या ३७ रूप्यरत्नपरीक्षा ३८ धातुवादः ३९ मणिरागज्ञानं ४० आकरज्ञानं
४१ वृक्षायुर्वेदयोगाः ४२ मेषकुक्कुटलावकयुद्धविधिः ४३ शुकसारिकाप्रलापनं ४४ उत्सादनं ४५ केशमार्जनकौशलं ४६
अक्षरमुष्टिकाकथनं ४७ म्लेछितकुतर्कविकल्पाः ४८ देशभाषाज्ञानं ४९ पुष्पशकटिकानिमित्तज्ञानं ५० यंत्रमातृकाधा

गुरुदक्षिणायाचार्यंछंदयामासतुर्नृप ३६ द्विजस्तयोस्तंमहिमानमद्भुतंसंलक्ष्यराज
न्नतिमानुषीमतिं संमंत्र्यपत्न्यासमहार्णवेमृतंबालंप्रभासेवरयांबभूवह ३७ तथेत्य
थारुह्यमहारथौरथंप्रभासमासाद्यदुरंतविक्रमौ वेलामुपव्रज्यनिषीदतुःक्षणंसिंधु
र्विदित्वाऽर्हणमाहरत्तयोः ३८ तमाहभगवन्नाशुगुरुपुत्रःप्रदीयतां योऽसाविहत्वया
ग्रस्तोबालकोमहतोर्मिणा ३९ समुद्रउवाच नैवाहार्षमहंदेवदैत्यःपंचजनोमहा
न् अंतर्जलचरःकृष्णशंखरूपधरोऽसुरः ४० आस्तेतेनाहृतोनूनंतच्छ्रुत्वासत्वरंप्र
भुः जलमाविश्यतंहत्वानापश्यदुदरेऽर्भकं ४१

५१ …रणमातृका ५१ संवाच्यं ५२ मानसीकाव्यक्रिया ५३
अभिधानकोशः ५४ छंदोज्ञानं ५५ क्रियाविकल्पाः ५६ छलितकयोगाः ५७ वस्त्रगोपनानि ५८ द्यूतविशेषः ५९ आकर्षक्री
डा ६० बालक्रीडनकानि ६१ वैनायिकानां ६२ वैजयिकानां ६३ वैतालिकानांचविद्यानांज्ञानं ६४ इतिचतुःषष्टिकलाः छं
दयामासतुरुपलोभितवंतौ ३६ प्रभासेक्षेत्रेमहार्णवेमृतंबालंवरयामास ३७ ईश्वराविति विदित्वासमुद्रस्तयोरर्हणमाजहार ३८

४५
भा०द०
पू०
१५९

४२ ४३ सपर्य्यापूजांसर्व्वेषांभूतानामाशयाः अंतःकरणानितान्यालयोनिवासोयस्यतं ४४ निजंकर्म्मएवबंधनं यस्यतंतथाभूतमपिमदाज्ञापुरस्कारेणानयततेनदोषइत्यर्थः ४५ ४६ वस्तेनिप्राधान्येनैकस्यसंबोधनंगुरोर्नि

तदंगप्रभवंशंखमादायरथमागमत् ततःसंयमनींनामयमस्यदयितांपुरीं ४२ ग
त्वाजनार्दनःशंखंप्रदध्मौसहलायुधः शंखनिर्ह्रादमाकर्ण्यप्रजासंयमनोयमः ४३
तयोःसपर्य्यांमहतींचक्रेभक्त्युपबृंहितां उवाचावनतःकृष्णंसर्व्वभूताशयालयं ४४
लीलामनुष्यहेविष्णोयुवयोःकरवामकिं श्रीभगवानुवाच गुरुपुत्रमिहानीतंनिज
कर्म्मनिबंधनं आनयस्वमहाराजमच्छासनपुरस्कृतः ४५ तथेतितेनोपानीतंगुरु
पुत्रंयदूत्तमौ दत्वास्वगुरवेभूयोवृणीष्वेतितमूचतुः ४६ गुरुरुवाच सम्यक्संपादि
तोवत्सभवद्भ्यांगुरुनिष्क्रयः कोनुयुष्मद्विधगुरोःकामोनामावशिष्यते ४७ गच्छ
तंस्वगृहंवीरौकीर्त्तिर्वामस्तुपावनी छंदांस्ययातयामानिभवंत्विहपरत्रच ४८ गु
रुणैवमनुज्ञातौरथेनानिलरंहसा आयातौस्वपुरंतातपर्जन्यनिनदेनवै ४९ ॥६॥

निष्क्रयोगुरुदक्षिणायुष्मद्विधयोर्गुरोर्म्ममकामानांमध्येकोनुकामोऽवशिष्यतेनकोपीति ४७ हेवीरौस्वगृहंगच्छतम् वांयुवयोः अयातयामानिअगतसाराणि ४८ अनिलवद्रंहोवेगोयस्यतेन पर्जन्योमेघःतद्वन्निनदोयस्यतेन ४९

नष्टं अदृष्टं तत्पुनर्लब्धं धनं याभिस्ता इवेति ५० इति दशमे पंचचत्वारिंशोऽध्यायः ४५ षट्चत्वारिंशके घोषमुद्धवं प्रेष्य तत्
क्रिरा यशोदानंदयोः कृष्णः शोकापनोदनं १ कामचारं द्विजातिः सन् परित्यज्यादि संयतः गुरोर्ज्ञानमनुप्राप्य सखा
गोपीरुपादिशत् २ गोपीनां सांत्वनमतिरहस्यं सन्मंत्रिसाध्यमिति तदर्थं उद्धवं विशिनष्टि वृष्णीनामिति बुद्धिसत्तमः बुद्ध्या
तिश्रेष्ठः १२३ गोपीनां विशेषतः संदेशोकारणमाह ता इति मय्येव संकल्पात्मकं मनो यासां ताः अहमेव प्राणो यासां ताः

समनंदव्रजाः सर्वाः दृष्ट्वा रामजनार्दनौ अपश्यंत्योऽव दृह्हा निनष्टलब्धधना इव ५० इ
ति श्रीभागवते महापुराणे दशमस्कंधे पंचचत्वारिंशोऽध्यायः ४५ बादरायणिरुवाच वृष्णी
नां प्रवरो मंत्री कृष्णस्य दयितः सखा शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः १ तमाह भ
गवान्प्रेष्ठं भक्तमेकांतिनं क्वचित् गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः २ गच्छोद्धव व्र
जं सौम्य पित्रोर्नौ प्रीतिमावह गोपीनां मद्वियोगाधिं मत्संदेशैर्विमोचय ३ ता मन्मनस्का
मत्प्राणा मदर्थे त्यक्तदैहिकाः ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहं ४ मयि ताः
प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः स्मरंत्योऽङ्ग विमुह्यंति विरहौत्कंठ्यविह्वलाः ५॥
मदर्थे त्यक्तदैहिकाः पतिपुत्रादयो याभिस्ताः ६ धारयंत्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन ॥ ६॥
ततः किमतआह ये त्यक्तलोकधर्मा इति मद्विमित्तं त्यक्तो लोकधर्मौ इहामुत्र सुखतत्साधनानि च यैस्तान्बिभर्मि संवर्द्ध
यामि सुखयामीत्यर्थः ४ तासां वियोगाधिं दर्शयति द्वयेन मयि ता इति ५ विरहेणौत्कंठ्यं तेन विह्वलाः परवशाः ॥

४६
भा०द०
स्कं०
१०
४२

गोकुलान्निर्गमनसमये शीघ्रमागमिष्यामीति प्रियेप्रत्यागमनसंदेशास्तैर्मे मदीयावल्लव्यो गोप्यः मदात्मिका इति तासा मात्मायदि स्वदेहे स्यात् तर्हि विरहतापेन दह्येत वमयि वर्तमानत्वात्कथंचिज्जीवंतीति भावः ६ संदेशंभवतीनांवियोगो मे नहि सर्वात्मना क्वचिदित्यादिकं ७ निम्लोचति अस्तंगच्छति सति नि[illegible]नयस्येति तदा गोपीभिरज्ञातत्वेन नंदगोकुलं

प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ६ श्रीशुक उवाच इत्युक्त उद्धवो राजन्संदेशंभ र्तुराहृतः आदाय रथमारुह्य प्रययौ नंदगोकुलं ७ प्राप्तो नंदव्रजंश्रीमान्निम्लोचति वि भावसौ छन्नयानः प्रविशतां पशूनां खुररेणुभिः ८ वासितार्थेभियुध्यद्भिर्नादितं शुष्मि भिर्वृषैः धावंतीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ९ इतस्ततो विलंघद्भिर्गोवत्सैर्म डितंसितैः गोदोहशब्दाभिरवं वेणूनां निःस्वनेन च १० गायंतीभिश्च कर्माणि शुभानि ब लकृष्णयोः स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितं ११ अग्न्यर्कातिथिगोविप्रपितृ देवार्चनान्वितैः धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमं १२ सर्वतः पुष्पितवनं द्विजालि

वानिति सूचयति ८ व्रजंवर्णयति पंचभिः वासितार्थ इत्यादिभिः वासिताः पुष्पवंत्यो गावस्त दर्थं कुलनादितं निमित्तमभितो युध्यद्भिः शुष्मिभिर्मत्तैः वृषैर्नादितं वास्राभिर्धेनुभिः स्ववत्सकान्प्रति ९ विलंघद्भिः उत्पतद्भिः गोदोह शब्दैः सहस्रभितो रवाः मुंचमामुंचनयत्रानयदेहिगृहाणेत्यादयो यस्मिन्नतं वेणूनां निःस्वनेन च मण्डितं १० गायंतीभिर्गो पीभिर्गोपैश्च सुविराजितं ११ अग्न्याद्यर्चनान्वितैः गोपगृहैर्धूपादिभिश्च मनोरमं १२ स्वंडं ॥

॥ ६ ॥

समूहः १३ अर्चयत पूजयामास १४ कशिपौ शय्यायां संविष्टम् १५ १६ साधूनामिति कर्मणि षष्ठी १७ गावो गाः गिरिं गो
वर्द्धनं १८ अप्यायास्यति आगमिष्यति किं १९ श्रीकृष्णोपकारस्मरणादिभिरनुपमानंदेनाभिभूयमान आह दावाग्नेरित्या

हंसकारंडवाकीर्णैः पद्मखंडैश्च मंडितं १३ तमागतं समागम्य कृष्णस्यानुचरं प्रियं नंदः प्रीतः प
रिष्वज्य वासुदेवधियार्चयत १४ भोजितं परमान्नेन संविष्टं कशिपौ सुखं गतश्रमं पर्यपृच्छ
त्पादसंवाहनादिभिः १५ कच्चिदंग महाभाग सखा नः शूरनंदनः आस्ते कुशल्यपत्याद्यै
र्युक्तो मुक्तः सुहृद्वृतः १६ दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना साधूनां धर्मशीला
नां यदूनां द्वेष्टि यः सदा १७ अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् गोपान् व्रजं चात्म
नाथं गावो वृंदावनं गिरिं १८ अप्यायास्यति गोविंदः स्वजनान् सकृदीक्षितुं तर्हि द्रक्ष्याम त
द्वक्त्रं सुनसं सुस्मितेक्षणं १९ दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः दुरत्ययेभ्यो मृत्यु
भ्यः कृष्णेन सुमहात्मना २० स्मरतां कृष्णवीर्याणि लीलापांगनिरीक्षितं हसितं भाषि
तं चांग सर्वा नः शिथिलाः क्रियाः ॥ २१ ॥ सरिच्छैलवनोद्देशान् मुकुंदपदभूषितान् ॥

दिनावातात वर्षाच्चेति वृषात्सर्पाच्चेति अन्येभ्यश्च दुरतिक्रमेभ्यो मृत्युभ्यः कृष्णेन रक्षिताः स्म २० किंच स्मरतां
मिति लीलयापांगेन निरीक्षितं अंग हे उद्धव २१ न केवलं शिथिला एव किंतु शनैरुपरमं नीत्याह सरिच्छैलेति ॥

४६
भा० द०
पू०
१५४

सरितश्च शैलाश्च वनोद्देशाश्च तान् आक्रीडान् क्रीडास्थानानि २२ सुराणामर्थाय महद्गंभीरं गर्गस्य वचनं यथा २३ न केवलं तद्वचनानुसारेणैव व्यवहारसंवादादपीत्याह कंसमिति २४ इभराट् यष्टिमिव तालत्रयप्रमाणं धनुर्वभंज २५ २६ २७

आक्रीडानीक्षमाणानां मनो याति तदा न्वितं २२ मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ सु

राणां महदर्थाय गर्गस्य वचनं यथा २३ कंसं नागायुतप्राणं मल्लौ गजपतिं तथा अवधि

ष्टां लीलयैव पशूनिव मृगाधिपः २४ तालत्रयं महासारं धनुर्यष्टिमिवेभराट् बभंजैकेन ह

स्तेन सप्ताहमदधाद्गिरिं २५ प्रलंबो धेनुकोऽरिष्टस्तृणावर्तो बकादयः सुरासुरजितो दैत्या

हता येनेह लीलया २६ श्रीशुक उवाच इति संस्मृत्य संस्मृत्य नंदः कृष्णानुरक्तधीः अत्यु

त्कंठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः २७ यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च शृण्वंत्य

श्रूण्यवास्राक्षीत् स्नेहस्नुतपयोधरा २८ तयोरित्थं भगवति कृष्णे नंदयशोदयोः वीक्ष्यानु

रागं परमं नंदमाहोद्धवो मुदा २९ उद्धव उवाच युवां श्लाघ्यतमौ नूनं देहिनामिह मानद

नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ३० एतौ हि विश्वस्य च बीजयोनी रामो मुकुंदः पु

२८ २९ ३० अखिलगुरुत्वमेव जनकत्वेन नियंतृत्वेन चाह एताविति रामो मुकुंदश्चैतौ विश्व। पुरुषः प्रधानं

स्य बीजयोनी निमित्तोपादाने ननु पुरुषप्रधानयोर्बीजयोनित्वं प्रसिद्धमत आह पुरुषः प्रधानमिति पुरुषोंऽशः प्रधानं शक्तिः

अतः प्रधानपुरुषावप्येतावेवेत्यर्थः एवं जनकत्वमुक्तं किंच अन्वीयभूतेष्वनुप्रविश्य भूतानां चेतदुपहितस्य विलक्षण
स्य नानाभेदस्य ज्ञानस्य जीवस्य च ईशाते ईश्वरौ नियंतारौ भवतः कुतः पुराणौ अनादी अनादित्वात् कारणत्वं ततश्च नियंतृ
त्वमित्यर्थः ३१ ननु सृष्ट्यादिकर्मावेशान्मनुष्यादिजन्मदर्शनाच्च तस्यान्येभ्यः को विशेष इत्याशंक्याह यस्मिन्निति द्वाभ्यां क
र्माशयं कर्मवासनां निर्हृत्य त्यक्त्वा ब्रह्ममयः स्वरूपज्ञानवान् अर्कवर्णः शुद्धसत्वमूर्तिः सत्परां गतिं तत्पदं याति ३२ अखिल

अन्वीयभूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ ३१ यस्मिन् जनः प्राणवियोग
काले क्षणं समावेश्य मनो विशुद्धं निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्क
वर्णः ३२ तस्मिन् भवंताव खिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ भावं विधत्तां नि
तरां महात्मन् किं वाऽवशिष्टं युवयोः सुकृत्यं ३३ आगमिष्यत्यदीर्घेण कालेन व्रजम
च्युतः प्रियं विधास्यते पित्रोर्भगवान् सात्वतां पतिः ३४ हत्वा कंसं रंगमध्ये प्रतीपं
सर्वसात्वतां यदाह वः समागत्य कृष्णः सत्यं करोति तत् ३५ मा खिद्यतं महाभागौ
द्रक्ष्यथः कृष्णमंतिके ॥

त्यात्मा च हेतुश्च तस्मिन् कारणेन मनुष्याकृतौ महाभागे महात्मनि परिपू
र्णे भवंतौ भक्तिं कुरुतः अतः कृतकृत्यावित्यर्थः ३३ प्रस्तुतमाह आगमिष्यतीति पित्रोर्युवयोः यातयूयं व्रजं तात
वयं च स्नेहदुःखितान् ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखमिति यदुक्तं कृष्णः ततसत्यं करिष्यतीति ३४ ३५ काल
विलंबनमसहमानौ प्रत्याह मा खिद्यतमिति हे महाभागौ अंतिके इदानीमेव समीपे वा कुत इत्यत आह अंतर्हृदीति ॥६॥

तर्हि सर्वैः किमिति न दृश्यते तत्राह ज्योतिरिति वैधर्म्यसीनिति तत्यथामथनं विना न दृश्यते तथा भक्तिं विना कस्मोऽपीति भावः ३६
अहो आत्मा मेतन्तस्य त्विहागमनं स्वस्यानि प्रियांत ॥ पित्रादीन् विहाय न संगच्छन्त इति मन्येत तत्राह नह्यस्येति अस्य प्रिया
द्यो न हि संति तत्र हेतुः अमानिनः समानस्येति च ३७ ३८ सोपि जन्मकर्मादि रहितोपि क्रीडाप्रयोजनः सन् साधूनां परिपाल
नाय सदसन्मिश्रयोनिषु सात्विकतामसराजसयोनिषु यद्वा देवादि मत्स्यादि नृसिंहादि योनिषु कल्पते आविर्भवतीत्यर्थः ३९

आत्मन्तर्हृदि संभूतानामास्ते ज्योतिरिवैधसि ३६ नह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वास्त्य
मानिनः नोत्तमो नाधमो वापि समानस्यासमोपि वा ३७ न माता न पिता तस्य न भार्या
न सुतादयः नात्मीयो न परश्चापि न देहो जन्म एव च ३८ न चास्य कर्म वा लोके सदस
न्मिश्रयोनिषु क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते ३९ सत्त्वं रजस्तम इति भज
ते निर्गुणो गुणान् क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हंत्यजः ४० यथा भ्रमरिका दृष्ट्या
भ्राम्यतीव महीयते चित्ते कर्तरि तत्रात्मा कर्तेवाहं धिया स्मृतः ४१ युवयोरेव नैवायमा
त्मजो भगवान् हरिः सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ४२ ॥ ऽऽ ननु जन्मकर्मादिरहि

तस्य कृतमेतदित्यत आह सत्वमिति क्रीडामतीतोऽपि क्रीडन् तथापि मायागुणैर्घटत इत्यर्थः ४० अत्राविद्योपाधेर्जीवस्य कर्तृ
त्वं दर्शनीकुर्वन् तस्याविद्ययैव कर्तृत्वमिति सदृष्टांतमाह यथेति भ्रमरिकापरिभ्रमणं तयोपलक्षितया दृष्ट्या भूरपि भ्राम्यती
ति यथा प्रतीयते एवं चित्ते कर्तरि सति तत्र विस्फिते चित्ते अहं धिया आत्माध्यासेन आत्मा कर्ता स्मृतो यथा तद्वदिति ४१ किंच यु

किंतु सर्वेषामपि न त्वापि नात्मज एव किंतु शत्रुमित्रादिरूपोपीति सर्वात्मत्वनिरूपणेन मोहं नेदृनयेसं....धमनैकांतिकं करो
ति सुवयोरेवेनिद्वाभ्यां ४२ अच्युतादिना निनरां तत्वतो वाच्यं निर्वचनार्हं वस्तु नास्तीति ४३ दीपान्निरूप्य प्रज्वाल्य वास्तुन्दे
हल्यादीन् ४४ मणिभिः कांच्यादिसुस्थितै रज्जूर्विकर्षत्सु भुजेषु कंकणानां स्रजो यासां ताश्च लंतो नितंबास्तना हारा यासां

दृष्टं श्रुतं भूतभवद्भविष्यत्स्थास्नुश्चरिष्णुर्महदल्पकं च विनाऽच्युताद्वस्तु तरां न वाच्यं स
एव सर्वं परमार्थभूतः ४३ एवं निशा सा ब्रुवतोर्व्यतीता नंदस्य कृष्णानुचरस्य राजन् गोप्यः स
मुत्थाय निरूप्य दीपान्वास्तून्समभ्यर्च्य दधीन्यमंथन् ४४ ता दीपदीप्तैर्मणिभिर्विरेजू र
ज्जूर्विकर्षद्भुजकंकणस्रजः चलन्नितंबस्तनहारकुंडलत्विषत्कपोलारुणकुंकुमाननाः
४५ उद्गायतीनामरविंदलोचनं व्रजांगनानां दिवमस्पृशद्ध्वनिः दध्नश्च निर्मथनशब्दमि
श्रितो निरस्यते येन दिशाममंगलं ४६ भगवत्युदिते सूर्ये नंदद्वारि व्रजौकसः दृष्ट्वा रथं
शातकौंभं कस्यायमिति चाब्रुवन् ४७ अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः येन
नीतो मधुपुरीं कृष्णः कमललोचनः ४८ किं साधयिष्यत्यस्माभिर्भर्तुः प्रीतस्य निष्कृतिं

ताः कुंडलैस्त्विष्यंतः स्फुरंतः कपोला यासां ताः अरुणानि कुंकुमानि येषु तानि च आननानि यासां ता एवं ताश्च ताश्च ४५ ४६
४७ तदा व्रजौकसो गोप्यः सक्रोधमाहुः अक्रूर इति अर्थसाधिनवानित्यर्थसाधकः तदाहुः येन नीत इति ४८ कंसं घातयित्वा

भा०द०
पू०
१५५

किमर्थमागतइत्याशंक्यस्वयमेवकार्यमसंभावयन्नुत्प्रेक्षते इति किमिति तदासाधितेनकार्येणप्रीतस्यतुष्टस्यभर्तुः पार्श्वांतरेभृतस्यभृत
स्यकंसस्यनिष्कृतिमोर्ध्वदैहिकंअस्माभिःकार्यंसाधयिष्यतेकिंअस्मत् मांसैःपिंडान्कृत्वादास्यतीत्यर्थः इतिएवंवदंतीनां
स्त्रीणांतस्मिन्नवसरेकृताह्निकःकृतस्नानादिनियमउद्धवआगात्आगतः इति ४९ इतिदशमेषट्चत्वारिंशः ४६ सप्त

इतिस्त्रीणांवदंतीनामुद्धवोगात्कृताह्निकः ४९ इतिश्रीभागवतेमहापुराणेदशम
स्कंधेनन्दशोकापनयनंनामषट्चत्वारिंशोध्यायः ४६ श्रीशुकउवाच तंवीक्ष्यकृष्णा
नुचरंव्रजस्त्रियःप्रलंबबाहुंनवकंजलोचनं पीतांबरंपुष्करमालिनंलसन्मुखार
विंदंमणिमृष्टकुंडलं १ शुचिस्मिताःकोयमपीच्यदर्शनःकुतश्चकस्याच्युतवेषभूष
णः इतिस्मसर्वाःपरिवव्रुरुत्सुकास्तमुत्तमश्लोकपदांबुजाश्रयं २ तंप्रश्रयेणावनताः
सुसत्कृतंसव्रीडहासेक्षणसूनृतादिभिः रहस्यपृच्छन्नुपविष्टमासनेविज्ञायसंदेश
हरंरमापतेः ३ जानीमस्त्वांयदुपतेःपार्षदंसमुपागतं भर्त्रेहप्रेषितःपित्रोर्भवान्प्रि
यचिकीर्षया ४ अन्यथागोव्रजेतस्यस्मरणीयंनचक्ष्महे स्नेहानुबंधोबंधूनांमुनेरपि
सुदुस्त्यजः ५

चत्वारिंशेयत्कृष्णादेशेनगोपिकाः बोधयित्वोद्धवस्तान्वमनुज्ञाप्यागमत्पुरीं १ अपी
च्यंसुंदरंदर्शनंयस्यसः अच्युतस्येववेषोभूषणानिचयस्यसः कोयंकुतोवाकस्यचेतितदंतंपरिवव्रुः २ ३ पार्षदंसेव
कं ४ पित्रोःप्रियचिकीर्षयेत्यत्रहेतुःस्नेहानुबंधइति ५ ॥ २ ॥ ६ ॥

अन्यथा गोव्रजे तस्येत्यत्र हेतुः अन्येष्विति अर्थकृता कार्यनिमित्ता विडंबनं अनुकरणमात्रं न तु तात्विकी मैत्री पुंभिरिति दृ
ष्टांतः ६ अस्यैवान्यार्थनिदर्शनैः प्रपंचः निःस्वमित्यादिना दत्तादक्षिणा येन तं याज्यं यजमानं ७ पक्षिणो विगतफलं वृक्ष
रतां अनुरक्तां मत्प्राप्तिमित्यर्थः ८ त्यक्तलौकिकाः त्यक्तलोकव्यवहाराः ९ प्रियस्य कर्माणि गायंत्यः तथा तस्य बाल्यकैशोर
योर्यानि कर्माणि तानि संस्मृत्य संस्मृत्य गतह्रियः सत्यो रुदंत्यश्च तमपृच्छन्निति पूर्वक्रिययैव संबंधः १० प्रियेण श्रीकृष्णेन

अन्येष्वर्थकृता मैत्री यावदर्थविडंबनं पुंभिः स्त्रीषु कृता यद्वत्सुमनःस्विव षट्पदैः ६
निःस्वं त्यजंति गणिका अकल्पं नृपतिं प्रजाः अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणं
७ खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहं दग्धं मृगास्तथारण्यं जारो भुक्त्वा रतां स्त्रियम् ८
इति गोप्यो हि गोविंदे गतवाक्कायमानसाः कृष्णदूते व्रजं याते उद्धवे त्यक्तलौकिकाः ९ गा
यंत्यः प्रियकर्माणि रुदंत्यश्च गतह्रियः तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः १०
काचिन्मधुकरं दृष्ट्वा ध्यायंती कृष्णसंगमं प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ११
गोप्युवाच मधुप कितवबंधो मा स्पृशांघ्रिं सपत्न्याः कुचविलुलितमालाकुंकुमश्मश्रुभि

मां प्रसादयितुं प्रस्थापितोऽयं दूत इति कल्पयित्वाऽब्रवीत् यद्वा तस्मिन्नक्षिप्त इव प्रियप्रस्थापितं दूतमिति दूतद ... र्नः
ष्टिः तत्वा मधुकरापदेशेनोद्धवमेवाब्रवीदित्यर्थः ११ हे मधुप कितवस्य ... बंधो नोऽस्माकमंघ्रिं मा स्पृश मामानम
स्कारेण प्रार्थयस्वेत्यर्थः ननु किमित्यपेक्षा ... सवर्णस्य तस्य श्मश्रूणां लोहितत्वे कारणमुत्प्रेक्षमाणाह सपत्न्याः ॥ ६ ॥

भा० द० पू० १५६

कुचाभ्यां विलुलिता संमर्दिता या कृष्णस्य कुंकुममाला अत एव तस्याः कुंकुमैः रञ्जितैः श्मश्रुभिः उपलक्षितः किं तासामेव मानिनीनां प्रसादं मधुपतिर्वहतु किमस्माकं संदेशेन न तस्य यदुसदसि विडंब्यं इहात्मास्यदं कुतः अयं दूतस्त्वमीदृक् ईदृशः १२ ननु किमित्येवं तमवजानीथ किं वस्तेनापकृतं तत्राह सकृदिति अधरसुधा मादकत्वात् शोदुर्मनाः सुमनसः कुसुमानि यथा त्यजति तद्वत् अहो वता वितृष्णस्य तस्य पादपद्मं श्रीः कथं सेवते तेन विदितं मयेत्याह अपीति वतेति खेदे उत्तमश्लोकस्य जल्पैर्मिथ्याकथाभिः प्रलापैः प्रायोऽहृतचेता वयं तु न लक्ष्मीवत् विचक्षणा इति भावः १३ संकारान्बहुधा कुर्वतं अस्मत्प्रसाद

वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडंब्यं यस्य दूतस्त्वमीदृक् १२ सकृ दधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान्भवादृक् परिच रति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः १३ किमिह बहु षडंघ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणं विजयसखसखीनां गीयतां तत्प्रसंगः क्षपितकुचरुजस्ते कल्पयंतीष्टमिष्टाः १४ दिवि भुवि च रसायां काः स्त्रियस्त द्दुरापाः कपटरुचिरहासभ्रूविजृंभस्य याः स्युः ॥ लाभाय श्रीकृष्णं गायतीति मत्वाह किमिहेति पु राणं पुरातनं बहुशोऽनुभूतं विजयः सखा यस्य तस्य श्रीकृष्णस्य सांप्रतं याः सख्यः तासामग्रतस्तत्प्रसंगो गीयतामिति दुष्टाः कृष्णस्य प्रियाः तेन पूजिताः इति वा तेनालिंगितेन क्षपिता कुचरुक् यासां ताः तवेष्टमपेक्षितं दास्यंतीति १४ भोमात मैवं वो च स्त्वामनुसृत्यानुसृत्य अनंगविक्लवः त्वां प्रसादयितुं मामादिष्टवान् इत्यत आह दिवीति दिवि भुवि रसातले च याः १५६

स्त्रियः स्मृताः कानामदुरापा ऽनकाश्चन तदित्यव्ययं तस्येत्यर्थः कपटेन रुचिरेण हासेन भ्रूविजृंभो यस्य तस्य हे कपट इतिवा किंच यस्य चरणरजः श्रीः सेवते तत्र वयं काः अपि च यद्यप्येवं तथापि कृपणपक्षे कृपणानुकंपिनि पुंसि उत्तम श्लोकशब्दो भवतीति तथा कथनीयं त्वयेति भावः १५ पादमूले प्रविशंतं क्षमापयिष्यंतमिव मत्वाह शिरसि न्यस्तं पादं वि सृज तथाप्यमुंचतमाह वेद्मीति मुकुंदात् अभ्येत्य ततः शिक्षित्वेत्यर्थः दौत्यैर्दूतकर्मभिः चाटुकारैः प्रियोक्तिरचनादिभिः अनुनयविदुषः प्रार्थनाचतुरस्य ते तवसर्वमहं वेद्मि मुकुंदवत्त्वमप्यविश्वसनीय इति भावः ननु तेन किमपराद्धं तत्राह

चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः १५ वि
सृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुंदात् स्वकृत इह
विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किंनु संधेयमस्मिन् १६ मृगयुरिव क
पींद्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानां ॥ १७ ॥ स्वकृत इति ।
स्वकृते कृतमकृते तदर्थमेव विसृष्टाः अपत्यपत्यन्यलोका अपत्यानि पतयश्च ते इहलोकाः अन्यलोको धर्मस्ता
भ्याश्च याभिस्ताः नः अकृतचेताः असंयतचित्तः योव्यसृजत अस्मिन् किंनु संधातव्यमिति १६ किंच कृष्णस्य पूर्वा
णि कर्माण्यनुसंदधाना बिभेम्यहमस्मादित्याह मृगयुरिवेति मृगयुर्लुब्धक इव यः कपींद्रं वालिनं विव्यधे अ
विध्यत लुब्धधर्मा क्रौर्यवान् अलुब्धधर्मेति वा लुब्धको हि तन्मांसं भक्तुकामो विध्यति अयं तु न तथा अतो वृथा क
ठिन इत्यर्थः तथा स्त्रियं शूर्पणखां स्त्रीजितः सीतापरतंत्रः कामएव यानं प्राप्तिसाधनं यस्यास्तां विरूपां छिन्नकर्णनासि

४७
भा०द०
पू०
१५२

दाशरथिरूपेण तथावलिमपितद्दत्तंवलिंभुक्त्वाभक्षयित्वाध्वांक्षवत्काकवत् अवेष्टयत बंबंधवामनरूपेणवलिम
त्वाऽधोक्षिपद्दिष्टपादितिपाठेवलिंपूजांगृहीत्वाविष्टपात्स्वर्गादधोऽक्षिपदित्यर्थः ततस्मादसितस्यकृष्णस्यसख्यै
रलं एवंचेत्किमितितंनित्यंगायथतत्राह दुस्त्यजस्तुतस्यकथारूपोर्थइति १७ अपिचजानीमएवंनतत्कथापित्रिव
गलतामूलोन्मूलनीति तथापिनत्यक्तुंशक्नुमः किंकुर्मइत्याह यदनुचरितेति यस्यानुचरितमेवलीलातदेवकर्ण
पीयूषंतस्यविप्रुट्कणिका तस्याः सकृददनंसेवनंतेनविधूतानिरस्ताद्वंद्वधर्मारागादयोयेषांतेअतएवविनष्टाः अ
सतुल्याः दीनंदुःखितंगृहकुटुंबंविहायदीनाभोगहीनाविहंगाअपिभिक्षुचर्यांप्राणवृत्तिमात्रंचरंति अतस्यान्यस्त्ता

वलिमपिवलिमत्वाऽवेष्टयद्ध्वांक्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः १७
यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वंद्वधर्माविनष्टाः सपदिगृह
कुटुंबंदीनमुत्सृज्यदीनाबहवइहविहंगाभिक्षुचर्यांचरंति १८ वयमृतमिवजिह्म
व्याहृतंश्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वोहरिण्यः ।। यापित्यक्तुंनशक्नुमइति

निदापरत्वेऽप्यंतावच्छ्रेष्ठोतोऽर्थः दुस्त्यजत्वेपिपारमार्थिकोयमर्थः विधूतद्वंद्वधर्माइत्यंतः समासः पूर्ववत्ततस्तेचतेअ
विष्टाश्चेतिसमासः इतरेपुनर्द्वंद्वधर्मिणोविनष्टाएवसपदितत्क्षणमेवदीनंतुच्छंगृहसहितंकुटुंबंविहायदीनाइवस्थ
किंचनाः धीराइतिवापाठः बहवोविहंगाहंसाइवसारासारविवेकचतुराः भिक्षुचर्यांपारमहंस्यंचरंति तस्मादेवंपरमपु
रुषार्थरूपत्वात्दुस्त्यजएवतत्कथार्थइति १८ ननुकिमेवंब्रूषेपूर्वंत्वयैवसाकंरहसिकिमेवंनावोचदितिअतआह व
यमिति हेउपमंत्रिन् दूतआस्तामियंवार्तायतः कुलिकस्यमृगयोः रुतंगीतंअज्ञाय[illegible]ऋतंसत्यमिवश्रद्दधानाः ।।

१५२

कृष्णस्य हरिणस्य वध्वो भार्याः हरिण्यः शरैः क्षताः सत्यो रुजो ददृशुः एवं जिह्मस्य कुटिलस्य तस्य व्याहृतं ऋतमिव श्रद्दधानाः स्म हयं त्सो वयं असकृदेतद्ददृशिम किं तत तस्य नखैः स्पर्शस्तेन तीव्रः स्मरः तेन रुजः पीडाः तस्मादन्यावार्त्ताभण्यतां कथ्यतामिति १९ परावृत्य गत्वा पुनरागतं प्रत्याह प्रियसखेति हे प्रियस्य सखे प्रेयसा कृष्णेन पुनः प्रेषितः किं त्वमागतोसि हे अंग हे दूत मे माननीयः पूज्योसि अतो भवान् किमनुरुंधे प्राप्तुमिच्छतीत्यर्थः तद्वरय वृणीष्व संमानि

ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुजउपमंत्रिन्भण्यतामन्यवार्त्ता १९ प्रियसखपुनरागाः प्रेयसाप्रेषितः किंवरयकिमनुरुंधेमाननीयोऽसिमेंग नयसिकथमिहास्मानदुस्त्यजद्वंद्वपार्श्वंसततमुरसिसौम्यश्रीर्वधूःसाकमास्ते २० अपिवतमधुपुर्यामार्यपुत्रोऽधुनास्तेस्मरतिसपितृगेहान् सौम्यबंधूंश्चगोपान् क्वचिदपिसकथानः किंकरीणांगृणीतेभुजमगरुसुगंधंमूर्ध्न्यधास्यत्कदानु २१ श्रीशुकउवाच अथोद्धवोनिशम्यैवंकृष्णदर्शनलालसाः सांत्वयन्प्रियसंदेशैर्गोपीरिदमभाषत २२ ॥

तं प्रत्याह नयसीति इह सतीः अस्मान् दुस्त्यजं द्वंद्वं मिथुनीभावो यस्य तस्य पार्श्वं समीपं कथं नयसि नेष्यसि तथाह हे सौम्य श्रीर्नाम वधूः साकं सहैव सततमास्ते तत्राप्युरसि वक्षस्येव २० तेन संमंत्रितास्सतीर्ब्रूते अपि बतेति बत हर्षे हे सौम्य गुरुकुलादागत्य आर्यपुत्रः श्रीकृष्णः अधुना किं मधुपुर्यां वर्तते कदाचिदपि नोऽस्माकं वार्त्ताः किं ब्रूते अगरुवत्सुगंधं भुजं नो मूर्ध्नि कदा नु धास्यतीति २१ श्रीकृष्णदर्शनोत्सुकगोपीः प्रियस्य संदेशैः सांत्वयन् प्रथमं तावदिदमभाषत २२

नदाहषद्भिः अहोइति स्मनूनंयूयंपूर्णार्थाः कृतार्थाः २३ श्रेयोभिः श्रेयःसाधनैः २४ अनुत्तमा अतिश्रेष्ठाः २५ अवृणीत
वृतवत्यः २६ सर्वात्मभावः एकांतभक्तिः अधिकृतः प्राप्तः भगवत्प्रेमसुखदर्शनेनममैवमहाननुग्रहः कृतइति २७ भर्तुः
कृष्णस्यरहस्करः रहस्यकार्य्यकर्त्ता २८ भवतीनांमेमयासहवियोगोनास्तिकुतः सर्वात्मनासर्वस्योपादानकारणेनअन

उद्धवउवाच अहोयूयंस्मपूर्णार्थाभवत्योलोकपूजिताः वासुदेवेभगवतियासांमित्य
र्पितंमनः २३ दानव्रततपोहोमजपस्वाध्यायसंयमैः श्रेयोभिर्विविधैश्चान्यैः कृष्णेभ
क्तिर्हिसाध्यते २४ भगवत्युत्तमश्लोकेभवतीभिरनुत्तमा भक्तिःप्रवर्तितादिष्ट्यामुनी
नामपिदुर्ल्लभा २५ दिष्ट्यापुत्रान्पतीन्देहान्स्वजनान्भवनानिच हित्वाऽवृणीतयू
यंयत्कृष्णाख्यंपुरुषंपरं २६ सर्वात्मभावोऽधिकृतोभवतीनामधोक्षजे विरहेणम
हाभागामहान्मेऽनुग्रहःकृतः २७ श्रूयतांप्रियसंदेशोभवतीनांसुखावहः यमादायाग
तोभद्राअहंभर्तूरहस्करः २८ श्रीभगवानुवाच भवतीनांवियोगोमेनहिसर्वात्मनाक्व
चित् यथाभूतानिभूतेषुखंवाय्वग्निर्जलंमही २९ तथाऽहंचमनःप्राणभूतेंद्रियगुणाश्रयः

एवसर्वेषुमनआदिकार्येषुअहमनुगतत्वेनस्थितइतिसदृष्टांतमाह यथेति भूतेषुचराचरेषुमहाभूतानियथावा
य्वग्निः वायुसहितोग्निः वायुश्चाग्निश्चेत्यर्थः २९ तथाहंचेतिमनआदीनिकार्य्याणिगुणाः कारणंतेषामाश्रयत्वेना
नुगतइत्यर्थः ननुकारणत्वेच सर्वानुगतत्वेचकार्यकारणभेदःस्यात् अतआह आत्मन्येवेति ॥ ६ ॥

ननुनित्यसिद्धस्य कुतः सृष्ट्यादिरूपता अत आह भूतेंद्रियगुणात्मना बुद्धींद्रियगुणाश्रय इति वा पाठः तद्रूपेण आश्रय
इति ३० ननु निर्विकारस्य कुतस्तद्रूपतेति तत्राह आत्ममायानुभावेनेति ३१ नन्वात्मनो भूतादिरूपत्वेन दोषप्रसंग
स्यात्तत्राह आत्मेति आत्मा तु शुद्धः कुतः अगुणान्वयः न गुणेषु अन्वेतीति तथा तत् कुतः व्यतिरिक्तः तदपि कुतः ज्ञानमयः
ज्ञानस्वरूपः नन्वहमिति प्रत्यये स्वसंवेद्यमेवात्मनो नानाऽवस्थावत्वमिति कुतः शुद्धतेति तत्राह सुषुप्तीति मायाकार्यै
मनोवृत्तिभिः विश्वतैजसप्राज्ञरूपेण प्रतीयते न स्वत इत्यर्थः ३२ कुतः मनोनिरोधेन तदभावादिति व्यतिरेकं दर्शयितुं मनो

आत्मन्येवात्मनात्मानं सृजे हन्म्यनुपालये ३० आत्ममायानुभावेन भूतेंद्रियगुणात्मना
३१ आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरी
यते ३२ येनेंद्रियार्थान्ध्यायेत मृषा स्वप्नवदुत्थितः तन्निरुंध्यादिंद्रियाणि विनिद्रः प्र
त्यपद्यत ३३ एतदंतः समाम्नायो योगः सांख्यं मनीषिणां त्यागस्तपो दमः सत्यं समुद्रां

निरोधं विधत्ते येनेति उत्थितः पुमान् यथा मिथ्याभूतमेव स्वप्नं ध्यायति [illegible]दे बाधितानपी ७७ ताइवापगाः ३४
द्रियार्थान् शब्दादीन् येन मनसा ध्यायेत चिंतयेत् ध्यायंश्च येन इंद्रियाणि प्राप्तपद्यत प्राप तन्मनः विनिद्रः अनलसः
सन्निरुंध्यात नियच्छेदिति ३३ तावता च कृतार्थो भवतीत्याह एतदंत इति एष मनोनिरोधः अंतः समाप्तिः फलं यस्य सः
समाम्नायो वेदः स तत्र पर्य्यवस्यतीत्यर्थः योगोऽष्टांगः सांख्यं आत्मानात्मविवेकः त्यागः संन्यासः तपः स्वधर्मः दमः
इंद्रियदमनं सत्यं यथार्थभाषणं मार्गभेदेऽपि एकत्र पर्यवसाने दृष्टांतः समुद्रांतो आपगा नद्य इवेति ३४ ॥ ९ ॥ ९ ॥

४० भा० द० पू० १५१

ननु किमन्यानिवास्मानात्मविद्यया प्रलोभयसि वयं तु सर्वसुंदरसकलगुणगृह्णालंबनेन॥ या त्वहं नैव सहाम इति चेदत आह यत्त्वहमिति दृशां दूरे यद्वर्ते तत्मदनुध्यानार्थं तच्च ध्यानं मनसः सन्निकर्षार्थमिति ३५ एतदुपपादयति त्रयेण य थादूरचर इति ३६ ३७ उपैष्यथेति माधुर्यमात्रमिति चेदत आह या इति हे कल्याण्यः स्वभर्तृभिः प्रतिबद्धा या वने क्रीडता

यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशां मनसः संनिकर्षार्थं मदनुध्यानकाम्यया ३५ यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते स्त्रीणां च न तथा चेतः संनिकृष्टेऽक्षिगोचरे ३६ मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्तियत् अनुस्मरंत्यो मां नित्यमचिरान्मामुपैष्यथ ३७ या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिंतया ३८ श्रीशुक उवाच एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ता ऊचुरुद्धवं प्रीतास्तत्संदेशागतस्मृतीः ३९ गोप्य ऊचुः दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् दिष्ट्याप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना ४० कच्चिद्गदाग्रजः सौम्य करोति पुरयोषितां प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ४१ ॥ मया सह अलब्धक्रीडाया भिस्तास्तदैव मामां आपुः आपुः ३८ तस्य संदेशेन आगतास्मृतिर्यासां ताः प्रथमार्थे द्वितीया ३९ यदूनां अहितः शत्रुः अघकृत् दुःखदः दिष्ट्या। त्यानंदे आप्तैः प्राप्तैः हितैर्वा सह ४० अन्या ऊचुः कच्चिदिति नो अस्माकं करणीयां प्रीतिं कच्चित्पुरयोषितां करोति स्निग्धं च तत्सव्री

१५१

अन्याऊचुः कथमिति तासांवाक्यैर्विभ्रमैश्चानुपूजितः ४२ पुनरन्याऊचुः किमनयाचिंतयास्मान् क्वचित्प्रस्तुतेप्रस्ता
वेस्मरतिकिंग्राम्याः अविदग्धाः ४३ अन्याऊचुः ताः किमिति कुमुदैः कुंदैः शशांकेन चरम्येवृंदावनेक्वणंतिचरणनूपु
राणियस्यांतस्यांरासगोष्ठ्यांअस्माभिः प्रियाभिः ईडितामनोज्ञाः कथायस्यसः तदायासुनिशासुरेमेताः कदाचित् किं
नुस्मरतिवानवेति ४४ स्वनिमित्तेनशोकेनतप्ताः नः अस्मान्गात्रैः करस्पर्शादिभिः संजीवयन्किंनुइहएष्यतीति ४५

कथंरतिविशेषज्ञः प्रियश्चवरयोषितां नानुबध्येततद्वाक्यैर्विभ्रमैश्चानुपूजितः ४२
अपिस्मरतिनः साधोगोविंदः प्रस्तुतेक्वचित् गोष्ठीमध्येपुरस्त्रीणांग्राम्याः स्वैरकथां
तरे ४३ ताः किंनिशाः स्मरतियासुतदाप्रियाभिर्वृंदावनेकुमुदकुंदशशांकरम्ये रे
मेक्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथः कदाचित् ४४ अप्येष्यती
हदाशार्हस्तप्ताः स्वकृतयाशुचा संजीवयन्नुनोगात्रैर्यथेंद्रोवनमंबुदैः ४५ कस्मात्
कृष्णइहायातिप्राप्तराज्योहताहितः नरेंद्रकन्याउद्वाह्यप्रीतः सर्वसुहृद्वृतः ४६ किम
स्माभिर्वनौकोभिरन्याभिर्वामहात्मनः श्रीपतेराप्तकामस्यक्रियेतार्थः कृतात्मनः ४७

अन्याऊचुः कस्मादिति अनन्यगतित्वेनपूर्वमत्रावरत् संप्रतिमहद्ऐश्वर्यंप्राप्तः कस्मादिहागमिष्यतीति ४६ म
अन्यास्तुपरमार्थमूचुः किमस्माभिरिति वनचरीभिरस्माभिः अन्याभिर्वाराजकन्याभिर्म्महात्मनो धीरस्यकिंचश्रीप
तेः तदप्यासांस्वतएवाप्तकामस्यअतएवकृतात्मनः पूर्णस्यकिंकोप्यर्थः क्रियतनकोपीतिइति ॥ ४७ ॥ ७ ॥ ९ ॥

यतोऽघटमानायां कृष्णस्य संगतिः सैवास्मान् व्याकुलयति अतो नैराश्यमेव परं सुखं नो वा नितिदुष्करमित्याहुः परं सौख्य मिति स्वैरिणी कामचारिणी ४८ संविदं एकांतवार्त्तां ४९ किं च तद्विस्मर्तुं तोन तोषंते दुःखमसिलाऽपि नास्माकं नवतीत्या

परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिंगला तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ४८
क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदं अनिच्छतोऽपि यस्य श्रीरंगान्न च्यवते क्वचित् ४९
सरिच्छैलवनोद्देशा गावो वेणुरवा इमे संकर्षणसहायेन कृष्णेनाचरिताः प्रभो ५० पुनः
पुनः स्मारयंति नंदगोपसुतं वत श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ५१ गत्याल
लितयोदारहाससलीलावलोकनैः माध्व्या गिरा हृतधियः कथं तं विस्मरामहे ५२ हे ना
थ हे रमानाथ व्रजनाथार्तिनाशन मग्नमुद्धर गोविंद गोकुलं वृजिनार्णवे ५३ श्रीशुक उवा
च ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वराः उद्धवं पूजयांचक्रुर्ज्ञात्वात्मानमधोक्षजं ५४
उवास कतिचिन्मासान् गोपीनां विनुदन् शुचः कृष्णलीलाकथां गायन् रमयामास गोकुलं ५५

५५ यावंत्यहानि नंदस्य व्रजेऽवात्सीत्स उद्धवः व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्तया
हुः सरिच्छैलेति त्रिभिः आचरिताः सेविताः ५० ५१ हे उद्धव कथं विस्मरामेति ५२ ५३ श्रीकृष्णमधोऽक्षजं
ज्ञात्वा तं च स्वात्मानं ज्ञात्वा ५४ विनुदन् अपनयन् ५५ ५६ ॥ श्रीरामचंद्राय नमः ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

सरिद्वनगिरिदर्य्यादिषु प्रत्येकं श्रीकृष्णलीलासंप्रश्नादिभिः संस्मारयन् रेमे ५७ कृष्णावेशेनात्मना मनसो विक्लव्यं ।
ताः गोपीर्नमस्यन् नमस्करिष्यन् ५८ उत्तमस्यात्मनो गोपस्त्रीनमस्कृतिरन्याय्या न भवतीति दर्शयितुं तासां महत्वं पंच
भिर्जगौ उवाच एता इति एताः परं केवलं तनुभृतः सफलजन्मानः रूढभावाः परमप्रेमवत्यः यदिति यं रूढभावं भव
भियो मुमुक्षवः मुनयः मुक्ता अपि वांछंति वयं च भक्ता अपि वांछंति अतः अनंतस्य कथासु रसो रागो यस्य तस्य ब्रह्मज

सरिद्वनगिरिद्रोणीर्वीक्षन् कुसुमितान् द्रुमान् कृष्णं संस्मारयन् रेमे हरिदासो व्रजौकसां
५७ दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवं उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ५८
एताः परं तनुभृतो भुवि गोपवध्वो गोविंद एव निखिलात्मनि रूढभावाः वांछंति यद्भव-
भियो मुनयो वयं च किं ब्रह्मजन्मभिरनंतकथारसस्य ५९ क्वेमाः स्त्रियो वनचरीर्व्यभि
चारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावः नन्वीश्वरोऽनुभजतोऽविदुषोपि साक्षात्
श्रेयस्तनोत्यगदराज इवोपयुक्तः ६० नायं श्रियोऽङ्ग उ नितांतरतेः प्रसादः स्वर्योषितां न
ऽलिनगंधरुचां कुतोऽन्याः

न्मभिर्विप्रसंबंधिभिः शौक्लसावित्रयाज्ञिकैस्त्रिभिर्जन्मभिः किं कोतिशयः
यत्र तत्र जातः स एव सर्वोत्तम इत्यर्थः यद्वा अनंतकथासु रसो रागो यस्य [illegible] ब्रह्मजन्मभिश्चतुर्मुखजन्मभिरपि किमित्य
र्थः ५९ किं च ईश्वरप्रसादो महत्वे कारणं तस्य च न जाती राचारो ज्ञानं वा कारणं किंतु केवलं भजनमेवेत्याह क्वेमा इति
साक्षाद्भजतः पुंसः ननु अहो उपयुक्तः सेवितः अगदराज अमृतं यथेति ६० अथैता पर्[illegible]यगोपीषु भगवतः ॥ ६ ॥

४७
भा०द०
पू०
१६१

प्रसाद इत्याह नायमिति अंगे वक्षसि उ अहो नितांतरतेः एकांतरतिमत्याः श्रियोपि ना[य] प्रसादः अनुग्रहोऽस्ति नलिन
स्यैव गंधो रुक् कांतिश्च यासां तासां स्वर्गांगनानाम् अप्सरसामपि नास्ति अन्याः पुनर्दूरतो नि[र]स्ताः रासोत्सवेऽस्य भुजदंडा
भ्यां गृहीतः आलिंगितः कंठस्तेन लब्धा आशिषो याभिस्तासां गोपीनां य उदगांत आविर्बभूव ६१ किंच आसां ता

रासोत्सवेस्य भुजदंडगृहीतकंठलब्धाशिषां य उदगाद्व्रजसुंदरीणां ६१ आसामहो च
रणरेणुजुषामहं स्यां वृंदावने किमपि गुल्मलतौषधीनां या दुस्त्यजं स्वजनमार्यपथं
च हित्वा भेजुर्मुकुंदपदवीं श्रुतिभिर्विमृग्यां ६२ या वै श्रियाऽर्चितमजादिभिराप्त
कामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्यां कृष्णस्य तद्भगवतश्चरणारविंदं न्यस्तं स्तने
षु विजहुः परिरभ्य तापं ६३ वंदे नंदव्रजस्त्रीणां पादरेणुमभीक्ष्णशः यासां हरिकथो
द्गीतं पुनाति भुवनत्रयं ६४ श्रीशुक उवाच अथ गोपीरनुज्ञाप्य यशोदां नंदमेव च गो
पानामंत्र्य दाशार्हो यास्यन्नारुरुहे रथं ६५ तं निर्गतं समासाद्य नानोपायनपाणयः नं
दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ६६ मनसो वृत्तयो नः स्युः कृष्णपादांबुजाश्र
याः

वद्गोपीनां भाग्यं मम त्वेतावत्प्रार्थ्यमित्याह आसामिति गोपीनां चरणरेणुभाजां गुल्मादीनां मध्ये यऽऽ
तं किमप्यहं स्यामित्याशंसा कथंभूतानां या इत्यादि आर्याणां मार्गधर्मं च हित्वा ६२ पुनस्ता एव विशिनष्टि या वा इति योगेश्वं
रैरप्यात्मन्येवाचिंतस्तनेषु न्यस्तं परिरभ्य तापं जहुरिति ६३ एवं महत्त्वं प्रतिपाद्य नमस्करोति वंद इति ६४ अनुज्ञाप्य अनुज्ञां

कृष्णपादांबुजाश्रयाः स्युः अभिधायिनी: अभिध्यायिन्यः ६७ ६८ ६९ कृष्णेरतिः स्यादितिकृष्णादिभ्योभक्त्युद्रेकमा
त्रमुपायनानिचअदादिति ७० इतिदशमेटीकायांसप्तचत्वारिंशोध्यायः ४७ अष्टचत्वारिंशकेऽथकृष्णः कुब्जामर म

वाचोऽभिधायिनीर्नाम्नांकायस्तत्प्रह्वणादिषु ६७ कर्म्मभिर्भ्राम्यमाणानांयत्रक्वापी
श्वरेच्छया मंगलाचरितैर्दानैरतिर्नःकृष्णईश्वरे ६८ एवंसभाजितोगोपैः कृष्णभ
क्त्यानराधिप उद्धवःपुनरागच्छन्मथुरांकृष्णपालितां ६९ कृष्णायप्रणिपत्याहभक्त्यु
द्रेकंव्रजौकसां वसुदेवायरामायराज्ञेचोपायनान्यदात् ७० इतिश्रीभागवतेमहापु
राणेदशमस्कंधेउद्धवप्रतियानेसप्तचत्वारिंशोध्यायः ४७ श्रीशुकउवाच अथवि
ज्ञायभगवान्सर्वात्मासर्वदर्शनः सैरंध्र्याःकामतप्तायाः प्रियमिच्छन्गृहंययौ १
महार्होपस्करैराढ्यंकामोपायोपबृंहितं मुक्तादामपताकाभिर्वितानशयनादिभिः
धूपैःसुरभिभिर्दीपैःस्रग्गंधैरपिमण्डितम् २ गृहंतमायांतमवेक्ष्यसासनात्सद्यःसमुत्था
यहिजातसंभ्रमा यथोपसंगम्यसखीभिरच्युतंसभाजयामाससदासनादिभिः ३ तथो[illegible]त:अक्रू

रस्यगृहंगत्वातंगजाह्वयमादिशत् १ सैरंध्र्याःकामभापूर्य्यपूरयित्वामनोरथान् अक्रूरस्य[illegible]तःकृष्णस्तेन[illegible]नसांत्व
यत २।१ महार्हैरनर्घ्यैःउपस्करैःगृहोपस्करणैरन्वितंकामोपायैस्तदुद्दीपकैःसुरतबंध[illegible]दिलेख्यैःउपबृंहितम् २ यथाय

॥४॥ प्रसाधितोयोग्यतामापादित आत्मादेहोययासा सव्रीडंयत्स्त्रीलयाउन्नतं येईक्षितेर्भ्रमे पुतद्युक्तैरीक्षितैरुपल-
क्षिता ५ अनुलेपार्प्पणादन्यत्तस्याःपुण्यंनास्तीतिदर्शयितुंपुण्यलेशायेत्युक्तंनतुपुण्यस्याल्पत्वविवक्षया ६ कुचादी

तथोद्धवःसाधुतयाऽभिपूजितोन्यषीददुर्व्यामभिमृश्यचासनं कृष्णोपितूर्णंशयनंमह-
द्धनंविवेशलोकाचरितान्यनुव्रतः ४ सामज्जनालेपदुकूलभूषणस्रग्गंधतांबूल-
सुधासवादिभिः प्रसाधितात्मोपससारमाधवंसव्रीडलीलोत्स्मितविभ्रमेक्षितैः ५ आ-
हूयकांतांनवसंगमह्रियाविशंकितांकंकणभूषितेकरे प्रगृह्यशय्यामधिवेश्यरामया-
रेमेऽनुलेपार्प्पणपुण्यलेशया ६ साऽनंगतप्तकुचयोरुरसस्तथाऽक्ष्णोर्जिघ्रंत्यनं-
तचरणेनरुजोमृजंती दोर्भ्यांस्तनांतरगतंपरिरभ्यकांतमानंदमूर्तिमजहादतिदीर्घतापं
७ श्रीशुकउवाच सैवंकैवल्यनाथंतंप्राप्यदुष्प्रापमीश्वरं अंगरागार्प्पणेनाहोदुर्भगेद-
मयाचत ८ आहोष्यतामिहप्रेष्ठदिनानिकतिचिन्मया रमस्वनोत्सहेत्यक्तुंसंगंतेंबुरुहेक्ष-
ण ९ तस्यैकामवरंदत्वामानयित्वाचमानदः सहोद्धवेनसर्वेशःस्वधामागमदर्चितः १०

नंतिजोमृजंतीति जिघ्रंतीवचरणौ ७ काममेवप्राकृतदृष्ट्याअयाचत नचगोप्यइवसातन्निष्ठेतिदुर्भगेत्युक्तं
कृतार्थत्वेतुतस्यानसंदेहः ८।९ कामएववरस्तंदत्वामानयित्वाचालंकारादिदानैः ॥ १० ॥ ४२ ॥ ४२ ॥ ४२ ॥

मनोग्राह्यं विषयसुखं असत्वात् तुच्छत्वात् ११ किंचिच्चिकीर्षयन् हस्तिन पुरप्रस्थापनं कारयितुमिच्छन्नित्यर्थः अ
क्रूरप्रियकाम्यया च १२ आरात् दूरत एव १३ १४ आश्र पइति च्छेदः अपश्चासर्वतो धारयन्नित्यन्वयः १५ १६ वां युव
योरिदं कुलं उद्धृतं समेधितं च १७ वामिदं कुलमित्यादि व्यवहारदृष्ट्योक्तं परमार्थमाह युवामिति जगन्मयौ युवां कु

दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरं यो वृणीते मनोग्राह्यम सत्वात् कुमनीष्यसौ ११
अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः किंचिच्चिकीर्षयन् प्रागादक्रूरप्रियकाम्यया १२
सतान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबांधवान् प्रत्युत्थाय प्रमुदितः परिष्वज्याभिनंद्य च १३ नना
मकृष्णं रामं च स तैरप्यभिवादितः पूजयामास विधिवत्कृतासनपरिग्रहान् १४ पादाव
नेजनीरापो धारयंश्छिरसा नृप अर्हणेनांबरैर्दिव्यैर्गंधस्रग्भूषणोत्तमैः १५ अर्चित्वा शि
रसानम्य पादावंकगतौ मृजन् प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत १६ दिष्ट्या पापो
हतः कंसः सानुगो वामिदं कुलं भवद्भ्यामुद्धृतं कृच्छ्रा द्दुरंताच्च समेधितं १७ युवां प्रधान
पुरुषौ जगद्धेतू जगन्मयौ भवद्भ्यां न विनाकिंचित्परमस्ति न चापरं १८ आत्मसृष्टमिदं

तः जगद्धेतू तदपि कुतः प्रधानपुरुषौ तदात्मकौ अतः भवद्भ्यां विना परं कारणं विश्वमन्वा विश्यस्वशक्तिभिः
अपरं कार्यं च नास्तीति १८ ननु प्रत्यक्षादिसिद्धं कथं नास्तीत्युच्यते अत आह आत्मसृष्टमिदं हे ब्रह्मन् परमेश्वरऽजेति वा

४
भा०द०
पू०
१६३

रजआदिस्वशक्तिभिः आत्मनैवसृष्टमिदंविश्वं अन्वाविश्यकारणात्मत्वादनुप्रविष्टोप्यसुप्रविश्येवस्थितः अतप्रत्य
क्षगोचरंयथाभवतितथाबहुधाभवानेवप्रतीयसे १९ एकस्यैवबहुधाप्रतीतिंसदृष्टांतमाह यथाहीति योनिषु स्वैव
रूपांतरेणाभिव्यक्तिस्थानेषुचराचरेषुयथामहीआदीनिकारणानि नानाभांति आत्मयोनिषुस्वकारणेषु देवभो
तिकेषुजीवोविनस्मृगादिशरीरेषुवालयुवाद्यवस्थासुचतथातथाप्रतीयतेइतितत्व्यवच्छेदेनं आत्मतंत्रग्रहणं २० न
नुसृष्ट्यादिकर्तृत्वेनसगुणत्वेनचममकिंजीववद्बंधउक्तः नहिनहीत्याह सृजसीति तद्गुणकर्मभिर्वानैर्गुण्यैः कर्मभि

ईयतेबहुधाब्रह्मन्श्रुतप्रत्यक्षगोचरं १९ यथाहिभूतेषुचराचरेषुमह्यादयोयोनिषुभां
तिनाना एवंभवान्केवलआत्मयोनिष्वात्मात्मतंत्रोबहुधाविभाति २० सृजस्यथोलुंप
सिपासिविश्वंरजस्तमःसत्वगुणैःस्वशक्तिभिः नवध्यसेतद्गुणकर्मभिर्वाज्ञानात्मनस्तेक्व
चबंधहेतुः २१ देहाद्युपाधेरनिरूपितत्वाद्भवोनसाक्षान्नभिदात्मनःस्यात् ॥ ६ ॥ ६

र्वेत्यर्थः यतःक्वचकदाचिदपिबंधहेतुरविद्यातवनैवास्तिकुतइत्यतआह ज्ञानात्मनइति मायायाआश्रय
ावरकत्वादितिभावः २१ किंचआस्तांतावद्बंधशंकायतोऽविद्योपाधेर्जीवात्मनोऽपिनवस्तुतोबंधोस्तीत्याह देहा
द्युपाधेरितिभवोजन्मतन्मूलाभिदाचंसाक्षात्स्वरूपतोनस्यादितिननुममबंधाभावंवदतात्वयाकिंमोक्षोंगीक्रियते
मितिचेत्तर्हिबंधाभावेमोक्षासंभवादापन्नोबंधोपीत्याशंक्याह अतइति यतोनाविद्याअतोनबंधश्चमोक्षश्चए
वमुभौनस्यातामित्यर्थः ननूलूखलेमांवद्धंकृतवान् यमुनाहृदेतुमुक्तंदृष्टवानसिअतः कथमुभयंनास्तिअतआह

निकामइति स्वाभिप्रायानुरूपस्त्वयिनोऽस्माकमविवेकएवपरमेवंभूतइति यद्वानोऽस्माकमविवेकएवतवोभीस्यात्तामि
ति २२ ननुतर्हिममावतारास्तच्चरित्राणिचशुक्तिरजतवदविद्याकल्पितान्येवकिंनहिनहि इयंतुतवलीलेत्याहद्वयेनत्व
योदितइति २३ सुरेतरांशायेराजानस्तेषामक्षौहिणीशतानांवधेनभूमेर्भारमपनेतुंस्वांशेनरामेणसहावतीर्णोसीति ४।

अतोनबंधस्तवनैवमोक्षः स्यातांनिकामस्त्वयिनोऽविवेकः २२ त्वयोदितोऽयंजगतोहि
ताययदायदावेदपथः पुराणः वाध्येतपाखंडपथैरसद्भिस्तदाभवानसत्वगुणंविभ
र्ति २३ सत्वंप्रभोऽद्यवसुदेवगृहेऽवतीर्णः स्वांशेनभारमपनेतुमिहासिभूमेः अक्षौहिणी
शतवधेनसुरेतरांशराज्ञाममुष्यचकुलस्ययशोवितन्वन् २४ अद्येशनोवसतयः खलु
भूरिभागायः सर्वदेवपितृभूतनृदेवमूर्तिः यत्पादशौचसलिलंत्रिजगत्पुनातिसत्वंज
गद्गुरुरधोक्षजयाः प्रविष्टः २५ कः पंडितस्त्वदपरंशरणंसमीयाद्भक्तप्रियादृतगिरः
सुहृदः कृतज्ञात सर्वान्ददातिसुहृदोभजतोऽभिकामानात्मानमप्युपचयापचयौ

अतएवंभूतस्यतवागमनेनकृतार्थोस्मीत्याहद्वाभ्याम् अद्येतिहेईश अद्यनोवसतयोगृहास्तपोऽनयस्य २६
वनादपिबहुपुण्याः कुतः यावसतीः त्वंसाक्षात्प्रविष्टः कथंभूतः यस्तवपादसलिलंगंगात्रिजगत्पुनातिय
स्त्वंपंचयज्ञदेवतामूर्तिः सत्वंजगद्गुरुरिति २५ स्वसमृद्ध्यर्थः परिपूरितइतितुष्यन्नाह कः पंडितइति ऋतागिरः सत्यवा
चः त्वत्तोऽपरंशरणंकः समीयातगच्छेत यतोभवानभजतः सर्वानभिमतः कामांश्च ददाति आत्मानमपीति २६॥६॥

भा०द०
पू०
४६४

नत्वविवेकिनांतत्रापिइहमहएव २२ २८ वःयुष्माकंम्ह सेपुत्राहिवयमिति २९ ननुन्धभिर्देवाः सेव्याइतिप्रसिद्धंतत्राह देवाइति स्वार्थाःस्वकार्यसाधनपराः साधवस्तुकेवलंपरानुग्रहपराःपरमार्थतस्तुसाधवएवदेवाइतिभा० सेव्या इत्यर्थः ३० तर्हिमृच्छिलादिमयाः किंदेवादयोसेव्यतआह नहीति अम्मयानितीर्थानिमृन्मयाः शिलाम ञ्चदे

दिष्ट्याजनार्दनभवानिहनःप्रतीतोयोगेश्वरैरपिदुरापगतिःसुरेशैः छिंध्याऽऽशुनःसुतकलत्रधनाप्तगेहदेहादिमोहरशनांभवदीयमायां २७ इत्यर्चितःसंस्तुतश्चभक्तेनभगवान्हरिः अक्रूरंसस्मितंप्राहगीर्भिःसंमोहयन्निव २८ श्रीभगवानुवाच त्वंनोगुरुःपितृव्यश्चश्लाघ्योबंधुश्चनित्यदा वयंतुरक्ष्याःपोष्याश्चअनुकंप्याःप्रजाहिवः २९ भवद्विधामहाभागानिषेव्याअर्हसत्तमाः श्रेयस्कामैर्नृभिर्नित्यंदेवाःस्वार्थानसाधवः ३० नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः तेपुनंत्युरुकालेनदर्शनादेवसाधवः ३१ सभवान्सुहृदांवैनःश्रेयान्श्रेयश्चिकीर्षया जिज्ञासार्थंपांडवानांगच्छस्वत्वंगजाह्व

युनभवंतीतिनअपितुभवंत्येवतथापिसाधूनांतेषांचमहदंतरमित्याहतेपुनंतीति ३१ किंचिच्चि ऽऽयं ३२ रोषयन्प्रागादितियदुक्तंतत्कार्यमादिशति सइति नःसुहृदांमध्येभवान्श्रेष्ठःअतःपांडवानांश्रेयश्चिकीर्षयाग जाव्हयंगच्छस्वगच्छेति यद्वास्वेतिपृथक्पदंहेस्वआत्मीयेत्यर्थः ३२ राज्ञाधृतराष्ट्रेणवसंतेनिवसंतिशुश्रुमश्रुतवंतो

दुष्टायेस्वपुत्रादुर्योधनादयः तद्वशेनगच्छतीतितथा यतः अंधदृक् अंधनेत्रः धृतराष्ट्रः ३४ ३५ ३६ इतिदशमेऽष्ट
चत्वारिंशोऽध्यायः ४८ ॥ ऊनपंचाशत्तमेतुगत्वाऽक्रूरोगजाव्हयं राज्ञःस्वभ्रातृपुत्रेषुवुध्वावैषम्यमागमत् १ पौ
रवेंद्राणांयशोभिः ततत्कृतदेवब्राह्मणायतनादिभिरंकितं १ वाल्हीकपुत्रःसोमदत्तः भारद्वाजोद्रोणः गौतमःकृपः २

पितर्युपरतेबालाः सहमात्रासुदुःखिताः आनीताः स्वपुरंराज्ञावसंतइतिशुश्रुम ३३ ते
तेपुराजांऽबिकापुत्रोभ्रातृपुत्रेषुदीनधीः समोनवर्ततेनूनंदुष्पुत्रवशगोऽन्धदृक् ३४
गच्छजानीहितद्वृत्तमधुनासाध्वसाधुवा विज्ञायतद्विधास्यामोयथाशंसुहृदांभवेत्
३५ इत्यक्रूरंसमादिश्यभगवान्हरिरीश्वरः संकर्षणोद्धवाभ्यांवैततःस्वभवनंययौ
३६ इतिश्रीभागवतेमहापुराणेदशमस्कंधेऽष्टचत्वारिंशोऽध्यायः ४८ श्रीशुकउ
वाच सगत्वाहास्तिनपुरंपौरवेंद्रयशोंऽकितं ददर्शतत्रांबिकेयंसभीष्मंविदुरंपृथां १
सहपुत्रंचवाल्हीकंभारद्वाजंसगौतमं कर्णंसुयोधनंद्रौणिंपांडवान्सुहृदोऽपरान् २
यथावदुपसंगम्यबंधुभिर्गांदिनीसुतः संपृष्टस्तैःसुहृद्वार्तांस्वयंचापृच्छदव्ययं ३
उवासकतिचिन्मासान्राज्ञोवृत्तविवित्सया दुष्प्रजस्याल्पसारस्यखलच्छंदानुवर्तिनः
अव्ययंकुशलं ३ दुष्प्रजस्यअसत्पुत्रस्य अल्पसारस्यमंदधृतेः खलानांकर्णादीनांछंदमिच्छामनुवर्तितुंशीलमस्येति

४१
भा० द०
पू०
१६५

तेजः प्रभावः ओजः शास्त्रादिनैपुण्यं वीर्यं शौर्यं नसहद्भिः असहमानैः चिकीर्षितं इतउपरिकर्तुमिष्टं ५ गरस्यविषस्यदा
नादिअपेशलंअन्याय्यंतेजओजइत्यादिसर्वंव[illegible]थपा[illegible]स ६ तत्कथनात्पूर्वमेवपृथायाः वृत्तमाह पृथात्विति अ

तेजओजोबलंवीर्यंप्रश्रयादींश्च[illegible]णान् प्रजानुरागंपार्थेषुनसहद्भिश्चिकीर्षितं ५
कृतंचघातैर्गराद्यैर्यद्गरदानाद्यपेशलं आचख्यौसर्वमेवास्मैपृथाविदुरएवच ६ पृ
थातुभ्रातरंप्राप्तमक्रूरमुपसृत्यतं उवाचजन्मनिलयंस्मरंत्यश्रुकलेक्षणा ७ अ
पिस्मरंतिनः सौम्यपितरौभ्रातरश्चमे भगिन्योभ्रातृपुत्राश्चजामयः सख्यएवच ८
भ्रात्रेयोभगवान्कृष्णः शरण्योभक्तवत्सलः ९ पैतृष्वस्रेयान्स्मरतिरामश्चांबुरुहेक्ष
णः ९ सपत्नमध्येशोचंतींवृकाणांहरिणीमिव सांत्वयिष्यतिमांवाक्यैःपितृहीनांश्च
बालकान् १० कृष्णकृष्णमहायोगिन्विश्वात्मन्विश्वभावन प्रपन्नांपाहिगोविंदशि
शुभिश्चावसीदतीं ११ नान्यत्तवपदांभोजात्पश्यामिशरणंनृणां बिभ्यतांमृत्युसंसारा
दीश्वरस्यापवर्गिकात् १२ नमः कृष्णायशुद्धायब्रह्मणेपरमात्मने ॥ ऽऽ अश्रूणांकलालेशाः य

योस्तेईक्षणेयस्याः सा ७ अपिकिंजामयः कुलस्त्रियः ८ पैतृष्वस्रेयान्मत्पुत्रान् ९ शोचन्तींमांवाक्यैः सांत्वयिष्य
तिकिं १० हेमहायोगिन्महान्योगउपायोमायाख्योयस्यास्तीति हेविश्वात्मन्सर्वांतर्यामिन्हेविश्वभावनविश्वपाल

प्रपन्नांशरणागतांश्चावसीदन्तींक्लिश्यंतीं ११ आ
पवर्गिकात्मोक्षप्रदात् १२ शुद्धायधर्मात्मनेब्रह्मणे ॥

अपरिछिन्नाय परमात्मने जीवसखाय योगेश्वराय अणिमादियुक्ताय योगाय ज्ञानात्मने १३ प्रपितामही प्रपितामहः पांडुः तस्य भार्या रुरोद १४ पृथया सह समं दुःखं सुखं च यस्य सः तस्याः पुत्राणामुत्पत्तिहेतुभिर्जनकैर्धर्मानिलेंद्रादिभिः तत्कथनैरित्यर्थः १५ बंधुभिः रामकृष्णादिभिः सौहृदेन उदितं उक्तं यत्तदवदद्दिति १६ भ्रातर्युपरत

योगेश्वराय योगाय त्वामहं शरणं गता १३ शुक उवाच इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरं प्रारुदद्दुःखिता राजन् भवतां प्रपितामही १४ समदुःखसुखोऽक्रूरो विदुरश्च महायशाः सांत्वयामासतुः कुंतीं तत्पुत्रोत्पत्तिहेतुभिः १५ यास्यन् राजानमभ्येत्य विषमं पुत्रलालसं अवदत्सुहृदां मध्ये बंधुभिः सौहृदोदितं १६ अक्रूर उवाच भोभो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्द्धन भ्रातर्युपरते पांडावधुनासनमास्थितः १७ धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रंजयन् वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि १८ अन्यथा त्वाचरल्लोके गर्हितो यास्यसे तमः तस्मात्समत्वे वर्तस्व पांडवेष्वात्मजेषु च १९ नेह चात्यंतसंवासः कर्हिचित्केनचित्सह राजन्स्वेनापि देहेन किमु जायात्मजादिभिः २०

इति पांडोः पुत्रेषु सत्सु राजासनं त्वमास्थितः ३ कि[illegible]दाक्षः २१ भवतु तथाप्येवं वर्तमानः श्रेयोऽवाप्स्यसीत्याह धर्मेणेति १८ तमो नरकं इह च महद्दुःखमिति भावः १९ नन्वात्मजानामात्मजादिषु कथं समत्वं स्यात्तत्राह नेह चेति अत्यंतं नित्यं संवासः स

तत्रतावदुत्पत्तिमरणयोः सुखदुःखयोश्चकेनापिसाहित्यंनास्तीत्याह एकइति २१ किंचयदाचसहसंवसंतितदापिक्लेशोपार्जितवित्तापहारितयापुत्रानामशत्रवएवज्ञेयाइत्याह अधर्मेति संभोजनीयाः पोष्याःपुत्रादयइतिव्यपदेशैः अल्पमेधसोमूढस्यवित्तंहरंतिजलौकसोमत्स्यस्यजीवनभूतानिजलानियथातत्पुत्राहरंतितद्वदिति २२ किंचयानेवपुष्णातितेधनान्यादायमृताजीवंतोपिवातंपरित्यजंतीत्याह पुष्णातीति स्वबुध्यास्वीयाइत्यभिमानेनरायःअर्थाः अकृतार्थंअप्राप्तभोगं २३

एकःप्रसूयतेजंतुरेकएवप्रलीयते एकोऽनुभुंक्तेसुकृतमेकएवचदुष्कृतं २१ अधर्मोपचितंवित्तंहरंत्यन्येऽल्पमेधसः संभोजनीयापदेशैर्जलानीवजलौकसः २२ पुष्णातियानधर्मेणस्वबुद्ध्यातमपंडितं तेऽकृतार्थंप्रहिण्वंतिप्राणारायःसुतादयः २३ स्वयंकिल्बिषमादायतैस्त्यक्तोनार्थकोविदः असिद्धार्थोविशत्यंधंस्वधर्मविमुखस्तमः २४ तस्माल्लोकमिमंराजन्स्वप्नमायामनोरथं वीक्ष्यायम्यात्मनात्मानंसमःशांतोभवप्रभो २५ धृतराष्ट्रउवाच यथावदसिकल्याणींवाचंदानपतेभवान् तथाऽनयानतृप्यामिमर्त्यःप्राप्ययथामृतं २६ तथापिसूनृतासौम्यहृदिनस्थीयतेचले पुत्रानुरागविषमेविद्युत्सौदामनीयथा २७ ॥ सपुनःपापैकपाथेयोनरकंविशतीत्याह स्वयमिति असिद्धार्थोऽपूर्णमनोरथः २४ स्वप्नश्चमायाचमनोरथश्चतत्तेनतुल्यंआयम्यनियम्यशांतःसन्समोभवेति २५ हेदानपते अकूरनतृप्यामिअलमितिनमन्ये २६ सूनृताप्रियावाक्चलेअस्थिरेहृदिनस्थीयतेनतिष्ठतीत्यर्थः सुदामापर्वतः तत्रभवाविद्युदिवतस्मिन्स्फटिकशिलामयेसहसैवातिस्फुरिताविद्युद्यथालीयतेतद्वदित्यर्थः यदि

४९
भा० द०
पू०
१६७

नन्वेवंजानतोपिकथमयंमोहइतिचेदतआह ईश्वरस्येतिविधिंविधानंमायामितियावत् २८ अतस्तमेवनम
स्यति यइति दुर्विमर्शपथयाअवितर्क्यमार्गयागुणान्कर्माणितत्फलानिचविभजतेविविच्यददातिदुःखबो

ईश्वरस्यविधिंकोनुविधुनोत्यन्यथापुमान् भूमेर्भारावताराययोऽवतीर्णोयदोःकु
ले २८ योदुर्विमर्शपथयानि जमाययेदंसृष्ट्वागुणान्विभजतेतत
दनुप्रविष्टः तस्मैनमोदुःखबो धविहारतंत्रसंसारचक्रगतयेपर
मेश्वराय २९ श्रीशुकउवाच इत्यभिप्रेत्यनृपतेरभिप्रायंसयाद
वः सुहृद्भिःसमनुज्ञातःपुनर्य दुपुरीमगात् ३० शशंसरामकृष्णा
भ्यांधृतराष्ट्रविचेष्टितं पांडवा न्प्रतिकौरव्ययदर्थंप्रेषितःस्वयं ३१

इतिश्रीभागवतेमहापुराणेदशमस्कंधेवैय्यासिक्यामेकोनपंचाशतमोऽध्यायः ४९

धोयोविहारस्तस्यक्रीडास्एवतंत्रंप्रधानंमुख्यंकारणंयस्यसंसारचक्रस्यअतएवतस्यगतिर्यस्मात् तस्मैनमइति
॥२९॥ अभिप्रेत्यज्ञात्वा ३० ३१ इतिश्रीभागवतेभावार्थदीपिकायांदशमस्कन्धपूर्वार्द्धटीकायामेकोनपञ्चाशत्त
॥ई ॥मोऽध्यायः॥ ४९॥ इतिश्रीपूर्वार्द्धंसमाप्तम् ॥

देवरान्पतिभ्रातॄन् उत सखीन् सखीनपि दृतीभिरुदकनोदनचर्ममयंत्रैः सेचनपात्रैश्च मत्तधियां कामिनां १७ क्रियाभिः अंगक्रियाभिः क्रतुराट् सम्राट् राजसूय इव १८ पत्नीसंयाजो यागविशेषः अवभृथस्तदवधि आवभृथ्यं च तैश्चरित्वा नां

तादेवरानुत सखीन् सिषिचुर्दृतीभिः क्लिन्नांबरा विवृतगात्रकुचोरुमध्याः औत्सुक्यमुक्तकवराच्च्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरैर्विहारैः १७ स सम्राड्रथमारूढः सदश्वं रुक्ममालिनं व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव १८ पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः आचांतं स्नापयांचक्रुर्गंगायां सह कृष्णया १९ देवदुंदुभयो नेदुर्नरदुंदुभिभिः समं मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः २० सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः महापातक्यपि यतः सद्यो मुच्येत किल्बिषात् २१ अथ राजाऽहते क्षौमे परिधाय स्वलंकृतः ऋत्विक्सदस्यविप्रादीनानर्चाभरणांबरैः २२ बंधुज्ञातिनृपान्मित्रसुहृदोऽन्यांश्च सर्वशः अभीक्ष्णं पूजयामास नारायणपरो नृपः २३ सर्वे जनाः सुररुचो मणिकुंडलस्रगुष्णीषकंचुकदुकूलमहार्घ्यहाराः नार्यश्च कुंडलयुगालकवृंदजुष्टवक्त्रश्रियः कनकमेखलया विरेजुः ॥

नतुष्णायेत्यर्थः १९ २० २१ अहते नूतने आनर्च अर्चितवान् २२ २३ सुराणामिव रुक् ॥ २४ ॥
कांतिर्येषां ते मणिकुंडलैः सहिताः स्रगुष्णीषादयो येषां ते कुंडलयुगेन अलकवृंदेन च जुष्टा वक्त्रश्रीर्यासां ताः ॥ २५ ॥

७६
भा॰द॰
उ॰
८५

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ गतज्वरः निश्चिंतआसीत् ३० अच्युतेआत्मायस्यतस्य ३१ नरेंद्रादीनांलक्ष्मीः लक्ष्म्यः।
विभूतयः विश्वसृजामयेनउपक्लृप्ताः विरचितास्ताभिः सहकुरुराट्दुर्योधनोऽतप्यत् ३२ महिषीसहस्रमितिवहुत्वोप

अयर्त्विजोमहाशीलाः सदस्याब्रह्मवादिनः ब्रह्मक्षत्रियविट्शूद्राराजानोयेसमागताः॥
२५ देवर्षिपितृभूतानिलोकपालाःसहानुगाः पूजितास्तमनुज्ञाप्यस्वधामानिययुर्नृप २६
हरिदासस्यराजर्षेराजसूयमहोदयं नैवातृप्यन्प्रशंसंतःपिवन्मर्त्योयथामृतं २७ ततोयु
धिष्ठिरोराजासुहृत्संवंधिवांधवान् प्रेम्णानिवारयामासकृष्णंचत्यागकातरः २८ भगवानपित
त्रागमत्स्वात्सीनतत्प्रियंकरः प्रस्थाप्ययदुवीरांश्वसांवादींश्वकुशस्थलीं २९ इत्थंराजाधर्मसु
तोमनोरथमहार्णवं सुदुस्तरंसमुत्तीर्यकृष्णेनासीद्गतज्वरः ३० एकदांऽतःपुरेतस्यवीक्ष्य
दुर्योधनःश्रियं अतप्यद्राजसूयस्यमहित्वंचाच्युतात्मनः ३१ यस्मिन्नरेंद्रदितिजेंद्रसु
रेंद्रलक्ष्मीर्नानाविभांतिकिलविश्वसृजोपक्लृप्ताः ताभिःपतीन्द्रुपदराजसुतोपतस्थेयस्यां
विषक्तहृदयःकुरुराडतप्यत् ३२ यस्मिंस्तदामधुपतेर्महिषीसहस्रंश्रोणीभरेणशनकैः
लक्षणंक्वणद्भिरंघ्रिभिः श्रोभायस्यमध्येसुचारुसुचारुमध्यमित्यर्थः कुचकुंकुमैः ((क्वणदंघ्रिशोभं॥
श्रोणाहारायस्तनत् श्रीमन्मिमुखानियसततचलैःचपलैःकुंडलैः॥

रामः
८५

कुंतलैश्च आढ्यं संपन्नम शोभनेतिशेषः ३३ क्वापिकदाचित्तस्त्रिरेजइतिशेषः स्वस्यचक्षुषाहिताहितज्ञापकेन ३४ ३५ मानीसाहंकारः किरीटंचमालाचविद्यतेयस्यसः न्यविशत् विवेश क्षिपन् हास्यादीन् अधिक्षिपन् ३६ तत्रस्थलेवस्त्रांतमभ्यगृ

मध्येसुचारुकुचकुंकुमशोणहारंश्रीमन्मुखंप्रचलकुंडलकुंतलाढ्यं ३३ सभायांमयक्लृप्तायांक्वापिधर्मसुतोऽधिराट् वृतोऽनुजैर्बंधुभिश्चकृष्णेनापिस्वचक्षुषा ३४ आसीनःकांचनेसाक्षादासनेमघवानिव पारमेष्ठ्यश्रियाजुष्टःस्तूयमानश्चवंदिभिः ३५ तत्रदुर्योधनोमानीपरीतोभ्रातृभिर्नृप किरीटमालीन्यविशदसिहस्तःक्षिपन्रुषा ३६ स्थलेऽभ्यगृह्णाद्वस्त्रांतंजलंमत्वास्थलेऽपतत् जलेचस्थलवद्भ्रांत्यामयमायाविमोहितः ३७ जहासभीमस्तंदृष्ट्वास्त्रियोनृपतयोऽपरे निवार्यमाणाअप्यंगराज्ञाकृष्णानुमोदिताः ३८ सव्रीडितोऽवाग्वदनोरुषाज्वलन्निष्क्रम्यतूष्णींप्रययौगजाह्वयं हाहेतिशब्दःसुमहानभूत्सतामजातशत्रुर्विमनाइवाभवत् बभूवतूष्णींभगवान्भुवोभरंसमुज्जिहीर्षुर्भ्रमतिस्मयद्दृशा ३९ एतत्तेभिहितंराजन्यत्पृष्टोहमिहत्वया सुयोधनस्यदौरात्म्यंराजसूयेमहाक्रतौ ४०॥ एकोनाशीति॰॥ आकुंचितवान्कुतस्तस्मिन्

स्थलेएवभ्रांत्याजलंमत्वाजलेचअपतत् कुतःस्थलवद्भ्रांत्या ३७ भुवोभरंभारंजिहीर्षुरिति अघसंपादितेनकलहबीजेनकुरूणांसंहारंकरिष्यामीतिमत्वेति किंचयस्यदृष्टिमात्रेणदुर्योधनोभ्रमतिस्मभ्रांतिंप्रापमयस्यापितुनिमित्तमात्रंसः भूभारहरणे

॥ ॥इति दशमे टीकायां पंचसप्ततितमः॥ ७५॥ ततः षट्सप्ततितमे वृष्णिशाल्वमहामृधे द्युमत्गदाप्रहारेण रणात्प्रद्युम्ननि-
र्गमः १ तं पादाद्धर्मराजस्य राजसूयमहोत्सवं निहत्य सौभराजादीन्यथोपारमदच्युतः २ ॥ २ ॥ प्रत्यहं सकृत्पांसुमुष्टिमेकां ग्र-

॥इति श्रीभागवते महापुराणे दशमस्कंधे दुर्योधनमानभंगो नाम पंचसप्ततितमोध्यायः॥
॥७५॥ श्रीशुक उवाच अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप क्रीडानरशरीरस्य यथा सौभ-
पतिर्हतः १ शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः यदुभिर्निर्जितः संख्ये जरासंधादयस्त-
थाप्यस्तथा २ शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजां अयादवीं क्ष्मां करिष्ये पौरुषं म-
म पश्यत ३ इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुं आराधयामास नृप पांसुमुष्टिं सकृद्ग्रसन्
४ संवत्सरांते भगवानाशुतोष उमापतिः वरेण छंदयामास शाल्वं शरणमागतं ५ देवासु-
रमनुष्याणां गंधर्वोरगरक्षसां अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणं ६ तथेति गिरिशा-
दिष्टो मयः परपुरंजयः पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयं ७ स लब्ध्वा कामगं यानं
तमोधाम दुरासदं ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ८॥

सोपि भगवानुमापतिः श्रीकृष्णविद्वेषिशाल्वे वरस्य वैफल्यं मन्यमानो न शीघ्रं प्रादुरभूत् तस्मात् अतिनिर्बंधमालक्ष्य संवत्सरान्ते च ॥ ४ ॥ संवत्सरांत इति आशुतो-
वरेण छंदयामास इच्छां कारितवान् वरं वृणीष्वेत्युवाचेत्यर्थः ५ ॥ ६ ॥ तथेति प्रतिज्ञाय गिरिशेनादिष्टः अयस्मयं लोहमयं पुरं सौभसं-

राम: ७६

९ प्रासादाग्रहाः अट्टालाः तदुपरिगृहाः तोलिकास्तत्पर्यंतकुड्यानि ना: विहारान् क्रीडास्थानानि च सवभंज किं
च विमानाग्र्यान् तस्माच्छस्त्रवृष्ट्यादयः पेतुः १० आसारशर्कराः धारासंपातवज्जलोपलाः ११ धूमसुखं नाभ्यपद्यत १२

निरुद्ध्यसेनया शाल्वो महत्या भरतर्षभ पुरीं बभंजोपवनान्युद्यानानि च सर्वशः ८ सगो
पुराणि द्वाराणि प्रासादाट्टालतोलिकाः विहारान्स विमानाग्र्यान्निपेतुः शस्त्रवृष्टयः १०॥
शिलाद्रुमाश्चाशनयः सर्प्पा आसारशर्कराः प्रचंडश्चक्रवातो भूद्रजसाच्छादिता दिशः॥
११ इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशं नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही १२
प्रद्युम्नो भगवान्वीक्ष्य वाध्यमाना निजाः प्रजाः मा भैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः
१३ सात्यकिश्चारुदेष्णश्च सांबोऽक्रूरः सहानुजः हार्दिक्यो भानुविंदश्च गदश्च शुकसारणौ
१४ अपरे च महेष्वासा वीरयूथपयूथपाः निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः १५
ततः प्रववृते युद्धं शाल्वानां यदुभिः सह यथासुराणां विबुधैस्तुमुलं लोमहर्षणम् १६॥
ताश्च सौभपतेर्मायादिव्यास्त्रै रुक्मिणीसुतः क्षणेन नाशयामास नैशं तम इवोष्णगुः १७॥
विव्याध पंचविंशत्या स्वर्णपुंखैरयोमुखैः ॥११॥ १३॥ १४॥ १५॥ तुमुलं व्याकुलं रोमहर्षणं रौद्रं १६ नैशं
निशि भवं तमः उष्णगुः सूर्य इव १७ किंच विव्याधेति स्वर्णमयानि पुंखानि पृष्ठप्रांता येषां ते अयो लोहं तन्मयानि मुखानि अग्रा

७६
भा॰ट॰
उ॰
८७

ध्वजिनीपालं सेनान्यं सन्नतानि निम्नानि पर्वाणि ग्रंथयो येषां तैः १८ सैनिकान् भटान् नेतॄन् सारथीन् १९ स्वपरसेनया वर्त्तिनो [illegible]ः सर्वे पूजयामासुः संमानितवंतः २० कदाचिद्बहुरूपं कदाचिदेकरूपं क्वचिद्दृश्यते क्वचिन्न दृश्यते [illegible] दुर्विभाव्यं दुर्वितर्क्यमभूत् २१ किंच क्वचिदिति एवं तत् दुरवस्थितं अनवस्थितं चाभूत् २२ २३ अग्निवद्दाहकः अर्कवद्युगप[illegible]नः संस्पर्शो येषां तैः आशी॥

शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः १८ शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान् दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः १९ तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः। दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः २० बहुरूपैकरूपं तद्दृश्यते न च दृश्यते मायामयं मयकृतं दुर्विभाव्यं परैरभूत् २१ क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्द्ध्नि जले क्वचित् अलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितं २२ यत्र यत्रोपलक्ष्येत ससौभः सहसैनिकः शाल्वस्ततस्ततोऽमुंचन् शरान्सात्वतयूथपाः २३ शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः पीड्यमानपुरानीकः शाल्वोऽमुह्यत्परेरितैः २४ शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः २५ शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक्प्रपीडितः आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली २६॥

आशीविषवदेकदेशस्पर्शमात्रेण मारकत्वात् दुरासदैर्दुःसहैः पीड्यमानं पुरमनीकानि च यस्य सः परैर्यदुभिरीरितैर्मुक्तैः २४ भृशार्दिता अपि स्वं स्वं रणं स्वां स्वां युद्धभूमिकाम् २५ मौर्व्या कार्ष्णायसमय्या व्याहत्य प्रहृत्य॥ २६॥

राम:
८७

अपोवाह अन्यतो निनाय २७ २८ मन्मनो विनाक्लीवं चितं यस्य तेन त्वया सूतेन २९ पितरौ रामकृष्णाव भिसंगम्य तत्पार्श्वं गत्वा तांभ्यां पृष्टः स्वयोग्यं किंनु वक्ष्यामीति ३० भ्रातृजामयो भ्रातृभार्याः व्यक्तं निश्चितं मत् क्लैव्यं कथयिष्यंति तत्कथनमनुकरोति॥

प्रद्युम्नं गदया शीर्णवक्षस्थलमरिंदमं अपोवाहरणात्सूतो धर्म्मविद्दारुकात्मजः २७ लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणं २८ नयदूनां कुले जातः श्रूयते रणविच्युतः विना मत्क्लीवचित्तेन सूतेन प्राप्तकिल्बिषात् २९ किंनु वक्ष्येऽभिसंगम्य पितरौ रामकेशवौ युद्धात्सम्यगपक्रांतः पृष्टस्तत्रात्मनः क्षमं ३० व्यक्तं मे कथयिष्यंति हसंत्यो भ्रातृजामयः क्लैव्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ३१ सारथिरुवाच धर्म्मं विजानतायुष्मन् कृतमेतन्मया विभो सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी ३२ एतद्विदित्वा तु भवान्मयाऽपोवाहितो रणात् उपसृष्टः परेणेति मूर्छितो गदयाहतः ३३॥ ॥इति श्रीभागवते महापुराणे दशमस्कंधे षट्सप्ततितमोऽध्यायः ७६॥ श्रीशुक उवाच स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिं १॥ १ कथं कथयिष्यं[illegible] विभो हे समर्थ एतदपसर्पणं धर्ममाह सूत इति ३२ अपोवाहितः अपनीतः उपसृष्टः उपसर्गं पीडां प्राप्त इति कृत्वा[illegible]तः परेण शत्रुणा गदयाहतः सन्मूर्छितो निःसंज्ञनांगतो भवानिति ३३ इति दशमे टीकायां षट्सप्ततितमोऽध्यायः ७६ सप्तसप्ततितमेनानामाया

भा०द० ७७ उ० ८८

विधमंतंस्वपर्यंतंप्रतिहत्यप्रतिरुध्य २ अष्टानांविनियोगमाह चतुर्भिरिति ३ सौभेयाः सौभस्थाः ४ नवानांरात्रीणांसमाहारो नवरात्रंत्रयाणांनवरात्राणांसमाहारस्त्रिनवरात्रंसप्तविंशतिरहोरात्राणीत्यर्थः तुमुलमाकुलंउल्वणंघोरं ५ परमतमुपन्य

विधमंतंस्वसैन्यानिद्युमंतंरुक्मिणीसुतः प्रतिहत्यप्रत्यविध्यन्नाराचैरष्टभिःस्मयम् २ चतुर्भिश्चतुरोवाहान्सूतमेकेनचाहनत् द्वाभ्यांधनुश्चकेतुंचशरेणान्येनवैशिरः ३ गदसात्यकिसांबाद्याजघ्नुः सौभपतेर्बलं पेतुःसमुद्रेसौभेयाःसर्वेसंछिन्नकंधराः ४ एवंयदूनांशाल्वानांनिघ्नतामितरेतरं युद्धंत्रिनवरात्रंतदभूत्तुमुलमुल्वणं ५ श्रीशुकउवाच इंद्रप्रस्थंगतः कृष्णआहूतोधर्मसूनुना राजसूयेऽथनिर्वृत्तेशिशुपालेचसंस्थिते ६ कुरुवृद्धाननुज्ञाप्यमुनींश्चससुतांपृथां निमित्तान्यतिघोराणिपश्यन्द्वारवतींययौ ७ आहचाहमिहायातआर्यमिश्राभिसंगतः राजन्याश्चैद्यपक्षीया नूनंहन्युःपुरींमम ८ इतिसंचिंत्यभगवानाजगामत्वरान्वितः संग्रामभूमिमागत्यप्रद्युम्नादीन्निरीक्ष्यसः ९ वीक्ष्यतत्कदनंस्वानांनिरूप्यपुररक्षणं सौभंचशाल्वराजंचदारुकंप्राहकेशवः॥ १०॥ ९ स्पति इंद्रप्रस्थंगतइत्यादिना ६। ७ आहचेतिस्वगतमेवपथिचिंताविजृंभितभाषणं आर्यमिश्राभिसंगतोबलभद्रसहितः ८ दुर्निमित्तदर्शनाकुलचित्त एवचिंतयन्द्वारकामागत्यस्वानांकदनंवीक्ष्यसौभंचशाल्वराजंचवीक्ष्यरामंपुररक्षणेप्रतिनिरूप्यनियुज्यदारुकंप्राहेत्य

ऋ ८७ रामः ८८

तित्वया ११ आस्थाय सम्यक् अधिष्ठाय अरुणानुजं ध्वजे वर्त्तमानं गरुडं १२ हतप्रायस्य बलस्य सैन्यस्य ईश्वरः १३ १४
तं च शाल्वं शरसंदोहैः शरजालैः स्वं सूर्य इव रश्मिभिरिति सुनीलत्वविपुलत्वादिभिराकाशोपमा सौभस्य अचिंत्यवेगवा

रथं प्रापय मे सूत शाल्वस्यांतिकमाशु वै संभ्रमस्ते न कर्त्तव्यो मायावी सौभराडयं ११ इत्यु
क्तश्चोदयामास रथमास्थाय दारुकः विशंतं ददृशुः सर्वे स्वे परे चारुणानुजं १२ शाल्वश्च कृ
ष्णमालोक्य हतप्रायबलेश्वरः प्राहरत्कृष्णसूताय शक्तिं भीमरवां मृधे १३ तामापतंतीं न
भसि महोल्कामिव रंहसा भासयंतीं दिशः शौरिः सायकैः शतधाच्छिनत् १४ तं च षोडशभि
र्विध्वा बाणैः सौभं च खे भ्रमत् अविध्यच्छरसंदोहैः खं सूर्य इव रश्मिभिः १५ शाल्वः शौरे
स्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः बिभेदन्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतं १६ हाहाकारो
महानासीद्भूतानां तत्र पश्यतां विनद्य सौभराडुच्चैरिदमाह जनार्दनं १७ यत्त्वया मूढ नः सा
ख्युर्भ्रातुर्भार्या हृतेक्षतां प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा १८ तं त्वाद्य निशितैर्बा
णैरपराजितमानिनं नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः १९ ॥ [illegible]पादिभिः शराणां रश्मि

सादृश्यं अयत्नेनैव रश्मिवत् शरजालप्रसारणात् सूर्यतुल्यः श्रीकृष्ण इति १५ दोर्बुहं [illegible] सख्युः शिशुपालस्य ईक्षतां
मस्माकं प्रमत्तः अनवहितः व्यापादितो निहतः १८ अपराजितोऽहमिति परैरजित इति मानिनं मा[illegible] अपुनरावृत्तिं मृत्युं

॥२०॥२१॥२२॥२३॥ घृणीदयावान् २४ २५ २६ जनिताजनयितार्ईशश्वेन शक्तश्वेन २७ २८ स्वविधिःस्वतः

श्रीभगवानुवाच वृथात्वंकत्थसेमंदनपश्यसंतिकेऽन्तकं पौरुषं दर्शयंतिस्मशूरानबहुभाषिणः २० इत्युक्त्वाभगवान्शाल्वंगदयाभीमवेगया ततांडजत्रौसंविग्नः सचकंपेवम।स्रक् २१ गदायांसन्निवृत्तायांशाल्वस्त्वंतरधीयत ततोमुहूर्तआगत्यपुरुषःशिरसाऽच्युतं देवक्याप्रहितोऽस्मीतिनत्वाप्राहवचोरुदन् २२ कृष्णकृष्णमहावाहोपितातेपितृवत्सल वध्वाऽपनीतःशाल्वेनसौनिकेनयथापशुः २३ निशम्यविप्रियंकृष्णोमानुषींप्रकृतिंगतः विमनस्कोघृणीस्नेहाद्बभाषेप्राकृतोयथा २४ कथंराममसंभ्रांतंजित्वाऽजेयंसुरासुरैः शाल्वेनाल्पीयसानीतःपितामेबलवान्विधिः २५ इतिब्रुवाणेगोविंदेसौभराट्प्रत्युपस्थितः वसुदेवमिवानीयकृष्णंचेदमुवाचसः २६ एषतेजनितातातोयदर्थमिहजीवसि वधिष्येवीक्षतस्तेऽमुमीशश्वेत्पाहिवालिश २७ एवंनिर्भर्त्स्यमायावीखड्गेनानकदुंदुभेः उत्कृत्यशिरआदायखस्थंसौभंसमाविशत् २८ ततोमुहूर्तंप्रकृतावुपप्लुतःस्वबोधआस्तेस्वजनानुषंगतःमहानुभावस्तदबुध्यदासुरींमायांसशाल्वप्रसृतांमयोदितां २९॥ सिद्धज्ञानवानपिस्वजनस्नेहतः प्रकृतोमानुषस्वभावेउपप्लुतःनिमग्नःआसेअतिष्ठत् ततस्तत्सर्वमासुरींमायामबुध्यत्मायेयमितिज्ञातवान् २९॥ ६॥

स्वाप्नंस्वप्नप्रपंचंयथा ३० एवंपरमतमुपन्यस्तंनिराकरोति एवमिति केचकेचननान्विताः अनन्विताःपूर्वापरानुसंधा
नरहिताः नदाहयत्स्ववाचइति तत्रानुस्मरंतीत्यर्थः अयमभिप्रायः ननावद्राजसूयार्थंरामेणसहगतःश्रीकृष्णःसंकर्षणमनु
ज्ञाप्येतिपूर्वमुक्तत्वात् ३१ असंभावितंचेत्याहक्वशोकमोहाविति भयंवादुर्निमित्तदर्शनकृतंनूनंहन्युःपुरींममेतियद्
कंयच्चहस्ताच्छार्ङ्गंन्यपतदित्युक्तंतद्भयंवाक्यमिति अज्ञेषुसंभवोयेषांते अखंडितानिविज्ञानज्ञानैश्वर्याणियस्यसः तत्र

ननत्रदूतंनपितुःकलेवरंप्रबुद्धआजौसमपश्यदच्युतःस्वाप्नंयथाचांवरचारिणंरिपुंसौभस्थ
मालोक्यनिहंतुमुद्यतः ३० एवंवदंतिराजर्षेऋषयःकेचनान्विताः यत्स्ववाचोविरुध्येतनू
नंतेनस्मरंत्युत ३१ क्वशोकमोहौस्नेहोवाभयंवायेऽज्ञसंभवाः क्वचाखंडितविज्ञानज्ञानैश्व
र्यस्त्वखंडितः ३२ यत्पादसेवोर्जितयात्मविद्ययाहिन्वंत्यनाद्यात्मविपर्ययग्रहं लभंतआत्मा
नमनंतमैश्वरंकुतोनुमोहःपरमस्यसद्गतेः ३३ तंशस्त्रपूगैःप्रहरंतमोजसाशाल्वंशरैःशौ
रिरमोघविक्रमः विध्वाऽच्छिनद्वर्मधनुःशिरोमणिंसौभंचशत्रोर्गदयारुरोजह ३४ तत्कृ
ष्णहस्तेरितयाविचूर्णितंपपाततोयेगदयासहस्रधा विसृज्यतद्भूतलमास्थितोगदामुद्यम्य
शाल्वोऽच्युतमभ्यगाद्द्रुतं ३५

॥ विज्ञानंस्वरूपविषयंज्ञानंबाह्यविषयं ३२ किंच यस्यपादसेवयाउर्जितापुष्ट
तया आत्मविद्यया अनादिंआत्मनआत्मविपर्ययग्रहमज्ञअहंकृशःसुखीदुःखीचेत्यादिलक्षणं हिन्वंतिनाशयंतिसंतः
ऐश्वरंपदंचलभंतेतस्यसतांगतेःकुतोनुमोहइति अतोनैनद्वचनंसत्यमित्यर्थः ३३ किंतर्हि [illegible]दाहतं[illegible]शस्त्रपूगैरितिवर्मकवचंरु

लयार्कसन्निभं प्रलयकालीनसूर्यसदृशं ३६ ३७ देवगणैरीरिताः वादिताः किंच सखीनामपचितिं ३८ ॥ इति दशमे टीकायां सप्तसप्ततितमः ७७ ॥ ततो ऽष्टसप्ततितमे दंतवक्त्रविदूरथौ हत्वा हरिः पुरे रेमे राममप्यागतं ... १ सखीनामपचितिं

आधावतः सगदं तस्य बाहुं भल्लेन च्छित्वा ऽथ रथांगमद्भुतं वधाय शाल्वस्य लयार्कसंनिभं बिभ्रद्बभौ सार्क इवोदयाचलः ३६ जहार तेनैव शिरः सकुंडलं किरीटयुक्तं पुरुमायिनो हरिः वज्रेण वृत्रस्य यथा पुरंदरो बभूव हाहेति वचस्तदा नृणां ३७ तस्मिन्निपतिते पापे सौभे च गदया हते नेदुर्दुंदुभयो राजन् दिवि देवगणेरिताः सखीनामपचितिं कुर्वन् दंतवक्त्रो रुषा ऽभ्यगात् ३८ ॥ ॥इति श्रीभागवते महापुराणे दशमस्कंधे सौभवधो नाम सप्तसप्ततितमो ऽध्यायः ७७ ॥ श्रीशुक उवाच शिशुपालस्य शाल्वस्य पौंड्रकस्यापि दुर्मतिः ॥ परलोकगतानां च कुर्वन्पारोक्ष्यसौहृदं १ एकः पदातिः संक्रुद्धो गदापाणिः प्रकंपयन् पद्भ्यामिमां महाराज महासत्वो व्यदृश्यत २ तं तथायांतमालोक्य गदामादाय सत्वरः अवप्लुत्य रथात्कृष्णः सिंधुं वेलेव प्रत्यधात् ३ गदामुद्यम्य कारूषो मुकुंदं प्राह दुर्मदः ॥

१ कुर्वन्नित्युक्तं तदेवाह शिशुपालस्येति पारोक्ष्यसौहृदं परोक्षे करणीयं सुहृत्कृत्यं १।२ प्रत्यधात् प्रतिरुरोध ३ मुकुंदं प्राह दुर्मद इत्यादेरधिक्षेपपरता स्फुटैव परमार्थस्तु दुर्मदः गतमदः प्राह मुकुंदं तृतीयजन्मनि मुक्तिदानार्थमागतं अद्येति जन्मत्रये ऽन्वि॥

ष्यमाणोऽद्यब्रह्मशापावसाने भवान् मम स्वामी दृष्टिपथं गतः प्राप्तः एतत् दिष्ट्या दिष्ट्या भद्रं भद्रं अतिहर्षे वीप्सा ४ किंच हे श्रीकृष्ण त्वमस्माकं मातुलेयो बंधुः एवमपि मित्रध्रुक् मित्राणि घातितवान् मां च जिघांससि तस्मादस्माकं त्वत्तो मृत्युः सनकाद्यनुग्रहप्राप्तो नूनं दुर्वारः अतस्त्वामेतावन्मात्रमहं याचे किं तदाह हे अमंद सर्वसहनसमर्थ क्षात्रधर्मेण सेवितुं गदया त्वां हनिष्ये प्रहरिष्यामि तामेकवारं सहस्वेति ननु वज्रतुल्यां त्वद्गदां को वा सहेत तत्रैवमित्याह अवज्रकल्पया उत्पलमालावदतिकोमलयेत्यर्थः ५ नन्वेवं हननेकस्तव पुरुषार्थस्तमाह तर्हीति हे अच्युत न विद्यते च्युतो यस्माद्देहे सर्वज्ञत्वम् अयं परमार्थतः स्वामिनमेतद्देहसंबंधेन बंधुरूपमरिं ब्रह्मशापेन शत्रुत्वेन प्रतीतं त्वां हत्वा मित्राणामानृण्यमुपैमि उपैष्यामि विशेषेण आधीयते मनसि चिंत्यते इति व्याधिः देहे अंतर्यामितया चरतीति तथा तम्… हत्वा क्षात्रधर्मेणाराध्याहं तेनैतस्य ज्ञानार्थत्वात् ज्ञात्वेति दानेन यथा पित्रादीनामानृण्यमुपयाति तद्वदिति ६ रूक्षैरित्यादि … इति अभिप्रायेण तोत्रैरंकुश

> दिष्ट्यादिष्ट्या भवानद्य मम दृष्टिपथं गतः ४ त्वं मातुलेयो नः कृष्ण मित्रध्रुग् मां जिघांससि ।
> अतस्त्वां गदया मंद हनिष्ये वज्रकल्पया ५ तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः बंधुरूपमरिं हत्वा व्याधिं देहचरं यथा ६ एवं रूक्षैस्तुदन्वाक्यैः कृष्णं तोत्रैरिव द्विपं गदयाताडयन्मूर्ध्नि सिंहवद्व्यनदच्च सः ७ गदयाऽभिहतोऽप्याजौ न चचाल यदूद्वहः कृष्णोऽपि तमहन् गुर्व्या कौमोदक्या स्तनांतरे ८ गदानिर्भिन्नहृदय उद्वमन् रुधिरं मुखात् प्रसार्य केशबाहुंघ्रीन् धरण्यां न्यपतद्व्यसुः ९ ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतं पश्यतां सर्वभूतानां यथा चैद्यवधे नृप १०॥

११ १२ १३ १४ १५ एवंश्रीकृष्णोमहाबलानपिलीलयाजयत्येवेतिहत्वासकृदादिभिर्निर्जितइतिपशु
दृशीनामीयतेनित्यजयेहेतवः योगेश्वरः भगवान् जगदीश्वरइति १६ विदूरथोंतकृ[illegible]तेनादिदनोः कुलंकृष्णम्॥

विदूरथस्तुतच्छ्रुत्वाभ्रातृशोकपरिप्लुतः आगच्छदसिचर्मभ्यां चक्षुसंस्तज्जिघांसया॥
११ तस्यचापततःकृष्णश्चक्रेणक्षुरनेमिना शिरोजहारराजेंद्रसकिरीटंसकुंडलं १२
एवंसौभंचशाल्वंचदंतवक्रंसहानुजं हत्वादुर्विषहानन्यैरीडितःसुरमानवैः १३ मुनि
भिःसिद्धगंधर्वैर्विद्याधरमहोरगैः अप्सरोभिःपितृगणैर्यक्षैःकिन्नरचारणैः १४ उपगी
यमानविजयःकुसुमैरभिवर्षितः वृतश्चवृष्णिप्रवरैर्विवेशालंकृतांपुरीम् १५ एवंयोगेश्वरः
कृष्णोभगवान्जगदीश्वरः ईयतेपशुदृष्टीनांनिर्जितोजयतीतिसः १६ श्रुत्वायुद्धोद्यमंरा
मःकुरूणांसहपांडवैः तीर्थाभिषेकव्याजेनमध्यस्थःप्रययौकिल १७ स्नात्वाप्रभासेसं
तर्प्यदेवर्षिपितृमानवान् सरस्वतींप्रतिस्रोतंययौब्राह्मणसंवृतः १८ पृथूदकंबिंदुसर
स्त्रितकूपंसुदर्शनं विशालंब्रह्मतीर्थंचचक्रंप्राचींसरस्वतीं १९ यमुनामनुयान्येवगं॥
गामनुचभारत॥ १७ सूपारमन्नारामोऽहन्स्तवल्वलौ तस्यसंगमाहश्रुत्वेति १७ प्रतिस्रोतंप्रतिलोमंसन्मु
खमित्यर्थः १८ सुदर्शनतीर्थंचक्रतीर्थं १९ यमुनामनुयानितीर्थानिगंगामनुचयानितानिसर्वाणिगत्वा॥ १॥

नैमिषमरण्यंजगाम २० अभिप्रेत्यश्रीरामइतिज्ञात्वा २१ महर्षेर्व्यासस्य २२ सूतंप्रतिलोमजंब्राह्मण्यांक्षत्रियाज्जा
तम्।नकृतंप्रह्वणमंजलिश्चयेनतं अध्यासीनंचनान्।तेभ्योप्युच्चैरासीनमित्यर्थः २३ ३४ अजानन्नध्यास्तइतिचेन्नैवमि

जगामनैमिषंयत्रऋषयःसत्रमासते २० तमागतमभिप्रेत्यमुनयोदीर्घसत्रिणः अभि
वंद्ययथान्यायंप्रणम्योत्थायचार्चयन् २१ सोऽर्चितःसपरीवारःकृतासनपरिग्रहः रोमहर्ष
णमासीनंमहर्षेःशिष्यमैक्षत २२ अप्रत्युत्थायिनंसूतमकृतप्रह्वणांजलिं अध्यासीनंचता
न्विप्रांश्चुकोपोद्वीक्ष्यमाधवः २३ कस्मादसाविमान् विप्रानध्यास्तेप्रतिलोमजः धर्मपालांस्त
थैवास्मान्वधमर्हतिदुर्मतिः २४ ऋषेर्भगवतोभूत्वाशिष्योऽधीत्यवहूनिच सेतिहासपुराणा
निधर्मशास्त्राणिसर्वशः २५ अदांतस्याविनीतस्यवृथापंडितमानिनः नगुणायभवंतिस्म
नटस्येवाजितात्मनः २६ एतदर्थोहिलोकेऽस्मिन्नवतारोमयाकृतः वध्यामेधर्मध्वजिनस्ते
हिपातकिनोऽधिकाः २७ एतावदुक्त्वाभगवान्निवृत्तोऽसद्वधादपि भावित्वात्तंकुशाग्रेणकरस्थेना
हनत्प्रभुः २८ हाहेतिवादिनःसर्वेमुनयःखिन्नमानसाः ऊचुःसंकर्षणंदेवमधर्मस्तेकृतःप्रभो

त्याहऋषेरिति २५ ननुवहुज्ञःकुथमेवंकुर्यादित्राह अदांतस्येतिगुणाययथोचितानुष्ठानाय २६ विप्रानध्यासीत्अन्यद्वा
किंचित्करोतुकिंतवेतिचेत्तत्राहएतदर्थइतिधर्मध्वजिनःउत्तमलिंगधारिणः २७ भावित्वादितिनहिभवितव्यंकेनापिपरिहर्तुं

७८
भा॰द॰
उ॰
८९२

अधार्मिकप्रतिलोमजवधः कोऽयमधर्म्म इतिचेत्तत्राहुः अस्येति पुराणप्रवचनाय आत्मनः शरीरस्य नाशितः कमोयाः
स्मिन्ततदायुश्चदत्तमिति ३० ब्रह्मवधेऽपिकिंममेश्वरस्येतिचेत्सत्यमेवतथापिप्रायश्चित्तंकर्त्तव्यमित्याशयेनाहुः योगेश्व
रस्येतिसार्द्धेन आम्नायोब्राह्मणोनहंतव्य इत्यादिलक्षणः तथाप्येतस्याः ब्रह्महत्यायाः पावनं प्रायश्चित्तं हे लोकपावन अन

अस्यब्रह्मासनंदत्तमस्माभिर्यदुनंदन आयुश्चात्माक्लमं तावद्यावत्सत्रंसमाप्यते ॥ अ
जानतैवाचरितस्त्वयाब्रह्मवधोयथा ३० योगेश्वरस्यभवतोनाम्नायोपिनियामकः यद्य
तद्ब्रह्महत्यायाः पावनंलोकपावन चरिष्यतिभवान्लोकसंग्रहोनन्यचोदितः ३१ श्रीभग
वानुवाच करिष्येवधनिर्वेशंलोकानुग्रहकाम्यया नियमः प्रथमेकल्पेयावान्सतुविधीय
तां ३२ दीर्घमायुर्बतैतस्यसत्वमिंद्रियमेवच आशासितंयत्तद्ब्रूतसाधयेयोगमायया ३३
ऋषयऊचुः अस्त्रस्यतववीर्य्यस्यमृत्योरस्माकमेवच यथाभवेद्वचः सत्यंतथारामविधीय
तां ३४ श्रीभगवानुवाच आत्मावैपुत्रउत्पन्नइतिवेदानुशासनं ॥ एवंन्यचोदितः स्वयमेवभवानन्य

दिकरिष्यतितर्हि लोकसंग्रहोभविष्यतिनान्यथेति ३१ वधस्यनिर्वेशंप्रायश्चित्तंप्रथमेकल्पेमुख्यकल्पेविधीयतांउपदिश्य
तां ३२ किंचवतहेमुनयः एतस्यदीर्घमायुः सत्वंबलंइंद्रियंतत्पाटवंच अन्यच्चयद्भवद्भिराशासितं अपेक्षितंतद्ब्रूतस वैम् ३३
अस्त्रादीनांसत्यतायथाभवेत् अस्माकंचवचः सत्यंयथाभवत्तथाविधीयतामित्यर्थः ३४ तथासंपादयन्नाह आत्मावा इति
अंगादंगात्संभवसिहृदयादभिजायसे आत्मावैपुत्रनामासिसजीवशरदः शतमित्यादिवेदानुशासनंवेदवचनं ॥

एभः
८९२

तस्मादस्य रोमहर्षणस्य पुत्र उग्रश्रवाः भवतां पुराणप्रवक्ता भवेत् स च आयुरादिमांश्च भवेत् अतः साक्षाद्जीवनादस्य मृत्योश्च सत्यता पुत्ररूपेण चायुरादिसिद्धेर्युष्मद्वचनस्यापि सत्यता स्यादिति भावः ३५ किंच ब्रह्महत्यार्थं अपेक्षितं प्रथमं तावदपेक्षितं कथयत ततदहं करिष्यामीत्याह किं वः काम इति किं विषयो वः कामो वर्तते तद्ब्रूतेति अथानंतरं ब्रह्महत्यां गृहीत्वा अपचितिं निष्कृतिमजानतो मे हे बुधाः यथावच्चिंत्यतामपचितिरिति ३६ प्रथमं तावदपेक्षितं कर्तव्यं कथयं

तस्मादस्य भवेद्वक्ता आयुरिंद्रियसत्ववान् ३५ किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ॥ अजानतस्त्वपचितिं यथा मे चिंत्यतां बुधाः ३६ ऋषय ऊचुः इल्वलस्य सुतो घोरो वल्वलो नाम दानवः स दूषयति नः सत्रमेत्य पर्वणि पर्वणि ३७ तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परं पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणं ३८ ततश्च भारतं वर्षं परीत्य सुसमाहितः चरित्वा द्वादशमासांस्तीर्थस्नायी विशुद्ध्यसे॥३९॥ ॥इतिश्रीभागवते महापुराणे दशमस्कंधे बलभद्रतीर्थयात्रायां सूतवधो नामाष्टसप्ततितमोऽध्यायः॥ ७८ ॥ श्रीशुक उवाच ॥९ ततः पर्वण्युपावृत्ते प्रचंडः पांशुवर्षणः भीमो वायुरभूद्राजन् पूयगंधस्तु सर्वशः॥१॥

निइल्वलस्येति द्वाभ्यां ३७ ३८ प्रायश्चित्तमाहुः ततश्चेति परीत्य प्रदक्षिणीकृत्य सुसमाधानादिगुणविशेषादेकाब्दमात्रमुक्तमित्यविरोधः सुसमाहितः कामक्रोधादिरहितः चरित्वा कृच्छ्राणि ३९ इति दशमे टीकायामष्टसप्ततितमोऽध्यायः ७८ ऊनाशीतितमे रामो वल्वलं द्विजतुष्टये निहत्य तीर्थस्नानाद्यैः सूतहत्यामपानुदत् १ उपावृत्ते प्राप्ते १।२॥

॥२॥ भिन्नो विदीर्णोऽञ्जनचयः उपमा यस्य तं अतिक्रम्य मित्यर्थः तप्तताम्रवत् शिखाश्मश्रूणि यस्य तं दंष्ट्राभिरुग्रे भ्रुकु-

ततो मेध्यममेध्यं वर्षं बल्वलेन विनिर्मितं अभवद्यज्ञशालायां सोऽन्वदृश्यत शूलधृक् २ तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमं तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखं ३ सस्मार मुशलं रामः परसैन्यविदारणं हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः ४ तमाकृष्य हलाग्रेण बल्वलं गगनेचरं मुशलेनाहनत्क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ५ सोऽपतद्भुवि निर्भिन्नललाटोऽसृगुत्सृजन् मुंचन्नार्तस्वरं शैलो यथा वज्रहतोऽरुणः ६ संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः अभ्यषिंचन्महाभागा वृत्रघ्नं विबुधा यथा ७ वैजयंतीं ददुर्मालां श्रीधामाम्लानपंकजां रामाय वाससी दिव्ये दिव्यान्याभरणानि च ८ अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः स्नात्वा सरोवरमगाद्यतः सरयुरास्रवत् ९ अनुस्रोतेन सरयूं प्रयागमुपगम्य सः स्नात्वा संतर्प्य देवादीन् जगाम पुलहाश्रमं १० गोमतीं गंडकीं स्नात्वा विपाशां शोण आप्लुतः गयां गत्वा पितॄनिष्ट्वा गंगासागरसंगमे ११ ॥

॥ टीयुतं मुखं यस्य तं ३।४।५ असृग्लोहितं रुधिरेण दैत्यः शैलो धातुभिर्यथेति ६।७ श्रियो धामानि अम्लानानि पंकजानि यस्यां तां ८ किं तत्सरः यतः इति आस्रवत् उदगात् ९ अनुस्रोतेन अनुलोमतः

॥१२॥ श्रीशैलं श्रीपर्वतं १३ कांचीं पुरीं मथुरां च १४ १५ १६ दक्षिणमर्णवं १७ फाल्गुनमनंतपुरं पंचाप्सरसं सरः॥

उपस्पृश्य महेंद्राद्रौ रामं दृष्ट्वाभिवाद्य च सप्तगोदावरीं वेणां पंपां भीमरथीं ततः १२ स्कंदं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयं द्रविडेषु महापुण्यं दृष्ट्वाद्रिं वेंकटं प्रभुः १३ कामकोष्णीं पुरीं कांचीं कावेरीं च सरिद्वरां श्रीरंगाख्यं महापुण्यं यत्र संनिहितो हरिः १४ ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा सामुद्रं सेतुमगमन्महापातकनाशनं १५ तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्यो हलायुधः कृतमालां ताम्रपर्णीं मलयं च कुलाचलं १६ तत्रागस्त्यं समासीनं नमस्कृत्याभिवाद्य च योजितस्तेन चाशीर्भिरनुज्ञातो गतोर्णवं दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः १७ ततः फाल्गुनमासाद्य पंचाप्सरसमुत्तमं विष्णुः संनिहितो यत्र स्नात्वाऽस्पर्शद्गवायुतं १८ ततोऽभिव्रज्य भगवान्केरलान्दीं स्त्रिगर्तकान् गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं तत्र धूर्जटेः १९ आर्यां द्वैपायिनीं दृष्ट्वा शूर्पारकमगाद्बलः तापीं पयोष्णीं निर्विंध्यामुपस्पृश्याथ दंडकं २० प्रविश्य रेवामगमद्यत्र माहिष्मतीपुरी मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् २१॥ १८ अस्पृशत् अस्पर्शत् १८ केरलादीनु देशान् १९ दीपमयनं यस्यास्तां

भा॰ द॰ उ॰ ४०

॥२२॥ विनशनंकुरुक्षेत्रं २३ विवक्षुर्वक्तुमिच्छुः किंवदिष्यतीतिभियातूष्णीमासन्निति २४ २५ २६ अन्यः पराजयो

श्रुत्वाद्विजैः कथ्यमानंकुरुपांडवसंयुगे सर्वराजन्यनिधनंभारंमेनेहृतंभुवः २२ सभी
मदुर्योधनयोर्गदाभ्यांयुध्यतोर्मृधे वारयिष्यन्विनशनंजगामयदुनंदनः २३ युधिष्ठिर
स्तुतंदृष्ट्वायमौकृष्णार्जुनावपि अभिवाद्याभवंस्तूष्णींकिंविवक्षुरिहागतः २४ गदापा
णीउभौदृष्ट्वासंरब्धौविजयैषिणौ मंडलानिविचित्राणिचरंताविदमब्रवीत् २५ युवां
तुल्यबलौवीरौहेराजन्हेवृकोदर एकंप्राणाधिकंमन्येउतैकंशिक्षयाधिकं २६ तस्मादेक
तरस्येहयुवयोःसमवीर्ययोः नलक्ष्यतेजयोऽन्योवाविरमत्वफलोरणः २७ नतद्वाक्यं
जगृहतुर्बद्धवैरौनृपार्थवत् अनुस्मरंतावन्योऽन्यंदुरुक्तंदुष्कृतानिच २८ दिष्टंतदनुमन्वा
नोरामोद्वारवतींययौ उग्रसेनादिभिःप्रीतैर्ज्ञातिभिःसमुपागतः २९ तंपुनर्नैमिषंप्राप्तमृ
षयोऽयाजयन्मुदा क्रत्वंगंक्रतुभिःसर्वैर्निवृत्ताखिलविग्रहं ३० तेभ्योविशुद्धंविज्ञानंभ
गवान्व्यतरद्विभुः येनैवात्मन्यदोविश्वमात्मानंविश्वगंविदुः ३१॥ ऐवारणःसंग्रामः २७ अर्थ

वद्वाक्यं २८ दिष्टंप्राचीनंकर्मसमुपागतःसंगतः २९ क्रत्वंगंयज्ञमूर्तिं ३० आत्मनिअधिष्ठानेविश्वगंसर्वानुस्यूतंयेनैववि

दुःपश्यंतितद्विशुद्धंविज्ञानंव्यतरत् अंतरात् ३१॥

॥३२॥३३॥३४॥ ॥ इतिदशमेटीकायामेकोनाशीतितमोऽध्यायः॥७९॥ अथाऽशीतितमेकृष्णः श्रीदामानंगृहागतं
संपूज्यापृच्छदर्थैस्तुगुरुत्वासकथांमुदा १ मुरारिमारकोहरिः पुराणकारणंसताम् अतःपरंविनैवतन्निजोपकारमाचरन्
२ रामचरितानिश्रुत्वापुनर्मुकुंदवीर्याणिपृच्छतिहेभगवन्श्रोतुमिच्छामीत्यन्वयः १ उत्तमश्लोकस्यश्रीकृष्णस्यस

सपत्न्याऽवभृथस्नातोज्ञातिबंधुसुहृद्वृतः रेजेस्वज्योत्स्नयेवेंदुः सुवासाः सुष्ठ्वलंकृतः ३२
ईदृग्विधान्यसंख्यानिबलस्यबलशालिनः अनंतस्याप्रमेयस्यमायामर्त्यस्यसंतिहि ३३
योनुस्मरेतरामस्यकर्म्माण्यद्भुतकर्मणः सायंप्रातरनंतस्यविष्णोःसदयितोभवेत्॥३४॥
॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेबलभद्रतीर्थयात्रायामेकोनाशीतितमोध्या
यः ७९ ॥ राजोवाच भगवन्यानिचान्यानिमुकुंदस्यमहात्मनः वीर्याण्यनंतवीर्यस्य
श्रोतुमिच्छामहेप्रभो १ कोनुश्रुत्वासकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाः विरमेतविशेषज्ञोवि
षण्णः काममार्गणैः २ सावाग्ययातस्यगुणान्गृणीतेकरौचतत्कर्मकरौमनश्च स्मरेद्वसं
तंस्थिरजंगमेषुशृणोतितत्पुण्यकथाःसकर्णः ३॥शिरस्तुतस्योभयलिंगमानमेत्तदेवयत्प
श्यतितद्धिचक्षुः॥ एताः मनोहराः विषयवैतृष्ण्यजनिकाः कथाः विशेषज्ञःसारवित् विषण्णः विषादंप्राप्तः २ का
याश्रवणंस्तुवन्दृष्टांततया अपार्थिनाह सावागिति नावेवकरौयौतत्कर्मकरौ तदेवमनः यत्स्थिरजंगमेषुवसंतंस्म
रेतयस्तस्यपुण्याः कथाःशृणोतिसएवकर्णः ३ उभयलिंगस्थिरंजंगमंचतस्यैवलिंगमितिमत्वाआनमेत्तदेव॥ ९

भा॰द॰ ... ९५

शिरः तद्देवतस्यलिंगमूर्तिमित्येवयत्पश्यतितदेवचक्षुः तान्येवांगानियानिविष्णोः पादोदकंभजंतीति ४ ५ ६ तथा
विधाकुचैलाजीर्णवस्त्राकिंचक्षुत्क्षामायतत्किंचित्संपन्नमन्नंतस्मैपरिविष्यस्वयंक्षुधाजीर्णा ७ पतिव्रतासतीम्ला

अंगानिविष्णोरथतज्जनानांपादोदकंयानिभजंतिनित्यं ४ सूतउवाच विष्णुरातेनसं
पृष्टोभगवान्बादरायणिः वासुदेवेभगवतिनिमग्नहृदयोब्रवीत् ५ श्रीशुकउवाच कृ
ष्णस्यासीत्सखाकश्चिद्ब्राह्मणोब्रह्मवित्तमः विरक्तइंद्रियार्थेषुप्रशांतात्माजितेंद्रियः ६
यदृच्छयोपपन्नेनवर्त्तमानोगृहाश्रमी तस्यभार्य्याकुचैलस्यक्षुत्क्षामाचतथाविधा ७
पतिव्रतापतिंप्राहम्लायतावदनेनसा दरिद्रासीदमानावैवेपमानाऽभिगम्यच ८ ननु
ब्रह्मनहिभवतः सखासाक्षाच्छ्रियःपतिः ब्रह्मण्यश्चशरण्यश्चभगवान्सात्वतर्षभः ९
तमुपैहिमहाभागसाधूनांचपरायणं दास्यतिद्रविणंभूरिसीदतेतेकुटुंबिने १० आस्ते
ऽधुनाद्वारवत्यांभोजवृष्ण्यंधकेश्वरः स्मरतःपादकमलमात्मानमपियच्छति ११ किंत्वर्
र्थकामान्भजतेनात्यभीष्टान्जगद्गुरुः सएवंभार्यया विप्रोवहुशःप्रार्थितोमृदु अयंहिप
रमोलाभउत्तमश्लोकदर्शनं १२॥ ९ यताशुष्यतावदनेनसीदमानाभर्त्तुर्भोगसंपादनाशक्त्याऽवसीदंतीवेपमा
नाभयेनकंपमानाअभिगम्यपतिंप्राहेति ८ ९ १० भोजवृष्ण्यंधकेश्वरइतितत्स्वीकारमात्रेणसर्वेतेदास्यंतीतिभावः ११

रामः
९५

अप्यस्तिकिंमस्तीतिप्रश्नः १३ १४ १५ महांममगुल्मानिरक्षार्थंसैन्यस्थानानिकक्षाःप्रतोलीःअतीयायअतिक्रम्यजगाम सद्विजःद्विजैःसहितःततश्चअगम्यादुर्गमायेंधकावृष्णयश्चतेषांगृहेषु १६ तथाहरेर्द्व्यष्टसहस्राणांमहिषीणांचयेगृ

इतिसंचिंत्यमनसागमनायमतिंदधे अप्यस्त्युपायनंकिंचिद्गृहेकल्याणिदीयतां १३

याचित्वाचतुरोमुष्टीन्विप्रान्पृथुकतंडुलान् चैलखंडेनतान्बध्वाभर्त्रेप्रादादुपायनं १४

सतानादायविप्राग्र्यःप्रययौद्वारकांकिल कृष्णसंदर्शनंमह्यंकथंस्यादितिचिंतयन् १५ त्री

णिगुल्मान्यतीयायतिस्रःकक्षाश्चसद्विजः विप्रोऽगम्यांधकवृष्णीनांगृहेष्वच्युतधर्मिणां १६

गृहंद्व्यष्टसहस्राणांमहिषीणांहरेर्द्विजः विवेशैकतमंश्रीमद्ब्रह्मानंदंगतोयथा १७ तंवि

लोक्याच्युतोदूरात्प्रियापर्यंकमास्थितः सहसोत्थायचाभ्येत्यदोर्भ्यांपर्यग्रहीन्मुदा १८

सख्युःप्रियस्यविप्रर्षेरंगसंगातिनिर्वृतः प्रीतोव्यमुंचदब्बिंदून्नेत्राभ्यांपुष्करेक्षणः १९

अथोपवेश्यपर्यंकेस्वयंसख्युःसमर्हणं उपहृत्यावनिज्यास्यपादौपादावनेजनीः २० अग्र

हीच्छिरसाराजन्भगवान्लोकपावनः व्यलिंपद्दिव्यगंधेनचंदनागरुकुंकुमैः २१॥ १६ हास्तेषुमध्ये

श्रीमतएकतमंगृहंविवेशतदाचसद्विजोब्रह्मानंदंगतोयथातथावभूवेतिशेषः १७ पर्यग्रहीत्पर्यरंभत १८ अब्बिंदून्

आनंदाश्रूणि १९ समर्हणंउपायंउपहृत्यसमर्प्यपादावनेजनीरपः २०।२१॥

२२ धमनिभिः शिराभिः संततंव्याप्तं २३ अवधूतंमलिनं २४ विस्मयमाहकिमनेनेतिद्वाभ्यां २५ संभृतःसंमानितः २६
सतोःवसतोःगृह्यगृहीत्वा २७ भार्याऊढापरिणीतानवेतिगृहस्थलिंगदर्शनात्भोगादर्शनाच्चसंशयाद्विप्रश्नः २८ अ
प्रतिषेधादुद्वाहमनुमतंमत्वाह प्रायइति नहिनेचित्तंनूनमकामविहतंकामैर्विहतंनभवतीतिमेविदितंनतयाहिधनेषुवर्त्म

धूपैःसुरभिभिर्मित्रंप्रदीपावलिभिर्मुदा अर्चित्वावेद्यतांबूलंगांचस्वागतमब्रवीत् २२ कु
चैलंमलिनंक्षामंद्विजंधमनिसंततं देवीपर्य्यचरच्छ्व्याचामरव्यजनेनवै २३ अंतःपुर
जनोदृष्ट्वाकृष्णेनामलकीर्तिना विस्मितोऽभूदतिप्रीत्याअवधूतंसभाजितं २४ किमनेनकृ
तंपुण्यमवधूतेनभिक्षुणा श्रियाहीनेनलोकेऽस्मिन्गर्हितेनाधमेनच २५ योऽसौत्रिलो
कगुरुणाश्रीनिवासेनसंभृतः पर्य्यंकस्थांश्रियंहित्वापरिष्वक्तोऽग्रजोयथा २६ कथयांचक्र
तुर्गाथाःपूर्वागुरुकुलेसतोः आत्मनोर्ललिताराजन्करौगृह्यपरस्परं २७ श्रीभगवानुवाच
अपिब्रह्मन्गुरुकुलात्भवतालब्धदक्षिणात् समावृत्तेनधर्मज्ञभार्य्योढासदृशीनवा २८ प्रा
योगृहेषुतेचित्तमकामविहतंतथा नैवातिप्रीयसेविद्वन्धनेषुविदितंहिमे २९ केचित्कुर्वं
तिकर्माणिकामैरहतचेतसः॥ षुदिषुनैवातिप्रीयसे हेविद्वन्निति विदुषस्तवैतद्युक्तमितिभावः २९ कामहतला

भावेकिंगृहधर्मक्लेशेनेत्याशंक्याह केचिदिति देवीःईश्वरमायारचिताःप्रकृतीर्विषयवासनास्त्यजंतःकामैरनाकृष्टचेतसा
॥मपिकर्मकरणेदृष्टांतःयथाहमिति लोकसंग्रहंलोकस्यसंग्रहे॥

ग्रहणंयथाभवतितथाअहमीश्वरोपिकर्माणियथाकरोमितद्वत्‌ ३० नौआवयोर्येनतोगुरोर्विज्ञेयंपरमात्मतत्वं तमसःसंसा
रस्य ३१ तत्रात्मज्ञानप्रदस्यगुरोरत्यंतंपूज्यत्वंवक्तुंपुरुषस्यत्रीन्गुरूनाह सवाइति इहसंसारेयत्रसंभवोजन्ममात्रंसपि।
तानावदाद्यःप्रथमोगुरुःपूज्यःकर्मविद्याप्रदंगुरुमाह द्विजातेःसतःपुंसःसत्कर्मणांयत्रसंभवःउपनीयवेदाध्यापकइत्य
र्थःसद्वितीयोगुरुःयथाऽहमीश्वरस्तथाप्रथमादपिपूज्यइत्यर्थः ब्रह्मविद्याप्रदंगुरुमाह आश्रमिणांसर्वेषामपिज्ञानदोयः
सनुसाक्षादहमेवेति ३२ अतोज्ञानप्रदंगुरुरूपंमामाश्रित्ययेसंसारंतरंतितेबुद्धिमंतइत्याह नन्विति· हेब्रह्मन्तेननुवर्णा

त्मजंनःप्रकृतीर्दैवीर्यथाऽहंलोकसंग्रहं ३० कच्चिद्गुरुकुलेवासंब्रह्मन्स्मरसिनौयतः द्वि।
जोविज्ञायविज्ञेयंतमसःपारमश्नुते ३१ सवैसत्कर्मणांसाक्षाद्द्विजातेरिहसंभवः आद्योऽगय
त्राश्रमिणांयथाऽहंज्ञानदोगुरुः ३२ नन्वर्थकोविदाब्रह्मन्वर्णाश्रमवतामिह येमयागुरु
णावाचातरंत्यंजोभवार्णवं ३३ नाहमिज्याप्रजातिभ्यांतपसोपशमेनच तुष्येयंसर्वभूता
त्मागुरुशुश्रूषयायथा ३४ अपिनःस्मर्यतेब्रह्मन्वृत्तंनिवसतांगुरौ॥ ९ आश्रमवतांमध्येअर्थकोविदाः

इहमनुष्यजन्मनितत्रापिवर्णाश्रमवत्वेसतियेमयागुरुणागुरुरूपेणवक्त्रावाचाउपदेशमात्रेणांजःसुखेनैवभवार्णवंतरंती
ति ज्ञानप्रदाद्गुरोरधिकःसेव्योनास्तीत्युक्तं ३३ अतएवतद्भजनादधिकोधर्मश्चनास्तीत्याहनाहमितिइज्यागृहस्थधर्मः
प्रजातिःप्रकृष्टंजन्मउपनयनंतेनब्रह्मचारिधर्मउपलक्ष्यतेताभ्यांतथातपसावनस्थधर्मेणोपशमेनयतिधर्मेणवाअ
हंपरमेश्वरःतथानतुष्येयंयथासर्वभूतात्मापिगुरुशुश्रूषयेति ३४ किंचअस्माकंगुरुशुश्रूषणंकिमपिदैवादेवसंपन्नंतत्

८० भा०द० उ० ८७

किंत्वयास्मर्यतइतिपृच्छतिअपिनइति गुरौनिवसताअस्माकंयत् किमपिवृत्तंनतत्क्वचित्कदाचित् ३५ अपर्त्तौअपग
तेऋतौअकालइत्यर्थः वातश्चवर्षंचतयोःसमाहारः स्तनयित्नवोगर्ज्जितानिचाभवन् ३६ निम्नंकूलंननतमुन्नतंचस्थानं
अंबूनांसंप्लवः व्यामिश्रणंयस्मिन्नेकोदकेतस्मिन्वनइत्यर्थः परिवभ्रिमभृञ्भरणेइतिधातोः रूपं परिपरितोवभ्रिम

गुरुदारैश्चोदितानामिंधनानयनेक्वचित् ३५ प्रविष्टानांमहारण्यमपर्त्तौसुमहद्द्विज वा
तवर्षमभूत्तीव्रंनिष्ठुराःस्तनयित्नवः ३६ सूर्यश्चास्तंगतस्तावत्तमसाचावृतादिशः निम्नंकूलं
जलमयंनप्राज्ञायतकिंचन ३७ वयंभृशंतत्रमहानिलांबुभिर्निहन्यमानामुहुरंबुसंप्लवे
दिशोऽविदंतोऽथपरस्परंवनेगृहीतहस्ताःपरिवभ्रिमातुराः ३८ एतद्विदित्वाउदितेरवौसांदि
पनिर्गुरुः अन्वेषमाणोनःशिष्यानाचार्योऽपश्यदातुरान् ३९ अहोहेपुत्रकायूयम स्मदर्थेति
दुःखिताः आत्मावैप्राणिनांप्रेष्ठस्तमनादृत्यमत्पराः ४० एतदेवहिसच्छिष्यैः कर्त्तव्यंगुरुनि
ष्कृतं यद्वैविशुद्धभावेनसर्वार्थात्मार्पणंगुरौ ४१ तुष्टोऽहंभोद्विजश्रेष्ठाःसत्याःसंतुमनोरथाः
छंदांस्ययातयामानिभवंत्विहपरत्रच ४२ ॥ ९८ ॥ इडागमश्छांदसः भारानूढ्वतवंतइत्यर्थः ३७ ३८ ३९ उवाच
कृपयाश्लोकत्रयीयथावयंकृतार्थाइत्याह अहोइति आत्मादेहः ४० गुरोर्निष्कृतंप्रत्युपकारः सर्वेअर्थायस्मात्सआत्मा
देहःतस्यार्पणंविनियोगः ४१ अयातयामानियातोयामोयस्यपक्वस्यान्नस्यतद्गतसारंभवतितद्वदन्यदपिगतसारंभवतिगौ
ण्यावृत्त्यायातयाममित्युच्यते अगतसाराणिछंदांसिमत्तोधीयमानानिभवंत्वित्यर्थः ४२ ॥

एम० ८७

इत्थंविधानिएवंप्रकाराणि अनेकानिवृत्तानिकिंत्वयास्मर्य्यंतइति शेषः फलितमुपसंहरतिगुरोरिति ४३ अस्माभिःकिम
निर्वृतंअसंपन्नंयेषामस्माकंभवतासहवासोऽभूत् ४४ भवतस्तुसर्वमेतद्विडंबनमात्रमित्याह यस्येतिछंदोमयंवेदाख्यं
ब्रह्मतथाश्रेयसामावपनंतदुद्भवस्थानंदेहोमूर्तिर्यस्यतस्यतव ४५ इतिदशमेटीकायामशीतितमोध्यायः ८० एकाशी

इत्थंविधान्यनेकानिवसतांगुरुवेश्मसु गुरोरनुग्रहेणैवपुमान्पूर्णःप्रशांतये ४३ ब्राह्म
णउवाच किमस्माभिरनिर्वृत्तंदेवदेवजगद्गुरो भवतासत्यकामेनयेषांवासोगुरावभूत् ४४
यस्यछंदोमयंब्रह्मदेहआवपनंविभो श्रेयसांतस्यगुरुषुवासोऽत्यंतविडंबनं ४५ ॥ इतिश्री
भागवतेमहापुराणेदशमस्कंधेभगवद्ब्राह्मणसंवादेअशीतितमोध्यायः ८० ॥ शुकउवाच
सइत्थंद्विजमुख्येनसहसंकथयन्हरिः सर्वभूतमनोऽभिज्ञःस्मयमानउवाचतं १ ब्रह्मण्यो
ब्राह्मणंकृष्णोभगवान्प्रहसन्प्रियं प्रेम्णानिरीक्षणेनैवप्रेक्षन्खलुसतांगतिः २ श्रीभ
गवानुवाच किमुपायनमानीतंब्रह्मन्मेभवतागृहात् अण्वप्युपाहृतंभक्तैःप्रेम्णाभूर्य्येवमे
भवेत् भूर्य्यप्यभक्तोपहृतंनमेतोषायकल्पते ३ पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति तद
हंभक्त्युपहृतमश्नामिप्रयतात्मनः ४॥ एतितमेसख्युर्जग्ध्वापृथुकतंडुलान् श्रियंनिर्मितवा निंद्रदुर्लभांतुन
दाश्रमे १ संकथयन्सुखगोष्ठीःकुर्वन्सर्वभूतानांमनसोऽभिज्ञः मदर्थंपृथुकानानीयदातुंलज्जितइतिजानन्नित्यर्थः १
॥ प्रहसन्खेलीकुर्वन् २ लज्जयात्वःकथयतस्तामपनुदन्नाह अण्वपीतिद्वाभ्यां ३।४॥

भा॰द॰ उ ६८

५ सर्वभूतानामात्मदृक् अंतःकरणसाक्षी ६ अमर्त्यानां देवानामपि दुर्ल्लभाः ७ अतिजीर्णत्वाद्वसनस्य पुनस्तन्मध्ये चीरे पवद्धान् ८ अंग हे सखे मां विश्वं विश्वात्मानं मां ९ इति वदन्नेकां मुष्टिं जग्ध्वानस्मरेति अयं भावः एतावता पुंस इहामुत्र च

इत्युक्तोपि द्विजस्तस्मै व्रीडितः पतये श्रियः पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः ५ सर्व
भूतात्मदृक् साक्षात्तस्यागमनकारणं विज्ञायाचिंतयन्नायं श्रीकामो माऽभजत्पुरा ६ पत्न्याः
पतिव्रतायास्तु सखा प्रियचिकीर्षया प्राप्तो मामस्य दास्यामि संपदो मर्त्यदुर्लभाः ७ इत्थं वि
चिंत्य वसनाच्चीरबद्धान् द्विजन्मनः स्वयं जहार किमिदमिति पृथुकतंडुलान् ८ नन्वेतदु
पनीतं मे परमप्रीणनं सखे तर्प्पयंत्यंग मां विश्वमेते पृथुकतंडुलाः ९ इति मुष्टिं सकृज्जग्ध्वा
द्वितीयां जग्धुमाददे तावच्छ्रीर्ज्जगृहे हस्तं तत्परा परमेष्ठिनः १० एतावतालं विश्वात्मन्
सर्वसंपत्समृद्धये अस्मिंल्लोकेऽथवाऽमुष्मिन्पुंसस्त्वत्तोषकारणं ११ ब्राह्मणस्तां तु रजनी
मुषित्वाच्युतमंदिरे भुक्त्वा पीत्वा सुखं मेने आत्मानं स्वर्गतं यथा १२ श्वोभूते विश्वभावेन स्व
सुखेनाभिवंदितः जगाम स्वालयं तात पथ्यनुव्रज्य नंदितः १३॥ ९ मत्कटाक्षविलासभूतानां सर्वसं

पदां समृद्धये अलं अतः परं द्वितीयमुष्टिदनेन मा मामेतदधीनां कुर्विति १० त्वत्तोषकारणं न तु तोषस्य कारणं यथा भवेत्तथा
सर्वसंपत्समृद्धये यां भक्तस्य समृद्धिं दृष्ट्वा त्वं तुष्येरित्यर्थः ११ स्वर्गतं स्वर्गवासिनं १२ श्वोभूते उदिते रवौ विश्वभावपतीति विश्वभाव

तेनेतिपुरतोभाविनमिंद्रदुर्लभंविभवं सूचयतिस्वसुखेनस्वानंदपूर्णेनेतिदानेऽदीनतांदर्शयतिनंदितोविनयोक्तिभिः १३
व्रीडितः स्वचित्तकार्पण्येनलज्जितः महतः श्रीकृष्णस्यदर्शनेननिर्वृतः १४ निर्वृतिमेवाहअहोइतिचतुर्भिः यत् यतः लक्ष्मी

सचालब्ध्वाधनंकृष्णान्नतुयाचितवान्स्वयं स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः
१४ अहोब्रह्मण्यदेवस्यदृष्टाब्रह्मण्यतामया यद्दरिद्रतमोलक्ष्मीमाश्लिष्टोबिभ्रतोरसि १५
क्वाहंदरिद्रः पापीयान्क्वकृष्णः श्रीनिकेतनः ब्रह्मबंधुरितिस्माहंबाहुभ्यांपरिरंभितः १६ नि
वासितः प्रियाजुष्टेपर्यंकेभ्रातरोयथा महिष्यावीजितः श्रांतोवालव्यजनहस्तया १७ शुश्रू
षयापरमयापादसंवाहनादिभिः पूजितोदेवदेवेनविप्रदेवेनदेववत् १८ स्वर्गापवर्गयोः
पुंसांरसायांभुविसंपदां सर्वासामपिसिद्धीनांमूलंतच्चरणार्चनं १९ अधनोयंधनंप्राप्यमा
द्यन्नुच्चैर्नमांस्मरेत् इतिकारुणिकोनूनंधनंमेऽभूरिनाददात् २० इतितच्चिंतयन्नंतः प्राप्तोनि
जगृहांतिकं सूर्यानलेंदुसंकाशैर्विमानैः सर्वतोवृतं २१ विचित्रोपवनोद्यानैः कूजद्द्विज
कुलाकुलैः ।। ९ उरसिबिभ्रताआश्लिष्टोहं १५ पापीयान्नीचः १६ १७ पूजितश्चंदनलेपनादिभिः १८ एवंसंपू
ज्यापिधनस्यादानेकारणंकल्पयतिस्वर्गापवर्गयोरितिद्वाभ्यां १९ स्वर्गादीनांयद्यपितस्यचरणार्चनमेवकारणंतथापि
कारुणिकत्वादभूर्यपिधनंमह्यंनाददात् २० निजगृहस्यांतिकंतत्स्थानंतस्यविशेषणंसूर्येति २१ विचित्रोपवनादिभिर्दिनं

कूजद्भिर्द्विजकुलैराकुलैस्तयाप्रोत्फुल्लानि कुमुदादीनि येषु तानि वारीणि येषु तानि [illegible] श्रितैः २२ किंच जुष्टमिति हरिणी नामिवाक्षीणि यासां ताभिः तदैश्वर्यं दृष्ट्वा वितर्कितवानुत्तदाह किमिदमिति प्रथमं तेजःपुंजं दृष्ट्वा किमिदमिति पश्चाद्विमानानि दृष्ट्वा कस्य चेति स्थानं स्वीयमिति ज्ञात्वा कथं तदिदं स्थानमिति एवंरूपमभूदिति २३ अमरप्रभाः तत्तुल्यकांतयः

प्रोत्फुल्लकुमुदांभोजकह्लारोत्पलवारिभिः २२ जुष्टं स्वलंकृतैः पुंभिः स्त्रीभिश्च हरिणा॥ क्षिभिः किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् २३ एवं मीमांसमानं तं नरा नार्योमरप्रभाः प्रत्यगृह्णन्महाभागं गीतवाद्येन भूयसा २४ पतिमागतमाकर्ण्य पत्न्युद्धर्षातिसंभ्रमा निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात् २५ पतिव्रता पतिं दृष्ट्वा प्रेमोत्कंठाश्रुलोचना मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे २६ पत्नीं वीक्ष्य विस्फुरंतीं देवीं वैमानिकीमिव दासीनां निष्ककंठीनां मध्ये भांतीं स विस्मितः २७ प्रीतः स्वयं तया युक्तः प्रविष्टो निजमंदिरं मणिस्तंभशतोपेतं महेंद्रभवनं यथा २८ पयःफेननिभाः शय्या दांतारुक्मपरिच्छदाः॥

२९ प्रत्यगृह्णन् उपायनादिभिरादृतवंतः २४ उद्धर्षो हर्षो यस्याः सा अतिसंभ्रमः आदरो यस्याः सा आलयात्कमलवनात् रूपधारिणी श्रीरिव स्वर्गस्य तत्र भगवता आनीतत्वात् स्वर्गिणामिव तयो रूपं च बभूवेति भावः २५ बुद्ध्या अयमेव वंद्य इति निश्चयेन मनसा संकल्पेन २६ २७ २८ यत्र मंदिरे पयःफेननिभाः शय्या आस्तरणानीत्या

भा० द० [illegible]

राम ९९

तत्रसर्वसंपदांसमृद्धीर्विलोक्यतर्कयामासेतिचतुर्थेनान्वयः यत्रचदांताःगजदंतमयाःपर्य्यंकाः २९ यत्रआसनानिच।
मृदूनुपस्तरणानिचतूलादिमयानियेषुतानि यत्रचमुक्तादामविलंववंतिद्युमंतिचवितानानि ३० ३१ सब्राह्मणःनिर्व्यग्रसं
स्थिरः सन्अहैतुकींआकस्मिकींस्वस्यसमृद्धिंतर्कयामासकुतएषासमृद्धिरागतेति ३२ निश्चिनोतिनूनमिति एतन्ममेति॥
एषचासावहंचतस्यसमृद्धिहेतुर्महाविभूतेर्युदूत्तमस्यावलोकतोऽन्योनैवोपपद्येत ३३ ननुसचेदवलोकनमात्रेणमहदैश्व

पर्य्यंकाहेमदंडानिचामरव्यजनानिच २९ आसनानिचहैमानिमृदूपस्तरणानिच मुक्तादा
मविलंबीनिवितानानिद्युमंतिच ३० स्वच्छस्फटिककुड्येषुमहामरकतेषुच रत्नदीपान्भ्रा
जमानान्ललनारत्नसंयुतान् ३१ विलोक्यब्राह्मणस्तत्रसमृद्धीःसर्वसंपदां तर्कयामास।
निर्व्यग्रःस्वसमृद्धिमहैतुकीं ३२ नूनंवतैतन्ममदुर्भगस्यशश्वद्दरिद्रस्यसमृद्धिहेतुःमहावि
भूतेरवलोकतोऽन्योनैवोपपद्येतयदूत्तमस्य ३३ नन्वब्रुवाणोदिशतेसमक्षंयाचिष्णवेभूर्य
पिभूरिभोजः पर्जन्यवत्तत्स्वयमीक्षमाणोदाशार्हकाणामृषभःसखामे॥३४॥एवंर्यदत्तवान् तर्हिइ
दंतुभ्यदत्तमितिकिंनावोचदतआहनन्विति ननुमेसखासमक्षमब्रुवाणएवयाचिष्णवेयाचकायभूरिवहूपि दिशतेददा
ति अत्रहेतुः भूरिभोजःस्वयंतद्देयंपर्जन्यवदीक्षमाणइति अयमर्थः स्वयंतावद्भूरिभोजः आप्तकामत्वात्लक्ष्मीपतित्वा
च्चअनोयथापारावारपरिपूरकोऽतिवदान्यःपर्जन्यःकदाचिद्बहुपिवर्षमल्पमेवमन्यमानोलज्जयेवसमक्षमवर्षमरात्रौ।
निद्राणेकर्षकेतत्क्षेत्रमाप्लावयतिएवंश्रीकृष्णोपिस्वभोगापेक्षयातद्देयमिंद्रादिपदंस्वल्पमपिअतितुच्छंमन्वानःतस्यचभजनंव

तदेवाह किंचिदिति उरु बह्वपि स्वदत्तं स्वल्पं किंचित्करोति अल्पं मन्यते सुहृत्कृतं फल्गु अतितुच्छं अपि भूरिकारी बहु मन्यत इत्यर्थः अत एव मया उपनीतं समीपं नीतं प्रीतियुतः स्वयमेव प्रतिगृहीतवान् ३५ श्रीकृष्णस्य भक्तवात्सल्यं दृष्ट्वा तद्भक्तिं प्रार्थयते तस्येति सौहृदं प्रेम सख्यं हिताशंसनं च मैत्री उपकारकत्वं च दास्यं सेवकत्वं तत्समाहारैकवचनं तस्य तत्संबंधि तो मे मम स्यात् न तु विभूतिः किंच महाऽनुभावेन तेनैव विषज्जतो विशेषेण संगं प्राप्नुवतस्तद्भक्तेषु प्रकृष्टः संगः स्यादिति ३६ ॥

किंचित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारी मयोपनीतं पृथुकैकमुष्टिं प्रत्य
ग्रहीत्प्रीतियुतो महात्मा ३५ तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि जन्मनि स्यात् म
हाऽनुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसंगः ३६ भक्ताय चित्रा भगवान् हि संपदो राज्यं
विभूतीर्न्न समर्द्धयत्यजः अदीर्घबोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां मदोद्भवं ३७
इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने विषयान् जायया त्यक्ष्यन् बुभुजे नातिलंपटः ३८
तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परं ३९ ॥ ६ ॥

॥ ननु भक्तेः फलं संपदं प्राप्य पुनर्भक्तिं किमिति प्रार्थयसे अत आह भक्तायेति संपदः कोशादीन् राज्यमैश्वर्यं विभूतीः कलत्रपुत्रपौत्रादीन् न समर्द्धयति न ददाति अपि तु दृढां भक्तिमेव कुतः अदीर्घबोधाय अविवेकिने मम तु भक्त्यभावादेवं जातं अतस्तद्भक्तिरेव स्यादिति भावः ३७ त्यक्ष्यन् शनैः शनैः त्यागमभ्यस्यन् जायया सह बुभुजे ३८
श्रीकृष्णस्यैवं ब्रह्मण्यता नातिचित्रमित्याह तस्येति ॥ ३९ ॥ ॥

अभीक्ष्णमिति लिंगायन् यस्य श्रीकृष्णस्य प्रेक्षणे दृष्टिषु नेत्रेषु व्यवधायकं पक्ष्मकृतं विधातारं शपन्ति दृग्भिर्नेत्रद्वारैः हृदीकृतं हृदये प्रवेशितं परिरभ्य तद्भावं तदात्मतां प्रापुः अपि नित्ययुजां आरूढयोगिनामपि समाधिनिष्ठानामिति यावत् दुरापं दुष्प्रापं ३९ ४० चिरायितान् चिरं विलंबितान् अत्र हेतुः शत्रूणां पक्षस्य क्षपणे चेतो येषां तान् ४१ अपि स्मरथ इत्य

श्रीशुक उवाच गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपंति दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापं ३९ भगवांस्तास्तथाभूता विविक्त उपसंगतः आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ४० अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया गतांश्चिरायिताञ्छत्रुपक्षक्षपणचेतसः ४१ अप्यवध्यायथास्मान्स्विदकृतज्ञाविशंकया नूनं भूतानि भगवान्युनक्ति वियुनक्ति च ४२ वायुर्यथा घनानीकं तृणं तूलं रजांसि च संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ४३ मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ४४॥ एतस्मान अवध्यायथ अवजानीथ अकृतज्ञा एते इत्याविशंकया ईषच्छंकया न शंकामात्रं निश्चितमेवैतत् परित्यज्य गतत्वादिति अत आह नूनमिति ४२ एतस्य दृष्टांतमाह वायुरिति आक्षिपते पृथक्करोतीत्यर्थः ४३ अपि च अतिभद्रमिदं यद्युष्मद्भवतीनां मद्वियोगेन मत्प्रेमातिशयो जात इत्याह मयीति मयि भक्तिमात्रमेव तावदमृतत्वाय कल्पते इति स्थितं भवतीनां मत्स्नेह आसीत् तद्दिष्ट्या अतिभद्रं कुतः मदापनः मत्प्रापण इति ४४ ॥

कीदृशस्त्वं यं वयं स्नेहेन प्राप्स्याम इत्यपेक्षायामात्मस्वरूपमाह अहं हीति हे अंगनाः भौतिकादीनां शरावसैंधवादीनां य
था आकाश... दीनि। पंचमहाभूतान्याद्यंतादिरूपाणि एवं सर्वभूतानां जरायुजादीनां अहं अंतोबाह्यकं मां भवत्यः प्राप्ता ए
वेति ४५ ननु चतुर्विधभूतग्रामापन्नतज्ज्ञोक्तात्मैवाद्यंतादिरूपः तस्मिंश्च सर्वव्यापके सर्वभूतानि वर्तंत इति कुतस्त्वत्प्राप्ति
रस्माकमित्यत आह एवं हीति अयमर्थः यथा शरावादीनां भौतिकानां महाभूतान्याद्यंतादिरूपाणि एवमेवैतानि चतुर्वि
धानि भूतान्यपि भौतिकत्वाविशेषात्स्वकारणेषु भूतेष्वेव वर्तंते न तु भोक्तर्यात्मनि आत्मा तु तेषु भूतेष्वात्मना भोक्तृरू

अहं हि सर्वभूतानामादिरंतोऽन्तरं बहिः भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरंगनाः ४५
एवं ह्येतानि भूतानि भूतेष्वात्मात्मनाततः उभयं मय्यथ परे पश्यताऽभातमक्षरे ४६ श्रीशुक
उवाच अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः तदनुस्मरणध्वस्तजीवकोशास्तमध्य
गन् ४७ आहुश्च ते नलिननाभपदारविंदं योगेश्वरैर्हृदि विचिंत्यमगाधबोधैः संसारकूपप
तितोत्तरणावलंबं गेहंजुषामपि मनस्युदियात्सदा नः ॥ ४८ ॥ ❋ ॥ ६ ॥ ❋ ॥

पेण ततः व्याप्तः न कारणत्वेन अथैतदुभयं भूतभौतिकरूपं भोग्यं च भोक्तारं चात्मानं मय्यक्षरे परिपूर्णे आभातं पश्यतेति ॥
४६ अध्यात्मशिक्षया स्वरूपोपदेशेन शिक्षिताः बोधिताः तस्यानुस्मरणेन ध्वस्तो जीवकोशो लिंगं यासां ताः तमेवाध्यगन्
प्रापुः ४७ एवं प्राप्तोपि कृष्णः पुनर्गृहव्यासंगेन माऽपयात्विति तच्चरणस्मरणं प्रार्थयामासुरित्याह आहुश्चेति हे नलि
ननाभ ते पदारविंदं गेहंजुषां गृहसेविनीनामपि नो मनसि सदा उदियात् आविर्भवेत् ॥ ४८ ॥ ६ ॥ ❋ ॥ ६ ॥

अन्यैरजितमिति स्वभृत्यैः पराजितं दृष्ट्वा तस्य ध्यानं तस्य वेगस्तेनोद्ग्रथितमात्मबंधनमहंकारो यस्य सः गतिमित्याविष्टलिंगं धाम विशेषणं सतां ब्रह्मविदां प्राप्यमित्यर्थः ५० एतत्सृगुकोपाख्यानं श्रुत्वा नत्र ब्रह्मण्यतां विशेषतः श्रुत्वेति ५१ इति दशमे टीकायां एकाशीतितमोऽध्यायः ८१ द्व्यशीतितमे आगत्य कुरुक्षेत्रं रविग्रहे दृष्ट्वा मुदा भूपाः श्वकृः कृष्णः

एवं स विप्रो भगवत्सुहृत्तदा दृष्ट्वा स्वभृत्यै रजितं पराजितं तद्ध्यानवेगोद्ग्रथितात्मबंधनस्तद्धाम लेभेऽचिरतः सतां गतिं ५० एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः लब्धभावो भगवति कर्मबंधाद्विमुच्यते ५१॥ इति श्रीभागवते महापुराणे दशमस्कंधे भवन्मित्रब्राह्मणसंवादो नामैकाशीतितमोऽध्यायः ८१ श्रीशुक उवाच अथैकदा द्वारवत्यां वसतो रामकृष्णयोः सूर्योपरागः सुमहानासीत्कल्पक्षये यथा १ तं ज्ञात्वा मनुजा राजन्पुरस्तादेव सर्वतः स्यमंतपंचकं क्षेत्रं ययुः श्रेयो विधित्सया २ निःक्षत्रियां महीं कुर्वन् रामः शस्त्रभृतां वरः नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ३ ईजे च भगवान्रामो यत्रास्पृष्टोऽपि कर्मणा लोकस्य ग्राहयन्नीशो यथाऽन्योऽघापनुत्तये ४॥ (१) कथामिषः १ श्रीदामसुहृदेकत्वः प्रकल्प्यैं द्रुपदं भुवि नंदादिसुहृदानंदी कुरुक्षेत्रं जगाम सः २ कल्पक्षयेयथा सर्वग्रासइत्यर्थः १ ज्योतिर्विद्भिः कथ्यमानमादावेव ज्ञात्वा स्यमंतपंचकं कुरुक्षेत्रं २ अब्रह्मण्यक्षत्रियवधस्थानत्वेन परशुरामस्याघापनुत्तिस्थानत्वेन च क्षेत्रस्य पापनिराकरणत्वमाह निःक्षत्रियामिति द्वाभ्यां ३ अन्यो विद्वान्यथा ४ ॥

भा॰द॰
उ॰
१०१

आगन् आजग्मुः भारतीः भारत्यः ४ सुचंद्रशुकसारणैः सह अनिरुद्धो द्वारकायां रक्षार्थमास्ते तथा कृतवर्मा च यूथपतिः सेनानीः ६ देवधिष्ण्याभैः विमानसंकाशैः तरलाः तरंगास्तद्वत्प्लवो गतिर्येषां तैः विद्याधरद्युभिः विद्याधराणामिव द्युतिर्येषां तैः ७ महातेजाः महातेजसः दिव्या अत्युत्तमाः स्रग्वस्त्रसन्नाहा येषाम् ८ ९ पुनरप्येषु राम ह्रदेषु आप्लुत्य यद्वा तस्मिन्ने वाह निविमुक्तिस्नानं कृत्वा १० स्निग्धा शीतला छाया येषां मंघ्रिपानां तेषां अंघ्रिषु मूलेषु ११

महत्यां तीर्थयात्रायां तत्रागन्भारतीः प्रजाः वृष्णयश्च तथाऽक्रूरवसुदेवाऽहुकादयः ।
५ ययुर्भारततं क्षेत्रं स्वमघं क्षपयिष्णवः गदप्रद्युम्नसांबाद्याः सुचंद्रशुकसारणैः ६ आस्ते ऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः गजैर्नदद्भि रभ्राभैर्नृभिर्विद्याधरद्युभिः ७ व्यरोचंत महातेजाः पथि कांचनमालिनः दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः खेचरा इव ८ तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः ब्राह्मणेभ्यो ददुर्धेनूर्वासः स्रग्रुक्ममालिनीः ९ रामह्रदेषु विधिवत् पुनराप्लुत्य वृष्णयः ॥ ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति १० स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः भुक्त्वोपविविशुः कामं स्निग्धच्छायांघ्रिपांघ्रिषु ११ तत्रागतांस्ते ददृशुः सुहृत्संबंधिनो नृपान् मत्स्योशीनरकौशल्यविदर्भकुरुसृंजयान् ॥ १२ ॥ ९ ॥ ❋ ॥ ❋ ॥

राम:
१०१

१३ प्रोत्फुल्लैर्हृद्वक्त्रसरोरुहैः श्रीशोभायेषां ते १४ अतिसौहृदेन यत् स्मितं तेन अमला अपांगाद्दृशो दृष्टयो यासां ताः मिथः संवीक्ष्य दोर्भिरभिरेभिरे आलिंगनं कृतवत्यः १५ १६ संकथया मिथः सप्रेमगोष्ठ्या १७ नाम एव वसुदेव पृथ

कांबोजकैकयान्मद्रान्कुंतीनानर्तकेरलान् अन्यांश्चैवात्मपक्षीयान्परांश्च शतशो। नृप नंदादीन्सुहृदो गोपान्गोपीश्चोत्कंठिताश्चिरं १३ अन्योऽन्यसंदर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदं १४ स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापांगदृशोऽभिरेभिरे स्तनैः स्तनान्कुंकुमपंकरूषितान् निहत्य दोर्भिः प्रणयाश्रुलोचनाः १५ ततोऽभिवाद्य ते वृद्धान्यविष्ठैरभिवादिताः स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथां मिथः १६ पृथा भ्रातॄन् स्वसॄर्वीक्ष्य तत्पुत्रान्पितरावपि भ्रातृपत्नीर्मुकुंदं च जहौ संकथया शुचः १७ कुंत्युवाच आर्य भ्रातरहं मन्ये आत्मानमकृताशिषं यद्वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः १८ सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि नानुस्मरंति स्वजनं यस्य दैवमदक्षिणं १९ ॥ ६ ॥ ६ ॥

पीः संकथामाह आर्येत्यादिचतुर्भिः अकृताशिषमपूर्णमनोरथं १८ यस्य दैवमदक्षिणं अननुकूलं तं स्वजनमपि संतं सुहृदादयो नानुस्मरंति अतो मम दैवं प्रतिकूलं युष्माकं को पराध इति भावः ॥ १९ ॥ १९ ॥ १९ ॥ १९ ॥ १९ ॥

ईश्वरवशत्वमेवाहकंसप्रतापिताइति हेस्वसः एतर्ह्येवसंप्रत्येव २१ २२ २३ २४ २५ युधिष्ठिरं येऽनुव्रता स्तेराज

वसुदेवउवाच अंबमास्मानसूयेथा दैवक्रीडनकान्नरान् ईशस्यहिवशेलोकः कु
रुतेकार्यतेऽथवा २० कंसप्रतापिताः सर्वेवयंयाता दिशोदिशः एतर्ह्येवपुनः स्थानंदै
वेनासादिताः स्वसः २१ शुकउवाच वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चितानृपाः आस
न्नच्युतसंदर्शपरमानंदनिर्वृताः २२ भीष्मोद्रोणोंबिकापुत्रोगांधारीससुतातथा सदाराः
पांडवाः कुंतीसंजयोविदुरःकृपः २३ कुंतिभोजोविराटश्चभीष्मकोनग्नजिन्महान् पुरु
जिद्द्रुपदः शल्योधृष्टकेतुःसकाशिराट् २४ दमघोषोविशालाक्षोमैथिलोमद्रकेकयौ
युधामन्युःसुशर्माचससुतावाल्हिकादयः २५ राजानोयेचराजेंद्रयुधिष्ठिरमनुव्रताः श्री
निकेतंवपुःशौरेः सस्त्रीकंवीक्ष्यविस्मिताः २६ अथतेरामकृष्णाभ्यांसम्यक्प्राप्तसमर्ह
णाः प्रशशंसुर्मुदायुक्तावृष्णीन्कृष्णपरिग्रहान् २७ अहोभोजपतेयूयंजन्मभाजोनृ
णामिहयत्पश्यथाऽसकृत्कृष्णंदुर्दर्शमपियोगिनां २८ ॥ ॥ ॥ ॥ ॥

कृष्णेजितत्वात् २६ २७ जन्मभाजः नृणांमध्येसफलजन्मानः २८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

किंचनकेवलंतस्यदर्शनमेवअपितुअत्यंतदुर्लभंवद्धयुष्माकंस्वतःसंपन्नमित्याहुः यद्विश्रुतिरितिद्वाभ्यां यदिनिएथ्य
क्पदंयस्येत्यर्थः विश्रुतिःकीर्तिःश्रुतिभिर्नुतावेदे स्नुताइदंविश्वमलमत्यर्थंपुनातियद्विश्रुतिःश्रुतिरमीवमलमितिपाठे
श्रुतिःश्रवणममीवंपापमितियस्यपादावनेजनपयोगंगाचयस्यवचोवाक्यरूपंशास्त्रंचवेदाख्यंविश्वंपुनाति किंचकाले
नभर्जितंदग्धंभगंमाहात्म्यंयस्याःसातथाविधाऽपिभूर्यस्यांघ्रिपद्मस्पर्शेनोत्थाआविर्भूताशक्तिर्यस्याःसानोऽस्माकम
खिलानर्थान् अभितोवर्षति २९ दर्शनंचस्पर्शनंचअनुपथःअनुगतिश्चप्रजल्पोगोष्ठीचशय्याशयनंचआसनंचअशनं।

यद्विश्रुतिःश्रुतिनुतेदमलंपुनातिपादावनेजनपयश्चवचश्चशास्त्रं भूःकालभर्जितभगापिय
दंघ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षतिनोखिलार्थान् २९ तद्दर्शनस्पर्शनानुपथप्रजल्पश
य्यासनाशनसयौनसपिंडबंधः येषांगृहेनिरयवर्त्मनिवर्ततांवः स्वर्गापवर्गविरमःस्वय।
मासविष्णुः ३० श्रीशुकउवाच नंदस्तत्रयदून्प्राप्तान्ज्ञात्वाकृष्णपुरोगमान् तत्रागमद्वृ
तोगोपैरनस्यार्थैर्दिदृक्षया ३१॥ भोजनंचयौनंबंधः विवाहसंबंधः सपिंडबंधःदैहिकगेहसंबंधः तेनसह
वर्तमानःश्रीकृष्णेनसहदर्शनाद्युपलक्षितःसयौनःसपिंडबंधोयेषांवोऽस्ति किंचयेषांवोगृहेविष्णुःस्वयमासआविर्भूतःनि
रयवर्त्मनिप्रवृत्तिमार्गेवर्तमानानांस्वर्गापवर्गाभ्यांविरमयतिवितृष्णान्करोतीतितथासःतेयूयंजन्मभाजइति यद्वातदितिसा
मान्यनिर्देशःसइत्यर्थःसविष्णुःस्वयंयेषांवोनिरयवर्त्मनिसंसारकारणेगृहेवर्तमानानामपिवध्यतेसंबध्यतइतिसंबंधःदर्शनादिभिः
संबद्धःसनस्वर्गापवर्गविरमआसपरमसुखरूपोबभूवेत्यर्थः३०अनस्यार्थैरितितत्रैववासचिकीर्षयाशकटेषुस्थापितैरर्थैःसहागतइत्य

८२
भा॰द॰
उ॰
१०३

गा॥३२॥वसुदेवस्तंपरिष्वज्यप्रेमविह्वलौ[illegible]तिशेषः ३३ ३४ तौसुतौपरिरभ्यनंदोयशोदाचविरहशोकान्विजहतुःतत्यज
तुःयद्वाशुचःअश्रूणिविजहतुःमुमुचतुरित्यर्थः ३५ व्रजेश्वरींयशोदां ३६ अनिवृत्तांनिवृत्तिकारणेसत्यपि अनुवर्त्तमानां
ऐन्द्रमैश्वर्यंप्राप्यापियस्याःप्रतिक्रियाकर्त्तुंनशक्यतइत्यर्थः ३७ तत्कृतांमैत्रीमाहतुः एताविति नदृष्टौपितरौयाभ्यां॥

तेदृष्ट्वावृष्णयोहृष्टास्तन्वःप्राणमिवोत्थिताः परिषस्वजिरेगाढंचिरदर्शनकातराः ३२
वसुदेवःपरिष्वज्यसंप्रीतःप्रेमविह्वलः स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासंचगोकुले
३३ कृष्णरामौपरिष्वज्यपितरावभिवाद्यच नकिंचनोचतुःप्रेम्णासाश्रुकंठौकुरूद्वह ३४
तावात्मासनमारोप्यबाहुभ्यांपरिरभ्यच यशोदाचमहाभागासुतौविजहतुःशुचः ३५ रोहि
णीदेवकीचाथपरिष्वज्यव्रजेश्वरीं स्मरंत्यौतत्कृतांमैत्रींबाष्पकंठ्यौसमूचतुः ३६ काविस्म
रेतवांमैत्रीमनिवृत्तांव्रजेश्वरि अवाप्याप्यैन्द्रमैश्वर्यंयस्यानेहप्रतिक्रिया ३७ एतावदृष्टपि
तरौयुवयोःस्मपित्रोःसंप्रीणनाभ्युदयपोषणपालनानि प्राप्योषतुर्भवतिपक्ष्महयद्वदक्ष्
ष्णोर्न्यस्तावकुत्रचभयौनसतांपरःस्वः ३८॥ एतौवसुतत्सुअजन्मत्वादेवादृष्टपितरौहे भवतियुवयोःपित्रोर्न्य
स्तावेतौसंप्रीणनादीनिप्राप्यअकुत्रचभयौक्वचिदपिभयरहितौभूत्वाऊषतुःवासंचक्रतुः कथंभूतयोः अक्ष्णोर्नेत्रा
योःरक्षकंपक्ष्मयद्वत्तथारक्षकयोर्युक्तंयुवयोरेतत्यतःसतांसत्पुरुषाणांपरःस्वः इतिनास्तिवैषम्यं ३८ ॥ ६ ॥

राम:
१०३

॥इतिदशमेटीकायांद्व्यशीतितमोऽध्यायः॥ ८२॥ अशीतितमएवंचस्त्रीणांकृष्णकयोत्सवैद्रौपद्यैकृष्णभार्याभिरुक्ताः। स्वस्वकरग्रहाः १ अव्ययंकुशलं १ तत्पादेक्षयाहतमंहोयेषांते २ महतांमनस्तः सकाशात् मुखद्वारतोनिःसृतंक्व
चित् कदाचित् देहभृतांदेहधारिणांदेहकृच्चासावस्मृतिश्च अविद्यातांछिनत्तीतितथातंदेहकृदीश्वरस्तद्विषयाज्ञा।
नच्छिदंवाहेप्रभोत्वच्चरणांबुजासवंकर्णपुटैरप्यऽलंपिबंतितेषांत्वत्तः दुर्जनतास्तु कालरूपातकुतोऽशिवंभवतीत्यर्थः
कथंभूतंमहात्मनांव्यासादीनांमुखनिःसृतंक्वचित्कदाचिदपिव्यासादिवाकौ.स्त मात्मत्वेनजानतोनदुःखंभवतीत्यर्थः

॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेतीर्थयात्रायांवृष्णिकुरुसंगमोनामद्व्यशीतितमोऽध्यायः॥८२॥ श्रीशुकउवाच तयाऽनुगृह्यभगवान् गोपीनांसगुरुर्गतिः युधिष्ठिरमथापृच्छत्सर्वांश्चसुहृदोऽव्ययं १ तएवंलोकनाथेनपरिपृष्टाःसुसत्कृताः प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः २ कुतोऽशिवंत्वच्चरणांबुजासवंमहन्मनस्तोमुखनिःसृतंक्वचित् पिबंतियेकर्णपुटैरलंप्रभोदेहभृतांदेहकृदस्मृतिच्छिदं ३ हित्वात्मधामविधुतात्मकृतत्र्यवस्थमानंदसंप्लवमखंडमकुंठबोधं॥ एवंईश्वरस्यात्मत्वमेवकथंतत्राहदेहभृतइतिदेहभृतोजीवाःत्व
त्कृतेनत्वद्धेतुत्वेनउच्छ्वसंतिजीवंति कोह्येवान्यात्कःप्राण्यात्यदेषआकाशआनंदोनस्यात् इतिश्रुतिः अथवात्व
न्मुखनिःसृतंत्वच्चरणांबुजासवंयेपिबंतितेषांमहात्मनांकुतोऽशिवमित्यर्थःत्वत्कृतेभगवन्नमस्कारकरणाय ३ हि
त्वेतिपदद्वयंत्वात्वाहिएवत्वामेवनताःस्मेत्यर्थःकथंभूतंआत्मधाम्नास्वरूपप्रकाशेनविधुतानिरस्ताःआत्मकृताः॥

८३
भा॰द॰
उ॰
१०५

बुद्धिनिमित्तास्तिस्रोऽवस्था यस्मिन् तं अत एव आनंदसंप्लवं सर्वानंदकदंबरूपं अखंडं च अपरिच्छिन्नं यतः नकुंठः कुंठितः बोधः चिच्छक्तिर्यस्य तं तन्नन्वेवं रूपता श्रीकृष्णस्य कुतोस्मदादिवदेवप्रतीतेरत आहुः कालोपसृष्टेति कालेन उपसृष्टा विप्लुताश्च ते निगमाश्च तेषामवने रक्षार्थं आत्ता उपात्ता योगमायया आकृतिर्निराकारमूर्तिर्येन तं परमहंसानां गतिं त्वां अतस्तवैवं रूपत्वादस्माकं च तन्मायया एतत्सर्वं वैपरित्यात्त्वामेव नताः स्मेति यद्वा त्वामिति प्रकरणात् ज्ञातव्यं त्वां

कालोपसृष्टनिगमावन आत्तयोगमायाकृतिं परमहंसगतिं नताः स्म ४ ऋषिरुवाच इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वंधककौरवस्त्रियः समेत्य गोविंदकथा मिथोऽगृणंस्त्रिलोकगीताः शृणु वर्णयामि ते ५ श्रीद्रौपद्युवाच हे वैदर्भ्यच्युतो भद्रे हे जांबवति कौसले हे सत्यभामे कालिंदि शैब्ये रोहिणि लक्ष्मणे ६ हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान् स्वयं उपयेमे यथा लोकमनुकुर्वन् स्वमायया ७ श्रीरुक्मिण्युवाच चैद्याय माऽर्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरितांघ्रिरेणुः । निन्ये मृगेंद्र इव भागमजाविय्ढाथात्तच्छ्रीनिकेतचरणोऽस्तु मम मार्चनाय ८॥ एननताः स्म किं कृत्वा हित्वा किं आत्मधाम आत्मा शरीरं धाम गृहं च तत्र च तत् च देहदैहिकसंगं परित्यज्येत्यर्थः समानमन्यत् ४ त्रिषु लोकेषु गीताः ५ कौसले हे सत्ये शैब्ये हे मित्रविंदे रोहिणी नाम काचित्षट्महिषीतुल्या ६ हे अन्याः श्रीकृष्णपत्न्यः ७ मां अर्पयितुं संपादयितुं राजसु जरासंधादिषु उद्यतकार्मुकेषु सत्सु अजेया ये भटास्तेषां शेखरिता मुकुटवत् कृता अंघ्रिरेणवो येन न तेषां मूर्ध्नि पदं दधदित्यर्थः तस्य श्रीनिकेतनस्य चरणो मम मार्चनायाऽस्तु ८॥

एम॰
१०५

सत्राजितो भ्रातुर्वधेन सिंहकृतेन नन्वयं हि घस्य तेन मे तत्तेन जनातेन लिप्तम भिशापं दुर्यशः अपमार्ष्टुं परिहर्त्तुं ऋक्षराजं जित्वा रत्नं ॥९८

स्यमंतकमुपाजहार आनीतवान् अथानंतरं मन्निमित्ते रत्नमदात् तेन स्वापराधेन भीतः स मे पिता प्रभवे श्रीकृष्णाय मामदि

शान् दत्तवान् अक्रूरादिभ्यः प्रतिश्रुतामपीत्यर्थः ९ देहकृतमेपिता अमुं श्रीकृष्णं निजनाथं स्वामिनं देवमीश्वरं सीताप

श्रीसत्यभामोवाच योमेसनाभिवधतप्तहृदा ततेन लिप्ताऽभिशापमपमार्ष्टुमुपाजहार।

जित्वर्क्षराजमथ रत्नमदात्स तेन भीतः पिता दिशत मां प्रभवेऽपि दत्तां ९ श्रीजांबवत्युवाच

प्राज्ञाय देहकृदमुं निजनाथदैवं सीतापतिं त्रिनवहान्यमुनाऽभ्ययुध्यत् ज्ञात्वा परीक्षित उपा

हरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी १० श्रीकालिंद्युवाच तपश्चरंतीमाज्ञाय

स्वपादस्पर्शनाशया सख्योपेत्याग्रहीत्पाणिं योऽहं तद्गृहमार्जनी ११ श्रीमित्रविंदोवाच॥

योमां स्वयंवर उपेत्य विजित्य भूपान्निन्ये श्ववृषयगमिवात्मबलिं द्विपारिः भ्रातॄंश्च मेपकुरुतः

स्वपुरं श्रियौकस्तस्यास्तु मेनुभवमंघ्र्यवनेजनत्वं १२॥ एनं प्राज्ञाय अविज्ञाय त्रिनवहानि त्रिनवाहानि हृत्स्व

स्वं देहेनुरोधेन सप्तविंशतिदिनान्यमुनाऽभ्ययुध्यत् परीक्षितः संजाता परीक्षा यस्य स परीक्षितः तं सा ज्ञात सीतापतिरेवासा

विति ज्ञात्वा पादौ प्रगृह्य मणिना सह मामर्हणमुपाहरत् अर्हणतया समर्पितवान् अहो तर्हि त्वमपि श्रेष्ठासि नेत्याह अमुष्या

हं दासीति १० सख्या अर्जुनेन नन्तस्य गृहमार्ज्जनी गृहसंमार्ज्जनकर्त्री ११ श्वनां यूथगं तं स्वबलिं द्विपारिः सिंह इवेति मे भ्रातॄंश्चाप

व॰ भा॰ द॰ उ॰ १०६

सप्तउक्षणः वृषभान् वलंचवीर्यंचप्रभावंश्चतीक्ष्णानिशृंगानिच अतिशयिनानिःशेषांतान्मेपित्राकृतान्संपादितान् व
लीयसेमां दत्तुं क्षितिपानां वीर्यसवलस्यपरीक्षणायतानतिप्रसिद्धान्वीराणांदुर्मदं घ्नंतियेतान्तरसाशीघ्रमेवनि
गृह्यदमयित्वाक्रीडनायासेनैवववंधअजनोकान् अजापत्यानि १३ वीर्यमेवशुल्कंदेयंयस्यास्तांदासीभिः सहचतुरं

श्रीसत्योवाच सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृंगान् पित्राकृतान् क्षितिपवीर्यपरीक्षणा
यतान्वीरदुर्मदहनस्तरसानिगृह्यक्रीडन्ववंधहयथाशिशवोजनोकान् १३ यइत्थंवीर्यशु
ल्कांमांदासीभिश्चतुरंगिणीं पथिनिर्जित्यराजन्यान्निन्येतद्दास्यमस्तुमे १४ श्रीभद्रोवाच
पितामेमातुलेयायस्वयमाहूयदत्तवान् कृष्णेकृष्णायतच्चित्तामक्षौहिण्यासखीजनैः १५
अस्यमेपादसंस्पर्शोभवेज्जन्मनिजन्मनि कर्मभिर्भ्राम्यमाणायायेनतच्छ्रेयआत्मनः १६
श्रीलक्ष्मणोवाच ममापिराज्ञ्यच्युतजन्मकर्मश्रुत्वामुहुर्नारदगीनमासह चित्तंमुकुं
देकिलपद्महस्तयावृतः सुसंमृश्यविहायलोकपान् १७ ॥९॥ गिणीं गजाश्वादिसेनायुक्तांपुरंनि

न्ये १४ कृष्णेहेद्रौपदितस्मिन्नेवचित्तंयस्यास्तांमामक्षौहिण्यासेनयासखीजनैश्चसह १५ येनपादसंस्पर्शेनआ
त्मनोमेनतत्कैवल्यास्यंश्रेयोभवेत्सः यद्वायेनकारणेनआत्मनोजीवस्यतच्छ्रेयः सएवपुरुषार्थइति १६ राज्ञिहेद्रौपदि
यथामित्रविंदायास्तथैवममापिचित्तंमुकुंदविषयमासीत् सुसंमृश्यसुविचार्यपद्महस्तयाश्रियावृतः किलअतोऽपिम

राम॰ १०६

तत्रश्रीकृष्णप्राप्तावुपायमचीकरत्कारयामास १८ यथाराज्ञिनवस्त्वयंवरेपार्थस्यैप्सयाप्राप्तुमिच्छयाकृतः तथाम त्स्यंकारितवान्पाठांतरेपार्थस्येषुणाऽपाकृतः नहींदमपिअर्जुनएवकिंनाविध्यत्तत्राह अयंत्विति समत्स्योवहिरेवा च्छन्नोनांतः अतःस्तंभसंलग्नयोर्द्रष्टासंलक्ष्यतेअयंतुनतथाकिंतुस्तंभमूलेनिहितकलशजलेकेवलंदृश्यतेअतो

ज्ञात्वाममभर्तंसाध्विपितादुहितृवत्सलः बृहत्सेनइतिख्यातस्तत्रोपायमचीकरत् १८

यथास्वयंवरेराज्ञिमत्स्यःपार्थेप्सयाकृतः अयंतुवहिराच्छन्नोदृश्यतेसजलेपरं १९ श्रु

त्वैतत्सर्वतोभूपाआययुर्मत्पितुःपुरं सर्वास्त्रशस्त्रतत्त्वज्ञाःसोपाध्यायाःसहस्रशः २०

पित्रा संपूजिताःसर्वेयथावीर्यंयथावयः आददुःसशरंचापंवेद्धुंपर्षदिमद्धियः २१ आ

दायव्यसृजन्केचित्सज्यंकर्तुमनीश्वराः आकोष्ठंज्यांसमुत्कृष्यपेतुरेकेऽमुनाहताः २२

सज्यंकृत्वाऽपरेवीरामागधांवष्ठचेदिपाः भीमोदुर्योधनःकर्णोनाविदंस्तदवस्थितिं २३॥

मत्स्याभासंजलेवीक्ष्यज्ञात्वाचतदवस्थितिं पार्थोयत्तोऽसृजद्बाणंनाच्छिनत्पस्पृशेपरं २४

दृष्टिपथस्तादृशपरिचलस्यमितिश्रीकृष्णव्यतिरेकेणनकस्यापिभेद्यइतिभावः १९ २० मत्स्यंवेद्धुंपर्षदिसंसदिमद्धियःम त्स्यवधीयंममेति अन्यचितानवेद्धुंशक्ताइतिभावः२१ नदेवाहआदायेति अमुनाचापेन २२ नाविंदन्तदवस्थितिमितिमा गधादीनांक्रियाशक्तिरेवनतुलक्ष्यामितिज्ञतेत्यर्थः २३ यत्तोयत्नवान्असृजन्मुमोचसवाणोमत्स्यंनाच्छिनत्परंकेवलंप

॥२५॥ अभिजिति सर्वार्थसाधके मुहूर्ते २६ २७ भगवत्प्राप्तिहर्षनिर्भरेणात्मानमेवानुवर्णयंत्याह द्वाभ्यां तद्रंगमिति
नदा कलौ कलस्वनौ नूपुरौ ययोस्ताभ्यां पद्भ्यां रंगं प्राविशं कनकेनोज्ज्वलां रत्नमालां निवीय प्रावृत्य परिधाय च निवीबंधनेन च कौ
शिकाग्र्ये उत्तमकौशेयवस्त्रे सव्रीडो हासो यस्मिन् तद्वदनं यस्याः सा कवर्यां धृताः स्रजो यया सा उरवः कुंतला यस्मिन् कुंड

राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु भगवान्धनुरादाय सज्जं कृत्वाथ लीलया २५ त
स्मिन्संधाय विशिखं मत्स्यं वीक्ष्य सकृज्जले छित्त्वेषुणाऽपातयत्तं सूर्ये चाभिजिति स्थिते २६
दिवि दुंदुभयो नेदुर्जयशब्दयुता भुवि देवाश्च कुसुमासारान्मुमुचुर्हर्षविह्वलाः २७ तद्रंग
माविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालां नूत्ने निवीय परिधाय च कौशिका
ग्र्ये सव्रीडहासवदना कवरीधृतस्रक् २८ उन्नीय वक्त्रमुरुकुंतलकुंडलत्विड्गंडस्थलं शिशि
रहासकटाक्षमोक्षैः राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालां २९
तावन्मृदंगपटहाः शंखभेर्यानकादयः निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ३० एवं वृते
भगवति मयेशे नृपयूथपाः न सेहिरे याज्ञसेनि स्पर्द्धंतो हृच्छयातुराः ३१॥ लयोस्त्विषा ययोस्ते गंड

स्थले यस्मिन् तच्च तच्च शिशिरः संतापहारो हासो येषु तैः कटाक्षमोक्षैः अपांगमोक्षणविलासैः अनुरक्तं हृदयं यस्याः साऽहम् २९
३० हे याज्ञसेनि हे द्रौपदि श्रीकृष्णे ईशे मया वृते सति स्पर्द्धंतः स्पर्द्धमानाः नन्वेवं परमैश्वर्यं दृष्टवतां कुतः स्पर्द्धाऽवसरस्तत्राह हृच्छ

हयरत्नानीचतुष्टयंयस्मिंतंरथंद्वाभ्यांमामालिंग्यदाभ्यांधनुर्वाणौगृहीत्वाचतुर्भुजःतस्थौ ३२ मृगाणांमिषतांमृगराडिव नदाह
रिर्जगामेतिशेषोज्ञातव्यः दारुकस्यैववामृगराजोपमा ३३ अन्वसज्जंतः पृष्ठतःसक्ताबभूवुर्निषेद्धुंप्रतिबंधंकर्तुंकेचनपु
रतोगत्वापथिसंयत्ताबभूवुरित्यर्थः उद्धृतेष्वासाः ऊर्द्धकृतचापाःग्रामसिंहाःश्वानःहरिंसिंहंयथेति ३४ ३५ रविच्छादयंतीतिर

मांनावद्रथमारोप्यहयरत्नचतुष्टयं शार्ङ्गमुद्यम्यसंनद्धस्तस्थावाजौचतुर्भुजः ३२ दारुक
श्चोदयामासकांचनोपस्कररंरथं मिषतांभूभुजांराज्ञिमृगाणांमृगराडिव ३३ तेऽन्वसज्जंतरा
जन्यांनिषेद्धुंपथिकेचन संयत्ताउद्धृतेष्वासाग्राममसिंहायथाहरिं ३४ तेशार्ङ्गच्युतवाणौघैः
कृत्तवाह्वंघ्रिकंधराः निपेतुःप्रधनेकेचिदेकेसंत्यज्यदुद्रुवुः ३५ ततःपुरींयदुपतिरत्यलंकृ
तांरविच्छदध्वजपटचित्रतोरणां कुशस्थलींदिविभुविचाभिसंस्तुतांसमाविशत्तरणिरिव
स्वकेतनं ३६ पितामेपूजयामाससुहृत्संबंधिवांधवान् महार्हवासोलंकारैःशय्यासनपरि
च्छदैः ३७ दासीभिःसर्वसंपद्भिर्भटभरथवाजिभिः आयुधानिमहार्हाणिददौपूर्णस्यभक्ति
तः ३८ आत्मारामस्यतस्येमावयंवैगृहदासिकाः॥ ५ विच्छदाः ध्वजेषुपटायस्यांचित्राणितोरणानि

यस्यांसाचसाचतांकुशस्थलींपुरींयदुपतिः समाविशत् स्वकेतनंमंडलंअस्ताचलंवा ३६ महार्हदासःप्रभृतिभिःसुहृ
दादीन्पूजयामास ३७ दास्यादिभिः सहआयुधानिपूर्णस्यपूर्णोयापिददौ ३८ इमाअष्टौवयंसर्वसंगनिवृत्तात्तपसास्य

८३
भा॰ द॰
उ॰
१०८

श्रद्धा सा स्मा तस्य गृहदासिका बभूविम ३९ क्षितिजये दिग्विजये जिता नां राज्ञां कन्या नः अस्मान् तेन रुद्धाः ज्ञात्वा नते
निर्मुच्य संसृतेर्विमोक्षाय स्मानत्पादांबुजं अनुस्मरतीर्नः परिणिनाय उद्वहत् आप्तकामोऽपि यः ४० नवयमिति ॥
साम्राज्यादिन कामयामहे किंतु एतस्य श्रीमत्पादरजो मूर्ध्ना वोढुं कामयामह इति ननु तस्य गृहिण्यो यूयं सर्वसंपन्ना ज
किमेवं कामयध्वं अत आहुः हे साध्वि साम्राज्यं सार्वभौमपदं तथैव च हे साध्वि स्वाराज्यमैंद्रं पदं भोज्यं तदुभयभोगभा
त्वम् त्रिविधं राजत इति विराट् तस्य भावो वैराज्यं अणिमादिसिद्धिमाकृत्वमित्यर्थः पारमेष्ठ्यं ब्रह्मपदं आनंत्यं मोक्षं हरेः ॥

सर्वसंगनिवृत्त्याऽद्धा तपसा च बभूविम ३९ श्रीमहिष्य ऊचुः भौमं निहत्य सगणं युधि तेन
रुद्धा ज्ञात्वाऽथ नः क्षितिजये जितराजकन्याः निर्मुच्य संसृतिविमोक्षमनुस्मरंतीः पादांबुजं प
रिणिनाय य आप्तकामः ४० नवयं साध्वि साम्राज्यं स्वाराज्यं भोज्यमप्युत वैराज्यं
पारमेष्ठ्यं च आनंत्यं वा हरेः पदं ४१ कामयामह एतस्य श्रीमत्पादरजः श्रियः कुचकुंकु
मगंधाढ्यं मूर्ध्ना वोढुं गदाभृतः ४२ व्रजस्त्रियो यद्वांछंति पुलिंद्यस्तृणवीरुधः ॥ ९ पदं तत्सालो

क्यादि ननु कामयामह इति यद्वा बहूच ब्राह्मणोक्तक्रमेण प्रागादिदिक्चतुष्टयाधिपत्यानि साम्राज्य भोज्य स्वाराज्य
वैराज्यानि व्याख्येयानि ४१ तत्किं तत्पादरज एव काम्यते अत आहुः श्रियः कुचकुंकुमगंधाढ्यमिति ब्र
ह्मादिसेव्यया श्रिया पि सेवितत्वादिति भावः ४२ ननु तर्हि अतिदुर्लभत्वात् किं तद्वांछया अत आहुः ॥ ९
व्रजस्त्रिय इति यत् यथा गावः गाः महात्मनो अपि गा चारयतः ॥

रामः
१०८

पादस्पर्शंचगोपायथावांछंतितद्वत्तत्पराणांसुलभमितिभावः॥४३॥इतिदशमेटीकायांत्र्यशीतितमोऽध्यायः८३॥
चतुर्भिरधिकाशीतितमेमुनिसमागमे। वसुदेवमखोत्साहबंधुप्रस्थापनादिकं १ सुबलपुत्रीगांधारी माधवीसुभ

गावश्चारयतोगोपाः पादस्पर्शंमहात्मनः ४३॥इतिश्रीभागवतेमहापुराणेदशमस्कं
धेत्र्यशीतितमोऽध्यायः ८३॥श्रीशुकउवाच श्रुत्वापृथासुबलपुत्र्यथयाज्ञसेनीमाध
व्यथक्षितिपपत्न्यउतस्वगोप्यः कृष्णेऽखिलात्मनिहरौप्रणयानुबंधंसर्वाविसिस्मुरल
मश्रुकलाकुलाक्ष्यः १ इतिसंभाष्यमाणासुस्त्रीभिःस्त्रीषुनृभिर्नृषु आययुर्मुनयस्त
त्रकृष्णरामदिदृक्षया २ द्वैपायनोनारदश्चच्यवनोदेवलोऽसितः विश्वामित्रःशतानं
दोभरद्वाजोथगौतमः ३ रामःसशिष्योभगवान् वशिष्ठोगालवोभृगुः पुलस्त्यःकश्य
पोऽत्रिश्चमार्कंडेयोबृहस्पतिः ४ द्वितस्त्रितश्चैकतश्चब्रह्मपुत्रास्तथाऽंगिराः अगस्त्यो
याज्ञवल्क्यश्चवामदेवादयोऽपरे ५ तान्दृष्ट्वासहसोत्थायप्रागासीनानृपादयःपांडवाः
कृष्णरामौचप्रणेमुर्विश्ववंदितान् ६ तानानर्चुर्यथासर्वेसहरामोऽच्युतोर्चयत स्वागतास
नपाद्यार्घ्यमाल्यधूपानुलेपनैः ७ ॥

द्रा क्षितिपानांराज्ञांपत्न्यः स्वगोप्यः कृष्णभक्तागोप्यः
विसिस्मुः विस्मयंचक्रुः॥ १॥२॥३॥४॥५॥ ६॥ आनर्चुः अर्चितवंतः॥७॥

८४
भा॰द॰
उ॰
१०९

धर्म्मगोप्त्रीतनुर्य्यस्यसधर्म्मगुप्तनुः यतानियतावाग्यस्यतस्यसदसः ८ जन्मभृतः सफलजन्मानः तत्फलं जन्मफलं किं तत् यद्योगेश्वरदर्शनं ९ किंच युष्माकंदर्शनमेवतावद्देवानामपिदुष्प्रापं अस्माकंतुस्पर्शनादिकमपिकथंनघटितमि तिविस्मयेनाह किमिति स्वल्पतपसांतीर्थस्नानादिमात्रेतपोबुद्धिर्य्येषां तथाचाऽर्चायांप्रतिमायांदेवइतिचक्षुर्दृष्टिर्य्येषां

उवाचसुखमासीनान्भगवान्धर्मगुप्तनुः सदसस्तस्यमहतोयतवाचोनुशृण्वतः ८ श्री भगवानुवाच अहोवयंजन्मभृतोलब्धंकार्त्स्न्येनतत्फलं देवानामपिदुष्प्रापंयद्योगेश्वर दर्शनं ९ किंस्वल्पतपसांनृणामर्चायांदेवचक्षुषां दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादि कं १० नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः तेपुनंत्युरुकालेनदर्शनादेवसाधवः ११ नाग्निर्नसूर्योनचचंद्रतारकानभूर्ज्जलंखंश्वसनोऽथवाङ्मनः उपासिताभेदकृतोहरं त्यघंविपश्चितोघ्नंतिमुहूर्तसेवया १२ यस्यात्मबुद्धिःकुणपेत्रिधातुकेस्वधीःकलत्रादिषु भौमइज्यधीः॥१३॥ तेषांयोगेश्वरदर्शनादिकमिदंकिंअसंभावितमित्यर्थः १० एतत्प्रपंचयति नह्यम्मयानीति त्रिभिः ११ वाङ्मनसयोरप्युपासनाविषयत्वंयोवाचंब्रह्मेत्युपास्तेयोमनोब्रह्मेत्युपास्तइतिश्रुतेः अघंहरंतितन्मूलमज्ञानंनहरंति अत्रहेतुः भेदकृतः भेदकर्त्तारः यद्वाभेदबुद्धिंकुर्वतः पुंसः विपश्चितोनिरस्तभेदाः तेतुमुहूर्तमात्रसेवयैवा घंघ्नंतीति १२ अतःसाधून्विहायान्यत्रात्मादिबुद्ध्यासज्जमानोऽतिमंदइत्याहयस्येति आत्मबुद्धिरहमितिबुद्धिः त्रयोधा तवोवातपित्तश्लेष्माणःप्रकृतयोयस्यतस्मिन्कुणपेशरीरे॥

राम॰
१०९

स्वधीः स्वीया इति वुद्धिः भौमे भूविकारे इज्यधीः देवतावुद्धिः यत्यस्य तीर्थवुद्धिः तीर्थमिति वुद्धिः अभिज्ञेषु तत्वविस्तु यस्य नावुद्धयो न संति स एव गोष्वपि खरः दारुणः अत्यविवेकी यद्वा गवां तृणादिभारवाहः खरो गर्दभ इति १३ दुरन्वयं अननुरूपं भ्रमंती अनवस्थिता धीर्वुद्धिर्येषां ते १४ ईशितव्यतां अनीश्वरतां कर्माधिकारितां जनसंग्रहमात्रमेतदित्यूचुः स्मयंतः हसंतः १५ अनन्वयं विवृण्वंत आहुर्द्वाभ्यां यन्मायेति तत्ववित्सु उत्तमा अपि वयं काऽसौ मायायया विमोहिता इति तामाहुः यदिति यद्यस्मादीहया नरचेष्टितेन गूढः सन् ईशितव्यायति अनीश्वरवदाचरति भवान्नन्वह

यतीर्थवुद्धिः सलिलेनकर्हिचिज्जनेष्वभिज्ञेषुसएवगोखरः १३ श्रीशुकउवाच निशम्येत्थंभगवतः कृष्णस्याकुंठमेधसः वचोदुरन्वयंविप्रास्तूष्णीमासन्भ्रमद्धियः १४ चिरंविमृश्यमुनयईश्वरस्येशितव्यतां जनसंग्रहइत्यूचुःस्मयंतस्तंजगद्गुरुं १५ मुनयऊचुः यन्माययातत्वविदुत्तमावयंविमोहिताविश्वसृजामधीश्वराः यदीशितव्यायतिगूढईहयाअहोविचित्रंभगवद्विचेष्टितं १६ अनीहएतद्बहुधैकआत्मनासृजत्यवत्यत्तिनवध्यतेयथा॥ ((मीश्चरस्येत्र किमित्येवमाचरेयं तत्राहुः अहो इति भगवतस्तव विचेष्टितं विचित्रं अतर्क्यं १६ भगवत्त्वमेवाहुः अनीह इति अनीहः अक्रिय एव आत्मना स्वरूपमात्रेण वहुधेत्यत्र दृष्टांतः यथा भौमैरिति भौमैर्घटादिविकारैरुपलक्षिता वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः ननु कथमहं जगत्स्रष्टादिकर्ता वसुदेवपुत्रत्वादिति तत्राहुः अहो इति विभूम्नः परिपूर्णस्य तव इदं जन्मादिचरितं विडंबनं॥

अनुकरणमात्रंनतुनत्वमिति १७ जनसंग्रहमाहुः अथापीतित्रिभिः सत्वंशुद्धसत्वात्मकंरूपंविभर्षिस्वलीलयाआचा
रेणवेदपथंचविभर्षि १८ अतएवब्राह्मणेषुवहुमानमपिकरोषीतिसहेतुकमाहुः ब्रह्मेतिब्रह्मवेदास्वंशुक्लंशुद्धंा
तेहृदयंअंतरंगंरूपं कुतइत्यतआहुः यत्रेति यत्रब्रह्मणिव्यक्तंकार्यंअव्यक्तंकारणंततः परंसत्तत्सन्मात्रंचब्रह्मचतपआदिभिरुपलब्धंतद्ब्रह्मइति १९ तस्माद्धेदहृदयत्वाद्धेदप्रवर्तकंब्राह्मणकुलंशास्त्रयोनेर्वेदप्रमाणकस्यतव

भौमैर्हिभूमिर्बहुनामरूपिणीअहोविभूम्नश्चरितंविडंवनं १७ अथापिकालेस्वजनाभिगुप्तयेविभर्षिसत्वंखलनिग्रहाय स्वलीलयावेदपथंसनातनंवर्णाश्रमात्मापुरुषः परोभवान् १८ ब्रह्मतेहृदयंशुक्लंतपःस्वाध्यायसंयमैः यत्रोपलब्धंसद्व्यक्तमव्यक्तंचततःपरं १९ तस्माद्ब्रह्मकुलंब्रह्मन्शास्त्रयोनेस्त्वमात्मनः सभाजयसिसद्धामतद्ब्रह्मण्याग्रणीर्भवान् २० अद्यनोजन्मसाफल्यंविद्यायास्तपसोदृशः त्वयासंगम्यसद्गत्यायदंतःश्रेयसांपरः २१ नमस्तस्मैभगवतेकृष्णायाकुंठमेधसे स्वयोगमाययाच्छन्नमहिम्नेपरमात्मने २२

नयंविदंत्यमीभूपाएकारामाश्चवृष्णयः॥ सद्धामश्रेष्ठमुपलब्धिस्थानंसभाजयसिसंपूजयसितत
स्मादेवकारणात्त्वंब्रह्मण्यानामग्रणीर्मुख्यः तत्प्रवर्तकःसन्कर्माचरसीत्यर्थः २० तस्मादीश्वरस्यतवेदंजनसंग्रह
मात्रंवयंतुतवसंगत्याकृतार्थाइत्याहुः अद्येतिषड्भिः सतांगत्यात्वयासंगम्यसंगंप्राप्ययत्यस्मात्त्वंश्रेयसांपरअवधिः
॥२१॥२२॥एकस्मिन्नेवस्थानेआरामोयेषांतेऽपिकालं॥

ष्टयादिकारणं ईश्वरं नियंतारं २३ एतत्सदृष्टांतमाहुः यथेति शयानः स्वप्नान् पश्यन् गुणतत्वदृक् स्वप्नविषयेषु तत्वदृष्टिर्नाममात्रमिंद्रियेण मनसा आभातं सिंहव्याघ्रादिरूपमात्मानं वेद तद्रहितं देवदत्तादिरूपमात्मानं न वेद यथा २४ एवं त्वां नाममात्रेषु स्वप्नादितुल्यविषयेषु इंद्रियैर्या ईहा प्रवृत्तिः सैव मायातया विभ्रमच्चित्तो न वेद स्मृतेर्विवेकस्योपप्लवात् नाशात् २५ अघौघस्य मर्षनाशं करोतीति यद्गंगाख्यं तीर्थं तस्यास्पदमाश्रयं ते अंघ्रिं सुविपक्वयोगैरपि हृदि कृतं केवलं न तु दृष्टं ना

मायाजवनिकाच्छन्नमात्मानं कालमीश्वरं २३ यथा शयानः पुरुष आत्मानं गुणतत्वदृक् नाममात्रेंद्रियाभातं न वेद रहितं परं २४ एवं त्वा नाममात्रेषु विषयेष्विंद्रियेहया मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् २५ तस्याद्य ते ददृशिमांघ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् २६ श्रीशुक उवाच इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरं राजर्षे स्वाश्रमान् गंतुं मुनयो दधिरे मनः २७ तद्वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः प्रणम्य चोपसंगृह्य बभाषेदं सुयंत्रितः २८॥ स त्वं अंघ्रिं ददृशिम दृष्टवंतो वयं बहुभिः पुण्यैः अतोऽस्मान् भक्त्या ननु गृहाण भक्तान् कृत्वा अनुग्रहं कुर्वित्यर्थः ननु किं भक्त्या यथा पूर्वं तप एव न तप्यतामिति नेत्याहुः उत्सिक्ता उद्रिक्ता या भक्तिः तया उपहत आशयलक्षणो जीवकोशो येषां त एव पूर्वं भगवद्गतिमापुः नान्य इति २६ २७ उपसंगृह्य चरणौ पाणिभ्यां धृत्वा बभाषे इदमिति संधिरार्षः २८

सर्वदेवाः येषु तेभ्यः यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्तीति श्रुतेः येन कर्मणा यथा कृतेन वा कर्मणा निर्हारो।
निराशो भवति तद् उच्यतां २९ श्रीकृष्णं हित्वास्मान् पृच्छतीति विस्मितानत्याह नातीति बुभुत्सया वोढुमिच्छया ३० ॥
तत्र त्वो गंगातीरवासी ३१ ३१ श्रीकृष्णोऽर्भकत्वमापन्नोऽविद्याविजृंभितइत्याशंक्य यस्येति द्वाभ्यां अनुभूतिर्ज्ञानं कुतश्चि
दपि न रिष्यति न नश्यति तदेवाह कालेन ऽर्कटिकाफलवत् अस्य विश्वस्य लयोत्पत्त्यादिनापि स्वतश्च विद्युदादिवत् आ



श्रीवसुदेव उवाच नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ कर्मणा कर्मनिर्हारो यथा स्यान्न
स्तदुच्यतां २९ नारद उवाच नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया कृष्णं मत्वाऽर्भकं यन्नः
पृच्छति श्रेय आत्मनः ३० सन्निकर्षोऽत्र मर्त्यानामनादरणकारणं गांगं हित्वा यथान्याम्भ
स्तत्रत्यो याति शुद्धये ३१ यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै स्वतोऽन्यस्माच्च गुणतो
न कुतश्चिन्न रिष्यति ३२ तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयं ॥
प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ३३॥ ६ ॥ ६ ॥

न्यस्माच्च मुद्गरादेर्घटादिवत् गुणतो रूपाद्यंतरोत्पत्तेः पूर्वरूपादिना देहादिवत् ३२ तमेव कुतश्चिदप्यव्याहतानुभवं
अत एव ईश्वरं किंच अद्वितीयं कृष्णं अन्यः प्राकृतः उपगूढमाच्छन्नं मनुष्यं मन्येत कैः क्लेशाकर्मादिभिः तत्र क्लेशा रागाद
यस्तत्पूर्वकाणि कर्माणि च तत्परिपाके सुखदुःखे च सत्वादिगुणानां पुनः प्रवाहश्चैतैः प्राणादिभिश्च स्वस्वविभवैः स्वकार्यैः
अत्र दृष्टान्तः मेघहिमोपरागैः अभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ३३ ॥

३४ ३५ चित्तस्योपशमः उपशमहेतुः योगो मोक्षोपायहेतुश्च धर्मश्चात्ममुदमावहतीति तथा सुगमः प्रवृत्त्याश्रयत्वात्
स्वधर्मश्च आवश्यकः अन्यथा विहिताकरणेन मालिन्यप्रसंगात् ३६ ननु न कर्मणा न प्रजया न धनेन त्यागेनैके अमृतत्वमा
नशुरित्यादिना त्यागस्यैव विहितत्वात् कथं कर्म मोक्षोपाय इत्याशंक्य आदावेव त्यागस्याशक्यत्वादित्याशयेनाहुः अयमि
ति साई चतुर्भिः स्वस्त्ययनः स्वस्ति क्षेमः ईयते नेनेति तथा श्रद्धया निष्कामतया शुक्लेन शुद्धेन आप्तेन वित्तेन पुरुष ईश्वरः

अथोचुर्मुनयो राजन्नाभाष्यानकदुंदुभिं सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ३४
कर्म्मणा कर्मनिर्हार एष साधुनिरूपितः यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ३५ चित्त
स्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ३६ अयं स्वस्त्य
यनः पंथा द्विजातेर्गृहमेधिनः यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः ३७ वित्तैषणां यज्ञ
दानैर्गृहैर्दारसुतैषणां आत्मलोकैषणां देव कालेन विसृजेद्बुधः ३८ ग्रामे त्यक्तैषणाः सर्वे
ययुर्धीरास्तपोवनं॥ [illegible]तियत एषः पंथा ३७ स्वस्त्ययनत्वमाहुः वित्तैषणामिति वित्तफलभूतैर्यज्ञै
र्दानैश्च वित्तैषणां वित्तेच्छां विसृजेत् गृहैर्गृहे चित्ते भोगैर्दारसुतैषणां विसृजेत् तदनुभवेनैव तदौत्सुक्यनिवृत्तेः देहे
मृते आत्मनः स्वर्गादिलोकैषणां च कालेन क्षयानुसंधानेन विसृजेत् देव हे वसुदेव यद्वा देवकालेन देवानामपि मृत्यु
नामृत्युहेतुभूतेनेत्यर्थः ३८ अत्राचारं प्रमाणयति ग्रामइति किंच ऋणैरिति तथा च श्रुतिः जायमानो वै ब्राह्मणस्त्रि
भिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रज

यापितृभ्य इत्यादि नानान्यनिस्तीर्य तेषामृणान्यनपाकृत्य तथा च मनुः ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् अ
नपाकृत्य मोक्षं तु सेवमानो व्रजत्यध इत्यादि ३९ निर्ऋणः निर्मुक्तऋणः अशरणो भव गृहात्प्रव्रज ४० किंच अ

ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो ३९ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत्
त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते ४० यज्ञैर्देवर्णमुन्मुच्य निरृणोऽशरणो
भव वसुदेव भवान्नूनं भक्त्या परमया हरिं जगतामीश्वरं प्रार्चः स यद्वां पुत्रतां गतः ४१ श्रीशु
कउवाच इति तद्वचनं श्रुत्वा वसुदेवो महामनाः तानृषीनृत्विजो वव्रे मूर्ध्नानम्य प्रसाद्य च ४२
त एनमृषयो राजन्वृता धर्मेण धार्मिकं तस्मिन्नयाजयन्क्षेत्रे मखैरुत्तमकल्पकैः ४३
तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः स्नाताः सुवाससो राजन्राजानः सुष्ठ्वलंकृताः ४४
तन्महिष्यश्च मुदिता निष्ककंठ्यः सुवाससः दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ४५
नेदुर्मृदंगपटहशंखभेर्यानकादयः ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः जगुः सुकं
ठ्यो गंधर्व्यः संगीतं सहभर्तृकाः ४६ तमभ्यषिंचन्विधिवदक्तमभ्यक्तमृत्विजः ॥ ६ ॥

विशुद्धचित्तानामयं क्रमः त्वं तु कृतार्थ एवेत्याहुः वसुदेवेति भवान्नूनं निश्चितं परमया प्रेमलक्षणया भक्त्या हरिं प्रार्चः
अर्चितवान् यद्यस्मात् वां युवयोः ४१।४२।४३।४४। आलिप्ताः कुंकुमादिभिः वस्तुपाणयः गृहीतार्हणहस्ताः ४५।४६। अक्तं

अभ्यक्तं सर्वांगेषु नवनीतेन ४७ ताभिः पत्नीभिः सहितो दीक्षितो विरेजे ४८ ४९ जीवेशौ सर्वजीवानामीशौ ५० अनु
यज्ञं प्रतियज्ञमाम्नातसर्वांगाः प्राकृताः ज्योतिष्टोमदर्शपूर्णमासादयः तेभ्यश्चोदनालिंगादिभिरतिदेशप्राप्तांगाः वैकृताः

पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ४७ ताभिर्दुकूलवलयैर्हारनूपुरकुंडलैः स्वलंकृ
ताभिर्विबभौ दीक्षितोऽजिनसंवृतः ४८ तस्यर्त्विजो महाराज रत्नकौशेयवाससः ससदस्या
विरेजुस्ते यथा वृत्रहणोऽध्वरे ४९ तदा रामश्च कृष्णश्च स्वैः स्वैर्बंधुभिरन्वितैः रेजतुः स्वसुतैर्दा
रैर्जीवेशौ स्वविभूतिभिः ५० ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः प्राकृतैर्वैकृतैर्य
ज्ञैर्द्रव्यज्ञानक्रियेश्वरं ५१ अथर्त्विग्भ्योऽददात्काले यथाम्नातं सदक्षिणाः स्वलंकृतेभ्यो विप्रे
भ्यो गोभूकन्या महाधनाः ५२ पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः सस्नू रामह्रदे विप्रा यज
मानपुरःसराः ५३ स्नातोऽलंकारवासांसि वंदिभ्योऽदात्तथा स्त्रियः ततः स्वलंकृतो वर्णानाश्व
भ्योऽन्नेन पूजयत् ५४ बंधून्सदारान्ससुतान्पारिबर्हेण भूयसा विदर्भकोसलकुरून्काशि
कैकयसृंजयान् ५५ सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणान् श्रीनिकेतमनुज्ञाप्य शंसंतः
प्रययुः क्रतुं ५६॥ सौरसौत्रामण्यादयः तैः सर्वैर्द्रव्यं पुरोडाशादि ज्ञानं मंत्रः क्रिया कर्म तेषामीश्वरं ५१ ५२ सस्नुः
स्नानं चक्रुः ५३ आश्वभ्यः शुनोऽभिव्याप्य [illegible] अपूजयत् ५५ बंधवादीनां धारणां तान्पारिबर्हेण प्रीतिदानेन

प्रयाणे केषांचिद्विशेषमाह धृतराष्ट्र इति द्वाभ्यां अनुजो विदुरः पार्था युधिष्ठिरभीमार्जुनाः यमौ नकुलसहदेवौ ५७ सौहृदेनातिक्लिन्नानि चेतांसि येषां ते ५८ ५९ मनोरथीयन्त विषयः तमेव महार्णवं ६० शूराणां वलेन योगिनां ज्ञानेनापीत्यर्थः ६१ तत्कुत इत्यत्राह अस्मास्विति कृतात्तेषु कृतमुपकारमजानत्सु सत्तमैर्भवद्भिरप्रतिकल्याऽनुपमा मैत्री यमर्पिता अफला०

धृतराष्ट्रोऽनुजः पार्था भीष्मो द्रोणः पृथा यमौ नारदो भगवान्व्यासः सुहृत्संबंधिबांधवाः ५७ बंधून्परिष्वज्य यदून्सौहृदाक्लिन्नचेतसः ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ५८ नंदस्तु सह गोपालैर्बृहत्या पूजयार्चितः कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बंधुवत्सलः ५९ वसुदेवोऽजसोत्तीर्य मनोरथमहार्णवं सुहृद्वृतः प्रीतमना नंदमाह करे स्पृशन् ६० श्रीवसुदेव उवाच भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः तं दुस्त्यजमहं मन्ये शूराणामपि योगिनां॥ ६१ अस्मास्वप्रतिकल्पेयं यत्कृताज्ञेषु सत्तमैः मैत्र्यर्पिताऽफला वाऽपि न निवर्त्तेत कर्हिचित् ६२ प्रागकल्याच्च कुशलं भ्रातर्वो नाचराम हि अधुना श्रीमदांधाक्षा न पश्यामः पुरः सतः ६३ मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद स्वजनानुत भूत्यबंधून्वा न पश्यति ययांधदृक् ६४॥

पि प्रत्युपकारशून्या अपि कर्हिचिद्यस्मान्न निवर्त्तेत तस्मादीश्वरकृतः पाशोऽयं भवतामिति गम्यत इत्यर्थः ६२ अफलत्वमेवाह प्रागिति हे भ्रातः अकल्यात् असमर्थत्वात् वः कुशलं प्रियं न हि आचराम नहं नेवं नो वयं श्रीमदेनांधान्यक्षीणि येषां ते॥

६५ अद्यश्वइति प्रातर्निर्गमे अद्यैवापराह्णेगम्यतामिति अपराह्णे निर्गमेश्वोगम्यतामितिपुनःपुनरेवंमानितः ६६ ६७ यापितः महतासैन्येनप्रस्थापितः ६८ ६९ ७० यदुदेवस्यवसुदेवस्यमहोत्सवंयज्ञादिलक्षणंसुहृत्संदर्शनादिकंचेति ७१ ॥ ॥

श्रीशुकउवाच एवंसौहृदशैथिल्यचित्तआनकदुंदुभिः रुरोदतत्कृतांमैत्रींस्मरन्नश्रुविलोचनः ६५ नंदस्तुसख्युःप्रियकृत्प्रेम्णागोविंदरामयोः अद्यश्वइतिमासांस्त्रीन्यदुभिर्मानितोऽवसत् ६६ ततःकामैःपूर्यमाणःसव्रजःसहबांधवः परार्घ्याभरणक्षौमनानानर्घ्यपरिच्छदैः ६७ वसुदेवोग्रसेनाभ्यांकृष्णोद्धवबलादिभिः दत्तमादायपारिवर्हंयापितोयदुभिर्ययौ ६८ नंदो गोपाश्चगोप्यश्चगोविंदचरणांबुजे मनःक्षिप्तंपुनर्हर्तुमनीशामथुरांययुः ६९ बंधुषुप्रतियातेषुवृष्णयःकृष्णदेवताः वीक्ष्यप्रावृषमासन्नांययुर्द्वारवतींपुनः ७० जनेभ्यःकथयांचक्रुर्यदुदेवमहोत्सवं यदासीत्तीर्थयात्रायांसुहृत्संदर्शनादिकं ७१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेतीर्थयात्रानुवर्णनंनामचतुरशीतितमोध्यायः ८४ ॥ श्रीशुकउवाच ॥ अथैकदात्मजौप्राप्तौकृतपादाभिवंदनौ वसुदेवोभिनंद्याहप्रीत्यासंकर्षणाच्युतौ ॥ १ ॥

॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेटीकायांचतुरशीतितमोध्यायः ८४ पंचाशीतितमेरामकृष्णौसंप्रार्थितौ सुतौपित्रेज्ञानमथोमात्रेमृतान् पुत्रानयच्छतां १ नंदयित्वाकुरुक्षेत्रयात्रायांसुहृदोवहून् तत्वज्ञानंततःपित्रोरादिशत्

१० भा. द. उ. ११५

धामप्रभावः तत्सूचकं जातविश्रंभः उत्पन्नविश्वासः परिभाष्यसंबोध्य २ अस्यविश्वस्ययत्साक्षात्स्वरूपभूतंकारणंप्रधा
नपुरुषौनामपरौनयोरपिकारणत्वेनेश्वरौचसाक्षाद्युवामितिजाने ३ नन्विदंविश्वमनेकैः कारकैर्जायमानंकुतःप्र
धानपुरुषात्मकंकुतस्तरामावयोस्तत्कारणत्वेनेश्वरत्वंनत्राह यत्रेति यत्राधिकरणेयेनकर्त्राकरणेनच यतः उपा
दानात् यस्यसंबंधेनषष्ठ्यर्थस्याऽकारकत्वेऽपिनिमित्ततोक्ता यस्मैसंप्रदानायद्यद्देतिप्रयोज्यकर्तृकर्मकारकेदर्शिते
ननुतयोर्नास्तिभेदः यथोक्तंकरोतिश्रूयमाणेननकश्चित्कर्मणाविनाभवत्यर्थस्यकर्ताचकारीतेःकर्मजायतेनयाकरो

मुनीनांसवचःश्रुत्वापुत्रयोर्धामसूचकं तद्वीर्यैर्जातविश्रंभः परिभाष्याभ्यषेचत २ व
सुदेवउवाच. कृष्णकृष्णमहायोगिन्संकर्षणसनातन जानेवामस्ययत्साक्षात्प्रधानपुरुषौप
रौ ३ यत्रयेनयतोयस्ययस्मैयद्यद्यथायदा स्यादिदंभगवान्साक्षात्प्रधानपुरुषेश्वरः ४ ए
तन्नानाविधंविश्वमात्मसृष्टमधोक्षज आत्मनाऽनुप्रविश्यात्मन्प्राणोजीवोबिभर्ष्य
(जः ५॥

स्यर्थस्यः कर्ताभवितुः सप्रयोजकः भविनातमपेक्ष्याथप्रयोज्यत्वंप्रपद्यतइतिच सत्यं नथाप्यवस्थाभेदे
नभेदोविवक्षितःदृश्यतेचावस्थाभेदःतंडुलानोदनंपचति मृदंघटंकरोति इतिनदेवंसप्तविभक्त्यर्थादर्शिताःयथेति
यदेतिचक्रियाविशेषणभूतानाम नेषांचाव्ययानामर्थाःस्यादितिक्रियापदार्थोपलक्षणं एवंसर्वंप्रपंचमनूद्यतत्कारण
स्यभवद्रूपतांविधत्ते इदंसाक्षादिति प्रधानंभोग्यंपुरुषोभोक्तानयोरीश्वरौभगवांस्त्वमेवसाक्षादितितयोरैक्यमभिप्रे नै
कवचनं ५ किंचधारणपोषणकर्तापित्वमेवेत्याह एतदिति हेआत्मन्प्राणःक्रियाशक्तिःजीवोज्ञानशक्तिश्चसन्त्व

श्रीहरि

श्रीरामः ११५

ननुप्राणादीनांविचित्रशक्तीनांकारणत्वावगमात् कथंपरमेश्वरस्यैवकारणत्वेनसर्वात्मकत्वमुच्यत इत्याशंक्यप्रा
णादिशक्तयोपितस्यैवेत्याह प्राणादीनामिति प्राणः सूत्रंतदादीनांविश्वसृजांविश्वकारणानांयाः शक्तयस्ताः
परस्यपरमकारणस्येश्वरस्यैवकुतः पारतंत्र्यात् यथावेधशक्तिर्न्वाणस्यअपितुपुरुषस्यतद्वदित्यर्थः ननुभगव
तःप्राणादिवर्गस्यचस्वातंत्र्यमेवकिंनस्यात् अतआहवैसादृश्यात् द्वयोरिति चेतनाचेतनत्वेनविसदृशत्वात् द्वयोर
चेतनप्राणादिवर्गस्यचेतनपारतंत्र्यमेवयुक्तमित्यर्थः यद्वाप्राणादिषुद्वयोर्द्वयोरेवतावद्विसदृशत्वंविरुद्धक्रियाका
रित्वात् किंपुनर्बहूनांतस्मादेकेनसर्वज्ञेनसर्वशक्तिनाधिष्ठितानामेवविशिष्टकार्यारंभकत्वंयुक्तंनस्वतंत्राणामिति
तथाचोक्तंपदेतेऽसंहताभावाभूतेंद्रियमनोगुणाः यदायतननिर्माणेनशेकुर्ब्रह्मवित्तमः तदासंहत्यचान्योऽन्यंभग

प्राणादीनांविश्वसृजांशक्तयोयाः परस्यताः पारतंत्र्याद्वैसादृश्यात्द्वयोश्चेष्टैवचेष्टतां॥
६ कांतिस्तेजःप्रभासत्ताचंद्राग्न्यर्कर्क्षविद्युतां यत्स्थैर्यंभूभृतांभूमेर्वृत्तिर्गंधोऽर्थतोभ
वान् १७॥

वच्छक्तिचोदिताःसदसत्त्वमुपादायचोभयंससृजुर्ह्यदइतितथानानात्वात्स्वक्रियाऽनीशाःप्रोचुःप्रांजलि
योविभुमित्यादिननुप्राणादीनांक्रियास्वरिलंशक्त्यऽभावेकुतःस्यादतआहचेष्टैवचेष्टतामिति चेष्टमानानामेषांचेष्टै
वनतुशक्तिः यथावायोःशक्त्यातृणादीनांचलनंयथापुरुषस्यशक्त्याशराणांवेगइति ६ पारतंत्र्यमेवप्रपंचयतिकां
तिरितिपंचभिः चंद्रस्यकांतिः अग्नेस्तेजः अर्कस्यप्रभाऋक्षविद्युतांसत्तास्फुरणमात्रेणसत्वंअर्थतोवस्तुतोभवान् तथा
चश्रुतिः नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोऽयमग्निःतमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंवि
भातीति स्मृतिश्चयदादित्यगतंतेजोजगद्भासयतेखिलं यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकमिति भूमेर्वृत्तिःप्राणिना

॥ श्री ॥

८५
भा॰ द॰
उ॰
११५

किंचहेदेव अपांतर्पणंतृप्तिजनकत्वंप्राणनंजीवनहेतुत्वंताआपस्त्वतासांरसस्त्वमेवकिंचवायोरोजः सह आदितवैवश क्तिः ८ दिशामुपाधिकृताकाशप्रदेशानामवकाशोदिशश्चत्वंखं सामान्याकाशः तदाश्रयः स्फोटश्चशब्दतन्मात्रंप रावस्थावागित्यर्थः नादः पश्यंतीओंकारः मध्यमावर्णश्च आकृतीनांपदार्थानांपृथक्कृतिः पृथक्कृतिः कारणमभिधानंयस्मात्तत्पदंवर्णपदाद्यात्मिकावैखरीचत्वमित्यर्थः ९ इंद्रियाणामिंद्रियंविषयप्रकाशनशक्तिः देवाश्चेंद्रियाधिष्ठातारः

तर्पणंप्राणनमपांदेवत्वंताश्चतद्रसः ओजः सहोबलंचेष्टागतिर्वायोस्तवेश्वर ८ दिशां त्वमवकाशोऽसिदिशः खंस्फोट आश्रयः नादोवर्णस्त्वमोंकारआकृतीनांपृथक्कृतिः ९ इंद्रियंत्विंद्रियाणांत्वंदेवाश्चतदनुग्रहः अवबोधोभवान्बुद्धेर्जीवस्यानुस्मृतिः सती १० भूतानामसिभूतादिरिंद्रियाणांचतैजसः वैकारिकोविकल्पानांप्रधानमनुशायिनां ११ नश्वरेष्विहभावेषुतदसित्वमनश्वरं यथाद्रव्यविकारेषुद्रव्यमात्रंनिरूपितं १२ सत्वंरजस्तमइतिगुणास्तद्वृत्तयश्चयाः ॥ ९ तदनुग्रहस्तेषामधिष्ठानशक्तिश्चत्वं अवबोधोऽध्यवसायशक्तिः अनुस्मृतिः प्रतिसंधानशक्तिः १० भूतानांकारणंभूतादिस्तामसोऽहंकारस्त्वमसिइंद्रियाणांकारणंतैजसोराजसोहंकारस्त्वंविविधं अधिदैवाध्यात्माधिभूतभेदेनविकल्प्यंतइतिविकल्पादेवास्तेषांकारणंवैकारिकः सात्विकोऽहंकारश्चत्वं अनुशायिनांजीवानांसंसारकारणंप्रधानंत्वं ११ अपिचनश्वरेषुनाशनशीलेषुइहैतेषुभावेषुयदनश्वरमवशिष्यमाणंरूपंतत्त्वमसिद्रव्याणांविकारेषुमृत्सुवर्णादिकार्येषुघटकुंडलादिषुनश्वरेषुचद्रव्यमात्रंमृत्सुवर्णादिमात्रमनश्वरंयथातद्वत् १२ तनु

राम
११५

सत्वमिति तद्वृत्तयस्तत्परिणामाश्चमहदादयः श्रद्धासाक्षात्त्वयिपरेब्रह्मणिकल्पिताः १३ नस्मान्नसंतीतिनन्वस
तांकथंप्रतीतिरतआह यर्हीति यदाविकल्पितास्तदैवप्रतीतिमात्रेणत्वयिसंति त्वंचामीषुनदैवकारणतयाऽनुगतः अ
न्यदानु अव्यावहारिकोऽविकल्पकः त्वमेवावशिष्यसइत्यर्थः १४ एवंरूपत्वाद ज्ञाननिबंधनश्चसंसारइत्याह गुण
प्रवाहइतिसूक्ष्मांनिष्प्रपंचांगतिमबुधाः अविद्वांसः अबुध्येतिवापाठः अतः अबोधेनदेहाभिमानेनकृतैः कर्म्मभिः सं

त्यश्रद्धा ब्रह्मणिपरेकल्पितायोगमायया १३ नस्मान्नसंत्यमीभावायर्हित्वयिवि
कल्पिताः त्वंचामीषुविकारेषुह्यन्यदाव्यावहारिकः १४ गुणप्रवाहएतस्मिन्न
ऽबुधास्त्वखिलात्मनः गतिंसूक्ष्मामबोधेनसंसरंतीहकर्म्मभिः १५ यदृच्छया
नृतांप्राप्यसुकल्पामिहदुर्ल्लभांस्वार्थेप्रमत्तस्यवयोगतंत्वन्माययेश्वर १६ असा
वहंममैवैतेदेहेचास्यान्वयादिषु स्नेहपाशैर्निबध्नातिभवान्सर्व्वमिदंजगत् १७
युवांननः सुतौसाक्षात्प्रधानपुरुषेश्वरौ भूभारक्षत्रक्षपण अवतीर्णौतथात्थह १८

संरंतीति १५ एवंतयोस्तत्वंनिरूप्यतदप्राप्त्याशोचति यदृच्छयेति नृतांमनुष्यतांसुकल्पांपटुसर्वेंद्रियां १६ अहो
किमिति प्रमत्तोऽसित्वयावद्धभिः पाशैर्निबद्धत्वादित्याह असावहमिति देहेअस्यदेहस्यान्वयादिषुपुत्रादिषुचम
मैवैतइति १७ अहोत्वत्पुत्रयोरावयोः किमिदमारोप्यतेअतआह युवांमिति भूभारक्षत्रक्षपणार्थंअवतीर्णौतथा

॥ हरिविलासभागवतटीकायांदशमस्कंधे ॥ ८५ ॥

ततस्मादरणं शरणमापन्नानां संसृतिभयमपहंतीति तथा ततू ननु त्वमति सुखी त्वया किं निर्विद्यसे अत आह ।
एतावतेति इंद्रियलालसेन इंद्रियार्थतृष्णया यद्येन इंद्रियलालसेन मर्त्ये शरीरे आत्मदृक् आत्मबुद्धिरहं त्वयि
च परे परमेश्वरे अपत्यबुद्धिरस्मि तेन अलमलं पर्याप्तमिति १९ ननु कुत एनत् अहं परमेश्वर इति तत्राह सृति

ततेगतोऽस्म्यरणमद्य तवदारविंदमापन्नसंसृतिभयापहमार्तबंधो एतावताऽ
लमलमिंद्रियलालसेन मर्त्यात्मदृक्त्वयि परे यदपत्यबुद्धिः १९ सृतिरहेननुज
गारभवानजो नौ संजज्ञ इत्यनुयुगं निजधर्मगुप्त्यै नाना तनूर्गगनवद्विदध
ज्जहासि को वेद भूम्न उरुगाय विभूतिमायां २० श्रीशुक उवाच आकर्ण्येत्थं पि
तुर्वाक्यं भगवान्सात्वतर्षभः प्रत्याह प्रश्रयानम्रः प्रहसन्श्लक्ष्णया गिरा २१
श्रीभगवानुवाच वचो वः समवेतार्थं ताते तदुपमन्महे यन्नः पुत्रान्समुद्दिश्य तत्व
ग्राम उदाहृतः २२॥ गृहे इति नौ आवयोः अनुयुगं प्रतियुगं यदा सुतपाः पृश्निरिति युग्मं यदा कश्य
पोऽदितिश्चेति युग्मं अधुना वसुदेवो देवकी च युग्मं एवं हि प्रतियुग्मं अज एवाहं संजज्ञे अवतीर्ण इति भवान् ननु ज
गार ननु अन्योऽसौ चतुर्भुजो देव इति तत्राह नाना तनूरिति गगनवदसंग एव त्वं भूम्नः सर्वगतस विभू
तिरूपां मायां को वेदेति २० २१ उपमन्महे उपमन्यामहे समुद्दिश्य पविषयीकृत्य तत्वग्रामस्तत्वसमूह उदाहृतः सम्यङ्निरूपितः

दृमामेवदृष्टिंसर्वत्रविधत्तेत्याह अहमिति एवंविमृश्याः ब्रह्मत्वेनैवान्वेषणीयाः किंचसचराचरंजगदपि॥ २२

२३ ननुनानाविकारवतांकुतोब्रह्मत्वमितिचेन्नब्रह्मणएवोपाधिधर्मैर्बहुधाप्रतीतेरितिसदृष्टांतमाह॥२४

आत्माहीतिद्वाभ्यांआत्माहीतियथाखादिभूतानिततत्कृतेषुघटादिष्वाविस्तिरोभावादियांतिएवमसावात्मापि

अहंयूयमसावार्यइमेचद्वारकौकसः सर्वेप्येवंयदुश्रेष्ठविमृश्याः सचराचरं॥ २३ आत्माह्येकःस्वयंज्योतिर्नित्योन्योनिर्गुणोगुणैः आत्मसृष्टैस्तत्कृतेषुभूतेषुबहुधेयते २४ खंवायुर्ज्योतिरापोभूस्तत्कृतेषुयथाशयं आविस्तिरोऽल्पभूर्य्येकोनानात्वंयात्यसावपि २५ श्रीशुकउवाच एवंभगवताराजन्वसुदेवउदाहृतः श्रुत्वाविनष्टनानाधीस्तूष्णींप्रीतमनाअभूत् २६ अथतत्रकुरुश्रेष्ठ देवकीसर्वदेवता श्रुत्वानीतंगुरोःपुत्रमात्मजाभ्यांसुविस्मिता २७ कृष्णरामौसमाश्राव्यपुत्रान्कंसविहिंसितान् स्मरंतीकृपणंप्राहवैक्लव्यादश्रुलोचना॥ २८॥

आत्मसृष्टैर्गुणैः कृत्वाततत्कृतेषुदेहेषुबहुधाईयतेपुनश्चयथाशयंयथोपाधिआविर्भवतिरोभावा दिरूपेणप्रतीयतेनवस्तुतः कुतः एकोबहुधास्वयंज्योतिर्दृष्पत्वेननित्यो ऽनित्यत्वेनअन्यः अनन्यत्वेननिर्गुणः सगुणत्वेनेत्यादिवहुधात्वप्रपंचनीयम् २४ २५ २६ सुविस्मितासती २७ समाश्राव्यसंबोध्य २८॥ ६॥

८५
भा॰ द॰
उ॰
१९

॥२९॥ भूमेर्भारायमाणानां राज्ञामर्थे तेषां निधनार्थं मे मयि किलावतीर्णौ ३० हे आद्य यस्यांशः पुरुषस्तस्यांशो माया तस्या अंशा गुणाः तेषां भागेन परमाणुमात्रलेशेन विश्वोत्पत्त्यादयो भवन्ति तं त्वा त्वां गतिं शरणं गतास्मि ३१ आनिन्यथुः आनी

श्रीदेवक्युवाच रामरामाप्रमेयात्मन्कृष्णयोगेश्वरेश्वर वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ २९ कालविध्वस्तसत्वानां राज्ञामुच्छास्त्रवर्तिनां भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ३० यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः भवन्ति किल विश्वात्मन्तं त्वाद्याहं गतिं गता ३१ चिरान्मृतसुतादाने गुरुणा किल चोदितौ आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षिणां ३२ तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ भोजराजहतान्पुत्रान्कामये द्रष्टुमाहृतान् ३३ ऋषिरुवाच एवं संचोदितौ मात्रा रामः कृष्णश्च भारत सुतलं संविविशतुर्योगमायामुपाश्रितौ ३४ तस्मिन्प्रविष्टावुपलभ्य दैत्यराड्विश्वात्मदैवं सुतरां तथात्मनः तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ३५ तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः

तवन्तौ पितृस्थानात् यमसदनात् ३२ ३३ ३४ दैत्यराड्बलिः कथंभूतौ विश्वस्यात्मभूतं दैवं सान्वयः सपरिवारः ३५ ॥सवृंदः सपरिजनः कथंभूतौ पादाववनिज्य यदम्बु ययोरवनेजनोदकं आब्रह्म ब्रह्माण ॥

मभिव्याप्यजगत्पुनत्यविन्नयदृर्त्ततेतौ ३६ ३७ इंद्रसेनोवलिः प्रेमविभिन्नयाप्रेमार्द्रयाधियाविभ्रद्धारयन् ३८ अनंतायशेषायबृहतेफणैकदेशेविश्वधारणात् बृहतत्तस्मैकृष्णायचवेधसेजगद्विधात्रेसांख्ययोगवितानायेत्यादिपदत्रयमेकाविवक्षया ३९ योगेश्वराणामपिदुर्द्दर्शौयुवामस्माभिर्दृष्टावित्येतन्नातिचित्रमित्याह दर्शनमि

दधारपादाववनिज्यतज्जलंसवृंदआब्रह्मपुनद्यदंबुह ३६ समर्हयामासस्तौविभूतिभिर्महार्हवस्त्राभरणानुलेपनैः तांबूलदीपामृतभक्षणादिभिःस्वगोत्रवित्तात्मसमर्पणेनच ३७ सइंद्रसेनोभगवत्पदांबुजंविभ्रन्मुहुःप्रेमविभिन्नयाधिया उवाचहानंदजलाकुलेक्षणःप्रहृष्टरोमानृपगद्गदाक्षरम् ३८ बलिरुवाच नमोनंतायबृहतेनमःकृष्णायवेधसेसांख्ययोगवितानायब्रह्मणेपरमात्मने ३९ दर्शनंवांहिभूतानांदुष्प्रापंचातिदुर्ल्लभं रजस्तमःस्वभावानांयन्नःप्राप्तौयदृच्छया ४० दैत्यदानवगंधर्वाः सिद्धविद्याध्रचारणाः यक्षरक्षःपिशाचाश्चभूतप्रमथनायकाः ४१ विशुद्धसत्वधाम्न्यद्धात्वयिशास्त्रशरीरिणि नित्यंनिवद्धवैरास्तेवयंचान्येचताद

ति दुष्प्रापमपियुष्मत्कृपयाकेषांचिद्दुर्ल्लभंसुलभमपिभवतितदाहरजस्तमःस्वभावानामिति ऽऽशाः ४२ नोदर्शनंप्राप्तौ ४० अहोविद्विषोवयंसात्विकभक्तेभ्योऽपिसभाग्याइत्याहदैत्येत्यादिभिः ४१।४२॥६॥६॥

भा० द० ११९

उद्‍बुद्धवैरेण या भक्तिस्तया केचन नेति चैद्यादयः कामतो भक्त्या गोप्यादयो मत्प्रसंनिकृष्टास्त्वदात्मतां प्राप्ताः तथा च सत्व
संख्याः सत्वाविष्टा अपि सुरादयो न सन्निकृष्टा इति ४३ ननु सात्विकेभ्योपि [illegible] सादयः सन्निकृष्टा इति चित्रं तत्राह इ
दमित्थमिति इदमिति स्वरूपतः इत्थमिति विशेषतश्च ४४ तदेवं यद्यपि वैरभावेनापि त्वत्प्राप्तिर्भवेद[illegible]यापि मां सात्वि
कं कुर्विति प्रार्थयते तन्न इति तत्र तथा नः प्रसीद यथा निरपेक्षै राप्तकामैरपि विमृग्यं युष्मत्पादारविंदं तद्देव धिषण माश्र
यः तस्मादन्यद्यद्गृहं न देवांधकूपस्तस्मान्निष्क्रम्य निर्गत्य विश्वस्य शरणं रक्षितारो वृक्षास्तेषामंघ्रिमूलेषु स्वत एव गलि

केचनोद्बुद्धवैरेण भक्त्या केचन कामतः नतथा सत्वसंरव्याः सन्निकृष्टाः सुरादयः
४३ इदमित्थमिति प्रायस्तव योगेश्वरेश्वर न विदंत्यपि योगेशा योगमायां कुतो वयं
४४ तन्नः प्रसीद निरपेक्ष विमृग्य युष्मत्पादारविंदधिषणान्यगृहांधकूपात् निष्क्रम्य
विश्वशरणांघ्र्युपलब्धवृत्तिः शांतो यथैक उत सर्वसखैश्चरामि ४५ शाध्यस्मानी
शितव्येश निष्पापान्कुरु नः प्रभो पुमान्यच्छ्रद्धयातिष्ठंश्चोदनाया विमुच्यते ४६

तैः फलादिभिरुपलब्धा प्राप्ता वृत्तिर्जीविका येन सोऽहं शांतः सन् एक एव चरामि उत अथवा सर्वैषां सखायो म
हांतः तैः सह यथा चरामीति ४५ कथमल्पपुण्यानामेवं भावः संभवति इति चेत्तर्हि यथैतद्भवेत्तथाऽस्माननु
शिक्षयेत्याह शाधीति हे प्रभो ईशितव्याः सर्वे जीवास्तेषामीश यत्तवानुशासनं आतिष्ठन् आश्रयन् चोदनाया
विधिनिषेधलक्षणायाः सकाशाद्विमुच्यते न खलु त्वद्भक्तो विधिकिंकरः स्यादिति भावः ॥ ४६ ॥ १॥ १॥

तदुक्तं सर्व्वमनुमोद्यस्वागमनकारणं सप्रपंचं कथयति आसन्निति पंचभिः ऊर्णायां भार्य्यायां प्रथमेंतरे स्वायंभुवमन्वंतरे ते देवाः सुतां वाचं यभितुं यष्टुं मैथुनेन रमयितुं उद्यतं उद्युक्तं कं प्रजापतिं जहसु उपहसितवंतः ४७ तेनावद्यकर्म्मणा पापेन आसुरीं योनिमगमन् अधुना तत्क्षणमेव हिरण्यकशिपोर्जाता इत्यर्थः ते च योगमायया ततो नीताः

श्रीभगवानुवाच आसन्मरीचेः षट्पुत्रा ऊर्णायां प्रथमेंतरे देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतं ४७ तेनासुरीमगमन् योनिमधुनाऽवद्यकर्म्मणा हिरण्यकशिपोर्जाता नीतास्ते योगमायया ४८ देवक्या उदरे जाता राजन् कंसविहिंसिताः सा तान् शोचत्यात्मजान् स्वांस्त इमेऽध्यासतेंतिके ४९ इत एतान्प्रणेष्यामो मातृशोकापनुत्तये ततः शापाद्विनिर्मुक्ता लोकं यास्यंति विज्वराः ५० स्मरोद्गीथः परिष्वंगः पतंगः क्षुद्रभृत् घृणी षडिमे मत्प्रसादेन पुनर्यास्यंति सद्गतिं ५१ इत्युक्त्वा तान्समादाय इंद्रसेनेन पूजितौ पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छतां ५२ तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी परिष्वज्यांकमारोप्य मूर्द्ध्न्यजिघ्रदभीक्ष्णशः ५३ ॥ ॥ संतः ४८ देवक्या उदरे जाताः हे राजन् बलेन चक्रं कंसेन विहिंसिताः सा च तानात्मजान्म[illegible]शोचति ते च इमे तव अंतिकेऽध्यासते ४९ लोकं देवलोकं ५० स्मरोद्गीथः स्मरसहितः उद्गीथः सद्गतिं मोक्षं स्मरस्यैव पू[illegible]कीर्तिमानिति नामत्रतः कीर्तिमंतं प्रथमजं कं

५४ अमृतत्वेहेतुः गदाभृतः पीतशेषमिति नारायणांगसंस्पर्शेनप्रतिलब्धंदेवावयमित्यात्मदर्शनंयैस्ते ५५ धामदेवलो
कं ५६ मृतानामागमनंनिर्गमंनचश्रीकृष्णस्य मायांमेनेतेनैवापन्यादि रचितां ५७ ५८ अमृतंकीर्तिर्यस्यतस्यव्या
सपुत्रैरितिबहुवचनंपूजार्थंजगतां अयंभिनत्तीतितथानत्अलंनिः शेषंयथाभवतितथानक्त दिवदिति तदेवं

अपाययत्स्तनंप्रीतास्सुतस्पर्शपरिप्लुता मोहितामायया विष्णोर्य्ययासृष्टिः प्रवर्त्तते ५४
पीत्वाऽमृतंपयस्तस्याः पीतशेषंगदाभृतः नारायणांगसंस्पर्शप्रतिलब्धात्मदर्शनाः ५५
तेनमस्कृत्यगोविंदंदेवकीपितरंबलं मिषतांसर्वभूतानांययुर्द्धामदिवौकसां ५६ तद्दृ
ष्ट्वादेवकीदेवीमृतागमननिर्गमं मेनेसुविस्मितामायांकृष्णस्यरचितांनृप ५७ एवंवि
धान्यद्भुतानिकृष्णस्यपरमात्मनः वीर्य्याण्यनंतवीर्य्यस्यसंत्यनंतानिभारत ५८ सूतउ
वाच यइदमनुशृणोतिश्रावयेद्वामुरारेश्चरितममृतकीर्तेर्वर्णितंव्यासपुत्रैः जगदघ
भिदलंतद्भक्तसत्कर्णपूरंभगवतिकृतचित्तोयातितत्क्षेमधाम ५९ ॥इतिश्रीभागवतेम
हापुराणेदशमस्कंधेमृतात्मजानयनंनामपंचाशीतितमोध्यायः॥ ८५ ॥राजोवाच ब्र
ह्मन्वेदितुमिच्छामःस्वसारंरामकृष्णयोः यथोपयेमेविजयोयाममासीत्पितामही १॥

मोक्षहे
तुत्वंपापक्षयहेतुत्वंचोक्तं तद्भक्तानांतुसत्कर्णपूरंपरमसुखावहंकर्णाभरणमितिस्वयंसुखरूपतामाह किंचभगवतिकृ
तमावेशितंचित्तंयेनसतथाभूत्वातत्क्षेमधामकालादिभयरहितंलोकंयातीति ५९ इतिदशमेटीकायांपंचाशीतितमोध्या

पित्रोः स्वज्ञानमादिश्य सुभद्रां फाल्गुनाय च जगाम मिथिलां कृष्णः स्वभक्तप्रियकृत्ततः २ देवक्यामृतपुत्रलाभवत् अर्जुनस्य सुभ
द्रालाभोऽपि रामस्यातिकूल्यात् दुर्घट इति मन्यमानः प्रसंगात्पृच्छति ब्रह्मन्निति १ कथमशृणोत् दुर्य्योधनायेति अपरे वसुदेवादयो
नदास्यंतीति नल्लिप्सुः तस्यां मातुलेय्यां लिप्सुः रामं वंचयितुं पूज्यतमं त्रिदंडिवेषं विधाय गत इत्याह स यतिरिति ३ स्वार्थसाधकः का

**श्रीशुक उवाच** अर्जुनस्तीर्थयात्रायां पर्य्यटन्नवनीं प्रभुः गतः प्रभासमशृणोन्मातुलेयीं स आ
त्मनः २ दुर्य्योधनाय रामस्तां दास्यतीति न चापरे तल्लिप्सुः स यतिर्भूत्वा त्रिदंडी द्वारकामगा
त् ३ तत्र वै वार्षिकान्मासानवात्सीत्स्वार्थसाधकः पौरैः सभाजितोऽभीक्ष्णं रामेणाजानता च
सः ४ एकदा गृहमानीय आतिथ्येन निमंत्र्य तं श्रद्धयोपहृतं भैक्ष्यं बलेन बुभुजे किल ५ सो
ऽपश्यत्तत्र महतीं कन्यां वीरमनोहरां प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ६ सापि तं चकमे
वीक्ष्य नारीणां हृदयंगमं हसंती व्रीडितापांगी तन्न्यस्तहृदयेक्षणा ७ तां परं समनुध्यायन्नंतरं प्रेप्सुर
र्जुनः न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ८ महत्यां देवयात्रायां रथस्थां दुर्गनिर्गतां जहा
रानुमतः पित्रोः कृष्णस्य च महारथः ९ रथस्थो धनुरादाय शूरांश्चारुंधतो भटान् विद्राव्य क्रोशतां
स्वानां स्वभागं मृगराडिव १० तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः गृहीतपादः कृष्णेन सु

न्यां प्रेप्सुः ४ तमातिथ्येन निमंत्र्य गृहमानीय बलेन यच्छ्रद्धयोपनीतं परिविष्टं तद्भैक्ष्यं किलार्जुनो बुभुजे इत्यन्वयः ५ भावेन रत्यभिप्रायेण क्षुभितं मनो दधे ६ व्रीडितापांगी सव्रीडकटाक्षीति तस्मिन्नेव न्यस्तं हृदयमीक्षणं च य

यासा ७ अंतरं हर्तुमवसरं प्रेप्सुः प्राप्तुमिच्छुः कामेन भ्रमच्चित्तं यस्य
सः पूजामादिसन्माननिमित्तं सुखं ८ ९ आसमंतादुद्धृतः आवरणं कु

पारिवर्हाणिवसव ध्वोःमीतिदेयानि १२ १३ अनीहयाआनुद्यमेनैवागतंयदाहार्य्यंभोज्यंतेननिर्वर्तिताःनिजाःक्रियायेनसः १४ या
त्रामात्रंशरीरादिनिर्वाहमात्रंभोज्यंउपनमतितंप्रत्यागच्छति १५ मिथिलस्यजनकस्यवंश्योमैथिलः १६ प्रभुरेतत्प्रियंविदेहानृदेशान्य
ययौ १७ कृष्णोव्यासःरामोभार्गवः अहंशुकः एवमादिभिःसह १८ १९ आनर्त्ताद्यर्णान्तास्तत्तद्देशवर्त्तिन्योनृनार्य्यःउदारहासंस्नि

माहिणोतपारिवर्हाणिवरंवध्वोर्मुदावलः महाधनोपस्करेभरथाश्वनरयोषितः १२।
श्रीशुकउवाच कृष्णस्यासीद्द्विजः श्रेष्ठःश्रुतदेवइतिश्रुतः कृष्णैकभक्त्यापूर्णार्थःशांतःकविरलं
पटः १३ सउवासविदेहेषुमिलायांगृहाश्रमी अनीहयागताहार्य्यनिर्वर्तितनिजक्रियः
१४ यात्रामात्रंत्वहरहर्द्दैवादुपनमत्युत नाधिकंतावतातुष्टःक्रियाश्चक्रेयथोचिताः
१५ तथातद्राष्ट्रपालोंगवहुलाश्वइतिश्रुतः मैथिलोनिरहंमानउभावप्यच्युतप्रियौ
१६ तयोःप्रसन्नोभगवान्दारुकेनाहृतंरथं आरुह्यसाकंमुनिभिर्विदेहान्प्रययौप्रभुः
१७ नारदोवामदेवोत्रिःकृष्णोरामोऽसितोऽरुणिः अहंवृहस्पतिःकण्वोमैत्रेयश्च्यवनाद
यः १८ तत्रतत्रतमायांतंपौराजानपदान्नृप उपतस्थुःसार्घहस्ताग्रहैःसूर्य्यमिवोदितं १९
आनर्त्तधन्वकुरुजांगलकंकमत्स्यपांचालकुंतिमधुकैकयकोसलार्णाः अन्येच
तन्मुखसरोजमुदारहासस्निग्धेक्षणंनृपपपुर्दृशिभिर्नृनार्य्यः ॥२०॥ मीक्षणंयस्मिन्
तत्दृशिभिर्नेत्रैः ॥२०॥ स्ववीक्षणेनैवविनष्टतमिस्रादृग्येषांतेभ्यः क्षेमंअभयंअर्थदर्शंतत्व ॥२१॥ २१।

ज्ञानंचयच्छन् २१ अभीयुः प्रत्युज्जग्मुः २२ प्रीत्या उत्फुल्लानि आननानि आशयाः अंतःकरणानि येषां तैः शि
रोभिः २३ २४ २५ तदभिप्रेत्य अंगीकृत्य तत्तनदा उभाभ्यामपि ताभ्यां मद्गृहादप्यन्यस्य गृहं यातीत्यलक्षितः अविदि

तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमंत्रिलोकगुरुरर्थदृशं च यच्छन् ॥ ६ ॥ ।
शृण्वन्दिगंतधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् २१ तेऽच्यु
तं प्राप्तमाकर्ण्य पौरा जानपदा नृप अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः २२ दृ
ष्ट्वा तं उत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः कैर्धृतांजलिभिर्नेमुः श्रुतपूर्वांस्तथा मुनीन्
२३ स्वानुग्रहाय संप्राप्तं मन्वानौ तं जगद्गुरुं मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः २४
न्यमंत्रयेतां दाशार्हमातिथ्येन सह द्विजैः मैथिलः श्रुतदेवश्च युगपत्संहतांजली २५
भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया उभयोराविशद्गेहं उभाभ्यां तदलक्षितः २६
श्रोतुमप्यसतां दूराज्जनकः स्वगृहागतान् आनीतेष्वासनाग्र्येषु सुखासीनान्महाम
नाः २७ प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः नत्वा तदंघ्रीन्प्रक्षाल्य तदपो लोकपा
वनीः २८ सकुटुंबो वहन्मूर्ध्ना पूजयां चक्र ईश्वरान् गंधमाल्यांबराकल्पधूपदीपार्घ्यगो

नः यद्वा उभाभ्यां रूपाभ्यां तदलक्षितः ताभ्यामलक्षित इति २६ २७ उद्धर्षे उद्गतहर्षे हृदयं यस्य ५५ वृषैः २९
अस्रैराविलेक्षिते ईक्ष
णैर्यस्यासः सत्वमसच ३० ईश्वरान् ईश्वरं तेनु ल्यां श्रोत्वर्थः २८९

८६
भा०द०
उ०
१२१

प्रीणन् प्रीणयन् संस्पृशन् संमर्दयन् ३० आत्मा चेतयिता साक्षी प्रकाशकः स्वदृक् स्वप्रकाशः अथ अनंतः कारणात् ३१ अनंतो बंधुरपि श्री भार्य्यापि अजः पुत्रोपि ३२ ३३ तच्छांत्यै संसारोपशमाय ३४ ३५ गृहान् गृहेषु भूमन्नित्यर्थः ३६ ३७ धुन्वा

वाचा मधुरया प्रीणन्निदमाहान्नतर्प्पितान् पादावंकगतौ विष्णोः संस्पृशन् शनकैर्मुदा ३० राजोवाच भवान्हि सर्वभूतानामात्मा साक्षी स्वदृक् प्रभो अथ नस्त्वत्पदांभोजं स्मरतां दर्शनं गतः ३१ स्ववचस्तदृतं कर्त्तुमस्मदृग्गोचरो भवान् यदात्थैकांतभक्तान्मे नानंतः श्रीरजः प्रियः ३२ को नु त्वच्चरणांभोजमेवंविद्विसृजेत्पुमान् निष्किंचनानां शांतानां मुनीनां यस्त्वमात्मदः ३३ योऽवतीर्य्य यदोर्व्वंशे नृणां संसरतामिह यशो वितेने तच्छांत्यै त्रैलोक्यवृजिनापहं ३४ नमस्तुभ्यं भगवते कृष्णायाकुंठमेधसे नारायणाय ऋषये सुशांतं तप ईयुषे ३५ दिनानि कतिचिद्भूमन्गृहान्नो निवस द्विजैः समेतः पादरजसा पुनीहीदं निमेः कुलं ३६ इत्युपामंत्रितो राज्ञा भगवान् लोकभावनः उवास कुर्व्वन् कल्याणं मिथिलानरयोषितां ३७ श्रुतदेवोऽच्युतं प्राप्तं स्वगृहान् जनको यथा नत्वा मुनीन्सुसंहृष्टो धुन्वन्वासो ननर्त्त ह ३८ तृणपीठबृषीष्वेतानानीतेषूपवेश्य सः स्वागतेनाभिनंद्यांघ्रीन् सभार्य्योऽवनिजे मुदा ३९

नपरिश्रामयन् ३८ अवनिजे अवनिनिजे प्रक्षालितवान् ॥३९॥

४० फलैरामलकादिभिः अर्हणेनउशीरैस्तृणविशेषमूलैः सुवासितैः शिवैरमृतवत्स्वादुभिरंबुभिः सुरभ्या मृदा कस्तू
रीप्रमुखया सपर्य्यया पूजया यथोपपन्नया अनायासेन संपन्नया भूतानुपद्रवलब्धत्वात्सत्वविवर्द्धनं यदंधः अन्नं तेन
च ४१ अस्य श्रीकृष्णस्य आत्मा मूर्त्तिस्तस्य निकेतैर्भूसुरैश्च सर्व्वतीर्थास्पदपादरेणुभिः कृष्णादिभिर्य्यः संगमः सममकुतोऽन्वभूदिति अन्विति विस्मये यद्वा आ इति वितर्केनु इति विस्मये ४२ उपस्थितः समीपउपविष्टः भार्य्याः भर्त्तव्याः

तदंभसा महाभाग आत्मानं सगृहान्वयं स्नापयांचक्रउद्धर्षो लब्धसर्व्वमनोरथः ४० फ
लार्हणोशीरशिषामृतांबुभिर्मृदा सुरभ्या तुलसीकुशांबुजैः आराधयामास यथोपपन्न
या सपर्य्यया सत्वविवर्द्धनांधसा ४१ स तर्कयामास कुतो ममान्वभूत् गृहांधकूपे पति
तस्य संगमः यः सर्व्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ४२ सूपविष्टा
न्कृतातिथ्यान् श्रुतदेव उपस्थितः सभार्य्यस्वजनापत्य उवाचांघ्र्यभिमर्शनः ४३ श्रीश्रु
तदेव उवाच नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मस
त्तया ४४ यथा शयानः पुरुषो मनसैवात्ममायया ॥ ४४ स्वजनाः अपत्यानि च तैः सहितः श्रीकृष्ण
स्यांघ्रिमभिमृशति संमर्द्दयतीत्यंघ्र्यभिमर्शनः ४३ यर्हीदं विश्वं शक्तिभिः सृष्ट्वा प्रविष्टः तदेव दर्शनं प्राप्तः स एव सम्मा
क्रोनाद्यतनो भूतस्त्वमित्यर्थः यद्वा नः अस्मान् अद्यैव प्राप्त इति न किंतु तदैव प्राप्तः यर्हीदं विश्वं स्वशक्तिभिः सत्वादिभिः
सृष्ट्वा स्वसत्तया अनुप्रविष्टस्त्वं तद्दर्शनं तु परं केवलमद्यैव प्राप्तं इति ४४ मायासृष्टिप्रवेशयोरविघातः सृष्टिप्रवेशौ दृष्टांतेन

भा० द० उ० ८६ १२२

आत्ममायया स्वाविद्ययेत्यर्थः यद्वा आत्मनस्तव माययेति ४५ किंच शृण्वतामिति नित्यं श्रवणकीर्त्तनादिपराणाममलात्मनामपि हृद्येव त्वं भासि न तु लोचनगोचरस्त्वं अहो भाग्यमित्यर्थः ४६ ननु सर्वेषां हृदि स्थितः कथं केषांचिदेव हृदि भाति मेघैः सूर्य्यवत् जीवो ह्युपाधिभिरावृतत्वादिति यद्युच्यते तर्हि नकस्यापि मायेत्यत आह हृदिस्थोऽपीति कर्म्मभिर्विक्षिप्तं चेतो येषां तेषामात्मशक्तिभिरहंकारादिभिरग्राह्यः व्यवहितोपि उपेतगुणः प्राप्तश्रवणकीर्त्तनादिसंस्कारः आत्मा अंतःकरणं येषां तेषामंतिसमीपे अव्यवहितस्त्वमित्यर्थः ४७ एतदेव प्रपंचयन्नमस्यति नमोस्त्विति तेतु

सृष्ट्वा लोकं परं स्वात्मन् अनु विश्याव भासते ४५ शृण्वतां गदतां शश्वदर्चतां त्वाभिवंदतां नृणां संवदतामंतर्हृदि भास्यमलात्मनां ४६ हृदिस्थोप्यतिदूरस्थः कर्म्मविक्षिप्तचेतसां आत्मशक्तिभिरग्राह्योप्यन्त्युपेतगुणात्मनां ४७ नमोस्तु तेऽध्यात्मविदां परात्मने ह्यनात्मने स्वात्मविभक्तमृत्यवे सकारणाकारणलिंगमीयुषे स्वमायया संवृतरुद्धदृष्टये ४८ स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे

तुभ्यं नमोस्तु अध्यात्मविदां निवृत्तदेहाद्यहंकाराणां परमात्मने परमात्मत्वेन प्रकाशमानाय मोक्षप्रदायेत्यर्थः अनात्मने देहाद्यभिमानिने जीवाय परत्वेनाप्रकाशमानत्वात् स्वात्मनः सकाशात् विभक्तः समर्प्पितो मृत्युः संसारो येन तस्मै कुत एतत्तत्राह सकारणं महदादिकार्य्यं अकारणं प्रकृतिः तदुभयं लिंगमुपाधिं नियम्यतया ईयुषे प्राप्तवते अत एव उभयनियंतुः स्वस्मात् सकाशात् तदुभयवश्याय जीवाय विभक्तमृत्यवे इत्यर्थः नियंतृनियम्यत्वे कारणं वदन्नाह स्वमायया संवृतेति अतोऽलुप्तैश्वर्य्यत्वान्नियंत्रे तुभ्यं नमः किंच रुद्धदृष्टये मायावित्वादेव अन्येषां

आवृतादृष्टिर्येनतस्मै यद्वा स्वमायया स्वस्यासंवृता अन्येषांच रुद्धा दृष्टिर्येनतस्मैइत्येकंपदं ४८ सएवंभूतःपरमेश्वरस्त्वंनो ऽस्मान्स्वभृत्यान्शाधि अनुशिक्षय ४९ ५० स्वस्मिन्नादरमत्यधिकंब्राह्मणेषुमंदमिवालक्ष्यलोकसंग्रहपरोभगवान्मत्तोपि ब्राह्मणेषुश्रद्धातिरेकंकुर्विति एवंतमनुशास्तिब्रह्मन्नितिसप्तभिः मयात्वदृष्टेन ५१ देवादिभ्योपिब्राह्मणाः श्रेष्ठाइत्याहदेवा

एतदंतोनृणांक्लेशोयद्भवानक्षगोचरः ४९ श्रीशुकउवाच तदुक्तमित्युपाकर्ण्यभगवान्प्रणतार्तिहा गृहीत्वापाणिनापाणिंप्रहसंस्तमुवाचह ५० श्रीभगवानुवाच ब्रह्मंस्तेनुग्रहार्थायसंप्राप्तान्विद्ध्यमून्मुनीन् संचरंतिमयालोकान्पुनंतःपादरेणुभिः ५१ देवाःक्षेत्राणितीर्थानिदर्शनस्पर्शनार्चनैः शनैःपुनंतिकालेनतदप्यर्हत्तमेक्षया ५२ ब्राह्मणोजन्मनाश्रेयान्सर्वेषांप्राणिनामिह तपसाविद्ययातुष्ट्याकिमुमत्कलयायुतः ५३ नब्राह्मणान्मेदयितंरूपमेतच्चतुर्भुजं सर्ववेदमयोविप्रःसर्वदेवमयोह्यहं ५४ दुष्प्रज्ञाअविदित्वैवमवजानंत्यसूयवः गुरुंमांविप्रमात्मानमर्चादाविज्यदृष्टयः ५५ चराचरमिदंविश्वंभावाये

इति तेशनैःपुनंतिएतेतुसद्यः किंचदेवादीनियत्पुनंतितदप्यर्हत्तमानामीक्षया ५२ ममकलापरिकल्ले ऽचास्यहेतवः नमुपात्तिस्तयायुतः ५३ किंचब्राह्मणाराधनमेवममप्रेष्ठमित्याह नेतिहेतुमाहसर्ववेदमयोविप्रइति प्रमाणाधीनत्वात् प्रमेयस्यवेदमयोविप्रोदेवमयादस्माद्रूपात्प्रेष्ठइत्यर्थः ५४ असूयवोदोषदृष्टयअर्चादौइज्यदृष्टयःपूज्यबुद्धयः ५५ असयवि

भा०टी०स्कं०१०

मद्दास्यः मदीक्षयाममेवसर्वत्रेक्षया ५६ ५७ सन्मार्गसतांवेदानांत्रिकांडविषयाणांनिवृत्तिप्रकारमादिश्य ५८ ५९
इतिदशमस्कंधटीकायांषडशीतितमोऽध्यायः ८६ सप्ताशीतितमेनारायणनारदवादतः वेदैः स्तुतिर्गुणालेवा निर्गुणावधिवर्ण्यते १ वागीशायस्यवदनेलक्ष्मीर्यस्यचवक्षसि यस्यास्तेहृदयेसंवितंनृसिंहमहंभजे २ संप्रदायविशुद्ध्यर्थं स्वीयनिर्वंधयंत्रितः श्रुतिस्तुतिमितव्याख्यांकरिष्यामियथामति ३ श्रीमद्भागवतंपूर्वैःसारतःसंनिषेवितं मयातुतदुपस्पृष्टमुच्छिष्टमुपचीयते ४ पूर्वाध्यायांतेएवंस्वभक्तयोराजन्भगवान्भक्तभक्तिमान् उषित्वादिश्यसन्मार्गंपुनर्द्वारवती

मद्रूपाणीतिचेतसाधत्तेविप्रोमदीक्षया ५६ तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयार्चय एवंचेदर्चितोस्म्यद्धानान्यथाभूरिभूतिभिः ५७ श्रीशुकउवाच सइत्थंप्रभुणादिष्टःसहकृष्णान्द्विजोत्तमान् आराध्यैकात्मभावेनमैथिलश्चापसद्गतिं ५८ एवंस्वभक्तयोराजन्भगवान्भक्तभक्तिमान् उषित्वादिश्यसन्मार्गंपुनर्द्वारवतीमगात् ५९ इतिश्रीभागवतेमहापुराणेदशमस्कंधेश्रुतदेवानुग्रहोनामषडशीतितमोध्यायः ८६ श्रीपरीक्षिदुवाच ब्रह्मन्ब्रह्मण्य

मगात् इत्यत्रसन्मार्गंसतांस्वतः प्रमाणभूतानामप्रामाण्यकारणरहितानांवेदानां ऽ निर्देश्येनिर्गुणेगुणवृत्तयः मार्गंब्रह्मपरत्वमुपदिश्यभगवान्अगादित्युक्तंतत्रवेदानांब्रह्मपरत्वमघटमानंमन्वानः पृच्छतिब्रह्मन्निति तत्रतावन्मुख्यालक्षणागुणभेदेनत्रिधाशब्दप्रवृत्तिः मुख्यापिरूढियोगभेदेनद्विधारूढिश्चस्वरूपेणजात्यागुणेनवानिर्देशार्हेवस्तुनिसंज्ञासंज्ञिसंकेतेनप्रवर्ततेयथाडित्थःगौःशुक्लइति लक्षणाचतेनैवसंकेतेनाभिहितार्थसंबंधिनि यथागंगायांघोषइ

गौणी चाभिहितार्थलक्षितगुणयुक्ते तत्सदृशे यथा सिंहो देवदत्त इति यथाहुः अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते ल
क्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता इति योगवृत्तिस्तु एतत्त्रिविधवृत्तिप्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्वा योगेन यथा
पंकजं औपगवः पाचक इत्यादि तत्र तावद्ब्रह्मणि रूढिवृत्तिर्न संभवतीत्याह साक्षात्कथं चरंतीति तत्र हेतुः अनिर्देश्य इति
अनिर्देश्यत्वे ऽपि हेतुं वदन् गुणवृत्तिं निराकरोति निर्गुणे गुणवृत्तय इति गुणैर्वर्त्तमाना अपि निर्गुणे कथं चरंतीत्यर्थः निर्गुणत्वे
च हेतुं वदन् लक्षणां योगं च निराकरोति सदसतः पर इति कार्य्यकारणाभ्यां परस्मिन्नसंगे केनचिदपि संबंधाभावान्न लक्षणा
योगवृत्ती संभवत इत्यर्थः एवं पदार्थत्वायोगादपदार्थस्य च वाक्यार्थत्वायोगान्न श्रुतिगोचरत्वं ब्रह्मण इत्यभिप्रायः १ उत्तर
माह बुद्धींद्रियेति बुद्ध्यादीनुपाधीन् जनानामनुशायिनां जीवानां मात्राद्यर्थं प्रभुरीश्वरो ऽसृजत् मीयंते इति मात्रा विषयाः

कथं चरंति श्रुतयः साक्षात् सदसतः परे १ श्रीशुक उवाच बुद्धींद्रियमनःप्राणान् जनानामसृजत् प्रभुः

तदर्थं भवार्थं भवो जन्म लक्षणं कर्म तत्प्रभृति कर्मकरणार्थमित्यर्थः आत्मने लोकांतरगामिने आत्मनस्तत्तल्लोक
भोगायेत्यर्थः अकल्पनाय कल्पनानिवृत्तये मुक्तय इत्यर्थः अर्थधर्मकाममोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः जनाना
मिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति प्रभुरिति ईश्वरस्य उपाधिवश्यताभावेन नित्यमुक्ततां दर्शयति
अयमभिप्रायः सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियंतारं सर्वोपास्यं सर्वकर्मफलदातारं समस्तकल्या
णगुणनिलयं सच्चिदानंदं भगवंतं श्रुतयः प्रतिपादयंति यः सर्वज्ञः स सर्ववित् यस्य ज्ञानमयं तपः सर्वस्य वशी सर्वस्येशानः
यः पृथिव्यां तिष्ठन् पृथिव्या अंतरः सो ऽकामयत बहु स्यां स ऐक्षत तत्तेजो ऽसृजत सत्यं ज्ञानमनंतं ब्रह्मेत्याद्याः तथाभूतेश्वरतां
तावत्संसारिणो जीवस्य तन्निवृत्तये तत्त्वमसीत्यादिवाक्यानि बोधयंति तत्र च तत्त्वंपदयोः सामानाधिकरण्यं प्रतीयते २

तच्चप्रकारांतरेणाऽघटमानंब्रह्मणिपर्य्यवसानंगमयति तथाहिनतावद्दध्नेदेव्यामिक्षेतिवद्वायोरेकार्थाभिधानेन सामानाधिकारण्यंयथोक्तंआमिक्षांदेवतायुक्तांवदत्येवैषनद्धितः आमिक्षापदसान्निध्यात्तस्यैवविषयार्प्पणमिति कुतःभिन्नार्थत्वात् नचाजहत्स्वार्थयानिरूढलक्षणयाविशेषणविशेष्यभावेननीलमुत्पलमितिवत् यथोक्तंस्वबुध्या रज्यतेयेनविशेष्यंतद्विशेषणमित्यादिकुतःविरुद्धार्थत्वेनतदयोगात् नचजहत्स्वार्थत्वेनसंबंधिलक्षणयाकुसुमित द्रुमागंगेतिवत्कुतएकार्थत्वस्यविवक्षितत्वात् अतोजहदजहत्स्वार्थलक्षणयासोऽयंदेवदत्तइतिवद्विरुद्धांशत्यागेनानु गतचिदंशेनैकार्थेनसामानाधिकरण्येननिर्गुणेपर्य्यवसानं अस्थूलादिवाक्यानांतुसाक्षादुपाधिनिषेधेनतत्पदार्थ शोधनउपयोगान्निर्गुणेएवपर्यवसानम् तथाचात्रैवोपक्रमे स्वसृष्टमिदमापीयेत्यादिनाविशिष्टमालंबनंवक्ष्यति अ

मात्रार्थंचभवार्थंचआत्मनेऽकल्पनायच २ सैषाह्युपनिषद्ब्राह्मीपूर्वेषांपूर्वजैर्धृता श्रद्धयाधारयेद्यस्तांक्षेमंगच्छेदकिंचनः ३ अत्रतेवर्णयिष्यामिगाथांनारायणान्वितां नारदस्यचसंवादमृषेर्नारायणस्यच ४ ॥ ॥ तेचश्रुतयस्त्वयिहिफलंत्यतन्निरसनेनभवन्निध नाद्युप संहरिष्यति उपासनादिवाक्यानांत्वन्यार्थप्रवृत्तस्यछायाद्यवलंबनेनज्ञानसाधनविधानेनतत्परत्व मित्यपादिकु २ अत्रचाऽनादिशिष्टपरंपरागतत्वान्नसंदेहोयुक्तइत्याहसैषेति सैषायथोक्तालंबनाब्राह्मीब्र ह्मपराश्रद्धयाआदरेणवैतंडिकतर्कानभिनिवेशेनयः श्रवणादिनाधारयेत्सअकिंचनःनिरस्तदेहाद्युपाधिः सन्परंपदंप्राप्नुयदिति ३ एतदेवसर्वश्रुत्यर्थनिरूपणेनप्रपंचयितुमितिहासमवतारयति अत्रइतिनारायणा ॥ न्वितांनारायणःप्रवक्तृत्वेनान्वितोयस्यांतांगाथामितिहासं॥ ४ ॥ ५ ॥

॥५।६।७।८।।ब्रह्मसत्रमिति यथायजमानाएवसमानाऋत्विगादिरूपेणयत्रकर्म्मकुर्वंतितत्कर्म्मसत्रंप्रसिद्धं
तथायत्रसमानाएववक्तृश्रोतृभावेनब्रह्ममीमांसंतेतद्ब्रह्मसत्रमिति ९ अहोंनर्हिमयाकथंतन्नज्ञानमित्यत आहश्वे
तद्वीपंद्वतितदीश्वरंतत्रस्थंमामेवानिरुद्धमूर्त्तिं १० ननुसर्वज्ञास्तेकस्तत्रवक्ताप्रष्टावातत्राह तुल्यश्रुतेति श्रुता
दिभिरविशेषाः अरिमित्रोदासीनहीनत्वेननिरूपमकरुणाः अतःसर्वेप्रवचनयोग्याअपिकेनापिकौतुकेनैकंप्रवक्ता

एकदानारदोलोकान्पर्य्यटन्भगवत्प्रियः सनातनमृषिंद्रष्टुंययौनारायणाश्र
मं ५ योवैभारतवर्षेस्मिन्क्षेमायस्वस्तयेनृणां धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः
६ तत्रोपविष्टमृषिभिःकलापग्रामवासिभिः परीतंप्रणतोऽपृच्छदिदमेवकुरूद्वह ७ त
स्मैह्यवोचद्भगवानृषीणांशृण्वतामिदं योब्रह्मवादःपूर्वेषांजनलोकनिवासिनां ८ श्री
भगवानुवाच स्वायंभुवब्रह्मसत्रंजनलोकेऽभवत्पुरा तत्रस्थानांमानसानांमुनीनामूर्द्ध्वरे
तसां ९ श्वेतद्वीपंगतवतित्वयिद्रष्टुंतदीश्वरं ब्रह्मवादःसुसंवृत्तःश्रुतयोयत्रशेरते १०
तत्रहायमभूत्प्रश्नस्त्वंमांयमनुपृच्छसि तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः अपि
चक्रुःप्रवचनमेकंशुश्रूषवोऽपरे ११ ॥
रंकृत्वान्येपप्रच्छुरित्यर्थः ११ ससृष्टमितिस्वयंनिर्मि
तमिदंविश्वंप्रलयसमयेआपीयसहतत्पशयानंयोगेननिद्राणमिववर्त्तमानंतदंतेप्रलयांतेतच्चिन्हैर्गैसात्म्या
तिपादकैर्वाक्यैः परंईश्वरंसृष्टिसमयेप्रथमनिश्वासभूताःश्रुतयः॥

भा०द०
उ०
१२५

प्रबोधयामासुः १२ सुश्लोकैः शोभनाः श्लोकाः कीर्त्तयो येषु तैः पराक्रमैः १३ जयजयेति भो अजित जय जहि उत्कर्षं
माविष्कुरु आदरे वीप्सा केन व्यापारेण अगजगदोकसां अगानि स्थावराणि जगंति जंगमानि च ओकांसि शरीराणि
येषां जीवानां तेषामजामविद्यां जहि नाशय किमिति गुणवती हंतव्येत्यत आह दोषगृभीतगुणां दोषाय आनंदाद्या-
वरणाय गृहीता गुणा यया तां हृग्रहोर्भश्छंदसीति भकारः इयं हि स्वैरिणीव परप्रतारणाय गुणान् गृह्णाति अतो
हंतव्येति अन्यो दांभिको राज्ञा हंतव्यः न हि मय्यपि दोषमावहेदिति ममापि तत्र का शक्तिः स्यादत आह त्वमिति यत
यस्मात्त्वं आत्मना स्वरूपेणैव समवरुद्धसमस्तभगः संप्राप्तसमस्तैश्वर्योऽसि वशीकृतमायत्वादिति भावः ननु स्वा

श्रीसनंदन उवाच स्वसृष्टमिदमापीय शयानं सह शक्तिभिः तदंते बोधयांचक्रुस्त-
ल्लिंगैः श्रुतयः परं १२ यथा शयानं संम्राजं वंदिनस्तत्पराक्रमैः प्रत्यूषेऽभेत्य सुश्लोकैर्बोध-
यंत्यनुजीविनः १३ श्रुतय ऊचुः जयजय जह्यजामजितदोषगृभीतगुणां त्वमसि यदात्मना
समवरुद्धसमस्तभगः॥

यमेवं ते ज्ञानवैराग्यादिना किं न हन्तुमित्यत आह अखिलशक्त्यवबोधकेति तेषां
त्वमेवांतर्यामी सर्वशक्त्युद्बोधकः अतो न ते ज्ञानादेः स्वतंत्रा इति भावः अहमकुंठज्ञानैश्वर्यादिगुणो जीवानां
कर्मज्ञानादिशक्त्यवबोधनेनाविद्यां हंतेत्यत्र किं प्रमाणमिति चेत् अहमेव प्रमाणमित्याह निगमः वेदः ननु एवं
भूते मयि कथं श्रुतीनां प्रवृत्तिरत आह क्वचिदिति कदाचित् सृष्ट्यादिसमये अजया मायया चरतः क्रीडतः निसंचा
लुप्तभगतया सत्यज्ञानानंतानंदैकरसेनात्मना च चरतो वर्त्तमानस्य निगमोऽनुचरेदिति प्रतिपादयेत्कर्मणि
षष्ठी यतो वा इमानि भूतानि जायंते यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तं ह देवमात्मबुद्धिप्रकाशं

रामः
१२५

मुमुक्षुर्वै शरणमहं प्रपद्येय आत्मनि तिष्ठन् आत्मनोंऽतरोयमयति यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमंतरो यमयत्
नि स त आत्मांतर्याम्यमृतः सत्यं ज्ञानमनंतं ब्रह्म यः सर्वज्ञः सर्ववित् इत्याद्यागमकदंबस्त्वामेवंभूतं प्रतिपादयतीत्यर्थः

१ १४ जयजयाजितजह्यगजंगमावृतिमजामुपनीतमृषागुणां नहि भवंतमृते प्रभवंत्यमी निगमगीतगुणार्णव
तानव १ ननु कथं मामेवं प्रतिपादयंति यत इंद्रो यातोऽवसितस्य राजेत्यादिभिरिंद्रः यातो जंगमस्य अवसितस्य
स्थावरस्य च राजेति प्रतिपाद्यते तथा अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयमपां रेतांसि जिन्वतीत्यादिभिश्चैवंभूत
त्वेनाग्न्यादयः प्रतिपाद्यंते तत्राह बृहदुपलब्धमेतदिति अयमर्थः एतदुपलब्धं दृष्टमिंद्रादि सर्वं बृहत् ब्रह्म त्वमि
त्येवावयंति जानंति कथं बृहत एवावशेषतयाऽवशिष्यमाणत्वेन कुतः यतो बृहतः सर्वस्योदयास्तमयौ उत्पत्तिप्र

अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः
१ १५ बृहदुपलब्धमेतदवयंत्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदि वाविकृतात्॥

लयौ सर्वोपादानत्वात् तर्हि किं विकारित्वं बृहतः न अविकृतात् विवर्ताधिष्ठानत्वेनाविकारादित्यर्थः वाशब्द उपमा
र्थः यथा घटादेर्विकृतेर्मृदि उदयास्तमयौ तद्वत् वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं सर्वं खल्विदं ब्रह्मेत्यादि
भिस्तथा प्रतिपादनादित्यर्थः अतः कारणादृषयो मंत्रास्तद्द्रष्टारो वा त्वय्येव मनोवचनाचरितं दधुः मनसा आचरितं तं
तत्र्यं वचनाचरितमभिधानं च धृतवंतः न पृथग्विकारेष्वित्यर्थः अत्र निदर्शनं कथमयथेति नृणां भूचराणां
यत्र कुत्रापि दत्तानि निक्षिप्तानि पदानि भुवि कथमयथा भवंति अदत्तानि भवंति अतो यथा मृत्पाषाणेष्टकादिषु दत्ता
निपदानि भुवं न व्यभिचरंति तथा यत्किमपि विकारजातं॥

भा॰ द॰
उ॰
१२६

वदंतोवेदास्त्वामेवसर्व्वकारणंपरमार्थभूतंप्रतिपादयंतीत्यर्थः २ १५ द्रुहिणवह्निरवींद्रमुखाःमरुज्जगदिदं नभवेत्पृथ
गुत्थितं वहुमुखैरपिमंत्रगणैरजस्त्वमुरुमूर्तिरतोविनिगद्यसे २ त्वमेवसर्वं निगमगोचरइतिसतांप्रवृत्त्यादृ
ढयति इतिनवेति त्वमेवसर्व्वकारणत्वेनपरमार्थइतिहृत्वाभोः अधिपतेत्रिगुणमायामृगीनर्त्तक हृदयोः
विवेकिनस्तवाखिललोकमलक्षपणकथाऽमृताब्धिसकलजनवृजिननिरसनहेतुकीर्तिसुधासिंधुमवगाह्य
निषेव्यनतपंतीतितपांसिपापानिदुःखानिवाजहुः त्यक्तवंतः त्वदीयकथाश्रवणमात्रेणहृद्गापापत्यागस्त
दाकिमुवक्तव्यंयेपुनः स्वधामविधुताशयकालगुणाः स्वधाम्नास्वरूपस्फुरणेनैवविधुतास्त्यक्ताआशयाः

अतऋषयोदधुस्त्वयिमनोवचनाचरितंकथमयथाभवंतिभुविदत्तपदानिनृ
णां २ १५ इतिनवस्तु रयस्त्वअधिपतेखिललोकमलक्षपणकथाऽमृताब्धिमवगा
ह्यतपांसिजहुः किमुतपुनःस्वधामविधुताशयकालगुणाः परमभजंतियेपदमज
स्रसुखानुभवं ३ १६॥ गुणाः अंतःकरणधर्म्मारागादयः कालगुणाजरादयश्च येस्तेनथाहेपरमना
वाजस्रसुखानुभवं अखंडानंदानुभवंपदंस्वरूपंभजंति सेवंनेतथाभूतादुःखानित्यजंतीतितद्यथा पुष्करप
लाशमापोनश्लिष्यंतेएवमेवैविदिलापापंकर्म्मनश्लिष्यते नकर्म्मणालिष्यत्तेपापकेननतत्सुकृतदुष्कृतेविधुनु
ते एवंहवावनंतपतिकिमहंसाधुनाकरवंकिमहंपापमकरवमित्यादिश्रुतेरित्यर्थः ३ १६ सकलवेदगणेरि
तसद्गुणस्त्वमितिसर्व्वमनीषिजनारताः त्वयिसुभद्रगुणश्रवणादिभिस्तवपदस्मरणेनगतक्लमा॥३॥ ६ ॥

राम
१२६

असूर्यानामतेलोकाअंधेनतमसावृताः तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः तथाचचेदवेदीन्महतीविनष्टिः॥
किमिच्छन्कस्यकामायशरीरमनुसंचरेत्येतद्विदुरमृतास्तेभवंत्यथेतरेदुःखमेवोपयन्तीत्याद्याः श्रुतयः पूर्वंश्लो
कोक्तोभयविधभजनहीनात्रिंदंतिइतयद्दवेति असुभृतोनराः यदितेअनुविधाअनुविदधतीत्यनुविधाः अनुवर्ति
नोभक्ताः इतियावत्तर्हिस्युसंतिजीवंतिसफलजीवनाभवंति इतरथाहृतयइवभस्त्राइववृथाश्वासाइत्यर्थः नन्वभ
क्तानामपिकामादिफलमस्त्येवनकार्यकारणानुग्राहकत्वेनजीवनहेतोस्तवाभजने कृतघ्नानांतदपिनसिद्ध्येदित्या
शयेनाहमहदहमाद्यइति महानहंकारश्चआदिर्येषांतेयदनुग्रहतः यस्यानुप्रवेशेनलब्धसामर्थ्याः संतः अं
डंदेहंसमष्टिव्यष्टिरूपंसृष्टवंतः तत्रचपंचापिकोशानन्नमयादीनाविश्यतत्तदाकारः सन्यः चेतयतेसत्वंतदाहपुरु

इतयद्दवश्वसंत्यसुभृतोयदितेऽनुविधामहदहमाद्योऽण्डमसृजन्यदनुग्रह
तः पुरुषविधोऽन्वयोऽत्रचरमोऽन्नमयादिषुयः सदसतः परंत्वमथययदेष्ववशेषमृ
तं ४।१७॥

षविधइतिपुरुषस्यान्नमयादेर्विधेवविधाआकारोयस्यसः तथा ननुचिदेकरसस्यकथंतत्त
दाकारता अतआह अन्वयोऽत्रेति अत्रएष्वन्नमयादिष्वन्वेतीत्यन्वयः अतस्तत्तदाकार[illegible] एवंतर्हिसत्यत्वा
मसंगत्वंचकथंतत्राह चरमोन्नमयादिषुयइति अन्नमयादिषूपदिश्यमानेषुयश्चरमोब्रह्मपुच्छंप्रतिष्ठेतिपुच्छा
त्वेनोक्तः सत्वमितिसंबंधः ननुतथाप्यन्नमयादिष्वन्वितत्वेऽसंगत्वव्याहतिरेवतत्राहसदसतः परंत्वमथययदेष्व
शेषमृतमिति सदसतः स्थूलसूक्ष्मादन्नमयादेःपरंव्यतिरिक्तंतत्साक्षिभूतंअवशेषंअवशिष्यतइत्यवशेषमा
बाधंअथयअतएवऋतंसत्यं तर्हिकिमर्थंतेष्वन्वयउक्तः शाखाचंद्रवच्छुद्धस्वरूपोपलक्षणार्थंतथा॥ १८ ॥

हि स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिर इत्यादिना स्थूलसूक्ष्मक्रमेण पंचकोशानुपदिश्य तस्य पुरुषविधतामन्वयं च पुरुषविध इति पुनः पुनस्तदन्वितत्वेनालक्ष्य ब्रह्म पुच्छं प्रतिष्ठेति सर्वसाक्षिशुद्धस्वरूपनिरूपणमित्यनवद्यं ॥ ४ नरवपुः प्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः नरहरे न भजंति नृणामिदं दृतिवदुच्छ्वसितं विफलं ततः ॥ ५ एवं तावत्सर्वात्मके परमेश्वरे सर्वश्रुतिसमन्वयेन सद्भजनीयत्वमुक्त्वा अभक्तनिंदयं च तदेव दृढीकृत्येदानीमनवगाह्यमहिमनि प्रथमं तावदुपाध्यालंबनमुपासनमुदरं ब्रह्मेति शार्कराक्षा उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्माहैवैता इत ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत इत्याद्याः श्रुतयो विदधतीत्याह उदरमुपासत इति ऋषिवर्त्मसु ऋषीणां संप्रदायमार्गेषु ये कूर्पदृशस्ते उदरालंबनं मणिपूरकस्थं ब्रह्मोपासते ध्यायंतीति शार्कराक्षा इति श्रुतिपदस्य

उदरमुपासते य ऋषिवर्त्मसु कूर्प्पदृशः परिसरपद्धतिं हृदयमारुणयो दहरं ततउदगादनंत तव धाम शिरः परमं पुनरिह यत्समेत्य न पतंति कृतांतमुखे ॥१८॥

प्रतिपदं कूर्पदृश इति कूर्प्पं शर्करा रजो विद्यते दृक्षु अक्षिषु येषां ते तथा रजःपिहितदृष्टयः स्थूलदृष्टय इति यावत् उदरस्थहृदयापेक्षया स्थूलत्वात् यद्वा कूर्प्पेषु सूक्ष्मं सूक्ष्मदृश इत्यर्थः तदा हृदयस्थं सूक्ष्ममेवालक्ष्य तत्रवेशाय प्रथममुदरमुपासत इति भावः आरुणयस्तु साक्षाद्धृदयस्थं दहरं सूक्ष्ममेवोपासते हृदयविशेषणं परिसरपद्धतिमिति परितः सरंति प्रसर्प्पंतीति परिसरा नाड्यः तासां पद्धतिं मार्गं प्रसरणस्थानमित्यर्थः विशेषणस्य फलमाह तत इति ततो हृदयात् भो अनंत तव धाम उपलब्धिस्थानं सुषुम्नाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरः मूर्द्धानं प्रति उदगात् उदसर्पत् मूलाधाराद्वारभ्य हृदयमध्यात् ब्रह्मरंध्रं प्रत्युद्गतमित्यर्थः कथंभूतं धाम यत्समेत्य प्राप्य पुनरिह कृतांतमुखे मृत्युमुखे संसारे न पतंति

श्रितं चैकाहृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैकातयोर्द्ध्वमापन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवंतीति ५
१८ उदरादिषु यः पुंसां चिंतितो मुनिवर्त्मभिः हंति मृत्युभयं देवो हृद्गतं तमुपास्महे ५ नन्वीश्वरस्यापि तर्हि जीववत्
उदरहृदयादिसंबंधे तदनुप्रविष्टस्य च तारतम्ये सति केन विशेषेणोपास्यत्वमिती मामाशंकां परिहरंत आहुः एको
देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेत्याद्याः
श्रुतयः स्तुवंतीत्याह स्वकृतविचित्रयोनिष्विति स्वयं कृतासु उच्चनीचमध्यमासु योनिषु अभिव्यक्तिस्थानेषु कार्ये
षु देहादिषु हेतुतया उपादानतया प्रागेव विद्यमानत्वेन मुख्यप्रवेशा संभवाद्विशन्निव वर्तमानस्तारतमतानुना।

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्स्यनलवत् स्वकृतानु
कृतिः अथ वितथास्वमूष्ववितथं तव धाम समं विरजधियोऽन्वयंत्यभिविपण्यव ए
करसं ६ १९ स्वकृतपुरेष्वमीष्वबहिरंतरसंवरणं तव पुरुषं वदंत्यखिलशक्तिधृतो
ऽंशकृतं॥

धिकभावेन च कास्सि शोभसे अवभाससे स्वकृता योनीरनुकरोतीति स्वकृतानुकृतिः अनल
वत् अग्निर्यथा स्वतस्तारतम्यहीनोपि काष्ठानुसारेण तथा तथा प्रकाशते तद्वत् अथातो [illegible]यासु मिथ्याभूता
सु अमूषु योनिषु अवितथं सत्यं यतः सममविशेषं अतः सत्यं तव धाम स्वरूपं विरजधियो निर्मलमतयः अन्वयं
ति जानंति नुइति श्यत्युपदं वा अत्र हेतुः अभिविपण्यव इति अभितो विगतव्यवहाराः पणव्यवहार इत्यस्य रूपं पण्य
रिति ऐहिकामुष्मिकफलकर्मरहिता इत्यर्थः अविशेषत्वादेवैकरसं सन्मात्रमतस्तवोपाधिकृतनारतम्याभावादप्र
च्युतैश्वर्यस्योपास्यत्वमिति भावः ६।१९ स्वनिर्मितेषु कार्येषु तारतम्यविवर्जितं सर्वानुस्यूतसन्मात्रं भगवंतं भजामहे ६

८७
भा॰द॰
उ॰
१२९

अपिचकुतोन्वियमाशंकास्मात् भगवतोदेहाद्युपाधिष्ठानदोषप्रसंगइति यतोअविद्याकामकर्म्मभिः संसरतोजी।
वस्यापिभगवद्भावंलक्षणयावोधयंत्यस्तदोषंनिषेधयंति सयश्चायंपुरुषेयश्चासावादित्येसएकः तत् त्वमसीत्याद्याःश्रु
तयः ननुकथमयस्यात्मनःस्तुतिरियमीश्वरत्वेनक्रियते नतुतस्येश्वरत्वंवोध्य तेनैतद्युज्यतेयतस्तस्याश्रयस्यदेवेपराभक्ति
र्यथादेवेतथागुरौतस्यैतेकथिताह्यर्थाः प्रकाशंतेमहात्मनइत्याद्याः श्रुतयः कृतावतारस्यभगवतश्चरणभजनमुपायं
वदंतीत्याह स्वकृतपुरेष्विति स्वकर्म्मोपार्ज्जितेषुपुरेषुदेहेषु अमीषुनरादिषुभोक्तृत्वेनवर्त्तमानंपुरुषं अखिलशक्तिधृतः
सर्वेशक्त्याश्रयस्यपूर्णस्यतवांऽशकृतंवदंति अंशाइवांशाः कृतइवकृतः त्वद्रूपंवदंतीत्यर्थः ननुकार्य्यकारणसंवृत्तस्यकु
तएवंभूतत्वंतत्राह अवहिरंतरसंवरणमितिवहिःकार्य्यमंतरंकारणंवस्तुतस्तदावरणशून्यंतयोरसत्वादित्यर्थः इ

॥इतिनृगतिंविविच्यकवयोनिगमावपनंभवतउपासतेंघ्रिमभवंभुविविश्वसि
ताः ७ २० दुरवगमात्मतत्वनिगमायतवात्ततनोश्चरितमहामृताब्धिपरिवर्त्तप
रिश्रमणाः

तिएवंनृगतिंनुर्जीवस्यगतिंतत्वंविविच्यविशोध्यकवयः अस्मयेदंनप्राप्यतइतिजानंतः निगमा
वपनंनिगमोक्तकर्म्मणामावपनं आसमंतादुप्यतेऽस्मिन्नित्यावपनंक्षेत्रंसर्वकर्म्मार्प्पणविषयमित्यर्थः यत्रार्प्पिता
निकर्म्माणिमुक्तिफलंफलंतितंभवतोंघ्रिमभवंभवनिवर्त्तकंविश्वसिताःकृतविश्वासाः उपासतेऽर्चनवंदनादिभिः
सेवंतेभुवीतिमर्त्यलोकइदमेवोचितमितिदर्शयंति ७ २० त्वदंशस्यममेशानत्वन्मायाकृतवधनंत्वदंघ्रिसेवामा
दिश्यपरानंदनिवर्त्तय ७ भक्तिरल्पसाधनमितिवचनमनुचितमिवमन्वानोभक्तिंगुरूकरोतिदुरवगमेति भोईश्वरदु
रवगमंदुर्वोधंयदात्मतत्वंतस्यनिगमायज्ञापनायात्ततनोराविष्कृतमूर्त्तेश्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः॥ ८॥

रामः
१२९

चरितमेवमहामृताब्धिस्तस्मिन्परिवर्त्तो विगाहस्तेनपरिश्रमणाः परिवर्ज्जनार्थः श्रमणंश्रमः गतश्रमाइत्यर्थः अप
वर्गमपिकेचिन्नपरिलषंतिनेच्छंति कुतोन्यत् इंद्रपदादिकेचिदितिएवंभूताभक्तिरसिकाविरलाइतिदर्शयतिनकेः
वलमन्यन्नेच्छंतिकिंतुतेनैवसुखेनपूर्णाःसंतः पूर्वसिद्धंगृहादिसुखमप्युपेक्षंतइत्याह तवचरणसरोजहंसकुलसंग
विसृष्टगृहाइति तवचरणसरोजेहंसाइवरममाणायेभक्तास्तेषांकुलंतेनसंगस्तेनविसृष्टागृहायैस्तेतथाअनेनश्रवण
कीर्तनेदर्शितेमुक्तिश्चमुक्तेरप्याधिक्यंभक्तेर्दर्शयति यथाहयंसर्वेदेवानमंतिमुमुक्षवोब्रह्मवादिनश्चेतिव्याख्यातंच
सर्वज्ञैर्भाष्यकृद्भिः मुक्ताअपिलीलयाविग्रहंकृत्वाभजंतइति ॥ २१ त्वत्कथाऽमृतपाथोधौविहरंतोमहामुः

नपरिलषंतिकेचिदपवर्गमपीश्वरतेचरणसरोजहंसकुलसंगविसृष्टगृहाः ॥
२१ त्वदनुपथंकुलायमिदमात्मसुहृत्प्रियवच्चरतितथोन्मुखेत्वयिहितेप्रियआत्मनि ॥
च नवततरमंत्यहोअसदुपासनयात्महनोयदनुशयाभ्रमंत्युरुभयेकुशरीरभृतः ॥

॥ कुर्वंतिकृतिनः केचिच्चतुर्वर्गंतृणोपमं ॥ आराममस्यपश्यन्तिनतंपश्यतिकश्चननतंविदाथयइमाजना
नान्ययुष्माकमंतरंबभूवनीहारेणप्रावृत्ताजल्प्याचासुतृपउक्थशासश्चरंतीत्याद्याः श्रुतयः अनुक्रोशंत्यो
जगदात्मनीश्वरेरतिमुपदिशंतीत्याह त्वदनुपथमिति त्वदनुवर्तित्वत्सेवोपयिकमिदंकुलायंकोपृथिव्यांली
यतइतिकुलायंशरीरंआत्मसुहृत्प्रियवत् आत्माचसुहृच्चप्रियश्चतद्वच्चरतिस्वाधीनतयावर्ततइत्यर्थः तथापित्वयिउन्मु
खेहितेप्रियेआत्मनिच अप्यर्थेचकारः एवंभूतेसुतेमेअपित्वयिवतअहोकष्टंनरमंति नसख्यादिनाभजंतिअसदुपासन
यादेहाद्युपलालनेनआत्महनःप्रमादिनःकुतःयदनुशयाः ॥

भा॰द॰ उ॰ १२९

यस्मामसदुपासनायां अनुशयोवासनायेषांते कुशरीरभृतः संतः उरुभयेसंसारेभ्रमंतिपरिवर्त्तन्ते अतःआत्म
हनइतिभावः ॥ २२ तय्यात्मनिजगन्नाथेमन्मनोरमतान्विह कदाममेदृशंजन्ममानुषंसंभविष्यति ॥ इदा
नीमात्मावारेद्रष्टव्यः श्रोतव्योमंतव्योनिदिध्यासितव्यइत्याद्याः श्रुतयोध्यानमंगत्वेनोपदिशंतीत्याह निभृतमरु
न्मनोक्षदृढयोगयुजइतिमरुत्प्राणः मनश्च अक्षाणींद्रियाणि चनिभृतानिसंयमितानियैस्तेचते दृढंयोगंयु
जंतितेदृढयोगयुजस्तेतथाभूतामुनयोहृदियत्तत्वमुपासतेतदेवारयोपितवस्मरणाद्ययुःप्रापुः स्त्रियोपिका

२२ निभृतमरुन्मनोक्षदृढयोगयुजोहृदियन्मुनयउपासतेतदरयोऽपिययुःस्मरणा
त् स्त्रियउरगेंद्रभोगभुजदंडविषक्तधियोवयमपितेसमाःसमदृशोंघ्रिसरोजसुधाः
॥१०।२३॥

मतः उरगेंद्रभोगभुजदंडविषक्तधियः अहींद्रदेहसदृशयोर्भुजदंडयोर्विषक्ताधीर्यासांताः ॥ परिच्छिन्नाभ
दृष्टयः समदृशः सममपरिच्छिन्नंत्वांपश्यंत्योवयंश्रुत्यभिमानिन्योदेवताअपितेसमाएव कृपाविषय
तया अंघ्रिसरोजसुधाः अंघ्रिसरोजंसुष्ठुधारयंत्यः अयंभावः इत्थंभूतस्तवस्मरणानुभावः येयो।
गिनस्त्वांहृदयालंबनंउपासतेयाश्चवयंत्वांसमंपश्यामः याश्चस्त्रियः कामतः परिच्छिन्नंध्यायंतियेच
॥द्वेषेणसर्वानपितांस्त्वामेवप्रापयतीति ॥ १०॥ २३॥ ६ ॥ ७ ॥

राम १२९

चरणस्मरणंप्रेम्णातवदेवसुदुर्लभंयथाकथंचित्नृहरेममभूयादहर्निशं १० यतोवाचोनिवर्त्तन्तेअप्राप्यमन
सासह कोअद्धावेदकइह प्रावोचत् कुतआयाताकुतइयंविसृष्टिः अर्वाग्देवाअस्यविसर्जनेनाथाःको
वेदयतआबभूवअनेजदेकं मनसोजवीयोनैतद्देवाआप्नुवन्पूर्वमर्शत् तद्धावतोऽन्यानत्येति तिष्ठत्तस्मि
न्नपोमातरिश्वादधातीत्याद्याः श्रुतयः भगवत्तत्त्वंदुर्ज्ञेयंवदन्त्योभक्तिमेवोररीकृत्यस्तुवंतीत्याह कइहनुवेदे॥
ति वतअहोभगवनू इहजगति अग्रसरंपूर्वसिद्धंत्वां अवरजन्मलयः अर्वाचीनोत्पत्तिविनाशवान् कोनुपु
मान्वेदजानाति ईश्वरस्यपूर्वसिद्धत्वन्स्यचार्वाचीनत्वेप्रमाणंवदनज्ञानकारणीभावमाह यतउदगादितिय
तः त्वत्तः ऋषिर्ब्रह्माउत्पन्नः यंब्रह्माणमनुउभयेआध्यात्मिकाआधिदैविकादेवगणाउत्पन्नाः ततोऽप्यर्वा॥

कइहनुवेदबतावरजन्मलयोऽग्रसरंयतउदगादृषिर्यमनुदेवगणाउभये तर्हि
नसन्नचासदुभयंनचकालजवः किमपिनतत्रशास्त्रमवकृष्यशयीतयदा॥
((११।२४॥

चीनाः सर्वेयदातुभवान्सर्वमवकृष्यउपसंहृत्यशयीततर्हितदाअनुशायिनांजीवानांज्ञा
नसाधनंनास्ति यतस्तदानसत्स्थूलंआकाशादिनचासत्सूक्ष्मंमहदादि नचउभयंसदसद्भ्यामारब्धंशरीरं
नचकालजवः तन्निमित्तभूतंकालवैषम्यंएवंसतितत्रतदानकिमपिइन्द्रियप्राणाद्यपिनचज्ञापकंशास्त्रमपि
अयमभिप्रायः अर्वाक्सृष्टिगतानांदेहाद्युपाधिकृतान्तराणांकालवशेनचमलिनसत्वानांनतावत्भगवत॥
ज्ञानसामर्थ्यंनयाचश्रुतिः नतंविदाथयइमाजजानान्यद्युष्माकमंतरंबभूवेत्याद्याः यदातुप्रलयसमयेनवर्द्धं
तरमस्तितदापिसाधनाभावात्नभगवज्ज्ञानसामर्थ्यं अतस्त्वदेकशरणतयाश्रवणकीर्त्तनादिभक्तिरेवसुकरे

८७
भा०द०
उ०
१२०

क्वाहं वुद्ध्यादिसंरुद्धः क्व च भूमन्महस्तव दीनबंधो दयासिंधो भक्तिं मे नृहरे दिश ११ इतोपि ज्ञानं न सुशकम् उपदिश्य

तामपि भ्रमबाहुल्यादित्याहुः जनिमसत इति असतो जगतो जनिमुत्पत्तिं ये वैशेषिकादयो वदंति असत एव ब्रह्मत्वसं

पत्तिं ये च पानं जलादयः सत एवैकविंशतिप्रकारस्य दुःखस्य नाशं मोक्षं वदंति ये नैयायिकाः उत च पिये च सांख्या द

य आत्मनि भिदां भेदं च ये मीमांसकाः विपणं कर्म्मफलव्यवहारमृतं सत्यं स्मरंति वदंति ते सर्वे आरूपितैरारोपितैर्भ्रमैरे

वोपदिशंति न तत्त्वदृष्ट्या सदेव सोम्येदमग्र आसीत् ब्रह्मैव सन् ब्रह्माप्येति अनीशया शोचति मुह्यमानः अविद्यायामंतरे

वर्तमानाः स्वयं धीराः पंडितं मन्यमानाः जंघन्यमाना अपि यन्ति मूढाः अंधेनैव नीयमानाः यथांधाः एकमेवाद्वितीयं ब्रह्म

जनिमसतः सतो मृतिमुतात्मनि ये च भिदां विपणमृतं स्मरंत्युपदिशंति त आरुपितैः

त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयि न ततः परत्र स भवेदवबोधरसे १२ २५

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात् सदभिमृशंत्यशेषमिदमात्मतयात्मविदः॥६

एक एव हि भूतात्मा भूते भूते व्यवस्थितः एकधा बहुधा चैव दृश्यते जलचंद्रवदित्यादिश्रुतिविरोधात् किंच वस्तुतः पु

रुषस्य त्रिगुणमयत्वे सर्वमिदं संगच्छेत न तु तदस्तीत्याह त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयीति त्रिगुणमयः

पुमानित्यनेन नहेतुनाया भिदा उपलक्षणमेतद्भिदादिसा यस्मात्त्वयि विषये अबोधकृता त्वद्विषया ज्ञानविजृंभिता तर्हि किं

मज्ञानमस्ति वस्तुतः पुंसि नैवेत्याह ततः अबोधात् परे असंगे अवबोधरसे ज्ञानघने सः अबोधो न भवेत् न संभवतीत्यर्थः

१२ २५ मिथ्यातर्क्कसुकर्क्कशेरितमहावादांधकारांतरे भ्राम्यन्मंदमतेरमंदमहिमंस्त्वत् ज्ञानवर्त्मास्फुटं श्रीमन्माधववा

मन त्रिनयन श्रीशंकर श्रीपते गोविंदेति मुदा वदन्मधुपते मुक्तः कदा स्यामहं १२ ननु॥ ॥

रामः
१२०

यद्यसन्नोत्पद्यते यदि च त्रिगुणामयः पुरुषो न भवति तर्हीदं प्रपंचजातं पुरुषं च पृथग्नास्तीत्युक्तं स्यात्कथं तर्हि तयोः
सत्वेन प्रतीतिरत आह सदिव मन इति मनः मनोमात्रविलसितमिदं त्रिवृत्त्रिगुणात्मकं प्रपंचजातमसदेव सदिव विभा
ति कथमिति चेत्तत्राह त्वयीति त्वय्यधिष्ठाने अधिष्ठानसत्तया सद्रूप्रतीयत इत्यर्थः न केवलमिदंकारास्पदं किं त्वा
मनुज्ञातमनुजः पुरुषः अभिविधावाकारः पुरुषमभिव्याप्येति पुरुषस्यापि पृथक्सत्वप्रतीतिर्मनोमात्रविलसितैव
तथा च श्रुतिः असतोधि मनोसृजत मनः प्रजापतिमसृजत प्रजापतिः प्रजा असृजत तद्वा इदं मनस्येव परमं प्रतिष्ठितं य
दिदं किंचेति नन्वात्मविदामपि विश्वं सदेव स्फुरत्यतः कथमसत्यादत आह सदभिमृशंतीति आत्मवि ॥

नहि विकृतिं त्यजंति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयावसितं
१३ २६ तव परि ये चरंत्यखिलसत्वनिकेततया त उत पदाक्रमंत्यविगणय्य शिरो निर्ऋतेः

दस्त्वशेषमिदं भोक्तृभोग्यात्मकं विश्वमात्मतयैव सदभिमृशंति सदिति जानंति आत्मकार्य्यत्वान्न पृथगित्यर्थः
तथा हि यदुपादानकं यत्कार्य्यं भवति तत्तेनैव रूपेण प्रतीयते उपादीयते चेति लोकाचारेण दर्शयति नहि विकृतिमि
ति कनकस्य विकृतिं कुंडलादिकं कनकार्थिनो न हि त्यजंति अत्र हेतुः तदात्मतया कनकरूपत्वेनेत्यर्थः अतः स्वकृ
तमिदं विश्वमनुप्रविष्टं च पुरुषरूपमात्मतयैवावसितं निश्चितं १३ २६ यत्सत्वतः सदाभाति जगदेतदसत्स्वतः सदा
भासमसत्यस्मिन् भगवंतं भजामतं १३ ननु सत्यं ज्ञानमनंतं ब्रह्म नेह नानास्ति किंचन मृत्योः स मृत्युमाप्नोति य इह
नानेव पश्यतीत्यादिश्रुतिभिरेवंभूतस्य भगवतः प्रतिपादितात्तज्ज्ञानं सुकरमेवेति कृतं भक्त्यात आह तव परि ये चरं

८१
भा०द०
उ०
१३१

त्वेतिकर्म्मणि षष्ठी त्वां ये परिचरंति छंदसि व्यवहिताश्चेति यच्छब्देन व्यवधानमदोषः केन रूपेणाखिलसत्वनिकेत
तया अखिलानि सत्वानि निकेतो यस्य स तथा तस्य भावः तत्ता तया सर्वभूतावासतयेत्यर्थः उत एव अविगणय्य तिरस्कृ
त्य त एव निर्ऋतेर्मृत्योः शिरः मूर्द्धानं पदा पादेनाक्रमंति मृत्योर्मूर्द्ध्नि पदं दधतीति तेन तरंति मुच्यंत इत्यर्थः ये पुनर्विमुखाः
अभक्तास्तान् गिरा वाचा पशूनिव विबुधान् विदुषोऽपि परिवयसे बध्नासि कृतं त्वयि कृतसौहृदाः कृतं सौहृदं प्रेम यैस्
ते खलु निश्चितं पुनंति पवित्रयंति आत्मानं अन्यानपि इति शेषः नेतरे तथा च श्रुतिः तस्य वाकं तिनीमानि दामानि तद
स्येदं वाचातन्त्या नामभि दामभिः सर्व्वं सितमिति अयमभिप्रायः सत्यमेवंभूतमात्मानं श्रुतयः प्रतिपादयंति
तत्र च यद्यपि वस्तुनोऽपरोक्षत्वादपरोक्षमेव ज्ञानमुत्पद्यते तथाप्यसंभावनाविपरीतभावनातिरस्कृतत्वान्मलिनचि

परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पुनंति न ये विमुखाः

१४ २७ त्वमकरणः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहंति समदंत्यजयाऽनिमिषाः

त्तेषु परोक्षमिव भवतीति नापरोक्षसंसारभ्रमनिवृत्तिसमर्थं भगवत्परिचर्यया तु सम्यगमलचित्तानां तत्प्र
सादेन लब्धापरोक्षज्ञानानामयत्नत एव कृतकलिनो मोक्ष इति तथा च श्रुतयः देहांते देवः परं ब्रह्म तारकं व्याचष्टे यमे
वैष वृणुते तेन लभ्यः यस्य देवे परा भक्तिरित्यादयः १४ २७ तपंतु तापैः प्रपतंतु पर्वतादटंतु तीर्थानि पठंतु चागमान् य
जंतु यागैर्विवदंतु वादैर्हरिं विना नैव मृतिं तरंति १४ ननु यद्यखिलसत्वनिकेतत्वेन भगवतः सेव्यत्वमुच्यते तर्हि तत्का
रणसंबंधात्कर्तृत्वभोक्तृत्वे प्रसज्येयातां न वस्तुतस्तथात्वमिति चेत्तर्हि जीवानामपि तत्तुल्यमिति केन विशेषेण
पुनः सेव्यसेवकत्वमिति तामाशंकां परिहरंत्यः अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः स वेत्ति वे

येन च तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणमित्याद्याः श्रुतयः स्तुवंतीत्याह त्वमकरण इति करणसंबंधरहित एवाखिल
कारकशक्तिधरः अखिलानां प्राणिनां यानि कारकाणि करणानि इंद्रियाणि तेषां शक्तीर्धारयति प्रवर्त्तयतीति तथा
कुतः स्वराट् यतः स्वेनैव राजते दीप्यते न हि स्वतः सिद्धज्ञानशक्तेरिंद्रियापेक्षेत्यर्थः अनतस्तव बलिमुद्वहंति पूजां कुर्वंती
ति अजया अविद्यया सहितास्तया वृता इत्यर्थः अनिमिषा देवा इंद्रादयः तत्पूज्या विश्वसृजो ब्रह्मादयोपि यथा स
स्त्रीका एव किंकराः स्वामिनं सेवंते तथाऽविद्यायुक्ता देवादयस्त्वामिति लोकोक्तिः समदंति च मनुष्यैर्दत्तं हव्यकव्या
दिलक्षणं बलिं भक्षयंति अत्र दृष्टांतः वर्षभुजोखिलक्षितिपतेरिवेति यथा वर्षभुजः खंडमंडलपतयोऽखिलक्षि
तिपतेर्म्महामंडलेश्वरस्य स्वप्रजादत्तं बलिं भुंजो बलिमुद्वहंति तद्वदिति कथं बलिमुद्वहंति तदाह विदधति यत्र येत्व

वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः १५
२८ स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्त ततः ॥

धिकृता भवतश्चकिताः इति त्वत्तो भीताः संतो यस्मिन् कर्म्मणि ये नियुक्तास्तेन तत्कुर्वंतीति त्वदाज्ञापालनमेव ब
लिमुद्वहनमित्यर्थः तथा च श्रुतिः भीषाऽस्माद्वातः पवते भीषोदेति सूर्य्यः भीषाऽस्मादग्निश्चेंद्रश्च मृत्युर्धावति पं
चम इति १५ २८ अनिंद्रियोपि यो देवः सर्वकारकशक्तिधृक् सर्वज्ञः सर्वकर्त्ता च सर्वसेव्यं नमामि तं १५ तदेवं कर
णप्रवर्त्तकमीश्वरं करणपरतंत्राज्जना भजंतीत्युक्तं न केवलमियदेव कारणं तत उत्पन्नत्वेनापि तत्परतंत्रत्वादिति वदंति
यथाऽग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत
आत्मनो व्युच्चरंतीत्यादिश्रुतय इत्याह स्थिरचरजातयः [illegible] हि विमुक्त नित्यमुक्त यदि त्वं अजया मायया विहरः ॥

२७
भा०द०
उ०
१३२

विहारः क्रीडा भवति तदा स्थिरचरजातयः स्थिराश्च चराश्च जातयः जात्या लिंगिता देहा येषां ते जीवाः स्युः भवेयुः कथं भू
तस्य तव ततः अजातः परस्य दूरे वर्तमानस्याऽसंगस्येत्यर्थः कथं विहारः उदीक्षया ईक्षणलेशेन ननु मखिलीनानां जी
वानां कथं जन्म स्यात्तत्राह उत्थनिमित्तयुज इति ईक्षयैव उत्थितानि आविर्भूतानि निमित्तानि कर्माणि तद्युक्तानि लिंग
शरीराणि वा तैर्युज्यंत इति तथा ननु किंनिमित्तोत्थानेन मदिच्छयैव आविर्भवंतु न त्वयि वैषम्याभावात् विषमसृष्टे
स्योगादित्याह परमस्येति तव परमस्य उत्तमस्य परमकारुणिकस्य वियत इव आकाशदृशस्य समस्येत्यर्थः कश्चिदप
रः स्वीयः परोऽस्वीयश्च न भवेत् न संभवतीत्यर्थः असद्वा इदमग्र आसीत्ततो वै सदजायतेत्यादिश्रुत्या शून्यपूर्वक

नहि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवापदस्य तव शून्यतुलां दधतः २६ २९ अ
परिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा अजनि
च यन्मयं तदविमुच्य नियंतृ भवेत्सममनुजानतां यदमतं मतदुष्टतया २७ ३०॥

॥ त्वमिव प्र
तीयनेतदर्थं पुनर्विशिनष्टि शून्यतुलां दधतः शून्यसाम्यं भजतः तदेव दर्शयितुं पुनर्विशिनष्टि अपदस्येति न पद्य
त इत्यपदः तस्य वाङ्मनसयोरगोचरस्येत्यर्थः २६ २९ त्वदीक्षणवशक्षोभमायावोधितकर्मभिः जातान्संसरतः
खिन्नान्नृहरे पाहि नः पितः २६ एवं तावत्परमात्मनः सकाशात् अविद्याकृतकार्योपाधयस्तदंशा एव जीवा जाताः
संसरंतो भजंतीत्युक्तं तत्र यद्येकाविद्या तदा जीवस्याप्येकत्वादेकमुक्तौ सर्वमुक्तिप्रसंगः अथ नानाऽविद्यास्तर्हि त॰
स्य एवांशांतरेण संसारानपगमादनिर्मोक्ष इत्यादितर्कबलेन वस्तुत एव नानात्मानः तत्र च तेषामणुत्वे देहव्यापिचै
तन्यं न स्यात् देहपरिमाणत्वे च मध्यमपरिमाणानां सावयवत्वेनानित्यत्वं स्यात् अतः सर्वगता नित्याश्चेति केचनम

तत्र न तावदुक्तदोषप्रसंगः अविद्याभेदेन तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्थासंभवात् ईश्वरस्य तु न केनापि अंशेन संसारशंकेत्युक्तमेव प्रसिद्धं चात्मैक्यं सर्व्वश्रुतिषु किंचेमं पक्षं मतत्र्यामिब्राह्मणमपि न सहत इत्याह अपरिमिता इति वस्तुत एवानंताः ध्रुवास्तेनैव रूपेण नित्याः सर्व्वगताश्च तनुभृतो जीवा यदि स्युस्तर्हि तेषां समत्वात् शास्यता न घटत इति कृत्वा हे ध्रुव नियमो नियमनं त्वया न स्यात् इतरथा तु घटेत इति कथं यन्मयं उपाधितो यद्विकारः आयं यज्जीवाख्यं अजनि जातं ततस्तस्य विकारस्य नियंतृ नियामकं भवेत् अविमुच्य कारणतया अपरित्यज्य किंतत् सममनुस्मृतं यत् ननु किं यतच्छब्दैर्ज्ञायते चेदुच्यतां इदं तदिति अत आह अनुजानतां यदमतमिति जानीम इति वदतां यदमतम विज्ञातम्प्रायं अविषयत्वात् तथा च श्रुतिः यस्यामतं तस्य मतं मतं यस्य न वेद सः अविज्ञातं विजा

न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवंत्यसुभृतो जलबुद्बुदवत् ॥ १ ॥

नतां विज्ञातमविजानतां अवचनेनैव ब्रह्मोवाच सह तूष्णीं बभूवेत्यादि किंच मतस्य ज्ञातस्य दुष्टतया दोषश्रवणात् तथा च श्रुतिः यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेष्विरित्यादि तस्माद्यत्तच्छब्दाऽवद्योत्यमतर्क्यं किमपि सर्व्वानुस्यूतत्वेन सममं नियंतृ भवेत् इत्यर्थः १० ३० अतएवेतासर्व्वलोकस्य गीतः। श्रुत्या युक्त्याचैवमेवावमेयः यः सर्व्वज्ञः सर्वशक्तिर्नृसिंहः श्रीमंतं तं चेतसैवावलंबे १० ननु यदि च परमात्मनो जीवा जायंत इति नियंतृनियम्यभाव उच्यते तथा सति जीवानामनित्यत्वप्रसंगेन प्रतिदिनं कृतनाशाऽकृताभ्यागमप्रसंगः स्यात् किंच तदा मोक्षो नाम जीवस्य स्वरूपहानिरेव स्यात् नचैतद्युक्तं स्वप्रकाशानंदात्मनोऽविद्याकृतानर्थनिवृत्तिमात्रस्य मोक्षत्वाभ्युपगमादित्याशंक्योपाधिजन्मनैव जीवानां जन्म उच्यते न स्वतोऽघटनादित्याह न घटत इति॥

तत्रकिंप्रकृतेर्जीवरूपेणोद्भवःस्यात् पुरुषस्यवाउभयोर्वा आद्येजीवानांजडत्वापत्तिःद्वितीयेपुरुषस्यविकारित्वप्रसं
गःअतएवनतृतीयइत्याशयेनोक्तं प्रकृतिपुरुषयोरुद्भवोनघटतइतिश्रुत्याऽजत्वप्रतिपादनादपीत्याह अजयोरितिन
याचश्रुतिःअजामेकांलोहितशुक्लकृष्णांवह्वीःप्रजाःजनयंतीस्वरूपांअजोह्येकोजुषमाणोऽनुशेतेजहात्येनांभुक्तभो
गामजोन्यइति उभययुजातुभवंतिउभयंचतत्तुज्यतइति उभययुक्संवद्धंपरस्पराध्यस्तमितियावत् तेनअसुभृतःप्रा
णाद्युपाधयोजीवाजायंतइत्यर्थः जलवुद्बुदवदिति यथाकेवलेनानिलेनसलिलेनवाजलवुद्बुदानभवंतिकिंतुमिलि
ताभ्यांतद्वत् तत्रचयथाऽनिलोनिमित्तंजलमुपादानं एवमत्रापिप्रकृतिर्निमित्तंपुरुषउपादानं तस्माद्वाएतस्मादात्मन
आकाशःसंभूतः सोऽकामयतवहुस्यांप्रजायेयेति यथाग्नेःक्षुद्राविस्फुलिंगाःव्युच्चरंत्येवमेवास्मादात्मनःसर्वेप्रा

त्वयितइमेततोविविधनामगुणैःपरमेसरितइवार्णवेमधुनिलिल्युरशेषरसाः१८।३१

णाःसर्वेलोकाःसर्वेदेवाःसर्वाणिभूतानिसर्वएवआत्मानोव्युच्चरंतीत्यादिषुश्रुतिषुचेतनाचेतनप्रपंचस्यपरमात्मो
पादानत्वश्रवणात् नचविकारित्वंपरिणामानंगीकारात्केचित्तुनःपरिणाममंगीकृत्यात्मनोविकारभियाविपरीतं।
निमित्तोपादानभावमिच्छंति सर्वथातावत्प्रकृतिपुरुषैक्याद्भवतीतिसिद्धमतदेकमेवाद्वितीयंब्रह्मअजामेकांअवि
नाशीवाअरेयमात्मेत्यादिश्रुतिवलादुत्पत्तिश्रवणाच्चजीवानामौपाधिकमेवजन्मनस्वतइत्युक्तंउपाधिलयेनपरमात्म
निपुनर्लयश्रवणात् अपिनवास्तवंजन्मेत्याह त्वयितइति त्वयिकारणात्मनितइमेजीवास्ततइति यतोनवास्तवंज
न्मतस्माद्विविधनामगुणैरनेकप्रकारकार्योपाधिभिःसहनिलिल्युःलीनावभूवुःतत्रसुषुप्तिप्रलययोर्मधुन्यशेषरसा
इवलीयंतेयथामधुनिसकलकुसुमरसाविशेषतःअनुपलक्ष्यमाणाअपिसामान्येनोपलक्ष्यंतेएवंस्वापादौविशेषमात्र

सामान्यतो वर्त्तते मुक्तौतु कारणस्यापि लयात् त्वयि परमे निरुपाधौ सरित इवार्णवे लीयंत इति विवेकः तथाच श्रुतयः यथा सौम्य मधु मधुकृतो मधु निस्तिष्ठंति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां गमयंति ते यथा न तत्र विवेकं लभंति अमुष्याहं वृक्षस्य रसोस्म्यमुष्याहं वृक्षस्य रसोस्मीत्येवमेव खलु सौम्येमाः सर्व्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति यथा नद्यः स्यंदमानाः समुद्रेऽस्तं गच्छंति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमित्याद्याः १९ ३१ यस्मिन्नुद्यद्विलयमपि यद्भाति विश्वं लयादौ जीवोपेतं गुरुकरुणया केवला— त्मावबोधे अत्यंतांतं व्रजति सह सा सिंधुवत् सिंधुमध्ये मध्ये चित्तं त्रिभुवनगुरुं भावयेतं नृसिंहं १८ ननु एवं तावत्परमेश्वरात् जीवा जायंते तद्दर्शनेन च कर्म्माणि कुर्व्वंति पुनस्तत्र लीयंत इति संसारचक्रे परिभ्रमणमुक्तं इदानीं तन्निवृत्तये परीत्य भूतानि परीत्य लो

नृषु तव मायया भ्रममीष्ववगत्य भृशं त्वयि सुधियो भवे दधति भावमनुप्रभवं कथमनुवर्त्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयं १९ ३३ ॥ ६

कान् परीत्य सर्व्वाः प्रदिशो दिशश्च उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश इत्याद्या भगवदनुवृत्तिं विदधतीत्याह नृषु नवेति नृषु जीवेष्वमीषु तव मायया भ्रमं मुक्तलक्षणमवगत्य ज्ञात्वा सुधियः भृशं त्वयि अभवे भवनिवर्तके भावं स्वभावमनुवृत्तिं दधति कुर्व्वंति कीदृशं भ्रमम् अनुप्रभवं अन्वनुप्रभवो यस्मिंस्तं भ्रमं ततः किं अत आह कथमिति अनुवर्तंतां अनुवर्तमानानां त्वामेव शरणं भजतां भवभयं संसारभयं कथं भवेत् न कथंचिदपीत्यर्थः कुतः यद्यस्मात् तव भ्रुकुटिः भ्रूभंगरूपस्त्रिणेमिस्त्रिसो नेमय इवावच्छेदाः शीतोष्णवर्षाकाला यस्य संवत्सरात्मकस्य कालस्य सः अभवच्छरणेषु न भवान्छरणं रक्षिता येषां तेष्वेव भयं जन्ममरणादिलक्षणं सृजति करोति अत एवंभूतं संसारमाकलय्य तन्निवृत्तये

भ० २

श्रीधरीयायां टीकायां ८७ ॥ ९६ ॥

७४
भा०द०
३०
१३४

संसारचक्रक्रकचैर्विदीर्णमुदीर्णनानाभवतापतप्तं कथंचिदापन्नमिहप्रपन्नंत्वामुद्धरश्रीनृहरेनृलोकं ३२ सचा
भगवतिभावोमनोनियमेसतिभवतिसोपिगुरूपसदनादितिगुरूपसदनंविदधतितद्विज्ञानार्थंसद्गुरुमेवाभिगच्छेत्स
मित्पाणिःश्रोत्रियंब्रह्मनिष्ठं आचार्य्यवान्पुरुषोवेदनैषातर्केणमतिरपनेयाप्रोक्तान्येनैवसुज्ञानायप्रेष्ठेत्याद्याः श्रुतय
इत्याह विजितहृषीकवायुभिरितिविजितानिहृषीकाणींद्रियाणिवायुश्चप्राणोयैस्तैरपिअदांतमनस्तुरगं अदांतमद
मितंमनएवतुरगः दुर्द्दमत्वसाम्यात् तंयेयंतुनियंतुंयतंतिप्रयतंतेअतिलोलमतिचंचलंगुरोश्चरणंसमवहायअना
श्रित्यतेउपायेषुखिद्यंतेक्लिश्यंतीत्युपायखिदः संतः व्यसनशतान्विताः बहुव्यसनाकुलाइह संसारसमुद्रेसंतितिष्ठं

विजितहृषीकवायुभिरदांतमनस्तुरंगंयइहयतंतियंतुमतिलोलमुपायखिदः व्य
सनशतान्विताःसमवहायगुरोश्चरणंवणिजइवाजसंत्यकृतकर्णधराजलधौ २०
३३ स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयिसतिकिंनृणांश्रयतआत्मनिसर्वरसे

ति दुःखमेवप्राप्नुवंतीत्यर्थः हेअज अकृतकर्णधराअस्वीकृतनाविकावणिजोयथातद्वत् उक्तंचनृदेहमाद्यंसुलभं
सुदुर्लभंप्लवंसुकल्पंगुरु। कर्णधारंमयानुकूलेननभस्वतेरितंपुमान्भवाब्धिंनतरेत्सआत्महाप्राकृतैः संस्कृतैश्चैवग
द्यपद्याक्षरैस्तथा देशभाषादिभिःशिष्यंबोधयेत्सगुरुःस्मृतः गुरुणोपदर्शितभगवद्भजनसुखानुभूतौतुस्वतएवमनो।
निश्चलंभवतिनान्यथेतिभावः २० ३३ यदापरानंदगुरोभवत्पदेपदंमनोमेभगवँल्लभेत तदानिरस्ताखिलसाध
नश्रमः श्रयेयसौख्यंभवतःकृपातः २० परीत्यलोकान् कर्मचितान्ब्राह्मणोनिर्वेदमायात् नास्त्यऽकृतःकृतेनत
था यदासर्वेप्रमुच्यंतेकामायेऽस्यहृदिस्थिताः अथमर्त्योमृतोभवत्यत्रब्रह्मसमश्नुतइत्याद्यावैराग्यमंगंविदधतीत्याह

राम:
१३४

स्वजनसुतेतिश्रात्मादेहः धामगृहं श्रसुः प्राणः स्वजनादिभिः किंसर्वरसेसर्वेरसाः सुखानिविद्यंतेयस्मिन्तस्मिन्त्व
यिपरमानंदेएतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेःश्रयतः त्वांसेवमानस्यपुंसः आत्मनिसतिन्नृणांतु
च्छैरेतैः किंकउपयोगइतिसत्सत्यंपरमार्थसुखमजानतांश्रतस्वमिथुनतः स्त्रियामिथुनीभूयरतयेमायासुखायचर
तांप्रवर्तमानानांकर्म्मणिषष्ठीश्रजानतश्चरतःपुरुषान्कोनुश्रर्थः सुखयतिश्रानंदयतिनकोऽपीत्यर्थः इहसंसारे
कथंभूतेस्वविहतेस्वतएवनश्वरेस्वनिरस्तभगेस्वतएवगतसारे पाठांतरेतुकोन्वित्यस्यैतद्विशेषणद्वयं श्रतस्त्वद्भज
नमेवोचितमित्यर्थः २१ ३४ भजतोहिभवान्साक्षात्परमानंदचिद्घनः आत्मैवकिमतःकार्यंतुच्छदारसुतादिभिः २१
एवंगुरूपदेशेनतत्वमवगम्यसारासारविवेकेनचसर्वतोनिर्विघ्नंदेवमहत्संगेनोपपत्तिभिः सम्यगवधारयितुंनी।

इतिसदजानतांमिथुनतोरतयेचरतांसुखयतिकोऽन्विहस्वविहतेस्वनिरस्तभगे २१
३५ भुविपुरुपुण्यतीर्थसदनान्यृषयोविमदास्तउतभवत्पदांबुजहृदोऽघभिदंघ्रिजलाः

र्थसदनानिमुनयः पर्यटंतीतिश्रोतव्योमंतव्य इत्यादिश्रुत्यर्थमाह भुविपुरुपुण्यतीर्थसदनानीति तेउक्तलक्ष
णाः ऋषयोविमदाः निरहंकाराःयतोभवत्पदांबुजहृदः भवतःपदांबुजंहृदियेषांते श्रतःस्वयमेवश्रघभिदंघ्रिज
लाः श्रघभिदंघ्रिजलंयेषांतेउतश्रपि तथाविधाश्रपिपुरूणिवहूनिपुण्यानितीर्थानिसदनानिचक्षेत्राणितान्ये
वोपासतेसेवंतेप्रायस्तत्रैवमहत्संगोभवतीति श्रथवापुरुश्रधिकंभगवद्भजनलक्षणंपुण्यंयेषांतानिचतानितीर्था
न्येवगुरवः महांतइत्यर्थः तेषांसदनानिश्राश्रमान् यथाहामरसिंहः निपानागमयोस्तीर्थमृषिजुष्टेजलेगुरावि
ति नपुनः पुरुषसारहरावसथान्नुपासते पुरुषाणांसारंविवेकस्थैर्यधैर्यक्षमाशांतिप्रमुखंहरंतीतितेचतेश्रा

दधतिसकृत्मनस्त्वयियआत्मनिनित्यसुखइति सकृदपित्वयियेमनोदधतितेपिगृहाद्यासक्तानभवंति किंपुनरेवंभू
तादृत्यर्थः २२ ३५ मुंचत्त्यंगतदंगसंगमनिशंत्वामेवसंचिंतयन्संतः संतियतोयतोगतमदास्तानाश्रमानादसन् नित्यं
तन्सुखपंकजाद्विगलितत्वत्सुरायगाथामृतस्रोतःसंप्लवसंप्लुतोनरहरेनस्यामहंदेहभृत २२ ३५ नन्वाम्नायस्यक्रिया
र्थत्वादानर्थक्यमतदर्थानां तद्भूतानांक्रियार्थेनसमन्वयइति तत्रतत्रजैमिनिनावेदस्यक्रियापरत्वाभिधानादु
पनिषदामपितदेवयुक्तं यथोक्तंतंत्रवार्त्तिककृता एतेनक्रत्वर्थकर्त्तृप्रतिपादनेनोपनिषदांनैराकांक्ष्यंव्याख्या
तमिति नएकमेवाद्वितीयंब्रह्मविज्ञानमानंदंब्रह्म अचक्षुरश्रोत्रमित्येवंतद्विपरीतात्मप्रतिपादनान्नह्यद्विती
यपरमानंदरूपस्यकर्म्मांगत्वंप्रयुज्यते अननुमतंचैतद्वार्त्तिककृतः कथं सर्व्वत्रैवहिविज्ञानंसंस्कारत्वेनगम्यते

दधतिसकृन्मनस्त्वयियआत्मनिनित्यसुखेनपुनरुपासतेपुरुषसारहरावसथान् ॥
२२ ३५ सतइदमुत्थितंसदितिचेन्ननुतर्कहतंव्यभिचरतिक्वचक्वचमृषानतथोभययु

परांगंचात्मविज्ञानादन्यत्रेत्यवधार्य्यतामितितेनैवोक्तत्वात् एतदर्थमेवमननायमुनयः पर्य्यटंतीत्युक्तं तत्र
तावद्द्वैतस्यसत्यत्वेभवेदप्येवंतदेवतुनसंभवतीतिप्रश्नोत्तराभ्यांमननेनतत्वावधारणप्रकारमाह सतइदमुत्थितंस
दितिचेदितिइदंविश्वंधर्म्मिसदितिसाध्योधर्मः सतउत्पन्नत्वात्हेतुः यद्यत उत्पन्नंततदात्मकमेवदृष्टं यथाकनका
दुत्पन्नंकुंडलादितदात्मंतद्वदिति तत्रयदिसदभेदः साध्यतेतदाऽपादानत्वनिर्द्देशेनैवभेदप्रतीतेर्विरुद्धोहेतुरित्या
ह ननुतर्कहतमिति ननुनाभेदंसाधयामः किंतुतदुत्पन्नत्वेनकुंडलादिवद्भेदंप्रतिषेधयामः तत्रअभेदएवसा
दित्याशंक्यानैकांतिकत्वेनदूषयति व्यभिचरतिक्वचेति पितृपुत्रादिषुमुद्गरघटप्रध्वंसादिषुचनतथादर्शनादितिभावः

ननु तदुत्पन्नत्वं नाम तदुपादानत्वं न तु तन्निमित्तत्वं अतो नानैकांतिकत्वमित्याशंक्य दूषयति क्वच मृषेति गुणोपादान
स्यापि फणिनो न गुणत्वं किंतु मिथ्यात्वं अन्यथा कुंडलादिवद्बाधप्रसंगात् अतः पुनरपि अनैकांतिकत्वमेवेति भावः ननु
न तत्र केवलं गुणमात्रं फणिन उपादानं किंतु अविद्यायुक्तं तथाभूतस्य चावस्तुत्वान्न युक्तं फणिनो मिथ्यात्वमित्याशंक्या
तुल्यमत्रापीति दूषयति न तथोभययुगिति अयमर्थः अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वं एवंभूतस्य च न वस्तुसत्वं
अतः सदुपादानत्वमसिद्धमिति न वस्तुसत्वं प्रपंचस्येति ननु माभूदनेन हेतुना प्रपंचस्य सत्वं हेत्वंतरेण तु साधयामः
तथाहि सदिदं अर्थक्रियाकारित्वात् नयदेवं न तदेवं यथा शुक्तिरजतमिति तत्राह व्यवहृतये विकल्प इषितः इति व्य
वहाराय अर्थक्रियार्थं विकल्पो भ्रम इषितः इष्टः एवं कूटकार्षापणादिनापि क्वचिद्व्यवहारदर्शनात् नन्वेकत्र सतोन्य
त्रारोपो भ्रमः प्रसिद्धः अत्यंतासत्वे कथं प्रपंचो भ्रमः स्यात्तत्वे वा नाद्वैतसिद्धिः उक्तं च भट्टैः अध्यस्यते खपुष्पत्वमसत्क
थमवस्तुनि प्रज्ञातगुणसत्ताकमध्यारोप्यते वा न वेति नेत्याह अंधपरंपरयेति अंधपरंपरया यो विकल्प इत्यन्वयः अयं
भावः संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वं प्रतीतिमात्रमपेक्षते न वस्तुसत्वं प्रतीतो सत्यां वस्तुसत्वाभावेन व्यतिरे
कादर्शनात् अतोऽनादित्वात् पूर्वपूर्वभ्रमदृष्टस्योत्तरोत्तर आरोपो भविष्यतीत्यंधपरंपरान्यायेनैव च व्यवहारः सेत्स्यतीत्य
प्रयोजको हेतुरिति नन्वक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति अपाम सोमममृता अभूमेत्यादिभिः कर्म्मफलस्य नि
त्यत्वप्रतिपादनादसत्वं न घटते ननु च न हि नित्यं वस्तु असद्भवति तस्माद्वेदप्रतिपादितत्वाद्द्वैतं सदेवेत्याशंक्याह भ्रमय
तीति इह भगवन् ते तव भारती वेदलक्षणा उरुवृत्तिभिर्वक्रीभिर्गौणलक्षणादिवृत्तिभिः उक्थजडान् कर्म्मश्रद्धाभराक्रांत
मंदमतीन् भ्रमयति मोहयति अयं भावः न हि वेदः कर्म्मफलं नित्यमभिप्रैति किंतु लक्षणया प्राशस्त्यमात्रं [illegible]कवाक्य
त्वात् अन्यथा वाक्यभेदप्रसंगात् तद्यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते [illegible] न्यायोप
बृंहितश्रुत्यंतरविरोधाच्च अतः कर्म्मजडानामिदं भ्रममात्रमिति एतेनैव तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादी

त्वंदर्शितंभवति ३५ ३६ उद्भूतंभवतः सतोपिभुवनंसत्त्वैवसर्प्पस्त्रजः कुर्व्वन्कार्य्यमपीहकूटकनकंवेदोपिनैवंपरः अद्वैतं तदसत्यंतुपरमानंदंपदंतन्मुदावंदेसुंदरमिंदिरानुतहरेमासुंचमामानतं ३७ तदेवंप्रपंचस्यसत्त्वेसाधकं [illegible] स्तीत्युक्तंइदानीमसत्त्वेसृष्टिप्रलयश्चानयोर्यतोवाइमानिभूतानिजायंतेयेनयातांनिजीवंतियत्प्रयंत्यभिसंविशंति इत्याद्याः तन्मूलंचानुमानंप्रमाणमित्याह नयदिदमिति यद्यस्मादिदंविश्वमग्रेसृष्टेः [illegible] पूर्व्वंनआसनआसीत्सदेवसौम्येदमग्र आसीत् आत्मावाइदमेकएवाग्रआसीदित्यादिश्रुतेः नचनिधनात्प्रलयात्अनुअनंतरंभविष्यत्भविष्यति नासदासीन्नोसदासीत्तदानीमित्यादिश्रुतेः अतः कारणात् अंतरामध्येपिएकरसेकेवलेत्वयिमृषामिथ्यारूपमेवविभातीतिनिमित्तंनि॥

**यवहृतयेविकल्पइषितोंधपरंपरयाभ्रमयतिभारतीतउरुवृत्तिभिरुक्थजडान् ३५।३६ न यदिदमग्रआसनभविष्यदतोनिधनादनुमितमंतरात्वयिविभातिमृषैकरसे अतउपमीयते द्रविणजातिविकल्पपथैर्वितथंमनोविलासमृतमित्यवयंत्यबुधाः ३६।३७॥**

१ श्वितंयतएवंअतः श्रुत्याद्द्रविणजातिविकल्पपथैर्द्रविणजातीनांद्रव्यमात्राणांमृद्लोहकार्ष्णायसरूपाणांविकल्पाः भेदाः घटकुंडलादयस्तेषांपंथानोमार्गाः प्रकारास्तैरुपमीयतेसदृशानयानिरूप्यतेयथातत्रकार्य्यांकारणानांनामधेयमात्रताकारणंमृदाद्येवतुसत्यंतथा आप्याकाशादीनांनाममात्रताब्रह्मैवसत्यंतथाचश्रुतिः वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यंयथासौम्यैकेनमृत्पिंडेन सर्व्वंमृन्मयंविज्ञातंभवतियथाएकेनलोहमणिनासर्व्वंलोहमयंविज्ञातंस्यात्तथाएकेननखनिकृंतनेनसर्व्वंकार्ष्णायसमित्यादितस्मादसत्त्वेप्रमाणाभावादसत्त्वेप्रमाणस्यविद्यमानत्वात् वितथंमनोविलासमृतंसत्यमितियेअवयंतिजानंतितेअबुधाः अज्ञाइत्यर्थः अत्रैवंप्रयोगः विवादाध्यासितंनसत् आद्यंतयोरविद्यमानत्वात्विकारित्वाद्दृश्यत्वाच्चशुक्तिरजतादिवत् इत्यन्वये दृष्टांतः आत्मवच्चेतिव्यतिरेकदृष्टान्तः ३६ ३७ मुकुटकुंडलकंकणकिंकिणीपरिणतंकनकंपरमार्थतः महदहंकृतिखप्रमुखं

ननु यदि प्रपंचो नाम नास्त्येव तदाऽसत्तानेन न चैतन्यस्य संबंधगंधोपि तर्हि किमपराद्धं जीवेन यतः अयं संसरत्य-
ति किं वा बहुपुण्यमीश्वरस्य यतो नित्यमुक्तः किं विषयं च तदा कर्म्मकांडमित्यपेक्षायां जीवेश्वरविशेषं द्वासुपर्णा
सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यऽनश्नन्नन्योऽभिचाकशीति अजामेकां ।
लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः
लोहितशुक्लकृष्णांसमाद्याघावदन्तीत्याह सयदजयेति सतु जीवः यत् यस्मादजया मायया अजां अविद्यां अनुशयी-
त आलिंगेत् ततः गुणांश्च देहेंद्रियादीन् जुषन् सेवमान आत्मतयाऽध्यस्य नु तदनु तदनंतरं सरूपतां तद्धर्म्मयो-
गं च जुषन् अपेतभगः पिहितानंदादिगुणः सन् मृत्युं संसारं भजति प्राप्नोतीति तद्विषयमेव च कर्म्मकांडमिति भावः
त्वमुत त्वं तु जहासि तामजां मायां ननु सा मय्येवास्ति कथं त्यागस्तत्राह अहिरिव त्वचमिति अयं भावः यथाभु-

**सयदजयात्वजामनुशयीत गुणांश्च जुषन्भजति सरूपतां तदनु मृत्युमपेतभ-**
**गः त्वमुत जहासि तामहिरिव त्वचमात्तभगो महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥**

जंगः स्वगतमपि कंचुकं गुणबुद्ध्या नाभिमन्यते तथा त्वमजां नहि निरंतरानन्दादिसंवित् ॥ २५ ॥ कुत्र ॥
कामधेनुर्वंदपने रजयाक्रान्त्यमिति नामुपेक्ष्यस इति कुत एतत्तदाह आत्तभगः नित्यप्राप्तैश्वर्य्यः महसि परमै-
श्वर्य्ये अष्टगुणिते अणिमाद्यष्टविभूतिमति महीयसे पूज्यसे विराजसे कथंभूतः अपरिमेयभगः अपरिमितै-
श्वर्य्यः नह्यन्येषामिव देशकालादिपरिच्छिन्नं तवाष्टगुणितमैश्वर्य्यं अपि च परिपूर्णस्वरूपानुबंधित्वादपरि-
मितमित्यर्थः २५ ३८ न्यस्तनीत बवीक्षणां गणगताकालस्वभावादिभिर्भावान् सत्त्वरजस्तमोगुणम[illegible]न्मीलयं-
तीं बहून् मामाक्रम्य पदा शिरसि तिभरं संमर्दयंत्यातुरं मायातेषु शरणं गतोस्मि नृहरे त्वामेव तां वारय ॥ २५ ॥ ६ ॥

एवंतावदुक्तसाधनकदंवेनयेभगवंतंभजंतितेमृत्युंतरंति इतरेसंसरंतीत्युक्तं इदानींयेवहिः संप्रदायत्यज्या
भगवन्मार्गंप्रवृत्ताअपिकथंचिदंतर्वांताशिनः कामान्नमुंचंतितेनभगवंतंप्राप्नुवंतिनचेहसुखलभंते केवलं
कुयोनीरेवप्राप्नुवंतीतितानुशोचन्कामानयः कामयतेमन्यमानः सकर्म्मभिर्जायतेतत्रतत्रेत्यादिश्रुत्यर्थमा
ह यदिनसमुद्धरंतीति हेभगवन्येयतयः हृदिस्थिताः कामजटाः कामस्यजटाः मूलानिवासनाः यदि
नसमुद्धरंतिनोत्पाटयंतितेषामसतांभवान् हृदिगतोपिदुरधिगमः दुष्प्रापः कथंअस्मृतकंठमणिः विस्मृतो
यः कंठमणिः तत्तुल्यः सयथाकंठेवर्तमानोऽप्यस्मृतस्वेदप्राप्तइवभवतितद्वदिति नकेवलमेतावत् किंतु।

यदिनसमुद्धरंतियतयोहृदिकामजटा दुरधिगमोऽसतांहृदिगतोऽस्मृतकंठ।
मणिः असुतृपयोगिनामुभयतोप्यसुखंभगवन्ननपगतांतकादनधिरूढपदा
द्भवतः २६॥ ३९॥

असुतृपयोगिनामिंद्रियतर्पणपराणांयोगच्छद्मनामुभयतोऽप्यसुखंइहामुत्र
चदुःखमेवतदाह अनपगतांतकात् अनिवृत्तान्मृत्योः लोकाराधनधनार्ज्जनादिक्लेशात् भोगवैभवप्राका
सभयाच्चेहतावद्दुःखंभवतईश्वरादपिदुःखंकथंभूतात् अनधिरूढपदात् अनधिरूढंपदंस्वरूपंयस्यतस्मा
त्वत्स्वरूपप्राप्त्यभावादविद्यावद्विषयत्वेनप्राप्तनिजधर्मातिक्रमनिवंधनत्वद्दंडरूपनरकप्राप्तेरमुत्राप्यसुखं
मित्यर्थः २६ ३९ दंभन्यासमिषेणवंचितजनंभोगैकचिंतातुरंसंमुह्यंतमहर्न्निशंविरचितोद्योगक्लमैराकु
लं आज्ञालंघिनमज्ञमज्ञजनतासंमाननासन्मदंदीनानाथदयानिधानपरमानंदप्रभोपाहिमां २६॥ ९ ॥

ननु यतेर्नैकिमपि कृत्यमस्ति प्रारब्धमेव सुखोपभोगेनापक्षीयते अतः किमिति वृथा शप्यते उभयतोऽप्यसुख-
मिति श्रूयते च एष नित्यो महिमा ब्राह्मणस्य न कर्म्मणा वर्द्धते नो कनीयानित्यादि तत्राह त्वदवगमीति हे सगु-
ण षड्गुणैश्वर्ययुक्त त्वदवगमी त्वत् ज्ञानवान् भवदुत्थशुभाशुभयोर्भवतः कर्म्मफलदातुरीश्वराद्धेतोः उत्थयो-
राविर्भूतयोः शुभाशुभयोः प्राचीनपुण्यापुण्यकर्म्मणोः फलभूतान् गुणविगुणान्वयान् सुखदुःखसंबंधा-
न् न वेत्ति नानुसंधत्ते न हि तदानीं च देहभृतां देहाभिमानिनां प्रवृत्तिनिवृत्तिकरीर्गिरः विधिनिषेधलक्षणा न
वेत्ति विगतदेहाभिमानतया काम्याकार्य्य बाधाभावात् न नियुज्यत इत्यर्थः युक्तं चैतत् यतः कारणात् मनुजे ः ॥

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हि देहभृतां च गि-
रः अनुयुगमन्वहं सगुण गीतपरंपरया श्रवणभृतो यतस्त्वमपवर्गगतिर्मु-
(म)नुजैः ॥ २७ ॥ ४० ॥

अन्वहं श्रवणभृतः अनुदिनं श्रवणेन चेतसि धृतस्त्वं तेषामपवर्गगतिः अपवर्गहे-
तुर्गतिर्भवसि कथं श्रवणभृतः अनुयुगं प्रतियुगं या गीतपरंपरा उपदेशसंततिस्तया सत्संप्रदायानुसारेणे-
त्यर्थः एतदुक्तं भवति येतावत्तत्वज्ञानिनः न तेषां कर्म्माधिकारशंकाऽपि ये चानवरतं त्वत्कथाश्रवणा-
दिनिष्ठास्तेषामप्यासन्नभवत्वात्तदानीं विधिनिषेधबाधः इतरेषां तु योगच्छद्मनेंद्रियलालनलालसानामु-
भयतोऽप्यसुखमिति २७ ४० अवगमं तव मे दिशमाधवस्फुरति यन्न सुखासुखसंगमः श्र(व)णवर्ण-
नभावमथापि वा न हि भवामि यथा विधिकिंकरः २७ ॥

८७
भ०टी०
उ
१३९

त्वदवगमी न वेत्ति सुखदुःखेन च विधिनिषेधावित्युक्तं तत्र ननु कथमवगंतुं शक्यते दुरधिगमत्वस्योक्तत्वादित्ये
वमाशंक्य सत्यमेवमनवगाह्यमहिम्नो वाङ्मनसागोचरत्वाद विषयत्वेनैव ज्ञानमिति दर्शयन् यदूर्ध्वं भार्गो दिवो
यदर्वाक् पृथिव्या यदंतरा द्यावापृथिवी इमे यद्भूतं भवच्च भविष्यच्चेत्यादिश्रुतिप्रतिपादितमपरिमितमहिमा
नमाह द्युपतय एवेति हे भगवन् ते अंतं द्युपतयः स्वर्गादिलोकपतयोपि ब्रह्मादयो न ययुः न प्रापुः न कुतः यदं
तवद्वस्तु तत्किमपि त्वं न भवति आस्तां द्युपतयो न ययुरिति यत् यस्मात्त्वमपि आत्मनो अंतं नयासि कुतस्तर्हि सर्वज्ञ
तासर्वशक्तिता वा अत आह अनंततया अंताभावेन नहि शशविषाणाज्ञानं सार्वज्ञं तदप्राप्तिर्वा शक्तिवैभवं वि

द्युपतय एव ते नययुरंतमनन्ततया त्वमपि यदंतरांऽडनिचया ननु सावरणाः स्व
इव रजांसि वांति वयसा सह यच्छ्रुतयस्त्वयि हि फलंत्यतन्निरसनेन भवन्निधनाः
॥२८।४१॥

हंति अनंतत्वमेवाह यदंतरेति यस्य तव अंतरा मध्ये ननु अहो सावरणाः उत्तरोत्तरं दशगु
णसप्तावरणयुक्ता अंडनिचया ब्रह्मांडसमूहाः वांति परिभ्रमंति वयसा कालचक्रेण खे रजांसीव सह एकदैवान
नुपर्यायेण हि यस्मादेवं अतः श्रुतयस्त्वयि फलंति तात्पर्यवृत्त्या पर्यवसंति न तु साक्षाद्वदंति अयमेतावानि
ति सगुणस्य गुणानंत्यात् निर्गुणस्य चागोचरत्वात् कथं तर्ह्यपदार्थे तात्पर्यमिति तत्र विधिमुखवाक्ये भवेद यं
नियमः पदार्थस्यैव वाक्यार्थत्वमिति निषेधमुखे तु नायं नियम इत्याह अतन्निरसनेनेति अन्यदेव तद्विदि
तात् अथो अविदितादपि अन्यत्र धर्मादन्यत्राधर्मात् अन्यत्रास्मात् कृताऽकृतात् अस्थूलमनण्वित्यादि प्रका॥ ८

एम०
१३९

रणलक्षणयाचतत्वमसीत्यादयः पर्य्यवसंति नचवाच्यंनिषेधैः शून्यमेवज्ञाप्यतइति यतः भवन्निधनाः भवति
त्वयिनिधनंसमाप्तिर्यासांनास्तयानहिनिरवधिर्निषेधःसंभवति यतोऽवधिभूतेत्वयिफलंतीत्यर्थः २९ ४१ ४२
द्युपतयोविदुरंतमनंततेनचभवान्नगिरः श्रुतिमौलयः त्वयिफलंतियतोनमइत्यतोजयजयेतिभजेतवनत्पदं २९

श्रीभगवानुवाच इत्येतद्ब्रह्मणःपुत्राआश्रुत्यात्मानुशासनं सनंदनमथानर्चुः सि
द्धाज्ञात्वात्मनोगतिं ४२ इत्यशेषसमाम्नायपुराणोपनिषद्रसः समुद्धृतः पूर्वजातै।
र्व्योमयानैर्महात्मभिः ४३ त्वंचैतद्ब्रह्मदायादश्रद्धयात्मानुशासनं धारयंश्चरगांका
मंकामानांभर्ज्जनंनृणां ४४ श्रीशुकउवाच एवंसऋषिणादिष्टंगृहीत्वाश्रद्धयात्म
वान् पूर्णःश्रुतधरोराजन्नाहवीरव्रतोमुनिः ४५ श्रीनारदउवाच नमस्तस्मैभगव।
तेकृष्णायामलकीर्तये योधत्तेसर्व्वभूतानामभवायोशतीःकलाः ४६ इत्याद्यमृषिमा
नम्यतच्छिष्यांश्चमहात्मनः॥ एइत्यशेषसमाम्नायपुराणोपनिषद्रसइतिसर्व्वश्रुतिपुराणरहस्यतात्पर्य्यमि
त्यर्थः ४३ ब्रह्मदायादेति ब्रह्मैवदायमिवअप्रयत्नप्राप्यं अत्तिभवतइतितथाब्रह्मपुत्रेतिवा ४४ पूर्णः कृतकृत्यः॥
श्रुतधरःश्रुतमर्थंमनसिधारयन्वीरव्रतःनैष्ठिकः ४५ नमइतिश्रीकृष्णावतारतयानारायणंनमस्यति उक्तंहि ए
तेचांशकलाः पुंसः कृष्णस्तुभगवान्स्वयमिति ४६ साक्षात्पितुरितियोनिमवधानंविनाजनकस्यआत्मिमथना

१० भा० द० उ० १९

वसतेरेकदाचिदरण्यौरेतः पतितं ममंथव्यासस्तद्देवततउत्पन्नः शुकइतिहिवदंति ५७ ५८ ५९ समस्तवेदस्तुत्यर्थं संगृह्यानुस्मारयति योऽस्येत्स्येक्षकइतियः अस्यविश्वस्यउत्प्रेक्षकः एवमिदमनुध्यायिनांसमस्तपुरुषार्थसिद्धये सृष्टिस्थितिप्रलयादिप्रापणीयमित्यालोचकइत्यर्थः अनेननिमित्तत्वमुक्तं एवमालोच्यास्यादिमध्यनिधनेआदि र्जन्ममध्यःपालनंनिधनंअंतः एतेषुकर्म्मसुयोवर्त्ततेअनेनोपादानत्वमुक्तं ननुप्रकृतिपुरुषयोरुपादाननि मित्तत्वेप्रसिद्धेसत्यं तयोरपितत्तएवोद्भूतत्वात्मूलकारणंसएवेत्याह योऽव्यक्तजीवेश्वरइति प्रवेशनियमनेद

ततोऽप्यागादाश्रमंसाक्षात्पितुर्द्वैपायनस्यमे ५७ सभाजितोभगवताकृतासनपरि ग्रहः तस्मैतद्वर्णयामासनारायणमुखाच्छ्रुतं ५८ श्रीशुकउवाच इत्येतद्वर्णितंरा जन्यन्नःप्रश्नःकृतस्त्वया यथाब्रह्मण्यनिर्देश्येनिर्गुणेपिश्रुतिश्चरेत् ५९ योऽस्योत्प्रे क्षकआदिमध्यनिधनेयोऽव्यक्तजीवेश्वरोयःसृष्ट्वेदमनुप्रविश्यऋषिणाचक्रेपुरः शास्तिताः॥ ६० प्रवेशनियमनेइतिपूर्वोक्तप्रकारेणेदंसृष्ट्वायदर्थमेतत्सृष्टंतेनऋषिणासृष्टेकार्य्ये अहमिति दर्शनाद्दृषिर्जीवः तेनसहानुप्रविष्टःपुरःशरीराणितस्यभोगायतनानिचक्रेताःपुरःशास्तितस्यभोगंददत् प रिपालयते उपासकस्यचकैवल्यरूपोभवतीत्याह यंसंपद्येति यंसंपद्यप्राप्यानुशायीअन्वनुदंडवत्मणामेश्वर णमूलेशेतेइतितथासजीवः अजांकार्य्यकारणलक्षणामविद्यांत्यजति ननुब्रह्मसंपन्नस्यापिजीवस्यतत् संब धोदृश्यतेअतआह सुप्तःकुलायंयथेति अयंभावः यथासुप्तंशरीरवंतमन्येपश्यंतिसतुनात्मानंतथापश्यति॥६

रामः १३९

एवंजीवन्मुक्तमप्यन्येदेहवंतंपश्यंतिसतुनकिंचित्पश्यतीति तंहरिंअजस्रंअनवरतंध्यायेत् किमित्यतआह अ
भयंनभयंयस्मात् भयनिवर्तकमित्यर्थः कुतएतत्कैवल्यनिरस्तयोनिंकैवल्येनअप्रच्युतस्वरूपावस्थानेननिरस्ता
निरस्कृतायोनिः मूलकारणंमायायेनतं ५० सर्वश्रुतिशिरोरत्ननीराजितपदांबुजं भोगयोगप्रदंवंदेमाधवंकर्मि
नम्रयोः १ इतिदशमेटीकायांसप्ताशीतितमोऽध्यायः ८७ अष्टाशीतितमेविष्णुभक्तः कैवल्यमश्नुते ततो

यंसंपद्यजहात्यजामनुशयीसुप्तः कुलायंयथातंकैवल्यनिरस्तयोनिमभयंध्यायेदा
जस्रंहरिं ॥ ५० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेनारायणनारदसंवा
देवेदस्तुतिर्नामसप्ताशीतितमोऽध्यायः ८७ राजोवाच देवासुरमनुष्येषुयेभ
जंत्यशिवंशिवं प्रायस्तेधनिनोभोजानतुलक्ष्म्याःपतिंहरिं १ एतद्वेदितुमिच्छा
मः संदेहोत्रमहान् हिनः विरुद्धशीलयोःप्रभ्वोर्विरुद्धाभजतांगतिः २ श्रीशु
कउवाच शिवःशक्तियुतःशश्वत्त्रिलिंगोगुणसंवृतः वैकारिकस्तैजसश्चता
मसश्चेत्यहंत्रिधा ३ ॥ ९९ वांछेवभक्तस्तुविभूतिमितिवर्ण्यते १ हरिर्भजतांभक्तिदइत्युक्तं अभयंध्या
येदजस्रंहरिमितितत्रशंकतेदेवासुरेति अशिवंअवधीरितभोगंभोजाः भोगिनः लक्ष्म्याः पतिंसर्वभोगयुक्तं।
१। २ अन्योपमर्द्देनतमसस्त्रैविध्यात्त्रिलिंगस्त्रिलिंगत्वमाहवैकारिकइति अहंअहंकारइति॥३॥ ॥९

विकारामनइंद्रियभूतरूपाः षोडशइतिइंद्रियदेवानामभेदविवक्षया किंचनेतियत्किंचिद्विकारोपाधिकंभजन् उपा॥
ध्यनुरूपाणांविभूतीनांस्वरूपंप्राप्नोति ४ उपद्रष्टासाक्षीसन्यतः सर्वदृक् सर्वंपश्यति अतःप्रकृतेः परइति अन्येदं
तत्वं वस्तुनोगुणसंबंधेरूपद्वयमिहेष्यते तद्धर्माायोगयोगाभ्यांविवृवन्प्रति विवृवन् गुणाःसत्वादयः शांतघोरमू
ढाःस्वभावतः ब्रह्मविष्णुशिवानां चगुणयंतृस्वरूपिणां नातिभेदोभवेत्भेदोगुणधर्मैरिहांशतः सत्वस्यशांत्यानो॥
जातुविष्णोर्विक्षेपमूढने रजस्तमोगुणाभ्यांतुभवेतांब्रह्मरुद्रयोः गुणोपमर्दतोभूयस्तदंशानांचभिन्नता अतःस

ततोविकाराअभवन्षोडशामीषुकिंचन उपाधावन्विभूतीनांसर्वासामश्नुतेगतिं ४
हरिर्हिनिर्गुणः साक्षात्पुरुषःप्रकृतेःपरः ससर्वदृगुपद्रष्टातंभजन्निर्गुणोभवेत् ५
निवृत्तेष्वश्वमेधेषुराजायुष्मत्पितामहः शृण्वन्भगवतोधर्मानपृच्छदिदमच्युतं ६
सआहभगवांस्तस्मैप्रीतः शुश्रूषवेप्रभुः नृणांनिःश्रेयसार्थाययोवतीर्णोयदोःकुले ७

मग्रसत्वस्यविष्णोर्मोक्षकरीमतिः अंशांशतोभूतिहेतुश्चतथानंदमयोस्वनः अंशांशतस्तारतम्येनब्रह्मरुद्रादि॥
षुविनां विभूतयोभवंत्येवशांतेर्मोक्षोऽप्यनंशतः इदमेवाभिप्रेत्यतत्रतत्रोच्यतेश्रेयांसितत्र खलुसत्वत
नोर्नृणांस्युरिति तथासत्वंयस्यप्रियामूर्त्तिरिति तथासत्वंतत्तीर्थसाधनमिति तथात्रयाणामेकभावानां॥
योनपश्यतिवैभि दामिति तथाननतेमय्यच्युतेऽजेचभिदामणवपिचक्षतइत्यादि एवंचसतिनकिंचिदसमं॥
जसंतत्तद्भक्तानांनुकलहोद्रोहमात्रमिति ५ ६ ७

यस्याहमनुगृह्णामीति अयमर्थः योविषयान्परिजिहीर्षुरपिकथंचिद्विद्यमानेषुविषयेषुसज्जतेक्लिश्यतिचतस्य विषयापहारएवानुग्रहइति यथाश्रुतत्वेनध्रुवादीनामैश्वर्य्यविरोधात् अथवाप्रथमंविभूतीःकामनानुरूपादत्त्वाशनैर्विषयभोगावसानेनतस्यनिर्वेदमुत्पाद्यहरिष्यामिपरमानुग्रहंकर्तुमिति तदुक्तंभगवतैवनमय्यावेशितधियांकामःकामा

श्रीभगवानुवाच यस्याहमनुगृह्णामिहरिष्येतद्धनंशनैः ततोधनंत्यजंत्यस्यस्वजनादुःखदुःखितं ८ सतदावितथोद्योगोनिर्विण्णःस्याद्धनेहया मत्परैःकृतमैत्रस्यकरिष्येमदनुग्रहं ९ तद्ब्रह्मपरमंसूक्ष्मंचिन्मात्रंसदनंतकं अतोमांसुदुराराध्यंहित्वान्यान्भजतेजनः १० ततस्तआशुतोषेभ्योलब्धराज्यश्रियोद्धताः मत्ताःप्रमत्तावरदान्विस्मरंत्यवजानते ११ श्रीशुकउवाच शापप्रसादयोरीशाब्रह्मविष्णुशिवादयः सद्यःशापप्रसादोंगशिवोब्रह्मानचाच्युतः १२ अत्रैवोदाहरंतीममितिहासंपुरातनं वृकासुरायगिरिशोवरंदत्त्वापसंकटं १३ वृकोनामासुरःपुत्रःशकुनेःपथिनारदं दृष्ट्वाशुतोषंपप्रच्छदेवेषुत्रिषुदुर्मतिः १४॥ एकलस्तइतिदुःखदुःखितमिति दुःखादनुपुनर्दुःखितमिवप्रतीयमानमित्यर्थः ८ सपुनर्वर्द्धनामाग्रहेणधनेहयाप्रवृत्तोपिमदनुग्रहेणयदानिष्फलोद्यमोनिर्विण्णःस्यात्तदामदनुग्रहमिति ममासाधारणमनुग्रहमिति तमेवाहतद्ब्रह्मेति ९ जनःपश्चादपिमोक्षमरोचयन् अत्यासक्तोजनइत्यर्थः १० ११ एतदेवेति

८८
भा॰द॰
उ॰
१४१

॥१५॥ सुसंकटमापकैलाशोत्पाटनंपुरपालनंच १६ स्वगात्रतउपाधावत्कथंआत्मक्रव्येणस्वमांसेनजुह्वान
इति १७ अवृश्चत् छेत्तुमुद्यतः १८ मूर्तिमानग्निरिवंदेदीप्यमानःवयंअधुनातनाः यथाकथंचितदुःखेनम

सआहदेवंगिरिशमुपाधावाशुसिद्ध्यति योल्पाभ्यांगुणदोषाभ्यामाशुतुष्यतिकुप्य-
ति १५ दशास्यबाणयोस्तुष्टःस्तुवतोर्वंदिनोरिव ऐश्वर्य्यमतुलंदत्वाततआपसुसंकटं॥
१६ इत्यादिष्टस्तमसुरउपाधावत्स्वगात्रतः केदारआत्मक्रव्येणजुह्वानोग्निमुखंहरं १७
देवोपलब्धिमप्राप्यनिर्वेदात्सप्तमेहनि शिरोऽवृश्चत्सुधितिनातत्तीर्थक्लिन्नमूर्द्धजं १८
तदामहाकारुणिकःसधूर्ज्जटिर्य्यथावयंचाग्निरिवोत्थितोनलात् निगृह्यदोर्भ्यांभुज
योर्न्यवारयत्तत्स्पर्शनाद्भूयउपस्कृताकृतिः १९ तमाहचांगालमलंवृणीष्वमेयथाऽ
भिकामंवितरामितेवरं प्रीयेयतोयेननृणांप्रपद्यतामहोत्वयात्माभृशमर्द्यतेवृथा २०
देवंसवव्रेपापीयान्वरंभूतभयावहं यस्ययस्यकरंशीर्ष्णिधास्येसम्रियतामिति २१
तच्छ्रुत्वाभगवान्रुद्रोदुर्म्मनाइवभारत ओमितिप्रहसंस्तस्मैददेहेरमृतंयथा २२॥

तुकामंवारयामः नद्वदिति सचउपस्कृताकृतिःपरिपूर्णदेहोभवत् १९ न्यवारयत् एवमाहचयतोयेनापि ॥
भजतांप्रीतः स्वांसत्वयातुदेहोवृथापीड्यनइति २० २१ दातुमनर्हमपिदत्तवान् सर्पायक्षीरमिव २२॥ ॥

रामः
१४१

२३ उपसृष्टः अनुगतः सन् उदगात् अधावत् उदक् उत्तरतः २४ वैकुंठं श्वेतद्वीपं २५ २६ तं वृकासुरं तया व्यसनं ताद्दग्व्यसनं यस्य तं वृजिनार्द्दनः दुःखहंता दूरत एव दृष्ट्वा मेखलादिभिरुपलक्षितः प्रत्युदियात्संमुखमागतः २७

इत्युक्तः सोसुरो नूनं गौरीहरणलालसः स तद्वरपरीक्षार्थं शंभोर्मूर्ध्नि किलासुरः स्वहस्तं धातुमारेभे सोविभ्यत्स्वकृताच्छिवः २३ तेनोपसृष्टः संत्रस्तः पराधावत्सवेपथुः यावदंतं दिवो भूमेः काष्ठानामुदगादुदक् २४ अजानंतः प्रतिविधिं तूष्णीमासन्सुरेश्वराः ततो वैकुंठमगमद्भास्वरं तमसः सरं २५ यत्र नारायणः साक्षान्न्यासिनां परमा गतिः शांतानां न्यस्तदंडानां यतो नावर्त्तते गतः २६ तं तथा व्यसनं दृष्ट्वा भगवान् वृजिनार्द्दनः दूरात्प्रत्युदियाद्भूत्वा वटुको योगमायया २७ मेखलाजिनदंडाक्षैस्तेजसाग्निरिव ज्वलन् अभिवादयामास च तं कुशपाणिर्विनीतवत् २८ श्रीभगवानुवाच शाकुनेय भवान्व्यक्तं श्रांतः किं दूरमागतः क्षणं विश्रम्यतां पुंस आत्मायं सर्व्वकामधुक् २९ यदि नः श्रवणायालं युष्मद्व्यवसितं प्रभो भण्यतां प्रायशः पुंभिर्धृतैः स्वार्थान्समीहते ॥ ३० ॥ ❁ ॥

२८ व्यक्तं निश्चितं किं किमर्थं आत्मा देहः सर्व्वपुरुषार्थत्वे हेतुः अतो मा पीडयेति २९ प्रायशः पुंभिर्धृतैः भगवान्स्वार्थान्समीहते साधयितुमिच्छति अथवा जनः पुंभिः सहायैः स्वकार्य्याणि साधयति अतो नः कथ्यतामिति [illegible] ३० ॥ ६ ॥

भा·द·
उ·
१५२

३१ पैशाचंपिशाचानामिववृत्तिं ३२ ३३ यत्तु यथावक्तावदिष्यति ३४ चित्रैर्भ्रामकैः सुपेशलैः अंतरम्यैः भिन्न

श्रीशुकउवाच एवंभगवनापृष्टोवचसाऽमृतवर्षिणा गतक्लमोऽब्रवीत्तस्मैयथापूर्वमनुष्ठितं ३१ श्रीभगवानुवाच एवंचेत्तर्हितद्वाक्यंनवयंश्रद्दधीमहियोदक्षशापात्पैशाचंप्राप्तः प्रेतपिशाचराट् ३२ यदिवस्तत्रविश्रंभोदानवेंद्रजगद्गुरौ तर्ह्यंगाशुस्वशिरसिहस्तंन्यस्यप्रतीयतां ३३ यद्यसत्यंवचः शंभोः कथंचिद्दानवर्षभ तदैनंजह्यसद्वाचंन यद्वक्ताऽनृतंपुनः ३४ इत्थंभगवतश्चित्रैर्वचोभिःसुपेशलैः भिन्नधीर्विस्मृतः शीर्ष्णि स्वहस्तंकुमतिर्न्यधात् ३५ अथापतद्भिन्नशिरावज्राहतइवक्षणात् जयशब्दोनमः शब्दः साधुशब्दोऽभवद्दिवि ३६ मुमुचुः पुष्पवर्षाणिहतेपापेवृकासुरे देवर्षिपितृगंधर्वामोचितः शंकटाच्छिवः ३७ मुक्तंगिरिशमभ्याहभगवान्पुरुषोत्तमः अहोदेवमहादेवपापोयंस्वेनपाप्मना हतः कोनुमहत्स्वीशजंतुर्वैकृतकिल्विषः क्षेमीस्यात् किमुविश्वेशेकृतागस्कोजगद्गुरौ ३८ यएवमव्याकृतशक्त्युदन्वतः परस्यसाक्षात्परमात्मनो हरेः॥

राम
१५२

धीः अशितमतिः ३५ ३६ ३७ ३८ किमुवक्तव्यंविश्वेशेत्वयिकृतागस्कः कृतापराधइति ३९ अव्याकृतशक्त्युदन्वतः॥ ॥

